आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २९

श्रीनारायणशंकरानन्दविरचितदीपिकासमेतानामथर्वशिखाद्यानां हंसोपनिषदन्तानां द्वात्रिंशन्मितानाम्

# उपनिषदां समुच्चयः ।

एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः सपाठान्तरनिर्देशं संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८४७

खिस्ताब्दाः १९२५



मूल्यं पादोनरूपकसप्तकम् (६।।।)।

## अथ मुद्रितोपनिषन्नाम्नां वर्णानुक्रमत उल्लेखः ।

# उपनिषत्समुच्चयादर्शपुस्तकोल्लेखपत्रिका ।

अथैतासामथर्वशिखाद्यानां हंसोपनिषदन्तानां द्वात्रिंशन्मितानां नारायणशंकरानन्दविरचितदीपिकासमेतानामुपनिषदां वर्णानुक्रमतो नाम्नामुल्लेख आरम्भपृष्ठाङ्कनिर्देशश्चात्र क्रियते । तथा तत्तदुपनिषदां पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां कृतज्ञतया नामग्रामादिनिर्देशः पुस्तकानां संज्ञाश्च प्रकाश्यन्ते ।

### १ अथर्वशिखोपनिषत् ( १* )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थं 'महादेव चिमणाजी आपटे' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं नारायणीयदीपिकासमेतम्, इन्दूरपुरनिवासिनां श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरनिवासिनां पटवर्धनोपाह्वानां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, पुण्यपत्तननिवासिनां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

### २ अथर्वशिरउपनिषत् ( ७ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलम्, नारायणीयदीपिकासमेतम्, 'श्री. रा. रा. किबे साहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषामेव ।

ङ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषामेव ।

---

* एतच्चिह्ननिर्दिष्टाः पृष्ठाङ्काः सन्तीति ज्ञातव्यम् ।

अथ मुद्रितोपनिषन्नाम्नां वर्णानुक्रमत उल्लेखः ।

# उपनिषत्समुच्चयादर्शपुस्तकोल्लेखपत्रिका ।

अथैतासामथर्वशिखाद्यानां हंसोपनिषदन्तानां द्वात्रिंशन्मितानां नारायणशंकरानन्द-विरचितदीपिकासमेतानामुपनिषदां वर्णानुक्रमतो नाम्नामुल्लेख आरम्भपृष्ठाङ्कनिर्देशश्चात्र क्रियते । तथा तत्तदुपनिषदां पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां कृतज्ञतया नामग्रामादिनिर्देशः पुस्तकानां संज्ञाश्च प्रकाश्यन्ते ।

## १ अथर्वशिखोपनिषत् ( १* )

**क.** इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थं 'महादेव चिमणाजी आपटे' इत्येतेषाम् ।

**ख.** इति संज्ञितम्—मूलं नारायणीयदीपिकासमेतम्, इन्दूरपुरनिवासिनां श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

**ग.** इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

**घ.** इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरानिवासिनां पटवर्धनोपाह्वानां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

**ङ.** इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, पुण्यपत्तननिवासिनां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

**च.** इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

## २ अथर्वशिरउपनिषत् ( ७ )

**क.** इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

**ख.** इति संज्ञितम्—मूलम्, नारायणीयदीपिकासमेतम्, 'श्री. रा. रा. किबे साहेब' इत्येतेषाम् ।

**ग.** इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

**घ.** इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषामेव ।

**ङ.** इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

**च.** इति संज्ञितम्—मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषामेव ।

---

* एतच्चिह्ननिर्दिष्टाः पृष्ठाङ्काः सन्तीति ज्ञातव्यम् ।

छ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरग्रामनिवासिनां पटवर्धनोपाह्वानां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ज. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, पुण्यपत्तनिवासिनां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

झ. इति संज्ञितम्—केवलशंकरानन्दविरचितदीपिकायाः, पुण्यपत्तननिवासिनां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषामेव ।

## ३ अमृतनादोपनिषत् ( ४३ )

क. इति संज्ञितम्—मूलम्, नारायणदीपिकानुरोधि, आनन्दाश्रमस्थपुस्तकसंग्रहालयान्तर्गतम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इन्दूरपुरनिवासिनां श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरग्रामनिवासिनां पटवर्धनोपाह्वानां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

क. इति संज्ञितम्—मूलम्, शांकरदीपिकानुरोधि, पुण्यपत्तनस्थानां रा. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं शांकरदीपिकानुरोधि, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ग. इति संज्ञितम्—केवलशांकरदीपिकायाः, पटवर्धनोपाह्वानां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—केवलशांकरदीपिकायाः, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

## ४ अमृतबिन्दूपनिषत् ( ७१ )

क. इति संज्ञितम्—मूलम्, वटोदरग्रामनिवासिनां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, बेलापुरग्रामनिवासिनां 'विद्यानन्दस्वामी' इत्येतेषाम् ।

ग. इति संज्ञितम्—केवलशंकरानन्दविरचितदीपिकायाः, वटोदरनिवासिनां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—केवलशंकरानन्ददीपिकायाः, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, साठे इत्युपाह्वानां वे. रा. 'लक्ष्मण नारायण' इत्येतेषाम् ।

### ५ आत्मोपनिषत् ( ८१ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्री. रा. रा. 'भाऊसाहेब बाळासाहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, पुण्यपत्तनस्थानां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

### ६ आरुणेय्युपनिषत् ( ८५ )

क. इति सांज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति सांज्ञितम्—केवलशंकरानन्दविरचितदीपिकायाः, रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरनिवासिनां श्री. रा. रा 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ङ. इति सांज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

### ७ कैवल्योपनिषत् ( १०१ )

क. इति संज्ञितम्—मूलम्, बेलापुरनिवासिनां श्रीविद्यानन्दस्वामिनाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम् इन्दुरपुरनिवासिनां श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलं शांकरदीपिकासमेतम्, वटोदरनिवासिनां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, आनदाश्रमपुस्तकसंग्रहालयस्थम् ।

च. इति संज्ञितम्—मूलम्, रा. रा. पेणशे इत्युपाह्वानाम् ।

छ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां जोशी इत्युपाह्वानां रा. रा. 'दामुकाका' इत्येतेषाम् ।

ज. इति संज्ञितम्—मूलम्, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

झ. इति संज्ञितम्---मूलम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

### ८ कौषीतक्युपनिषत् ( ११३ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्---मूलमपूर्णमन्त्याध्यायद्वयमितम्, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलमपूर्णं शांकरदीपिकासमेतान्तिमाध्यायद्वयमितम्, वटोदरग्रामानिवासिनां श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलं पूर्णं शांकरदीपिकासमेतम्, पुण्यपत्तननिवासिनां वे. रा. रा. 'राघवाचार्य रामानुज' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलमपूर्णमन्तिमाध्यायद्वयमितम्, वे. रा. ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलं पूर्णं शंकरानन्दविरचितदीपिकासमेतम्, कलिकातानगरस्थमुद्रणालयमुद्रितम्, पुण्यपत्तनस्थानां वे. रा. रा. ' बाळशास्त्री देव ' इत्येतेषाम् ।

### ९ क्षुरिकोपनिषत् ( १८५ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा 'भाऊसाहेब बाळासाहेब किबे ' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, सातारानगरनिवासिनां वे. शा. रा. रा. ' अनन्ताचार्य गजेन्द्रगडकर ' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम् श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, वे. रा. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

छ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

### १० गर्भोपनिषत् ( १९७ )

क. इति संज्ञितम्—मूलम्, वे. रा. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ग. इति संज्ञितम्—मूलम्, श्री रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

घ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलशांकरदीपिकायाः, रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

## ११ गोपालपूर्वतापनीयोपनिषत् ( २२३ )

क. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

## १२ गोपालोत्तरतापनीयोपनिषत् ( २४५ )

क. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ग. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. 'दामुकाका जोशी' इत्येतेषाम् ।

## १३ चूलिकोपनिषत् ( २६९ )

क. इति संज्ञितम्—श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. 'भाऊसाहेब बाळासाहेब ' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थितम् ।

घ. इति संज्ञितम्—मूलम्, सातारानगरनिवासिनां वे. शा. रा. रां. 'अनन्ताचार्य गजेन्द्रगडकर ' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकाया एव, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

## १४ जाबालोपनिषत् ( २७५ )

क. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. ' दामुकाका जोशी ' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, वे. रा. ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयास्थितम् ।

ङ. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थमेव ।

च. इति संज्ञितम्—केवलश्रीशांकरदीपिकाया एव, एतदप्यानन्दाश्रमपुस्तकसंग्रहालयस्थमेव ।

छ. इति संज्ञितम्—केवलशांकरदीपिकायाः, पुण्यपत्तननिवासिनां रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

## १५ तेजबिन्दूपनिषत् ( २९५ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. भाऊसाहेब बाळासाहेब किबे ' इत्येतेषाम् ।

ग. इति संज्ञितम्—आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, वे. शा. रा. 'अनन्ताचार्य गजेन्द्रगडकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

च. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, सुरतग्रामनिवासिनां रा. रा. ' हरि बाबाजी करम्बेळकर ' इत्येतेषाम् ।

## १६ ध्यानबिन्दूपनिषत् ( २९९ )

क. इति संज्ञितम्—मूलम्, बेलापुरग्रामनिकटवर्तिनां श्रीविद्यानन्दस्वामिनाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' भाऊसाहेब बाळासाहेब किबे' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

## १७ नादबिन्दूपनिषत् ( ३०९ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' भाऊसाहेब बाळासाहेब किबे ' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. 'अनन्ताचार्य गजेन्द्रगडकर' इत्येतेषाम्

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

१८ नीलरुद्रोपनिषत् ( ३१५ )

क. इति संज्ञितम्—मूलम्, बेलापुरनिवासिनां विद्यानन्दपरमहंसानाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. इंदूरपुरनिवासिनां 'किबे साहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. 'अनन्ताचार्य गजेन्द्रगडकर' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

१९ परमहंसोपनिषत् ( ३२१ )

क. इति संज्ञितम्—मूलम्, रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, वटोदरग्रामनिवासिनां श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, एतदपि श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषामेव ।

घ. इति संज्ञितम्—मूलम्, बेलापुरनिकटवर्तिनां विद्यानन्दपरमहंसानाम् ।

ङ. इति संज्ञितम्—मूलम्, वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।

च. इति संज्ञितम्—केवलशांकरदीपिकाया एव, श्री. रा. रा. 'अण्णासाहेब विंचूरकर' इत्येतेषाम् ।

छ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, रा. रा. 'भाऊसाहेब नगरकर' इत्येतेषाम् ।

२० पिण्डोपनिषत् ( ३४३ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—नारायणविरचितदीपिकासमेतम्, इंदूरपुरनिवासिनां श्री. रा. रा. 'किबे साहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

२१ प्राणाग्निहोत्रोपनिषत् ( ३४५ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इंदूरपुरनिवासिनां श्री. रा. रा. 'किबेसाहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. ' अनन्ताचार्य गजेन्द्रगडकर ' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां रा. रा. ' दामुकाका जोशी ' इत्येतेषाम् ।

च. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

## २२ ब्रह्मोपनिषत् ( ३५३ )

क. इति संज्ञितम्—मूलम्, वे. रा. ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इंदूरपुरनिवासिनां श्री. रा. रा. ' किबेसाहेब ' इत्येतेषाम् ।

ग. इति संज्ञितम्—आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, वे. शा. रा. ' अनन्ताचार्य गजेन्द्रगडकर ' इत्येतेषाम् ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

च. इति संज्ञितम्—केवलशांकरदीपिकायाः, श्री. रा. रा. ' अण्णासाहेब विंचूरकर ' इत्येतेषाम् ।

छ. इति संज्ञितम्—केवलशंकरानन्दविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

## २३ ब्रह्मबिन्दूपनिषत् ( ३७७ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' किबेसाहेब ' इत्येतेषाम् ।

ग. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

## २४ ब्रह्मविद्योपनिषत् ( ३८१ )

क. इति संज्ञितम्— मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम् श्री. रा. रा. ' किबेसाहेब ' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

## २५ मैत्र्युपनिषत् ( ३८५ )

क. इति संज्ञितम्—मूलं रामतीर्थविरचितदीपिकासमेतम्, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलम्, वे. रा. 'लक्ष्मण नारायण साठे' इत्येतेषाम् ।
ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
घ. इति संज्ञितम्—मूलं सदीपिकं कलिकातानगरस्थमुद्रणालयमुद्रितम्, वे. शा. रा. रा. 'बाळशास्त्री देव' इत्येतेषाम् ।

## २६ योगतत्त्वोपनिषत् ( ५१७ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. 'किबेसाहेब' इत्येतेषाम् ।
ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
घ. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. 'अनन्ताचार्य गजेन्द्रगडकर' इत्येतेषाम् ।
ङ. इति संज्ञितम्—मूलम्, रा. रा. 'दामुकाका जोशी' इत्येतेषाम् ।

## २७ योगशिखोपनिषत् ( ५२३ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इन्दूरपुरवासिनां श्री. रा. रा. 'किबेसाहेब' इत्येतेषाम् ।
ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
घ. इति संज्ञितम्—मूलम्, वे. शा. रा. रा. 'अनन्ताचार्य गजेन्द्रगडकर' इत्येतेषाम् ।
ङ. इति संज्ञितम्—मूलम्, वे. शा. रा. ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।
च. इति संज्ञितम्— केवलनारायणविरचितदीपिकायाः, सुरतग्रामनिवासिनां रा. रा. ' हरि बाबाजी करम्बेळकर ' इत्येतेषाम् ।

## २८ रामपूर्वतापनीयोपनिषत् ( ५२७ )

क. इति संज्ञितम्—मूलम्, रा. रा. ' दामुकाका जोशी ' इत्येतेषाम् ।
ख. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।
ग. इति संज्ञितम्—मूलम्, इन्दूरपुरवासिनां श्री. रा. रा. ' किबे साहेब ' इत्येतेषाम् ।
घ. इति संज्ञितम्— मूलं नारायणविरचितदीपिकासहितम्, वे. शा. रा. ' राघवाचार्य रामानुज ' इत्येतेषाम् ।
ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

च. इति संज्ञितम्––मूलं नारायणविरचितदीपिकासहितम्, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

छ. इति संज्ञितम्––मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

२९ रामोत्तरतापनीयोपनिषत् ( ५७० )

क. इति संज्ञितम्––मूलम्, रा. रा. ' दामुकाका जोशी ' इत्येतेषाम् ।

ख. इति संज्ञितम्––मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ग. इति संज्ञितम्––मूलम्, श्री. रा. रा. ' किबे साहेब ' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ङ. इति संज्ञितम्— केवलनारायणदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

छ. इति संज्ञितम्—मूलम्, एतदप्यानन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ज. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

झ. इति संज्ञितम्—मूलम्, रा. रा. 'दामुकाका जोशी' इत्येतेषाम् ।

३० संन्यासोपनिषत् ( ५९१ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, श्री. रा. रा. ' किबेसाहेब' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलम्, अस्य स्वामिनो नामादि न ज्ञायते ।

ङ. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, श्री. रा. रा. 'कृष्णराव भीमाशंकर इत्येतेषाम् ।

३१ सर्वोपनिषत् ( ६२७ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम, श्री. रा. रा. 'भाऊसाहेब बाळासाहेब किबे ' इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां रा. रा. 'दामुकाका जोशी' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, वे. रा. रा. ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।

च. इति संज्ञितम्—केवलनारायणविरचितदीपिकायाः, वटोदरग्रामनिवासिनां श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

## ३२ हंसोपनिषत् ( ६३३ )

क. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं नारायणविरचितदीपिकासमेतम्, इंदूरपुरनिवासिनां श्री. रा. रा. ' भाऊसाहेब बाळासाहेब किबे, इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां ' लक्ष्मण नारायण साठे ' इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलम्, वटोदरनिवासिनां श्री. रा. रा. ' कृष्णराव भीमाशंकर ' इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, श्री. रा. रा. ' अण्णासाहेब विंचूरकर ' इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

छ. इति संज्ञितम्—मूलम्, एतदपि श्री. रा. रा. ' अण्णासाहेब विंचूरकर ' इत्येतेषामेव ।

ज. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां रा. रा. ' दामुकाका जोशी ' इत्येतेषाम् ।

झ. इति संज्ञितम्—केवलशंकरानन्दविरचितदीपिकायाः, वे. रा. रा. ' राघवाचार्य रामानुज ' इत्येतेषाम् ।

**समाप्ता चेयं द्वात्रिंशदुपनिषत्समुच्चयादर्शपुस्तकोल्लेखपत्रिका ।**

ॐ तत्सद्ब्रह्मणे नमः ।

# अथर्वशिखोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

हरिः ॐ । ॐ पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणं भगवन्तं प्रपच्छ किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्चिद्ध्येय इत्यथैभ्योऽथर्वा प्रत्युवाच । ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमोमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदा-

एषाऽथर्वशिखा नाम शिरऊर्ध्वं शिखोचिता ।

द्विखण्डा सप्तमी मुण्डात्प्रणवार्थनिरूपिणी ॥ १ ॥

सर्वार्थसिद्धिदं शिवमाराध्य विधूतविघ्नव्रातो भगवान्महेश्वरपूजनेन विधूताखिलकिल्बिषो देशिकः क्षुरिकोक्तमार्गेण साधितयमादिप्रत्याहारान्तयोगाङ्गो धारणापूर्वकं ध्यानपथमारुरुक्षुः सबीजयोगे मन्त्रस्याङ्गत्वात्सर्वमन्त्रशिरोमणिं प्रणवमवयवशः स्वरूपतश्च निर्णीय ध्याने विनियोक्तुं पुनः प्रकृतं तमेवानुसंधत्ते । ॐ पिप्पलाद इति । अत्र प्रष्टॄणां त्रित्वमेभ्य इत्यग्रेऽनुवादादवसीयते । आख्यायिका तु विद्यास्तुत्यर्था । प्रश्नानाह । किमादाविति । आदौ मुख्यत्वेन च प्रयुक्तं ध्यायते यत्तदिति व्युत्पत्त्या ध्यानं ध्येयं ध्यानार्हं च किमित्यर्थः । अत्र च्छान्दसश्चिण्वदिट् । प्रथमप्रयुक्तो ध्येयश्च मन्त्रः क इति प्रथमप्रश्नार्थः । किं तद्ध्यानमिति तस्य ध्यातव्यस्य मन्त्रस्य किं ध्यानमिति द्वितीयः प्रश्नः । को वा ध्याताऽधिकारीति तृतीयः । कश्चिद्ध्येय ईश इति चतुर्थः । चिद्वितर्के । को ध्येयो देव इति विचार्य वक्तव्यमित्यर्थः । इतिशब्दः प्रश्नसमाप्तौ । आद्यस्योत्तरमोमित्येतदक्षरमिति । सर्वस्य वक्तव्यस्य मन्त्रब्राह्मणादेर्देवताध्यानस्य चाऽऽदौ प्रथमं प्रयुक्तम् । आदावीश्वरे वाचकत्वेन प्रतिनिधित्वेन वा प्रयुक्तमित्यर्थः । द्वितीयस्योत्तरमोमित्येतदक्षरस्येति । पादा देवा वेदाश्चतुःसंख्याका यथासंख्यं ध्येया इत्यर्थः । देवा उभयेऽपि । अधिष्ठात्र्यो गणदेवताश्च देवशब्देन गृहीताः । पृथिव्यादयो लोका गायत्र्यादीनि च्छन्दांसि च रूपाणि त्रिष्वेव

---

१ क. ॐ भद्रं कर्णेभिरिति शान्तिः । अथ हैनं पैप्प° । २ क. इति स एभ्यो° । ३ ख. ङ. °रूपणी ।

श्चत्वारश्चतुष्पादेतदक्षरं परं ब्रह्म पूर्वाऽस्य मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यो द्वितीयाऽन्तरिक्षमुकारः स यजुर्भिर्यजुर्वेदो रुद्रो रुद्रास्त्रिष्टुब्दक्षिणाग्निस्तृतीया द्यौर्मकारः स सामभिः सामवेदो[२] विष्णुरादित्या जगत्याहवनीयो याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा लुप्तमकारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुत[३] एकऋषी रुचिरा भास्वती स्वभा। प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या द्वितीया शुभा शुक्ला रौद्री रुद्रदेवत्या तृतीया कृष्णा विष्णुमती विष्णु-

सन्ति न चतुर्ष्विति पादादिपङ्क्तौ नोक्तानि। अग्नयः शिरस्त्वानोक्ताः। एतेषां शिरस्त्वं चतुःशिरा इत्यनेन वक्ष्यति। पादाश्चत्वारोऽकारादयः। पादादीन्वक्तुं पुनश्चतुष्पात्त्वं प्रतिजानीते। **चतुष्पादेतदक्षरं परं ब्रह्मेति**। ऋग्भिरुपलक्षितत्वादृग्वेदो ब्रह्मादयोऽधिष्ठात्र्यो वस्वादयो गणदेवताः। लुप्तमकारो मकारस्य विस्तरत्वात्साऽथर्वणैर्मन्त्रैरुपलक्षिताऽतोऽथर्ववेदः। संवर्तकोऽग्निर्ब्रह्मादिस्थानीयोऽधिष्ठाता। मरुत एकोनपञ्चाशत्संख्याका गणदेवताः। अत्र विराडित्यपपाठश्चतुष्कपाठेऽपठितत्वादन्यथा पादाश्चत्वार इत्यत्र च्छन्दांसि चत्वारीति च पठेत्। वर्णावसानत्वाच्चार्धमात्राया वर्णधर्मच्छन्दसोऽसंभवात्। नारसिंहे तु विराडित्यपि पठितं तत्रौपचारिकं छन्दस्त्वं बोद्धव्यम्। एकऋषिर्नामाग्निर्मध्येऽ(मुख्येऽ)वस्थितः। तुर्यमात्राया ध्यानमाह। **रुचिरेति**। रुचिरा रम्या भास्वती दीप्तिमती स्वभाऽन्यनिरपेक्षप्रकाशा। इदानीं मात्राणां वर्णानाह। **प्रथमेति**। रक्ता वर्णेन सृष्टिहेतुत्वेन राजसत्वात्। ब्राह्मी ब्रह्मवत्यग्रे विष्णुमतीत्युक्तत्वात्। ब्रह्मा देवताऽपि तटस्थो भविष्यति न संबद्ध इतिशङ्कानिरासाय ब्राह्मीत्युक्तम्। शुभा शुक्ला चन्द्रसंनिभा। रौद्री नित्यसंनिहितरुद्रा। पुरुष ईश्वरः। यद्यपि ब्रह्मविद्योपनिषद्यकारादीनां क्रमेण ब्रह्मविष्णुरुद्रा देवता उक्तास्तथा तृतीया मात्रा मकारश्चाग्निसंकाशो विधूमो विद्युतोपम इत्युक्ताऽत्र तु ब्रह्मरुद्रविष्णवो देवता उक्तास्तृतीयमात्रा च कृष्णोक्ता तेन विरोधस्तथाऽथर्वशिरसि या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेनेति देवतावर्णविपर्यास उक्तस्तथाऽपि वस्तुतो ब्रह्मादीनां त्रयाणामेकरूपत्वादुपासनाङ्गत्वेन फलभेदाय तत्तद्रूपोपादानम्। एतेन वर्णभेदोऽपि परिहृतो ध्यानभेदेन फलभेदात्। अत एव कालाग्निरुद्रोपनिषदि महेश्वरसदाशिवशिवाः शैवं प्रति प्रणववर्णत्रयदेवा उक्ताः। आगमेषु क्वचित्सात्त्विकादिभेदेनैकस्या एव देवताया त्रिधा ध्यानमुक्तम्। वास्तवस्थितिं चात्रैव वक्ष्यति "ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः

१ क. °वो विष्णुरु°। २ क. °दो रुद्रा आदि°। ३ क. ख. °रुतो विराडेक°।

**देवत्या चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदेवत्या । स एष ह्योंकारश्चतुष्पादश्चतुःशिराश्चतुर्थ्यर्धमात्रा स्थूलह्रस्वदीर्घप्लुतः । ओम् ओम् ओम् इति त्रिरुक्तश्चतुर्थः शान्तात्मा प्लुतप्रयोगे न समभिव्यात्मज्योतिः सकृदावर्तव्य[1] ओं स एष सर्वान्प्राणान्सकृदुच्चा-**

शिव एव च । पञ्चधा पञ्चदेवत्यः प्रणवः ” इति । कल्पभेदेन वा ब्रह्मादीनामुत्पत्तिक्रमभेदः । अत एव संध्यायां ब्रह्मरुद्रविष्णव उपास्यन्ते । कैश्चिदन्यैस्तु ब्रह्मविष्णुरुद्राः प्रातर्मध्याह्नसायंकालेषूपास्यन्ते । कौथुमैस्तु रुद्रो मध्याह्न उपास्यः “ ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनं रुद्राणां माध्यंदिनं सवनमादित्यानां च विश्वेषां देवानां तृतीयसवनम् ” इत्याम्नानाद्विष्णुरादित्यान्तर्भूतः । चत्वारः पादा अकारोकारमकारार्धमात्रा विश्वतैजसप्राज्ञतुरीयलक्षणा यस्य स चतुष्पादः । चत्वारि शिरांस्युत्तमाङ्गानि मुख्यस्थानीयान्यग्नयो यस्य स चतुःशिराः । अकारादीनां पूर्वपूर्वस्योत्तरोत्तरावगतिहेतुत्वात्पद्यतेऽनेनेति व्युत्पत्त्या पादत्वम् । तुरीयस्य तु पद्यते गम्यते य इति व्युत्पत्त्या पादत्वम् । यद्वाऽकारादीनां पादत्वं प्राथम्यात्सर्वधर्माश्रयत्वाच्च सर्वभारसहपादत्वम् । अग्नीनां मुखत्वं ‘ मुखादग्निरजायत’ इति श्रुतेरग्नेः सर्वदेवमुखत्वादन्यनिर्दिष्टत्वाच्च द्रष्टव्यम् । स्थूलरूपं त्रिधा विभक्तुं सूक्ष्मं पृथक्करोति । **चतुर्थीति** । चतुर्थ्यर्धमात्रा नादसंज्ञा लुप्तमकारः । स्थूलविभागमाह । **स्थूलेति** । यः स्थूलो वर्णकूटरूपः प्रणवः स ह्रस्वदीर्घप्लुतः । उद्देश्यविधेययोरपि विशेषणविशेष्यत्वमात्रविवक्षया समासः । ह्रस्वादीनां स्वरूपमभिनीय दर्शयति । **ओमोमोमिति** । प्रथम एकमात्रो द्वितीयो द्विमात्रस्तृतीयस्त्रिमात्र इत्यर्थः । नन्वेवं ह्रस्वो नास्तीति कथं ह्रस्व ओंकारः । नैष दोषः । पार्षदश्रुतिरियं तत्र भवतां यथा राणायनीयानां “ सुजाते ए अश्वसूनृते अध्वर्यो ते अद्रिभिः सुतम् ” इति व्याकरणसिद्धे प्रयोगे ह्रस्वो नास्तीति तस्यार्थः । इति त्रिरुक्त इत्यभिनीतस्योपसंहारः । चतुर्थः पादः क वर्ततेऽत आह । **शान्तात्मा प्लुतप्रयोग इति** । वर्तत इति शेषः । तत्रैवाभिव्यक्तत्वात् । न सममनुपमं रूपमिति हेतोरात्मज्योतिस्तत् । विरम्यमाणघण्टानादाद्युपमाऽपि न भवति । ततोऽप्यतिसूक्ष्मत्वात् । सकृदावर्तव्यः[2] सकृदावर्तयितव्योऽनाहतशब्द[3] इत्यर्थः । यथा सकृद्विभातः । तदपि कुतो भवतीति चेच्छ्रूयतां निर्विशेषत्वात्पूर्वापरविभाने[4] भेदकाभावात्[5] । तथा निर्विशेषत्वात्पूर्वापरावृत्तौ भेदैक्याभावात्सकृदावर्तव्यः शब्दब्रह्मसंज्ञः । स एष इति वर्णितप्रणवस्योपसंहारः । ओंकारशब्दस्य प्रवृत्तिनिमित्तमाह । **सर्वान्प्राणानिति** । प्राणा दश वायवस्तान्समनस्कान्साक्षीन्षट्चक्रभेदनेन सुषुम्नाद्वारेण मूर्धानमानयतीत्यर्थः । पुनः स एष इत्यनुवाद आदरार्थः । अनेकार्थत्वान्निपातानामो-

१ क. ग. °र्तव्यः स° । २ ख. ङ. °र्तव्योऽ° । ३ घ. °ब्दरूप इ° । ४ घ. °विभागेन भे° । ५ ध. भेदकाभा° ।

रितमात्रः स एष ह्यूर्ध्वमुत्क्रामयतीत्योंकारः ॥ १ ॥

प्रणवः सर्वान्प्राणान्प्रणामयति नामयति चैतस्मात्प्रणवश्चतुर्धाऽवस्थित इति वेददेवयोनिर्ध्येयाश्चेति संधर्ता सर्वेभ्यो दुःखभयेभ्यः संतारयति तारणात्तानि सर्वाणीति विष्णुः सर्वाञ्जयति ब्रह्माऽबृहत्सर्वकारणानि संप्रतिष्ठाप्य ध्यानाद्विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तम् । ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभू-

मित्यूर्ध्वभावे । ऊर्ध्वान्प्राणान्क्रामयत्युच्चारयितुरित्योंकारः । इति योगिभिरवश्यं ध्येय इति भावः ॥ १ ॥

तस्य नामान्तरमाह । **प्रणव इति** । प्रणवशब्दनिमित्तमाह । **सर्वानिति** । प्रणामो नम्रतापादनं नामनं न्यग्भावापादनम् । चतुर्धा यतोऽवस्थितस्ततश्चतुर्णां वेदानां देवानां च योनिः । अनेन क्रमेण पूर्वत्रापि वेदाश्चत्वारो देवाश्चत्वार इति पाठेन भवितव्यम् । सांप्रदायिकैर्निश्चयो विधेयः । किं तद्ध्यानमिति यत्पृष्टं तदुत्तरं निगमयति । **धेयाश्चेति** । धाम्नो रूपम् । धातव्या धरणीयाः । पादादयो बुद्ध्या न त्यक्तव्या ध्यातव्या इत्यर्थः । धारणस्य फलमाह । **संधर्तेति** । संधर्तैषां पादादीनां धारयिता तारयत्याश्रितान्स्वस्य किं वक्तव्यम् । को ध्यातेति प्रश्नं ध्यातृब्रह्मविष्णुनिदर्शनेनोत्तरयति । **तारणात्तानीति** । तारणेनाऽऽश्रितानां दुःखभयापनयनेनात्तानि । अद भक्षणे निष्ठा । ग्रस्तान्यभिभूतानि दुःखभयानि सर्वाणीति हेतोर्विष्णुः स सर्वानत्ति क्षपयति दैत्यादींश्छान्दसो जग्ध्यभावः । अथवा तारणात्तारकत्वाद्धेतोस्तानि पादादीनि सर्वाणीति पूर्वोक्तप्रकारेण विष्णुर्ध्यातवानिति शेषः । ध्यानफलमाह । **सर्वाञ्जयतीति** । अथ ब्रह्माऽप्यबृहद्बृहत्त्वं गतवान् । कस्मात् । सर्वाणि कारणानि सर्वाणीन्द्रियाणि संप्रतिष्ठाप्य स्थिरीकृत्य ध्यानात् । विष्णुब्रह्मणोर्ध्यानकथनेनैतत्फलार्थी ध्यातेत्युक्तं भवति । कश्चिद्ध्येय इति चतुर्थमुत्तरयति । **विष्णुर्मनसीति** । नादान्ते शक्तिद्वारा शान्तौ ब्रह्मणि प्रणवो हि पञ्चकूटात्मकोऽकारोकारमकारबिन्दुनादात्मकस्तत्र नादं परमात्मस्थाने स्थाप्याऽऽरोप्य ध्येयं ध्यानोचितमीशानं मनसि विष्णुः प्रध्यायन्ति प्रध्यायतीत्यर्थः । वचनव्यत्ययोऽन्येषामपीशस्य ध्येयत्वसूचनार्थः । नन्वन्यान्देवानपहायेशान एव किमिति ध्येयोऽत आह । **ईशा वेति** । वाशब्द एवार्थे । ईशैव सर्वमिदं प्रयुक्तं नान्येन । ननु भवतु सर्वं प्रयुक्तं न तु ब्रह्मादयोऽत आह । **ब्रह्मेति** । इन्द्रो मघवा । एते चत्वार ईशाः संप्रसूयन्ते जन्यन्ते सहभूतानि भूतसहितानीन्द्रियाणि । ईशा संप्रसूयन्ते । पुनः किं

१ ग. °त्सर्वा कर° । २ क. °र्वेहर° । ३ ख. °नं ध्या° । ४ घ. °भयोपनिय° । ५ ख. ङ. °न्ति ध्या° ।

तानि करणं सर्वमैश्वर्यं संपन्नं शिवमाकाशं मध्येध्रुवस्थम् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च । पञ्चधा पञ्चदेवत्यः प्रणवः परिपठ्यते । तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति कृत्स्नमोंकारगतं च सर्वज्ञानेन योगध्यानाना शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्यैतामधीत्य द्विजो गर्भवासान्मुच्यते गर्भवासान्मुच्यत इति ॥ २ ॥

इत्यथर्ववेदेऽथर्वशिखोपनिषत्समाप्ता ॥ १ ॥

---

किमीशा प्रयुक्तमत आह । करणमिति । करणं साधकतममुपायभूतं सर्वमीशा प्रयुक्तमित्यर्थः । स हि प्रथममुपायबोधकः । ऐश्वर्यं प्रभुशक्तिः । संपन्नं कार्यमात्रम् । निदर्शनाय सर्वकार्यमूर्धन्यमाकाशमाह । शिवमिति । शिवं निर्मलम् । मध्ये सर्वस्यान्तर्ध्रुवमेकरूपेण तिष्ठतीति मध्येध्रुवस्थमाकाशमीशा प्रयुक्तं तच्च वाय्वादीनामुपलक्षणम् । यद्वा संपन्नादिचतुष्टयं शिवस्य विशेषणम् । जन्यत्वशङ्कानिवृत्तये नादान्तग्रहणेन सूचितां प्रणवस्य पञ्चकूटतामाह । ब्रह्मेति । पञ्चधाऽकारादिरूपेण । पञ्चात्मकस्य ज्ञाने फलमाह । तत्रेति । यत्नाधिक्ये फलाधिक्यमिति न्यायात् । तेनावान्तरवस्तुशक्तेरनियम्यत्वात्क्रतुशतस्य फलं ततोऽप्यधिकं च प्राप्नोति । कृत्स्नमोंकारगतं चेति । कृत्स्नमोंकारपादादिकमोंकारगतं च ध्यात्वा क्रतुशतस्यापि फलमाप्नोतीत्यनुषज्यते । परमोपदेशमाह । सर्वेति । सर्वमन्यत्परित्यज्येति प्राक्तनेन संबध्यते । ईश एव परमो ध्येय इति चतुर्थमुत्तरमुपसंहृतम् । अध्ययनफलमाह । एतामिति । एतामुपनिषदमप्यथर्वशिखासंज्ञाम् । द्विज इति शूद्रनिरासः । द्विरुक्तिः समाप्त्यर्थेतिशब्दश्च ॥ २ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिकाऽथर्वशैखिके ॥ १ ॥

इति नारायणविरचिताऽथर्ववेदान्तर्गताथर्वशिखोपनिषद्दीपिका समाप्ता ॥ १ ॥

---

१ क. °र्शं शुभमा° । २ ग. °ज्ञानयो° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अथर्वशिरउपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ॐ भद्रं कर्णेभिरिति शान्तिः । ॐ देवा ह वै स्वर्गं लोकमायं[1]स्ते देवा रुद्रमपृच्छन्को भवानिति सोऽब्रवीदहमेकः प्रथममा[2]सीद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशा[3]द्दिशो व्यन्तरं प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च

रुद्राध्यायोऽथर्वशि[4]रः सप्तखण्डो ह्यथर्वणः ।
शिरो भित्त्वा यतो जातं ततोऽथर्वशिरः स्मृतम् ॥ १ ॥

योगमारूढस्य महत्पदमारुरुक्षोर्मुनेर्देवादिकृतविघ्नसंभावनाऽगम्यार्थोपदेशापेक्षा च स्यादतो विघ्ननिवृत्तय उपदेशाय च रुद्रस्तुतिरारभ्यते । किं च योगोऽपि तत्प्रसादं विना न सिध्यति । य[5]था स्मृतिः—

“ न सिध्यन्ति महायोगा मदीयाराधनं विना ।
मत्प्रसादविहीनानां मन्निन्दापरचेतसाम् ।
पशूनां पाशबद्धानां योगः क्लेशाय जायते ।
संत्यज्याऽऽज्ञां शिवेनोक्तां पूजां संत्यज्य मामिकाम् ” इति ।

तत्प्रसादे च निर्विघ्नं सिद्धिरुक्ता—

“ युञ्जतः सततं देवि सर्वलोकमयं शिवम् ।
मद्ध्यानासक्तचित्तस्य तुष्यन्ते सर्वे देवताः ।
तन्मां संपूज्य युञ्जीत मत्प्रसादेन खेचरी ।
अन्यथा क्लिश्यतेऽत्यर्थं[6] न सि[7]द्धिर्जन्मकोटिभिः ” इति ।

अमृतबिन्दौ रुद्राराधनतत्पर इति तदाराधनस्य योगसिद्ध्यङ्गत्वेनोक्तत्वाच्च । अतः सिद्धिमिच्छता रुद्रोऽवश्यं सेव्य इति रुद्रस्तुतिरारभ्यते । ॐ देवा इति । आख्यायिका विद्यास्तुत्यर्था । देवा इन्द्रियाणीन्द्रादयो वा । स्वर्गं सत्त्ववृत्तिं

१ ख. °स्ते रु° । २ क. च. °मासं वर्ता° । ३ क. च. °द्दिशोन्त° । ४ ख. °शिरः स° । ५ छ. तथा । ६ ज. °र्थं सि° । ७ ज. °द्धिर्न ज° ।

उदञ्चोऽहमधश्चोर्ध्वश्चाहं दिशश्च प्रदिशश्चाहं पुमानपुमांस्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रं च मध्यं च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वे व्योममेव स सर्वे समा यो मां वेद स देवान्वेद सर्वांश्च वेदान्साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान्ब्राह्मण्येन हविर्हविषाऽऽयुरायुषा सत्येन सत्यं धर्मेण धर्मं तर्पयामि स्वेन तेजसा ततो ह वै ते देवा रुद्रमपृच्छं-

---

कैलासं वा । ऋषिभिर्द्रुतं रुद्रमात्मानमुमापतिं वा आसीद्व्यत्ययेन प्रथमः पुरुषः । वर्तामि व्यत्ययेन परस्मैपदम् । स रुद्रो मल्लक्षणोऽन्तरादन्तरं गुह्याद्गुह्यं प्रविष्टो दिशो व्यन्तरं जातावेकवचनं दिशां विविधमन्तरं प्राविशत् । सर्वात्मा सर्वव्यापी च बभूवेत्यर्थः । अपुमान्नपुंसकम् । सावित्री सवितृदेवताकाऽन्याऽप्यृक् । गौः सुरभिः । ब्रह्माण्डं पुष्करं पद्मम् ।

“ पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ।

ओषधीद्वीपविहगतीर्थरागोरगान्तरे ” इति विश्वः ।

अहमेव सर्वे भावाः । व्योममेव सर्वात्मकोऽपि व्योममेव व्योमात्मतां शुद्धात्मतां न जहामीत्यर्थः । व्योमशब्दोऽकारान्तोऽयम् । तर्हि त्वमुत्कृष्टोऽन्येऽपकृष्टा इति ब्रह्मणि वैषम्यं स्यादत आह । **सर्वे समा** इति । समास्तुल्या मत्तो भेदकैर्विशेषै रहितास्तेन मत्तोऽन्यन्नास्तीति कथमुत्कर्षापकर्षसंभव इति भावः । ऐक्यज्ञानफलमाह । **य** इति । साङ्गानपि वेदेत्यनुषङ्गः । ब्रह्म ब्राह्मणैस्तर्पयामीत्यग्रेतनेन संबन्धः । ब्रह्म वेदः स ह्यभ्यासेन तृप्तो भवति । तदुक्तम्—“ विद्यामभ्यसनेनैव प्रसादयितुमर्हसि ” इति । गां स्त्रियम् । गोभिः पुंभिः । गोशब्देन लिङ्गमेव विवक्षितं न सुरभीत्वमनडुत्त्वं च जातिः । ब्राह्मण्येन ब्रह्मतेजसा । हविरोदनादि । हविषा संस्कारकेण सर्पिरादिना । पित्राद्यायुः पित्राद्यायुषा । सत्येन सत्यं सत्यवादी सत्यवादिदर्शनेन तृप्तो भवति । एवं धार्मिको धार्मिकस्य । **स्वेनेति** । यत्तृप्तिहेतुस्तन्ममैव तेजः ।

तदुक्तम्—“ या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः ।

यदपि च किंचिद्रमणीयं वस्तु शिवस्तत्तदाकारः ” इति

---

१ ख. °पत्योऽहं द° । २ ख. °हं व° । ३ ख. °मक्ष° । ४ क. च. °हमुग्रं । ५ क. च. च बलिश्च । ६ क. च. सर्वां° । ७ क. च. °मुपहुयंस्ते देवा रुद्रमपृच्छंस्ते देवा रुद्रमध्यायंस्ते देवा ऊ° ।

स्ते देवा रुद्रमपश्यंस्ते देवा रुद्रमध्यायंस्ते देवा ऊर्ध्वबाहवो रुद्रं स्तुन्वन्ति ॥ १ ॥

ॐ यो वै रुद्रः स भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः १ ॐ यो वै रुद्रः स भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ ॐ यो वै रुद्रः स भगवान्यश्च स्कन्दस्तस्मै वै नमो नमः ३ ॐ यो वै रुद्रः स भगवान्यश्चेन्द्रस्तस्मै वै नमो नमः ४ ॐ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै वै नमो नमः ५ ॐ यो वै रुद्रः स भगवान्यश्च वायुस्तस्मै वै नमो नमः ६ ॐ यो वै रुद्रः स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः ७ ॐ यो वै रुद्रः स भगवान्यश्च सोमस्तस्मै वै नमो नमः ८ ॐ यो वै रुद्रः स भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः ९ ॐ यो वै रुद्रः स भगवान्ये चाष्टौ प्रतिग्रहास्तस्मै वै नमो नमः १० ॐ यो वै रुद्रः स भगवान्या च भूस्तस्मै वै नमो नमः ११ ॐ यो वै रुद्रः स भगवान्या च भुवस्तस्मै वै नमो नमः १२ ॐ यो वै रुद्रः स भगवान्या च स्वस्तस्मै वै नमो नमः १३ ॐ यो वै रुद्रः स भगवान्या च पृथिवी तस्मै वै नमो नमः १४ ॐ यो वै रुद्रः स भगवान्यच्चान्तरिक्षं तस्मै वै नमो नमः १५ ॐ यो वै रुद्रः स भगवान्या च द्यौस्तस्मै वै नमो नमः १६ ॐ यो वै रुद्रः स भगवान्याश्चाऽऽपस्तस्मै वै नमो नमः १७ ॐ यो वै रुद्रः स भगवान्यच्च तेजस्तस्मै वै नमो नमः १८ ॐ यो वै रुद्रः स भगवान्यच्चाऽऽकाशं तस्मै वै नमो नमः १९ ॐ यो वै रुद्रः स भगवान्यश्च कालस्तस्मै वै नमो नमः २० ॐ यो वै रुद्रः स भगवान्यश्च यमस्तस्मै वै नमो नमः २१ ॐ यो वै रुद्रः स भगवान्यश्च मृत्युस्तस्मै वै नमो नमः २२ ॐ यो वै रुद्रः स भगवान्यच्चामृतं तस्मै वै नमो नमः २३ ॐ यो वै रुद्रः स भगवान्यच्च विश्वं तस्मै वै नमो नमः २४ ॐ यो वै रुद्रः स भगवान्यच्च स्थूलं तस्मै वै नमो नमः २५ ॐ यो वै रुद्रः स भगवान्यच्च सूक्ष्मं तस्मै वै नमो नमः २६ ॐ यो वै रुद्रः स भगवान्यच्च

---

"यद्यद्विभूतिमत्सत्त्वम्" इत्यादि च । रुद्रमपृच्छंस्तात्पर्येण पारमार्थिकं रूपं पुनरपृच्छन्नपश्यन्यथाभूतं ज्ञातवन्तस्ततो ध्यातवन्तस्तत उच्चैः स्तुन्वन्ति स्तुवन्ति स्म ॥ १ ॥

ततो ब्रह्मविष्णुस्कन्देन्द्राग्निवायुसूर्यसोमाष्टग्रहाष्टप्रतिग्रहभूर्भुवःस्वःपृथिव्यन्तरिक्षद्य्वप्तेज-आकाशकालयममृत्य्वमृतविश्वस्थूलसूक्ष्मशुक्लकृष्णकृत्स्नसत्यसर्वरूपैरेकात्रिंशत्पर्यायैः स्तुतः ।

शुक्लं तस्मै वै नमो नमः २७ ॐ यो वै रुद्रः स भगवान्यच्च कृष्णं तस्मै वै नमो नमः २८ ॐ यो वै रुद्रः स भगवान्यच्च कृत्स्नं तस्मै वै नमो नमः २९ ॐ यो वै रुद्रः स भगवान्यच्च सत्यं तस्मै वै नमो नमः ३० ॐ यो वै रुद्रः स भगवान्यच्च सर्वं तस्मै वै नमो नमः ३१ ॥ २ ॥

भूस्त आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा बद्धस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणं च त्वम्। अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्[१]। किमस्मान्कृणवदरातिः किमु धूर्तिरमृतं मर्त्यं च। सोमसूर्यः पुरस्तात्सूक्ष्मः पुरुषः सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं

---

अत्र यमपर्यायानन्तरमन्तकपर्यायोऽपि पठनीयस्तेन त्र्यम्बकमन्त्राक्षरसंख्यया द्वात्रिंशत्पर्याया भवन्ति ॥ २ ॥

विराड्रूपेण स्तुतिमाह। **भूरिति**। आदिः पादौ मध्यमुदरं ब्रह्मरूपेणैकस्त्वं द्विधा बद्धः सदसद्रूपेण त्रिधा बद्धो गुणत्रयभेदेन। हुतमहुतमित्यादि सदसद्रूपताविवरणम्। परायणं परमयनं स्थानम्। **अपाम सोममिति**। त्वयि दृष्टे सर्वं सिद्धमित्यर्थः। सर्वकर्मफलस्येश्वरदर्शनेऽन्तर्भूतत्वात्।

तदुक्तम्—"यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः" ॥ इति।

**अविदामेति**। 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतेः[३]। कृणवच्छिन्दन्नरातिः शत्रुरस्मान्प्रति किं न किंचिदित्यर्थः। धूर्तिर्हिंसाऽप्यस्माकं किम्। त्वदभिरक्षितानां त्वद्रूपमापन्नानां हिंसाकृतदोषाभावात्। यद्गीतासु—'हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते' इति। अथवा शत्रुकृता हिंसा त्वच्छरणानस्मान्न स्पृशतीत्यर्थः। अमृतमादेयं मर्त्यं हेयं च त्वदाप्त्या कृतार्थानां नो नास्तीत्यर्थः। सोमश्चासौ सूर्यश्च सोमसूर्यः। यतः पञ्चभूतानि सोमसूर्यौ यजमानश्चेत्यष्टमूर्तिरीश्वरस्तेनोभयात्मक एकः पुरस्तात्पूर्वस्यामुदेतीति शेषः। सूक्ष्मो यः पुरुषः स एव सर्वं स्थूलं संपन्नः। ननु सर्वभावापत्त्या किमर्थं सृष्टिं तनोतीत्यत आह। **जगदिति**। जगतां हितं जगद्धितं वा एतदक्षरं ब्रह्म जीवभोगापवर्गार्थं कृपया सृष्टिरिति भावः। ततः प्राजापत्यं प्रजापतिरूपेण पालितम्। सौम्यं सोमोऽन्नं तद्रूपेणाऽऽप्यायितं सूक्ष्मं पुरुषं जीवं

---

१ क. °न्। किं नूनम°। २ क. च. °मृतमर्त्यस्य। सो°। ३ छ. ज. °तेः। क्षण°। ४ छ. °न्न विदन्ति न ब°। ५ ख. °नां ना°। ६ ख. °यात्मैकः। ७ ख. सर्वाभाप°। ८ख. तन्न।

ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः । हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओंकारो य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म यत्परं ब्रह्म स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान्महेश्वरः ॥ ३ ॥

---

ग्राह्यं देहभावापन्नमग्राह्येण कालरूपेण ग्रसति । तथा भावादिकं तेनैव रूपेण ग्रसति । स्थूलस्य सूक्ष्मेऽन्तर्धानात्सौम्यमतिसौम्येन सूक्ष्ममातिसूक्ष्मेण ग्रसति । उत्कृष्टेन निकृष्टस्य सजातीयस्य[1] ह्यवनाद्वायव्यं प्राणाख्यं वायव्येन बाह्यवायुरूपेण । महाग्रासायोक्तप्रकारेण भक्षकाय मृत्युमृत्यवे । हृदिस्था अन्तःकरणवर्तिन्यो देवता इन्द्रियाधिष्ठातारः प्राणा वागादयः । त्वमन्तर्यामिरूपेण यो हृदि नित्यमासि तस्मै नमो नम इत्यन्वयः । अत एव स्वप्ने[2]ऽन्तःकरणेनैव सर्वेन्द्रियव्यवहारः । इत्युक्त्वा ध्यानेन देवा उपरताः । इदानीं श्रुतिराख्यायिकारूपं संत्दत्य स्वेन रूपेणाऽऽह । **तिस्र इति** । तिस्रो मात्रा अकारोकारमकाराः सर्ववेदमय्यः[3] परस्त्वर्धमात्रात्मकः स शिवः । **तस्येति** । मात्रात्रयातीतो त्हदि त्वमसीत्युक्तं तत्र संदेहः कस्यां दिशि तस्य शिरः कस्यां वा पादावित्यत उक्तम् । तस्य परस्य हृदिस्थस्योत्तरतः शिरो वर्तते तेनोत्तरमार्गेण गतानां गतप्रत्यागते[4] न भवतो रुद्रमुखादुपदेशलाभात् । दक्षिणतः पादौ तेन दक्षिणमार्गगामिनां(णां) गतागते भवतः । पादयोर्गमनशीलत्वात् । य उत्तरतः स ओंकारस्तेनोंकारोपासका उत्तरेण यान्ति । **य ओंकारः स प्रणव इति** । तथा प्रसिद्धेः । सर्वव्यापी सर्वव्यापिब्रह्मवाचकत्वात् । स्फोटब्रह्मपक्षे तस्यैव सर्वव्यापकत्वम् । सोऽनन्तोऽन्यथा सर्वव्याप्त्यसंभवात् । तारं तारकं शुक्लं निर्मलं सूक्ष्ममिन्द्रियाद्यग्राह्यम् । कथं तर्हि तज्ज्ञानमत उक्तम् । तद्वैद्युतं स्वप्रकाशं परं ब्रह्म सर्वबृहत् । अन्येषामात्मलाभस्य तदधीनत्वात् । अत एवैकः । अन्यात्मनस्तदायत्तत्वेन तदनतिरेकात् । स रुद्र एको रुद्र इति मन्त्रवर्णितः । ईशानः स्वतन्त्रोऽत एव भगवान्षड्विधैश्वर्यसंपन्नोऽत एव महानीश्वरोऽनवधिकैश्वर्यः । सर्वेऽप्येते शब्दाः प्रवृत्तिनिमित्तभेदेऽप्येकार्थाः समानाधिकरणवत्[5] ॥ ३ ॥

---

१ ख. छ. ज. °स्य न ह्यावचना° । २ ख. छ. ज. स्वप्नोऽन्तः° । ३ छ. ज. °र्वदेवमयः प° । ४ छ यातायाते । ५ छ. ज. °वरण त् । ई° ।

**अथ कस्मादुच्यत ओंकारो यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यत ओंकारोऽथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसो ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवोऽथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिसृष्टश्च[1] तस्मादुच्यते सर्वव्याप्यथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तोऽथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते तस्मादुच्यते तारमथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयते तस्मादुच्यते शुक्लमथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्ममथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एवा[2]व्यक्ते महति तमसि द्योतयते[3] तस्मादुच्यते वैद्युतमथ कस्मादुच्यते परं ब्रह्म यस्मात्प-**

---

पर्यायत्वशङ्कानिवृत्तये त्रयोदशानामपि[4] प्रवृत्तिनिमित्तभेदं पृच्छति । अथेति । ऊर्ध्वोत्क्रामशब्दयोरोंकार इति निपातनम् । उपायस्योपायान्तराविरोधान्न व्याकरणविरोधः शङ्क्यः । एवमुत्तरेष्वपि । चतुर्वेदात्मकं ब्रह्माध्येतृभ्यः प्रणामयति प्रणतं नम्रं करोति नामयति न्यक्करोति तत्तन्त्रमिव करोति स प्रणवः । पललं तिलपिष्टं तस्य पिण्डं गुटिका । इवशब्दो वाक्यालंकारे । यथा तिलपिष्टपिण्डं सर्वतः स्नेहेन तैलेन व्याप्तमेवं पटे तन्तुवत्कार्यमात्रमोतं प्रोतं च तेन वितानभावमापन्नं शान्तरूपं ब्रह्मोच्चार्यमाणो वाचा प्रयुक्तः प्रतीत[5] एव सन्न तु मृत्यु[6]प्राप्तोऽभेदमापन्नः प्रतिमेव देवेन तथा वाच्यवाचकभावेन व्यतिसृष्टः संबद्धः सर्वा[7]नुगतं ब्रह्म तद्रूपेण व्याप्नोति तद्वाचकतया वा संबध्नाति स सर्वव्यापीत्यर्थः । "पललं तिलचूर्णं स्यात्पललं पङ्कमांसयोः" इति विश्वः । एवं प्रणवस्य सर्वव्यापित्वादिकमर्थाभेदाविवक्षया द्रष्टव्यम् । उच्चार्यमाणेऽस्मिन्नस्योंकारस्यान्तो ब्रह्मैक्यान्नोपलभ्यते तेनानन्तः । आशु क्लन्दते क्रन्दते ध्वनिरूपेण व्यज्यते क्लामयति वोदात्ततयोच्चारणे प्रयत्नाधिक्याच्छरीरं क्लमयुक्तं करोति तच्छुक्लम् । पूर्वोत्तरपदयोराद्यन्तलोपः । अथ सूक्ष्मो भूत्वाऽङ्कुरावस्थामेवाऽऽप्य शरीराणि देहावयवान्स्वहेतुप्राणाभेदेन [8]ब्रह्माभेदेन वाऽधितिष्ठत्यारोहत्यभिमृशति संबध्नाति व्याप्नोति च तस्मात्सूक्ष्मम् । अव्यक्ते

---

१ क. °तिषक्तश्च । च. °तिषिक्तश्च । २ क. च. एव व्य° । ३ क. च. द्योतयति । ४ छ. ज. °पि वृ° । ५ ख. °तीतुरेव । ६ ख. मृत्युं प्रा° । ७ छ. ज. सर्वात्मकं ब्र° । ८ छ प्रयत्नाभेदेन ।

रमपरं परायणं च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्माथ कस्मादुच्यत एको यः सर्वान्प्राणान्संभक्ष्य संभक्षणेनाजः संसृजति विसृजति च । तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह संगतिः साकं स एको भूतश्चरति प्रजानांस्तस्मादुच्यत एकोऽथ कस्मादुच्यते रुद्रो यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रोऽथ कस्मादुच्यत ईशानो यः सर्वान्देवानीशत ईशनीभिर्जननीभिश्च शक्तिभिः । अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।

---

महति तमस्यविद्यायां द्योतयते तन्निरासेन ब्रह्मप्रकाशं करोति तद्वैद्युतम् । परमपरं निर्गुणं सगुणं च परायणं परमा गतिस्तस्मात्परामित्यन्वयः । ब्रह्मशब्दनिमित्तमाह । **बृहदिति** । यस्माद्बृहन्महत्तस्माद्ब्रह्मेत्यन्वयः । निमित्तान्तरमाह । **बृहत्येति** । बृहत्या मायया बृंहयति वर्धयति कार्यं तेन परं ब्रह्मोंकारः । यः सर्वान्प्राणान्प्राणाभिव्यञ्जचान्वेदान् । अर्थपक्षे वागादीन्संभक्ष्य संहारकाल आत्मन्युपसंहृत्य संभक्षणेन कृत्वा संसृजति तैरेकीभवति "स्वयं त्वजो वाचा विरूपनित्यया" इति मन्त्रलिङ्गात् "नित्यं विज्ञानम्" इति श्रुतेश्च । पुनः सिसृक्षायां विसृजति चेति कार्यकारणयोरभेदान्मृदादिवदेकः । अत एव कृते तु प्रणवो वेद इत्याद्युपपन्नम् । कारणत्वेनैक्यमुक्त्वा फलत्वेनाप्यैक्यं मन्त्रेणाऽऽह । **तीर्थमिति** । तीर्थमुपायस्तद्व्रजनमनुष्ठानम् । दिक्चतुष्कग्रहणं तन्नानात्वोपलक्षणार्थम् । नानामार्गैरप्युपायैः सर्वेषामिहेश्वरे संगतिः फलत्वेन प्राप्तिः साकं सहैव स एको भूतः सिद्धश्चरति सृष्ट्या प्रवर्तते भक्षयति वा प्रजानञ्शुभाशुभकर्मविपाकम् । तदुक्तं कविभिः—

"बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ " इति ।

वाच्यधर्मेण वाचको व्यवह्रियते । ऋषिभिर्ज्ञानिभिर्द्रुतं गम्यत इति रुद्रः । ईशत ईष्ट इतीशानः । ईश्यत आभिरितीशन्यस्ताभिर्देवान्स्वेच्छया नियुनक्ति । अजातानां नियोगासंभवाज्जननीभिश्च शक्तिभिर्जनयन्नीष्टे । ईशानत्वे मन्त्रसंमतिमाह । **अभीति** । हे शूरेन्द्र परमेश्वर त्वा त्वामभि नोनुम आभिमुख्येनातिशयेन स्तुमः । अदुग्धा दुग्धरहिताः पयोर्थिनो वत्सा धेनवो दोग्ध्रीर्गा इव स्तुवन्ति । द्वितीयार्थे प्रथमा । अदुग्धाः प्रस्तुता धेनवो वत्सानिवेति न व्याख्यातम् । स्नेहसाम्येऽप्युपासकस्य मातृतोपास्यस्य वत्सतेति हीनोपमादोषप्रङ्गात् । जगतो जङ्गमस्य तस्थुषः स्थावरस्येशानम् । आदरार्थः पुनः प्रयोगः । स्वर्दृशं दिव्यदृष्टिम् । भक्ता भजनकर्ता तस्यैवार्थो

---

१ ख. प्रवर्त्य । २ ख. प्रस्तुता ।

**ईशानमस्य जगतः स्वर्दृशमीशानामिन्द्र तस्थुष इति तस्मादुच्यत ईशानोऽथ कस्मादुच्यते भगवान्महेश्वरो यस्माद्भक्ता ज्ञानेन भजन्त्यनुगृह्णाति च वाचं संसृजति विसृजति च यः सर्वान्भावान्परित्यज्या ऽऽत्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान्महेश्वरस्तदेतद्रुद्रचरितम् ॥ ४ ॥**

**एषो ह देवः प्रदिशो नु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।**
**स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ।**
**एको रुद्रो न द्वितीयाय तस्थौ य इमाँल्लोकानीशत ईशनीभिः ।**

---

ज्ञानेनेति । यद्वा भक्ता भक्तान्ज्ञानेन भजति सेवतेऽनुगृह्णाति चेति भगशब्दार्थः । वाचं वेदाख्यां संसृजति । ब्रह्मादिमुखे विसृजति स्वमुखादिति चशब्दार्थः । महेश्वरशब्दार्थमाह । **य इति ।** भावान्विषयान्परित्यज्य त्याजयित्वा वेदमुपदिश्य तदर्थबोधनद्वारा विषयवैरस्यमुत्पाद्याधिकारिणं कृत्वा दत्तेनाऽऽत्मज्ञानेन मनःस्थिरतायै चाष्टाङ्गयोगजन्यैश्वर्येण च भक्तान्महति पूजयति तेन परानुग्रहेण च महीयते महिमानं याति जगद्विख्यातयशा भवति । तेन भगवान्महेश्वरोऽक्षरसाम्येन निर्ब्रूयादिति न्यायेनेदं निर्वचनम् । ननु परब्रह्मपर्यायादारभ्योच्चार्यमाण एवेति कस्मान्नोक्तमत आह । **तदेतद्रुद्रचरितमिति ।** नामनामिनोरैक्यबोधनार्योंकारोपक्रमश्चरितं त्वादित आरभ्य तद्रुद्रस्यैवैतद्वर्णितमित्यर्थः ॥ ४ ॥

ईशस्य प्रतिज्ञातमैक्यमुपपादयितुं साधनानि च वक्तुमवयवशः प्रणवस्योपासनायाः पृथक्फलानि प्रतिपाद्येशभक्तिप्रधानेन ज्ञानेनैव परमपुरुषार्थसिद्धिरिति प्रतिपादयितुं चोत्तरः खण्ड आरभ्यते । **एषो ह देव इति ।** एष एव देवः सर्वा दिशः प्रजातः सर्वदिग्रूपो बभूव । दिग्ग्रहणं तत्स्थवस्तूनामुपलक्षणम् । ननु कथमेकस्यानेकत्वसंभव इत्याशङ्क्य सर्वाश्चर्ये भगवति किं किमपूर्वं न संभवतीत्याशयेन परिहरति । **पूर्वो ह इति ।** पूर्वः स उ स एव गर्भे जगतो मध्यावस्थायां स एवान्तोऽपि सर्वान्ते वर्तमानः एव । उत्पत्त्याद्युपाधिना कालविरोधं परिहरति । **स एवेति ।** ननु कथमस्यानुभव इत्याशङ्क्याऽऽह । **प्रत्यङ्ङिति ।** हे जना आबालस्त्रीगोपालाः सर्वजनीनमनुभवं पश्यतेति श्रुतेर्वचः । किं तत् । सर्वतोमुख आदित्यवत्सर्वेषां संमुखः प्रत्यगवस्थात्रयानुभूयमानाहंप्रत्ययवेद्यात्मरूपेण तिष्ठति यः स ईशः । द्वितीयगन्धमपि निषेधति । **एक इति ।** 'स द्वितीयमैच्छत्' इति श्रुतेः प्राप्तां सहायापेक्षां निषेधति । **न द्वितीयाय तस्थाविति ।**

---

१ क. च. °ति वा° । २ क. ख. च एको ह । ३ ख. ज. न भ° । ४ ख. °ला: सार्व° । ५ ख. किं ननु कथं स° । ज. किं ननु स° ।

प्रत्यङ्जनास्तिष्ठाति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता । यो योनिं योनिमधितिष्ठत्येको येनेदं संचराति विचराति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । क्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या संचितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः । शाश्वतं वै पुराणमिषमूर्जेन पशवोऽनुनामयन्तं मृत्युपाशान् । तदेतेनाऽऽत्मन्नेतेनार्धचतुर्थमात्रेण शान्तिं संसृजति पाशविमोक्षणम् । या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्राह्मं पदम् ।

तत्तु लीलामात्रं द्वितीयचेतनाभावादेको द्रष्टेतिश्रुतेः । **संचुकोचेति** । अन्तकाले प्रलयकाले संकोचं कृतवान् । संसृज्य व्याप्य । ननु बहवः शरीरिणश्चेतना दृश्यन्त एकत्वं त्वीश्वरापेक्षमेवेत्यत आह । **यो योनिं योनिमधितिष्ठत्येक इति** । जीवोऽपि सर्वे जीवा व्युचरन्तीति श्रुतेर्विस्फुलिङ्ग इव ततोऽभिन्न एवेति भावः । ज्ञानशक्तिवत्क्रियाशक्तिरप्येकत्रैवास्तीत्याह । **संचरतीति** । संचरति प्रविशति विचरति नाना गच्छति च येन शक्तिमतेत्यर्थः । सर्वगुणैः संपन्नः स एव सेव्य इत्याह । **तमिति** । वरदं शंकरादीनामप्युपास्यं देवं स्वतो द्रष्टारमीड्यं स्तुत्यं वेदादिना निचाय्य नितरां सर्वभावेन पूजयित्वेमामीश्वरस्थामेवात्यन्तं शान्तिं कैवल्याख्यामेति । तत्प्राप्त्यन्तरङ्गोपायमाह । **क्षमामिति** । हेतुजालस्य हेतुवादकल्पनासमूहस्य मूलं कारणभूतां क्षमां भूमिमविवेकदृष्टिलक्षणां हित्वा त्यक्त्वा बुद्ध्याऽर्पणाधिया संचितं स्वीकृतं वस्तु रुद्रे स्थापयित्वा समर्प्य " तत्कुरुष्व मदर्पणम् " इत्युक्तत्वात् । रुद्रमेवैकत्वमेकभावमेकरसमेतीत्यनुषङ्गः । **आहुरिति** । आहुरार्या इत्यर्थः । कीदृशं रुद्रम् । शाश्वतं सर्वकालव्यापिनम् । पुराणं पुराऽपि न कदाचिज्जीर्णम् । इषमन्नमूर्जेन बलेन सह । पशवः । द्वितीयार्थे प्रथमा । पशूननुनामयन्तं तदधीनीकुर्वन्तं भक्तेभ्योऽर्पयन्तामिति यावत् । मृत्युपाशान्नामयन्तं न्यक्कुर्वन्तं तेभ्यो मोचयन्तमिति यावत् । भुक्तिमुक्तिप्रदमित्यर्थः । इदानीं प्रणवस्य मात्राभेदेन ध्यानभेदस्य फलानि वक्तुं प्रथमं प्राधान्याच्चतुर्मात्रस्यैं फलमाह । **तदेतेनाऽऽत्मन्निति** । तत्तस्मात्पूर्वोक्तप्रकारादेतेन प्रणवेनाऽऽत्मन्नात्मन्येतेनाऽऽहतेनाऽऽगतेनाऽऽत्मप्रतिपादकेनार्धा चतुर्थी मात्रा यस्य तेनोंकारेण शान्तिं संसृजतीश्वरः । तथा पाशविमोक्षणं शान्तिद्वारा कर्मपाशहानिं करोति । प्रत्येकं मात्राणां फलमाह । **या सेति** । प्रथमाऽकाररूपा अर्धचतुर्थी मात्रा चतुर्थ्य-

१ ख °मेकं त्व° । २ क. च. °हुः । रुद्रो हि शा° । ३ छ. °ति । सर्वं सं° । ४ छ. ज. वेदादीनां । ५ ख. ख. ज. °कमेकभा° । ६ छ. °स्य च फ° ।

या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीया मात्रेशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम्। या साऽर्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धस्फटिकसंनिभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पद्मनामकं तदेतमुपासीत मुनयोऽवाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति[1]। वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम्। तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम्। यस्मिन्क्रोधं या

र्धरूपा मात्रेत्यर्थः । सर्वदेवत्या ब्रह्मविष्णुरुद्रदेवत्याऽव्यक्तीभूता वर्णरूपेणानिर्वाच्या खं मूर्धानं प्रचरति। **शुद्धेति**। विशुद्धसत्त्वात्मकत्वात्। पद्मनामकं सहस्रदलं पद्ममिति प्रसिद्धम्। तदुक्तम्—"मूर्ध्नि प्रतिष्ठितं पद्मं सहस्रदलसंयुतम्" इति। षोडशदलं वा तदिति तत्तस्मात्कारणादेतत्पद्मनामकं पदं चतुर्थमात्राद्वारोपासीत। तस्य पद्मान्तराद्वैलक्षण्यमाह। **मुनयोऽवाग्वदन्तीति**। अवागधोमुखम्। यच्छ्रुतिः—'अवाङ्मुखश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्' इति। याज्ञवल्क्योऽपि "षोडशाच्छदसंयुक्तशिरःपद्मादधोमुखात्। निर्गतामृतधाराभिः" इति विशेषान्तरमाह। **न तस्य ग्रहणमिति**। गृह्यतेऽनेनेति ग्रहणं नालं तत्तस्य नास्त्यधोमुखस्य तस्य मूर्धोपरि नालादर्शनात्। एतद्भित्त्वा ये यान्ति तेषां गतिमाह। अयं पन्था ओंकारोपासनालक्षणः। येनोत्तरेण पथा देवा गच्छन्ति न पितरो ज्ञानरहितकर्मोपासका न गच्छन्ति। येन पितर इति पाठे ये पितरस्त उत्तरेण पथा न गच्छन्तीत्यर्थः। नेष्टापूर्तमात्रकारिणां ज्ञानरहितानामुत्तरेण पथा गतिरस्ति। अथवा पितरः पितृमार्गाधिपाः कव्यवाहनादयस्तेषां हि ज्ञानित्वादुत्तरमार्ग एव। तत्रापि विशेषः केचित्परमेव यान्ति। यदुक्तम्—"ब्रह्मणा सह मुच्यन्ते" इति। केचिदपरं ब्रह्मलोकादि येषामसति ज्ञानपरिपाके कल्पान्तरे पुनर्जन्म भवति। केचित्परायणं वैकुण्ठकैलासादि। तत्र के परमेव यान्तीत्यपेक्षायामाह। **वालाग्रमात्रमिति**। दुर्लक्षत्वेन सूक्ष्मत्वोक्तिः। हृदयस्य मध्ये दहरे विश्वं जाग्रदभिमानिनं देवं द्योतनात्मकं जातरूपं सुवर्णवर्णं जातं रूपं जगद्यस्मादिति वा। वरेण्यं वरणीयम्। आत्मस्थं बुद्धिप्रकाशकम्। शान्तिर्मुक्तिः। इतरेषां तदनभिज्ञानाम्। इतरेषामप्राप्तेर्हेतुं त्याजयितुमाह। **यस्मिन्निति**। यस्मिन्निति विषयनिर्देशः। क्रोधविषयं क्रोधं च हित्वा विस्मृत्येत्यर्थः। या च तृष्णा सविषया तां तृष्णां च हित्वा। हेतुजालस्य विकल्पराशेर्मूलभूतां क्षमां भूमिमविवेकदृष्टिं च

[1] च. ति। बाला[°]।

च तृष्णा क्षमां च तृष्णां हित्वा हेतुजालस्य मूलम् । बुद्ध्या संचितं स्थापयित्वा तु रुद्रे । रुद्रमेकत्वमाहुः । रुद्रो हि शाश्वतेन पुराणेनेषमूर्जेण तपसा नियन्ता । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्मनाऽङ्गानि संस्पृशेत्तस्माद्ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय ॥ ५ ॥

यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।

---

हित्वा बुद्ध्या ब्रह्मार्पणधिया संचितं विवेकदृष्ट्यादि रुद्रे स्थापयित्वा समर्प्य "यज्जुहोषि यदश्नासि" इत्यादिस्मृतेः । ननु विष्णौ ब्रह्मणि चेति वक्तव्ये रुद्रेति किमर्थमुच्यत इत्याशङ्क्याऽऽह । **रुद्रमेकत्वमाहुरिति** । रुद्रमेकत्वमापन्नमाहुः । आर्या इत्यपेक्षितम् । अयं भावः । भगवच्छब्दवाच्यो महेश्वर एव शुद्धं ब्रह्म स एव च स्वमहिम्नाऽचिन्त्यैश्वर्येण नाना नामानि रूपाणि चाऽऽपन्न इति । **रुद्रो हीति** । शाश्वतेनाविच्छिन्नेन पुराणेनापरिणामिनेर्जेणैश्वर्येण तपसा च रुद्र इषमन्नं भूतजातं नियन्ता । तृन् । न लोकेति षष्ठीनिषेधः । सर्वं भूतजातं नियच्छति । ऐश्वर्यतपसोः शाश्वतत्वं रुद्रस्य दशाव्ययत्वात् ।

तथा हि—"ज्ञानं विरागतैश्वर्यं तपः शौचं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबन्धो ह्यधिष्ठातृत्वमेव च ।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे" ॥ इति ।

भस्मधारणमीश्वरस्य प्रसिद्धम् । तद्यथा भस्म लीलया धृतं नाऽऽयासकारि तथा जगदपीति वक्तुमग्न्यादीनां भस्मोपमामाह । **अग्निरितीत्यादि** । विश्वं भस्ममिषेण धृतमित्यर्थः । स्थलं पृथिवी । सर्वमाकाशादिकमपीदं जगत् । चक्षूंषीन्द्रियाणि । ननु किमर्थममङ्गलं भस्म दधातीत्यत आह । **यस्मादिति** । पशुपते रुद्रस्येदं व्रतं यद्यपि पूर्णकामस्य न व्रतेनापि प्रयोजनं तथाऽपि भक्तानुग्रहार्थं व्रतं मया कृते भक्ता अपि तथा कुर्युरिति तद्यस्माद्भस्मनाऽङ्गानि संस्पृशेदिति व्रतं पशुपतिना धृतं तस्माद्ब्रह्मेति । स्तुतिफलमाह । **तदेतदिति** । पशूनां जीवानां पाशस्य बन्धस्य विमोक्षणाय त्यागायैतद्व्रतम् । भस्मधारणविधिः फलविशेषश्च कालाग्निरुद्रोपनिषदि द्रष्टव्यः ॥ ५ ॥

अग्न्यादीनां रुद्ररूपतया रुद्रस्य त्वग्न्यादिरूपतयाऽग्न्यधिकरणतया च नमस्कर्तुं मन्त्रत्रयमाम्नातम् । **यो अग्नौ रुद्र इत्यादि** । प्रकृत्याऽन्तःपादमव्यपर इति प्रकृतिभावः । ओषधीर्व्रीह्याद्याः । वीरुधो गुल्मान् । एकैकग्रहणं दर्शनार्थम् ।

---

१ क. च °ष्णां छित्त्वा हे° । २ ख. °स्म स° । ३ ज. 'रागितै' । ४ छ. °ना मोक्तं पशुपतिना च चीर्णं भस्म तस्माद्ब्रह्म ज्ञेयम् । पशुपतिना धृ° । ५ छ. °र्थं मङ्° ।

**य इमा विश्वा भूतानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये । यो रुद्रो अग्नौ यो रुद्र ओषधीर्वीरुध आविवेश । यो रुद्र इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय वै नमो नमः । यो रुद्रो अप्सु यो रुद्र ओषधीषु यो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधर्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमो नमः । मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् । मस्तिष्कादूर्ध्वः प्रैरयत्पवमानोऽधि शीर्षतः । तद्वा अथर्वणः शिरो देवकोशः समुब्जितः । तत्प्राणो अभिरक्षति शिरो अन्नमथो मनः । नव दिवो देवजनेन गुप्ता नवान्तरिक्षाणि नव भूमं इमाः ।**

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ॥ इति स्मृतेः ।
"या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः ।
यदपि च किंचिद्रमणीयं वस्तु शिवस्तत्तदाकारः" ॥ इति स्मृतेः ।

इमा इमानि विश्वा विश्वानि चाक्लृपे क्लृप्तवान् । **पृथिवी द्विधा त्रिधर्ता धारितेति** । ऋता सत्या सस्याधारा सती पृथिवी द्विधा त्रिधा शेषरूपेण दिग्गजरूपेण राजन्यरूपेण च धारिता धृता । शेषनागरूपेण धृतेत्युक्ते पाताल एव नागरूपेण तिष्ठतीति शङ्का स्यादत आह । **नागा य इति** । तदुक्तं नीलरुद्रे—"नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः" इति । नागा दिग्गजा वा ते ह्यन्तरिक्षस्था दन्तैः पृथिवीं बिभ्रति । इदानीमथर्वशिरसोऽस्य ग्रन्थस्योत्पत्तिप्रकारमाह । **मूर्धानमिति** । अथर्वा पवमानोऽथर्वर्षिशरीराधिष्ठाता पवमानो वायुः प्राणोऽस्याथर्वणो मुनेर्मूर्धानं संसीव्य संशीर्य विदार्य मस्तिष्कान्मस्तकादूर्ध्वः संन्यस्य हृदयं हृदिस्थं ग्रन्थरूपं ततः शीर्षतोऽधि शीर्षोपरि प्रैरयत्प्रेरितवान् । **तद्वेति** । अधि शीर्षतः शिरऊर्ध्वतो यस्मात्प्राणेन प्रेरितं तत्तस्माद्वै निश्चितमथर्वणः शिर एतद्ग्रन्थरूपं देवकोशो देवानामिन्द्रादीनां कोशो निधिः समुब्जितः सुगोपितः सुरक्षितः । तद्ग्रन्थरूपमद्भुतं सत्केन रक्षितमत आह । **प्राण इति** । तच्छिरोऽथर्वणः शिरः प्राणोऽभिरक्षति प्राणाधीनत्वादध्ययनस्य प्राणस्यान्नाधीनस्थितित्वादन्नमप्यभिरक्षति । तर्हि सुषुप्ते कस्मान्नाधीतेऽत आह । **अथो मन इति** । "मनसा मनस्यति मन्त्रानधीयीथेत्यथाधीते" इतिश्रुतेर्मनोऽप्यभिरक्षति । यं देवमेषोपनिषत्स्तौति तस्योपनिषदुत्पत्तिप्रकारकथनेन महत्त्वमुक्त्वा प्रकृतं तदेव स्तवनमनुसंधत्ते । **नवेति** । द्य्वादीनां नवत्वं गुणसंकरेण द्रष्टव्यम् । तद्यथा—द्यौर्लोकः सात्त्विकराजसतामसभेदेन त्रिधा त्रिविधोऽपि प्रत्येकसंकरेण नवधा ।

१ क. च. भुवनानि । २ ख. रुद्रो अप्स्वन्तर्यो रुद्र । ३ क. ख. च. त्रिधा ध° । ४ ख. नमः । ५ ख °मय ह° ६ ग. °तः सुर° ।

एवमन्तरिक्षं भूमिश्च । यद्वा—अष्टौ दिक्पालपुराणि नवमं ब्रह्मपुरं चेति नव दिवः । अनन्तपुरं[1] तु न द्युभागस्तस्याधःस्थत्वात् । नववीथीभेदेनान्तरिक्षाण्यपि नव । सप्त द्वीपाः शुद्धोदात्परे लोकालोकस्य मध्यबाह्यभूमी चेति भूमयोऽपि नव । तेषां स्थाननामादीनि यथा मेरौ मध्ये पूर्वाद्यष्टदिक्षु च ब्रह्मेन्द्रवह्न्याद्यादीनां नव पुराणि नवः दिवः । तदुक्तं वायवीये—

"मेरौ नव पुराणि स्युर्मनोवत्यमरावती ।
तेजोवती संयमनी तथा कृष्णाङ्गनाऽपरा ॥
श्रद्धावती गन्धवती तथा चान्या महोदया ।
यशोवती च ब्रह्मेन्द्रवह्न्यादीनां यथाक्रमम्" ॥ इति ।

नव वीथयो ग्रहाणामारोहणावरोहणादिस्थानभेदेन भवन्ति । तद्यथा वायुपुराणे—

"सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तम ।
स्थानं जरद्गवं मध्ये तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः" ॥ इति ।

तदेव दक्षिणोत्तरमध्यमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा[2] भिद्यते । त्रिभिस्त्रिभिरश्विन्यादिभिर्नक्षत्रैर्नागवीथी गजवीथ्यैरावती चेत्युत्तरमार्गे वीथीत्रयमार्षभी गोवीथी जरद्गवी चेति वैषुवते मध्यमार्गे वीथीत्रयमजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयं तदप्युक्तं तत्रैव—

"अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषा तथाऽऽदित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चाऽऽर्ये फाल्गुन्यौ मघा चैवाऽऽर्षभी मता ।
हस्तश्चित्रा तथा स्वाती[3] गोवीथीति च शब्दिता ॥
ज्येष्ठा विशाखाऽनुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
पूर्वाषाढोत्तराषाढा साऽजवीथ्यभिशब्दिता ।
श्रवणं च धनिष्ठा च मार्गी[4] शतभिषक्तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते" ॥

याम्या भरणी चाऽऽदित्याऽदितिदेवता पुनर्वसुरमी (मार्गी) मृगवीथी । उत्तरायणे मेरुं

१ ख. ज. °रं न । २ ख. त्रेधा । ३ छ. स्वातिर्गोवी । ४ छ. मार्गी ।

**यस्मिन्निदं सर्वमोतप्रोतं यस्मादन्यन्न परं किंचनास्ति। न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत्। सहस्रपादेकमूर्धा व्याप्तं स एवेदमावरीवर्ति भूतम्। अक्षरात्संजायते कालः कालाद्व्यापक उच्यते। व्यापको हि भगवान्रुद्रो भोगायमानो यदा**

प्रति गमनाद्ध्यारोहणं दक्षिणायने त्ववरोहणं विषुवत्ये तु मध्येऽवस्थानमेवं नव वीथयः। पृथिव्या नवधात्वं सप्तभिः सागरैर्लोकालोकेन च पर्वतेन कृतम्। तद्यथा—क्षारोदेक्षुरसोदक्षीरोदसुरोदघृतोददधिमण्डोदशुद्धोदाः सप्त जलभूमयो यथोत्तरद्विगुणाः सप्तानां द्वीपानां जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशाकपुष्कराणां यथोत्तरद्विगुणानां परिखा इवेतरद्वीपसमानाः सप्तानां प्रैयव्रतानां राज्ञामाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्राणां जलदुर्गस्थानीयाः सन्ति तैः सप्तद्वीपा विभक्ताः शुद्धोदात्परा दशकोटियोजना हेममयी भूमिः सा चाष्टमी ततो लोकालोकस्ततः परा च तमोमयी भूमिः सर्वसत्त्वरहिता नवम्येवं नव भूमयः।

“ भारतस्यास्य वर्षस्य नव भेदान्निशामय।
इन्द्रद्वीपः केशरुमांस्ताम्रपर्णी गभस्तिमान्।
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः।
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ” ॥ इति।

विष्णुपुराणोक्ते तु विभागे सर्वभूमेरसंग्रहः स्यात्। जम्बूद्वीपस्य नवखण्डत्वादितरयोरपि तथा खण्डा भूमयोऽपि नव कल्प्याः। देवजनेन देवजनकेन। अथवा देवा जनाः सेवका यस्य तेन रुद्रेण गुप्ता गोपिता रक्षिताः। भूम इमा इति च्छान्दसो वर्णलोपः। भूमय इति। न केवलं गुप्ताः किं तु व्याप्ता अपीत्याह। **यस्मिन्निति**। ओतप्रोतं तन्तुष्विव पट आततः प्रततश्च। ऊर्ध्वतन्तुभिरावयनं तिर्यक्तन्तुभिः प्रवयनम्। यस्माद्देवाच्च ह्यन्यत्परं भिन्नमस्ति देवसत्तायत्तत्वाज्जगत्सत्त्वस्य परमुत्कृष्टं वा नास्तीत्यर्थः। वर्तमानव्याप्तिमुक्त्वा भूतभविष्यतोरपि व्याप्तिमाह। **न तस्मादिति**। यद्भूतं भव्यं चास्ति तदपि तस्मात्पूर्वं परं च नाऽऽसीन्न भविष्यति चेत्यपि बोध्यम्। नन्वेकेन कथमनेकं व्याप्तमत आह। **सहस्रेति**। सहस्रपात्कार्यरूपेणैकमूर्धा कारणरूपेण सहस्रपाच्चासावेकमूर्धा सहस्रपादेकमूर्धा तेन व्याप्तमिदम्। कारणेन कार्यव्याप्तिर्मृदादौ प्रसिद्धा। न केवलं तिलतैलदधिसर्पिरादिवद्व्याप्तिमात्रं किं तु स एवातिशयेनाऽऽवृणोत्यावरीवर्ति सर्वांशेन व्याप्नोति न तु तुषतक्रादिवत्ततोऽन्यत्किंचिदस्ति। अक्षरात्कूट-

१ क. च. °रं न। २ ख. ‘रूपस्ता°’। ३ ख. न्°। भारद्वाजस्त°। ४ ख. ज. आद्यं। ५ छ. ज. ‘त्तरमिति’। ६ ख. ‘ष्ययोर’।

शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमस आपो अप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनो भवति । फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति। ब्रह्मणो वायुर्वायोरोंकार ओंकारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति । अर्चयन्ति तपः सत्यं मधु क्षरन्ति यद्ध्रुवम् । एतद्धि परमं तप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति ॥ ६ ॥

य इदमथर्वशिरो ब्राह्मणोऽधीतेऽश्रोत्रियः श्रोत्रियो भवत्यनुप-

---

स्थात्कालः संकर्षणोऽहन्ताधिपः क्षणादिव्यवहारनिमित्तभूतः संजायते । कालाद्व्यापक उच्यते सति काले व्याप्ये व्यापकसंज्ञां लभते । भोगायमानः सर्वशरीरमिवाऽऽत्मानं संवृण्वानो यदा शेत उपरतक्रियो भवति तदा संहार्यते संहर्ता भवतीत्यर्थः । संप्रति सृष्टिमाह । उच्छ्वसित इति । कार्यजननोत्सुक ईश्वरे सति तमोऽज्ञानं प्रसृतं भवति । तत आकाशादिक्रमेणाऽऽपः । अप्स्वङ्गुल्या ईश्वरेण मथिते प्रमथने कृते सति मथितं तक्रमिव जायते । ततः शिशिरे विलम्बे सति शिशिरं शीतं भवति । शीतार्थाः शब्दा विलम्बार्था अपि भवन्ति यथा शीतकोऽयं विलम्बं करोतीति गम्यते । अथवा शिशिरे वायौ वाति शिशिरं भवतीत्यर्थः । शीतलं सत्पुनर्मथ्यमानं फेनो भवति । फेनात्कालेनाण्डं भवति । ब्रह्मा प्रजापतिः । वायुः प्राणाख्यः । 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' इत्युक्तेः । वायोरोंकारः । ओंकारात्सावित्री गायत्र्याः पूर्वावस्था व्याहृत्याख्या प्रणवाक्षरत्रयाद्व्याहृतित्रयमित्यन्यत्रोक्तेः । गायत्री तत्पदादिका । गायत्र्या वेदत्रयद्वारा त्रयो लोका भवन्ति । अर्चयन्ति लोकान्बुधाः कुतो यतो लोकास्तपः सत्यं यच्च ध्रुवं मध्वमृतं मोक्षाख्यं तत्क्षरन्ति शरीरसाध्यत्वात्तपआदीनां शरीरस्य च सृष्ट्यधीनत्वादितरथाऽविद्याधनः सुषुप्तिजाड्यान्न निवर्तेत । अत एवेश्वरस्य जीवानुग्रहाय सृष्टिनिर्माणमिति वदन्ति । किं तत्परमं तप इत्यत आह । तप इति । तपःसाधनत्वादयं मन्त्रस्तप इत्युक्तः । तस्मात्प्रयत्नेन प्राणानायम्याऽऽवर्तनीय इति भावः । तपःसत्यलोकाख्यं ध्रुवं मधु क्षरन्ति प्रस्रवन्ति लोका भूरादयस्तेन तानर्चयन्ति । एतद्धि यस्मात्परमं तपः फलं गायत्रीशिरःसाध्यमिति वाऽर्थः ॥ ६ ॥

संप्रत्यध्ययनफलमाह । य इदमथर्वशिर इति । ब्राह्मण इति वचनादुपनीतस्यापि क्षत्रियादेर्नाधिकार इति गम्यते । मुख्यत्वबोधनाय ब्राह्मणग्रहणम् । अधीत इति । अर्थविबोधपर्यन्तमध्ययनं पाठमात्रस्य निन्दाश्रुतेः । न चाल्पायासेन कथं बहुयत्नसाध्यं फलं स्यादिति शङ्क्यम् । अल्पायासेऽप्यमृतादेर्महातृप्तिजनकत्वादिदर्शनाद्वस्तुशक्तेः पर्यनुयोगायोगात् । श्रोत्रियो वेदमधीत्य तदर्थानुष्ठाताऽनधीतवेदोऽप्येतन्मात्राध्ययनेनैतादृशो भवतीत्याह । अश्रोत्रिय इति । अनुपनीतो द्वितीयोपनयनादिरहितः ।

---

१ ख. °तन्मन्त्राध्य° ।

नीत उपनीतो भवति सोऽग्निपूतो भवति स वायुपूतो भवति स सूर्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वैर्वेदैरनुध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति तेन सर्वैः क्रतुभिरिष्टं भवति गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्तीतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति प्रणवानामयुतं जप्तं भवत्या चक्षुषः पङ्क्तिं पुनात्या सप्तमात्पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यम् ॥ ७ ॥

इत्यथर्ववेदेऽथर्वशिरउपनिषत्समाप्ता ॥ २ ॥

---

अग्निपूतोऽग्निना हुतेन यथा पूतो वायुना प्राणायामैर्यथा पूतः सूर्यपूतः सूर्येणोपस्थितेन यथा पूतः सोमेन सोमपानेन यथा पूतः सत्येनाऽऽभाषितेन सर्वैर्धर्मसाधनैरनुष्ठितैर्यथा पूतस्तथाऽनेनेत्यर्थः । वेदैरिति । वेदानां वेदनारूपेण चेतनत्वादनुध्यानं संभवति । पुरुषयुगानिपितृपक्षीयान्मातृपक्षीयांश्चाऽऽ सप्तमात्पुरुषपदादात्मानमभिव्याप्य पुनातीत्याह भगवानथर्वा । सकृदादिपाठस्य फलमाह । अथर्वशिर इति । एवमेवानुप्रविशतीति । विशेषमपश्यन्सामान्यमेव प्रविशति । तच्च सामान्यरूपं ब्रह्मैव । मोक्षं यातीत्यर्थः । यद्वा । एर्विष्णुर्वः शिवस्तयोः समाहार एवं हारिहरस्वरूपं तदेवानुप्रविशतीति । एर्विष्णौ वो महेश्वर इति चैकाक्षरनिघण्टः । हरप्राप्त्या हरिप्राप्तिरविरुद्धैकमूर्तित्वात्तयोरिति । किं तत्सामान्यरूपं यदनुप्रविशतीत्यपेक्षायामाह । सत्यमिति । ओंकारवाच्यं सत्यमित्यर्थः । हारिहररूपमेतदुभयवाच्यं भवति । एकवाक्यं वोंकारवाच्यं सत्यमेव साधनान्तरं विनैवानुप्रविशतीति । द्विरुक्तिः समाप्त्यर्था ॥ ७ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिकाऽथर्वमस्तके ॥ १ ॥

इति नारायणविरचिताऽथर्वशिरउपनिषद्दीपिका समाप्ता ॥ २ ॥

---

१ क. °र्वदेवै° । २ क. च. °नु प्राऽऽवि° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अथर्वशिरउपनिषत् ।

---

## शंकरानन्दविरचितदीपिकासमेता ।

---

ॐ भद्रं कर्णेभिः० । स्वस्ति न इन्द्रो० २ । ओं शान्तिः शान्तिः शान्तिः ॥

ॐ देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन्को भवानिति सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चि[१]न्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं संप्रा-

---

वक्ष्येऽथर्वशिरोनाम्न्याः श्रुतेर्व्याख्यां पदानुगाम् ।
रुद्रात्म्यैक्यावगत्यर्थं रुद्रस्तुष्टोऽस्तु नस्तया ॥ १ ॥

विद्याया अतिदुर्लभत्वप्रदर्शनार्थमाख्यायिकामवतारयति । **देवा** इन्द्राग्निवायुप्रभृतयो रुद्रजिज्ञासवः । **ह** किल **वै** प्रसिद्धम् । **स्वर्गं** स्वः सुखस्वरूप आनन्दात्माऽवगम्यते यस्मिँल्लोके स स्वर्गस्तं **लोकं** रुद्रनिवासभूतं ब्रह्मलोकमित्यर्थः । **अगमन्**गतवन्तस्तत्र गत्वा नीललोहितं त्रिलोचनं पिनाकपाणिं चित्रपुरुषमवलोक्य । **ते** स्वर्गगता **देवा** उक्ताः। **रुद्रं** सर्वदुःखनाशकं सृष्टिस्थितिविनाशकारणम् । **अपृच्छन्**पृष्टवन्तः । तत्प्रश्नमाह । **कः** प्रश्ने । **भवां**स्त्वमित्यनेन प्रकारेण । **स** रुद्रो**ऽब्रवी**दुक्तवान् । **अहं** स्वयंप्रकाशचिदानन्दस्वरूप **एको** देशकालवस्तुपरिच्छेदशून्यः **प्रथमं** जगदुत्पत्तेः **प्रागासं** सर्वजगदात्मनाऽवतस्थिवान् । तर्हि यथा क्षीरं पूर्वमासीन्नेदानीं न च भविष्यति तद्वत्किं त्वमपीत्याशङ्क्य नेत्याह । **वर्तामि च भविष्यामि च** । वर्त एकश्चकारः कालातीतत्वमाहापरः कालात्मकत्वमाह । स्पष्टमन्यत् । ननु यथा त्वं स्थितस्तथाऽन्योऽपि तादृशो वाऽन्यादृशो वा कश्चन स्यादित्यत आह । **नान्यः कश्चिन्मत्तो व्यतिरिक्तः** । स्पष्टम् । आसीद्वर्तते भविष्यति चेति शेषः । **इति**, अनेन प्रकारेण । एवं तान्प्रत्युक्त्वा **स** रुद्रः प्रथमतस्तेषां मिषतामन्तरिक्षमगादिति शेषः । ततो**ऽन्तरा**दन्तरिक्षादन्तरं नयनपथागोचरं देशं **प्राविशत्**प्राविष्टवान् । **दिशश्चान्तरं संभाविश**[त्] । स्पष्टः पदार्थः । उपर्यदर्शने दिक्ष्वप्यवलोक्यमानोऽब्देवैर्न दृष्ट इत्यर्थः । एवमन्तर्धानं प्राप्य व्याकुलितमनसो देवान्मानहीनांस्तनयाञ्शिशूनिव विलोक्य च तेषां मनःसमाधानं जनयितुं पूर्वोक्तमेव शब्दबाहुल्येनादृष्टशरीर इत्याह ।

---

१ ग- कश्चन मत्तो ।

विंशत्सोऽहं नित्यानित्यो ब्रह्माहं ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहमधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानपुमान्स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहमक्षरमहं क्षरमहं गुह्योऽहं गोप्योऽहमरण्योऽहं पुष्करमहं

---

**स** प्रसिद्धः कालत्रयेऽपि वर्तमानो भवद्भिर्मद्वचनाद्विज्ञातः । अहं रुद्रः । **नित्यानित्यो** हेतुहेतुमद्रूपः । **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यः । अहं रुद्रः । **ब्रह्माहम्** । व्याख्यातम् । वाक्याभ्यासो ब्रह्मस्वरूपस्याऽऽत्मनो वास्तवत्वप्रदर्शनार्थः । इदानीं सूत्रप्रायं वचनं व्याकरोति । **प्राञ्चः** प्राग्गामिनः(णः) प्राणाश्चक्षुरादयः प्राञ्चः । प्रत्यग्गामिनः प्राणा वागादयः **प्रत्यञ्चः** । अहं रुद्रः । **दक्षिणाञ्चो** दक्षिणादिग्गामिनः प्राणाः श्रोत्रादयो दक्षिणाञ्चः । **उदञ्च** उत्तरादिग्गामिनः प्राणा मनआदय उदञ्चः । अहं रुद्रः । दिक्चतुष्टयचारिणश्चेतनात्मत्वेनोक्त्वेदानीमवशिष्टानामात्मत्वमाह । **अधश्चोर्ध्वं च दिशश्च विदिशश्चाहम्** । अहं रुद्रः । **पुमानपुमान्स्त्रियश्चाहम्** । अपुमान्नपुंसकः । स्पष्टमन्यत् । **सावित्री** सवितृदेवताका । अहं रुद्रः । **गायत्री** सैव चतुर्विंशत्यक्षरत्वोपाधिना गायत्रीछन्दस्त्वेव गायत्री । अहं रुद्रः । त्रिष्टुप्चतुश्चत्वारिंशदक्षरं छन्दः । **जगत्य**ष्टाचत्वारिंशदक्षरं छन्दः । **अनुष्टुब्**द्वात्रिंशदक्षरं छन्दश्च**कारा**त्पङ्क्त्यादिकमपि । **अहं रुद्रः** । **छन्द**श्छन्दःशब्दवाच्यं निःशेषम् । **अहं** रुद्रः । **गार्हपत्यो दक्षिणाग्निराहवनीयोऽहम्** । श्रौतमग्नित्रयं गार्हपत्यदक्षिणाग्न्याहवनीयनामधेयम् । **अहं** रुद्रः । **सत्यो**ऽविनाशी । प्रपञ्चरूपसत्य( त्या )सत्यवचनरूपो वा । अहं रुद्रः । **गौः** सास्नादिमती गोशब्दवाच्यं वा निःशेषम् । अहं रुद्रः । **गौरी** शिवप्रियाऽष्टवर्षा वा कुमारी गौरवर्णा वा ललना तुलसी वा गौरवर्णं वा स्त्रीलिङ्गं निःशेषं जगत् । अहं रुद्रः । **ज्येष्ठो** वयसाऽधिकः । अहं रुद्रः । **श्रेष्ठो**ऽतिशयेन प्रशस्यः । अहं रुद्रः । **वरिष्ठः** सर्वाधिकः । अहं रुद्रः । **आपोऽ**[1] **तेजोऽहम्** । स्पष्टम् । अप्तेजसोर्ग्रहणं भूतान्तराणामप्युपलक्षणार्थम् । **ऋग्यजुःसामाथर्वाङ्गिरसोऽहम्** । अथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसोऽथर्ववेद इत्यर्थः । स्पष्टमन्यत् । **अक्षरं** प्रणवादिरूपम् । **अहं** रुद्रः । **क्षरं** विनाशि । अहं रुद्रः । **गुह्यः**, गोप्यो मन्त्रव्यानोपदेशादिरूपः । **अहं** रुद्रः । **अरण्यो**ऽरण्यरूपोऽरणिभवो वा । अहं रुद्रः । **पुष्करं** तीर्थविशेषरूपम् । रलयोरैक्यात्पुष्करं पुष्कलं वाऽधिकं स्वरूपतः पररूपतो वा चेतनमचेतनं वेत्यर्थः ।

---

१ घ. 'त्यो द्द'।

पवित्रमहमग्रं च मध्यं च बहिश्च पुरस्ताद्दशसु दिक्ष्ववस्थितमनवस्थितं च ज्योतिरित्यहमेकः सर्वे च मामेव मां यो वेद स सर्वान्देवान्वेद गां गोभिर्ब्राह्मणान्ब्राह्मण्येन हवींषि हविषाऽऽयुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसा

---

**अहं रुद्रः** । **पवित्रं** पापहीनं पापविनिर्गमनकारणं वा । **अहं रुद्रः** । **अग्रं च** सांशानां पुरोभागोऽग्रं चकारादादिरपि । **मध्यं च बहिश्च** सर्वस्याप्यन्तर्बहिश्चकाराभ्यामन्तर्बहिरपि । **पुरस्तात्**सर्वदेशकालवस्त्वपेक्षया पूर्वम् । **दशसु दिक्ष्ववस्थितमनवस्थितं च** दिगात्मभूतमदिग्रूपम् । **ज्योति**र्वाङ्मनसातीतं स्वयंप्रकाशकं तेजः । इत्यनेन नित्यानित्य इत्यादिना ज्योतिरित्यन्तेनोक्तेन प्रकारेणैक इत्यन्वयः । **अहं** सर्वजगदात्मा सर्वजगद्व्यतिरिक्तश्चै**को** देशकालवस्तुपरिच्छेदशून्यः । **सर्वे च** निखिला अपि वर्णिन आश्रमिणश्च **मामेव** वस्तुत एकमवस्तुतोऽविद्ययाऽनेकं च रुद्रमेव न त्वन्यम् । च । चकारात्तेऽपि मद्रूपा एव विविधका बडिशनिगृहीतान्तःकरणमीना निष्कामाश्च भजन्त इति शेषः । इदानीं ब्रह्माहमस्मीत्यैक्यज्ञाने प्रवृत्तिं जनयितुमर्थसिद्धैरर्थैः प्रलोभयति । **मां** सर्वाभिन्नमात्मत्वेन **यो**ऽधिकारी **वेद** जानाति **स** मज्ज्ञः । **सर्वान्देवान्**देवशब्दप्रत्ययभाजो निखिलं विश्वमित्यर्थः । **वेद** मृज्ज्ञानेनेव घटशरावादिकं जानाति । इदानीं स्वविभूमसत्त्वज्ञानार्थमुपकार्योपकारकभावेनावस्थानमाह । **गां** भूमिम् । **गोभि**रादित्यादिकिरणैः । गोत्वजातिं वा गोव्यक्तिभिः । **ब्राह्मणान्**भूदेवान् । **ब्राह्मण्येन** ब्राह्मणत्वजात्या वेदाध्ययनेनार्थज्ञानानुष्ठानाभ्यां चेत्यर्थः । **हवींषि** चरुपुरोडाशप्रभृतीनि । **हविषा**ऽऽज्येन । अथवा हवींषि विप्रगवादिशरीराणि हविषा पयोघृतान्नतृणादिना । **आयु**र्जीवनकारणं प्राणः । **आयुषा** प्राणावस्थानेन । **सत्यं** भूतपञ्चकम् । **सत्येना**बाध्येन ब्रह्मणा । अथवा सत्यं सत्यवादीन्द्रियम् । **सत्येन** सत्यवचनेन । **धर्मं** शुभकर्मजन्यापूर्वम् । **धर्मेण** शास्त्रीयेण शुभेन कर्मणा । **तर्पयामि** तृप्तिं वृद्धिं करोमि । **स्वेन** स्वात्मानन्यभूतेन । **तेजसा** ज्योतिषा । गवादिरूपेणे-

---

१ ग. 'शदि' ।

ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति ततो देवा ऊर्ध्वबाहवस्तुन्वन्ति ॥ १ ॥

ॐ * यो वै रुद्रः स भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः १ ॐ यो वै रुद्रः स भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ ॐ यो वै रुद्रः स भगवान्यश्च महेश्वरस्तस्मै वै नमो नमः ३ ॐ यो वै रुद्रः स भगवान्या चोमा तस्मै वै नमो नमः ४ ॐ यो वै रुद्रः स भगवान्यश्च विनायकस्तस्मै वै नमो नमः ५ ॐ यो वै रुद्रः स भगवान्यश्च स्कन्दस्तस्मै वै नमो नमः ६ ॐ यो वै रुद्रः स भगवान्यश्चेन्द्रस्तस्मै वै नमो नमः ७ ॐ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै वै नमो नमः ८ ॐ यो वै रुद्रः स भग-

---

त्युक्त्वा पूर्वमप्यदृश्यशरीरो भगवान्वचनेभ्य उपरराम। ततस्तस्माद्वागुपरमादनन्तरम्। **देवा रुद्रम्**। व्याख्यातम्। **नापश्यन्**। अनुमानेनाप्यत्र स्थित इति नावलोकितवन्तः। रुद्रस्य रूपमदृष्ट्वा वचनानि श्रुत्वा तद्रूपदर्शने तद्वचनश्रवणे चोत्सुकाः। ते प्रसिद्धा रुद्रोपदिष्टसर्वात्मानोऽपि स्वाश्रयदोषादनवगतात्मस्वरूपाः। **देवा रुद्रं** व्याख्यातम्। **ध्यायन्ति** नयनाभ्यां यथादृष्टं कर्णाभ्यां च यथाश्रुतं प्रियतमविरहज्वरातुरा इव युवतयश्चिन्तयन्ति। एवं चिन्तयतां तेषां रुद्रदर्शने रुद्रस्तुतिरूप उपायः प्रत्यभात्। **ततस्तस्माद्ध्यानेनोपायप्रतिभानादनन्तरम्। देवा** रुद्रदर्शनोत्सुका रुद्रशिष्या **ऊर्ध्वबाहव** ऊर्ध्वं कृता बाहवो यैस्त ऊर्ध्वबाहवः। पटच्चरापहृतसर्वस्वाः प्रजा इवोग्रदण्डराजानं **स्तुन्वन्ति** स्तुतिं कुर्वन्ति॥ इति प्रथमः खण्डः ॥ १ ॥

तैः क्रियमाणां स्तुतिं पठति। **यः** प्रसिद्धः सर्वशास्त्रेषु। **वै** स्मर्यमाणो **रुद्रः** सकारणदुःखविनाशक उक्तः परोक्षः। **भगवान्**समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमान्। **यश्च ब्रह्मा** चतुराननो विधाताऽपि यः प्रसिद्धः। **तस्मै** रुद्राय भगवते विश्वरक्षार्थं कृतावताराय परापरोभयरूपाय। **वै** निश्चितम्। **नमो नमः**। स्पष्टम्। नमस्काराभ्यासस्तु यच्छब्दद्वयादानात्परापरार्थ आदरार्थो वा १ **विष्णु**र्नीलोत्पलश्यामश्चतुर्भुजः स्थितिहेतुर्व्यापी २ **महेश्वरः** सर्वसंहारकारी नियन्ता नीललोहित उमामहेश्वर इत्यर्थः ३ **उमा** महेश्वरप्राणप्रिया कात्यायनी ४ **विनायको** विघ्नहर्तोमापुत्रः ५ **स्कन्दः** सेनानीर्महेश्वरसुतः ६ **इन्द्र**स्त्रिलोकीप्रभुः परमैश्वर्यवाञ्शचीपतिः ७ **अग्नि**र्विभावसुः ८

---

* घ पुस्तक एतदादिषु चतुस्त्रिंशन्मन्त्रेषु प्रत्येकं तस्मै वै नमो नम इत्यस्मात्प्रागूर्ध्वं क्रमेण 'भूर्भुवः स्वः' इति 'शीर्षं जनद्रो विश्वरूपोऽसि' इति च दृश्यते।

वान्या च भूस्तस्मै वै नमो नमः ९ ॐ यो वै रुद्रः स भगवान्यश्च भुवस्तस्मै वै नमो नमः १० ॐ यो वै रुद्रः स भगवान्यश्च सुवस्तस्मै वै नमो नमः ११ ॐ यो वै रुद्रः स भगवान्यच्च मह-स्तस्मै वै नमो नमः १२ ॐ यो वै रुद्रः स भगवान्यश्च जन-स्तस्मै वै नमो नमः १३ ॐ यो वै रुद्रः स भगवान्यच्च तप-स्तस्मै वै नमो नमः १४ ॐ यो वै रुद्रः स भगवान्यच्च सत्यं तस्मै वै नमो नमः १५ ॐ यो वै रुद्रः स भगवान्या च पृथिवी तस्मै वै नमो नमः १६ ॐ यो वै रुद्रः स भगवान्याश्चाऽऽप-स्तस्मै वै नमो नमः १७ ॐ यो वै रुद्रः स भगवान्यच्च तेजस्तस्मै वै नमो नमः १८ ॐ यो वै रुद्रः स भगवान्यश्च वायुस्तस्मै वै नमो नमः १९ ॐ यो वै रुद्रः स भगवान्यच्चाऽऽकाशं तस्मै वै नमो नमः २० ॐ यो वै रुद्रः स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः २१ ॐ यो वै रुद्रः स भगवान्यश्च सोमस्तस्मै वै नमो नमः २२ ॐ यो वै रुद्रः स भगवान्यानि च नक्षत्राणि तस्मै वै नमो नमः २३ ॐ यो वै रुद्रः स भगवान्ये चाष्टौ ग्रहा-स्तस्मै वै नमो नमः २४ ॐ यो वै रुद्रः स भगवान्यश्च प्राण-स्तस्मै वै नमो नमः २५ ॐ यो वै रुद्रः स भगवान्यश्च काल-स्तस्मै वै नमो नमः २६ ॐ यो वै रुद्रः स भगवान्यश्च यम-स्तस्मै वै नमो नमः २७ ॐ यो वै रुद्रः स भगवान्यश्च मृत्यु-स्तस्मै वै नमो नमः २८ ॐ यो वै रुद्रः स भगवा-

---

भूर्भूलोकः ९ भुवोऽन्तरिक्षलोकः १० सुवः स्वर्लोकः ११ महर्महर्लोकः १२ जनो जन-लोकः १३ तपस्तपोलोकः १४ सत्यं सत्यलोकः । उमाभूम्योः स्त्रीत्वाद्येति निर्देशः । महस्तपःसत्यानां नपुंसकत्वाद्यदिति निर्देशः १५ पृथिवी महाभूतरूपा भूमिः स्त्रीत्वा-द्येति निर्देशः १६ आपो नीराणि । अपां भूयसीनां स्त्रीत्वाद्या इति निर्देशः १७ तेजो महाभूतरूपस्तेजोधातुः १८ वायुरनिलः १९ आकाशं नभः । तेजआकाशयोर्नपुंसकत्वा-द्यदिति निर्देशः २० सूर्यः सूर्यमण्डलस्थः पुरुषः २१ सोमः सोममण्डलस्थः पुरुषः २२ नक्षत्राणि नक्षत्रमण्डलस्थाः पुरुषास्तेषां भूयसां नपुंसकत्वाद्यानीति निर्देशः २३ अष्टावष्टसंख्याका ग्रहाः सूर्यसोममङ्गलबुधबृहस्पतिशुक्रशनैश्चरराहुरूपाः । अथवा घ्राणवाग्जिह्वाचक्षुःश्रोत्रमनोहस्तत्वग्रूपाः । ग्रहाणां बहुत्वाद्य इति निर्देशः २४ प्राणः पञ्चवृत्तिराध्यात्मिको वायुः २५ कालः सर्वोत्पत्तिस्थितिसंहाराणामसाधारणं निमित्तं कारणम् २६ यमो मरणानन्तरं नियन्ता प्राणिनाम् २७ मृत्युः सर्वेषां गृहीतशरीर-

न्यच्चामृतं तस्मै वै नमो नमः २९ ॐ यो वै रुद्रः स भगवान्य-
च्च भूतं भव्यं भविष्यं[1]तस्मै वै नमो नमः ३० ॐ यो वै रुद्रः
स भगवान्यच्च विश्वं तस्मै वै नमो नमः ३१ ॐ यो वै रुद्रः
स भगवान्यच्च कृत्स्नं तस्मै वै नमो नमः ३२ ॐ यो वै रुद्रः
स भगवान्यच्च सर्वं तस्मै वै नमो नमः ३३ ॐ यो वै रुद्रः स
भगवान्यच्च सत्यं तस्मै वै नमो नमः ३४ ॥ २ ॥

ओमादौ मध्ये भूर्भुवः सुवरन्ते शीर्षं जन-
दोम् । विश्वरूपोऽसि ब्रह्मैकं त्वं द्वित्रिधोर्ध्वमधश्च त्वं

परित्यागकारणम् २८ अमृतमवश्यंभाविकर्मफलम् २९ भूतभव्यभविष्यतां कालव्याप्तित्वसाम्यादेकस्मिन्वाक्ये त्रयाणामपि ग्रहणम् । भूतमतीतं भव्यं भवनयोग्यं वर्तमानमित्यर्थः । भविष्यमतीतवर्तमानव्यतिरिक्तकालजम् ३० विश्वं स्थावरजङ्गमात्मकम् ३१ कृत्स्नं महाभूततज्जप्रपञ्चरूपम् ३२ सर्वं कल्पितमकल्पितं च जडाजडम् ३३ सत्यं सर्वप्रकारप्रधानशून्यं द्वैतमिन्द्रजालाधिष्ठानम् । अमृतादीनां नपुंसकत्वाद्यदिति निर्देशः ३४ समानमन्यद्ब्रह्मपर्यायेण विष्ण्वादीनां सत्यान्तानां चतुस्त्रिंशत्पर्यायाणामपि ॥ २ ॥

एवं चतुस्त्रिंशन्मन्त्रैः कृतस्तुतीनां देवानामयं मन्त्रः प्रतिभात इत्याह । ॐ अक्षरस्वरूपग्रहणम् । आदौ प्रथमतः । मध्ये, ओंकारानन्तरं शिरोमन्त्रात्पूर्वमेतान्यक्षराणीत्याह । भूर्भुवः सुवः । अक्षरस्वरूपग्रहणम् । अन्ते व्याहृतित्रयानन्तरम् । शीर्षं शिरोमन्त्रः स्वाहेत्येवंरूपः । जनदोम्, जनदेति कर्मोपलक्षणार्थमक्षरत्रयम् । जनं जनिं तदुपलक्षितजानिमद्वस्तुजातं तद्ददातीति जनदस्तस्य संबोधनं हे जनद । ओमिति प्रणवस्वरूपग्रहणम् । तथाच—ॐ भूर्भुवः सुवः स्वाहा जनदोमिति मन्त्रः संपद्यते । तत्तत्कामज्वरादिके जनदेति पदस्थले मोक्षदैवं ब्रुदेत्याद्यूहोऽवगन्तव्यः । ओंकारस्य पर्यायस्याप्यर्थं स्वयमेव वक्ष्यति मन्त्रसारत्वेन । व्याहृतीनां तु नामरूपकर्मात्मकतया विभिन्नं सर्वं कार्यकारणजातमर्थः । स्वाहाकारस्य स्वमन्त्राहुत्या संमतान्मन्त्रपराभीष्टार्थाहरणम् । इदानीं मन्त्रादावन्ते चोक्तं प्रणवोपाधिकमुररीकृत्याऽऽह । विश्वरूपश्चराचररूपः । असि भवसि त्वम् । ब्रह्मैकं सर्वस्मादधिकं देशकालवस्तुपरिच्छेदशून्यं जगत्कारणं त्वं प्रणवप्रतिपाद्यो रुद्रः । द्वित्रिधा द्विधा त्रिधा च द्विप्रकारः स्वाहाकाररूपः प्रकृतिपुरुषात्मना । व्याहृतित्रयरूपो नामरूपकर्मात्मना । ऊर्ध्वम् । उपरिष्टाज्जनदेति पदात्मकः सर्वकामप्रदः । अधश्च सर्वमन्त्राक्षराणामधस्ताद्द्वितीयोंकाररूपः । आदावन्ते च ब्रह्मैकं प्रणवप्रतिपाद्यमित्यर्थः । चकारादुक्तवक्ष्यमाणमन्त्ररूपश्च । इदानीं सर्वात्मकत्वमनुशास्य रुद्राभिन्नस्य शान्त्याद्यर्थं जपार्थमाह । त्वम्, प्रणवात्मकं ब्रह्म विश्वरूपः ।

१ क. ख. °विष्यं तस्मै ।

**शान्तिश्च त्वं पुष्टिश्च त्वं तुष्टिश्च त्वं हुतमहुतं विश्वमविश्वं दत्तमदत्तं कृतमकृतं परमपरं परायणं चेति। अपाम सोममममृता अभूमागन्म ज्योतिरविदाम देवान्। किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य।**

---

**शान्तिश्च** वाङ्मनःकायानामाध्यात्मिकाधिभौतिकाधिदैविकदुःखानां निवृत्तिः। चकारात्तत्कारणं तदात्मा च। **त्वम्**। उक्तः। **पुष्टिश्च** मनोवाक्कायानामाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखभावसंपात्तिः परेणाप्यवगम्यमाना। चकारात्तत्कारणं तदात्मा च **त्वम्**। **तुष्टिश्च** पुष्टिरेव स्वेनैवावगम्यमाना तुष्टिः। समानमन्यत्। **त्वम्**। उक्तः। **हुतं** सायंप्रातरादिकालेषु यथाशास्त्रमग्नौ प्रक्षिप्तं दधिपयःप्रभृति हविः। **अहुतं** हुतविपरीतम्। **विश्वं** सर्वकार्यकारणजातम्। **अविश्वं** विश्वविपरीतम्। **दत्तं** बहिर्वेदि दीयमानमन्नोदकभूसुवर्णादि। **अदत्तं** दत्तविपरीतम्। **कृतं** पुण्यहेतुकं कर्म। **अकृतं** पापहेतुकं कर्म। **परमुत्कृष्टं** कारणादिरूपम्। **अपरं** परविपरीतम्। **परायणं चेति,** उत्कृष्टाश्रयरूपमपि सर्वाधाररूपमित्यर्थः। चशब्दात्सर्वानन्यच्च। इत्यनेन प्रकारेण विश्वरूप इत्यन्वयः। इदानीं यथा यज्वनां चमसस्थे भक्षिते सोमे संतोषस्तथाऽस्माकमपि मन्त्रदर्शिनामित्याहुः। **अपाम** पानं कृतवन्तोऽधिगतवन्त इत्यर्थः। **सोमम्,** उमया ब्रह्मविद्यास्वरूपिण्या कात्यायन्या सह वर्तमानः सोमस्तम्। यतः सोममपाम ततोऽ**मृता** मरणहेतुभिरविद्यातत्कार्यतत्संस्कारैर्विवर्जिताः। **अभूम** संपन्नाः। तद्भवने कारणमाहुः। **अगन्मागमाम** प्राप्तवन्तः। **ज्योतिः** स्वयंप्रकाशमानमात्मस्वरूपम्। इदं वयं स्म इति निश्चिता इत्यर्थः। तत्रापि हेतुमाह। **अविदाम,** अविद्म। **देवान्,** साधिष्ठातॄनिन्द्रियाश्वान्। विषयासक्त्यनासक्तिभ्यां संसृतिमोक्षहेतूनिन्द्रियाणि जीवत इत्यर्थः। इदानीमध्वगा इव पटच्चरान्परिभूय पलायमाना अगम्यतीरायाः सिन्धोरुत्तरतीरं प्राप्य दक्षिणतीरस्थान्स्वानर्थकारिणः संसारजलधेरुत्तरब्रह्मतीरगा देवाः संसारजलव्यवहितानिन्द्रियाश्वानाक्षिपन्ति। **कि**माक्षेपे। **नूनं** निश्चितमर्थजातम्। **अस्मान्**पीतसोमान्प्राप्तज्योतिष इन्द्रियमर्मज्ञान्प्रति। **कृणवत्,** कृतवत्करिष्यतीत्यर्थः। **अरातिर**नर्थकारीन्द्रियगणः। नन्वेषां कामो नामातिबलो राजा स हि पारंगतानपि योषित्पिशाचीमन्त्रस्मरणेनैव नाशयति ततो नैतेऽधिक्षेपणीया इत्यत आह। **किमु** किंशब्द आक्षेपे। उशब्द उत्कृष्टतिरस्कारे। **धूर्तिः,** धूर्तिरनुकूलशत्रुः। विषयसुखदर्शनेन प्रविलोक्यास्मांस्त्वगसृङ्मांसपूयविण्मूत्रवाहियोषिद्वैतरणीनिपातनेन नाशयेत्कामस्तद्राजो न चास्माकमानन्दात्मस्वरूपरूपव्यतिरेकेण सुखबुद्धिरित्यर्थः। कृणवदित्यनुषङ्गः। अपि च जीवन्त एव समर्था अनर्थकारिणः। ननु(तु) म(मृ)ता मृतश्चायं स्वजननीमरणशोकादित्यभिप्रायेणाऽऽहुः। **अमृत** धूर्तोऽनुकूलशत्रुर्जनानां कामः प्राणान्मुमोच। तत्र हेतुः। **मर्त्यस्य** ज्योतिरहमस्मीति साक्षात्कारेण मरणधर्मो ज्ञानस्य सत्कार्यस्य धूर्ति-

**सर्वजगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषमग्राह्यमग्राह्येण वायुं वायव्येन सोमं सौम्येन ग्रसति स्वेन तेजसा तस्मा उपसंहर्त्रे महाग्रासाय वै नमो नमः ॥ ३ ॥**

**हृदिस्था देवताः सर्वा हृदि प्राणे प्रतिष्ठिताः । हृदि त्वमसि यो**

रित्यन्वयः । अज्ञानोपादानोऽज्ञाननिमित्तोऽज्ञानविषयश्चाज्ञानाभावे कथमयं स्यादित्यर्थः । इदानीं प्रणवाख्यं परं ब्रह्म विज्ञातं सद्यथाऽस्मेभ्यो हितं तथाऽन्येभ्योऽपीत्यर्थकथनेन मन्त्रान्तरमप्युद्धरन्ति । **सर्वजगद्धितं** सर्वस्मै जगते हितं सर्वजगद्धितम् । **वै** प्रसिद्धम् । **एतत्**, पूर्वोक्तमभिधानमभिधेयाभिन्नम् । **अक्षरम्**, ओंकाराभिन्नरूपं विनाशशून्यं ज्ञप्तिमच्च । **प्राजापत्यं** प्रजापतिना हिरण्यगर्भेणावगतं प्रजापतिपदप्रदातृ वा । **सूक्ष्ममणु**रूपं दुरवगममित्यर्थः । **सौम्यं** सोमो भवानीपतिस्तेनानन्यत् । सौम्यं प्रियदर्शनं वा । **पुरुषं** परिपूर्णम् । **अग्राह्यं** ग्रहणायोग्यम् । **अग्राह्येण** प्रत्यक्षग्रहणायोग्येन ग्रहादिना । **वायुं** गतिगन्धनकारिणं भोगापवर्गप्रदमित्यर्थः । **वायव्येन** वायुसंबन्धिना प्रवृत्तिनिवृत्तिमार्गानुष्ठानेनेत्यर्थः । **सोमं** सशक्तिकम् । **सौम्येन** शक्तिविलासेन । **ग्रसति** भक्षयति तत्तदधीनं करोतीत्यर्थः । अथवाऽग्राह्यमात्मानमग्राह्येणाऽऽत्मस्वरूपेण । **वायुं** प्राणादिप्रभञ्जनम् । **वायव्येन** वायुसंबन्धिना प्राणायामादिना । **सोमं** चन्द्रमण्डलरूपमन्तर्बहिर्वर्तमानम् । **सौम्येन** सोमविनाशकेनाग्न्यादिना । **ग्रसति** विनाशयति । **स्वेन** स्वात्मनाऽनन्यरूपेण । **तेजसा** ज्योतिषा विभूतिमद्भावेनेत्यर्थः । **तस्मै** सर्वजगद्धितायाक्षराय प्राजापत्याय सूक्ष्माय सौम्याय पुरुषायाग्राह्येण स्वेन तेजसाऽग्राह्यं ग्रसते वायव्येन तेजसा वायुं ग्रसते सौम्येन स्वेन तेजसा सोमं ग्रसते । **उपसंहर्त्रे** उपसंहारकारणाय । **महाग्रासाय** महान्सर्वविश्वरूपो ग्रासः कवलो यस्य स महाग्रासस्तस्मै । **वै** स्मर्यमाणाय । **नमो नमो**ऽस्माभिर्देवैः कृतकार्यैः प्राप्तस्वरूपसाक्षात्कारैः क्रियमाणोऽस्तु स्वगुरवे स्वानन्यभूताय जगद्धितत्वादिविशेषणाय नमस्कारः । अभ्यासस्तु स्तुतिप्रसादादाविर्भूतमन्त्रतद्देवतास्वरूपसाक्षात्कारत्वेन कृतकृत्यत्वदर्शनार्थः ॥ ३ ॥

इदानीं परित्यज्याऽऽख्यायिकास्वरूपं देवैः प्राप्तं जगद्धितमक्षरमस्मान्प्रति दर्शयितुं श्रुतिराह । **हृदिस्था** त्वद्दयकमलस्था **देवता** रुद्रस्तुतिपराः । **सर्वा** निखिला **बहिष्ठा** देवताः कथं त्वादिस्था इत्यत आह । **हृदि** त्वद्दयकमले प्राण इति शेषः । अस्तु त्वदि प्राणः किं तत इत्यत आह । **प्राणे,** एकस्मिन्देवे सूत्रात्मनि सर्वदेवस्वरूपे हृदयकमलचारिणि **प्रतिष्ठिताः** सर्वदेवतास्तादात्म्येनावस्थिताः । सन्तु देवताः प्राण ( णा )भिन्ना हृदि किं तावतेत्यत आह । **हृदि** त्वद्दयकमले **त्वं** प्राणोपाधिकः कर्ता भोक्ता वस्तुतोऽक्षरादि( द्य )भिन्नः । **असि** भवसि । **यः** प्रसिद्धः परमेश्वर एक एव रुद्रः ।

१ ग. प्राणाः ।

नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरो दक्षिणतः पादो य उत्तरतः स ॐकारो य ॐकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्मेति स एकः स एको रुद्रः स ईशानः स भगवान्स महेश्वरः स महादेवः ॥ ४ ॥

अथ कस्मादुच्यत ओंकारो यस्मादुच्चार्यमाण एव सर्वं शरी-

---

**नित्यं** सर्वदा । **तिस्रो मात्रा**स्त्रिसंख्याका अकारोकारमकाराख्यास्ताभ्यः **परस्तु,** उत्कृष्ट एव । **स** ॐकारो रुद्रः । त्वमसीत्यन्वयः । **तस्य** तव सर्वदेवतात्मन ॐकाराभिन्नस्योत्तरत उत्तरस्मिन्निवृत्तिमार्ग इत्यर्थः । **शिर** उत्तमाङ्गं मोक्षरूपमित्यर्थः । **दक्षिणतो** दक्षिणमार्गे प्रवृत्तिमार्ग इत्यर्थः । **पादः** संसारचक्रं मरणमज्ञानम् । **यः** प्रसिद्धः । **उत्तरत** उत्तरमार्गस्थो मोक्षरूपः । **स** उक्त उत्तरभागग **ओंकारो**ऽक्षरस्वरूपनिर्देशोऽयम् । इदानीमस्योंकारस्य विविधान्पर्यायान्दर्शयति मोक्षरूपानन्दत्वेन पर्यवसानं करोति । **य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म** । ओंकारप्रणवसर्वव्याप्यनन्ततारसूक्ष्मशुक्लवैद्युतपरब्रह्मपदानि श्रुतिरेव व्याकरिष्यति । अत्र तु प्रत्येकं पदमनूद्याभिधानाभिधेयवाचकानां पदानामेकार्थत्वाभिधायित्वेन प्रत्येकं तदा पर्यायत्वं विधीयत इति विशेषः । इति प्रणवपर्यायपरिसमाप्त्यर्थः । इदानीमभिधेयवाचकानां पर्यायाणामभिधानवृत्त्यर्थमाह । **स** प्रणवात्मोक्तः । परब्रह्मान्तशब्दः परब्रह्म तारक **एकः । स एको रुद्रः स ईशानः स भगवान्स महेश्वरः स महादेवः** । एतानि पदानि श्रुतिरेव व्याकरिष्यति । शब्दभेदाद्देवताभेद इति न्यायप्राप्तमेकाद्यर्थभेदं वारयितुं षट्तत्पदानि ॥ ४ ॥

**अथ** अनुपपत्तिसूचनार्थोऽथशब्दः । यद्ययमर्थवाचिशब्दः कथमनावृत्तः शब्दवाची स्यात् । शब्दवाचित्वेऽप्ययमेव दोषः । उभयवाचित्वं च न्यायविरुद्धमनेनैवाभिप्रायेण पृच्छति । **कस्मा**त्केन कारणेन शब्देनार्थेनोभयेन वा तत्रापि रूढ्या योगेन वृत्त्यन्तरेणैव वेत्यर्थः । **उच्यते** कथ्यते । **ओंकारः** प्रतीकमिदम् । इति शिष्येण पृष्टा गुरुभूता श्रुतिराह । **यस्मा**द्यतः । **उच्चार्यमाण एव,** उच्चारणार्थं प्रयत्ने क्रियमाण एव विलम्बमन्तरेण **सर्वं** निखिलं कुण्डलिनीमुखमारभ्यैकादशद्वारं **शरीरं** ज्ञानदर्शनेन काष्ठाग्निं विनाश्योर्ध्व-

रमूर्ध्वमुन्नामयाति तस्मादुच्यत ओंकारोऽथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋचो यजूंषि सामाथर्वाङ्गिरसश्च यज्ञे ब्रह्म ब्राह्मणेभ्यः प्रणामयाति तस्मादुच्यते प्रणवोऽथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव सर्वाल्लोँकान्व्याप्नोति स्नेहो यथा पललपिण्डं शान्तमूलमोतप्रोतमनुप्राप्य व्यतिशिष्टस्तस्मादुच्यते सर्वव्याप्यथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एवाऽऽद्यन्तं नोपलभ्यते तिर्यगूर्ध्वमधस्तात्तस्मादुच्यतेऽनन्तोऽथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहद्भया-

मूर्ध्वस्थितस्थानापेक्षयोपरिदेश **उन्नामयाति** प्राणप्रभञ्जनेनोन्नतं कारयति **तस्मात्**तः स्वोच्चारणावसरे सर्वस्य शरीरस्योर्ध्वदेशे प्राणप्रभञ्जनेनोन्नमनकारित्वात् । **उच्यत ओंकारः** । स्पष्टम् । अयमर्थः—सति भेदेऽभिधानाभिधेययोरशब्दसूचितानुपपत्तिः स्यान्नतु सोऽस्त्यत्र । नच रूढ्यादिवृत्तिप्रयुक्तानुपपत्तिर्यौगिकत्वस्याङ्गीकारादिति । **अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव**। पूर्ववद्व्याख्येयम् । ओंकारवत्प्रणवेऽपि व्याख्यानमवगन्तव्यम् । **ऋचो यजूंषि समान्यथर्वाङ्गिरसश्च** । स्पष्टम् । चकारादन्यदप्यभीष्टम् । **यज्ञे** जपयज्ञे । **ब्रह्म** ब्रह्मवर्चसादि । **ब्राह्मणेभ्यः** प्रणवोच्चारकेभ्यो भूमिदेवेभ्यः । **प्रणामयति** प्रकर्षेण नामयति प्रापयति । **तस्मादुच्यते प्रणवः** । स्पष्टम् । **अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव** । पूर्ववद्व्याख्येयम् । **सर्वान्**, निखिलाँल्लोकान्कर्मफलभूतान्भूरादीन् । **व्याप्नोति, शङ्कु**रिव पर्णानि विविधं सर्वात्मनाऽऽप्नोति । तत्र दृष्टान्तमाह । **स्नेहः** प्रसिद्धश्चिक्कणः । **यथा** येन प्रकारेण । **पललपिण्डं** पललं तिलपिण्डं मांसं वा तस्य पिण्डस्तम् । **शान्तमूलं** शान्तः प्रणवस्य मात्राभेदः स प्रणवः स एव मूलं कारणं जगतो यस्य तच्छान्तमूलं जगत् । **ओतप्रोतं** लूतातन्तुनेव लूतानिर्मितं जातं सर्वतः स्वेन प्राक्प्रत्यगुदग्दक्षिणास्थितेनानुविद्धमोतप्रोतम् । **अनुप्राप्य**, अनुप्राप्य सदा जायते तिष्ठति विनश्यति वा तेन सर्वदा संबद्ध इत्यर्थः। एवं चेत्तद्वदेव जननमरणादिमानित्यत आह । **व्यतिशिष्टो**ऽवशिष्टः । तज्जनिमरणादित्यर्थः । स्वयं जनिमरणादिशून्य इत्यर्थः । **तस्मादुच्यते सर्वव्यापी** । स्पष्टम् । **अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव** । पूर्ववद्व्याख्येयम् । **आद्यन्तम्**, आदिश्चान्तश्चाऽऽद्यन्तम् । **नोपलभ्यते** । स्पष्टम् । **तिर्यग**ष्टसु दिक्षु । **ऊर्ध्वमु**परिदेशे । **अधस्ताद**धोदेशे । तिर्यगादिष्वाद्यन्तं नोपलभ्यत इत्यर्थः । **तस्मादुच्यतेऽनन्तः** स्पष्टम् । **अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव** । पूर्ववद्व्याख्येयम् । **गर्भजन्मजरामरणसंसारमहद्भयात्** । गर्भो जननीजठरनिवासः । जन्म योनियन्त्रान्निर्गमनम् । जरा वलीपलितादिकरी । मरणं प्राणपरित्यागः ।

१ क. ख. °ह्म च ब्रा° ।

स्तारयति तस्मादुच्यते तारमथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा परशरीराण्येवाधितिष्ठति तस्मादुच्यते सूक्ष्ममथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयते तस्मादुच्यते शुक्लमथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एवातिमहति तमसि सर्वं शरीरं विद्योतयति तस्मादुच्यते वैद्युतमथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्माथ कस्मादुच्यत एको यः सर्वाँल्लोकानुद्गृह्णाति सृजति विसृजति वासयति तस्मादुच्यत एको॒ऽथ कस्मादुच्यत एको रुद्र एको रुद्रो न द्वितीयाय तस्थे तुरीयमिमं लोकमीशत ईशनीयु-

गर्भजन्मजरामरणरूपः संसारः स च पुनः पुनरावृत्तिं गच्छन्महांस्तस्माद्भयं ततस्तारयति मोचयति । तस्मादुच्यते तारम् । स्पष्टम् । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव । पूर्ववद्व्याख्येयम् । सूक्ष्मो भूत्वाऽणोरणीयान्सन् । परशरीराण्येव परः शरीराणि परशरीराणीति च्छान्दसम् । परो महतो महीयानेवं न त्वन्यः । स्थावरजङ्गमशरीराणि । अधितिष्ठति, अधीनी करोति । तस्मादुच्यते सूक्ष्मम्, स्पष्टम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव । पूर्ववद्व्याख्येयम् । क्लन्दते, अन्तर्ध्वनिं करोति क्लेदयति वाऽन्तर्नाडिगणजान्दोषान् । क्लामयते, अज्ञानं सकार्यं श्रमयति विनाशयतीत्यर्थः । तस्मादुच्यते शुक्लम् । स्पष्टम् । अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव । पूर्ववद्व्याख्येयम् । अतिमहति, अत्यन्तप्रौढे । तमसि, प्रसिद्धेऽन्धकारेऽज्ञाने वा । सर्वं शरीरं निखिलं शरीरजातं विद्योतयति प्रकाशयति । तस्मादुच्यते वैद्युतम् । स्पष्टम् । अथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव । पूर्ववत् । बृहति वृद्धिं गच्छति । स्वयं बृंहयत्यन्यान्वृद्धिं नयति । तस्मादुच्यते परं ब्रह्म । स्पष्टम् । अथ कस्मादुच्यत एकः । पूर्ववत् । यः सर्वाँल्लोकान् । स्पष्टम् । उद्गृह्णात्यूर्ध्वं मोक्ष आत्मनि गृह्णाति । सृजत्युत्पादयति । विसृजत्युपसंहरति । वासयति वासं स्थितिं कारयति । तस्मादुच्यत एकः । स्पष्टम् । अथ कस्मादुच्यत एको रुद्रः । पूर्ववत् । अभिधानव्याख्यानस्य निवृत्तत्वाद्यस्मादुच्चार्यमाण एवेति निवृत्तमित्यारभ्य पूर्वत्र चैकस्मिन्पर्याये । एको भेदशून्यः । रुद्रः, दुःखविनाशकः । न द्वितीयाय द्वितीयार्थं तस्थे न तस्थे न स्थितवान् । अद्वितीय एव स्थितवानित्यर्थः । तुरीयं चतुर्थः । इमं विविधप्रत्ययगम्यम् । लोकं कर्मफलभूतम् । ईशत ईष्टे । ईशनीयुर्नियमनशक्तिमान् । त्रिपदः सस्यापेक्षया पादमात्र-

१ ग. ब. एक एव रु° ।

जननीयुः प्रत्य[1]ङ्ङ्जनास्तिष्ठति संयुगस्यान्तकाले संहृत्य विश्वा भुवनानि गोप्ता तस्मादुच्यत एको रुद्रोऽथ कस्मादुच्यत ईशानो[2] यः सर्वाँल्लोकानीशत ईशनीभिर्जननीभिः परमशक्तिभिरभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषस्तस्मादुच्यत ईशानोऽथ कस्मादुच्यते भगवाँ[3]न्सर्वान्भावानीक्षत्यात्मज्ञानं निरीक्षयति योगं गमयति तस्मादुच्यते भगवानथ कस्मादुच्यते महेश्वरो[4]

मित्यर्थः (!)। जननीयुर्विश्वोत्पादकशक्तिमान्। प्रत्यङ्ङ्बुद्ध्यादिभ्यः प्रति प्रातिकूल्येनान्तरेवाञ्चतीति प्रत्यङ्सर्वान्तर इत्यर्थः। जना हे जनाः। तिष्ठति। स्पष्टम्। संयुगस्यान्तकाले सम्यग्युगजातस्यान्तकालो विनाशकालस्तस्मिन्। तदवस्थानप्रकारमाह। संहृत्य, उपसंहारं विधाय। विश्वा विश्वानि। भुवनानि स्थानानि। समग्रं विश्वमित्यर्थः। गोप्ता रक्षिता। तस्मादुच्यत एको रुद्रः। स्पष्टम्। अथ कस्मादुच्यत ईशानः। पूर्ववत्। यः प्रसिद्धः। सर्वान्निखिलान्। लोकान्कर्मफलभूतान्। ईशत ईष्टे। ईशनीभिर्नियमनशक्तिभिः। अविद्याविलासैरित्यर्थः। तासां विशेषणं जननीभिर्विश्वोत्पादिकाभिः। परमशक्तिभिरचिन्त्यत्वेनोत्कृष्टाभिः शक्तिभिः। उक्तेऽर्थे मन्त्रं रथंतरसामगानाधारं पठति। अभि त्वा त्वामीशानम्। शूर हे शौर्यसंपन्न। नोनुमोऽभिनोनुमः सर्वतोऽतिशयेन स्तुतिं कुर्मः। त्वयि क्रियमाणाः स्तुतयः पुरुषस्याभीष्टं पयः स्रवन्तीत्येतद्दृष्टान्तेनाऽऽह। अदुग्धा इव धेनवः। घटोध्न्यः स्तनभारमन्थराः स्वयंच्युतपयसा भूमिं कर्दमकुर्वन्त्यो हुंभारवेण दोग्धारमाकारयन्त्यो गृहीतक्षीरा गावो यथा तद्वत्। त्वदीयाः स्तुतय इति शेषः। ईशानं नियन्तारम्। अस्य विविधप्रमाणगम्यस्य। जगतः कार्यकरणात्मकस्य प्रपञ्चस्य जङ्गमस्य। सुवर्दृशं सुवर्निरतिशयसुखं तद्वद्दर्शनीयं सुखवदेकान्तं सुवर्दृशं स्वयंप्रकाशमानन्दात्मानमित्यर्थः। जङ्गमभागस्य नियन्तृत्वमुक्त्वा स्थावरभागस्य नियन्तृत्वमाह। ईशानमीश्वरम्। इन्द्र इन्द्रः परमैश्वर्यसंपन्नः संबोधनं चेश्वरस्य। तस्थुषः स्थावरमात्रस्य जगतः। तस्मादुच्यत ईशानः। स्पष्टम्। अथ कस्मादुच्यते भगवान्। पूर्ववत्। ज्ञानादिमत्त्वाद्भगवत्त्वमित्याह। यः प्रसिद्धः परमेश्वरः। सर्वान्निखिलान्। भावान्पदार्थान्। ईक्षति, ईक्षते। आत्मज्ञानमहं ब्रह्मेति साक्षात्कारम्। निरीक्षयत्यस्मदादीनां कारयति। अपि च योगं जीवब्रह्मतादात्म्यसंबन्धम्। गमयति पुनर्व्युत्थानशून्यत्वेन प्रापयति। तस्मादुच्यते भगवान्। स्पष्टम्। अथ कस्मादुच्यते महेश्वरः। पूर्ववत्।

१ ग. °स्यङ्जना°। २ घ. °नो यस्मादुच्चार्यमाण एव यः। २ घ. °वान्यस्मादुच्चार्यमाण एव स°। ४ घ. °रो यस्मादुच्चार्यमाण एव यः।

**यः सर्वाँल्लोकान्संभक्षः संभक्षयत्यजस्रं सृजति विसृजति वासयति तस्मादुच्यते महेश्वरोऽथ कस्मादुच्यते महादेवो[1] यः सर्वान्भावान्परित्यज्याऽऽत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः। तदेतद्रुद्रचरितम्। एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति विश्वतोमुखः। विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं-**

**यः सर्वाँल्लोकान्**। व्याख्यातम्। **संभक्षः** सम्यग्भक्षो यस्यासौ संभक्षः। **संभक्षयति** सम्यग्भक्षणं करोति। **अजस्रं** निरन्तरम्। **सृजति विसृजति वासयति**। व्याख्यातम्। **तस्मादुच्यते महेश्वरः**। स्पष्टम्। **अथ कस्मादुच्यते महादेवः**। पूर्ववत्। **यः सर्वान्भावान्**। व्याख्यातम्। **परित्यज्य** समन्तात्त्यक्त्वा। **आत्मज्ञानयोगैश्वर्ये**, अहं ब्रह्मास्मीत्यात्मज्ञानं तदेव योगैश्वर्यं तस्मिन्। **महति** प्रौढे। **महीयते** सर्वैर्योगिभिः पूज्यते। **तस्मादुच्यते महादेवः**। स्पष्टम्। तत्प्रसिद्धम्। एतन्नामनिरुक्तिरूपम्। **रुद्रचरितं** रुद्रस्य देवानामात्मोपदेशकस्य चरितं चेष्टितं रुद्रचरितम्। इदानीं नामनिरुक्तिं कृत्वा हर्षनिर्भरमानसा सती सानुकम्पा पुरुषेण ज्ञातव्यं ब्रह्मरूपं पुरुषाभिन्नमस्मान्प्रत्याह। **एष** बुद्धेर्द्रष्टा। **हि** प्रसिद्धः। **देवः** स्वयंप्रकाशः। **प्र दिशो नु** प्रेति तिष्ठतिना संबध्यते। न्वित्याश्चर्ये। दिशः प्राच्याद्या आग्नेय्याद्याश्च। **सर्वा** अष्टौ दश वा निखिला दिक्शब्दप्रत्ययालम्बनाः सर्वा अपीत्यर्थः। प्रदिशोऽवान्तरदिशो वा। अस्मिन्पक्षे किमवान्तरा एवेत्याह सर्वा इत्याशङ्क्य व्याख्येयम्। **पूर्वो हि जातः सः**। स्पष्टम्। अनेन व्याकृतरूपतोक्तेदानीं सूत्रात्मतामाह। **उ**, अपि **गर्भे** भूतपञ्चकस्याप्रधानस्य गर्भे वर्तमानो ब्रह्माण्डरूपो गर्भरूपोऽपि स एवेत्यर्थः। इदानीमनारोपितपुरुषावयवं विराट्शब्देनाप्यभिधीयमानं प्रजापतिमाह। **अन्तः**, गर्भ इति मन्त्रेणावगन्तव्येऽन्तर्गर्भे गर्भस्यान्तः प्रजापतिरूपः। यस्य मेरुर्महीधरः। जरायुरित्यादि पुराणे कथ्यते। इदानीं सर्वात्मत्वमात्मन आह। **स एव जातः स जनिष्यमाणः**। अतीतानागतयोर्ग्रहणे वर्तमानस्याप्यर्थसिद्धं ग्रहणम्। स्पष्टः पदार्थः। इदानीं सर्वात्मत्वेन जनिमरणादिप्राप्तिस्तां निवारयति। **प्रत्यङ्**बुद्ध्यादिभ्यः। प्रति प्रातिकूल्येनान्तरेवाञ्चति गच्छतीति प्रत्यङ्। **जना** हे जनाः। **तिष्ठति**, अवस्थानं करोति प्रकर्षेणावस्थानं करोति। **विश्वतोमुखः**, विश्वतः सर्वतः सर्वासु दिक्षु मुखान्युपलब्धिद्वाराणि यस्य स विश्वतोमुखः। जगत उत्पत्तिस्थितिसंहारेष्वस्य स्वातन्त्र्ये हेतुमाह। **विश्वतश्चक्षुः** सर्वतोनेत्रः। **उत**, अपि। **विश्वतोमुखः**। सर्वतआननः। **विश्वतोबाहुः** सर्वतोभुजः। **उत**, अपि। **विश्वतस्पात्**सर्वतश्चरणः। अयमर्थः। **यानि**

१ ख. °वो यस्मादुच्चार्यमाण एव यः। २ ग. °त्यग्जना°।

**बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः । तदेतदुपासितव्यं वागवदन्ति तदं तु ग्रहणमयं पन्था वितत उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमपरं परायणं चेति । वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम् । तमा-**

---

कानिचिच्चक्षुरादीनीन्द्रियाण्यन्यद्वा प्राणादिकं यत्किंचिद्यस्य कस्यचिज्जन्तोस्तत्सर्वमस्यैवैतदात्मकत्वात्सर्वस्य ततोऽसङ्गोदासीनेऽपि पुंसि मायावशात्सर्वतश्चक्षुरादिकमुपपन्नमिति । **संबाहुभ्यां धमति** हस्ताभ्यां विश्वमुत्पादयन्नुत्पत्तिकाले विविधाञ्शब्दानुत्पाद्योत्पादकादिरूपेण करोति । बाहुभ्यामितिद्विवचनसामर्थ्यात्सर्वकर्महेतुत्वाच्च धर्माधर्माभ्यामिति विवक्षितम् । ततः स्थितिसंहारयोश्च तत्तद्रूपैः शब्दकारित्वमविरुद्धम् । यदाऽपि धमतिरग्निसंयोगार्थस्तदाऽपि संतापकारित्वेन सुखदुःखयोरुत्पत्तौ स्थितौ संहारे च सुखदुःखकारित्वं व्याख्येयम् । **संपतत्रैः** पतनशीलपञ्चीकृतपञ्चमहाभूतैः संबन्धमेतीत्यनुषङ्गः । **द्यावाभूमी** । ब्रह्माण्डस्य कपालद्वयं द्यावाभूमीशब्दवाच्यम् । **जनयन्नु**त्पादयन् । उपलक्षणमिदं स्थापयन्संहरंश्च । **देवः** स्वयंप्रकाशः । **एको** भेदशून्यः । **तत्**, जगत्कारणम् । **एतत्**, बुद्धेर्द्रष्ट्रात्मरूपम् । **उपासितव्यं** श्रवणमनननिदिध्यासनैः साक्षात्कर्तव्यम् । **वागवत्**, वाग्वेदराशिस्तं स्वसत्तयाऽवतीति वागवत् । **अन्ति** सर्वजनानां समीपे । **तत्** । सच्चिदानन्दस्वभावं रुद्ररूपम् । **अं तु,** अमेव, ओंकाराक्षरेऽकारमकाररूपं वास्तवं न तु मध्यरूपम् । यदादावन्ते च जगत्तिष्ठति तदेव वास्तवं रूपं रौद्रं न तु मध्यवर्ति जगदिति । **ग्रहणं** स्वयंप्रकाशमानज्ञानैकरूपम् । **अयं** वागवतो रुद्रस्योपासनरूपः । **पन्था** मार्गो मोक्षस्य । **विततो** विस्तीर्णः सर्वबाधरहित इत्यर्थः । **उत्तरेण,** ओंकारशिरोरूपेणार्चिरादिना जीवन्मुक्तिरूपेण विदेहकैवल्येन वेत्यर्थः । **येन,** अनावृत्तिमार्गेण प्रसिद्धेन । **देवा** अग्न्यादयो रुद्रस्य शिष्याः । **येनोक्तेन** । **ऋषयो**ऽतीन्द्रियस्य द्रष्टारो वेदव्यासादयः । **येनोक्तेन** । **पितरः,** जनानां जनका उत्पन्नब्रह्मज्ञाना वसिष्ठादयोऽग्निष्वात्तादयो वा **प्राप्नुवन्ति,** अधिगच्छन्ति । **परमपरं** द्विविधं ब्रह्माऽऽत्मरूपं कार्यब्रह्मलोकस्थम् । **परायणं च,** उत्कृष्टाश्रयस्वरूपम् । चशब्दात्सर्वानन्यदपि । **इति,** उत्तरतःशिरःकथनसमाप्त्यर्थः । इदानीं परमेश्वरप्रतिपत्त्यर्थं परित्यज्योंकारमुपाध्यन्तराण्युररीकृत्याऽऽह । **वालाग्रमात्रं** केशाग्रभागपरिमाणम् । **हृदयस्य** हृदयपुण्डरीकस्य । **मध्ये**ऽन्तः । **विश्वं** विश्वरूपम् । **देवं** स्वयंप्रकाशम् । **जातवेदं** जाता वेदा यस्मात्स जातवेदस्तम् । **वरेण्यं** वरणीयम् । **तम**तिसूक्ष्मं महतोऽपि महीयांसम् ।

त्मस्थं येऽनु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् । यो योनिं योनिमधितिष्ठत्येको येनेदं पञ्चविधं च सर्वं तमीशानं पुरुषं देवमीड्यं निध्यायात्तारं शान्तिमत्यन्तमेति । प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन्क्रोधो या च तृष्णा क्षमा च तृष्णां छित्त्वा हेतुजालस्य मूलं बुद्ध्या संचिन्त्य स्थापयित्वा तु रुद्रे ।

---

आत्मस्थमन्तःकरणे वर्तमानम् । येऽधिकारिणः । अनुपश्यन्ति शास्त्रगुरूपदेशेन साक्षात्कुर्वन्ति । धीरा ब्रह्मचर्यादिसाधनसंपत्त्या धैर्ययुक्ताः । तेषामात्मस्यात्मावलोकिनाम् । शान्तिरकार्यविद्योपरतिः । शाश्वती पुनरुत्थानशून्या । आत्मज्ञानमन्तरेणास्याः प्राप्तौ नोपायान्तरमित्याह । नेतरेषाम् । आत्मज्ञानशून्यानाम् । ननु कोऽसौ वालाग्रमात्रो ध्येय इत्यत आह । यः प्रसिद्धः । योनिं योनिं शरीरं शरीरम् । निःशेषाणि स्थावरजङ्गमशरीराणीत्यर्थः । अधितिष्ठति, अधिष्ठानं करोति । न चानन्तशरीराधिष्ठानेऽप्यस्य भेद इत्यत आह । एको भेदरहितः । येन, अधिष्ठानभूतेन । इदं विविधशब्दप्रत्ययगम्यम् । पञ्चविधं च भूतज्ञानेन्द्रियकर्मेन्द्रियादिरूपेण पञ्चप्रकारम् । चकारादेकप्रकारमायारूपमपि । सर्वं निखिलम् । वर्तत इति शेषः । तं सर्वाधिष्ठातारम् । ईशानं नियन्तारम् । पुरुषं वरदं परिपूर्णम् । देवं स्वयंप्रकाशम् । ईड्यं स्तुत्यम् । निध्यायात्सर्वोऽपि जनो नितरां ध्यानं करोतु । तारं स्मरणमात्रात्सर्वेषां संसारार्णवतारकम् । शान्तिम् । उक्ताम् । अत्यन्तमेति, अतिशयं पुनरावृत्तिशून्यं गच्छति । ननु यद्ययमात्मैतादृशः कस्मात्सर्वैर्न ज्ञायत इत्याशङ्क्य तृष्णापाशच्छेदाभावादित्यभिप्रायेण तृष्णापाशच्छेदकं योगं दर्शयितुं पीठिकां रचयति । प्राणेषु प्राणशब्देष्विन्द्रियादिषु । अन्तर्मध्ये । मनसोऽन्तःकरणस्य । लिङ्गं लिङ्गशरीरम् । अयमर्थः । प्राणानामन्तःकरणेनाविनाभूतत्वादन्तःकरणस्य च सर्ववासनाचित्रपरत्वाद्वासनारूपत्वाच्च लिङ्गशरीरस्याप्राणान्तःकरणात्मनोऽपि प्राणाविनाभूतान्तःकरणेऽवस्थानमविरुद्धम् । आहुः कथयन्ति लिङ्गविदः । यस्मिन्वासनारूपे लिङ्गशब्दाभिधेयेऽन्तःकरणे । क्रोधः, विषयप्राप्तिविघातकहेतौ कर्मणा मनसा वाचाऽनिष्टकारित्वप्रयोजकहेतुः । या च प्रसिद्धा । तृष्णा, अपीदं मे स्यादित्यभिलाषरूपा । चकारो लोभादीनां संग्रहार्थः । क्षमा च जन्तुष्वपकारिषु क्रोधानुत्पत्तिः । चकारात्तितिक्षादिकमपि । तृष्णामुक्तां सर्वानर्थकारिणीं छित्त्वा द्वैधीभावं कृत्वोन्मूल्येत्यर्थः । हेतुजालस्य दुःखकारणसमूहस्य । मूलं कारणम् । बुद्ध्याऽन्तःकरणस्य निश्चयात्मकवृत्त्या शास्त्रेणैव । संचिन्त्याऽऽत्मनि सम्यक्तृष्णाया अभावमधिगत्य । स्थापयित्वा तु रुद्रे तां बुद्धिं विषयगन्धशून्य आनन्दात्मनि स्वाभिन्न उक्ते रुद्रे गुरौ संस्थाप्यैव । न किंचिदन्यच्चिन्तयेदिति शेषः । ननु कुतो रुद्रे

**रुद्र एकत्वमाहू रुद्रं शाश्वतं वै पुराणम् । इषमूर्जं तपसा नियच्छत व्रतमेतत्पाशुपतम् । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वꣳह वा इदं भस्म मन**

स्थापनीयेत्यत आह । **रुद्रे,** उक्ते । **एकत्वं** निःशेषभावानामैक्यम् । **आहुः** । कथयन्ति रुद्रविदः । **रुद्रमुक्तम्** । **शाश्वतं** शश्वद्भवः शाश्वतस्तमविनाशिनमित्यर्थः । **वै** प्रसिद्धम् । **पुराणं** पुराऽपि नवं चिरंतनमित्यर्थः । **इषमन्नरूपम्** । **ऊर्जममृतरूपम्** । इषमूर्जमेव गोबलीवर्दन्यायेन चात्र सामान्यविशेषभावोऽवगन्तव्यः । अथवा । इषं वनस्पतिरूपम् । ऊर्जमन्नरूपम् । **तपसा** पर्यालोचनेन कृच्छ्रचान्द्रायणादिना वा । **नियच्छत** नियमनं कुरुत । एतदुक्तं भवति । रुद्रावगत्यर्थं नियतान्नोदकादिसेवनेन श्रवणमननादिपुरःसरं कृतपारमहंस्याश्रमाः कालं नयतेति । **व्रतमनुष्ठेयम्** । **एतत्,** तृष्णाक्रोधादिपरित्यागक्षमादिसेवनोंकारजपध्यानरूपपरायणावगत्यादिकम् । **पाशुपतम्,** पशूनामज्ञानिनां सर्वेषां × संसारवाटप्रक्षेपादिना पालयिता पशुपतिरानन्दात्मा तेन स्वप्राप्त्यर्थं प्रोक्तं पाशुपतम् । ननु तपसा रुद्रः स्वाधीनः करणीय इत्युक्तं तपश्च ज्ञानं नोल्लङ्घितवर्णाश्रममर्यादानामशुद्धान्तःकरणानां स्यात् । वर्णाश्रममर्यादाश्च स्नानादिहेतौ नीरे प्रतिष्ठिता न च नीराणि सर्वदा सर्वत्र सर्वैरधिकारिभिः सेवितुं शक्यानि ततोऽशक्याभिधानमिदं तपसा नियच्छतेतीत्याशङ्क्य शुद्धिहेतुनीरप्रातिनिधित्वे भस्म वक्तुं भस्म स्तौति । अर्थात्संसारे वैराग्यमप्याह । **अग्निः** प्रसिद्धो लौकिकः शास्त्रीयश्चेति । इन्धनस्य संयोगात्सर्वाभावविधायको ज्वालावलीढविश्वावकाशो दाह्याभावात्प्रसरमलभमान उपरतः । **इति,** अनेन प्रकारेण परित्यज्य स्वं नामरूपं कर्म च । **भस्म** भसितमात्रम् । **वायुः** पवनः । विश्वविनाशनार्थं प्रवृत्ते कुण्डलीकृतज्वालामण्डले वायुसखे सख्युर्वृद्ध्यर्थं विविधैः शब्दैः सर्वकर्णरन्ध्राणि पूरयन्स्वानीतरजोभिः सर्वचक्षूंषि च मुष्णन्नतिप्रबलानि गिरिशिखराणि सशाखीन्यपि पातयन्निन्धनाभावादुपरते स्वसखे स्वयमपि स्वसखवत्पश्चादनुलभ्यमानः । **इति,** अनेन प्रकारेणानाविर्भूतरूपोऽपि । **भस्म** भसितमात्रम् ।=। **स्थलं** पृथिवीस्वरूपमग्निसंयुतम् । **इति,** अनेन प्रकारेण । **भस्म** भसितमात्रम् । **व्योम** प्रकृत्यवलीढं नभः । इन्धनपूर्णं वा । इत्यनेन प्रकारेण । **भस्म** भसितमात्रम् । किं बहुना **सर्वं** निखिलम् । **ह** प्रसिद्धम् । **वै** स्मर्यमाणम् । **इदं** विविधप्रत्ययगम्यं जगत् । **भस्म** भसितमात्रम् । **मनः,** मनोगम्यम् । समनस्कं वेदं भस्मेत्य-

× संसारावट, इति क्वचित्पुस्तके । = एतदग्रे जलमिति भस्मेतिवाक्यस्य व्याख्यानं स्खलितमिति भाति ।

एतानि चक्षूꣳषि भस्मानि । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय । योऽथर्वशिरं ब्राह्मणोऽधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति स सर्वेषु तीर्थेषु स्नातो भवति स सर्वेषु वेदेष्वधीतो भवति स सर्ववेदव्रतचर्यासु चरितो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वयज्ञक्रतुभिरिष्टवान्भवति तेनेतिहासपुराणानां

न्वयः । **एतानि** प्रसिद्धानि । **चक्षूंषि** चक्षुष्प्रधानानीन्द्रियाणि । **भस्मानि** भसितमात्राणि । इदानीं भस्मस्नानप्रकारमाह । अग्निः, अग्निरिति भस्मेत्यादीनां चक्षूंषीत्यन्तानां मन्त्राणां प्रतीकम् । **इत्यादिना**, अग्निरितिशब्दव्यतिरिक्तस्य मन्त्रसमुदायस्येतिरादिर्यस्य सोऽयमित्यादिस्तेनेत्यादिना । समग्रं (स्तं) वा पदमग्निरित्यादिना । अग्निरित्यादिर्यस्मिन्मन्त्रसमुदाये सोऽयमग्निरित्यादिस्तेनोभयथा नार्थवैषम्यम् । **भस्म गृहीत्वा** । स्पष्टम् । तेन भस्मना **निमृज्य** नितरां मार्जनं कृत्वा सर्वतः संलिप्येत्यर्थः । **अङ्गानि** शिरआदीनि गात्राणि । **संस्पृशेत्**सम्यक्स्पर्शनं कुर्यात् । यस्माद्भस्मनः प्रशंसोक्तप्रकारेणात्रास्ति । **तस्मा**त्ततो **व्रतमेतत्पाशुपतं** पशुपतिनोक्तम् । **पशुपाशविमोक्षाय** । पशूनामज्ञानिनां पाशानामविद्याकार्याणां सकारणानां विमोक्षो विनाशस्तस्मै । इदानीमुक्तज्ञाने प्ररोचनां जनयितुं पाठफलमाह । **यः** प्रसिद्धः फलार्थी । **अथर्वशिरम**थर्वणा मुनिना दृष्टाः शिराः सारभूता मन्त्रा यस्मिन्सोऽथर्वशिरस्तम् । अथवाऽथर्वणा शिरोवत्प्रधानभूता दृष्टा मन्त्रा यस्मिन्नुपनिषद्रूपे तदथर्वशिरः । अथर्वशिर एवाथर्वशिरम् । **ब्राह्मणो** भूदेवः । अधीते पठति **सः** । **अग्निपूतो**ऽग्निना लौकिकेन वैदिकेन च पवित्रीकृतः । **भवति** । स्पष्टम् । **स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति** । वाय्वादित्यसोमसत्यसर्वप्रातिपदिकानि प्रसिद्धानि । व्याख्यातमन्यत् । **स सर्वेषु तीर्थेषु स्नातो भवति स सर्वेषु वेदेष्वधीतो भवति स सर्ववेदव्रतचर्यासु चरितो भवति** । **सर्वैर्देवैर्ज्ञातो भवति स सर्वयज्ञक्रतुभिरिष्टवान्भवति** । यज्ञा जपयज्ञाद्याः । क्रतवो ज्योतिष्टोमाद्याः । स्पष्टमन्यत् । तीर्थस्नानवेदाध्ययनवेदव्रतचर्याचरणदेवविज्ञानयज्ञक्रतुयजनपञ्चकं प्रसिद्धम् । **तेनाथर्वशिरोध्यायिना** । **इतिहासपुराणानाम्**, इतिहासा जनको ह वैदेह इत्याद्याः । पुराणानि तत्तेजोऽसृजतेत्यादीनि । **इतिहासश्च**

१ ग. घ. इत्येतानि । २ ग. °मोक्षणाय । ३ ग. °शिरो भा° ।

रुद्राणां शतसहस्राणि जप्तानि भवन्ति गायत्र्याः शतसहस्रं जप्तं भवति प्रणवानामयुतं जप्तं भवति रूपे रूपे दश पूर्वान्पुनाति दशोत्तरानाचक्षुषः पङ्क्तिं पुनातीत्याह भगवानथर्वशिरोऽथर्वशिरः। सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गाणपत्यमवाप्नोति तृतीयं जप्त्वा देवमेवानुप्रविशतीत्यों सत्यम्। यो रुद्रो अग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्तु। अद्य

पुराणानि चेतिहासपुराणानि तेषाम्। **रुद्राणां** नमस्ते रुद्रेत्याद्यध्यायानाम्। **शतसहस्राणि** लक्षमात्रमनन्तानीत्यर्थः। **जप्तानि** जापितानि **भवन्ति**। **गायत्र्याः शतसहस्रं जप्तं भवति**। **प्रणवानामयुतं जप्तं भवति**। शतसहस्रं लक्षमात्रम्। अयुतं दशसहस्रम्। स्पष्टमन्यत्। **रूपे रूपे** पाठे पाठे प्रतिपाठमित्यर्थः। आत्मानमारभ्य **दश** दशसंख्याकान्**पूर्वा**न्पित्रादीन्**पुनाति** पवित्री करोति। **दश** दशसंख्याकानु**त्तरा**न्पुत्रादीन्। **आचक्षुषो** यावच्चक्षुर्दर्शनम्। **पङ्क्तिम्,** अपाङ्क्तेयानार्यपङ्क्तिम्। **पुनाति** पवित्री करोति। **इति,** अनेन प्रकारेण। **आहोक्तवान्**। **भगवान्,** भूतानामुत्पत्त्यादिज्ञानवान्। **अथर्वशिर** अथर्ववेदः। **अथर्वशिरो** व्याख्यातम्। अभ्यास आदरार्थ उपनिषदर्थपरिसमाप्त्यर्थो वा। **सकृ**देकवारम्। **जप्त्वा** जापित्वा। **शुचिः** शुद्धः शरीरेण वचसा च। **पूतः** पवित्रीभूतो मनसा विपूतः। शुचिः पूतस्ततः **कर्मण्यः** कर्मानुष्ठानयोग्यो **भवति**। स्पष्टम्। **द्वितीयं** द्विवारं **जप्त्वा** जापित्वा **गाणपत्यं** गणपतेर्भावं सर्वनियन्तृत्वमित्यर्थः। **अवाप्नोति** प्राप्नोति। **तृतीयं** त्रिवारं **जप्त्वा** जापित्वा **देवमेव** स्वयंप्रकाशमात्मस्वरूपमे**वानु** त्वरितं **प्रविशति** तादात्म्येन प्रवेशं करोति। **इति,** अनेन प्रकारेणोच्यमानम्। ॐ **सत्यम्,** एतत्सत्यं यथार्थम्। देवं प्रविशतीत्युक्तं तं देवमाह। **यः** प्रसिद्धः। **रुद्र** उक्तः। **अग्नावग्न्यभिमानी**। **यः** प्रसिद्धः। **अप्सु,** अबभिमानी। **अन्तर**ग्नावप्सु च मध्यः। **यः** प्रसिद्धः। **ओषधीः,** व्रीह्यादिरूपाः फलपाकान्ताः। **वीरुधः** क्षुद्रस्थावरोपलक्षिताञ्शेषस्थावरान्। **आविवेशा**ऽऽसमन्तात्प्रविष्टवान्। **यः** प्रसिद्धः। **इमा** इमानि विविधप्रत्ययगम्यानि। **विश्वा** विश्वानि सर्वाणि। **भुवनानि** स्थानानि। **चाक्लृपे,** अचीक्लृपत्। अतिशयेन कृतवानित्यर्थः। **तस्मै रुद्राय नमोऽस्तु**। स्पष्टम्। इदानीमथर्वशिरोनामनिरुक्तिमाख्यायिकयाऽऽह। अथर्वणः कदाचित्कश्चन शापं ददौ तं शापमाह। **अद्या**-

१ ग. °हस्राणि जप्तानि भ°। २ घ. दशापारा°।

मूर्धानमस्य संसीर्योऽथर्वा हृदयं च यत् । मस्तिष्कादूर्ध्वं प्रेरयत्पवमानोऽथ शीर्ष्णः । तद्वाऽथर्वणः शिरो देवकोशः समुत्थितः । तत्प्राणोऽभिरक्षतु श्रियमन्नमथो मनः श्रियमन्नमथो मनो विद्यामन्नमथो मनो विद्यामन्नमथो मनो मोक्षमन्नमथो मनो मोक्षमन्नमथो मनः ॥ ५ ॥

भद्रं कर्णेभिः० । स्वस्ति न० २ ॐ शान्तिः शान्तिः शान्तिः ॥ * ॥

इत्यथर्ववेदेऽथर्वशिरउपनिषत्समाप्ता ॥ २ ॥

---

स्मिन्काले मद्वचनात्त्वं **मूर्धानं** मस्तकमथर्वणोऽस्य मद्विरोधिनः । **संसीरसंसीः** । अधः पातयेत्यर्थः । इदमनिर्दिष्टमाह । **योऽथर्वा** प्रसिद्धोऽथर्वा नामास्य न केवलं मूर्धानं निपातय यत्किंचिद्धृदयं **च** । **यत्**, प्रसिद्धं हृदयकमलम् । चकारः संसीरिति क्रियापदानुवृत्त्यर्थः । एवं तेन शापे दत्तेऽथर्वाऽपि तदीयं शापं ज्ञात्वा योगाभ्यासेन बहिः स्थित्वा पुनः पतितं स्वशिरः संधायान्तः प्रवेशमकरोदित्याह । **मस्तिष्कात्**, दशमद्वारस्याधस्तात् । घृताकारो मांसपिण्डो मस्तिष्कं तस्मात् । ऊर्ध्वमुपरिभागे । **प्रेरयत्**स्वलिङ्गशरीरस्य प्रेरणमकरोत् । **पवमानः** प्राणोपासनेन प्राणात्माऽथर्वा वायुरूपः । **अथ** मस्तिष्कादूर्ध्वमागमनानन्तरम् । **शीर्ष्णो** मस्तकस्थदशमद्वारादूर्ध्वं प्रेरयन्नित्यनुषज्यते । एवं कृतेऽथर्वणः शिरः पतितम् । **तद्वा** तच्छायापतितमेव । **अथर्वणः शिरः** । स्पष्टम् । **देवकोशः**, देवस्य सर्वदेवात्मकस्य प्राणस्य स्वयंप्रकाशस्य ब्रह्मणश्च कोश एवाऽऽवरणं सहृदयं मस्तकं देवकोशः । **समुत्थितः** सम्यक्पूर्ववत्स्थापितोऽथर्वणा पवमानेन बहिर्निर्गतेनेति शेषः । तथाचाथर्वणोऽथर्वशिर इति नाम तेन दृष्टत्वात्तन्नामैव श्रुतेरपीत्यर्थः । यतोऽथर्वा पवमानो मृतशरीरस्य जीवनहेतुरभूत्ततः । **प्राणोऽथर्वा** पवमानः । **अभिरक्षतु** सर्वतो रक्षां करोतु मम । **श्रियं** वाक्कायमनोगतां बाह्यां च पशुसुवर्णादिरूपां लक्ष्मीम् । **अन्नमदनीयं** चतुर्विधम् । **अथो** अपि । **मनोऽ**न्तःकरणं दृष्टादृष्टानर्थेभ्यः । **श्रियमन्नमथो मनः** । व्याख्यातम् । **विद्यां** ब्रह्मविद्याफलां वेदाध्ययनादिरूपाम् । **विद्यामन्नमथो मनः** । व्याख्यातम् । **मोक्षम्**, अविद्यातत्कार्येभ्यो विमुक्तिम् । **मोक्षमन्नमथो मनः** । व्याख्यातम् । अभ्यासो वाक्यत्रयेऽप्युपनिषत्समाप्त्यर्थः । श्रीविद्यामोक्षाणां जनिफलत्वात्पृथग्वाक्यत्रयेणाभ्यासस्तेन प्रार्थना श्रीविद्यामोक्षाणामन्नमनसोः प्रार्थनम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतिरथर्ववेदान्तर्गताथर्वशिरउपनिषद्दीपिका समाप्ता ॥ २ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# × अमृतनादोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

**शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।**
**परमं ब्रह्मविद्याया उल्काविन्यथोत्सृजेत् ॥ १ ॥**

अमृतस्य यथा बिन्दुर्मृत्युं हरति देहिनाम् ।
अल्पग्रन्थोऽप्यष्टखण्डोऽमृतबिन्दु(नाद)स्तथा ह्ययम् ॥

योगसाधनस्य प्रथमां पीठिकामाह—**शास्त्राणीति** । **मेधावीति** । अध्ययनेन तर्काभ्यासेन मेधाऽपि कर्तव्येत्यर्थः । यच्छ्रुतिः—' पण्डितो मेधावी ' इति ' बाल्यं च पाण्डित्यं च निर्विद्य ' इति च । स्मृतिरपि—"यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति ब्रह्मविद्यायाः परमं कारणं जीवितमिति शेषः । उल्कावच्चञ्चलं विद्युदुन्मिषिततुल्यं जीवितमन्यथा प्रकारान्तरेण कामव्यसनादिना नोत्सृजेन्न क्षिपेत् । शास्त्राण्यधीत्य तदुक्तार्थसाक्षात्काराय प्रयतेत प्रयत्नश्च वक्ष्यमाणो योगाभ्यासः । यद्वा ब्रह्मविद्यायाः परमं कारणमध्ययनमन्यथा ज्ञानमप्राप्य नोत्सृजेत् । उल्कावद्दीपिकावत् । यथा दीपिका तमसि मार्गे गृहीता गृहमप्राप्य नोत्सृज्यते तद्वच्छास्त्रं साक्षात्कारपर्यन्तं नोत्सृजेदित्यर्थः ॥ १ ॥

**ओंकारं रथमारुह्य विष्णुं कृत्वा तु सारथिम् ।**
**ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥**

ओंकारं रथं गतिहेतुत्वाद्रथ ओंकारः । विष्णुमुकारदेवतां सारथिं कृत्वा स ऊर्ध्वगतौ प्रेरकस्तेन सारथ्यं संभवति । अकारदेवता यो ब्रह्मा तस्य यो लोको ब्रह्मसदनं तस्य पदं मार्गमन्विच्छति तच्छीलः । मकारदेवता यो रुद्रस्तदाराधने तत्परः परायणः ॥ २ ॥

**तावद्रथेन गन्तव्यं यावद्रथपथि स्थितः ।**
**स्थित्वा रथपथस्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥**

---

× दीपिकाद्यश्लोकान्नारायणमतेनेयमुपनिषदमृतबिन्द्वाख्या दृश्यते परं च शंकरानन्दमतेनेयममृतनादाख्याऽस्ति । शंकरमतमेवोचितमिति सुधीभिर्विचारणीयम् ( ! ) ।

---

१ ग. करणं । २ ख. °न्न निक्षि° ।

**तावदिति** । रथेनोंकारेण तावद्गन्तव्यं यावद्रथपथि गन्तव्यमार्गे स्थितः । समासान्तविधेरनित्यत्वादप्रत्ययो न कृतः । **स्थित्वेति** । यदा तदेत्यध्याहारः । यदा रथस्य पन्था रथपथः । समासान्तोऽकारः । तस्य स्थानं स्थितिर्निवृत्तिर्भवति । अत्र तिष्ठतिर्निवृत्तौ वर्तते । तदा स्थित्वा कियत्कालं विलम्ब्य रथमुत्सृज्य त्यक्त्वा गच्छति साध्यसाधनभावरहितं स्थानं प्रविशतीत्यर्थः । "साकारोपासनापरिवासितचेतसो यतयो ब्रह्मपदवीमनुप्राप्यापवृज्यन्ते" इति श्रुतेः ॥ ३ ॥

**मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् ।**
**अस्वरेण मकारेण पदं सूक्ष्मं च गच्छति ॥ ४ ॥**

**मात्रेति** । मात्रा अकारादयस्तासां लिङ्गं जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग इत्यादि तस्य पदं स्थानम् । जागरादि त्यक्त्वा शब्देन स्वरेण व्यञ्जनेन च मकारेण वर्जितं रहितम् । अस्वरेण स्वरातिरिक्तेन मकारेणान्तरङ्गसाधनेन सूक्ष्मं पदं तुरीयाख्यं गच्छति ॥ ४ ॥

**शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम् ।**
**चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ ५ ॥**

**शब्दादीति** । पञ्च विषयास्तदुपलक्षितानीन्द्रियाणि चातिचञ्चलं सर्वेन्द्रियविषयव्यापि मनश्चाऽऽत्मनः सूर्यस्थानीयस्य रश्मय इति चिन्तनमात्मैक्यापादनमिति यावत् । स प्रत्याहार इत्यर्थः । तदुक्तं **याज्ञवल्क्येन**—

"यद्यत्पश्यति तत्सर्वं पश्येदात्मानमात्मनि ।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः" इति ॥ ५ ॥

इति प्रथमः खण्डः ॥ १ ॥

---

**प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।**
**तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥**

**प्रत्याहार इति** । यमनियमासनानि तु बाह्याङ्गत्वान्न गणितानि । पश्चात्त्वासनानि वक्ष्यन्ते । **यमनियमौ तु**—

"अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥
शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं सुरार्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ।
एते यमाः सनियमा उभयोर्द्वादश स्मृताः" ॥

---

१ क. रश्मि प्रत्या° । २ क. धारणम् ।

इति द्रष्टव्यौ । तत्र नियतकालानपेक्षाः शुद्धिहेतवो यमास्तदपेक्षास्तु नियमा इति विवेकः । तर्को मननम् । समाधिर्निदिध्यासनम् ॥ ६ ॥

**यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः ।**
**तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ७ ॥**

प्राणायाम उद्दिष्टस्तस्य प्रयोजनमाह—**यथेति** ॥ ७ ॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।**
**किल्बिषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत् ॥ ८ ॥**

'प्राणायामैर्दहेत्पापम्' इति श्रुतेस्तदेवाऽऽह—**प्राणायामैरिति** । दोषा रागद्वेषमोहाः । रुचिरं मनोहरं गुरूपदिष्टं रूपं चिन्तयेद्ध्यायेदनेन ध्यानमुक्तम् । अनेन प्राणायामप्रत्याहारधारणाध्यानानां क्रमो दर्शितः ॥ ८ ॥

**रुचिरे रेचकं चैव वायोराकर्षणं तथा ।**
**प्राणायामास्त्रयः प्रोक्ता रेचकपूरककुम्भकाः ॥ ९ ॥**

**रुचिर इति** । रुचिरे चिन्त्यमाने सति रेचकं कुर्यात् । चकारात्कुम्भकम् । तथा वायोराकर्षणमन्तर्णयनं कुर्यात् । किमिति त्रयं कुर्यादत आह—**प्राणायामा इति** । प्राणानामायामा निरोधास्त्रयस्त्रिविधाः ॥ ९ ॥

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १० ॥**

प्राणायाममन्त्रमाह—**सव्याहृतिमिति** । व्याहृतिशिरसोरपि सप्रणवत्वं बोद्धव्यम् । **तदुक्तम्**—"एता एतां सहैतेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते" इति ॥

एताः सप्त व्याहृतीरेतां गायत्रीमेतेन शिरसैभिः प्रणवैः शक्तौ सत्यां त्रिःपाठेन कुम्भकः सकृदितरौ । अशक्तौ तु सकृत्पाठेन त्रयोऽपि ॥ १० ॥

इति द्वितीयः खण्डः ॥ २ ॥

---

**उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ।**
**शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥**

प्रत्येकं रेचकादीनां लक्षणमाह—**उत्क्षिप्येति** वायुमुत्क्षिप्योर्ध्वं नीत्वाऽऽकाशमुदरं शून्यं कृत्वा निरात्मकं प्राणरहितम् । "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु ।

---

१ क. °ति स्मृते° । २ ख. °त्पउने त्र° ।

प्रयत्ने चापि " इत्यपिशब्दात्प्राणे चेति विश्वाभिधानादात्मा प्राणः । शून्यत्वेन योजयेत्स रेचक इत्यर्थः ॥ ११ ॥

**नोच्छ्वसेन्नानुच्छ्वसेन्नैव गात्राणि च न चालयेत् ।**
**एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥**

**अनुच्छ्वसेदिति** । नञास्तिङा समासः । उच्छ्वासानुच्छ्वासौ द्वौ न कुर्यात् । किं तु निगरणलक्षणमनुच्छ्वासमेव कुर्यात् । एवं ग्रहीतव्य इत्युक्तत्वात् ॥ १२ ॥

**वक्त्रेणोत्पलनालेन वायुं कृत्वा निराश्रयम् ।**
**एवं वायुर्ग्रहीतव्यः कुम्भकस्येति लक्षणम् ॥ १३ ॥**

**वक्त्रेणेति** । उत्पलस्य नालमिव वायुसंचारहेतुत्वात्तादृशेन वक्त्रेण वायुं निराश्रयं बहिर्निर्गतं कृत्वा यदवस्थानं स कुम्भकः । प्रकारान्तरेण कुम्भकः । **एवमिति** । यथा बहिष्कृतस्तथा वक्त्रेण ग्रहीतव्योऽन्तर्णेयो नीत्वा रोद्धव्य इति द्विविधं कुम्भकस्य लक्षणम् ।

**तदुक्तम्**—"पूरणादी रेचनान्तः प्राणायामस्तु वैदिकः ।
रेचनादिः पूरणान्तः प्राणायामस्तु तान्त्रिकः" इति ॥ १३ ॥

**अन्धवत्पश्य रूपाणि शृणु शब्दमकर्णवत् ।**
**काष्ठवत्पश्य ते देहं प्रशान्तस्येति लक्षणम् ॥ १४ ॥**

प्रत्याहारप्राणायामयोर्लक्षणे उक्त्वा धारणां लक्षयितुं तदधिकारिणं शान्तं लक्षयति—**अन्धवदिति** । पश्य हे शिष्येति श्रुतेर्वचः । ते तव स्वीयं देहं काष्ठवत्पश्य निरभिमानितया । प्रशान्तस्यान्यस्यापीदमेव लक्षणम् । अन्धस्य यथा रूपाद्विकारो न भवति तद्वद्यस्य रूपदर्शनेऽप्यविक्रियं मनः काष्ठवद्देहेऽप्यास्थारहितः प्रशान्त इत्यर्थः ॥ १४ ॥

**मनः संकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् ।**
**धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ १५ ॥**

**मन इति** । मनो मानसं संकल्पकं संकल्पकर्तृ ध्यात्वा विचिन्त्याऽऽत्मनि प्रकाशरूपे संक्षिप्य निर्विषयं कृत्वा धारयित्वा बुद्धिप्रदानेन मनसाऽऽत्मानं गृहीत्वा यत्तिष्ठति सा धारणोक्ता ॥ १५ ॥

**आगमस्याविरोधेन ऊहनं तर्क उच्यते ।**
**यं लब्ध्वाऽप्यवमन्येत स समाधिः प्रकीर्तितः ॥ १६ ॥**

चतुर्णां लक्षणमुक्त्वा शिष्टयोस्तर्कसमाध्योराह—**आगमस्येति** । आगमविरोधेनो-

---

१ ख. °णि चा° ।

हने बाह्यताप्रसङ्गात् । यं लब्ध्वा प्राप्यापीष्टमप्यवमन्येतावजानीयात् । पदार्थेऽपिशब्दादिष्टमिति लभ्यते । यं प्राप्य सर्वमन्यन्न रोचते स समाधिरित्यर्थः । " यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः " इति **गीतोक्तेः** ॥ १६ ॥

इति तृतीयः खण्डः ॥ ३ ॥

---

**भूमिभागे समे रम्ये सर्वदोषविवर्जिते ।**
**कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मण्डलम् ॥ १७ ॥**

**भूमिभाग इति** । मनोमयीमात्मचिन्तनरूपां चक्रमन्त्रादिना दिग्बन्धादिरूपां वा । मण्डलं मण्डलब्राह्मणमादित्यदेवत्यं ' यदेतन्मण्डलं तपति ' इत्यादिरूपम् ॥ १७ ॥

**पद्मकं स्वस्तिकं वाऽपि भद्रासनमथापि वा ।**
**बद्ध्वा योगासनं सम्यगुत्तराभिमुखस्थितः ॥ १८ ॥**

**पद्मकमिति** । पद्मकादीनां लक्षणानि **योगयाज्ञवल्क्य** उक्तानि—

" ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ॥
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते " ॥

**तत्रैव** प्रकारान्तरेण च स्वस्तिकमुक्तम्—

" सीवन्यामात्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरम् ॥
एतच्च स्वस्तिकं प्रोक्तं सर्वपापप्रणाशनम् " इति ।
" गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् " ॥

योगासनं सिद्धासनं तदुक्तं **हठप्रदीपिकायाम्**—

" योनिद्वारकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे-
न्मेढ्रे पादमथैकमेव हृदये धृत्वा समं विग्रहम् ॥
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन्भ्रुवोरन्तरं
चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते " ॥

---

१ ख. °चक्ष्यते ।

मतान्तरे च—

" मेढ्रादुपरि विन्यस्य सव्यगुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य सिद्धासनमिदं भवेत् ॥
एतत्सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
गुप्तासनं वदन्त्येके प्राहुर्मुक्तासनं परम् ॥
यमेष्विव मिताहारमहिंसां नियमेष्विव ।
मुख्यं सर्वासनेष्वेवं सिद्धाः सिद्धासनं विदुः ॥
चतुरशीतिपीठेषु सिद्धमेव सदाऽभ्यसेत् ।
द्विसप्ततिसहस्रेषु सुषुम्नामिव नाडिषु " इति ॥

योगार्थमासनमिति वा । उत्तरेति । योगस्योत्तरमार्गप्रदत्वात् ॥ १८ ॥

**नासिकापुटमङ्गुल्या पिधायैकेन मारुतम् ॥**
**आकृष्य धारयेदग्निं शब्दमेवाभिचिन्तयेत् ॥ १९ ॥**

नासिकेति । एकं नासिकापुटमङ्गुल्या पिधायैकेन पार्श्वेन मारुतं वायुमाकृष्य धारयेदन्तः स्तम्भयेत् । अग्निं तेजोमयमर्थप्रकाशकं च शब्दमेवाभिचिन्तयेद्ध्यायेत्प्रणवमभ्यसेत् ॥ १९ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

---

**ओमित्येकाक्षरं ब्रह्म ओमित्यैकेन रेचयेत् ॥**
**दिव्यमन्त्रेण बहुशः कुर्यादात्ममलच्युतिम् ॥ २० ॥**

कं शब्दमित्यपेक्षायामाह—ओमित्येकाक्षरमिति । ओमित्येतेनैव मन्त्रेणैकेन पूरणातिरिक्तेन पार्श्वेन रेचयेद्वायुम् ।

तदुक्तम्—" बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति पुनः सूर्येण रेचयेत् " इति ॥

दिव्यमन्त्रेण प्रणवेनाऽऽत्ममलच्युतिं शरीरमलनाशं नाडीशुद्धिम् । प्राणायामैर्नाडीमलाः शुष्यन्ति ततस्तासु वायुप्रचारो भवति । आत्ममलः पापं तस्य च्युतिं नाशमिति वा ।

यदुक्तम्—" नित्यमेवं प्रकुर्वीत प्राणायामांस्तु षोडश ।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः " इति ॥ २० ॥

**पश्चाद्ध्यायेत पूर्वोक्तं क्रमशो मन्त्र निर्दिशेत् ॥**
**स्थूलातिस्थूलमात्रायां नातिमूर्ध्वमतिक्रमः ॥ २१ ॥**

पश्चात्प्राणायामैः पापं दग्ध्वा ध्यायेच्चिन्तयेत् । पूर्वोक्तं शब्दमेवाभिचिन्तयेदित्युक्तम् । क्रमशोऽनुक्रमेणाकारोकारमकारार्धमात्रा लोकवेदवदौ(द)ग्न्यादिसहिता( ? )घोषिण्यादिमात्राक्रमसहिताश्च ध्यायेन्मन्त्र मन्त्रं निर्दिशेदुच्चरेत् । मन्त्रेत्यविभक्तिको निर्देशः । **स्थूलेति** । स्थूला मात्राऽशीतिप्रणवावृत्तिपर्यन्तधारणम् ।

**तदुक्तम्**—" प्रातर्मध्यंदिने सायमर्धमात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् " ॥ इति ॥

अतिस्थूला ततोऽप्यधिकं धारणम् । एवं स्थूलायां मात्रायामतिस्थूलायां च मात्रायां नातिमतिशयमूर्ध्वं नयेत् । मात्रास्वतिशयं न कुर्यादित्यर्थः । कस्मान्न कुर्यात्प्रत्युतातिशये शीघ्रं सिद्धिर्भवतीत्यत आह । **अतिक्रम इति** । एवं हि वायोरतिक्रमो व्यतिक्रमः स्यात् । व्यतिक्रमे च दोष उक्तः—

" हिक्का श्वासश्च कासश्च शिरःकर्णादिवेदनाः ।
भवन्ति विविधा दोषाः पवनस्य व्यतिक्रमात् " ॥ इति ॥ २१ ॥

**तिर्यगूर्ध्वमधो दृष्टिं विनिर्धार्य महामतिः ।**
**स्थिरः स्थायी विनिष्कम्पं तदा योगं समभ्यसेत् ॥ २२ ॥**

**तिर्यगिति** । तिर्यगग्रे धावन्तीमूर्ध्वमाकाशगामिनीमधो वा चरणन्यस्तां दृष्टिं नेत्रकान्तिं विनिर्धार्य कृत्वा महामतिः स्थूललक्षः स्थिरश्चित्तेन स्थायी दृढासनः । दृष्टेस्तिर्यक्त्वमुक्तम्—

"अन्तर्लक्षं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा हि शांभवी मुद्रा सर्वतन्त्रेषु गोपिता" ॥ इति ॥

ऊर्ध्वत्वमप्युक्तम्—"भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी" ॥ इति ॥
अधस्त्वमप्युक्तम्—"दृष्ट्या निश्चलतारया बहिरधः पश्यन्" ॥ इति ॥

विनिष्कम्पं विशेषेण निष्कम्पं योगमुत्तमं योगं तदाऽभ्यसेत् । निष्कम्पो ह्युत्तमो योगः सकम्पो मध्यमः सस्वेदः कनीयान् ।

**तदुक्तम्**—"कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे ।
उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं मुहुः" ॥ इति ॥

कम्पान्निष्क्रान्तोऽग्रे गतो निष्कम्प उत्तमो विशेषेण निष्कम्पोऽत्युत्तमस्तं समभ्यसेदित्यर्थः ॥ २२ ॥

**ताला मात्रा तथा योगो धारणा योजनं तथा ।**
**द्वादशमात्रो योगस्तु कालतो नियतः स्मृतः ॥ २३ ॥**

१ ग. °तोऽप्यधिकधा° । २ ख. °ष्कम्पस्तदा । ३ ग. °र्निमिषो ।

**तालेति** । अयं पदार्थो योगशास्त्रे कालतः कालेन नियत एकरूपः स्मृतः । कः पदार्थः । एका ताला वायोः कीलानां बहिःस्थस्य मध्यप्रवेशो मध्यस्थस्य च बहिरनिर्गमनं सा नियतकाला भवति। यावत्काला पूर्वदिने तावत्कालैव परदिन इति। तथा मात्रा नियतकाला भवति। षोडश पूरणे चेच्चतुःषष्टिः कुम्भने द्वात्रिंशद्रेचन इति। तथा योगः समाधिः। सोऽपि नियतकालोऽन्यथा कल्पपर्यन्तं भूविवरे समाधिमग्नस्य विदेहकैवल्याभावप्रसङ्गः। धारणा मनःसंकल्पकमित्यादिलक्षणा । साऽपि " धारयेत्पञ्चघटिका भवरोगैः प्रमुच्यते " इत्यादौ नियतकालैवोक्ता । योजनं संयोजनं प्राणापानयोः । यथा पूर्वदिने चेत्षोडश प्राणायामास्तर्हि परदिने ततो न्यूना अधिका वा न भवन्ति । द्वादशमात्रो योगो नादबिन्दावुक्तः सोऽपि कालतो नियतः स्मृतः । परस्परतुल्यकाला एव घोषिण्यादयो ध्येया इत्यर्थः । अथवैष तालादिः फलेऽपि कालतो नियतः स्मृतः । नियतकालमेव फलं ददाति परिच्छिन्नं न तु कालापरिच्छिन्नं फलं ददातीत्यर्थः ॥२३॥

**अघोषमव्यञ्जनमस्वरं च अकण्ठताल्वोष्ठमनासिकं च ।**
**अरेफजातमुभयोष्ठवर्जितं यदक्षरं न क्षरते कदाचित् ॥ २४ ॥**

तर्हि कालापरिच्छिन्नं फलं किमत आह—**अघोषमिति** । यदक्षरं तदपरिच्छिन्नफलमित्यर्थः। तत्किमकारादिष्वन्यतमं नेत्याह—**अघोषमिति** । यदक्षरं वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषास्ततोऽन्ये घोषवन्तस्तन्न भवति। तर्हि हल्व्यञ्जनं तद्रूपं नेत्याह—**अव्यञ्जनमिति**। तर्ह्यचः स्वरास्तद्रूपं नेत्याह—**अस्वरमिति** । न स्वरत्वं यस्य तदस्वरम्। तर्ह्यकुहविसर्जनीयानां कण्ठ इचुयशानां तालूपूपध्मानीयानामोष्ठौ तद्रूपं नेत्याह—**अकण्ठताल्वोष्ठमिति** । अस्वरं चाकण्ठेत्यत्राविवक्षितत्वादसंधिः । संधौ न्यूनाक्षरं छन्दः स्यात्। तर्हि नासिकाऽनुस्वारस्य तद्रूपं नेत्याह। **अनासिकं चेति**। तर्हि ऋटुरषाणां मूर्धा तदन्तर्भूतं नेत्याह—**अरेफेति**। रेफजातं रेफवर्गो मूर्धन्यस्तन्न भवतीत्यर्थः। तर्हि लृतुलसानां दन्तास्तद्रूपं नेत्याह—**उभयोष्ठवर्जितमिति** । उभावोष्ठावावरकौ यस्योभयोष्ठो दन्तस्तेन तदुच्चार्यो वर्णस्तन्न भवतीत्यर्थः। यद्यप्यव्यञ्जनमस्वरमिति वर्णमात्रं प्रतिषिद्धमेतावन्तो हि वर्णा यद्व्यञ्जनानि स्वराश्च तथाऽपि सामान्यतो विशेषतश्च प्रतिषेधार्थमघोषाद्युपादानम् । तर्हि किं तदक्षरं तस्य लक्षणं वक्तव्यमत आह—**न क्षरते कदाचिदिति** । नादान्तस्थं शान्तमित्यर्थः। यत्प्रतिपादनादमृतबिन्दुरिति ग्रन्थाभिधा । अत्रेत्थं योगप्रक्रिया। यमनियमाभ्यां क्षपितबाह्यदोषो निर्वाते तीर्थादिदेशे सिद्धक्षेत्रे वा सिद्धस्वस्तिकपद्मभद्रसिंहाद्यन्यतममासनमालम्ब्य नियतभुक्

"धौती बस्तिश्च नेतिश्च त्राटकं नौलिका तथा ।
कपालभातिश्चैतानि षट्कर्माणि प्रचक्षते" ॥

इत्युक्तैः कर्मभिः प्राणसंयमैरेव वा शुद्धनाडीगणः प्राणायामाभ्यासेन सिद्धकेवल-

कुम्भकोऽङ्गुष्ठादिमूर्धान्तं मर्मप्रदेशेषु प्राणमनोधारणाभिः प्रत्याहृतेन्द्रियगणः पृथिव्यादिपञ्चधारणाभिः शुद्धभूतभौतिकतत्त्वः सगुणनिर्गुणध्यानैः क्षपिततमोमल उन्मनीभावलक्षणं समाधिमारुरुक्षुः षट्चक्रभेदनेन द्वादशान्तं ब्रह्मरन्ध्रमातिष्ठेत् । तत्प्रकारस्तु मूलबन्धौड्डीयानबन्धजालंधरबन्धैर्महाबन्धमहावेधशक्तिचालनैश्चापानस्थमपानवायुमूर्ध्वमाकुञ्च्य तेन मूलाधारगतत्रिकोणस्थमग्निं प्रज्वाल्य तेन कन्दोत्थां(न्दस्थां) कुण्डलीं सर्पाकारां पश्चिमदेहभागेन पूर्वदेहभागमष्टधाऽऽवेष्ट्य मुखेन पुच्छं गृहीत्वा मुखं च सुषुम्नामुखे प्रवेश्य सुप्तां प्रताप्य तापनेन प्रबोध्य बोधनेन सुषुम्नामुखं विरलीकृत्य प्रसार्य तत्र साग्निशिखं वायुं मनसा प्रवेश्य वंशादेशस्थवंशाकृतिसुषुम्नायाः पर्वस्थानीयानि चक्राण्योंकारमुच्चरन्मनसा विष्णुं चिन्तयन्सुषुम्नां वाय्वग्निसहायेन भिन्दानो मूर्ध्नि सहस्रदलमाक्रामेदिति । अयं क्रम **आत्मारामेणोक्तः** ।

यथा—"आसनं कुम्भकं चित्रं मुद्राख्यं करणं तथा ।
अथ नादानुसंधानमभ्यासानुक्रमो हठे" ॥ इति ॥

अपानाकुञ्चनं पार्ष्ण्या गुदनिरोधेन भवति । **हंसोपनिषदि** च—"तं विदित्वा न मृत्युमेति गुदमवष्टभ्याऽऽधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं च गत्वाऽनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याऽऽज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायंस्त्रिन्मात्रोऽहमित्येवं सर्वदा ध्यायन्" इति । न च प्राणापानयोर्युगपन्निरोधे शूलहिक्काध्मानादिदोषप्रसङ्ग इति वाच्यम् । गुरूपदिष्टबन्धत्रयस्य युगपदनुष्ठितस्य महिम्ना पिहितमुखस्य जलपूर्णघटस्येव दोषानवकाशात् । अस्य च योगस्य फलमक्षरात्मगतिरूपं स्वरव्यञ्जनवर्जितमित्युपक्रम्याघोषमित्यादिनोपसंहृतम् । **षट्कर्माणि** यथा—

"चतुरङ्गुलविस्तारं सिक्तं वस्त्रं शनैर्ग्रसेत् ।
ततः प्रत्याहरेच्चैतत्क्षालनं धौतिकर्म तत् ॥
नाभिदघ्ने जले पायुन्यस्तनालोत्कटासनः ।
आधाराकुञ्चनं कुर्यात्क्षालनं बस्तिकर्म तत् ॥
सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत् ।
मुखान्निर्गमयेच्चैषा नेतिः सिद्धैर्निगद्यते ॥
ईक्षेत निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः ।
अश्रुसंपातपर्यन्तमाचार्यैस्त्राटकं मतम् ॥
अमन्दावर्तवेगेन तुन्दं सव्यापसव्यतः ।
नतांसो भ्रामयेदेषा नौलिः सिद्धैः प्रचक्ष्यते ॥

१ ख. °वेध्य मु° । २ ख. ष्ण्यर्ऽङ्गुष्ठानि° । ३ ख. परिकृत्य । ४ ग. °ज्ञानम्° ।

भस्त्रेव लोहकारस्य रेचपूरौ ससंभ्रमौ ।
कपालभाती विख्याता कफदोषविशोषणी" ॥

बन्धत्रयं क्षुरिकायां व्याख्यातम् । महाबन्धो यथा—

"पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत् ॥
वामोरूपरि संस्थाप्य दक्षिणं चरणं तथा ।
पूरयित्वा ततो वायुं हृदये चुबुकं दृढम् ॥
निभृत्य योनिमाकुञ्च्य मनो मध्ये नियोजयेत् ।
धारयित्वा यथाशक्ति रेचयेदनिलं शनैः ॥
सव्याङ्गे च समभ्यस्य दक्षाङ्गे पुनरभ्यसेत् ।
मतमत्र तु केषांचित्कण्ठबन्धं विवर्जयेत् ॥
राजदन्तस्थजिह्वायां बन्धः शस्तो भवेदिति ।
अयं खलु महाबन्धो महासिद्धिप्रदायकः ॥
कालपाशमहाबन्धविमोचनविचक्षणः ।
अयं च सर्वनाडीनामूर्ध्वगतिनिरोधकः" ॥ इति ॥

योनिर्गोरक्षेणोक्ता—

" आधाराख्ये गुदस्थाने पङ्कजं तु चतुर्दलम् ।
तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता " ॥ इति ॥

तस्या आकुञ्चनं पार्ष्ण्या गुदमापीड्योर्ध्वोद्वातेन भवति । महावेधो यथा—

" महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः ।
वायूनां गतिमाकृष्य निभृतं कण्ठमुद्रया ॥
न्यस्तहस्तयुगो भूमौ स्फिचौ संताडयेच्छनैः ।
पुटद्वयं समाकृष्य वायुः स्फुरति सत्वरम् ॥
सोमसूर्याग्निसंबन्धो जायते चामृताय वै ।
मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत् ।
महावेधोऽयमभ्यासान्महासिद्धिप्रदायकः " ॥ इति ॥

शक्तिचालनं यथा—

" पुच्छं प्रगृह्य भुजंगीं सुप्तामुद्बोधयेद्बुधः ।
निद्रां विहाय सा ऋज्वी ऊर्ध्वमुत्तिष्ठते हठात् " ॥ इति ॥

अन्यत्रापि—

" संतप्तो वह्निना तत्र वायुना च प्रचालितः ।
प्रसार्य फणभृद्भोगं प्रबोधं याति तत्तदा " ॥ इति ॥ २४ ॥

इति पञ्चमः खण्डः ॥ ५ ॥

**येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति ॥**
**अतः समभ्यसेन्नित्यं सन्मार्गगमनाय वै ॥ २५ ॥**

ननु प्राणस्तत्र प्रदेशे केनोपायेन नेतव्य इत्यत आह—**येनेति** । असौ योगी येन मनोलक्षणेन करणेन मार्गं गन्तव्यं पश्यते प्रविश्य गन्तव्यतया निश्चिनोति प्राणस्तेनैव मनसा सह तत्र याति । मनसा तत्तत्स्थानध्यानमेव तत्र तत्र मूलाधारादौ प्राणप्रवेश उपाय इत्यर्थः । यतोऽयं प्राणप्रवेश उपाय उपदिष्टोऽतो नित्यं सन्मार्गगमनाय सुषुम्नामार्गप्रवेशाय समभ्यसेन्मनोधारणादि कुर्यात् । यद्यपि प्राणापानगती रुद्ध्वाऽवस्थाने पूरितोदरस्यापानेनैकीभूतस्य च प्राणस्य निरवकाशतयाऽर्थान्मध्यमार्ग एव विनाऽपि मनसा प्रवेशो भवति तथाऽपि सर्वेन्द्रियसंघातात्मकेन मनसा विनेन्द्रियाणां मनसश्च बहिर्व्यापारो न विरमेत्तथा च सति हठयोग एव स्यान्न राजयोग इति समनस्कप्राणप्रवेश उपदिष्टः ।

तदुक्तम्—

" मारुताभ्यसनं सर्वं मनोयुक्तं समाचरेत् ।
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा " ॥ इति ।

तथा—" राजयोगं विना मुद्रा विचित्राऽपि न राजते " ॥ इति ।

राजा मन एव तेन तद्योगं विनेत्यर्थः ॥ २५ ॥

**हृद्वारं वायुद्वारं च ऊर्ध्वद्वारमतः परम् ॥**
**मोक्षद्वारं बिलं चैव सुषिरं मण्डलं विदुः ॥ २६ ॥**

ननु येन मनो याति तेनैव प्राण इत्यवगतं तयोर्मार्गः क्वास्तीत्यत आह—**हृदिति** । हृदो मनसो वायोश्च प्राणस्य द्वारं प्रवेशमार्गः सुषुम्नाख्यमूर्ध्वद्वारं वर्तते कन्दादिमूर्धान्तं पृष्ठवंशगामि सुषुम्नाद्वारमस्तीत्यर्थः । तत ऊर्ध्वं किमस्तीत्यत आह । **अतः परमिति** । अतोऽस्माद्द्वारात्परं मोक्षद्वारबिलं शिरो भित्त्वा निर्गतमस्ति मोक्षस्य द्वारमुपायो ब्रह्मलोकस्तस्य बिलं तद्गमनाय विवरम् । ननु ब्रह्मलोकस्य क्रममोक्षस्थानत्वात्सूर्यमण्डले व्यवधायके सति कथं तत्र गतिरत आह—**सुषिरं मण्डलमिति** । सूर्यमण्डलस्य सच्छिद्रता

" द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
अध्यात्मयोगयुक्तात्मा रणे चाभिमुखो हतः " ॥

इत्यादिस्मृतेश्चावसीयते ॥ २६ ॥

**भयं क्रोधमथाऽऽलस्यमतिस्वप्नातिजागरम् ॥**
**अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २७ ॥**

---

१ ग. °न्तं वं° । २ ग. °निर्गत° ।

**अनेन विधिना सम्यङ्नित्यमभ्यसतः[1] क्रमात् ॥**
**स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २८ ॥**
**चतुर्भिः पश्यते देवान्पञ्चभिस्तुल्यविक्रमः ॥**
**इच्छयाऽऽप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ २९ ॥**

योगवर्जनीयान्याह—भयमिति । तुल्यविक्रमो देवैरेवेच्छया कैवल्यं खेचर्युक्तं क्षुरिकायां दर्शितम् ॥ २७ ॥ २८ ॥ २९ ॥

इति षष्ठः खण्डः ॥ ६ ॥

---

**पार्थिवः पञ्चमात्राणि चतुर्मात्राणि वारुणः ॥**
**आग्नेयस्तु त्रिमात्राणि द्विमात्रो[2] वायवस्तथा ॥ ३० ॥**
**एकमात्रस्तथाऽऽकाशो ह्यर्धमात्रं तु चिन्तयेत् ॥**
**सिद्धिं कृत्वा तु मनसा चिन्तयेदात्मनाऽऽत्मनि ॥ ३१ ॥**

पञ्चभूतधारणासु तदतीतधारणासु च कीदृशं प्रणवस्वरूपं ध्येयमिति पृच्छन्तं प्रति क्रमेणोत्तरमाह—**पार्थिव इत्यादि** । पार्थिवः पृथिवीतत्त्वधारणायामाश्रितश्चेत्प्रणवो भवति तदा तस्य पञ्चमात्राणि स्वरूपाणि[3] ध्येयानि । वारुणो जलतत्त्वधारणायामुपास्यत्वेनाऽऽश्रितश्चेदित्यर्थः । गन्धाद्येकैकगुणभासान्मात्रोह्रासो द्रष्टव्यः । **अर्धमात्रं त्विति** । तुर्व्यावृत्त्यर्थः । निरपेक्षीभूयार्धमात्रं त्वनुचिन्तयितव्यमित्यर्थः । तर्हि पूर्वेषां चिन्तनानां को विषय इत्यत आह—**सिद्धिमिति** । तत्तत्सिद्धिमभिप्रेत्य तत्तल्लोकजयाय तानि पार्थिवादीनि रूपाणि मनसा साधनेनाऽऽत्मना स्वयमात्मनि बुद्धौ चिन्तयेदित्यर्थः । यद्वाऽऽत्मनि शरीरे पादादिमूर्धपर्यन्ते तत्तद्भूतध्याने तत्तद्भूतस्थानलोकजयो भवति । भूतस्थानानि यथा—

“ भूमिरापस्तथा तेजो वायुराकाश एव च ।
एतेषु पञ्चदेवानां धारणा पञ्चधेष्यते ॥
पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ।
आ जान्वोः पायुपर्यन्तमपां स्थानं प्रकीर्त्यते ॥
आ पायोर्हृदयान्तं च वह्निस्थानं तदुच्यते ।
आ हृन्मध्याद्भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम् ॥
आ भ्रूमध्यात्तु मूर्धान्तमाकाशमिति चोच्यते ” ॥ इति ॥ ३० ॥ ३१ ॥

**त्रिंशत्पर्वाङ्गुलप्राणो यत्र प्राणः प्रतिष्ठितः ॥**
**एष प्राण इति ख्यातो बाह्यप्राणः स गोचरः ॥ ३२ ॥**

---

१ ख. °भ्यस्यतः । २ क. °त्रो मारुतस्त° । ३ ग. रूपाणि ।

प्राणायाम एक आयम्यत्वेन प्राण उक्तोऽग्निहोत्रादावुपास्यत्वेन चैक उक्तस्तयोः को भेद इत्यत आह—त्रिंशदिति । त्रिंशत्संख्याकानि पर्वाङ्गुलानि मानमस्य त्रिंशत्पर्वाङ्गुलः । अङ्गुलान्यनेकप्रकाराणि सन्ति तदर्थं पर्वेति विशेषणम् । तिर्यक्चतुरङ्गुलमितस्य काष्ठस्य चतुर्थांशः पर्वाङ्गुलं तदेव मुष्ट्यङ्गुलम् ।

तदुक्तम्—

" विनाऽङ्गुष्ठेन शेषाभिर्मुष्टिमङ्गुलिभिः कृतम् ।
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलं स्मृतम् " ॥

इति द्वादशाङ्गुलता । पञ्चदशाङ्गुलता चान्यत्रोक्ता सा तु मध्यमाङ्गुलिमध्यपर्वमितादिस्थूलाङ्गुलाभिप्रायेण श्वासस्य स्थूलसूक्ष्मतारतम्याभिप्रायेण चेत्यविरोधः । तथा च **याज्ञवल्क्यः**—

" शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः ।
चतुर्दशाङ्गुलं केचिद्वदन्ति मुनिसत्तमाः " इति ॥

**गोरक्षेण** तु षडधिकान्युक्तानि—

" षट्त्रिंशदङ्गुलो हंसः प्रयाणं कुरुते बहिः ।
वामदक्षिणमार्गेण ततः प्राणोऽभिधीयते " इति ॥

वामे पञ्चदश दक्षिणे च तथेति मिलित्वा त्रिंशदिति वा न विरोधः । अयमायम्यत्वेनोक्तः प्राणः । एष प्राणो यत्र प्रतिष्ठितो यदाधारत्वेन महिमानं गतः स प्राण इति ख्यात उपास्यत्वेन प्रसिद्धः परमात्मा । तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह—**बाह्येति** । यो बाह्यप्राणः स गोचरो विषयो दृश्य इत्यर्थः । अर्थादन्यवस्तुदृगिति स्वरूपभेदः ॥ ३२ ॥

**अशीतिः षट्शतं चैव सहस्राणि त्रयोदश ।**
**लक्षश्चैकोऽपि निःश्वासो अहोरात्रप्रमाणतः ॥ ३३ ॥**

ननु बाह्यप्राणस्य जन्मायुषि कियान्व्यापार इति पृष्टे तस्य परिगणनस्य बह्वायाससाध्यत्वादहोरात्रव्यापारपरिगणनामाह—अशीतिरिति । एकाऽशीतिः षट्शतं च त्रयोदशसहस्राणि चैको लक्षश्चाहोरात्रेणैतावान्निःश्वासोऽङ्कतोऽपि ११३६८० । अनेन मानेनाऽऽयुर्निःश्वासपरिमाणं गणनीयम् । स्मृतिविरोधस्तु भवति । तत्र हि—" एकविंशतिसहस्राणि षट्शतानि दिने दिने " इत्युक्तम् । हंसोपनिषदि च " षट्संख्ययैकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति " इति । अत्रोच्यते । नासिक्यप्राणापेक्ष्याऽन्यत्र ग्रन्थे गणनेह तु रन्ध्रान्तराणि मुखादीन्यपेक्ष्याधिकसंख्योक्तिः ।

---

१ क. ख. °शीतिष° । २ क. °रात्रे प्र° । ३ ग. °श्वासे प° ।

नासिक्ये प्राणे वहति रन्ध्रान्तरेष्वपि किंचिद्वहनं भवति तेनोक्तसंख्यासिद्धिरित्यविरोधसिद्धिः । सर्वद्वारेषु वायुसंचरणं **योगतत्त्व** उक्तम्—

" एवं सर्वेषु द्वारेषु वायुं पूरत पूरत ।
निषिद्धे तु नवद्वार उच्छ्वसन्निःश्वसंस्तथा " इति ॥

यदि तु षट्संख्ययाऽधिकानि षट्शतानीति नान्वयः किंतु गुणितानीत्यध्याहृत्य षट्संख्यया गुणितानि २१ सहस्राणि ६ शतानि चेत्यन्वयोऽधिकानीति च किंचिदधिकानीत्यशीत्या चतुःसहस्रेण चेति व्याख्याऽत्र च दश सहस्राणि लिङ्गव्यत्ययेन त्रयस्त्रीणि तेन त्रिंशत्सहस्राणीति व्याख्याऽऽश्रीयते तदा श्रुत्योर्न संख्याभेदः स्यात् ॥ ३३ ॥

**प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे ।**
**समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३४ ॥**

धारणोपयोगितया प्राणादीनां स्थानान्याह—**प्राण इति** । पञ्च प्राणा वर्तन्ते तेषां मध्ये य आद्यः प्राणः प्रथमाननकर्ता स हृदि वर्तत इत्यर्थः ॥ ३४ ॥

**व्यानः सर्वेषु चाङ्गेषु सदा व्यावृत्य तिष्ठति ।**
**अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३५ ॥**

नन्वेकः सर्वेष्वङ्गेषु कथं वर्ततेऽत उक्तम्—**व्यावृत्येति** । विशेषेणाऽऽवृत्याऽऽवरणमाच्छादनं कृत्वा व्याप्येत्यर्थः । अथ ध्यानोपयोगितया वर्णानाह—**अथेति** । ब्रूम इति शेषः । पञ्चानामेव मुख्यत्वान्न तु नागकूर्मकृकरदेवदत्तधनंजयानन्तर्भाव्य दशानामपि । **याज्ञवल्क्येन** तु दशानां स्थानानि कर्माणि चोक्तानि ॥ ३५ ॥

इति सप्तमः खण्डः ॥ ७ ॥

---

**रक्तवर्णमणिप्रख्यः प्राणो वायुः प्रकीर्तितः ।**
**अपानस्तस्य मध्ये तु इन्द्रगोपकसंनिभः ॥ ३६ ॥**

**रक्तेति** । रक्तवर्णो यो मणिस्तत्प्रख्यस्तत्प्रभः । तस्य मध्ये गुदस्य मध्ये । इन्द्रगोपः कीटविशेषो रक्तवर्णो वर्षासु प्रथमं दृश्यते ॥ ३६ ॥

**समानस्तस्य मध्ये तु गोक्षीरस्फटिकप्रभः ।**
**अपाण्डुर उदानस्तु व्यानो ह्यर्चिसमप्रभः ॥ ३७ ॥**

समानस्तस्य मध्ये नाभिदेशस्य मध्ये । अर्चिर्वह्निशिखा ॥ ३७ ॥

---

१ ख. ग. °शीत्यैकस° । २ ख. ध्यानोऽप्यर्चि° ।

यस्यैष मण्डलं भित्त्वा मारुतो याति मूर्धनि ।
यत्र तत्र म्रियेद्वाऽपि न स भूयोऽभिजायते न स
भूयोऽभिजायत इति ॥ ३८ ॥

इत्यथर्ववेदेऽमृतबिन्दू(नादो)पनिषत्समाप्ता ॥ ३ ॥

योगसाधनस्य प्रयोजनमाह—यस्येति । मण्डलं सहस्रदलमेकर्षिस्थानं यस्य साधकस्यैष मारुतो मण्डलं भित्त्वा मूर्धनि यात्यूर्ध्वस्फोटेन । स यत्र कुत्रापि मृतो मोक्षं यातीत्यर्थः । द्विरुक्तिर्निश्चयाय । इतिशब्दः समाप्त्यर्थः ॥ ३८ ॥

इत्यष्टमः खण्डः ॥ ८ ॥

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिकाऽमृतबिन्दु(नाद)के ॥

इति नारायणविरचितामृतबिन्दू(नादो)पनिषद्दीपिका समाप्ता ॥ ३ ॥

---

ॐ तत्सद्ब्रह्मणे नमः ।

# अमृतनादोपनिषत् ।

---

## शंकरानन्दविरचितदीपिकोपेता ।

---

ॐ सह नाववत्विति शान्तिः ।

**शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।**
**परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥**

व्याकरिष्येऽहममृतनादोपनिषदं शुभाम् ।
अमृतं ब्रह्म सर्वेषामर्पयन्ती पदे पदे ॥

**शास्त्रा**ण्यृगादीनि नानाशाखाभेदभिन्नानि साङ्गविद्योपविद्यान्यात्मैक्यावगतिफलानि । **अधीत्या**धिगत्य पाठतोऽर्थतश्च स्वाधीनानि कृत्वेत्यर्थः । **मेधावी** श्रुतधारणशक्तिमान् । **अभ्यस्य च पुनः पुनः** । स्वाधीनपाठार्थान्यपि संवादाय स्वगुरूणां समीपे सह श्रोतृभिः स्वशिष्याणामुपदेशार्थं वा भूयो भूय आवृत्तिं कृत्वाऽपि । चशब्दात्संशयविपर्ययनिवृत्तावपि । **परमं** निरतिशयमनुपचरितमित्यर्थः । **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यम् । **विज्ञाय** विशेषेणेदमित्थं नान्यथाऽहमेव तत्र मत्तोऽन्यदित्यादिनाऽ-

वगत्य । **उल्कावत्,** उल्काऽलातप्रदीपादिकं यथाऽपवरकान्तःस्थितं मण्यादिकमवलोकयितुं दीपिकादिकं हस्ते स्वीकरोति दृष्टे च तस्मिन्परित्यजति तद्वत् । **तान्यधीतानि** पुनः पुनरभ्यस्तानि च । अथ परब्रह्मविज्ञानानन्तरम् । **उत्सृजेत्पलालमिव धान्यार्थी** परित्यजेत् ॥ १ ॥

**ओंकाररथमारुह्य विष्णुं कृत्वाऽथ सारथिम् ।**
**ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥**

यद्यनेकशाखाध्ययने पुनः पुनरभ्यासे च न सुनिश्चितं विज्ञानं तदैवं कुर्यादित्याह । **ओंकाररथं** शब्दब्रह्मसारभूतशब्दाक्षरप्रणवात्मकपरब्रह्मरथम् । **आरुह्या**कारोकारमकारार्धमात्राफलकेषु विश्वतैजसप्राज्ञतुरीयाद्यात्मनाऽधिरोहं कृत्वा । **विष्णुं** व्यापिनं सर्वात्मकत्वाद्बोधमित्यर्थः । **कृत्वा** विधाय । **अथों**काररथारोहणानन्तरम् । **सारथिं** रथनेतारम् । इदानीं गन्तव्यविशिष्टं रथिनमाह । **ब्रह्मलोकपदान्वेषी** । ब्रह्मोक्तं तदेव लोक्यत आत्मत्वेन स्वयंप्रकाशस्वरूपमिति लोको ब्रह्मलोकः स एव पद्यते गम्यते जीवब्रह्मतादात्म्यसाक्षात्कारेणेति ब्रह्मलोकपदं तदन्वेषणं तत्प्राप्तीच्छाऽस्यास्तीति ब्रह्मलोकपदान्वेषी । **रुद्राराधनतत्परो** रुद्राः समनस्कानि ज्ञानकर्मेन्द्रियाण्येकादश तेषामाराधनं तद्वृत्तिविशेषविचारणं रुद्राराधनं तस्मिन्परस्तात्पर्यवान्रुद्राराधनतत्परः । इन्द्रियेष्वप्रमत्त इत्यर्थः ॥ २ ॥

**तावद्रथेन गन्तव्यं यावद्रथपथस्थितिः ।**
**स्थात्वा रथपथस्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥**

**तावत्,** तावत्परिमाणं तावन्तं कालं च । **रथेनों**काराख्येन । **गन्तव्यं** प्राप्तव्यम् । **याव**द्यावत्परिमाणं यावन्तं कालं च । **रथपथस्थिती** रथपथस्थितिरोंकारचिन्तननिरोधः । **स्थात्वा** स्थित्वाऽहं ब्रह्मास्मीत्यवगत्येत्यर्थः । **रथपथस्थानं** रथपथस्थान ओंकारचिन्तननिरोध आनन्दात्मनि वाङ्मनसातीते । **रथमों**कारलक्षणम् । **उत्सृज्य गच्छति** । स्पष्टम् ॥ ३ ॥

**मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् ।**
**अस्वरेण मकारेण पदं सूक्ष्मं हि गच्छति ॥ ४ ॥**

उत्सर्गप्रकारं दर्शयति । **मात्रालिङ्गपदं** मात्रा अकाराद्या लिङ्गानि स्थूलशरीरादीनि तैर्हि गम्यत आत्मा पदानि विराडादीन्यकारादिमात्रालिङ्गप्राप्याणि । मात्रालिङ्गानि च पदानि च व्याकृतात्मकान्येवं मनसि धृत्वा मात्रालिङ्गपदमित्येकवचनमाह । **त्यक्त्वा** नाहमस्मीतिभावेनोत्सृज्य । **शब्दव्यञ्जनवर्जितं** शब्दा अकाराद्याः स्वरा व्यञ्जनानि कादीनि प्रकृते मकारादीनि तैर्वर्जितं वाङ्मनसातीतमित्यर्थः ।

१ क. °कारं १° ।

**अस्वरेणा**कारादिरहितेन। **मकारेण** बिन्द्वात्मना। **पदं** पदनीयं स्वयंप्रकाशमानानन्दात्मरूपम्। **सूक्ष्मं** दुर्विज्ञेयं बुद्धेर्द्रष्टृ स्वयंप्रकाशम्। **हि** प्रसिद्धम्। आत्मत्वेन **गच्छति** प्राप्नोति ॥ ४ ॥

**शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम्।**
**चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ ५ ॥**

इदानिमत्राप्यशक्तस्योपायं योगं प्रत्याहारादिलक्षणमाह। **शब्दादिविषयाः** शब्दस्पर्शरूपरसगन्धा विशेषेण स्वावबोधवन्तं सिन्वन्ति बध्नन्तीति शब्दादिविषयाः। अत्र विषयशब्देन विषयिणः श्रोत्रादींल्लँक्षयति। अथवा शब्दादयो विषया येषां श्रोत्रादीनां ते शब्दादिविषयाः **पञ्च** श्रोत्रत्वक्चक्षुरसनघ्राणाख्याः पञ्चसंख्याक्रान्ता इन्द्रियविशेषाः। **मनश्चैवान्तः**करणमेव च। अत्रैवकारः श्रोत्रादिष्वन्तःकरणस्य स्वातन्त्र्यदर्शनार्थः। चकारः कर्मेन्द्रियसंग्रहार्थः। **अतिचञ्चलं** भृशं चपलं मर्कटवच्चपलाश्च श्रोत्रादयः सकर्मेन्द्रिया यतस्ततश्चिन्तयेद्ध्यानं कुर्यात्। **आत्मनो** विष्णोर्बुद्धिरूपस्य सारथेः। **रश्मी**निन्द्रियाश्वविधारकरज्जुरूपान्मानसान्प्रचारान्। **प्रत्याहारः,** विषयं विषयं प्रतिगच्छतामिन्द्रियाणां बहिर्मुखत्वादन्तरात्मन्याहरणं प्रत्याहारः। **स** आत्मरश्मिचिन्तनरूपः। **उच्यते** कथ्यते विद्वद्भिः ॥ ५ ॥

**प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।**
**तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥**

इदानीं योगाङ्गान्याह। **प्रत्याहारो** व्याख्यातः। **तथा** तद्वत्। **ध्यानं** विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहकरणम्। **प्राणायामोऽथ धारणा। तर्कश्चैव समाधिश्च** प्राणायामधारणातर्कसमाधीन्कण्ठत एव व्याकरिष्यति। अथशब्दोऽप्यर्थः। प्राणायामोऽप्यन्तरङ्गमित्यर्थः। चकारावनुक्तानामासनादीनामुक्तानां च प्रत्याहारादीनां समुच्चयार्थौ। एवकारः प्रत्याहारादीनां षण्णामेवान्तरङ्गाङ्गत्वार्थो न त्वासनादीनाम्। **षडङ्गः** षट्संख्याकानि प्रत्याहारादीन्यङ्गान्यवयवा योगवपुषो यस्य स षडङ्गः। **योगः** स्वाभाविकमनोवृत्तिनिरोधोऽहं ब्रह्मास्मीतिसाक्षात्कारफलः। **उच्यते** कथ्यते। विद्वद्भिः ॥ ६ ॥

**यथा पर्वतधातूनां दह्यन्ते धमता मलाः।**
**तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ७ ॥**

ध्यानस्य पुरुषार्थहेतुत्वेन स्वरूपेण च प्रसिद्धत्वात्सर्वशास्त्रेषु प्राणायामस्य पुरुषार्थहेतुत्वं स्वरूपं च वक्तुमाह। **यथा** येन प्रकारेण। **पर्वतधातूनां** सुवर्णरजतताम्रादिगिरिधातूनाम्। **दह्यन्ते** भस्मी क्रियन्ते। **धमता** धमनं कुर्वता पुरुषेण

१ ख. ॰षयान्पञ्च। २ ख. ॰णधारणात्। ३ ग. स्य च पु॰।

तदुपलक्षितेन धमनेन वा । मलास्तद्धातुव्यतिरिक्ता अवयवास्तद्धातुदूषकाः । **तथा तेन** प्रकारेण । **इन्द्रियकृता** इन्द्रियैर्मनएकादशैरनुष्ठिता इन्द्रियकृताः । अनेन कर्तृत्वमिन्द्रियाणां न त्वात्मन इति दर्शितम् । दोषाः पापानि योषिदवलोकनादीनि प्रमादकृतानि । **दह्यन्ते** । व्याख्यातम् । **प्राणनिग्रहात्** । प्राणस्य पञ्चवृत्तेर्निग्रहः स्वेच्छागतिभङ्गस्तस्मात् ॥ ७ ॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।**
**किल्बिषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत् ॥ ८ ॥**

**प्राणायामैर्**वक्ष्यमाणै**र्दहे**द्भस्मी कुर्यात् । **दोषा**निन्द्रियकृतान्पाप्मनो **धारणाभिश्च** वक्ष्यमाणाभिश्चशब्दाद्ध्यानादिनाऽपि । **किल्बिषं** प्रतिकूलसंस्काररूपं पापं रागद्वेषादिसंस्कारानित्यर्थः । इदानीमर्थाद्ध्यानशब्दार्थमाह । **किल्बिषं** व्याख्यातम् । हि प्रसिद्धमनर्थकारणम् । **क्षयं नीत्वा** विनाशं गमयित्वा । **रुचिरं चैव** रुचिकरं सर्वप्रियतममानन्दात्मानं न त्वन्यं चकारात्तदवगत्यभावेऽन्यदपि । **चिन्तयेत्,** विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं तद्विषयं कुर्यात् ॥ ८ ॥

**रुचिरं रेचकं चैव वायोराकर्षणं तथा ।**
**प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥ ९ ॥**

इदानीं प्राणायामस्वरूपं वक्तुं कुम्भकादीनां पारिभाषिकीं संज्ञामाह । रुचिरं **कुम्भकं** सति तस्मिन्रुचिरानन्दात्मावलोकनात् । **रेचकं चैव** रेचके संज्ञान्तरस्याविद्यमानत्वादेवकारमाह । रेचकमेव न त्वन्यत्संज्ञान्तरम् । अत्र चकार उक्तवक्ष्यमाणसमुच्चयार्थः । **वायोः कोष्ठ्यस्य** प्रभञ्जनस्य । इदं पदं रुचिररेचकाकर्षणैः समं संबध्यते । **आकर्षणं** पूरकम् । **तथा** तद्रुचिरादित्रयम् । **प्राणायामाः** प्राणस्यौदर्यस्य प्रभञ्जनस्याऽऽसमन्ताद्यमस्य स्वेच्छागत्युपरमस्य हेतवः प्राणायामाः । त्रयस्त्रिसंख्याकाः । **प्रोक्ताः** प्रकर्षेण कथिता विद्वद्भिः । तदुक्तान्प्रसिद्धैर्नामभिराह । **रेचपूरककुम्भकाः** । रेचकाकर्षणरुचिराः ॥ ९ ॥

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १० ॥**

इदानीं प्राणायामस्य साधारणं लक्षणमाह । **सव्याहृतिं** व्याहृतिभिः सह वर्तमानाम् । **सप्रणवां** प्रणवेन सह वर्तमानाम् । **गायत्रीं** सावित्रीं चतुर्विंशत्यक्षराम् । **शिरसा सह** शिरोमन्त्रेणाऽऽपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोमित्यनेन समम् । यथा चायं क्रमः पाठे प्रथममोंकारस्ततः सप्त व्याहृतयस्ततो गायत्री ततः शिरोमन्त्र इति । **त्रिः,** त्रिवारम् । **पठे**न्नातिद्रुतं नातिविलम्बितं स्पष्टवर्णं पिपीलिकापङ्क्तिवद्बुद्ध्यारूढमुक्तं मन्त्रजातं मन-

१ ग. लोकात् । २ घ. °ह्रस्वरव° ।

सोच्चारयेत् । तथाच सप्तव्यात्हृतीनामादौ सप्त प्रणवाः सुवरिति याजुषेण पाठेन सप्तव्यात्हृतिषु त्रयोदश गायत्र्यादौ शिरोमन्त्रादौ च प्रणवद्वयं व(क)रणीयमिति सामपाठेन चतुर्विंशतिर्गायत्र्याः सुवरोमिति याजुषेणैव पाठेन षोडश शिरोमन्त्रस्य । एवं द्विषष्टयक्षराणि संपद्यन्ते । तानि च त्रिगुणितानि षडशीत्यधिकं शतं भवन्ति । गायत्र्यादौ परमहंसानामधिकाराभावात्तावत्संख्याकैः प्रणवैः परमहंसैः प्राणायामः करणीय इत्यर्थादवगम्यते । न चास्य कर्तुमशक्यत्वादनधिकारः सत्यभ्यासे तस्यापि सुकरत्वात् । ततोऽभ्यासे यत्नः करणीय इति । **आयतप्राणो** नियमितजाठरप्रभञ्जनः । **प्राणायाम उक्तः** । **स** प्रणवव्यात्हृतिगायत्रीशिरोमन्त्रत्रिवारपाठरूपः । **उच्यते** कथ्यते विद्वद्भिः ॥ १० ॥

**उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ।**
**शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥**

इदानीं रेचकादीनां श्लोकत्रयेण लक्षणान्याह । **उत्क्षिप्या**ऽऽधारचक्रात्कुण्डलीतन्त्री[1]संघट्टनेनोर्ध्वमानीय वंशपुटेनेव **वायुं** प्राणप्रभञ्जनम् । इडापिङ्गलयोरन्यतरनासापुटेन । **आकाशं** शरीरपञ्जरबहिष्ठं नभोभागं तत्रापि **शून्यं कृत्वा** वायोरभावं विधाय । शून्यस्वरूपकथनं **निरात्मकं** निर्गतस्वभावं वायुमाकाशदेशे कारणात्मनाऽवस्थितं विधायेत्यर्थः । ततः **शून्यभावेन** निरात्मकस्वभावेन नास्त्यत्र वायुः संसारसूत्रभूत इत्यनेनेत्यर्थः । युञ्जीयाद्योगं कुर्यादेवं चिन्तयेदित्यर्थः । तथा चैवंकर्मपुरःसरमेतच्चिन्तनम् । **रेचकस्य** प्राणायामभेदस्य । इत्यनेनोक्तेन प्रकारेण **लक्षणं** गमकमुक्तमिति शेषः ॥ ११ ॥

**वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ।**
**एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥**

**वक्त्रेण** वदनेन । आस्यजलयोः संयुक्तोभयाग्रमुत्पलनालं कृत्वा तत **उत्पलनालेन** प्रसिद्धेन । **तोयं** भूम्यादि[2]देशस्थं नीरमाकर्षयेच्छरीरपञ्जरस्यान्तरानयेत् । **नरो** मनुष्यः । विनोदेन केनाचिदन्येन हेतुना वा । यथाऽयं दृष्टान्त **एवमनेन** प्रकारेण वामदक्षिणयोरन्यतरनासापुटेन श्रमवर्जं शनैः शनै**र्वायुः** प्राणप्रभञ्जनो **ग्रहीतव्यो** जठरपिठरान्तरानेतव्यः । **पूरकस्येति लक्षणं** स्पष्टम् ॥ १२ ॥

**नोच्छ्वसेन्न च निश्वसे[3]न्नैव गात्राणि चालयेत् ।**
**एवं भावं नियुञ्जीयात्कुम्भकस्येति लक्षणम् ॥ १३ ॥**

**नोच्छ्वसे**दूर्ध्वश्वासं न कुर्या**न्न च निश्वसे**न्निश्वासमपि न कुर्यात् । चकाराद्गलानयनादिकमपि न कुर्यात् । **नैव गात्राणि चालयेत्** । गात्राणि शिरःप्रभृतीनि मेरुचालनादिरूपेण न चालयेदेव । तत्करणे हि वायुप्रक्षोभेण शरीरपीडादिकं स्यादित्येव-

१ ग. °ण्डलिनीं त° । २ घ. °दिश्थनी° । ३ ख °सेन्न च गा° । ४ क. वायुं ।

कारार्थः । एवं भावमुक्तेन प्रकारेण भवनं मत्तव्यालस्य पारितः स्तम्भाष्टकेऽनेकभारलोहशृङ्खलाबद्धस्येव वायोरवस्थानमित्यर्थः । नियुञ्जीयान्नितरां योगं कुर्यात्संचिन्तनव्यापारं कुर्यादित्यर्थः । कुम्भकस्येति लक्षणं स्पष्टम् ॥ १३ ॥

**अन्धवत्पश्य रूपाणि शब्दं बधिरवच्छृणु ।**
**काष्ठवत्पश्य वै देहं प्रशान्तस्येति लक्षणम् ॥ १४ ॥**

इदानीं चशब्दसूचितस्य यमनियमवतो लक्षणमाह । **अन्धवत्**, यथाऽन्धः परेणोक्तो नीलपीतादिकमवगच्छति तद्वत् । **पश्य** हे पुत्रक संसारतापैः संतप्तः स्वयं नीलपीतादिसुखदुःखकारित्वबुद्धिशून्योऽवलोकय । **रूपाणि** शुक्लपीतादीनि । **शब्दं** षड्जादिस्वरामिश्रितम् । **बधिरवद्**यथा बधिरः स्वयं शब्दविशेषज्ञानशून्यः परेणाऽऽवेदितोऽवगच्छति तद्वत् । **शृणु** स्पष्टम् । **काष्ठवत्**, यथोपेक्षणीयं हेयं वा क्रिमिकीटादिदुष्टं काष्ठं तद्वत् । **पश्या**वलोकय । **वै** प्रसिद्धम् । **देहं** स्थूलशरीरम् । ननु किं भवता ममैवेदं करणीयत्वेनोच्यत इत्यत आह । **प्रशान्तस्य** प्रकर्षेण शमवतो यमनियमानुष्ठायिन इत्यर्थः । **इति** भवन्तं प्रत्युक्तेन प्रकारेण । **लक्षणं** गमकम् । ततो न भवत एवेत्यर्थः ॥ १४ ॥

**मनःसंकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् ।**
**धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ १५ ॥**

इदानीं धारणामाह । **मनःसंकल्पकम्** । अन्तःकरणाभिलाषसुखदुःखमानन्दात्मानमित्यर्थः । **ध्यात्वा** चिन्तयित्वा । **संक्षिप्य** प्रत्ययप्रवाहमुपसंहृत्य । **आत्मन्य**न्तःकरण आनन्दात्मनि वा । **बुद्धिमान**हं ब्रह्मास्मीति धीमान् । **धारयित्वा तथाऽऽत्मानं** यथा पूर्वं प्रत्ययप्रवाहो धारितोऽन्तःकरणेन तद्वदानन्दात्मानं विधार्य यदवस्थानं सा **धारणा परिकीर्तिता** । स्पष्टम् ॥ १९ ॥

**आगमस्याविरोधेन ऊहनं तर्क उच्यते ।**
**समं मन्येत यं लब्ध्वा स समाधिः प्रकीर्तितः ॥ १६ ॥**

इदानीं तर्कलक्षणमाह । **आगमस्य**, आसमन्ताद्गम्यते प्रमाणान्तरेणानवगतं धर्माधर्मात्मैक्यमनेनेत्यागमस्तस्या**विरोधेन** विरोधमन्तरेण । **ऊहन**मुत्प्रेक्षणं जातस्य स्तन्यपानादिनिदर्शनादिकं धर्माधर्मात्मसद्भाव आत्मनः सर्वगतत्वादावाकाशादिनिदर्शनं च पौरुषेयमपौरुषेयं वा । **तर्क उच्यते** । स्पष्टम् । इदानीं समाधिमाह । **समं** हस्तिपुत्रिकादिशरीरेष्वेकरूपम् । **मन्येत** मननं कुर्यात्स्वचेतसि धारयेदित्यर्थः । **यं** ब्रह्मात्मैक्यबोधम् । **लब्ध्वा** प्राप्य स आत्मबोधः **समाधिः प्रकीर्तितः** । स्पष्टम् ॥ १६ ॥

**भूमौ दर्भासने रम्ये सर्वदोषविवर्जिते ।**
**कृत्वा मनोमयीं रक्षां जप्त्वा वै रथमण्डले ॥ १७ ॥**

इदानीं चकारसूचितमासनं तत्स्थलं चाऽऽह । **भूमौ** समे शुचावित्यादिशास्त्रान्तरोक्तदेशे । **दर्भासने** दर्भकृष्णाजिनचैलोत्तरासने । किं बहुना दर्भासनेऽन्यस्मिन्वा । **रम्ये** मनःप्रसादकरे । **सर्वदोषविवर्जिते** निखिलदृष्टादृष्टदोषशून्ये । **कृत्वा** विधाय । **मनोमयीं** मनोविकाररूपां मानसीमित्यर्थः । **रक्षां** भूतप्रेतपिशाचादिरक्षणरूपां **जप्त्वा** जपित्वा । **वै रथमण्डले** वै प्रसिद्धे रथंतरसाममण्डलब्राह्मणे सामयजुष्प्रसिद्धे । अथवा विशिष्टो रथो विरथः प्रणवस्तन्मात्रान्यासादिकं वैरथं वैरथस्य मण्डलं समूहस्तस्मिन्यत्सारभूतमोंकाराख्यमिति शेषः ॥ १७ ॥

**पद्मकं स्वस्तिकं वाऽपि भद्रासनमथापि ।**
**बद्ध्वा योगासनं सम्यगुत्तराभिमुखस्थितः ॥ १८ ॥**

इदानीमासनान्याह । **पद्मकम्,** ऊर्वोरुपरि पादतले निधाय पृष्ठगतं करयुगं विधाय वामेन करेण दक्षिणपादाङ्गुष्ठस्य दक्षिणेन करेण वामपादाङ्गुष्ठस्य च ग्रहणे पद्मकासनं भवति । **स्वस्तिकं वाऽपि** जानूर्वोरन्तराले पादतलयोः करणं[1] स्वास्तिकं नामाऽऽसनं भवति । वाशब्दो गोमुखादेः संग्रहार्थः । अपिशब्दोऽनियत्यर्थो यत्किंचित्स्वाभ्यस्तमित्यर्थः । **भद्रासनं** सीवनीपार्श्वयोर्वृषणस्याधो गुल्फौ विधाय पार्श्वपादयोः पाणिभ्यां बन्धने[2] कृते भद्रासनं भवति । **अथापि वा,** अथ वेति पक्षान्तरार्थौ । अपिशब्दो ह्यपूर्वैः समुच्चयार्थः । **बद्ध्वा** निबध्य **योगासनं** योग उक्तस्तस्य प्राप्त्यर्थमासनमुपवेशनं योगासनम् । **सम्यग्**यथावद्गुरूपदिष्टेन मार्गेण **उत्तराभिमुखास्थित** उत्तराशासंमुखत्वेनावस्थितः ॥ १८ ॥

**नासिकापुटमङ्गुल्या पिधायैकेन[3] मारुतम् ।**
**आकृष्य धारयेदग्निं शब्दमेवेति चिन्तयेत् ॥ १९ ॥**

**नासिकापुटं** नासिकाया एकं छिद्रम् । **अङ्गुल्या पिधाय** । **एकयाऽङ्गुल्या** प्रच्छाद्यैकेन **मारुतं** प्राणप्रभञ्जनम् । **आकृष्य** बहिःस्थितमन्तरासमन्तान्नीत्वा **धारयेद्वि**धारणं कुर्यात्तस्मिन्विधारिते योऽन्तर्हृदये महानग्निस्तमग्निं हृदयपुण्डरीकस्थं शास्त्रैकगम्यं जातवेदसं **शब्दमेव** शब्दब्रह्मसारभूतमोंकारमेव न त्वन्यमित्यनेन प्रकारेण वह्न्योंकारयोरभेदेन **चिन्तयेद्**ध्यानं कुर्यात् ॥ १९ ॥

**ओमित्येकाक्षरं ब्रह्म ओमित्येतन्न रेचयेत् ।**
**दिव्यमन्त्रेण बहुधा कुर्यादात्ममलच्युतिम् ॥ २० ॥**

अग्नेरोंकारतादात्म्यचिन्तन उपपत्तिमाह । **ओम**वति स्वस्य जापकं चिन्तकं वेत्योम् । इत्योंकारानुकरणार्थः । **एकाक्षर**मकारोकारमकारमेलनरूपमेकमक्षरम् । **ब्रह्म** ब्रह्माभिधायकं तदेवाभिधानाभिधेययोस्तादात्म्याङ्गीकारात् । तस्मादोमिति । व्याख्यातम् ।

---

१ ग करणे । २ ग. 'णिबन्धेन कृतं भ° । ३ ख. °मेव बिचि° ।

**एतदुक्तमक्षरम्** । **न रेचयेन्न** परित्यजेत् । **दिव्यमन्त्रेण** दिवि भवेनोंकारेण मन्तुस्त्राणकरेण **बहुधा कुर्यात्** । स्पष्टम् । आत्ममलच्युतिमन्तःकरणदोषनाशनम् ॥ २० ॥

**पश्चाद्ध्यायेत पूर्वोक्तं क्रमशो मन्त्रविद्बुधः ।**
**स्थूलातिस्थूलसंज्ञायां नाभेरूर्ध्वमुपक्रमः ॥ २१ ॥**

**पश्चादनन्तरम्** । **ध्यायेत** ध्यायेत् । **पूर्वोक्तं** पुरा कथितं परं ब्रह्म । **क्रमशो** मरुद्धारणाग्न्योंकारात्मत्वक्रमेण । **मन्त्रविदोंकारवित्** । **बुधः** षडङ्गयोगज्ञानवान् । पादाङ्गुष्ठाद्याधारान्तं वायोरानयनं नयनं चेति सूक्ष्मगतिभेदः । आधारादानयनं नयनं चेति स्थूलो गतिभेदः । तदुभयं च सुशिक्षितयोगैरेव सुकरमिति मन्वाना मातेव श्रुतिरस्मदादिभिः सुकरं योगमाह । **स्थूलातिस्थूलसंज्ञायाम्** । अतिशयेन स्थूलोऽतिस्थूलः स्थूलादप्यतिस्थूलः स्थूलातिस्थूलः नातः परं स्थूल इत्यर्थः । तस्य संज्ञाऽभिधानं तस्यां स्थूलातिस्थूलसंज्ञायां सत्याम् । **नाभेरूर्ध्वं** नाभिमण्डलस्योपरि । वायोर्नयनानयनयो-रुपक्रमः प्रथमतोऽभ्यासः करणीय इति शेषः ॥ २१ ॥

**तिर्यगूर्ध्वमधो दृष्टीर्विनिवार्य महामतिः ।**
**स्थिरस्थायी विनिष्कम्पः सदा योगं समभ्यसेत् ॥ २२ ॥**

तत्रेतिकर्तव्यतामाह । **तिर्यगूर्ध्वमधः** । स्पष्टम् । **दृष्टीर्नयनप्रचारान्** । **विनिवार्य** । स्पष्टम् । **महामतिः**, महती विषयवैतृष्ण्यरूपा मतिर्यस्य स महामतिः । **स्थिरस्थायी** निश्चलावस्थानवान् । **निनिष्कम्पः**, विविधो निर्गतः कम्पो वाक्कायमनसां चलनरूपो यस्मात्स विनिष्कम्पः । **सदा योगं समभ्यसेत्** । स्पष्टम् ॥ २२ ॥

**तालमात्रा तथाऽऽयामो धारणा योजनं तथा ।**
**द्वादशमात्रो योगस्तु कालतो नियतः स्मृतः ॥ २३ ॥**

इदानीं योगप्रकारमाह । **ताला** मरुताभितरेतरसंघट्टनप्रकारः । **मात्रा** मरुतोऽवस्थानकालविशेषः । **तथा** तद्वत् । **आयामो** वायोर्दीर्घता वायोः स्वातन्त्र्यमित्यर्थः । **धारणा** वायोः प्रदेशविशेषे संस्थापनम् । **योजनमग्न्यादिभिः** संबन्धकरणं वायोः । **तथा** तद्वत् । एते पञ्च भेदाः शिक्षणीया इति तात्पर्यार्थः । यदा त्वविजितवायुः पुमांस्तदाऽऽह । **द्वादशमात्रः** । द्वादशसंख्या या मात्रा अकाराद्या मात्राभिरुपलक्षित ओंकारो वा यस्मिन्नस्ति स द्वादशमात्रः । अविजितश्वासश्चतुष्प्रणवं द्वादशप्रणवं वा प्राणायामं कुर्यादित्यर्थः । **योगस्तु** योगार्थं क्रियमाणप्राणायामः पुनरभ्यसनीय इति शेषः । **कालतो** द्वादशमात्रारूपेण कालेन । **नियमः** प्रथमं क्रियमाणस्य प्राणायामस्येयत्तारूपः । **स्मृतः** परिकीर्तितो विद्वद्भिः ॥ २३ ॥

---

१ ख. °लसूक्ष्मं च ना° । २ ख. °द्वार्धं विहाय च म° । ३ ख. तालमात्रादिनिष्कम्पो धा° ।

**अघोषमव्यञ्जनमस्वरं च यदतालुकण्ठमननुनासिकं च यत् ।**
**अरेफजातमुभयोष्मवर्जितं यत्तदक्षरं न क्षरते कदाचित् ॥ २४ ॥**

इदानीमात्मस्वरूपमोंकारध्येयमाह—**अघोषं** घोषाक्षराणि वर्गतृतीयचतुर्थहकारास्तद्व्यतिरिक्तमघोषम् । **अव्यञ्जनं** कादीनि व्यञ्जनानि तद्व्यतिरिक्तमव्यञ्जनम् । **अस्वरं** चाकारादिरहितमपि । चकारादोंकारादपि व्यतिरिक्तम् । यत्प्रसिद्धम् । **अतालुकण्ठं** तालुकण्ठादिस्थानव्यतिरिक्तमतालुकण्ठम् । **अननुनासिकं च,** अनुनासिका वर्गपञ्चमा बिन्दुसहितास्तद्व्यतिरिक्तमननुनासिकमपि । अयं चकारः सर्वप्रयत्नादिरहितमपीत्याह । यत्प्रसिद्धम् । **अरेफजातं** रेफसमूहवर्जितम् । **उभयोष्मवर्जितमुभय** ऊष्माणः शषसहा विसर्जनीयाश्च तैर्वर्जितमुभयोष्मवर्जितम् । यत्प्रसिद्धम् । यतस्त्रिवारमभिधानं बुद्धिद्रष्टृत्वेन स्वयंप्रकाशत्वेन श्रुतिगम्यत्वेन च प्रसिद्धिकथनार्थम् । **तद**शेषवर्णव्यतिरिक्तमुक्तम् । **अक्षर**मक्षरशब्दवाच्यं व्याप्तम् । **न क्षरते** न क्षरति न विनश्यति । **कदाचि**त्कस्मिन्नपि काले ॥ २४ ॥

**येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति ।**
**अतस्तमभ्यसेन्नित्यं यन्मार्गगमनाय वै ॥ २५ ॥**

इदानीमस्य स्वयंप्रकाशत्वमाह—**येन** प्रसिद्धेन प्रकाशान्तरनिरपेक्षेण बोधेन । **असा**वन्तःकरणवृत्तिरूपो बोधः । **पश्यते** पश्यति । **मार्गं** प्राणसंचलनपथम् । **प्राणस्तेन हि गच्छति** यस्मात्तेन मार्गेण प्राणो गच्छत्य**तो**ऽस्मात् । **त**मुक्तमार्गावलोकनहेतुभूतम् । **अभ्यसे**त्स्वाधीनचिन्तनं कुर्यात् । **नित्यं** सर्वदा । **यत्**प्रसिद्धं स्वयंप्रकाशम् । **मार्गगमनाय** प्राणपथसंचरणनिमित्तम् । **वै** प्रसिद्धम् ॥ २५ ॥

**हृद्द्वारं वायुद्वारं च मूर्धद्वारं तथा परम् ।**
**मोक्षमार्गबिलं चैव सुषिरं मण्डलं विदुः ॥ २६ ॥**

इदानीं मार्गानाह—**हृद्द्वारं** हृदयपद्मच्छिद्रम् । **वायुद्वारं च** प्राणप्रभञ्जनद्वारमपीडापिङ्गलादिकं सुषुम्नाप्रधानं चकारादनुक्तान्यपि द्वाराणि । **मूर्धद्वारं** कपालत्रयसंधिजं दशमद्वारम् । **तथा** तद्वत् । **अपरम**न्यत् । **मोक्षमार्गबिलं चैव** । मोक्षोऽविद्यादेर्निवृत्तिस्तस्य मार्गो ब्रह्मज्ञानं तस्य बिलं बिलमिव क्वचित्सूक्ष्मं क्वचिद्विस्तीर्णं क्वचिद्धास्वरं क्वचित्तमस्व्येव न त्वन्यथा । चकारात्संसारमार्गबिलमपि । इदानीं मोक्षमार्गबिलं स्वयमाह—**सुषिरं** छिद्रवन्**मण्डलं** वर्तुलाकारम् । एतदुक्तं भवति । आधारचक्रमारभ्याशेषनाडीनिर्वाहकारिणी सर्वपद्मस्पर्शा पश्चिमवाहिनी सुषुम्ना तद्ग्रं कपालकुहरान्तर्वर्ति चन्द्रमण्डलमिति । **विदु**र्जानन्ति सन्तः ॥ २६ ॥

---

१ ख. यत्तालुकण्ठोष्ठमना° । २ ,, यद् । ३ ख. कथंचि° । ४ ख. °स्तेनाभिग° ।
५ क. °त्यं सम्मा° । ६ ख. मूर्ध्नि द्वारमथाप° । ७ ख. °क्षद्वारं बि° ।

**भयं क्रोधमथाऽऽलस्यमतिस्वप्नातिजागरम् ।**
**अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २७ ॥**

इदानीं योगप्रतिकूलान्याह—**भय**मरण्यादावेकाकित्वेन निवसतः संत्रासस्तम्। **क्रोधं** स्वस्यानिष्टकारिण्यनिष्टकारकस्य द्वयोर्वा व्यापारस्तम् । **अथा**पि । **आलस्यं** सति सामर्थ्ये ज्ञाने च योगाङ्गसेवापराङ्मुखत्वम् । **अतिस्वप्नातिजागर**मत्यधिकं चतुष्प्रहरमष्टप्रहरं वाऽनेकशब्दस्पर्शादिसापेक्षबोधनं स्वप्नः शयनमत्यधिकमानिमीलितनेत्रत्वेन वीरासनाद्यवस्थानपुरःसरं जागरणं जागरोऽतिस्वप्नश्चातिजागरश्चातिस्वप्नातिजागरं तत् । **अत्याहार**मत्यधिको भुक्तस्थानात्क्लेशेनोत्थानादिलक्षण आहारोऽत्याहारस्तम् । **अनाहार**मुपवासम् । **नित्यं** सदा । **योगी** षडङ्गयोगवान् । **विवर्जयेत्** । स्पष्टम् ॥ २७ ॥

**अनेन विधिना सम्यङ्नित्यमभ्यस्यतः क्रमात् ।**
**स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २८ ॥**

भयाद्यनुष्ठाने योगविघातो दृष्टोऽनर्थो यतः । **अनेनो**क्तेन **विधिना** प्रकारेण । **सम्यग्**यथावत् । **नित्यं** सर्वदाऽ**भ्यस्यतो**ऽभ्यासं कुर्वतः **क्रमा**च्छनैः शनैः । **स्वयमु**पदेशमन्तरेण समाधिस्थस्यो**त्पद्यते** जायते । **ज्ञानं** दूरशब्दादिश्रवणादिकम् । तत्र कालस्येयत्तामाह—**त्रिभिर्मासैः** । स्पष्टम् । **न संशयः** । नित्यं निरन्तरं मासत्रयमभ्यस्यतश्चित्रशब्दादिविषयं ज्ञानं भवति न वेति संशयो न करणीय इति शेषः ॥ २८ ॥

**चतुर्भिः पश्यते देवान्पञ्चभिर्विततक्रमः ।**
**इच्छयाऽऽप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ २९ ॥**

**चतुर्भिः**, चतुर्भिर्मासैः । **पश्यते** पश्यति । **देवा**न्खेचरानन्तर्धानादिमतः । **पञ्चभिः** पञ्चभिर्मासैः । **विततक्रमो** विस्तीर्णबोधः सर्वज्ञ इत्यर्थः । तथाच सर्वज्ञे जाते देवानामपि प्रतिभातत्वादि**च्छया** मुमुक्षुश्चेन्मोक्षेच्छया प्राप्तब्रह्मज्ञान **आप्नोति** प्राप्नोति । **कैवल्यं** केवलस्य स्वयंप्रकाशस्याऽऽनन्दात्मनो भावः कैवल्यम्। **षष्ठे मासि न संशयः**। स्पष्टम् ॥ २९ ॥

**पार्थिवः पञ्चमात्रः स्याच्चतुर्मात्रस्तु वारुणः ।**
**आग्नेयस्तु त्रिमात्रो हि वायव्यस्तु द्विमात्रकः ॥ ३० ॥**

इदानीं पृथिव्यादीनां गुणसंख्यया योगमाह—**पार्थिवः** पृथिवीसंबन्धी । **पञ्चमात्रः** पञ्च मात्रा यस्य विधारणे स पञ्चमात्रः प्रणवाभेदाद्योगस्य विवक्षितत्वात्। प्रणवमात्राभिः पञ्चमात्रत्वमस्य । यद्यपि प्रणवस्त्रिमात्रस्तथाऽप्युच्चारणविशेषात्पञ्चमात्रोऽपि भवति । **स्याद्भवेत्** । **चतुर्मात्रः** । स्पष्टम् । **त्वेव**। **वारुणो** वरुणस्यायं वारुण आप्य इत्यर्थः।

---

१ ग. 'धिस्त्यो' । २ ख. 'श्नौऽश्नौ वा' ।

**आग्नेयस्तु,** आग्नेयः पुनः । **त्रिमात्रः** । स्पष्टम् । **हि** प्रसिद्धम् । **वायव्यस्तु** वायव्यः पुनः । **द्विमात्रकः** । स्पष्टम् ॥ ३० ॥

**एकमात्रस्तथाऽऽकाशो ह्यमात्रं तु विचिन्तयेत् ।**
**संधिं कृत्वा तु मनसा चिन्तयेदात्मनाऽऽत्मनि ॥ ३१ ॥**

**एकमात्रः** स्पष्टम् । **तथा** तद्वत् । **आकाश** आकाशस्यायमाकाशीय अकाशीय एवाऽऽकाशः । **हि** यस्मात् । भूतगुणसंख्यया प्रणवाभिन्नो योगोऽपि तन्मात्रस्तस्मात्परित्यज्यतां(ज्य तं) सर्वसंख्यातीतं स्वयंप्रकाशमानानन्दात्मरूपमुररीकृत्य । **अमात्रं तु** मात्राभिर्विवर्जितमेवाऽऽनन्दात्मानं न त्वन्यम् । **विचिन्तयेत्** । स्पष्टम् । ननु नित्यं निरन्तरं योगानुष्ठानं कुर्वत उक्ताः सिद्धयो भवन्ति न चैवमनुष्ठातुं शक्यः संध्यावन्दनादिकर्मविपरिलोपप्रसङ्गादित्यत आह—**संधिं** संध्यावन्दनादि कर्म । **कृत्वा तु मनसा** मनसैव निधाय संन्यासं कृत्वाऽन्यथा संध्यावन्दनादिविपरिलोपे पातित्यं स्यादित्याभिप्रायः । अथवा सूतक्यादिवन्मनसैव कर्मास्तु । **चिन्तयेद्विचिन्तयेदमात्रम्** । **आत्मनाऽन्तःकरणेन** । **आत्मनि** स्वस्मिन्नसङ्गोदासीने बुद्धेर्द्रष्टरि स्वस्मादभिन्नामिति शेषः ॥ ३१ ॥

**त्रिंशत्पार्थाङ्गुलः प्राणो यत्र प्राणः प्रतिष्ठितः ।**
**एष प्राण इति ख्यातो बाह्यः प्राणस्य गोचरः ॥ ३२ ॥**

**त्रिंशत्पार्थाङ्गुलः,** त्रिंशत्पृथक्ङ्गुलः । आधारचक्रमारभ्य हयवदूग्रीवायां कृतायां त्रिंशन्मध्यमाङ्गुलपरिमितसंचारः । **प्राणः** श्वसनः कोष्ठचो वायुः । **यत्र** यस्मिन्प्रदेशे बहिरन्तश्च । **प्राण** उक्तः । **प्रतिष्ठितः** प्रकर्षेणावस्थानं प्राप्तः । **एष** प्राणः प्रतिष्ठाभूमिभूतः । **प्राणः** प्राणस्य प्राण आनन्दात्मा । **इत्यनेन** प्रकारेण । **ख्यातः** कथितः । **बाह्यो** बाह्यप्राणादिपञ्चकव्यतिरिक्तः । **प्राणस्य गोचरः** प्राणस्य विषयः प्राणोपजीव्य इत्यर्थः ॥ ३२ ॥

**अशीतिश्च शतं चैव सहस्राणि त्रयोदश ।**
**लक्षश्चैकोऽपि निःश्वासो अहोरात्रप्रमाणतः ॥ ३३ ॥**

इदानीमजपामन्त्रसंख्यामुपजीव्य प्राणादिपञ्चकवृत्तीनां संख्यामाह—**अशीतिश्च शतं चैव सहस्राणि त्रयोदश** । **लक्षश्चैकोऽपि** । एकविंशतिसहस्रं षट्शताधिकं श्वासोच्छ्वासयोरैक्येनाजपामन्त्रे प्रसिद्धं तथाच प्राणापानयोस्त्रिचत्वारिंशत्सहस्रं द्विशताधिकं पृथग्गणनया व्यापाराणां भवति । एवं व्यानोदानसमानानां पृथग्व्यापारगणने चतुःषष्टिसहस्रमष्टशताधिकं भवति । पुनश्चैकैकस्मिन्सहस्रं षट्त्रिंशदधिकं व्यापाराणामन्तर्नाडीसंचाररूपाणां गणनयाऽशीत्यधिकं शतं पञ्चसहस्राणि । एवं पञ्चानां

---

१ ख. प्राणैः ।

बाह्यान्तर्व्यापारमेलनेनाशीत्यधिकं शतं त्रयोदशसहस्राणि लक्षमात्रं भवति । चकारत्रयं सापिकारमुक्तसमुच्चयार्थम् । एवकारोऽनया गणनया नातोऽधिकमेतदर्थः । एको लक्ष इति योज्यम् । **निःश्वासः** प्राणादिपञ्चकस्य बहिरन्तश्च व्यापारः । **अहोरात्रप्रमाणतो**ऽहोरात्रप्रमाणेनैतावानहोरात्रेण भवतीत्यर्थः ॥ ३३ ॥

**प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे ।**
**समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३४ ॥**

इदानीं तेषां स्थानान्याह—**प्राणः** श्वासस्य कर्ता । **आद्यः** प्रथमः । **हृदि** हृदयपुण्डरीके । **स्थाने** प्रदेशे तिष्ठतीति शेषः । **अपानस्त्व**पान एव निश्वासस्य कर्तैव । **पुनर्गुदे** गुदवलय एव तिष्ठतीति शेषः । **समानो**ऽशितपीतसमनयनहेतुः । **नाभिदेशे तु** नाभिनालकन्दप्रदेश एव तिष्ठतीति शेषः । **उदान** ऊर्ध्वगामी शरीरमण्डपकीलभूतः । **कण्ठं** गलाभ्यन्तरदेशम् । **आश्रित** आश्रयं गतवान्कण्ठे वर्तत इत्यर्थः ॥ ३४ ॥

**व्यानः सर्वेषु चाङ्गेषु[1] आवृतस्तिष्ठते सदा ।**
**अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३५ ॥**

**व्यानो** नाडीसहस्रसंचारी वीर्यवत्कर्मकारणभूतः । **सर्वेषु चाङ्गेषु** सर्वेष्वपि गात्रेषु चकारात्प्राणापानयोः संधावप्या**वृतः** संवृत**स्तिष्ठते** तिष्ठति । **सदा** सर्वदा । **अथ** स्थानकथनानन्तरम् । **वर्णास्तु** वर्णा अपि कथ्यन्त इति शेषः । **पञ्चानां प्राणादीनां** पञ्चसंख्याकानां प्राणापानसमानव्यानोदानानाम् । प्राण आदिर्येषां ते प्राणादयस्तेषा**मनुक्रमा**दुक्तक्रमानुसारात् ॥ ३५ ॥

**रक्तवर्णमणिप्रख्यः[2] प्राणो वायुः प्रकीर्तितः ।**
**अपानस्तस्य मध्ये तु इन्द्रगोपस्य[3] संनिभः ॥ ३६ ॥**

प्राणरूपमाह—**रक्तवर्णमणिप्रख्यः** । रक्तवर्णो मणी रक्तवर्णमणिस्तत्प्रख्यस्तत्सदृशः । भास्वरः सन्प्रवालसदृश इत्यर्थः । **प्राणो वायुः प्रकीर्तितः** । स्पष्टम् । अपानस्वरूपं प्राणाविनाभावं चाऽऽह—**अपान** उक्त**स्तस्य** प्राणस्य **मध्ये** त्वन्तरे च । **इन्द्रगोपस्ये**न्द्रगोपमणेर्भृशं रक्तत्वे सति भास्वरस्येत्यर्थः । **संनिभः** सदृशः ॥ ३६ ॥

**समानस्[4]तस्य मध्ये च गोक्षीरस्फटिकप्रभः ।**
**आपाण्डुर उदानश्च व्यानो ह्यर्चिःसमप्रभः ॥ ३७ ॥**

इदानीं समानस्य रूपमपानेनाविनाभावं चाऽऽह । **समानो** व्याख्यातः । **तस्या**पानस्य **मध्ये चा**न्तरपि । चशब्दाद्बहिरपि । **गोक्षीरस्फटिकप्रभः** । गोक्षीरस्फटि-

१ ख. °षु व्याप्य तिष्ठति सर्वदा । २ ख. °वर्णो म° । ३ ख. °पसमप्रभः । ४ ख. °नस्तु द्वयोर्मध्ये गोक्षीरधवलप्र° ।

काभ्यां स्निग्धत्वमतिधावल्यमुच्यते । तत्प्रभः स्निग्धत्वे सत्यतिधवल इत्यर्थः । उदानवर्णमाह—**आपाण्डुरः** समन्तात्पाण्डुरः श्वेतः । **उदानश्च** व्याख्यातः । चशब्दात्समानाविनाभूतश्च । **व्यान** उक्तः । हि प्रसिद्धः । उदानेनाविनाभूतः । **अर्चिःसमप्रभः,** ज्वालासमानवर्णः ॥ ३७ ॥

**यस्यैतन्मण्डलं भित्त्वा मारुतो याति मूर्धतः ।**
**यत्र तत्र म्रियेतापि न स भूयोऽभिजायते न स**
**भूयोऽभिजायत इति ॥ ३८ ॥**

**इत्यथर्ववेदेऽमृतनादोपनिषत्समाप्ता ॥ ३ ॥**

इदानीं प्राणस्य पञ्चनामाङ्कितस्य पञ्चस्थानस्य चिन्तनोत्थापनाभ्यासाभ्यां वशीकृतस्य फलमाह—**यस्य** प्रसिद्धस्य प्राणध्यानाभ्यासवतः । **एतत्**कपालकुहरान्तर्वर्ति **मण्डलं** कपालपुटत्रयद्वारवि(पि)धायकं चन्द्रं **भित्त्वा** योगाभ्यासेन गुरूपदेशेन विभिद्य **मारुतः** प्राणादिपञ्चकरूपो वायु**र्याति** गच्छति । **मूर्धतो** मूर्ध्नो दशमद्वारात् । **यत्र तत्र म्रियेतापि** । अपिशब्दो वाकारार्थः । यत्र तत्र वा वाराणस्यादौ कीकटादौ वा प्राणान्परित्यजेत् । मूर्धद्वारेण विनिर्गतोऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्य तत्रोत्पन्नब्रह्मज्ञानः **स** मूर्ध्नि विनिर्गतो भूय एतच्छरीरोत्पत्त्यनन्तरं **नाभिजायते** न सर्वत उत्पद्यते । **न स भूयोऽभिजायते** । व्याख्यातम् । पदाभ्यास उपनिषदर्थपरिसमाप्त्यर्थः । इत्युपनिषत्समाप्त्यर्थः ॥ ३८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतिरमृतनादोपनिषद्दीपिका समाप्ता ॥ ३ ॥



---

१ ख. यस्येदं मण्ड° । २ ख. तत्र । ३ क. °रेद्वापि । ४ ग. °न्तनात्स्थाप° । ५ ग. घ. °नाघभ्या° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अमृतबिन्दूपनिषत् ।

## शंकरानन्दविरचितदीपिकासमेता ।

ॐ भद्रं कर्णेभिः० । ॐ स्वस्ति न इ० । ॐ शान्तिः शान्तिः शान्तिः ।

व्याख्यास्येऽमृतबिन्द्वाख्यां तत्त्वोपनिषदं पराम् ।
अमृतेशस्तया देवः प्रीयतां परमेश्वरः ॥

ब्रह्मात्मैक्यविज्ञानादशेषानर्थनिवृत्तिरानन्दात्मावाप्तिश्चेति सर्वोपनिषदां सिद्धान्तः । ब्रह्मज्ञानं च श्रवणादिना मनःसहकृतेन मनश्च मत्तद्विरदवद्दुर्निग्रहं मनुजानामतस्तदेव प्रथमत आह—

**मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।**
**अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १ ॥**

**मनो**ऽन्तःकरणमनेकवृत्तिमद्द्विविधं द्विप्रकारं **प्रोक्तं** प्रकर्षेण कथितं विद्वद्भिः । तस्य द्वैविध्यमाह—**शुद्धं चाशुद्धमेव च** । स्वभावतोऽशुद्धमेव पुराकृतैरगण्यपुण्यैराधुनिकैर्ब्रह्मचर्यादिसाधनानुष्ठानैश्च शुद्धम् । चकारौ व्यामिश्रमूढत्वाद्यवस्थामाहतुः । इदानीमशुद्धं शुद्धं चेति पदे व्याकर्तुमाह—**अशुद्धं** व्याख्येयमिदम् । व्याकरोति । **कामसंकल्पम्** । कामो विषयमात्राभिलाषस्तस्मिन्संकल्पस्तदधिकरणत्वं यस्मात्तत्कामसंकल्पं साभिलाषमित्यर्थः । **शुद्धं** व्याख्येयमिदम् । **कामविवर्जित**मभिलाषमात्ररहितम् ॥ १ ॥

नन्वस्त्वेवं द्वेधा मनस्तथाऽप्यशुद्धत्वे को दोषः शुद्धत्वे च को लाभ इत्यत आह—

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।**
**बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम् ॥ २ ॥**

**मन एव** शुद्धाशुद्धविभागवदन्तःकरणमेव । **मनुष्याणां** मनुवंश्यानामस्मदादीनामित्यर्थः । **कारणं** निमित्तम् । **बन्धमोक्षयोः** । बन्धोऽहंममेत्याद्यभिमानः सकारणस्तद्विपरीतो मोक्षः स्वयंप्रकाशमानानन्दात्माविर्भावस्तयोः । कीदृशं **बन्धाय** कीदृशं च विपर्ययायेत्यत आह—**बन्धाय** बन्धार्थं बन्धनिमित्तमित्यर्थः । **विषयासक्तं** विषये-

---

१ कं. मुक्त्यै ।

ष्वन्नपानस्त्रक्चन्दनवनितादिषु शब्दस्पर्शरूपरसगन्धात्मकेष्वासक्तिर्निर्बन्धपुरःसराभिलाषो यस्य तद्विषयासक्तम् । **मुक्तं** मुक्तिनिमित्तं निर्विषयमुक्तविषयाभिलाषशून्यं **स्मृतं** चिन्तितमवगतं विद्वद्भिरित्यर्थः ॥ २ ॥

इदानीं निर्विषयत्वे यत्नः करणीय इत्याह—

**यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।**
**अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३ ॥**

**यतो** यस्मान्निर्विषयस्य विषयाभिलाषशून्यस्यास्य साक्षिप्रत्यक्षस्य **मनसो**ऽन्तः-करणस्य **मुक्ति**र्मोक्षोऽविद्यादिबन्धनेभ्य **इष्यते**ऽङ्गी क्रियते । **अतो**ऽस्मात्कारणान्नि-**र्विषयं** विषयाभिलाषशून्यं **नित्यं** सर्वदा **मनो**ऽन्तःकरणं **कार्यं** कर्तव्यं **मुमुक्षुणा** मोक्षेच्छावता ॥ ३ ॥

मनसो निरोधस्य फलमाह—

**निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।**
**यदाऽऽयात्यात्मनो भावं तदा तत्परमं पदम् ॥ ४ ॥**

**निरस्तविषयासङ्गं** विमुक्तविषयाभिलाषं **संनिरुद्धं** सम्यङ्निरोधं प्राप्तं **मनो**ऽन्तः-करणम् । **हृदि** हृदयकमले । **यदा** यस्मिन्काले । **आयात्या**गच्छति । **आत्मनो भावं** स्वस्य सत्तामहं ब्रह्मास्मीति जीवब्रह्मणोरेकत्वबोधमित्यर्थः । **तदा** तस्मिन्काले तदात्म-भावावगमनं मनोनिरोधस्य फलम् । फलत्वे हेतुमाह—**परम**मुत्कृष्टं **पदं** प्राप्यं नातः **परं** फलमस्तीत्यर्थः ॥ ४ ॥

इदानीं मनसो निरोधस्येयत्तामाह—

**तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।**

**तावदेव** तावत्परिमाणमेव तावन्तं च कालमेव नातोऽधिकं **निरोद्धव्यं** निरोधनी-यम् । **याव**द्यावता परिमाणेन कालेन च **हृदि** हृदयकमले **गतं क्षयं** विनाशं प्राप्तम् । अहं ब्रह्मास्मीति बोधेन ब्राह्म(बाह्य)बोधशून्यमित्यर्थः ।

ननु न ज्ञानं नापि ध्यानमुपदिश्यते भवता किं तु केवलं मनसो निरोधो न च निरोधः पुरुषार्थ इत्यत आह—

**एतज्ज्ञानं च ध्यानं च शेषो न्यायश्च विस्तरः ॥ ५ ॥**

**एत**न्मनसो निरोधनं **ज्ञानं** चाहं ब्रह्मास्मीति साक्षात्काररूपम् । अनेन तस्योत्पत्ते-रित्यर्थः । **ध्यानं** चाहं ब्रह्मास्मीतिचिन्तनरूपम् । चकाराभ्यां साधनान्तररूपमप्येतदेव । **शेषो**ऽन्तर्मनोनिरोधव्यतिरिक्तो **न्यायश्च** विवदमानानां व्यवहारिणां व्यवहारपदं तत्सं-

---

१ ख. °सक्तं सं° । २ क. ग. यात्युन्मनीभा° । ३ ग. गतक्ष । ४ ख. ग. च अतोऽन्यो ग्रन्थवि° । ५ ग. °त्सम ह° ।

मान इत्यर्थः । चशब्दात्कण्ठश्रमोऽपि । अपि च ग्रन्थलक्षणेनापि नातोऽधिकोऽर्थ इत्याह—**विस्तरः** शब्दप्रपञ्च एव ॥ ५ ॥

मनोनिरोधे सति परमपुरुषार्थता कथमित्यत आह—

**नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव तत् ।**
**पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदा ॥ ६ ॥**

**नैव चिन्त्यं** यस्मात्परमं पदं मनोनुकूलशब्दादिरूपत्वेन चिन्तार्हं नैव । तर्हि किं प्रतिकूलशब्दादिरूपमित्याशङ्क्य नेत्याह—**न चाचिन्त्यं** चिन्तानर्हं दुष्टशब्दादिरूपमपि न । चकारः शब्दाद्यगोचरत्वमप्याह । ननु माऽस्तु शब्दादिरूपं मा च शब्दादिविषयः किंतु तज्जन्यसुखरूपमस्त्वित्यत आह—**न चिन्त्यं** चिन्तानर्हवैषयिकसुखरूपं न । तर्हि किं दुःखरूपमित्याशङ्क्य नेत्याह—**चिन्त्यमेव** चिन्तार्हतोपलक्षितस्वयंप्रकाशमाननित्यनिरतिशयानन्दस्वरूपमेव न त्वन्यत् । **तत्**सत्यज्ञानादिलक्षणं प्रसिद्धम् । **पक्षपातविनिर्मुक्तं** हस्तिपुत्तिकादिशरीरेष्वेकरूपेण वर्तमानम् । **ब्रह्म** बृहत्सर्वस्मादधिकं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः । **संपद्यते** मनः सम्यगशेषव्यापारशून्यत्वेन प्राप्तं भवति । **तदा** तस्मिन्मनसो निरोधावसरे । तस्मात्परमपुरुषार्थतेत्यर्थः ॥ ६ ॥

मनोनिरोधं परमपुरुषार्थमुक्त्वा तत्रोपायमाह—

**स्वरेण संधयेद्योगमस्वरं भावयेत्परम् ।**
**अस्वरेणानुभावेन भावो वाऽभाव इष्यते ॥ ७ ॥**

**स्वरेण** स्वरशब्दोपलक्षितेन प्रणवेन **संधयेत्**संधारयेदकाराद्याभिर्मात्राभिर्यथोपदेशं ध्यानं कुर्यादित्यर्थः । **योगं** चित्तवृत्तिनिरोधनमहं ब्रह्मास्मीतिबोधफलम् । प्रणवे स्थैर्ये जाते ततोऽस्वरं प्रणवं **भावयेत्**प्रत्ययावृत्तिं कुर्यात् । **परम**नन्तरम**स्वरेणो**क्तेना**नुभावेना**हं ब्रह्मास्मीत्यनुभवफलेन भावनेनाभावोऽविद्यातत्कार्यादीनामसत्त्वं **भाव इष्यते** सर्वपरिच्छेदहीनस्य ब्रह्मणः सत्ताऽङ्गी क्रियते । सच्चिदानन्दरूपं ब्रह्मावशिष्यत इत्यर्थः ॥ ७ ॥

इदानीमस्य भावस्योक्तरूपतामाह—

**तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।**
**तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ ८ ॥**

**तदेवा**विद्यादीनामभावे प्रसिद्धं सत्त्वमेव न त्वन्यत् । **निष्कलं** निर्गताः प्राणश्रद्धाखवायुज्योतिरप्पृथिवीन्द्रियमनोऽन्नवीर्यतपोमन्त्रकर्मलोकनामरूपाः कला यस्मात्तन्निष्कलम् । **ब्रह्म** सर्वस्मादप्यधिकम् । **निर्विकल्पं** निर्गता विकल्पा इदमनिदं वेत्यादि-

१ ख. ग °चिन्त्यमचि° । २ ग. °ब नान्य° । ३ ग. °रोधम° ।

रूपा वस्तुशून्या वा प्रत्यया यस्मात्तन्निर्विकल्पम् । **निरञ्जनं** निर्गतमञ्जनं सर्वकारणमविद्या यस्मात्तन्निरञ्जनम् । एतादृशं ब्रह्म ब्रह्मवादिनः प्रसिद्धमित्याह—तदुक्तं प्रसिद्धं **ब्रह्म** सर्वपरिच्छेदशून्यं बृहत् । अहमस्मत्प्रत्ययव्यवहारयोग्यस्वयंप्रकाशमानचिदानन्दात्मा ब्रह्मणो भेदरहितः । इत्यनेन प्रकारेण **ज्ञात्वा** साक्षात्कृत्य **ब्रह्मोक्तं** स्वात्माव्यतिरिक्तं **संपद्यते** संपन्नो भवति । ब्रह्मैव सन्ब्रह्माप्येतीत्यर्थः । **ध्रुवं** निश्चलं कूटस्थमविनाशीत्यर्थः ॥ ८ ॥

विद्वत्प्रसिद्धौ हेतुमाह—

**निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।**
**अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः ॥ ९ ॥**

**निर्विकल्पं** व्याख्यातम् । **अनन्तं च** देशकालवस्तुपरिच्छेदशून्यम् । चशब्दात्सत्यज्ञानादिलक्षणमपि । **हेतुदृष्टान्तवर्जितं** हेतुतृतीयान्तं पञ्चम्यन्तं वा वचनं कस्याचिदर्थस्य साधकं दृष्टान्तो यस्य कथनेन लौकिकपरीक्षकबुद्धिप्रसादस्ताभ्यामनुमानं लक्षितं तद्वर्जितमनुमानागम्यमित्यर्थः । न केवलमनुमानागम्यं किं त्वप्रमेयं प्रमाणमात्रागम्यम् । **अनादिं चा**ऽऽदिः कारणं तच्छून्यमनादिमनादीत्यर्थः । चशब्दाद्विकारान्तरशून्यमपि । **यत्**प्रसिद्धं **ज्ञात्वा** साक्षात्कृत्य **मुच्यते**ऽविद्यादिभ्यो विमुक्तो भवति । **बुधो** ज्ञानी तस्मात्प्रसिद्धमित्यर्थः ॥ ९ ॥

ननु मनसो निरोध उत्पत्तिश्च तदीयैर्धर्मैरसङ्गोदासीनस्य पुरुषस्य श्लेषश्चेदङ्गीकृतो वास्तवस्तथा तद्वत्त्वमेव स्यादित्यत आह—

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १० ॥**

**न निरोधो** निरोधो विनाशो मनसः शरीरादेर्वा वास्तवो न । **न चोत्पत्तिः** प्रादुर्भावो मनसोऽन्यस्य वा वास्तवो नापि । नन्वहं बद्धः साधको मुमुक्षुर्मुक्तश्चेत्यादिप्रत्ययः प्रत्यक्ष इत्यत आह—**न बद्धो** बद्धोऽविद्यादिरशनाभिर्वस्तुतो न । **न च साधकः** साधकः संन्यासब्रह्मचर्यादिसाधनगु(ग)णानुष्ठाता वस्तुतो न । चकारात्कर्तेत्यादिरपि न । **न मुमुक्षु**र्मोक्षेच्छावान्वस्तुतो न । **न वै मुक्तः** प्रसिद्धोऽविद्यादिबन्धनगणैर्विमुक्तो न । यदेतन्निरोधोत्पत्त्यादिकं मनसः स्वस्यान्यस्य वा प्रतीयते तत्सर्वं मिथ्यैव न तु वास्तवमित्यर्थः । इत्यनेन प्रकारेण या बुद्धि**रेषो**क्ता साक्षिप्रत्यक्षा **परमार्थता** परमार्थभावो वास्तवीत्यर्थः ॥ १० ॥

नन्वात्मा जागरणस्वप्नसुषुप्तानि प्रतिपद्यते । न चैकस्याविकृतस्य तत्रयं ततः कथं निरोधाभाव इत्यत आह—

**एक एवाऽऽत्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।**
**स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥**

**एक एव** भेदरहितोऽविकार्येव न तु विपरीतः । **आत्माऽहंप्रत्ययव्यवहारयोग्यः** स्वयंप्रकाशो बुद्धेर्द्रष्टा । **मन्तव्योऽ**वगन्तव्यः । कुत्र **जाग्रत्स्वप्नसुषुप्तिषु** जाग्रतीन्द्रियैर्विषयोपलम्भरूपे स्वप्ने वासनामात्रविषयोपभोगे सुषुप्तावशेषविशेषविज्ञानोपरमरूपायां च तासु । नन्ववस्थाजन्मना तद्विशिष्टस्यापि जन्म स्यादित्यत आह—**स्थानत्रयव्यतीतस्य** तिष्ठत्येतेष्वात्मेति जागरणादीनि स्थानानि तेषां त्रयं त्रिसंख्याविशिष्टं तस्माद्व्यतीतो गतस्तस्य तुरीयस्येत्यर्थः । **पुनर्भूयः** सकृद्भ्रान्त्योत्पादो यो जातस्तस्मादनन्तरमित्यर्थः । अहं ब्रह्मास्मीति ज्ञाने जाते **जन्म न विद्यते** उत्पादो नास्ति । कुत्रचित्कदाचित्कथंचित्कस्यचिदिति शेषः ॥ ११ ॥

नन्वेकस्य कथमनेकत्वप्रतिभास इत्यत आह—

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥**

**एक एव** स्वगतसजातीयविजातीयभेदशून्य एव हि यस्माद्भूतात्मा भूतानां स्थावरजङ्गमानामात्मा **भूते भूते** तस्मिंस्तस्मिञ्शरीरे । भूतशब्दाभ्यासश्चतुर्विधशरीरसंग्रहार्थः । **व्यवस्थितो** विविधं तत्तच्छरीरान्तःकरणादिसादृश्यमवलम्ब्यावस्थितोऽवस्थानं प्राप्तः । तस्मा**देकधा** स्वयंप्रकाशचिदानन्दात्मनैकप्रकारेण **बहुधा चैवा**नेकशरीरादिप्रकारेणापि । चकाराद्द्वेधाऽपि । एवकारस्त्वेकधेत्यनेन संबध्यते । एकधैव सन्बहुधाऽपि दृश्यत इति योजनीयम् । अथवेवकारार्थ एवकारः । उपाधेरेकत्वेनैकधेवोपाधेर्बहुत्वेन बहुधेव च दृश्यत इति योजनीयम् । **दृश्यते**ऽवलोक्यते । एकस्यैवैकधा बहुधा चावलोकने दृष्टान्तमाह—**जलचन्द्रवत्** । यथा जलैपूर्णे देशेऽनेकपात्रसंतते गगनमण्डलगतो गोपतिरेक एव संतते जले प्रतिबिम्ब एकधेव शरावादिषु प्रतिबिम्बतश्च बहुधेव दृश्यते तद्वत् । अयं प्रतिबिम्बपक्षे दृष्टान्त एकजीवत्वेऽनेकजीवत्वेऽपि योजयितुं शक्यः । स्वारस्यं त्वेकजीवत्वे ॥ १२ ॥

इदानीमुपहितो जीव इति पक्षमाश्रित्य दृष्टान्तमाह—

**घटसंवृतमाकाशं नीयमाने घटे यथा ।**
**घटो नीयेत नाऽऽकाशं तथा जीवो नभोपमः ॥ १३ ॥**

**घटसंवृतं** घटेन सम्यग्वृतं घटसंवृतमाकाशं नभो **नीयमाने** देशाद्देशान्तरं प्राप्यमाणे **घटे** कलशे । **यथा** येन प्रकारेण **घटः** कलशो **नीयेत** देशाद्देशान्तरं प्राप्येत **नाऽऽकाशं** न नभः । **तथा** तेन प्रकारेण **जीवः** प्राणानां धारयिताऽऽत्मा प्राणेषु परलोकादौ नीयमानेषु यमादिना न नीयते । तत्र हेतुः । **नभोपमः,** नभउपमो यतो नभसा समस्तस्मात् ॥ १३ ॥

---

१ घ. °धा वाऽव । २ ग. °लपदे° ।

ननु नभःसमानश्चेदचेतनोऽपि स्यादत आह—

**घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।**
**तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ १४ ॥**

**घटवत्**, यथा घटस्तद्वद्विविधाकारमनेकाकारं देहादिकं **भिद्यमानं** विनाशं गच्छत् । **पुनः** पुनर्भूयो भूयः । यथा घटादिकं विनश्यति पुनः पुनर्न नभः सर्वगतं तथा देहादिकं विनश्यति पुनः पुनर्नाऽऽत्मा सर्वगत इत्यस्मिन्नंशे दृष्टान्तो न त्वचेतनांश इत्याह—**तद्भग्नं च** । घटादिगमनादावपि नभो **न जानाति** घटादिकं विनष्टमित्यादि नावगच्छति । **स** दार्ष्टान्तिकभूतः स्वयंप्रकाश आनन्दात्मा **जानाति च** सर्वमिदमवगच्छतीत्यपि । चकारः सर्वानन्यत्वात्सुखित्वादिकमप्याह । **नित्यशः** सर्वशः ॥ १४ ॥

नन्वेवं चेदयं सर्वज्ञः कस्मात्सर्वदाऽऽनन्दात्मानं नावगच्छतीत्यत आह—

**शब्दमायावृतो नैव तमसा याति पुष्करे ।**
**भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १५ ॥**

**शब्दमायावृतः** शब्दरूपा वस्तुशून्या मायाऽघटमानविधानपटीयस्यविचारितरमणीया शक्तिस्तयाऽऽवृतोऽहमानन्दात्माऽस्मीतिबोधशून्यः शब्दमायावृतः शब्दादिस्थूलसूक्ष्मप्रपञ्चैकारणभूतया वा माययाऽऽवृतो **नैव तमसा याति पुष्करे** यथा लोके गाढतमसाऽऽवृतश्चक्षुष्मान्सर्वज्ञोऽपि पुष्करे क्षेत्राविशेषेऽन्यास्मिन्वा पुष्करे देशे वस्तुनि वा तत्समीपस्थोऽपि न यात्येव तद्वच्छब्दमायावृतस्तमसा शब्दमायारूपेणाज्ञानेन हेतुना पुष्करे पुण्यरूप आनन्दात्मनि रलयोरैक्येन पुष्कले वा सर्वगते तस्मिन्नैव याति न गच्छत्येव । **भिन्ने तमसि च** यथा लोके प्रदीपादिप्रकाशेन तस्मिंस्तमसि भिन्ने पुष्करे गच्छति तद्वदहं ब्रह्मास्मीतिबुद्धिप्रदीपकतया भिन्ने भेदं गतवति विनष्ट इत्यर्थः । तमसि च शब्दमायारूपेऽज्ञाने । चशब्दाच्छब्दमायासंस्कारेऽपि । **एकत्वं** जीवब्रह्मणोरैक्य**मेक एव** द्रष्टृदृश्यादिविभागशून्य एव न तु तद्वान् । **अनुपश्यति** तमसो भेदमनु पश्चात्साक्षात्करोति ॥ १५ ॥

इदानीं प्रासङ्गिकं योगफलं परिसमाप्य पुनर्योगमाह—

**शब्दाक्षरं परं ब्रह्म तस्मिन्क्षीणे यदक्षरम् ।**
**तद्विद्वानक्षरं ध्यायेद्यदिच्छेच्छान्तिमात्मनः ॥ १६ ॥**

**शब्दाक्षरं** शब्दरूपमोमित्येतदक्षरं शब्दाक्षरं प्रथमतः **परं ब्रह्मो**त्कृष्टं ब्रह्म परब्रह्मदृष्ट्याऽवगतमित्यर्थः। **तस्मिन्**शब्दाक्षरे **क्षीणे** विनष्टे यत्प्रसिद्धमक्षरमविनाश्यानन्दात्मरूपं

---

१ क. °ष्कले । भि° । २ घ. °श्चकर° ।

तदक्षीणमक्षरं विद्वाञ्शास्त्रतात्पर्यविदक्षरमुक्तं ध्यायेत्तदहमस्मीतिचिन्तासंततिं कुर्यात्। यद्यदि। इच्छेदिच्छां कुर्याच्छान्तिं सर्वदुःखोपरतिरूपां मोक्षावस्थामात्मनोऽविद्यादिक्लेशैः क्लिष्टस्याहंममाद्यभिमानिनः ॥ १६ ॥

इदानीं शब्दाक्षरं सकार्यं परं ब्रह्म ज्ञानार्थिना ज्ञेयमित्याह—

**द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत्[१]।**

**द्वे** उभे **विद्ये** विद्याशब्दप्रत्ययावलम्बने **वेदितव्ये तु** मुमुक्षुणाऽवगन्तव्ये एव। ते आह—**शब्दब्रह्म** सोंकाराः सव्याहृतिकाः साङ्गोपवेदाद्याः शब्दब्रह्मशब्दाभिधेयाः **परं च** परमपि ब्रह्माऽऽनन्दात्मरूपम्। चकार उक्तसमुच्चयार्थः। यत्प्रसिद्धं सत्यज्ञानादिलक्षणम्।

नन्वस्तु परं ब्रह्म ज्ञेयं पुरुषार्थपर्यवसायित्वात्तद्धानस्यान्यत्तु किमर्थं व्यर्थं कण्ठशोषकरं ज्ञेयमित्यत आह—

**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥**

**शब्दब्रह्मण्युक्ते निष्णातो** नितरां स्नातोऽवगतशब्दब्रह्मतात्पर्य इत्यर्थः। **परं ब्रह्मोक्तम्। अधिगच्छति** तदहमस्मीत्यधिकत्वेन प्राप्नोति ॥ १७ ॥

ननु शब्दब्रह्मत एव पुरुषार्थः श्रूयते "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इत्यादिनैकस्यापि शब्दस्य ज्ञानप्रयोगौ पुरुषार्थहेतू दर्शितौ किमुत भूयसामित्यत आह—

**ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः।**
**पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८ ॥**

**ग्रन्थं** शब्दब्रह्मस्वरूपं वाग्जालम**भ्यस्य** पाठतोऽर्थतश्च स्वाधीनं कृत्वा **मेधावी** श्रुतधारणशक्तिमान्। **ज्ञानविज्ञानतत्परः,** ज्ञानमहं ब्रह्मास्मीति साक्षात्कारो ध्यातृध्येयादिभेदशून्यो विज्ञानमहं ब्रह्मास्मीति ध्यातृध्येयादिभेदवद्विविधं शास्त्रीयम्। यद्वा ज्ञानं शास्त्रजन्यं विज्ञानं ब्रह्मसाक्षात्काररूपं ज्ञानविज्ञाने ते एव परे प्रयोजनभूते यस्य स ज्ञानविज्ञानतत्परः। त्यजेद्ग्रन्थमशेषत इत्यन्वयः। अयमर्थः—शब्दज्ञानात्प्रयोगाद्वा यत्फलमवगतं तदर्थवादरूपमवगन्तव्यमन्यथा तावतैव पुरुषार्थसिद्धौ को नामानेकार्थबहुलं कर्म कुर्यात्तस्मात्कर्मविध्यानर्थक्यपरिहाराय शब्दावगतार्थस्तुतये प्रयोगज्ञानादिफलं व्याख्येयं शब्दावगतश्चार्थः कर्मरूपो नाऽऽत्यन्तिकफलः सर्वदुःखमूलसंसाररूप इति तत्रापि स्तुतेर्मुख्यार्थस्याभावाज्जीवब्रह्मतादात्म्यलक्षणमेवार्थमवलम्बते। तथाच तत्रैव पुरुषार्थो न शब्दराशाविति तदेतद्दृष्टान्तेनाऽऽह—**पलालमिव**। यथा निर्गतकणं तुषात्मकं परित्यजतीति शेषः। कः। **धान्यार्थी** धान्यानि तण्डुलादिकणरू-

---

१ क. तत।

पाणि तेष्वर्थः प्रयोजनं यस्यास्ति स धान्यार्थी । तथा ज्ञानविज्ञानतत्परस्त्यजेत्पारित्य-जेत् । **ग्रन्थं** शब्दराशिम् । **अशेषतः** सर्वतः ॥ १८ ॥

ननु वेदानामनेकशाखाभेदभिन्नत्वात्कस्याः शाखाया वचनं ब्रह्मज्ञानहेतुत्वेनाङ्गीक-रणीयमित्याशङ्क्य दृष्टान्तेन यस्याः कस्या यासां कासांचिद्वा समानार्थानामङ्गीकरणी-यमित्याह—

**गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।**
**क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥**

**गवां** सास्नादिमतीनामनेकवर्णानां शुक्लकृष्णहरितलोहितपाटलादिवर्णानां **क्षीरस्य** पयसः स्तनेभ्यो निर्गतस्याप्येकवर्णता । अपिशब्द एवकारार्थः । शुक्लवर्णतैव न गोवद्वि-चित्रवर्णतेत्यर्थः । **क्षीरवद्यथा** क्षीरमेकवर्णं तद्वद्बुद्धिमान्विविधभेदाभ्यः शाखाभ्यः **पश्यते** पश्यत्यवगच्छति । **ज्ञानमहं** ब्रह्मास्मीतिबोधरूपम् । **लिङ्गिनस्तु** सांख्या-यनकौषीतकीमाध्यंदिनकठकाण्वतैत्तिरीयकौथुमनारायणीयाथर्वशिरस्तापनीयेत्यादिलिङ्गानि तत्तन्नामाङ्कभूतानि येषामनेकशाखाभेदवतामृगादीनां सन्ति ताल्लिङ्गिनः पुनर्विचित्रवर्णा-न्पश्यत इति पूर्वेणानुषङ्गः । तत्र दृष्टान्तमाह—**गवां यथा** गा यथैकार्थकारिणीस्तथेति शेषः ॥ १९ ॥

एवं सर्वासां श्रुतीनां विज्ञानकारणत्वमुक्त्वा पुनर्मनसः स्वाधीनस्याभावे तत्त्वमसी-त्यादिबोधो न जायत इत्यभिप्रायेणाऽऽह—

**घटमिव पयसि निगूढं भूते भूते वसति विज्ञानम् ।**
**सततं मन्थे भङ्ग मनसा मन्थानभूतेन ॥ २० ॥**

**घटमिव** घट इव घटाकारो नवनीतपिण्ड इव **पयसि** क्षीरे **निगूढं** नितरां संवृत-मनाविर्भूतस्वरूपमित्यर्थः । **भूते भूते** शरीरे शरीरेऽन्तःकरणादिके । भूतपदाभ्यासश्च-तुर्विधशरीरग्रहणार्थः । **वसति** निवासं करोति । **विज्ञानं** विज्ञप्तिरूपमानन्दात्मस्वरू-पम् । **सततं** निरन्तरं **मन्थ**ानुचिन्तयेत्यर्थः । **भङ्ग** भग भमात्मस्वरूपं स्वयंप्रकाशमानं गच्छति प्राप्तुमुद्यतो भवत्यधिकारी भगः । भग एव भङ्गस्तस्य संबोधनम् । **मनसाऽ-न्तःकरणेन मन्थानभूतेन** मथिभूतेन चिन्तनसाधनेनेत्यर्थः ॥ २० ॥

इदानीमात्मानं सर्वभूतगुहाशयं निधिमिव प्राप्नुयादित्याह—

**ज्ञाननेत्रं समादाय उद्धरेद्वह्निवत्परम् ।**
**निष्कलं निश्चलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१ ॥**

**ज्ञाननेत्रं** ज्ञानमहं ब्रह्मास्मीतिबोधरूपं तदेव ब्रह्मावलोकने कारणं ज्ञाननेत्रं **समा-**

---

१ क. °श्यते ज्ञा° । २ क. ख. °न्थयितव्यं म । ३ क. निष्क्रियं । ग. निर्मलं । ४ क. नित्यं । ५ क. °ह्मा द्वयमस्म्यहम् ।

दाय सम्यक्संशयाविपर्ययराहित्येन स्वीकृत्योद्धरेदुद्धरणं कुर्यात् । **वह्निवद्वह्निसमान-वर्णसुवर्णवत्** । **परं** निरतिशयं ब्रह्म । अथवा मध्ये च ज्ञाननेत्रं मथो विलोडनकारण-भूता रज्जुर्मथनाग्नेरपि जायमानत्वाद्वह्निवदिति प्रसिद्धो द्वितीयो दृष्टान्तः । इदानीं ज्ञानमनुकृत्याऽऽह—**निष्कलं निश्चलं शान्तं तद्ब्रह्माहम्** । निश्चलं विक्रियालेपशू-न्यम् । शान्तमविद्यादिदोषराहितम् । व्याख्यातमन्यत् । इतिर्ज्ञानानुकरणार्थः । **स्मृतं** चिन्तितमवगतं विद्वद्भिरित्यर्थः ॥ २१ ॥

ब्रह्मात्मनोः सामानाधिकरण्यस्योक्तत्वाद्ब्रह्मवासुदेवशब्दयोरैकार्थ्यमङ्गीकृत्य वासुदे-वशब्दार्थं दर्शयन्ती शास्त्रार्थमुपसंहरति—

**सर्वभूताधिवासं यद्भूतेषु च वसत्यपि ।**
**सर्वानुग्राहकत्वेन[1] तदस्म्यहं वासुदेवस्तदस्म्यहं**
**वासुदेव इति ॥ २२ ॥**

**ॐ भद्रं कर्णेभिः० । ॐ स्वस्ति न इन्द्रो० । ॐ शान्तिः शान्तिः शान्तिः ।**
**इत्यथर्ववेदेऽमृतबिन्दूपनिषत्समाप्ता ॥ ४ ॥**

**सर्वभूताधिवासं** निखिलस्थावरजङ्गमानामधिनिवासभूतम् । **भूतेषु च** चकार एवकारार्थः । तेष्वेव **वसत्य**धिनिवासं करोति च । अपिकार एकस्याऽऽधाराधेयत्वस-मुच्चयार्थः । **सर्वानुग्राहकत्वेन**ैकस्याऽऽधाराधेयत्वे हेतुरयं सर्वस्यानुग्राहकत्वेन हेतुना **तद्ब्रह्म** वासुदेवात्मक**मस्मि** भवामि । अहमानन्दात्मस्वरूपस्ततो भेदराहितो **वासुदेवः** सर्वाणि भूतानि मयि वसन्त्यहं सर्वेषु वसामीति । वासुदेवः स्वयंप्रकाशः । वासुश्चासौ देवश्च वासुदेवः । **तदस्म्यहं वासुदेवः** । व्याख्यातम् । वाक्याभ्यास उपनिषत्समा-प्त्यर्थः ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः
कृतिरमृतबिन्दूपनिषद्दीपिका समाप्ता ॥ ६ ॥

---

१ क. °न वासुदेवस्तदस्म्यहं वासुदेवस्तदस्म्यहमिति

ॐ तत्सद्ब्रह्मणे नमः ।

# आत्मोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ॐ अथैवाङ्गिरास्त्रिविधः पुरुषस्तद्यथा बाह्यात्माऽन्तरात्मा परमात्मा चेति । त्व[1]क्चर्म[2]नखमांसरोमाङ्गुल्यङ्गुष्ठपृष्ठी[3]वंशनखगुल्फोदरनाभिमेढ्रकट्यूरु कपोलभ्रुवौ ललाटबाहू पार्श्वशिरोधमनिकाक्षीणि श्रोत्राणि भवन्ति जायते म्रियत[4] इत्येष बाह्यात्मा नाम॥१॥

अथान्तरात्मा नाम पृथिव्यप्तेजोवाय्वाकाशेच्छाद्वेषसुदुःखकाममोहविकल्पनादिभिः स्मृतिलिङ्ग उदात्तानुदात्तह्रस्वदीर्घप्लुतस्खलितगर्जितस्फुटित[5]मुदितनृत्यगीतवादित्रप्रलयविजृम्भितादिभिः श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः

---

आत्मत्रयीपराऽऽत्मोपनिषत्खण्डत्रयान्विता ।
अष्टाविंशी ग्रन्थसंघे शाखा शौनकवर्तिता ॥ १ ॥

पिण्डग्रहणे विरक्तस्य परमात्मानं बोधयितुं शाखाचन्द्रन्यायेनाऽऽत्मद्वयं निरूप्य निरञ्जनं संसारातीतं परमात्मानं निरूपयितुमिदमारभ्यते—अथैवाङ्गिरा इति । अथ ब्रह्मणा देवर्षीन्प्रति पिण्डनिरूपणानन्तरं तद्विमोक्षार्थोऽङ्गिरा उवाचेति शेषः । बाह्यात्मादयो वक्ष्यमाणलक्षणाः । जायते म्रियत इति प्रत्याहारेण षड्भावविकारा गृह्यन्ते यास्कोक्तास्ते यथा—"जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यति च" इति । ये च पञ्चविंशतिस्त्वगादयो भवन्ति षड्भावविकाराश्च स बाह्यात्मा नामेत्यन्वयः । चर्म त्वङ्मध्यभागः । नखानि हस्तपादभेदेन द्विरुक्तानि । पृष्ठी कट्यूर्ध्वभागः । मेढ्रं लिङ्गम् । ऊर्वन्तः समाहारद्वंद्वः । कपोलसहिते भ्रुवौ ललाटसहितौ बाहू पार्श्वादिसहितान्यक्षीणि चक्षूंषि ॥ १ ॥

पृथिव्यादिविजृम्भितादिपर्यन्तैरुपलक्षितो विज्ञानात्मा बुद्धिमयः कर्मसामान्यस्य श्रवणादिलक्षणं विशेषणं यः करोति सोऽन्तरात्मेत्यन्वयः । स्मृतिलिङ्गोऽन्यथाऽन्तः-

---

१ ख. °त्वगस्थिमां° । २ ख. °सलोमाङ्गुष्ठ° । ३ ख. °ष्ठीवसन° । ४ क. °त एष । ५ क. °तनु° ।

पुराणं न्यायो मीमांसा धर्मशास्त्राणीति श्रवणघ्राणाकर्षणकर्मविशेषणं करोत्येषोऽन्तरात्मा नाम ॥ २ ॥

अथ परमात्मा नाम यथाक्षरमुपासनीयः स च प्राणायामप्रत्याहारसमाधियोगानुमानाध्यात्मचिन्तकं वटकणिका श्यामाकतण्डुलो वालाग्रशतसहस्रविकल्पनादिभिर्न लभ्यते[3] नोपलभ्यते। न[1] जायते म्रियते न शुष्यते न दह्यति न कम्पते न भिद्यते न च्छिद्यते निर्गुणः साक्षी भूतः। शुद्धो निरवयवात्मा केवलः सूक्ष्मो निष्कलो निरञ्जनो निरभिमानः शब्दस्पर्शरसरूपगन्धवर्जितो निर्विकल्पो निराकाङ्क्षः सर्वव्यापी सोऽचिन्त्योऽवर्ण्यश्च

करणं विना बाल्ये दृष्टं यौवने न स्मरेत्परिणामवशेन पिण्डभेदात्। स्वरितस्तूदात्तानुदात्तयोरेवान्तर्भूतः " तस्याऽऽदित उदात्तमर्धह्रस्वम् " शेषमनुदात्तमिति स्मरणात्तेनात्रानुपात्तः। ह्रस्वादयः स्वरधर्माः स्खलितादयो वर्णदोषाः ॥ २ ॥

ननु परमात्मा वाङ्मनोगोचरातीतत्वात्कथं ज्ञेय इत्याशङ्क्याऽऽह—**यथेति**। यथाक्षरं यथोपदेशमुपास्यो ज्ञेयं तं त्वौपनिषदं पुरुषं पृच्छामीति तस्य वेदैकगम्यत्वावगमात्। मनसैवानुद्रष्टव्यमिति श्रुतेरसंस्कृतेन मनसाऽग्राह्यत्वात्तत्संस्कारानाह—**प्राणायामेति**। प्राणायामादिभिर्योगैरनुमानेन वाऽध्यात्मचिन्तकं प्रति प्रकाशत इति शेषः। नन्वसौ विश्वभूर्विश्वेभ्योऽधिकप्रमाणः कथमप्रत्यक्ष इत्याशङ्क्याऽऽह—**वटकणिकेति**। यथा वटकणिका वटबीजं सूक्ष्माऽपि महान्तं वटं सूत एवमसौ सूक्ष्मोऽपि जगत्सूते श्यामाकतण्डुलः सूक्ष्मोऽपि महास्तम्बं सूते तद्वदसावित्यर्थः। ननु बीजवत्तन्निदृष्टीनां प्रत्यक्षोऽपि किं न स्यादत आह—**वालेति**।

" वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते " ॥

इति श्रुतेरतिसूक्ष्मत्वात्सर्वथाऽप्रत्यक्ष इत्यर्थः। न लभ्यते कर्मेन्द्रियैर्नोपलभ्यते ज्ञानेन्द्रियैः। जन्ममरणशोकक्लेददाहकम्पभेदच्छेदनिषेधैः क्रियामात्रं निषिद्धम्। निर्गुण इति गुणमात्रम्। साक्षी साक्षाद्द्रष्टा। भूतः सिद्धः। शुद्धः सहजमलरहितः। निरवयवात्मा स्वावयवभेदशून्यः। केवलः सजातीयविजातीयभेदशून्यः। सूक्ष्मो दुर्लक्षः[4]। निष्कलः षोडशकलारहितः। निरञ्जन आगन्तुकमलरहितः। निरभिमानोऽहंकारदोषरहितः। **शब्देति**। बाह्येन्द्रियदोषरहितः। निर्विकल्पो मनोदोषरहितः। निराकाङ्क्ष आशादिबुद्धिदोषरहितः। ननु सूक्ष्मश्चेत्कथमाकाशादीनामात्मप्रसाद इत्यत आह—**सर्वव्यापीति**। अत एव वालाग्रादिकल्पनाभिरित्युक्तम्। वस्तुतस्त्वणुमहत्त्वादि-

१ ख. °भ्राक। २ क. न म्रि°। ३ क. °ते भि°। ४ ग. दुर्लभः।

**पुनात्यशुद्धान्यपूतानि निष्क्रियः संस्कारो नास्ति संस्कारो नास्त्येष परमात्मा पुरुषो नाम ॥ ३ ॥**

**इत्यथर्ववेद आत्मोपनिषत्समाप्ता ॥ ५ ॥**

---

परिमाणरहित एव स्वमहिम्ना सर्वं व्याप्नोति भगवानत एव स ईश्वरोऽचिन्त्योऽवर्ण्यश्च । अशुद्धानि चाण्डालादीन्यपूतानि पापादिदुष्टानि सत्त्वानि निष्क्रियोऽपि ध्यानस्थः पुनाति । यद्यप्यागमशास्त्रे ज्ञानात्माऽपि चतुर्थ उक्तः शरीरान्तःकरणजीवपरमात्मभेदेन तथाऽपि जीवपरमात्मनोरभेदमाश्रित्येह त्रिधैवोक्तः ।

तदुक्तं गीतासु—

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः " इति ।

इदमात्मचतुष्टयं प्रणवस्याकारोकारमकारात्परं बिन्दुनादशक्तिशान्ताख्यावस्थाचतुष्टयात्मकं द्रष्टव्यम् । संस्कारः पूर्वप्रज्ञा स नास्ति । स्वतोऽसङ्गत्वात् । द्विरुक्तिः समाप्त्यर्था ॥ ३ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानामात्मोपनिषद्दीपिका ॥ १ ॥

इति श्रीनारायणविरचिताथर्ववेदान्तर्गतात्मोपनिषद्दीपिका समाप्ता ॥ ७ ॥

---

१ ग. °वस्थाका° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# आरुणेय्युपनिषत् ।

## नारायणशंकरानन्दविरचितदीपिकाभ्यां समेता ।

ॐ[1] आरुणिः[2] प्रजापतेर्लोकं जागम तं गत्वो-
वाच[3] केन भगवन्कर्माण्यशेषतो विसृजा[4]नीति तं

---

अथ नारायणदीपिकारम्भः ।

आरुणेयी पञ्चविंशी खण्डपञ्चकमण्डिता ।
प्रातिखण्डं द्विरुक्तिश्च खण्डावसितिसूचिका ॥ १ ॥

त्रिदण्डिसंन्यास उक्त इदानीं सर्वपरित्यागरूपं परमहंससंन्यासमुपदेष्टुमारुण्युपनिषदा-रभ्यते---**आरुणिरिति** । आख्यायिका विद्यास्तुत्यर्था विद्वत्संन्या[5]सोऽस्या विषयः । विष्णुपददर्शनं प्रयोजनम् । विद्वत्संन्यासस्य चित्ताविक्षेपेणाऽऽत्मनो निरन्तरानुसंधानं प्रयोजनम् । विद्वान्विवित्सुरधिकारी । यथा[6]योगं संबन्ध ऊह्यः । अरुणस्यापत्यमारुणिः । प्रजापतेर्ब्रह्मणः । केनोपायेन भगवन्---

"ऐश्वर्यस्य समग्रस्य धर्मस्यः यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥

तद्वांस्तेन प्रश्नार्हतोक्ता । कर्माणि संसृतिनिमित्तानि । इतिः प्रश्नसमाप्तौ । तं

---

अथ शंकरानन्ददीपिकारम्भः ।

आरुणेयोपनिषदं व्याख्यास्ये न्यासमार्गगाम् ।
आनन्दात्मानमायान्तीं गङ्गामिव पयोनिधिम् ॥

विषयादेश्च सर्वोपनिषदां साधारण्यान्न पृथग्वर्णनीयता । आत्मज्ञाने संन्यासेऽत्यन्त-मास्तिक्यं जनयितुमाख्यायिकामवतारयति---**आरुणिर्नामतः** प्राजापत्यः सौपर्णेयः । **प्रजापतेः** प्रजानां पालयितुः स्वपितुः । **लोकं** निवासस्थलम् । **जगाम** गतवान् । **तं** लोकं **गत्वा** प्राप्य । **उवाच** प्रजापतिं पितरमुक्तवान् । तदुक्तिमाह---**केन** प्रश्नार्थः किंशब्दः । पृच्छामि त्वां केनोपायेन । **भगवन्हे** पूजावन् । **कर्माणि** श्रौतस्मार्तान्य-नेकभेदभिन्नानि । **अशेषतोऽशेषाणि** । **विसृजानि** परित्यजानि । इत्यनेन प्रकारेण ।

---

१ व. ॐ भद्रं कर्णेभिः । आ° । २ घ. °णिः प्राजापत्यः प्र° । ३ क. °च भगवन्केन कर्मा° । ४ क. ग. घ. °जामीति । ५ ख. °न्यासो वि° । ६ घ. °योग्यं सं° ।

**होवाच प्रजापतिस्तव पुत्रान्भ्रातॄन्बन्ध्वादीञ्छिखां यज्ञोपवीतं च यागं च सूत्रं च स्वाध्यायं च भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं च। अतलपातालवितल*सुतलरसातलतलातलमहातलब्रह्माण्डं**

होवाच प्रजापतिरिति श्रुतेर्वचः प्रजापतिवचस्तवेत्यादि। तव त्वत्संबन्धिनस्त्वदीयान्ममत्वालम्बनान्बन्ध्वादीन्बन्धवो बान्धवा ज्ञातय उपकारिणश्चाऽऽदिशब्देन भार्यादयस्तान्। सूत्रं यागप्रतिपादको ग्रन्थः। स्वाध्यायो वेदराशिस्तदन्ता अष्टौ द्वितीयान्ताः। यज्ञोपवीतयागसूत्रस्वाध्यायेषु प्रत्येकं चशब्दैस्तत्संबन्धीनि संध्यावन्दनादिपुस्तकादिषडङ्गादीनि गृह्यन्ते। भूर्लोकादीनां सप्तानां समाहारद्वंद्वः। सत्यलोकं चेति। चात्प्रकृत्यादिसमुच्चयः। ऊर्ध्वलोकान्हेयत्वेनोक्त्वाऽधोलोकानाह—अतलेति। अतलादीनां सप्तानां ब्रह्माण्डेन सह समाहारद्वंद्वः। तानि च पातालरसातलपूर्वाणि तलानि। पाताले तलशब्दस्य दीर्घः। नितलं महातलमप्याहुः। पातालरसातलनितलसुतलतलातलवितलातलानि पादतलतदग्रगुल्फजङ्घाजानूरुतदूर्ध्वभागतयोपास्यानि तथैव क्रमेणैवोत्तरोत्तराणि तथाऽपि हेयतयाऽनास्थया व्युत्क्रमेण निर्दिष्टानि। ब्रह्माण्डं विराड्देहः। चादसद्विषयं मनोरथमपि विसर्जयेद्विसृजेत्। सर्वत्यागे कथं शरीरयात्रानिर्वाह

तमारुणिम्। ह किल। **उवाच प्रजापतिः**। स्पष्टम्। **तवा**ऽऽरुणेरहंममाभिमानिनः। **पुत्रान्भ्रातॄन्**। स्पष्टम्। **बन्ध्वादीन्**बन्धवो ज्ञातयोऽज्ञातयश्चोपकारिणः। आदिशब्देन भार्यादयो बन्धवश्च ज्ञातयश्च बन्ध्वादयस्तान्। **शिखां** मूर्धजा ग्रन्थिक्षमाः शिखेत्युच्यते ताम्। **यज्ञोपवीतं च** प्रसिद्धं नवगुणितं ब्राह्मणादीनाम्। **यागं च** ज्योतिष्टोमादिलक्षणम्। **सूत्रं च** यागप्रयोगप्रतिपादकं शास्त्रम्। **स्वाध्यायं च** स्वाध्यायशब्देन कर्मप्रतिपादकं मन्त्रब्राह्मणरूपं वेदराशिम्। चशब्दात्तदङ्गादिकमपि। कर्मफलभूतं लोकसप्तकमाह—**भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं च** भूर्लोकादिसप्तकं स्पष्टार्थम्। अत्र च द्वंद्वसमासेनैकवद्भावात्सप्तानामेकं पदं चकारात्प्रकृत्यादिकमपि। **अतलपातालवितलसुतलरसातलतलातलमहातलब्रह्माण्डं**

* °लनितलसु° इत्यपि क्वचित्पुस्तके।

१ क. °तं या°। ख. °तं सूत्रं च यागं च स्वा°। २ क. ग. °र्लोकं च भु°। ३ क. ग. °र्लोकं च स्व°। ४ ग. °र्लोकं च म°। ५ ग. °र्लोकं च ज°। ६ ग. °लोकं च त°। ७ ग. °लोकं च स°। ८ ख. °ध्यायादिधना°। ९ ध. °मेणोत्तरो°। १० ध. °येत्परित्यजेत्। स°।

**च विसर्जयेद्दण्डमाच्छादनं च परिग्रहेच्छेषं विसृजेच्छेषं विसृजेदिति ॥ १ ॥**

**गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेद्गायत्रीं**

---

इत्याशङ्क्य ग्राह्याण्याह—**दण्डमिति** । गोसर्पनिवारणार्थं दण्डं लज्जाशीतातपवृष्टिबाधानिवारणार्थमाच्छादनं च । चकाराज्जलपात्रं[3] च । परिग्रहेत् । व्यत्ययेन शप् । परिगृह्णीयात् । देहोपयोगि चेद्ग्राह्यं तर्हि मञ्चकौ योषादयोऽपि प्राप्नुवन्तीत्यत आह—**शेषं विसृजेदिति** । मञ्चकयोषादि प्राणात्ययेऽपि न गृह्णीयादित्यादरार्थोऽभ्यासः ॥ १ ॥

**ना०दी०** अधिकारिणो निर्दिशति—**गृहस्थ इत्यादिना** । लौकिकाग्नींल्लौकप्राप्तिहे-

---

च । न तलमतलम् । भूमिमारभ्याधोऽधोऽतलादीनि सप्त पातालानि । सप्तानामतलादिशब्दानां ब्रह्माण्डशब्दस्य च द्वंद्वसमासेनैकपद्यादेकवद्भावः । चकाराद्विद्यमानाविषयं मनोरथमपि । **विसर्जयेद्विसृज** । तव संबन्धि यत्किंचित्तत्सर्वं परित्यजेत्यर्थः । तर्हि किं शरीरयात्राया अपि परित्याग इत्याशङ्क्य नेत्याह—**दण्डं** गोसर्पनिवारणं वैणवम् । **आच्छादनं च** कौपीनयुगुलं कन्थादिकं लज्जाशीतातपवृष्टिबाधानिवारकमित्यर्थः । **परिग्रहे**त्परिगृह्णीयात्स्वीकुर्याद्भवान्भवादृशोऽन्योऽपि । ननु यथैतद्दण्डाच्छादनादिकं स्वीकार्यं देहबाधानिवारणाय तथा मञ्चकयोषिदादिकमपीत्याशङ्क्य नेत्याह—**शेषं** दण्डाच्छादनादिव्यतिरिक्तं मञ्चकयोषिदादिकं **विसृजे**त्परित्यजेत् । **शेषं विसृजेत्** । व्याख्यातम् । आदरार्थं वाक्याभ्यासः । प्राणात्ययेऽपि मञ्चकयोषिदादीनां परिग्रहो न करणीय इत्यादराभिप्रायः ॥ १ ॥

**शं०दी०** एवं सामान्येन संन्यासं पारमहंस्यलक्षणमभिधायेदानीमुक्तस्यैव व्याख्यानरूपमुत्तरं विशेषमाह—**गृहस्थः** स्नातकः सदृशीं भार्यां प्राप्य श्रौतस्मार्तकर्मानुष्ठानपरः । **ब्रह्मचारी,** उपकुर्वाणो नैष्ठिकः । **वानप्रस्थो वा** सदारो विदारो वा वनं प्रविष्टस्तृतीयाश्रमी । वाशब्दो वैराग्यावधित्वमसति यावज्जीवसंकल्प आश्रमान्तरविषये दर्शयति । **लोकाग्नी**ल्लोकफला **लौकिका** वाऽग्नयस्तान् । साग्निको निरग्निको वा संन्यासाङ्गभूतामिष्टिं विधायोदराग्नौ जाठरजातवेदसि ‘ या ते अग्ने ’ इत्यादिमन्त्रेण त्रिः पानपुरःसरं **समारोपये**त्समारोपणं कुर्यात् । **गायत्रीं च** प्रत्यक्षजप्यमानां संध्यात्रये सावित्रीं

---

१ क. ख. [illegible]पीनं प° । २ ख. स्थो वोपवीतं शि[illegible] भूमावप्सु वा विसृजेल्लौकि° । ३ घ. °त्रै प° । ४. ख. °कोष्णगाषा° ।

**च स्ववाचाग्नौ ×समारोपयेदुपवीतं भूमावप्सु वा विसृजेत्कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत्पात्रं विसृजेत्पवित्रं विसृजेद्दण्डांश्च लौकिकाग्नींश्च**

तून्श्रौतस्मार्ताग्नीनन्त्येष्टिं कृत्वोदराग्नौ सम्यग्गंश इत्यादि मन्त्रेण त्रिः पानपुरःसरं समारोपयेत् । ज्ञानिनोऽर्थप्राप्तेऽपि त्यागे चात्वाले निवृत्तप्रयोजनविषाणादिप्रक्षेपवदियमग्न्यादीनां शास्त्रीया प्रतिपत्तिः । गायत्रीं सवितृदेवत्यां चशब्दादन्यदपि मन्त्रजातं स्ववाचाग्नौ स्वीया वाचा वागेवाग्निस्तत्र 'भूः सावित्रीं प्रविशामि' इत्यादिमन्त्रैः समारोपयेत् । उपवीतं शुद्धोदकालाभे भूमौ शुद्धायां तल्लाभे शुद्धास्वप्सु वा 'भूः समुद्रं गच्छ स्वाहा' इति मन्त्रेण विसृजेत् । वाशब्दो व्यवस्थितविकल्पे । कुटीचरः कुटीचकस्त्रिदण्डी पुत्रगृह एव भिक्षानिरतो यः सः । उपलक्षणमिदं बहूदकहंसयोरपि । ब्रह्मचारिग्रहणं तस्य विशेषणम् । आश्रमिब्रह्मचारिण उक्तत्वात् । पालाशं बैल्वमित्यादिना तद्दण्डादित्यागस्य वक्ष्यमाणत्वाच्च । **कुटुम्बमिति** । पुत्रभिक्षानिरतस्य कुटुम्बे वाससंभवात् । पात्रं भिक्षापात्रम् । पवित्रं जलशोधनवस्त्रम् । दण्डांस्त्रीन्वैणवान् । चात्पूर्ववस्त्रादिकमपि । **लौकिकाग्नीनिति** । त्रिदण्डिनो वैश्वदेवाधिकारात् । लोकाग्नींश्चेति पाठे स्वतपोर्जितान् । चोक्त-

गायत्रीच्छन्दस्कां चशब्दादन्यदपि मन्त्रजातम् । **स्ववाचाग्नौ** स्वस्य संन्यासस्य कर्तुर्वाचा वाग्देवताऽग्निः स्ववाचाग्निस्तस्मिन् 'भूः सावित्रीं प्रविशामि' इत्यादिमन्त्रैः **समारोपयेत्** । व्याख्यातम् । **उपवीतं** यज्ञोपवीतं **भूमौ वाऽप्सु वा विसृजेत्** । वाशब्दो विकल्पार्थो विकल्पश्च व्यवस्थितः । मनोनुकूलानामपामभावे मनोनुकूलायां भूमौ सतीषु तासु च तत्रैव 'भूः समुद्रं गच्छ स्वाहा' इत्यनेन मन्त्रेण परित्यजेत् । इदानीमाश्रमविशेषाद्विशेषमाह—**कुटीचरः** त्रिदण्डी पुत्रभिक्षानिरतः । उपलक्षणमिदं बहूदकस्य हंसस्यापि यथायोगम् । **ब्रह्मचार्युक्तः** । उपलक्षणमिदं गृहस्थवानप्रस्थयोः । **कुटुम्बं** मातृ(ता)पित्रादिकं **विसृजेद्ब्रह्मचारी** परित्यजेत् । **पात्रं** भिक्षापात्रम् । **विसृजेत्** । व्याख्यातम् । **पवित्रं** जलपवित्रं वितस्तिमात्रं श्वेतम् । **विसृजेत्** । व्याख्यातम् । कुटीचकस्य कुटुम्बपरित्यागोऽप्यविरुद्धः पुत्रभिक्षानिरतस्य कुटुम्बे वाससंभवात् । दण्डांस्त्रीन्वैणवान् । कुटीचको विसृजेदित्यध्याहारः । **लोकाग्नीँल्लौकिकाग्नीन्** । ब्रह्मचारी दण्डमे-

× समारोपयेदुपवीतं शिखां भूमौ, इति क्वचित्पुस्तके पाठः ।

१ ष. °येत्कु° । २ क. °जेद्द° । ३ क °श्च विसृजेल्लोका° । ४ ध. °गन्नेरित्या° । ५ ध °णाथश्चे° । ६ ध. °स्त्रीयम° । ७ क. °तं शिखां शु° । ८ ध. °रतः । उ° । ९ ध. °चारि° । १० कुटीचक इति पाठः ।

विसृजेदिति होवाच । अत ऊर्ध्वममन्त्रवदाचरे-
दूर्ध्वगमनं विसृजेत्रिसंध्यादौ स्नानमाचरेत्संधिं
समाधावात्मन्याचरेत्सर्वेषु×वेदेष्वारण्यकमावर्तये-

दिन्धनादिकमपि । प्रत्येकं विसृजेदित्यावश्यकत्वार्थमुक्तम्। इति ह किलोवाचोक्तवान्प्रजापतिरारुणिम् । अत ऊर्ध्वं त्यागानन्तरममन्त्रवत्स्वाध्यायस्य विसृष्टत्वादाचरेत्स्नानाचमनादिकम् । नन्वमन्त्रस्य कथमूर्ध्वलोकप्राप्तिरत आह—ऊर्ध्वगमनं विसृजेदिति । भूर्लोकादेस्त्यक्तत्वात्पुनस्तद्वासनामपि त्यजेदित्यर्थः । तर्ह्याचारोऽप्यप्रयोजनस्त्यज्यतामित्याशङ्क्याऽऽह—त्रिसंध्यादौ स्नानमाचरेदिति । त्रिसृणां संध्यानामादौ प्राक्काले स्नानं मौसलम् । संध्यावन्दनकाले किं कार्यमत आह—संधिं समाधावात्मन्याचरेदिति । संधिः संधानं समाधिमाश्रित्याऽऽत्मनि स्वस्मिन्परमात्मना संधानमभेदमाचरेद्भावयेत् । स्वाध्यायस्य परित्याग उक्तस्तस्य प्रतिप्रसवमाह—सर्वेष्विति । निर्धारणे सप्तमी । आवर्तयेत्पाठतोऽर्थतश्चाभ्यसेत् । आरण्यकेषूप(षु प्र)वर्ग्यादीन्यपि कर्मार्थानि दृश्यन्ते किं तत्स-

खलादिकमनुक्तमपि विसृजेत् । स्पष्टम् । इत्यनेन प्रकारेण । ह किल । उवाचोक्तवान्प्रजापतिरारुणिम् । एतावत्तदुक्तमुक्त्वा श्रुतिरिदानीं स्वयमाह—अतोऽस्मात्परित्यागात् । ऊर्ध्वमनन्तरम् । अमन्त्रवन्मन्त्रराहित्येन । आचरेत्स्नानाचमनादिकं कर्म कुर्यात् । ऊर्ध्वगमनमौन्नत्यं विद्यावित्तादिमङ्क्षुतममुत्कर्षसंपादनमित्यर्थः । विसृजेत् । स्पष्टम् । त्रिसंध्यादौ तिस्रः संध्याः प्रातर्मध्याह्नापराह्णकालगतास्तासामादौ पूर्वं स्नानमाचरेत् । स्पष्टम् । संधिं संध्यं संधौ भवं संध्यावन्दनादिकं कर्म यथाऽवश्यं करणीयं तद्वत् । समाधावहं ब्रह्मास्मीत्येतद्बुद्धिसमाधानरूपे । आत्मन्यानन्दात्मनि स्वयंप्रकाशे सर्वकर्मशून्ये नैष्कर्म्यमार्गेणाऽऽचरेत्सर्वतः कुर्यात् । संधिच्छिद्रं वा जीवब्रह्मणोर्भेदरूपं समाधौ भेदशून्य आत्मनि स्वरूप आचरेत् । सर्वतो भक्षयेद्भेदगन्धं वारयेदित्यर्थः । सर्वथा बाह्यस्य संध्यावन्दनादेः कर्मणः परित्यागः संधिमित्यादिवाक्येनाभिधीयते । पूर्वं स्वाध्यायस्य परित्याग उक्तस्तस्यायं प्रतिप्रसवः । सर्वेषु निखिलेषु वेदेषु मन्त्रब्राह्मणात्मकेषु कर्मप्रतिपादकेष्वृगादिषु । आरणमारण्यकमरण्याध्ययनयोग्यमुपनिषद्भागमित्यर्थः । आवर्तयेत् । स्वाधीनोच्चारणं कृत्वा यथाशास्त्रमाऽऽत्मसाक्षात्काराज्ज्ञातार्थमज्ञातार्थं वा स्वस्य यच्चान्येषां यथावेदनेनाऽऽवर्तनेन सर्वदाऽभ्यासं कुर्यात् । आरणेषु प्रवर्ग्यादीन्यपि कर्माण्युपलभ्यन्ते किं तत्सहितस्याऽऽवृत्तिरित्याश-

× 'वेदेष्वारणमा' इति शंकरानन्दपाठः।

१ घ. °र्लोकादि° । २ घ. °ज्ञानादयत्त° । ३ घ. °रेद्।

दुपनिषदमावर्तयेदुपनिषदमावर्तयेत् ॥ २ ॥

**खल्वहं ब्रह्म सूत्रं सूचनात्सूत्रं ब्रह्म सूत्रमहमेव विद्वांस्त्रिवृत्सूत्रं**

हितस्याऽऽवृत्तिर्नेत्याह—**उपनिषदमिति** । ज्ञानप्रतिपादकं भागमभ्यसेत् । वाक्याभ्यास आदरार्थः । संन्यासो ह्युपनिषदावर्तनार्थस्तदनावृत्तौ ज्ञानापाटवेन पातित्यं स्यादित्यादरः ॥ २ ॥

**ना०दी०** तत्रापि परमामुपनिषदमावृत्त्यर्थमाह—**खल्वहं ब्रह्मेति** । इदं महावाक्यं सत्यं ज्ञानमनन्तं ब्रह्म तत्त्वमसीत्यादिवत् । खलु निश्चितमहमहंकारोपलक्षितं शोधितजीवचैतन्यं ब्रह्मैव न ततोऽन्यदिति ज्ञाते सर्वानर्थनिवृत्तिः परमानन्दावाप्तिश्च फलम् । ननु प्रपञ्चभेदे सति कथमनर्थनिवृत्तिरित्याशङ्क्य सूत्रपटन्यायेनाभेदं वक्तुं ब्रह्मणः सूत्ररूपकमाह—**सूचनात्सूत्रं ब्रह्मेति** । तन्तुर्हि स्वात्मनैवाऽऽतानवितानभूतेनाबुधं प्रत्यापातरमणीयं पटं सूचयञ्जनयन्सूत्रं भवति तथा ब्रह्मापि जगत्पटसूचनात्सूत्रं कारणातिरिक्तं कार्यं नास्तीति ब्रह्मैव सत्यमित्यर्थः । ननु सूचयितुर्मायया जीवो मुह्येदेवेत्याशङ्क्य सत्यमज्ञान इदं स्यादुत्पन्ने तु ज्ञानेऽहमेव सूचयिता कथं मुह्येयमित्याह—**सूत्रमिति** । यतो विद्वानतोऽहमेव सूत्रमित्यन्वयः । मायापतिनैक्येनानुगृहीतस्य कथं मायाभिभव इत्यर्थः । त्यागमुपसंहरति—**त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेदेति** । य एवं खल्वहं ब्रह्मेति वेद स विद्वांस्त्रिवृत्सूत्रं त्यजेदित्यन्वयः । विद्वत्संन्यासेनैवोपसंहारः । इदानीं सूत्रत्यागार्थं

क्च नेत्याह । **उपनिषदमहं** ब्रह्मास्मीति तादात्म्यलक्षणेन सामीप्ये(प्य)नाऽऽत्मानं गमयित्वा नितरामहंममादिग्रन्थीञ्शिथिलीकृत्याविद्यां सकार्यसंस्कारां सादयति विनाशयतीत्युपनिषद्ब्रह्मविद्या तत्प्रतिपादिका श्रुतिरपि सा ताम् । आरण्येष्वपि ब्रह्मप्रतिपादको भागोऽभ्यसनीयो न त्वन्य इत्यर्थः । **आवर्तयेदुपनिषदमावर्तयेत्** । व्याख्यातम् । वाक्याभ्यासस्त्वादरार्थः । संन्यासो ह्युपनिषदामावर्तनार्थं तदनावृत्तौ पातित्यं स्यादित्यादराभिप्रायः ॥ २ ॥

**शं०दी०** मन्वहं ब्रह्मास्मीत्यनुसंधानेनास्य संध्या भवतु तथाऽप्ययज्ञोपवीतसूत्रः कथमयं ब्राह्मणः स्यादित्यत आह । **खलु** निश्चितं प्रसिद्धं वा । **अहं** कर्तृत्वाद्यभिमानशून्यः । आनन्दात्मत्वेन निरतिशयप्रेमालम्बनः । **ब्रह्म** सत्यज्ञानादिलक्षणं जगज्जन्मादिकारणम् । **सूत्रं** जगत्पटारम्भकत्वेन । तदेतदाह । **सूचनाज्जगत्पटारम्भलक्षणात्सूत्रम्** । **ब्रह्म** । स्पष्टम् । अस्तु तथा ब्रह्म किं तवेत्यत आह । **सूत्रं** सूत्ररूपं ब्रह्म । **अहमेवोक्तरूपमहमेव** न तु मत्तोऽन्यत् । तत्र हेतुमाह । **विद्वान्** । इदमहमस्मीति जानाति यतः । इदानीं श्रुतिः स्वोपपत्तिमाह । **त्रिवृत्सूत्रं** सूत्ररूपोऽयं यस्मात्त्रिवृन्नवगुणितरूपं यज्ञोपवी-

१ घ. नापा° । २ ख. °थाऽपि ब्र° । ३ घ. °तित्वेन गृ° । ४ ग. माययाऽभि° । ५ ख. °त्यन्वयः । त्या° ।

**त्यजेद्विद्वान्य = एवं वेद संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिः कृत्वाऽभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते ।**

---

संन्यासप्रैषानाह—**संन्यस्तं मयेति** । **त्रिः कृत्वेति** । पाठेनैव त्रित्वे लब्धे त्रिरिति-वचनं त्रयाणामपि त्रिःपाठार्थम् । तत्रायमाम्नायः । एते त्रयोऽपि प्रैषाः सव्याहृति-कास्त्रिर्मन्द्रमध्यमोत्तमस्वरैरुच्चारणीया लोकत्रयीं श्रावयितुं त्रिरभिधानं प्रैषोच्चारणेन यस्त्यक्तं तत्पुनरभिलषन्वन्ध्यो निन्द्यो वध्यश्चेति बोधयितुम् । सम्यगपुनरादेयतया न्यस्तं संन्यस्तमित्यर्थः । प्रैषानन्तरमभयं सर्वभूतेभ्यो मत्त इति ब्रूयात् । मत्तः प्रकृतप्रैषात्सर्व-भूतेभ्योऽभयमस्तु । कुतोऽभयं दत्तमित्यत आह—**सर्वं प्रवर्तत इति** । मत्त इत्येव मत्त एव ब्रह्मणो यतः सर्वं प्रवर्तते न हि जनयितुरेव भयं युक्तमिति भावः । इदानीं दण्डा-

---

त्तसूत्रं **त्यजेत्**परित्यजेत् । सूत्रे सूत्रान्तरप्रक्षेपस्य वैयर्थ्यादित्यर्थः । **विद्वान**हं ब्रह्मा-स्मीतिज्ञानवान्कृतब्रह्मसाक्षात्कार इत्यर्थः । इदानीं विविदिषायामपि सूत्रपरित्यागं दर्श-यति । **यः** प्रसिद्धो नित्यानित्यविवेकादिसंपन्न **एवं** विदुषः सूत्रधारणस्य वैयर्थ्यम् । इत्युक्तेन प्रकारेण **वेद** जानाति सोऽपि त्रिवृत्सूत्रं त्यजेदिति संबन्धः । इदानीं सूत्र-त्यागार्थं संन्यासप्रैषानाह । **संन्यस्तं मया संन्यस्तं मया संन्यस्तं मया** । सम्यङ्न्य-स्तं संन्यस्तं परित्यक्तम् । लोकद्वयभाविकर्मफलं विनाशवत्तन्मया ब्राह्मणेन नित्यानि-त्यवस्तुविवेकवता शमदमादिसाधनसंपन्नेनेहामुत्रार्थभोगविरागवता मुमुक्षुणा हे लोक-त्रयनिवासिनः शृणुतेति लोकत्रयीं श्रावयितुं त्रिरभिधानम् । तथाच महाजनानां संसदि यथा स कश्चन गृहस्थो ब्रूते शृणुत ब्राह्मणाः सराजानः सप्रजा इदं गृहं क्षेत्रं वा मया परित्यक्तमित्येवं त्रिरभिधाय पश्चात्तद्विषयेऽभिलाषं कुर्वन्निन्द्यो बध्यश्च जायते तद्वल्लोकत्रयीसमक्षं मया संन्यस्तमित्युक्त्या तद्भोगस्याभिलाषं स्वीकारं कुर्वन्निन्द्यो बन्ध्यश्च भवति लोकत्रयनिवासिभिः । ततो मया संन्यस्तमिति प्रैषमुच्चार्य न कदाचि-दपि कस्मिन्नपि देशे कस्मिंश्चिदपि काले केनापि प्रकारेणाभिलाषं कुर्यादिति तात्पर्यार्थः । **एते** प्रैषास्त्रयोऽपि सव्याहृतिकास्त्रिर्मन्द्रमध्यमोत्तमस्वरैरुच्चारणीयाः । तदेतदाह । **इत्यनेन प्रकारेण** । **त्रिः कृत्वा** मन्द्रमध्यमोत्तमस्वरैस्त्रीनपि प्रैषांस्त्रिवारमावृत्यानन्तरम**भयं** भय-राहित्यम् । **सर्वभूतेभ्यः** स्थावरजङ्गमेभ्यः । **मत्तः** कृतप्रैषात्कर्मणा मनसा वाचा गच्छ-त्विति शेषः । अत्र मत्त इत्यन्ते स्वाहेति पठित्वा जलेन पूर्णमञ्जलिमनेन मन्त्रेण प्राच्या-मुदीच्यां वा प्रक्षिपेत् । मत्त इति पदं मन्त्रस्थं देहलीप्रदीपन्यायेन हृदये निधाय हेतु-माह । **सर्वं** स्थावरजङ्गमं निखिलं प्राणिजातं मत्तः **प्रवर्तत** उत्पद्यते । अयमाशयः ।

---

= 'एवमिति वेद' इति शंकरानन्दपाठः ।

**सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽ-**
**सीत्यनेन मन्त्रेण कृत्वोर्ध्वं वैणवं दण्डं कौपी-**
**नं परिग्रहेदौषधवदशनमाचरेदौषधवदशनमाचरे-**

दाने मन्त्रमाह—**सखेति**। त्वं सखाऽवञ्चकोऽसि मा मां गोसर्पादिभ्यो गोपाय। ओजो नाम शुक्रस्य परिणामो धातूनामष्टमी दशा तत्फलं तेजः शरीरशक्तिः। सखा यो यस्त्वं सर्वो दृष्टेऽदृष्टे कर्मण्यसि भवसीन्द्रस्य परमेश्वरस्य वज्रोऽसि भयंकरोऽस्येतावत्प्रतीकम्। मन्त्रस्तु शाखान्तरे संपूर्णः पठितः—"इन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव। यत्पापं तन्निवारय" इति। इतिशब्द इन्द्रस्य वज्रोऽसीति मन्त्रप्रतीकार्थः। **कृत्वोर्ध्वं वैणवं दण्डमिति**। अनेन मन्त्रेण वैणवं दण्डमूर्ध्वमुपरि दक्षिणकरे निधायेत्यर्थः। अत एव **संन्यासोपनिषद्यू**र्ध्वगोपायुरिति दण्डविशेषणम्। **वासुदेवोपनिषदि** चोर्ध्वदण्डयूर्ध्वरेता य ऊर्ध्वपुण्ड्रयूर्ध्वयोगवित्। स ऊर्ध्वं पदमाप्नोति यतिरूर्ध्वचतुष्कवानिति। कौपीनं लज्जाहेतुत्वात्कूपप्रवेशनमर्हतिं। कौपीनं पुंलिङ्गम्। तन्मात्राच्छादकत्वाद्यतिवासोऽपि कौपीनम् "शालीनकौपीने अधृष्टाकार्ययोः" इति साधुस्तदपि परिग्रहेत्। औषधवत्प्रीतिं विना शरीरस्थित्यर्थमशनं भोजनमाचरेत्। अभ्यासस्त्वादरार्थः। सर्वथा रसासक्तिं न कुर्यात्त्यागवैयर्थ्यभयादित्यादरः। इदानीं येषामकरणे महापातकिवत्पातित्यं तानि पश्चाऽऽवश्यकान्याह—

को नाम निर्घृणोऽपि स्वपुत्रान्हन्ति मत्पुत्रसमाश्चेमाः प्रजाः कथमहं तासां हिंसां कुर्यामिति। इदानीं दण्डादाने मन्त्रमाह। **सखा** यथा लोके सखायं सखा मरणान्तं न परित्यजति तथा त्वामहं न परित्यजामि त्वं च मां न परित्यज **मा** मां सखित्वेन स्वीकुर्वाणं **गोपाय** गोसर्पादिभ्योऽस्मिँल्लोके विपरीतप्रवृत्तेश्च रक्षणं कुरु। **ओजः** शरीरस्याऽऽन्तरं तेजोवीर्यवत्कर्मकारणं **सखा यः** सखा यो दृष्टादृष्टे कर्मणि। **असि** भवसि। **इन्द्रस्य** त्रैलोक्यस्य गोप्तुः परमात्मनः। **वज्रः** शत्रुभयंकरः। **असि** भवसि। इदं मन्त्रप्रतीकम्। मन्त्रस्तु शाखान्तरे पठितोऽयम्—"इन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव। यत्पापं तन्निवारय" इति। इत्यनेन। इतिशब्दश्चेन्द्रस्य वज्रोऽसीतिमन्त्रप्रतीकार्थः। **अनेना**त्र पठितप्रतीकेन शाखान्तरस्थेन **मन्त्रेण** स्वस्य मन्तुस्त्राणनान्मन्त्रस्तेन **कृत्वा** विधायोर्ध्वमुपरिष्टाद्दक्षिणे करे निधायेत्यर्थः। **वैणवं** वेणुजं **दण्डं** दुर्जनदमनकारणम्। **कौपीनं** कुत्सितस्य पीनस्य मांसस्याऽऽवरणमिदं कौपीनं **परिग्रहेत्**परिगृह्णीयात्। **औषधवद्य**था प्रीतिमन्तरेणौषधं भक्षयन्ति जनाः शरीरस्थित्यर्थं तद्वत्परमहंसः, **अशनमाचरे**दन्नस्य सर्वतो भक्षणं कुर्यात्। **औषधवदशनमाचरेत्**। व्याख्या-

१ ख. घ. °ज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेत्य°। २ °नं च प° इति क्वचित्पुस्तके। ३ ख गोपाय स°। ४ ब. °खाऽवृष्टे क°। ५ घ. °नीं—यदभावेन महा°।

**ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षतो३ हे रक्षतो३हे रक्षत३ इति ॥ ३ ॥ अथातः**

**ब्रह्मचर्यमित्यादि** । युवतीनां स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तिवर्जनं ब्रह्मचर्यम् । अहिंसा च मनोवाक्कायकर्मभिर्भूतानिष्टवर्जनम् । अपारिग्रह उक्तपरिग्रहव्यतिरिक्तवर्जनम् । सत्यं प्रियं हितं प्रमाणदृष्टार्थवचनम् । द्वौ चशब्दावुक्तसमुच्चयार्थौ । तृतीयोऽनुक्तास्तेयसमुच्चयार्थः । क्वचिदस्तेयं चेत्यपि पाठः । एतानि पञ्च यत्नेन हे यतयो रक्षतो३ रक्षतो३ द्वयोः प्लुतः । तृतीये पर्याये हे रक्षतेति प्लुतः । प्लुतिरुच्चैः श्रुत्यर्था सर्वानुच्चैः श्रावयति प्रजापतिः । त्रिरुक्तिरादरार्था । प्राणात्ययेऽप्येतानि न परित्याज्यानीति । इतिशब्द उपदेशसमाप्त्यर्थः । हेशब्दावुशब्दौ चाभिमुखीकरणे । हे, उ मुमुक्षवो ब्रह्मचर्यादीनि रक्षत पालयतावश्यमित्यर्थः ॥ ३ ॥

**ना०दी०** इदानीं ब्रह्मचर्यादिपञ्चकस्थैर्याय परमहंसस्य धर्मं पुनर्वेषमिषेणाऽऽह—**अथातः**

तम् । अभ्यासस्त्वादरार्थः । सर्वथाऽन्नं न परित्यजेत् । तस्य सर्वथा परित्याग आत्महिंसालोः पुरुषार्थपर्यवसायी संन्यासो न स्यात् । भक्षणेऽप्यन्नस्येदं मृष्टमिदं नेत्यासक्तिं न कुर्यात्तस्याः करणेन संन्यासभ्रेषः स्यादित्यादरार्थः । न चैतावताऽभक्ष्यस्य शरीरेऽनर्थकस्य वा भोजनं प्राप्तं यद्विहितं मेध्यं च तदश्नीयान्न त्वितरत् । गुणदोषौ न संकीर्तनीयाविति तात्पर्यार्थः । इदानीमौषधवदन्नप्राशनादिकं यदुक्तं तत्सर्वमेतदर्थमित्यभिप्रायेणाऽऽह । **ब्रह्मचर्यं** युवतीनां स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तीनां वर्जनम् । **अहिंसां च** कर्मणा मनसा वाचा भूतानिष्टवर्जनम् । **परिग्रहं च** कौपीनाच्छादनादिव्यतिरिक्तस्य शास्त्रनिन्दितस्य सर्वस्य द्रव्यजातस्य परिवर्जनम् । **सत्यं च** प्रियहितप्रमाणदृष्टार्थवचनम् । चकारत्रयमुक्तानामनुक्तस्यास्तेयस्य च संग्रहार्थम् । **यत्नेन** महता प्रयत्नेन **हे रक्षतो** हे जनाः स्वस्याभीष्टार्थचिन्तका रक्षणं कुरुत ब्रह्मचर्यादेः । उकारस्तत्र वक्ष्यमाणे चैकस्मिन्पर्याये छान्दसः प्लुत्यर्थो वा परेषां कथनार्थः । **हे रक्षतो हे रक्षतो** । व्याख्यातम् । त्रिरुक्तिस्त्वादरार्था । प्राणात्ययेऽप्येतानि न परित्याज्यानीत्यादराभिप्रायः । इतिरुपदेशसर्वस्वपरिसमाप्त्यर्थः ॥ ३ ॥

**शं०दी०** इदानीमेतेषामेव रक्षणार्थमुक्तमपि पारमहंस्यलक्षणं धर्मं पुनर्विशेषान्तरेण वक्तुमाह । **अथ** यथोक्तेन प्रकारेण प्रैषोच्चारणदण्डग्रहणानन्तरम् । **अतः**, यतो नैतावता पुरुषार्थः किं तु ब्रह्मचर्यादिरक्षणेन । ब्रह्मचर्यादिरक्षणं च स्वधर्मानुष्ठानेना-

१ क. °त्यं चास्तेयं च । २ ब. °तीयश्चकारोऽनु° । ३ घ. °र्थः । ए° । ४ घ. °सघ° ।

**परमहंसपरिव्राजकानामासनशयनाभ्यां भूमौ ब्रह्मचारिणां मृत्पात्रं वाऽलाबुपात्रं दारुपात्रं वा**

**परमहंसपरिव्राजकानामिति** । धर्मा वक्ष्यन्त इति शेषः । अथ प्रैषोच्चारणदण्डग्रहणानन्तरम् । यतो ब्रह्मचर्यादिरक्षणं विना न सिद्धिस्तच्च स्वधर्मत्यागे नेत्यतो धर्मा वक्ष्यन्ते केषां परं केवलमहं स परमात्मा न ततोऽन्योऽहमिति निश्चिताः परमहंसाः परिव्रजन्ति गृहबन्धं परित्यज्य परिव्राजकास्ते च ते तेषाम् । **आसनशयनाभ्यां भूमाविति** । भूमावेवाऽऽसनेन दिवा शयनेन रात्रौ कालं नयेतेति शेषः । आसनं स्वरूपावस्थानं शयनं बाह्यविषयविस्मृतिः । **तदुक्तम्**—"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" इति । तेन पर्यङ्कादिपरित्यागेऽपि स्वरूपविस्मृतौ विषयचिन्तने चाकृतार्थ एवेति भावः । **ब्रह्मचारिणामिति** । तेषामेव विशेषणम् । उपलक्षणमेतदहिंसासत्यास्तेयापरिग्रहवतामित्यपि ज्ञेयम् । उदकव्यवहारार्थं पात्राण्याह—**मृत्पात्रं वाऽलाबुपात्रं दारुपात्रं वेति** । अलाबुस्तुम्बीफलम् । अशनपात्रं तु वक्ष्यति पाणिपात्रमुदरपात्रं वेति । वाशब्दावस्थानायां यथालाभमतैजसानि पात्राणि स्युरिति । तव पुत्रानित्यादिना बाह्यानि त्याज्यान्युक्तानि वैणवं दण्डमित्यादिना बाह्यानि ग्राह्याणि । खल्वहं

स्माद्धेतोः । **परमहंसपरिव्राजकानां** परम आनन्दात्माऽहमस्मीति हन्ति गच्छति जानातीति परमहंसः । परितः समन्ताल्लोकद्वयेऽपि व्रजति त्यजति संसारदुःखमिति परिव्राजकः । परमहंसश्चासौ परिव्राजकश्चेति परमहंसपरिव्राजकः । तेषां धर्मा वक्ष्यन्त इति शेषः । **आसनशयनाभ्यामासनं** स्वस्तिकाद्यन्यतमं स्वाभ्यस्तं शयनं शयनवन्नैश्चल्यं मूर्ध्नावस्थानम् । अथवाऽऽसनमनात्मवस्तुविषये परित्यागेनोपवेशनं शयनं तस्य चिन्ताराहित्यम् । अथवा प्रसिद्धे एवाऽऽसनशयने तत्राभिप्रायस्त्वयं प्रथमत आसनमुपवेशनं वा करणीयं तस्मिंश्चेदुपवेष्टुमशक्तस्तस्य वरं शयनं न तु बाह्यविषयार्जनाचिन्तनादिकमिति । आसीनः शयानो वाऽऽत्मानं चिन्तयेदित्यर्थः । ताभ्यां कालं नयेन्न त्वन्येनेति शेषः । **भूमावासनार्थं** शयनार्थं वा न मञ्चकादिकं संपादयेत्किं तु पृथिव्यामासनशयनाभ्याम् । तत्रापि ब्रह्मचर्यादीनां प्राधान्यार्थमाह । **ब्रह्मचारिणां** ब्रह्मणो ब्रह्मचर्यस्योक्तस्याऽऽचरणमनुष्ठानमाचारो येषां नित्यमस्ति ते ब्रह्मचारिणस्तेषाम् । उपलक्षणमेतदहिंसासत्यास्तेयापरिग्रहवताम् । उदकभिक्षाद्याहरणार्थं पात्राण्याह । **मृत्पात्रं** शरावकरकादिकम् । **अलाबुपात्रं दारुपात्रं वा** । स्पष्टम् । वाशब्दः पाणिपर्णोदरादिसमुच्चयार्थः । यथाप्राप्तमेतेषामन्यतमं भवतीत्यर्थः । इदानीं वर्ज्यानाह ।

१ ख. °त्पात्रमला° । २ ख. °त्रं वा दा° ।

कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारानृतादीनपि[1] त्यजेद्वर्षासु ध्रुवशीलोऽष्टौ[2] मासानेकाकी यतिश्चरे-

---

ब्रह्मेत्यादिनाऽऽन्तरं ग्राह्यमुक्तम् । संप्रत्यान्तराणि त्याज्यान्याह—**कामेत्यादिना ।** कामो मैथुनेच्छा विषयमात्राभिलाषो वा । क्रोधः कामविघानु(घात)जः कामानुजः प्रज्वलनात्मकः । लोभ उपात्तस्यौ[3]तित्यक्षा । मोहोऽनित्याशुचिदुःखानात्मनि शरीरे नित्यशुचिसुखात्मबुद्धिः । दम्भो धर्मध्वजित्वम् । दर्पो गर्वः परावज्ञानेन स्वात्मन्याधिका बुद्धिः । असूया परोत्कर्षासहिष्णुता । ममत्वं परस्मिन्स्वसंबन्धिबुद्धिः । अहंकारो जातिगुणकर्माभिमानः । अनृतमप्रियाहिताप्रमाणदृष्टार्थवचनम् । आदिशब्देन हर्षशोकादिद्वंद्वानि गृह्यन्ते । कामादीनां दशानां द्वंद्वस्तत आदिशब्देन बहुव्रीहिः । तानि त्यजेन्न पुनः स्मरेत् । परिव्राजकसंज्ञया परितो व्रजनकर्तृत्वे प्राप्ते तदपवादमाह—**वर्षासु ध्रुवशील इति ।** अग्रेऽष्टावित्युक्तेः पञ्चर्तुपक्षे चतुरो मासा वर्षास्तासु ध्रुवं शीलमस्य । ध्रुव इत्येव सिद्धे शीलग्रहणं कीटाकुलायां भूमौ सर्वथाऽटननिषेधार्थम् । शेषे[4]ष्वर्थसिद्धमटनमनुजानाति—**अष्टौ मासानेकाकी यतिश्चरेदिति ।**

" बहूनां कलहो यस्माद्द्वयोर्वार्ता भवेद्यतः ।
एक एव चरेद्विद्वान्कुमार्या इव कङ्कणम् " ॥

---

**कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारानृतादीनपि** कामो मैथुनेच्छा विषयमात्राभिलाषो वा । क्रोधः स्वविषयविच्छेदके हेतावनिष्टार्थो मनोधर्मविशेषः । लोभो विद्यमानस्यापरित्यागः । मोहोऽनित्याशुचिदुःखानात्मके शरीरे नित्यशुचिसुखात्मबुद्धिः । दम्भो धर्मध्वजित्वम् । दर्पो लोकतिरस्कारकारणं मनोधर्मविशेषः । स्वात्मन्याधिक्यबुद्धिरित्यर्थः । असूया स्वव्यतिरिक्तजनगुणासहिष्णुत्वम् । ममत्वमिदं ममेष्टमिदमनिष्टमित्येवं बुद्धिः । अहंकारोऽहं मनुष्यो ब्राह्मणः संन्यासी कर्ता भोक्तेत्यादिरूपः । अनृतमप्रियमहितमप्रमाणदृष्टार्थं वचनम् । आदिशब्देन वचनपरिभावादिकं गृह्यते । कामादिष्वनृतान्तेषु द्वंद्वसमासो वक्तव्यः । उक्तान्कामादीनपिशब्देनानुक्तान्बाह्यांश्चेतनाचेतनांश्च त्यजेत्त्यागं कुर्यात् । **वर्षासु,** आषाढादिमासचतुष्टये । इदं पञ्चर्तुपक्षाभिप्रायं न तु पक्षा वै मासा इत्याभिप्रायम् । **ध्रुवशीलो**ऽवस्थानशीलः । **अष्टावष्टसु** माःसु मासेषु । **एकाकी** सहायशून्यः । सत्यपि सहाय एकाकी रागद्वेषशून्यो वा । **यति**रिन्द्रियनिग्रहे प्रयत्नवान् । **चरे**द्यश्चास्तमितशायी समुद्रमेखलां भूमिं पर्यटेत् ।

---

१ च. °दीन्परित्य° । २ ख. °ष्टौ माःसेका° । ३ प. °स्यापरित्यागः । मो° । ४ ख. °षेषु नामधेयसि° । ५ ख. °सिद्धार्थमनु° ।

दूद्वावेव वा चरेद्द्वावेव वा चरेत् ॥ ४ ॥
खलु वेदार्थं यो विद्वान्सोपनयनादूर्ध्वं स तानि
प्राग्वा त्यजेत्पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं

समानशीलत्वे द्वितीयमनुजानाति—द्वावेव वा चरेदिति । अध्यात्मकथारसव्यसने तु द्वावेव मिलित्वा चरेत् । चरेतामिति वक्तव्ये चरेदित्युक्तिरेकचित्ततामावेदयितुम् । वाशब्दोऽनास्थायाम् । एकचित्तानां दशानामपि जायन्ते यतीनां सहाटनस्मरणात् । एवकारो भिन्नशीलव्यावृत्त्यर्थः । वाक्याभ्यास आदरार्थः ॥ ४ ॥

ना० दी० संन्यासे यथाऽऽश्रमक्रमनियमो नास्ति तथोपनयनस्यापि नास्तीत्याह—खलु वेदार्थं यो विद्वानित्यादिना । वेदार्थं विद्वानिति न लोकेति षष्ठीनिषेधः । सोपनयनादिति संधिरार्षः । तानि पूर्वोक्तानि । एतानीति पाठे वक्ष्यमाणानि । प्राग्वा त्यजेदिति । यस्तु प्राग्भवीयानन्तसुकृतवशादुपनयनमन्तरेणापि केनचिन्निमित्तेन विज्ञातवेदार्थः स तूपनयनात्पूर्वमपि त्यजेत् । तथा स्मर्यन्ते हि—"भरतैतरेयकदुर्वासन्यासशुकादयः" प्राक्त्यागपक्षे यानि बाल्ये दुस्त्यजानि तान्यपि त्याज्यान्येवेत्याह—पितरं पुत्रमग्निमुपवीतं कर्म कलत्रं चेति । चान्मातरम् । पितरं पुत्रो यतिस्त्यजेत्पुत्रं यतिः पिता त्यजेत् । अग्न्याद्युपनीतविषयम् । चशब्देन समुच्चितं सामान्येनाऽऽह—

कीटवत् । अथ कुतश्चिन्निमित्तादेकाकित्वेन भूमिं पर्यटितुमशक्तस्तदा द्वावेव वा समानचित्तौ गुरुशिष्यावेकगुरुशिष्यौ वाऽन्यौ वा यौ कौचिन्न त्वेताभ्यामधिकौ । तथाच राजभिक्षादिवार्ताकलहादिकं च स्यात् । वाशब्दः पक्षान्तरार्थस्तस्यायमाशयः । एकाक्यनेकाकी साधर्म्यमपीडयन्पर्यटेदिति । चरेत्, द्वावेव मिलित्वा पर्यटेत् । द्वावेव वा चरेत् । व्याख्यातम् । आदरार्थं वाक्याभ्यासः । एकत्रावस्थाने रागद्वेषादिकं स्यात्ततः पर्यटनमेकाकित्वेनानेकाकित्वेन वा सर्वथा करणीयमित्यादरार्थाभिप्रायः ॥ ४ ॥

शं० दी० खलु निश्चितं प्रसिद्धं वा । वेदार्थं वेदानामृगादीनां जीवब्रह्मणोरेकत्वलक्षणोऽर्थस्तम् । यः प्रसिद्धः शरीराद्यभिमानशून्यः । विद्वान्विजानन् । सोपनयनात्स वेदार्थविदुपनयनादध्ययनाङ्गसंस्काराद्द्विजातित्वप्रयोजकात् । ऊर्ध्वमनन्तरम् । स कृतोपनयनः । तानि कामक्रोधादीनि । प्राग्वोपनयनात्पूर्वं वा वाशब्दो व्यवस्थितविकल्पार्थः । यस्तु प्राग्भवीयानन्तसुकृतवशादुपनयनमन्तरेणापि केनापि निमित्तेन विज्ञातवेदार्थः स तूपनयनात्पूर्वं न त्वन्यः । त्यजेत्परित्यजेत् । इदानीं त्याज्यान्यन्यान्यथाऽऽह । पितरं जनकम् । पुत्रं तनयम् । अग्न्युपवीतमग्निर्लौकिको वैदिको वा । उपवीतं स्पष्टम् । कर्म श्रौतं स्मार्तं च । कलत्रं च भार्यामपि । चशब्दसूचितमर्थं

१ क. ग. घ. °चरोदीति । २ क. ग. घ. °दूर्ध्वमेता° । ३ घ. खल्विति । सो° । ४ ख. °नादूर्ध्वमिति ।

**चान्यदपीह यतयो[1] भिक्षार्थं ग्रामं प्रविशन्ति । पाणि[2]पात्रमुदर-पात्रं वा । ॐ हि ॐ हि ॐ[3] हीत्येतदुपनिषदं विन्यसे[4]द्विद्वान्य एवं**

---

**अन्यदपीहेति** । अन्यद्गृहक्षेत्रादिकम् । अपिशब्दाद्यद्यस्य स्वभावप्रियं स तदपि त्यजेत् । यतेरग्रामवासश्च कर्तव्य इत्याह—**यतय इति** । विशेषविधिः शेषनिषेधफलो ब्राह्मणैः प्रवेष्टव्यमितिवत् । तेनान्यदा ग्रामं न प्रविशन्तीत्यर्थः । जलपात्रवद्भिक्षापात्रं संग्राह्यं नेत्याह—**पाणिपात्रमुदरपात्रं वेति** । कर्मधारयौ पाणी अञ्जलिः पाणिर्वा पात्रमुदरं ग्रासार्थं मुखप्रसारणेन पात्रम् । वाशब्दोऽनास्थायाम् । तेन भूम्यादिकमपि । भिक्षादौ जप्यं मन्त्रमाह—**ॐ हीति** । मन्त्रार्थस्तु हि निश्चितं सर्वमों परमात्मैव । त्रिरावृत्तिर्जपप्रकारप्रदर्शनार्था । ओंकारस्यैव प्राधान्येऽपि हिशब्दः संधिव्यावृत्त्यर्थः । तस्य कल्पोक्तान्न्यासानपि कुर्यादित्याह—**विन्यसेदिति** । उपनिषदशब्दोऽकारान्तो नपुंसकम् । यद्वैषा चासावुपनिषच्च तां रहस्यज्ञानमुपनिषदुपचारान्मन्त्रोऽपि । न्यासप्रकारस्तु प्रणवकल्पवदवसेयः । उपासनाफलमाह—**विद्वान्य एवं वेदेति** । ब्रह्मचर्यादिभिर्य एवंगुणकमोंकारं शब्दतो न्यासतोऽर्थतश्च वेद विदित्वा चाभ्यसति स विद्वान्भवति । यथोक्तं ब्रह्म साक्षात्करोतीत्यर्थः । इदानीं ब्रह्मचारिणां संन्यासे कर्तव्ये पूर्वदण्डेनैव

---

स्वयमाह । **अन्यदपि** गृहक्षेत्रादिकम् । अपिशब्देनोक्तमनुक्तमपि सर्वम् । **इहा**स्मिँल्लोके । इदानीमग्रामवासश्च करणीय इत्येतदर्थमाह । **यतय** इन्द्रियनिग्रहप्रयत्नवन्तः । **भिक्षार्थं** माधुकराद्यन्यतमयोदरपूरणार्थम् । **ग्राम**मनेकजननिवाससंकुलं देशम् । **प्रविशन्ति** । स्पष्टम् । पूर्वमनुक्तं पात्रजातं प्रसङ्गेनाऽऽह । **पाणिपात्रं** पाणिरञ्जलिर्दक्षिणपाणिर्वा भिक्षार्थं पात्रं पाणिपात्रम् । वाशब्द उक्तानामनुक्तानां च पात्राणां समुच्चयार्थः । इदानीमनेन भिक्षादौ जप्यं मन्त्रमाह । ॐ हि । हि हेत्वर्थे । यस्मादोंकार एव सर्वा वाक्तस्मादोंकार एव जप्यः संन्यासिना सर्वदा सर्वकर्मसु । अकारोकारमकारार्धमात्राभिर्विराड्ढिरण्यगर्भेश्वरब्रह्मार्थपरत्वाच्चोंकारः सर्वात्मा । **ॐ हीति** । व्याख्यातम् । त्रिरभ्यास ओंकारजप आदरार्थः । **एतदोंकाराख्यम्** । **उपनिषदमुप** सामीप्येनाहं ब्रह्मास्मीति गमयित्वा नितरामहंममादिग्रन्थीञ्शिथिलीकृत्याविद्यां सकार्यसंस्कारां सादयति विनाशयतीत्युपनिषत्तद्धेतुः प्रणवोऽप्युपनिषत्ताम् । **विन्यसे**द्गुरूपदिष्टेन मार्गेण तस्मिंस्तस्मिन्नङ्गे विविधन्यासं कुर्यात् । **विद्वान्**व्याख्यातम् । **य एवं वेद** । यः प्रसिद्धः संन्यासी पूर्वोक्तगुणविशिष्टः । एवमुक्तेन प्रकारेणोंकारं संन्यासादिभिरा ब्रह्मसाक्षात्काराद्गुरूपदिष्टेन मार्गेण वेद जानाति स विद्वान्ब्रह्मसाक्षात्वान् । भवतीति शेषः । इदानीं ब्रह्मचारिणां संन्यासे कर्तव्ये पूर्वदण्डेनैव दण्डित्वनिवारणार्थं

---

१ °यो हि भि° इति क्वचित्पुस्तके । २ ‘पाणिपात्रं वा’ इति शंकरानन्दपाठः । ३ ख. ॐ ह्येतद्विन्य° । ४ ख. °सेदुप निषदं विद्वा° । ग. °सेत्खल्वेतामुपनिषदं विद्वा° । ५ ग. °कल्पाद्° । ६ ग °णमों° । ७ ख. °भ्यसति ।

**वेद । पालाशं बैल्वमौदुम्बरं दण्डमजिनं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।**

दण्डित्वनिरासार्थमाह—**पालाशमित्यादि** । अत्र दण्डस्य पलाशादिप्रकृतित्रयं त्रैवर्णिकाभिप्रायम् । द्वयोरनधिकारेऽपि ब्राह्मणस्यैव पूर्वालाभ उत्तरग्रहणसूचनार्थम् । "काषायं ब्राह्मणस्यैक्तं नान्यवर्णस्य कस्यचित्" इति स्मृतेरन्ययोर्नाधिकारः । अजिनमेखलयोः पूर्वमनुक्तत्वादुपादानम् । उपवीतस्य तस्यैव दण्डबन्धनशङ्कानिरासार्थं यज्ञोपवीतं चेत्युक्तम् । चकारो लौकिकाग्निसमिद्धोमादीनां समुच्चयार्थः । त्यक्त्वा परित्यज्य शूरो भवेदिति शेषः । न हि त्यागमात्रेण कृतार्थः किं तु शूरो मनोरिजये स्यात् । **तदुक्तम्**—"न हि संन्यसनादेव सिद्धिं समधिगच्छति" इति । कः शूर इत्यत आह—**य एवं वेदेति** । यो विदितवेदार्थः संन्यासं सत्यधिकारे कर्तव्यत्वेन वेद जानाति **स** शूरः साधकश्रेष्ठः । उक्तसंन्यासफलावेदकमृग्द्वयमुदाहरति—**तद्विष्णोरित्यादि** । सूरयो दिव्यदृष्ट्या तन्मुक्तोपसृप्यं विष्णोः परमं पदं सदा पश्यन्ति तस्य नित्यत्वात् । स्वरूपे दृष्टान्तमाह—**दिवीति** । निर्मलाकाश आततं व्याप्तं चक्षुर्यथाऽऽवरकाभावाद्वितत निर्विकल्पकज्ञानं भवति तथा विकल्पशून्यं चिद्घनं तदित्यर्थः । ननु कथं तदज्ञैर्ल-

मयमुपक्रमः । **पालाशं** ब्रह्मव्रतोद्भवम् । **बैल्वं** श्रीवृक्षजम् । **औदुम्बरं** जन्तुफलवृक्षजम् । **दण्डम्** । व्याख्यातम् । अत्र दण्डस्य पलाशादिप्रकृतित्रयं त्रैवर्णिकाभिप्रायं ब्राह्मणस्यैव वा पूर्वपूर्वलाभाभावाभिप्रायमवगन्तव्यम् । **आजिनं** कृष्णाजिनम् । **मेखलां** मौञ्जीम् । **यज्ञोपवीतं च** । स्पष्टम् । चकारो लौकिकाग्निसमिद्धोमादीनां समुच्चयार्थः । **त्यक्त्वा** परित्यज्य । **शूर** इन्द्रियारातिभिरप्रकम्पितस्वभावः । भवेदिति शेषः । कः । **यः** प्रसिद्धो विज्ञातवेदार्थः । **एवं** ब्रह्मचर्याद्याश्रमेभ्योऽपि सति वैराग्ये संन्यासं करणीयमुक्तेन प्रकारेण **वेद** जानाति । नन्वेवं संन्यासे कृते कोऽस्य पुरुषार्थ इत्यत आह । **तत्** । सत्यज्ञानादिलक्षणं ब्रह्म वाङ्मनसातीतम् । **विष्णो**र्व्यापनशीलस्य तस्यैव । षष्ठी शिलापुत्रकस्य शरीरमितिवदभेदेन द्रष्टव्या । **परम**मुत्कृष्टमनौपम्यस्वभावमित्यर्थः । **पदं** पद्यते गम्यत आत्मत्वेनाहं ब्रह्मास्मीति ज्ञानेनेति पदम् । **सदा** कालत्रयेऽपि । **पश्यन्ति** विष्णोस्तत्पदं वयं स्म इति साक्षात्कुर्वन्ति । **सूरयः** कृतसंन्यासाः पण्डिताः । **दिवीव** स्वयंप्रकाशे स्वरूपे वर्तन्ते । **इव** । इवकार आधाराधेयभावनिवारणार्थः । **चक्षुः** । **चष्ट** इति चक्षुः स्वयंप्रकाशमित्यर्थः । **आततं** विस्तृतं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः ।

१ ख. °लां शिखां य° । २ घ. °तं त्य° । ३ ध. संन्यासी । ४ घ. °स्योक्तो ना° । ५ ध. °स्य द° । ६ घ. °रोऽन्यथाऽनधिकारी भ° । ७ ख. °नोविज° । ८ घ. तदैवं लभ्य° ।

**तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमित्येवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमिति ॥ ५ ॥**

---

भ्यमित्याशङ्कच गुरूपदेशादित्याह—**तद्विप्रास इति** । छान्दसोऽसुक् । ब्राह्मणानामेवोपदेशाधिकार इति विप्रग्रहणेन सूचितम् । विपन्यवो विमन्यवः । छान्दसो वर्णव्यत्ययः । कामक्रोधादिरहिताः । पन स्तुतौ पन्युः स्तुतिस्तद्रहितास्तुल्यनिन्दास्तुतय इति वा । जागृवांसस्त्यक्ताज्ञाननिद्राः । **तदुक्तम्**—"या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इति । समिन्धते सम्यग्दीपयन्ति परहिताय प्रकाशयन्ति । किं तत् । यद्विष्णोः परमं पदं पदनीयं मुक्तोपसृप्यं स्थानं स्वरूपात्मकमेव । विप्रोपदेशादेव तल्लभ्यमिति भावः । इतिशब्दो मन्त्रद्वयसमाप्त्यर्थः । उपसंहरति—**एवं निर्वाणानुशानमिति** । वातेर्भावे क्तः । निर्वाणो वात इति निष्ठानत्वं निर्वाणमुपशान्तिर्मोक्ष इति यावत् । तस्यानुशासनमेवं द्रष्टव्यम् । ननु किमिदं प्रजापतेरनुशासनमोमिति चेत्तथा सति पौरुषेयत्वेनाप्रामाण्यशङ्का स्यादित्याशङ्कयाऽऽह—**वेदानुशासनमिति** । आरुणिप्रजापत्याख्यायिका तु विद्यास्तुत्यर्थैव । वेदस्य शब्दराशेः सर्वज्ञस्य सर्ववर्णाश्रमादिव्यवस्थाहेतो राजकल्पस्यानुशासनम् । तदकरणे संसारमूले तस्करादेरिवं निक्षेपः स्यात् । अभ्यासोऽन्येषामपि वेदानामेतावदर्थपर्यवसायित्वमित्येतदर्थः । इतिशब्द उपनिषत्समाप्त्यर्थः ॥ ५ ॥

---

तदुक्तं वैष्णवपदम् । **विप्रासो** विप्रा द्विजोत्तमाः । **विपन्यवो** विमन्यवः कामक्रोधादिरहिताः कृतसंन्यासाः परमहंसा इत्यर्थः । **जागृवांसो** जागरणवन्तोऽज्ञाननिद्रारहिता इत्यर्थः । **समिन्धते** सम्यग्दीप्यन्तेऽस्मदादीन्प्रति कथयन्तीत्यर्थः । तच्छब्दार्थमाह । **विष्णोर्यत्परमं पदम्** । यत्प्रसिद्धं सर्वेषु वेदेषु । व्याख्यातमन्यत् । इत्युपनिषदर्थपरिसमाप्त्यर्थः । **एवमुक्तेन प्रकारेण** । **निर्वाणानुशासनं** निर्गतमपगतं वाणं वाति गच्छति दुर्गन्धं वा धारयति वण शब्द इत्यभिधानाच्छब्दान्करोति वेति वाणं शरीरं निर्गतं वाणं शरीरं यस्मिन्मोक्षे निर्वाणस्तदर्थं संसारासारताबुद्धेरनुशासनं राज्ञ इवाऽऽज्ञारूपं तदकरणे संसारशूले प्रक्षेपः स्यादित्यर्थः । ननु कस्येदमनुशासनमित्यत आह । **वेदानुशासनं** वेदस्य भगवतः शब्दराशेः सर्वज्ञस्य वर्णाश्रमादिव्यवस्थाहेतो राजकल्पस्यानुशासनम् । **वेदानुशासनम्** । व्याख्यातम् । अभ्यास उपनिषत्समाप्त्यर्थः । इत्युपनिषदन्तरस्याप्येतावदर्थपर्यवसायित्वमित्येतदर्थं इतिशब्दः ॥ ५ ॥

---

१ घ. °रशूलेन त° । २ ब. °व विनि° ।

इत्यथर्ववेदान्तर्गतारुण्युपनिषत्समाप्ता ॥ ६ ॥

---

नारायणेन रचिता शंकरानन्दपाठतः ।
अस्पष्टपदवाक्यानामारुणेये प्रदीपिका ॥ १ ॥

इति नारायणविरचितारुण्युपनिषद्दीपिका समाप्ता ॥ ८ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतिरारुण्युपनिषद्दीपिका समाप्ता ॥ ९ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# कैवल्योपनिषत् ।

नारायणशंकरानन्दविरचिताभ्यां दीपिकाभ्यां समेता ।

ॐ भद्रं कर्णेभिः शृ० । ॐ शान्तिः शान्तिः शान्तिः ॥

अथाऽऽश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच[1] ।
अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः[2] सेव्यमानां निगूढाम् ॥
यथाऽचिरात्सर्वपापं[3] व्यपोह्य परात्परं पुरुषं[4] याति[5] विद्वान् ॥ १ ॥

अथ नारायणविरचितदीपिकाप्रारम्भः ।

कैवल्योपनिषद्ब्रह्मशतरुद्रियसंज्ञिका ।
एकचत्वारिंशत्तमी संघे खण्डद्वयान्विता ॥ १ ॥

साधनोपदेशप्रकरणत्वाज्जाबाले शतरुद्रियेणेति शतरुद्रियं ब्रह्मज्ञानसाधनत्वेन विनियुक्तं तत्किंस्वरूपमित्यपेक्षायां सेतिहासं तत्कैवल्योपनिषदि प्रदृश्यते—**आश्वलायन इत्यादि** । अश्वलस्यापत्यमाश्वलायनो नडादिफगन्तः । परमे तिष्ठति **परमेष्ठी** ब्रह्मा तम् । अधीह्यादिर्विद्वानित्यन्त एको मन्त्रः । एतदादयः सप्त वृत्तमन्त्रास्ततश्चतस्रोऽनुष्टुभस्ततस्त्रीणि सार्धानि वृत्तानि । ततः पञ्चानुष्टुभः पुनस्त्रीणि सार्धानि वृत्तानि। एतावच्छतरुद्रियम् । यः शतरुद्रियमित्यादिः फलावबोधको द्वितीयः खण्डः । तत्रास्पष्टपदानि स्पष्टी क्रियन्ते । सदा सद्भिः साधुभिः । यतिभिरिति क्वचित्पाठः । अचिराद्विलम्बेन । सर्वपापं सर्वबन्धनं व्यपोह्य निराकृत्य । याति प्राप्नोति । क्वचिदुपैतीति पाठः ॥ १ ॥

अथ शंकरानन्दविरचितदीपिकाप्रारम्भः ।

कैवल्याख्योपनिषदं कैवल्यार्थावबोधनीम् ।
व्याख्यास्ये केवलस्तेन कैवल्यात्मा प्रसीदतु ॥ १ ॥

भगवती श्रुतिर्मातेव सुखप्रतिपत्त्यर्थं कंचनाऽऽश्वलायनमुररीकृत्याऽऽख्यायिकामवतारयति ब्रह्मविद्यायामास्तिक्यं जनयितुम्—**अथेति** । अथ साधनचतुष्टयसंपत्त्यनन्तरम् । **आश्वलायन** ऋग्वेदाचार्यः । **भगवन्तं** पूजावन्तं **परमेष्ठिनं** सर्वोत्कृष्टस्थाननि-

---

१ °ष्ठिनं परिसमे° इति क्वचित्पुस्तके पाठः । २ छ. यतिभिः । ३ ख. छ. °पाशं व्य° । ४ क. ग. च. ज. झ. ञ. पुरुषमुपैति । ५ छ. प्रयाति ।

वासम् । **उपसमेत्य** शास्त्रीयेण विधिना समीपमागत्योवाचोक्तवान् । **अधीहि** मदनुग्रहार्थं स्मर । **भगवन्**समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन् । **ब्रह्मविद्यां** ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यस्य विद्या बुद्धिस्तत्साक्षात्कारकारणं ताम् । **वरिष्ठा**मतिशयेन श्रेष्ठाम् । **सदा** नित्यं **सद्भि**र्देहादिष्वात्मबुद्धिशून्यैः **सेव्यमानां** हृदये ध्रियमाणां **निगूढां** सर्वभूतेष्वात्मनो विद्यमानत्वेन विद्यमानामप्यविद्यया नितरां संवृताम् । **ययेति** । यया ब्रह्मविद्ययाऽचिरादद्दीर्घेण कालेन । **सर्वपापं** निखिलं दुःकारणमज्ञानं ससंस्कारं **व्यपोह्य** विविधं परित्यज्य विनाश्येत्यर्थः । परात्सर्वजगतः कारणादव्याकृतात् । **पर**मुत्कृष्टमज्ञानाश्रयविषयत्वाभ्याम् । **पुरुषं** परिपूर्णं **याति** प्राप्नोति । **विद्वा**नहमेव सोऽस्मीतिसाक्षात्कारवान् ॥ १ ॥

**तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगाद[२]वैहि ।**
**न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ २ ॥**

च पादपूरणे । अवैहि जानीहि । अवेहीति युक्तः पाठः । एके मुख्याः ॥ २ ॥

एवं पृष्टस्तस्मै स्वशिष्याय ब्रह्मविद्यार्थिने **स** गुरुः सर्वज्ञः । ह किल । **उवाचो**क्तवान् । **पितामहश्च** जगत्पितॄणां दक्षादीनां पिता पितामहः कमलासनः । चकारोऽपिकारार्थः । स पितामहोऽप्युवाच । न तूपेक्षां कृतवानित्यर्थः । ब्रह्मविद्यायाः साक्षाद्वक्तुमशक्यत्वात्तदर्थस्य च ब्रह्मणो वाङ्मनसातीतत्वादतः सोपायां तामाह—**श्रद्धाभक्तिध्यानयोगात्** । श्रद्धाऽऽस्तिक्यबुद्धिः । भक्तिर्भजनं तदेकतात्पर्यबुद्धिः । ध्यानं विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहः । एतेषां योगः संबन्धः । एतत्कारणमिति यावत् । तस्मादवेहि जानीहि । इदानीं यथा श्रद्धाभक्तियोगो ब्रह्मविद्यायां कारणं तद्वत्संन्यासोऽपीत्याह—**न कर्मणेति** । न कर्मणा श्रौतेन स्मार्तेन वा । **न प्रजया** पुत्रादिना । **धनेन** दैवेन मानुषेण वा वित्तेन । नेति पूर्वमनुषज्यते । अमृतत्वमिति वक्ष्यमाणानुषङ्गः कर्मप्रजाधनपदेष्ववगन्तव्यः । **त्यागेन** निखिलश्रौतस्मार्तकर्मपरित्यागेन परमहंसाश्रमरूपेण । **एके** महात्मानः संप्रदायविदः । **अमृतत्व**मविद्यादिमरणभावराहित्यम् । **आनशु**रानाशिरे प्राप्ताः ॥ २ ॥

**परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।**
**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥**
**ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥ ३ ॥**

**परेण नाकमिति** । एनपा द्वितीयेति परेण योगे द्वितीया । गुहायामज्ञानगह्वरे । परान्तकाले कल्पान्तसमये "ब्रह्मणा सह मुच्यन्ते संप्राप्ते युगपर्यये" इति स्मृतेः ॥ ३॥

एवं कृते संन्यासे **परेण** परस्तात् । **नाकं** कं सुखं तद्विरोधि दुःखमकं नाकं

---

१ परिसमेत्योति क्वचित्पुस्तके पाठः । २ क. ख. ग. ङ. च. ज. झ. ञ °दवैहि ।

यस्मिन्स नाकस्तं स्वर्गस्योपरीत्यर्थः । अथवा परेण परं नाकमानन्दात्मानम् । **निहितं** क्षिप्तं स्वयमेव स्थितम् । **गुहायां** बुद्धौ । **विभ्राजते** विशेषेण स्वयंप्रकाशत्वेन दीप्यते । यत्प्रसिद्धं विश्वव्यापिस्वरूपम् । **यतयः** कृतसंन्यासाः प्रयत्नवन्तो ब्रह्मसाक्षात्कारं संप्रपन्नाः । **विशन्ति** प्रविशन्ति । इदं वयं स्म इति साक्षात्कारेण तदेव भवन्तीत्यर्थः । यतीनां विशेषणान्याह—वेदेति । **वेदान्तविज्ञानसुनिश्चितार्था** वेदान्ताः प्रसिद्धास्तेभ्यो जातं विशिष्टमहं ब्रह्मास्मीति ज्ञानं तस्मिन्नेव सुनिश्चितोऽर्थः प्रयोजनं येषां ते । अथवा सुनिश्चितोऽयमित्थमेवेति सम्यगवधारितो ब्रह्मलक्षणोऽर्थोऽभिधेयो यैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः । **संन्यासयोगात्**सम्यक्काकविष्ठादिवल्लोकद्वयभोगस्य न्यासस्त्यागः संन्यासस्तस्य योगोऽहं संन्यास्यस्मीति बोधस्तस्मात् । **यतयो** व्याख्यातम् । पुनरादानं विशेष्यत्वकथनार्थम् । **शुद्धसत्त्वाः** शुद्धं रागादिकषायरहितं सत्त्वमन्तःकरणं येषां ते शुद्धसत्त्वाः । एवंभूता अपि कुतश्चित्प्रतिबन्धादस्मिञ्शरीरेऽनुत्पन्नसाक्षात्काराश्चेत्तदा त उक्ता यतयः । **ब्रह्मलोकेषु** ब्रह्मणः कार्यस्यैक एव लोकोऽनेकभूमिकाप्रासादवदधउपर्यादिभागेनावस्थिता बहव इत्येतेनाभिधीयते तेषु ब्रह्मलोकेषु । **परान्तकाले** परस्य कार्यस्य ब्रह्मणोऽन्तकालो विनाशकालो द्विपरार्धावसानः परान्तकालस्तस्मिन् । **परामृताद्**उत्कृष्टादमरणधर्मणो व्याकृतात् । **परिमुच्यन्ति** विमुच्यन्ते सर्वतो विमुक्ता भवन्ति । **सर्वे** निखिलाः ॥ ३ ॥

**विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ॥ ४ ॥**

संन्यासयोगादित्युक्तं तत्र गुहानिहितप्रकाशनाय योगस्वरूपमाह—**विविक्तेति** । समानि ग्रीवाशिरःशरीराणि यस्य स समग्रीवाशिरःशरीरः । ङ्यापोरिति ग्रीवाशब्दस्य ह्रस्वः । समा ग्रीवा यस्य तत्समग्रीवं तादृशं शिरो यस्मिंस्तत्समग्रीवशिरस्तादृशं शरीरं यस्य स तथेति वा ॥ ४ ॥

इदानीं ब्रह्मज्ञानावाप्त्यर्थमुपासनं कर्तुमुपवेशनार्थं देशविशेषादिकमाह—**विविक्तदेशेति** । **विविक्तदेशे** चैकान्तदेशे चशब्दादन्याकुलकालेऽपि । **सुखासनस्थः** सुखमनुद्वेगकरं दर्भाद्यासनं सुखासनं तस्मिंस्तिष्ठतीति सुखासनस्थः । **शुचि**र्बहिरन्तःशौचवान् । **समग्रीवशिरःशरीरः** समानि ग्रीवा च शिरश्च शरीरं च यस्य समग्रीवशिरःशरीर ऋजुकायः पद्मकाद्यासनस्थ इत्यर्थः ॥ ४ ॥

**अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ।**
**हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥ ५ ॥**

* अन्त्याश्रमश्चतुर्थाश्रमः ॥ ९ ॥

**अत्याश्रमस्थः**, अत्यधिको ब्रह्मचारिगृहिवानप्रस्थकुटीचकबहूदकहंसेभ्य आश्रमः

* मूलेऽन्त्याश्रमस्थ इति पाठोऽनेनानुमीयते । आदर्शपुस्तकेषु तु नोपलभ्यते ।

पारमहंस्यलक्षणस्तस्मिंस्तिष्ठतीत्यत्याश्रमस्थः । **सकलेन्द्रियाणि** निखिलानि समनस्कानि ज्ञानकर्मेन्द्रियाणि । **निरुध्य** स्वस्वप्रचारेभ्योऽवरुध्य । **भक्त्या** देववद्देवादाधिक्याद्वा । **स्वगुरुं** स्वस्य गुरुं तत्त्वमसीत्यर्थस्यावबोधकम् । **प्रणम्य** प्रकर्षेण नत्वाऽनन्तरम् । **हृत्पुण्डरीकमिति** । **हृत्पुण्डरीकं** हृत्कमलं पञ्चच्छिद्रादिविशेषणम् । **विरजं** विरजस्कमपगतरागद्वेषादिकम् । **विशुद्धं** विगतसमस्तदुःखादिदोषम् । **विचिन्त्य** विशेषेण ध्यात्वा । **मध्ये** हृत्पुण्डरीकस्यान्तः । **विशदं** निर्मलं शुद्धस्फटिकसंकाशमित्यर्थः । **विशोकं** विगतशोकं विगतदुःखं विशोकमानन्दपूर्णहृदयं स्मेरास्मिताननं चेत्यर्थः ॥ ५ ॥

**[१]अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।**
**[२]तथाऽऽदिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ ६ ॥**

ब्रह्मयोनिं वेदकारणम् ॥ ६ ॥

वस्तुतस्तु—**अचिन्त्यं** वाङ्मनसातीतत्वेन प्रत्ययसंतत्यविषयम् । वाङ्मनसातीतत्वे हेतुः । **अव्यक्तं** शब्दाद्यशेषविशेषशून्यत्वादस्पष्टमव्यक्तम् । असत्त्वं परिच्छेदं च वारयति—**अनन्तरूपं** न विद्यतेऽन्त इयत्ता रूपाणां यस्य सोऽनन्तरूपस्तम् । देशकालवस्तुपरिच्छेदशून्यं वाऽनन्तरूपम् । **शिवं** मङ्गलरूपम् । **प्रशान्तमविद्यादोषरहितम्** । **अमृतं** कालत्रयासंस्पृष्टम् । अमृतवद्वा निरतिशयानन्दरूपत्वेन । **ब्रह्म** बृहत्सर्वस्मादप्यधिकम् । **योनिं** जगज्जन्मादिकारणम् । **तथाऽऽदीति** । **तथा** यथैतद्विशेषणजातं तद्वत्स्वरूपमपि । **आदिमध्यान्तविहीनमुत्पत्तिपरिच्छेदविनाशवर्जितम्** । तत्र हेतुः—**एकमद्वितीयं** वस्तुमात्ररहितम् । **विभुं** समर्थं व्यापिनं वा । **चिदानन्दं** स्वयंप्रकाशमाननिरतिशयानन्दम् । **अरूपं** चिदानन्दव्यतिरिक्तरूपराहितम् । ततोऽद्भुतमाश्चर्यकरम् ॥ ६ ॥

**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।**
**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ७ ॥**

समस्तसाक्षिं सर्वसाक्षिणम् । इकारान्तः साक्षिशब्दश्छान्दसः ॥ ७ ॥

**उमासहायमुमा** ब्रह्मविद्या सहायः कामादिचोररक्षिका यस्य । अर्धनारीशरीरत्वेन वा वामाङ्कस्थिता भवान्यनुपमयुवतिरूपेण यस्य स उमासहायस्तम् । **परमेश्वरमुत्कृष्टं** ब्रह्मादिनियन्तारम् । **प्रभुं** समर्थम् । **त्रिलोचनं** त्रीणि सोमसूर्याग्न्यात्मकानि लोचनानि यस्य स त्रिलोचनस्तम् । **नीलकण्ठं** कृष्णकण्ठम् । **प्रशान्तं** प्रसन्नवदनेन्द्रियम् । **ध्यात्वेति** । **ध्यात्वा** प्रत्ययप्रवाहेण साक्षात्कृत्य । **मुनिर्मननशीलः** । **गच्छति** प्राप्नोति । **भूतयोनिमाकाशादिमहाभूतकारणम्** । तर्हि किं कारणत्वोपाधिकमित्याशङ्क्याऽऽह—**समस्तसाक्षिं** सर्वसाक्षिणं सर्वबुद्धिप्रचारद्रष्टारम् । साक्षित्व-

---

१ अनन्तमव्यक्तमचिन्त्यरूपमित्यपि क्वचित्पुस्तके पाठः । २ तमादीति क्वचित्पाठः ।

मपि न केवलस्येत्यत आह—**तमस** आवरणविक्षेपशक्तिरूपाया अविद्यायाः। **परस्ता**त्परतोऽविद्यासंबन्धशून्यमित्यर्थः॥ ७॥

**स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।**
**स एव विष्णुः स प्राणः स[1] कालाग्निः[2] स चन्द्रमाः॥ ८॥**

सेन्द्रः स इन्द्रः। छान्दसः संधिः॥ ८॥

उमासहाय उपासनातः प्राप्यो निरविद्यो विद्यादशायां सर्वात्मेत्याह—**स** उक्तः। **ब्रह्मा** प्रथमशरीरी कार्यकरणरूपः। **स** उक्तः। **शिव** उमासहायः। **सेन्द्रः** स उक्तः। इन्द्रस्त्रिलोकीपतिः। **स** उक्तः। **अक्षरो** विनाशरहितः। **परम** उत्कृष्टः। **स्वराड**न्यानपेक्षत्वेन स्वेनैव स्वरूपेण राजते। **स एवो**क्त एव। **विष्णु**र्व्यापनशीलः शङ्खचक्रगदाधरः। **स** उक्तः। **प्राणः** प्राणादिपञ्चवृत्तिरूपः। **स** उक्तः। **कालाग्निः** कालरूपी वैश्वानरः। **स** उक्तः। **चन्द्रमाः** शशाङ्कः॥ ८॥

**स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्।**
**ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥ ९॥**

॥ ९॥

**स एवेति। स एवो**क्त एव। **सर्वं** निखिलम्। यत्प्रसिद्धम्। **भूत**मतीतम्। **यच्च** यदपि। **भव्यं** भावि। चकाराद्वर्तमानमपि **सनातनं** चिरंतनम्। **ज्ञात्वा**ऽहं ब्रह्मास्मीति साक्षात्कृत्य। तमुक्तमानन्दात्मानम्। **मृत्यु**मविद्यां ससंस्काराम्। **अत्ये**त्यतीत्य गच्छति। **नान्य** उक्तब्रह्मज्ञानव्यतिरिक्तः। **पन्था** मार्गः। **विमुक्तये** ब्रह्मज्ञानमृते मार्गान्तरं विमुक्त्यर्थं नास्तीति शेषः। पादत्रयाणां विश्वतैजसप्राज्ञानां विराड्हिरण्यगर्भेश्वराणां वा स्वयंप्रकाशत्वेन लोचनं प्रकाशस्वरूपं त्रिलोचनम्। नीलं तमोऽज्ञानं कण्ठे कण्ठवच्चिदेकदेशेऽधिकव्याप्तत्वेन चैतन्यस्य वर्तते यस्य स नीलकण्ठस्तमिति व्याख्यानं यदा तदा विशदमविद्यारहितं विशोकं दुःखसंस्काररहितम्। उमासहायं ब्रह्मविद्यासहायम्। प्रशान्तं पुनरुत्थानसंस्कारवर्जितमिति निर्गुणपरत्वेन समग्रं वाक्यमवगन्तव्यम्। निर्गुणस्याप्युपलब्धत्वेन हृदयप्रदेशमध्यस्थत्वमविरुद्धम्। तथाच ध्यात्वा मननिदिध्यासने कृत्वेत्येतदप्युपपन्नमेव॥ ९॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि।**
**संपश्यन्ब्रह्म परमं याति नान्येन हेतुना॥ १०॥**

॥ १०॥

**सर्वभूतस्थमिति। सर्वभूतस्थं** निखिलेषु स्थावरजङ्गमेषु तिष्ठतीति सर्वभूत-

१ ख. ङ. स आत्मा परमेश्वरः॥ ८॥ २ क. छ. ज. कालोऽग्निः।

स्थस्तम् । **आत्मानमस्मत्प्रत्ययव्यवहारयोग्यम्** । **सर्वभूतानि** च निखिलानि स्थावराणि जङ्गमानि भूतानि सर्वभूतानि । चकार आधाराधेयभावव्युत्क्रमार्थः । **आत्मन्यानन्दात्मन्यहंप्रत्ययय्योग्ये** । **संपश्यन्सम्यक्संशयविपर्ययमन्तरेणावलोकयन्** । **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यम् । **परममुत्कृष्टमनुपचारितमित्यर्थः** । **याति** प्राप्नोति । **न** यातीति देहलीप्रदीपन्यायेन संबध्यते । न याति न प्राप्नोति । **अन्येनोक्तबोधव्यतिरिक्तेन** । **हेतुना** कारणेन । ध्यात्वा गच्छतीत्यस्य व्याख्यानं ज्ञात्वा तमित्यादि । नान्यः पन्था विमुक्तय इत्यस्य व्याख्यानं त्विदं सर्वभूतस्थमित्यादि ॥ १० ॥

**आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।**
**ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥ ११ ॥**

॥ ११ ॥

यदा त्वेवं ज्ञानं नोत्पद्यते तदा तदुत्पादन उपायमाह—**आत्मानमिति** । **आत्मानमन्तःकरणम्** । **अरणिं** वह्निजनकं मन्त्रसंस्कृतं काष्ठम् । **कृत्वा**ऽधो विधायाधरारणित्वेन चिन्तयित्वेत्यर्थः । **प्रणवमोंकारं चोत्तरारणिमुत्तरारणिमपि** । चकारः कृत्वेत्येतदनुवृत्त्यर्थः । **ज्ञाननिर्मथनाभ्यासाज्ज्ञानस्य** सर्वात्मकोऽहमस्मीत्येवंरूपस्य निर्मथनं युक्तिभिर्विलोडनं तस्याभ्यास आवृत्तिरूपो ज्ञाननिर्मथनाभ्यासस्तस्मादुत्पन्नेनाहं ब्रह्मास्मीति साक्षात्काराग्निना । **पाशमात्मनो** बन्धरूपमज्ञानरज्जुरचितमहंममादिग्रन्थिम् । **दहति** भस्मी करोति । **पण्डितः** पण्डाऽहं ब्रह्मास्मीति बुद्धिस्तामितः प्राप्तः पण्डितः ॥ ११ ॥

**एवं मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।**
**स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥**

**स्त्रियन्नेति** । छान्दस इयङ् ॥ १२ ॥

नन्वस्यासङ्गोदासीनस्याद्वितीयस्य कुतः संसारः पाशरूप इत्यत आह—**स एवेति** । **स एवोक्तो**ऽसङ्गोदासीन एव न त्वन्यः । **मायापरिमोहितात्मा** मायाऽविद्याऽऽवरणविक्षेपकरी शक्तिस्तया परिमोहित आत्मा स्वयंप्रकाश आनन्दात्मस्वरूपो यस्य स मायापरिमोहितात्मा । **शरीरं** स्थूलादिभेदभिन्नं मनुष्यादिकलेवरम् । **आस्थायाहं** मनुष्य इत्याद्यभिमानं समन्तात्स्वीकृत्य । **करोति सर्वं** निखिलव्यापारजातं कुरुते । **स्त्रियन्नपानादिविचित्रभोगैः** स्त्रियो मनोनुकूला युवत्यः । अन्नपाने मनोनुकूले । आदिशब्देन चाऽऽसनाच्छादनादीनि मनोनुकूलानि । तैः स्त्रियन्नपानादिविचित्रभोगैः । स्त्रियन्नेति च्छान्दसम् । **स एव** मायापरिमूढ एव न त्वन्यः । **जाग्र**ज्जागरणमिन्द्रियैर्बाह्यविषयोपलब्धिरूपं कुर्वन् । **परितृप्तिं** सर्वतो विषयसुखजा तृप्तिः परितृप्तिस्ताम् । **एति** गच्छति । सुखं दुःखं च प्राप्नोतीत्यर्थः ॥ १२ ॥

**स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके ।**
**सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ॥ १३ ॥**

स्वमायया स्वाज्ञानेन कल्पिते जीवलोके सुखदुःखभोक्तेत्यन्वयः । सकले जगति विलीने कारणभावमापन्ने । तमोभिभूतोऽज्ञानावृतः स्वपिति ॥ १३ ॥

इदानीं स्वप्नसुषुप्त्योर्विक्षेपतदभावकथनेन संसारमोक्षयोरर्थाद्दृष्टान्तमाह—**स्वप्नेति** । **स्वप्न** इन्द्रियग्रामोपरमरूपायां स्वप्नावस्थायाम् । **स** जाग्रद्दोक्तैव । **जीवः** प्राणानां धारयिता विविधवासनावासितः । **सुखदुःखभोक्ता** सुखदुःखयोः प्रसिद्धयोर्भोक्ता । अहं सुख्यहं दुःखीत्येवंरूपप्रत्ययवान्सुखदुःखभोक्ता । तत्र संसारदृष्टान्ते वास्तवत्वं वारयति—**स्वमायया** स्वस्य तत्तद्देहाभिमानिनो मायाऽज्ञानं विपरीतं ज्ञानं च तया । **कल्पितविश्वलोके** कल्पिते वासनारूपे विश्वस्मिन्रथरथयोगपथादिके निखिले लोके भुवने जने च कल्पितविश्वलोके । स्वप्ने यथा तद्वज्जागरणेऽपीत्यर्थः । **सुषुप्तिकाल** आनन्दभोगावसरे । **सकले** निखिले । **विलीने** विशेषविज्ञाने स्वकारणे लयं गते । एतावत्सुषुप्तौ मोक्षे च सममियांस्तु विशेषः । **तमोभिभूतो**ऽज्ञानावृतः । **सुखरूपं** स्वस्वरूपं स्वयंप्रकाशमानन्दात्मस्वरूपम् । **एति** गच्छति ॥ १३ ॥

**पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ।**
**पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ।**
**आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च ॥१४॥**

प्रबुद्धः स्वप्नादुत्थितः । पुरत्रये विश्वतैजसप्राज्ञैरभिमतेऽवस्थात्रये । सकलं ततः सुजातं तस्माज्जीवात्सु सम्यगुत्पन्नम् । ततस्तु जातमिति युक्तः पाठः । तुरीयमाह—**आधारमिति** । पुरत्रयं च यस्मिँल्लयं याति ॥ १४ ॥

**पुनश्चेति** । **पुनश्चा**ऽऽनन्दात्मस्वरूपं प्राप्य भूयोऽपि । **जन्मान्तरकर्मयोगा**त्प्राग्भवीयकर्मानुसारात् । **स एवा**ऽऽनन्दात्मस्वरूपं प्राप्त एव सुषुप्तिं गतो न त्वन्यः । **जीवः** प्राणविधारकः । **स्वपिति** स्वप्नावस्थां गच्छति सुषुप्तात् । अथवा **प्रबुद्धः** प्रबोधं जागरणं प्राप्तो भवतीति शेषः । इदानीं जीवब्रह्मणोरैक्यमाह—**पुरत्रये** स्थूलसूक्ष्माज्ञानाख्ये शरीरत्रये **क्रीडति** विहरति । **यश्च जीवः** । चकार एवकारार्थः । प्रसिद्धः परमात्मैव प्राणधारकः । **ततस्तु** तस्मादेव जीवाभिन्नादेव न त्वन्यतः । **जात**मुत्पन्नम् । **सकलं** निखिलम् । **विचित्रं** विविधनामरूपं विश्वम् । **आधारमानन्देति** । **आधारं** रज्जुरिव सर्पधाराबलीवर्दमूत्रितादेः सकलस्य विश्वस्याऽऽधारभूतम् । **आनन्दं** निरतिशयानन्दस्वरूपम् । **अखण्डबोधमानन्द**स्वरूपत्वेऽपि स्वयंप्रकाशैकस्व-

---

१ क. ख. °प्नेऽपि जी° । च. ङ. छ. °प्ने तु जी° । २ °तविश्वलो° इति शंकरानन्दपाठः ।

भावम् । यस्मिन्नखण्डबोधे लयं विनाशम् । याति गच्छति । पुरत्रयं च । व्याख्यातम् । चशब्दादन्यदपि ॥ १४ ॥

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ १५ ॥**

एतस्मात्तुरीयावस्थाद्ब्रह्मणः ॥ १५ ॥

**एतस्मा**त्पुरत्रयाधिष्ठानाद्बुद्धेर्द्रष्टुः । **जायते** उत्पद्यते । **प्राणः** क्रियाशक्तिः । **मनो**ऽन्तःकरणं ज्ञानशक्तिः । **सर्वेन्द्रियाणि च** सर्वकर्मज्ञानेन्द्रियाण्यपि । चशब्दाद्देहादिकमपि । **खं** नभः । **वायु**र्नभस्वान् । **ज्योति**स्तेजः । **आपो** नीराणि । **पृथिवी** भूमिः । **विश्वस्य** निखिलस्य स्थावरजङ्गमात्मकस्य प्राणिजातस्य । **धारिणी** विधारिणी ॥ १५ ॥

**यत्परं ब्रह्म सर्वात्मा विश्वस्याऽऽयतनं महत् ।**
**सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १६ ॥**

**तत्त्वमेवे**ति । ब्रह्मणस्त्वदनन्यत्वं बोध्यते । त्वमेव तदिति तव ब्रह्मानन्यत्वम् ॥ १६ ॥

इदानीं महावाक्यार्थमाह—**यत्परं ब्रह्मे**ति । यत्प्रसिद्धम् । **पर**मुत्कृष्टम् । **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यम् । **सर्वात्मा** सर्वप्राणिहृदि स्थितः सर्वानन्यश्च । **विश्वस्य** सर्वस्य कार्यकारणजातस्य । **आयतन**माधारभूतम् । महत्प्रौढं सर्वाधारत्वेनैव । **सूक्ष्मा**दणुपरिमाणात् **सूक्ष्मतरं** महदप्यतिशयेनाणु । **नित्यं** विनाशशून्यम् । **त**दुक्तं परब्रह्म **त्वमेव** तदवगन्तैव न त्वन्यत् । ननु तन्मत्तोऽन्यदहं तु तस्मादन्यो मयि कर्तृत्वादिविशेषोपलम्भादित्यत आह—**त्वमेव तत्** । त्वं कर्ता भोक्ताऽविद्यया वस्तुतस्तत्परं ब्रह्मैव न त्वन्यः ॥ १६ ॥

**जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।**
**तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥**

प्रपञ्चमिति च्छान्दसं नपुंसकत्वम् ॥ १७ ॥

इदानीमेवं ज्ञाने फलमाह—**जाग्रत्स्वप्ने**ति । **जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चम्** । जाग्रत्स्वप्नसुषुप्तय उक्तास्तदादयो विश्वविराडादयस्त एव प्रपञ्चो जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चस्तम् । **यत्**प्रसिद्धं स्वयंप्रकाशम् । **प्रकाशते** प्रकाशयति । **तदु**क्तं स्वयंप्रकाशम् । **ब्रह्म** सत्यज्ञानादिलक्षणम् । **अहं** ब्रह्मावगन्ता चिदानन्दात्मा । **इ**त्यनेन प्रकारेण । **ज्ञात्वा** साक्षात्कृत्य । **सर्वबन्धै**र्निखिलबन्धैरहंममाद्यैरेव सकारणैः । **प्रमुच्यते** प्रकर्षेण मुक्तो भवति ॥ १७ ॥

**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।**
**तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १८ ॥**

॥ १८ ॥

इदानीं सर्वस्मात्प्रपञ्चाद्वैलक्षण्यमाह—**त्रिषु धामस्विति** । **त्रिषु** जागरणस्वप्न-सुषुप्तिषु । **धामसु** स्थानेषु । यत्प्रसिद्धम् । **भोग्यं** स्थूलप्रविविक्तानन्दस्वरूपम् । **भोक्ता** विश्वतैजसप्राज्ञाख्यः । **भोगश्च** स्थूलप्रविविक्तानन्दस्वरूपभोगोऽपि । चशब्दादधिदैवादिविभोगोऽपि । **यदुक्तं** त्रिधामभोग्यादिप्रपञ्चजातम् । **भवेत्** । स्पष्टम् । **तेभ्य**-स्त्रिधामादिभ्यः । **विलक्षणो** विपरीतलक्षणः । वैलक्षण्यमाह—**साक्षी** स्वाध्यस्तस्य विश्वस्य द्रष्टा । **चिन्मात्र**श्चिदेकरसः । अहमहंप्रत्ययव्यवहारयोग्यः । **सदाशिवः** कैवल्यात्मा नित्यकल्याणरूपो महेश्वरः ॥ १८ ॥

**मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।**
**मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १९ ॥**

॥ १९ ॥

प्रपञ्चवैलक्षण्यमुक्त्वेदानीं जगज्जन्मादिकारणत्वमपि स्वस्याऽऽह—**मय्येवेति** । **मय्येव** मत्त एव ब्रह्माभिन्नान्न त्वन्यस्मात् । **सकलं** निखिलं भूतभौतिकप्रपञ्चजातम् । **जातमुत्प**-न्नम् । **मयि** ब्रह्माभिन्ने । **सर्वं** निखिलं विश्वम् । **प्रतिष्ठितं** प्रकर्षेण स्थितिं प्राप्तम् । **मयि सर्वम्** । व्याख्यातम् । **लयं याति** विनाशं गच्छति । **तत्त**स्मात्सर्वजगज्जन्मस्थि-तिध्वंसकारणत्वात् । **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यम् । **अद्वयं** ज्ञातृज्ञेयादिवि-भागशून्यम् । **अस्मि** भवामि । **अहं** ब्रह्मणोऽवगन्ता ॥ १९ ॥

**अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् ।**
**पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि* ॥ २० ॥**

॥ २० ॥

जगज्जन्मस्थितिध्वंसकारणत्वाज्जगदाकारत्वेन विकारित्वं प्राप्तं तदेवातिदुर्बोध-स्वरूपत्वेन वारयति । **अणोरणीयानिति** । **अणो**रणुपरिमाणात् । **अणीयान**ति-शयेनाणुः । **अहमेव** जगत्कारणमहंप्रत्ययव्यवहारयोग्यो न त्वन्यः । **तद्व**द्यथाऽणु-स्तथा । **महान्**सर्वस्मादप्यधिकः । **अहम्** । व्याख्यातम् । अणीयसां महतां कारणानां च यथा भेदस्तथा तवापि स्यादित्यत आह—**विश्वं** साविद्यं भूतभौतिकप्रपञ्चजातम् । **अहम्** । व्याख्यातम् । अस्य तत्त्वभेदराहित्ये स्वस्मादप्यभेदः स्यादित्यत आह—**विचि-त्रम्** । विविधं स्वयमनन्तभेदवदित्यर्थः । तदभिन्नस्य तवाप्याधुनिकत्वं स्यादित्यत आह—**पुरातन**श्चिरंतनः । आधुनिकसर्पधाराबलीवर्दमूत्रतत्त्वा(त्रिता)द्यभिन्ना चिरंतनी रज्जु-रिव । **अहं** व्याख्यातम् । **पुरुषः** परिपूर्णो वस्तुतः । **अहं** व्याख्यातम् । अविद्यादशाया-

---

* "नारायणोऽहं पुरुषः शिवोऽहं ब्रह्माहमस्मि सकलोऽहमस्मि । पूर्णोऽहमस्मि पुरुषोऽहमस्मि ज्ञानोऽहमस्मि सत्योऽहमस्मि" अयं मन्त्रः ख. ङ. पुस्तकयोरेव दृश्यते ।

**मीशो** नियन्ता। नियन्तृत्वसामर्थ्यमाह—**हिरण्मयः**। हिरण्मयो ज्ञानप्रचुरस्तत्प्रधानो वाऽऽदित्यस्थः सर्वकार्यकारणात्मा। **अहं** व्याख्यातम्। **शिवरूपं** मङ्गलस्वरूपं **ब्रह्मास्मि** भवामि॥ २०॥

**अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः।**
**अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाऽहम्॥२१॥**

**न चास्ति वेत्ता ममेति।** नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोतेति श्रुत्यन्तरात्॥ २१॥

इदानीं सर्वकारणहीनस्य सर्वज्ञतां स्वस्याऽऽह—**अपाणिपाद इति। अपाणिपादः** पाणिपादहीनः। **अहं** व्याख्यातम्। **अचिन्त्यशक्तिर्**दुर्बोधशक्तिः। एवंभूतोऽपि जवनो ग्रहीतेत्यर्थः। **पश्याम्यव**लोकयामि। **अचक्षुश्**चक्षुर्हीनः। **सो**ऽचक्षुर्द्रष्टा। **शृणोमि** श्रवणं करोमि। **अकर्णः** कर्णरहितः। **अहं** व्याख्यातम्। **विजानामि** विविधं प्रपञ्चजातमवगच्छामि। **विविक्तरूपो** बुद्ध्यादिपृथग्रूपः। **न चास्ति** नास्त्येव। **वेत्ता** कर्मकर्तृभावेनावगन्ता। **मम**ाऽऽनन्दात्मनो भेदरहितस्य। **चित्**स्वयंप्रकाशबोधस्वभावः। **सदा** सर्वदा। **अहं** व्याख्यातम्॥ २१॥

**वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।**
**न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति॥ २२॥**

न पुण्यपापे मम स्तो नास्ति वा नाशः। ममेत्येव। न जन्म ममेत्येव। देहेन्द्रियबुद्धिर्मम नेत्येव॥ २२॥

इदानीं सर्वशास्त्रप्रतिपाद्यस्याऽऽत्मनः सर्वविकाराभावं दर्शयति—**वेदैरनेकैरिति। वेदैर्**ऋगादिभिः। **अनेकैर्**बहुभिः। **अहं** व्याख्यातम्। **वेद्यः** प्रतिपाद्यः। **वेदान्तकृद्**वेदान्तसूत्रकृद्वेदव्यासरूपः। **वेदविदेव च** वेदान्तकृतो विशेषणम्। वेदान्तानां साङ्गानां विद्यास्थानानां वेत्ता वेदवित्स एव न त्वन्यः। चशब्दादनेकतपःसंपन्नश्च। **अहं** व्याख्यातम्। अनेन विभूतिमत्सत्त्वेष्विदमेव प्रधानमित्युक्तम्। **न पुण्यपापे मम**। स्पष्टम्। स्त इति शेषः। **नास्ति नाशो** विनाशो न विद्यते। ममेत्यनुषङ्गः। **न जन्म** जनिः। मम नास्तीत्यनुषङ्गः। **देहेन्द्रियबुद्धि**र्देहश्चेन्द्रियाणि च बुद्धयश्च देहेन्द्रियबुद्धिः। **नास्ति** न विद्यते। ममेत्यनुषङ्गः॥ २२॥

**न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च।**
**एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम्॥ २३॥**

आपो न चेति वाक्यम्। वह्निरस्ति न चेति वाक्यम्। अनिलो नास्तीत्येकम्। फलमाह—**एवमिति**। एवं विदित्वा शुद्धं परमात्मरूपं प्रयातीत्यन्वयः॥ २३॥

**न भूमिरिति। न भूमिरापो** मम पृथ्वी सोदका मम नास्तीत्यनुषङ्गः।

**वह्निः** प्रसिद्धः । **नास्ति** ममेत्यनुषङ्गः । **न चानिलो मेऽस्ति** वायुरपि मम न विद्यते । चकाराद्वायवीयं कार्यमपि । **न चाम्बरं** चाऽऽकाशमपि । मम नास्तीत्यनुषङ्गः । चकारावाकाशकार्यतद्व्यतिरिक्तानुक्तानुभवार्थौ । **एवमुक्तेन प्रकारेण** । **विदित्वा** साक्षात्कृत्य । **परमात्मरूपमुत्कृष्टानन्दात्मस्वरूपम्** । **गुहाशयं** बुद्धौ शयानम् । **निष्कलं** निर्गताः प्राणश्रद्धाखवायुज्योतिरप्पृथिवीन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामाख्याः कला यस्मात्तम् । **अद्वितीयं** सजातीयविजातीयाद्वितीयवस्तुशून्यम् ॥ २३ ॥

**समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥ २४ ॥**

॥ २४ ॥

**समस्तसाक्षिमिति** । **समस्तसाक्षिं** समस्तसाक्षिणं सर्वद्रष्टारम् । **सदसद्विहीनं** भावाभाववर्जितम् । तदेव निरवद्यं गच्छतीत्याह—**प्रयाति शुद्धं परमात्मरूपम्** । स्पष्टम् ॥ २४ ॥

इति प्रथमः खण्डः ॥ १ ॥

**यः शतरुद्रीयमधीते[1] सोऽग्निपूतो भवति[2] सुरापानात्पूतो भवति ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवति । अत्याश्रमी सर्वदा सकृद्वा जपेत् ।**

**अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् ।**

**तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फलमश्नुत इति ॥ १ ॥**

**इत्यथर्ववेदे कैवल्योपनिषत्समाप्ता ॥ ७ ॥**

वेदने फलमुक्त्वाऽथ पाठफलमाह—**य** इति । **सकृद्वेति** प्रत्यहमिति शेषः । **कैवल्यं** केवलभावं मोक्षम् । द्विरुक्तिः समाप्त्यर्था । इतिः स्वरूपकथने ॥ १ ॥

इति द्वितीयः खण्डः ॥ २ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां कैवल्यस्य प्रदीपिका ॥ १ ॥

इति नारायणविरचिताथर्ववेदान्तर्गतकैवल्योपनिषद्दीपिका समाप्ता ॥ १० ॥

एवंभूतं परमात्मानं प्रतिपत्तुमशक्तस्याशुद्धान्तःकरणस्यान्तःकरणशुद्ध्यर्थमाह—**यः** प्रसिद्धो मुमुक्षुरनुत्पन्नसाक्षात्कारः **शतरुद्रीयं** नमस्त इत्यादिरुद्राध्यायम् । **अधीते**

---

१ क. ख. ग. च. झ. °रुद्रिय° । २ ख. छ. °ति स वायुपूतो भवति स आत्मपूतो भवति स कृत्याकृत्यात्पूतो भवति स ब्रह्महत्यात्पूतो भवति त° । च. झ. °ति स वायुपूतो भवति स्वर्णस्तेयात्पूतो भवति सु° ।

पठति यथाशक्ति नित्यम् । **स** शतरुद्रीयाध्यायकः । **अग्निपूतो**ऽग्निभिः श्रौतैः स्मार्तैः पवित्रीकृतोऽग्निपूतः । **भवति** स्पष्टम् । **सुरापाना**न्मदिरापानान्महापातकदोषात् । **पूतो भवति** । स्पष्टम् । **ब्रह्महत्याद्**ब्रह्महत्याया ब्रह्महत्यारूपान्महापातकदोषात् । **पूतो भवति** । स्पष्टम् । **कृत्याकृत्यात्कृत्यं** करणीयं बुद्धिपूर्वकं पापं कृत्यं चाकृत्यं च कृत्याकृत्यं तस्मात्**पूतो भवति** । स्पष्टम् । **तस्मा**च्छतरुद्रीयाध्ययनात् । **अविमुक्तं** विरुद्धत्वेन मुक्ता विमुक्ताः पशवस्तेभ्यो व्यतिरिक्तोऽविमुक्तः पशुपतिस्तम् । **आश्रितो भवति** । स्पष्टम् । **अत्याश्रमी,** अत्याश्रम उक्तः पारमहंस्यलक्षणो यस्यास्ति सोऽत्याश्रमी । **सर्वदा** निरन्तरम् । **सकृद्वा** [जपेत्] कदाचिद्वा दिवसे दिवस एकवारमित्यर्थः । वाशब्दोऽधिकारिसामर्थ्यानुसारेण व्यवस्थितविकल्पार्थः । **अनेनेति** । **अनेन** रुद्राध्यायजपेन । **ज्ञानमहं** ब्रह्मास्मीतिसाक्षात्काररूपम् । **आप्नोति** प्राप्नोति । **संसारार्णवनाशनं** संसारसागरशोषणम् । यस्माद्रुद्राध्यायजपोऽशेषपापनिबर्हणद्वारा ब्रह्मज्ञानहेतुस्**तस्मात्तत**ः । **एवं विदित्वो**क्तेन प्रकारेण त्रिनेत्रध्यानरुद्राध्यायाध्ययनादिना **विदित्वा** साक्षात्कृत्य । **एनं** परमात्मानम् । **कैवल्यं** केवलस्याऽऽत्मनो भावः कैवल्यं तत् । **फलं** पुरुषाभिलाषविषयं सर्वपुरुषार्थसमाप्तिभूतम् । **अश्नुते** प्राप्नोति । **कैवल्यं फलमश्नुत इति** । व्याख्यातम् । पदाभ्यास उपनिषदर्थसमाप्त्यर्थः ॥ १ ॥

इति द्वितीयः खण्डः ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दभगवता कृता
कैवल्योपनिषद्दीपिका समाप्ता ॥ ११ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# कौषीतक्युपनिषत् ।

## शंकरानन्दविरचितदीपिकासमेता ।

तत्राऽऽदौ कौषीतक्युपनिषच्छान्तिर्व्याख्यासमेता ।

**वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्म-र्योऽभूर्वेदसा मत्साऽऽणीर्ऋतं मा मा हिंसीरनेनाधीतेनाहोरात्रात्सं-वसाम्यग्र इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रप-तिभ्यो नमो वोऽस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वती मा ते व्योम संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥**

वाङ्मे मदीया मनसि प्रतिष्ठिताऽस्तु । मनो मे वाचि प्रतिष्ठितमस्तु । अग्रे दीक्ष इति संबोधनम् । दीक्षा सरस्वती वाग्दीक्षेति व्यवहारात् । सुमृळीका सरस्वती चास्तु । तथा सति सरस्वतीं वाग्देवीं प्रति वचनम् । मूर्तिश्रुतौ मर्यो मूर्तिमती शरीरिणी वेदसा ज्ञानेन लक्षिता त्वमाविराविरभूः " एत इति वै प्रजापतिर्देवानसृजत । असृग्रमिति मनुष्यान् " इति वेदपदैर्देवादिसृष्टिवचनादधिष्ठात्री सरस्वती मूर्तिश्रुतावाविर्भूतेत्युक्तम् । अनन्तरं मदिति मत्तः सकाशात्सा त्वमाणीः । अण शब्दे लुङ् । शब्दात्मिका विस्तृताऽभूः । अत ऋतं मा मा हिंसीः । अनेन वक्ष्यमाणेनाधीतेनाहोरात्रात्संवसामि एकीभावेन वसामि । अग्न्यादीन्नमस्यति । इळाशब्दः कृत्स्नार्थः । अग्रे प्रकृष्टं नम ऋषिभ्यो देवेभ्यश्च नमोऽस्तु । सरस्वती सुखा भव । तेन च व्योम शून्यं मा संदृशि । लुङ्यात्मनेपद इटि सिज्लुकि रूपम् । यथा सूर्यो ज्योतिषां श्रेष्ठो नान्यथा क्रियते तथा मनोऽदब्धं निर्मलं चक्षुरिषिरमिष्टदर्शि दीक्षे मा मा हिंसीर्माऽन्यथा कुरु ॥ १ ॥

इति व्याख्योपेता शान्तिः समाप्ता ।

अथ शंकरानन्दव्याख्योपेतकौषीतक्युपनिषदारम्भः ।

---

आनन्द आत्मा स्थिरजङ्गमानामस्त्यत्र चित्रस्तमहं प्रणम्य ।
कौषीतकिब्राह्मणमा(गा)त्मविद्यां पदावलोकात्प्रकटी करोमि ॥ १ ॥

समधिगतमेतन्निघर्षणादीनां कर्मणां तैजसस्य द्रव्यस्याऽऽदर्शादेः शुद्धिहेतुत्वम् । तथा चाग्निहोत्रादीन्यश्वमेधान्तानि कर्माणि तैजसस्यान्तःकरणस्य शुद्धिहेतवो[1] विविदिषासाधनत्वस्य श्रुतितोऽप्यवगमाच्च । अपि च स्वर्गादेः कर्मफलस्य[2] सुखविशेषरूपत्वात्तस्य चान्तःकरणप्रसादापरपर्यायत्वात्कार्मिभिरपि कर्मणामन्तःकरणशुद्धिहेतुत्वमङ्गीकृतं यतस्ततस्तानि महता संदर्भेण प्रथमतोऽभिधायेदानीं ब्रह्मविद्यां वक्तुं लब्धावसरा श्रुतिः प्रववृते । तत्र चित्रो ह वै गाङ्ग्यायणिरित्यादिका[3] य एवं वेदेत्यन्ता चतुरध्यायी कौषीतकिब्राह्मणोपनिषत् । आद्येनाध्यायेन पर्यङ्कविद्यां सदक्षिणोत्तरमार्गान्तां द्वितीयेन प्राणविद्यां तद्विदश्च बाह्याध्यात्मिकानि कर्माणि फलविशेषसिद्धये तृतीयचतुर्थाभ्यां चाऽऽत्मविद्यामाह । यद्यपि प्रतर्दनो हेत्यादिकमेव प्रथमतः पठनीयं तथाऽपि शुद्धमप्यन्तःकरणं निर्गुणे ब्रह्मण्यभयेऽपि प्रथमतो ब्रह्मस्वभावमजानद्भयमाप्नुयात् । गर्भस्थप्रोषितपितृको युवेव सद्वृत्तस्थः प्रथमतः पितृदर्शने । ततोऽस्य भयनिरासार्थमुत्तरमार्गाप्यमेतल्लोकस्थराजादिवद्ब्रह्मलोकस्थं सगुणं ब्रह्म प्रथमत उक्तवती । तत्र च स आगच्छत्यमितौजसं पर्यङ्कम् । स प्राण इति प्राणस्य पर्यङ्कत्वं प्रथमेऽध्याय उक्तम् । तस्मिन्प्राणे भवति श्रोतॄणां जिज्ञासा किमयं श्वासमात्रः प्राण आहोस्विद्विविधभूतिजुष्ट इति । अस्या जिज्ञासाया निवृत्त्यर्थं प्राणोपासनं द्वितीयेनाध्यायेनोपक्रान्तम् । तथा च लब्धावसरोत्तरत्र ब्रह्मविद्यामुक्तवतीत्यदोषः । तत्र ब्रह्मविद्यायाः सगुणाया अपि महद्भिर्गौतमश्वेतकेत्वादिभिरप्यमानित्वादिगुणैर्गुरुमुखादेवावगतिः कृता यतस्ततोऽमानित्वादिगुणैराधुनिकैरप्यधिकारिभिः सगुणा निर्गुणा च ब्रह्मविद्याऽवगन्तव्येत्येतदर्थमाख्यायिका—

**चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे स**
**ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति तं हाऽऽसीनं***
**पप्रच्छ गौतमस्य पुत्रास्ति संवृतं लोके यस्मिन्मा धा-**
**स्यस्यन्यमुताहो बाध्वा तस्य मा लोके धास्यसीति ।**

---

* अभ्यागतमिति पाठः ।

---

१ ब. 'हेतूनि वि° । २ ब. °लसु° । ३ ख. गाङ्ग्यायनिरि' । ४ ब. °यनिरि° । ५ ख. गाङ्ग्यायनिर्य° । ६ ब. °यनिर्य° । ७ ब. °जिगाय । ८ ख 'न्यतमो माऽध्वा ।

**चित्रश्चित्र**नामकः कश्चित्त्रैवर्णिकः । ह किल वै प्रसिद्धः, श्रुतेस्तत्कालीनानां च । गार्ग्यस्य युवापत्यं **गार्ग्यायणिः । यक्ष्यमाणः** कंचिज्ज्योतिष्टोमादिकं यागं कारिष्यमाणः । **आरुणि**मरुणस्यापत्यं **वव्रे** सदस्यसप्तदशान्यतमऋत्विक्त्वेन वरणं चक्रे, त्वं मे प्रधानभूतो यज्ञे याजयिता भवेति । **स** ×गार्ग्यायणिना चित्रेण वृत आरुणिः । ह प्रसिद्धः श्रुत्यन्तर उद्दालकनामा । **पुत्रं** पितरं पाप्मनः पुंनाम्नो नरकात्त्रायत इत्यौरसस्तनय इत्यर्थः । तं **श्वेतकेतुं** श्वेतकेतुनामानं **प्रजिघाय**[३] प्रहितवान् । तत्प्रेषणमाह—**याजय** हे श्वेतकेतो चित्रं यागं कारय । **इति,** अनेन प्रकारेण । **तं** चित्रगृहमागतं पित्रा प्राहितं श्वेतकेतुं ह प्रसिद्धम् । श्रुत्यन्तरे । अभिमानिनं प्रवाहणादिभिः संवादकर्तार**मासीनं** चित्रदत्ते महत्यासन उपविष्टम् । **पप्रच्छ** प्रश्नं कृतवान् । चित्रः प्रश्नमाह—**गौतमस्य पुत्र** गौतमगोत्रीयस्यौरस । **अस्ति** विद्यते **संवृतं** सम्यगावृतं गुप्तं स्थानं बहिर्मुखैरज्ञातमावृत्तिशून्यमित्यर्थः । **लोके**ऽस्मिन्स्थिरजङ्गमनिवासे **यस्मिन्संवृते** स्थाने **मा** मां प्रष्टारं[४] शिष्यभूतं **धास्यसि** त्वं याजयिता गुरुर्भूत्वा स्थापयिष्यासि तत्राप्यन्यं सर्वस्माज्जगतो भिन्नमुत सर्वजगदात्मभूतं मां धास्यसीत्येकः पक्षो बहिरेवावगन्तव्यः । **अहो** संबोधने । अन्यत्वपक्षे दोषं दर्शयितुं धारणे गतिमाह—**बाध्वा** बद्ध्वा काष्ठेनेव काष्ठं निःसंधिबन्धनं जतुरज्जुलोहादिभिरिव बद्ध्वाऽन्यं मां धास्यसीत्यन्वयः । अन्यशब्दोऽयं तन्त्रेणोच्चारितो लिङ्गव्यत्यासेनावगन्तव्यः । ततोऽस्ति[५] संवृतं स्थानमन्यद्वा । अन्यस्थानपक्ष आह—**तस्य** तस्मिन्नसंवृते स्थाने **मा** मां रा[६]ज्यादिवन्तं कंचित्कालं परतन्त्रफलभोक्तारमुक्तम् । **लोके धास्यसि,** व्याख्यातम् । इत्यनेन प्रकारेण बुद्धिपरीक्षार्थं पितुः सपुत्रस्याभिमानपरिहारार्थं वा राजा पप्रच्छेत्यन्वयः[७] ।

**स होवाच नाहमेतद्वेद हन्ताऽऽचार्यं पृच्छानीति स ह पितरमासाद्य प्रपच्छेतीति माऽप्राक्षीत्कथं प्रतिब्रवाणीति स होवाचाहमप्येतन्न वेद सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः परे ददत्येह्युभौ गमिष्याव इति ।**

**स** गौतमपुत्रः श्वेतकेतुश्चित्रपृष्टः ह प्रसिद्धः । **उवाचो**क्तवान् । श्वेतकेतूक्तिमाह—**नाहमेतद्वेद** । अहं श्वेतकेतुरेतत्त्वदुक्तं लोके संवृतमसंवृतं वा स्थानं त्वमाधेयम-

---

×च पुस्तके सर्वत्र गार्ग्यायणिस्थाने गाङ्ग्यायनिरिति वर्तते ।

---

१ च. गाङ्ग्यायनिर्गाङ्ग्यस्य युवापत्यं गाङ्ग्यायनिः । य° । २ घ. °यनिः । य° । ३ घ. °जिगाय । ४ च. °रं त्वाच्छिष्य° । ५ घ. °तोऽस्य सं° । ६ घ. राज्यव° । ७ च. °यः । अन्यमहं बाध्वा तस्येति पाठे व्याख्येयम् । अन्यतमो वाऽध्वा तस्येति पाठे धूमार्चिषोरन्यतमो वाऽध्वा मार्गस्तस्य संबन्धिनि लोक इत्यर्थः । स ।

न्यत्वेनानन्यत्वेन वा बद्ध्वाऽबद्ध्वा वेति न जानामि । हन्त हर्षसंबोधने त्वत्प्रश्ननिमित्तं ममाप्येतदवगतं भविष्यतीत्यर्थः । **आचार्यं** सर्वज्ञं सर्वशास्त्रार्थस्य ज्ञातारमनुष्ठातारमाचारे स्थापयितारं च पितरं **पृच्छानि** प्रश्नं करवाणि । पितुर्गमनात्पूर्वं विस्मृतिर्मा भूत्तत्र गत्वा प्रश्नं करिष्यामीत्यर्थः । इत्यनेन प्रकारेणोवाचेत्यन्वयः । **स** चित्रदेयोत्तरः श्वेतकेतुः । ह प्रसिद्धः **पितरमाचार्यमारुणिं** जनक**मासाद्य** संप्राप्य । **पप्रच्छेति,** अनेन वक्ष्यमाणेन प्रकारेण प्रश्नं कृतवान् । तत्प्रश्नप्रकारमाह—**इति माऽप्राक्षीन्मां** श्वेतकेतुं गौतमस्येत्यादिना धारयसीत्यन्तेन[1] वाक्येन प्रश्नमकरोत् । **कथं प्रतिब्रवाणी**त्यस्य प्रश्नस्य केन प्रकारेण प्रत्युत्तरं वदामीत्यनेन[2] प्रकारेण पप्रच्छेत्यन्वयः । **स** पुत्रपृष्ट आरुणिः । ह प्रसिद्धः । **उवाच,** उक्तवान् । अहमप्येतन्न वेदाऽऽचार्योऽप्यहमारुणिरेताच्चित्रपृष्टं न जानामि । **सदस्येव** चित्रस्य गार्ग्यायणेः सभायामेव न त्वन्यत्र **वयमा**रुणिश्वेतकेतुप्रभृतयः । **स्वाध्यायम**धीत्यैतदर्थप्रतिपादकं वेदभागं सार्थमधिगम्य चित्राद्गार्ग्यायणेः । **हरामहे**ऽधिगच्छामः । यद्यस्मात्कारणान्नोऽस्मभ्यं गौतमादिभ्योऽपरिहार्येभ्योऽव्यर्थोपक्रमेभ्यो याचकेभ्यः **परे** विद्याधनदातारो **ददति** प्रयच्छन्ति तच्चित्रो न दास्यतीति शङ्का न करणीयेत्यर्थः । **एह्यागच्छ** चित्रं **प्रत्युभौ गमिष्याव** आवां यास्यावः । इत्यनेन प्रकारेणोवाचेत्यन्वयः ।

**स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रम उपायानीति तं होवाच ब्रह्मार्घोऽसि[3] गौतम यो न मानमुपागा एहि व्येव त्वाँ ज्ञपयिष्यामीति ॥ १ ॥**

**स** आरुणिः[5] । ह प्रसिद्धः । **समित्पाणि**र्गुरुदर्शनार्थं समिद्धस्तः । **चित्रं** चित्रनामानं **गार्ग्यायणिं** गार्ग्यस्य युवापत्यं **प्रतिचक्रम उपायानीति** त्वां विशिष्टविद्याविदं चित्रं गुरुत्वेनोपागच्छामि प्राप्तोऽस्मीत्यनेन प्रकारेण प्रतिचक्रमे प्रतिचक्राम समीपं गतवान् । **तं** शिष्यत्वेनाऽऽत्मानं प्राप्तमारुणिं ह प्रसिद्धमुवाचोक्तवान् । चित्रोक्तिमाह—**ब्रह्मार्घो**[6] ब्रह्मणो हिरण्यगर्भस्य परस्य ब्रह्मणो वाँ[7]ऽर्घोऽघर्यं पूजेति यावत् । तद्यस्य स ब्रह्मार्घो[8] ब्रह्मवन्माननीय इत्यर्थः । **असि** भवसि । **गौतम** हे गौतमगोत्रीय । तत्र कारणमाह—**यो** वेदाविदामग्रणीर्मद्गुरुभूतो याजकः सन्मया पुत्रद्वारेण पृष्टो **न मानमुपागा** मां शिष्यभूतं प्रष्टुं समागतो भवान्न तु किमनेन शिष्यभूतेन पृष्टेनेत्यभिमानं गतवान् । **एह्यागच्छ व्येव त्वा ज्ञपयिष्यामि** त्वां गौतमं विज्ञापयिष्याम्येव

---

१ ध. च. °न्तेनेत्यनेन वा° । २ च. °मीत्यर्थः । इत्य° । ३ व. ब्रह्मार्होऽसि । च. ब्रह्मग्राह्मासि । ४ क. त्वा ज्ञाप° । ५ च °णिः सपुत्रः । ह । ६. °ह्मार्हो ब्र° । ७ घ. वाऽर्हः । अर्ह पू° । ८ व. ह्मार्हो ब्र° ।

स्पष्टं बोधयिष्यामि न तु संदेहादिकं जनयिष्यामि । इत्यनेन प्रकारेण प्रतिज्ञामकरोदिति शेषः ॥ १ ॥

**स होवाच ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ।**

**स** चित्रः कृतप्रतिज्ञः । **ह** प्रसिद्ध **उवाचो**क्तवान् । प्रथमतो गुप्तं स्थानं भेददर्शिनां कर्मिणामाह—**ये वै केच** ये केच त्रैवर्णिकाः प्रसिद्धा अग्निहोत्रादिकर्मानुष्ठातारः । **अस्मा**त्प्रत्यक्षा**ल्लोका**दवलोकनयोग्यात्त्रैवर्णिकदेहात् । **प्रयन्ति,** अपसर्पन्ति म्रियन्त इत्यर्थः । **चन्द्रमसमेव ते सर्वे गच्छन्ति** ते विमुक्तदेहाः कार्मिणो निखिला धूमरात्रिकृष्णपक्षदाक्षिणायनाकाशान्गत्वाऽनन्तरं कर्मफलभूतं स्वर्गापरपर्यायं चन्द्रमण्डलं गच्छन्ति न त्वादित्यादिकम् ।

**तेषां प्राणैः पूर्वपक्ष आप्यायते तानपरपक्षे न प्रजनयाति ।**

**तेषां** स्वर्गिणां कार्मिणां **प्राणै**रिन्द्रियैः प्राणापानादिसहितैः **पूर्वपक्षे** शुक्लपक्ष **आप्यायत** आप्यायनं गतो भवति चन्द्रमा राजभृत्यकरादिभिरिव राजा **तान्**कार्मिणः प्राणान**परपक्षे** कृष्णपक्षे **न प्रजनयति** नोत्पादयति । अयमर्थः । क्षीणभृत्यैश्चै(वित्त इ)[1] व राज्ञः (जा) परिवाराञ्च[2](णां न) जनयति द्रव्यलाभ[3] ए(मे)वं चन्द्रः क्षीणः स्वर्गिणां तृप्तिम्[4] ।

**एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमास्तं यः प्रत्याह तमतिसृजतेऽथ य एनं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति**

**एतदुक्तं** चन्द्रमण्डलं **वै** प्रसिद्धममृतरूपं **स्वर्गस्य लोकस्य** स्वर्गाख्यस्य स्थानस्य **द्वारं** गृहस्येवान्तःप्रवेशमार्गः । एतच्छब्दार्थमाह—**यः** प्रसिद्धश्चन्द्रमा इन्दुः । संवृतं स्थानं विवक्षुराह—**तं** चन्द्रमसं दक्षिणमार्गाख्यं **यो**ऽधिकार्यमानित्वादिगुणः **प्रत्याह** निराचष्टेऽहमेतस्मिन्संततसंपाते न गमिष्यामीति **तं** निराकृतचन्द्रमस**मतिसृजते** चन्द्रमसमतीत्य विद्युदाद्यातिवाहिकेषु सृजत उत्पादयति । उपासनासंकल्पो ब्रह्मलोकं नयतीत्यर्थः । **अथ** पक्षान्तरे **यः** कर्मी स्वर्गाभिलाषवान् । **एनं** चन्द्रमसं **न प्रत्याह** न निराचष्टे गमिष्याम्यहं स्वर्गमिति संकल्पवानित्यर्थः । **तं** कामिनं स्वर्गनिवासम् । **इहा**स्मिँल्लोके रमणीयारमणीयचरणफलभूते **वृष्टिर्भूत्वा** कर्मफलोपभोगनियमोऽनुशयसहितो वर्षधाराभावं प्राप्य **वर्षति** मेघोदरेभ्यो नीरधाराभिः सहानुशयिनं मुञ्चति ।

**स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते**

---

१ च. °त्यस्यैव । २ च. °रिचारा° । ३ च. द्रव्याला° । ४ च. तृप्तिं न जनयतीति । ननु स्वर्गकामो जुहुयादिति श्रूयते न चन्द्रमण्डलकाम इत्यत आह—ए° ।

**यथाकर्म यथाविद्यम् ।**

**स वृष्टिरूपेणाऽऽगतो** भूलोकमनुशयी यदि कपूयचरणस्तदा दक्षिणोत्तरमार्गाद्भ्रष्ट **इहास्मिँल्लोके कीटो वा** कीटो वज्रसारसमानोऽल्पकायो जीवविशेषः । वाशब्दात्पिपीलिकादिः । **पतङ्गो वा** पतङ्गो दीपतेजोविरोधी क्षुद्रो जीवः । वाशब्दात्खद्योतादिः । **शकुनिर्वा** शकुनिः पक्षी । वाशब्दाद्वानरादिः । **शार्दूलो वा** शार्दूलो व्याघ्रः । वाशब्दात्सूकरादिः । **सिंहो वा** सिंहो गजघातको जीवः । वाशब्दात्सरभादिः । **मत्स्यो वा** मत्स्यो मीनः । वाशब्दान्मकरादिः । **परश्वा वा** परश्वा दन्दशूकविशेषः । वाशब्दाद्वृश्चिकादिः । यदा कपूयरमणीयोभयचरणस्तदा **पुरुषो वा** पुरुषो नरः । वाशब्दान्नारी नपुंसकं च । पुरुषस्यापि रमणीयचरणबाहुल्ये ब्राह्मणत्वादिकमवगन्तव्यम् । एवं शुभाशुभचरणमभिधाय पुनः प्रकृतं कपूयचरणं संक्षेपेणाऽऽह—**अन्यो वो**क्तेभ्योऽन्यो दुःखभागी जङ्गमः । वाशब्दात्स्थावरः । **एतेषु** पूर्वोक्तेषु कीटादिषु **स्थानेषु** पूर्वोक्तेषु देहेषु । अनुशयवान्**प्रत्याजायते** स्वर्गात्प्रत्यागत्य समन्तादुत्पद्यत इत्यर्थः । उत्पत्तौ निमित्तमाह—**यथाकर्म** यादृशं शुभमशुभं व्यामिश्रं वा कर्म **यथाविद्यं** यादृशी शास्त्रीयाऽशास्त्रीया व्यामिश्रा वा विद्या विद्याकर्मानुसारेण शुभमशुभं व्यामिश्रं च शरीरं भवतीत्यर्थः ।

एवं कर्मणां गतिं स्वर्गनरकोभयात्मिकां वैराग्यार्थमुपदिश्य गुरुशिष्ययोः करणीयं विवक्षुः प्रथमतो गुरोः करणीयमाह—

**तमागतं पृच्छति कोऽसीति तं प्रतिब्रूयाद्विचक्षणादृतवो रेत आभृतं पञ्चदशात्प्रसूतात्पित्र्यवतस्तन्मा पुंसि कर्तर्येरयध्वम् ।**

**तं** नरकादिव स्वर्गादपि विरक्तं विज्ञातनरकस्वर्गगतिं त्रिविधतापसंतप्तमानसममानित्वादिगुणं शिष्य**मागतं** शुभाशुभाभ्यां कर्मभ्यां स्वर्गाद्भूलोकं प्राप्यात्युत्कटेन पुण्येन केनचिदात्मानं प्रत्यागतं **पृच्छति** करुणारसपूर्णहृदयो वेदान्तार्थयाथात्म्यविद्गुरुलक्षणसंपन्नो गुरुः प्रश्नं करोति पृच्छेदित्यर्थः । गुरोः प्रश्नमाह—**कः** प्रश्ने । शरीरेन्द्रियादिरूप आहोस्वित्तद्विलक्षणोऽसि भवसि । इत्यनेन प्रकारेण पृच्छतीत्यन्वयः । तमेवं पृच्छन्तं स्वगुरुं शिष्यो गुरुप्रश्नानन्तरं **प्रतिब्रूयात्**प्रत्युत्तरं वदेत् । शिष्यो देहादिसंघात[1]मात्मानमुररीकृत्याऽऽह—**विचक्षणाद्**बहुविधभोगदानकुशलात्सूर्यसुषुम्नानाडीरूपाच्चन्द्रमस **ऋतव** ऋतोर्वसन्ताद्यर्तुस्वरूपान्न हि चन्द्रमसमन्तरेण **रेतः** श्रद्धासोमवृष्ट्यन्नपरिणामरूपं शुक्र**माभृतं** रेतःसिक्पुरुषाग्नौ देवैरन्नाहुतिप्रक्षेपेण स्थापितं **पञ्चदशात्**पञ्चदशकलात्मकाच्छुक्लकृष्णपक्षहेतोरित्यर्थः । **प्रसूतात्**सायंप्रातरग्निहोत्राहुतिद्वयापूर्वा-

१ च. °संहत° । २ व. °कृप° ।

परपर्यायश्रद्धातः संजातात्सोमप्रकृतिविकाररूपाद्वा **पित्र्यवतः** पितृमतः पितृलोकस्वरूपादित्यर्थः । **तत्**, उक्तं रेतः । **मा** मामप्स्वरूपं मयाऽनुशयिना सहितमित्यर्थः । **पुंसि** रेतःसिचि **कर्तरि** ग्राम्यधर्मानुष्ठातर्येरयध्वं समन्तान्नानाङ्गेषु वर्तमानमेकत्र हृदयप्रदेशे प्रेरयत प्रेरणं कुरुतेत्यर्थः । यद्यप्यत्र कर्ता कोऽपि न प्रतीयते प्रेरणे तथाऽप्यर्थलाभात्पञ्चाग्निविद्यागता देवा एवावगन्तव्याः ।

**पुंसा कर्त्रा मातरिमा निषिक्त स जाय उपजायमानो**
**द्वादशत्रयोदश उपमासो द्वादशत्रयोदशेन पित्राऽऽसं**
**तद्विदे प्रतितद्विदेऽहं तन्म ऋतवो अमर्त्यव आभरध्वम् ।**

**पुंसा** रेतःसिचा निमित्तभूतेन **कर्त्रा** ग्राम्यधर्मानुष्ठात्रा **मातरि** पञ्चमाग्निरूपायां योषिति **मा** मां रेतसा सहितमनुशयिनं **निषिक्त** सेचितवन्तो देवाः **स** योषिति रेतोरूपेण सिक्तोऽनुशयीह **जाये** जनन आविर्भावनिमित्तमित्यर्थः । **उपजायमानो** रेतःसेकमनु स्वं कर्मसमीपे शरीरं गृह्णानो **द्वादशत्रयोदशो** द्वादशसंख्यया विशिष्टः स्वभावतः कदाचित्त्रयोदशसंख्यया विशिष्टो द्वादशत्रयोदशः । **उपमासो** मासानां समीपे वर्तनं यस्य सोऽयमुपमासः संवत्सरः । संवत्सरकालोपलक्षितजीवनत्वादनुशय्यपि द्वादशत्रयोदश उपमास इत्यविरुद्धम् । **द्वादशत्रयोदशेनो**क्तरीत्या द्वादशत्रयोदशमासात्मकसंवत्सरोपलक्षितेन **पित्रा** रेतःसिचा जनकेनाऽऽसं तादात्म्यं गतोऽभवम् । रेतःसेकात्प्राक्**तद्विदे** तस्य ब्रह्मणो ज्ञानार्थं सति भाग्ययोगे वैपरीत्ये तु **प्रतितद्विदे** तद्वेदनस्य प्रतिकूलज्ञानार्थम**हं** स्वर्गाद्भ्रष्टोऽनुशयी शास्त्रदृष्टिः । **तत्त**त्रैवं स्थिते तस्माद्वा **मे** मह्यं मदर्थमित्यर्थः । **ऋतव** ऋतूननेककालमाब्रह्मसाक्षात्कारं जीवनमित्यर्थः । **अमर्त्यवे**ऽमर्त्याय ब्रह्मज्ञानपारिपूर्तये । **आभरध्वम्**, हे देवाः समन्ताद्धारयध्वम् ।

**तेन सत्येन तेन तपसा ऋतुरस्म्यार्तवोऽस्मि**
**कोऽस्मि त्वमस्मीति तमतिसृजते ॥ २ ॥**

**तेन** विचक्षणादित्यादिनोक्तेन **सत्येन** यथार्थवचनेन **तेन** चन्द्रनिवासमारभ्य योनिनिर्गमनान्तेन **तपसा** क्लेशेन । **ऋतु**रुक्तरीत्या संवत्सराद्यात्मको मर्त्य इत्यर्थः । **अस्मि** भवामि । **आर्तव** ऋतुजः शुक्रशोणितशरीरात्मक इत्यर्थः । **अस्मि** भवामि । एवं ब्रुवाणं चेच्छिरःकम्पहस्तविधूननादिना निवारयसि तर्हि कथय **कः** प्रश्ने कार्यकारणविलक्षणः को नामाहमस्मि भवामि । एवमुक्ते वक्ष्यमाणाध्यायद्वयोक्त आत्मन्युप-

---

१ क. सिषिक्त । ख. शिषिक्त । च. सिषिञ्च । २ ख. च. °दशोप° । च. दशो मा° । ३ च. °देऽहं प्र° । ४ ख. आरभध्व° । ५ ख. शिषिक्त । च. गिषिञ्च । च. सिषिक्त । ६ च. आरभध्व° । ७ च. को सि । ८ °स्मि कोऽसि त्व° ।

दिष्टे पुनः कोऽसीति पृष्टे शिष्य आह—त्वं ममोपदेष्टा प्राणप्रज्ञात्माऽवस्थात्रयातीतः सगुणत्वेन पर्यङ्के समासीनोऽस्मि भवामि । विचक्षणादृतोः पञ्चदशात्प्रसूतात्पितृमत आभृतं रेतो यत्तन्मां हे देवाः पुंसि कर्तारि प्रेरितवन्तः । ततः पुंसा कर्त्रा निमित्तेन मातर्यपि मां सेचितवन्तः । द्वादशत्रयोदशेन पित्रैक्यं गत आसं संवत्सरो द्वादशत्रयोदश उपमासस्तद्विदे प्रतितद्विदे जाय उपजायमानो वर्त इति यतस्ततो मेऽमर्त्याय ब्रह्मज्ञानपरिपूर्त्यर्थमृतुरूपायुरौभरध्वम् । यस्मादेवं जानानो देवान्प्रार्थये तेन सत्येन तेन तपसा द्वा(च)र्तुरस्म्यार्तवोऽस्मीति संबन्धः । विचक्षणादित्यारभ्याऽऽभरध्वमित्यन्तं हेत्वर्थमुपोद्घातनयेनातो न व्यधिकरणत्वशङ्काऽपि । प्रार्थनायामपि शब्दतो लभ्यमानानामृतूनां वा प्रार्थना । अस्मिन्पक्षे त्वेवं व्याख्येयो मन्त्रो हे विचक्षणा हे ऋतवः । यतोऽहं ब्रह्मज्ञानार्थी तन्मे मां हे ऋतवो हे मर्त्यवो मृत्युहेतवः समानमन्यद्देवपक्षेण । इत्यनेन प्रकारेण प्रतिब्रूयादित्यन्वयः । तं विचक्षणादादित्वमस्मीत्यन्तं ब्रुवाणं नरकादिव चन्द्रमसोऽपि भीतं ब्रह्मविदमतिसृजते । संसारादतीत्योत्पादयति ब्रह्मविद्यया विमोक्षयतीत्यर्थः ॥ २ ॥

**स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स आदित्यलोकं**

सगुणब्रह्मविदो देवयानमार्गमाह—**स** सगुणब्रह्मवित्पर्यङ्काद्यन्यतमविद्यावान्प्राणप्रयाणसमये प्राज्ञेनाऽऽत्मनैकीभूतो हृदयाग्रप्रद्योतनेन प्रदर्शितसुषुम्नाद्वारः । **एतं** वक्ष्यमाणम् । **देवयानं** देवैरर्चिरादिभिरुह्यमानेनोपासकेन प्राप्यत इति देवयानस्तम् । **पन्थानं** मार्गमापद्य सुषुम्नाद्वारा मूर्धानं भित्त्वा निर्गतः प्राप्य प्रथमम**ग्निलोक**मग्रे देवयानमार्गोपक्रमे सगुणब्रह्मविदो नयतीत्यग्निः स चासौ लोकः प्रकाशश्चाग्निलोकस्तमार्चिरभिमानिनीं देवतामित्यर्थः । **आगच्छति** प्राप्नोति । ततोऽहरापूर्यमाणपक्षोदगयनषण्मासंवत्सरदेवलोकाभिमानिनीर्देवता यथाक्रमेण प्राप्यानन्तरं **स** प्राप्तदेवलोको **वायुलोकं** वायुदेवतामागच्छतीत्येतद्वक्ष्यमाणेष्वप्यनुषज्यते । **स** वायुदत्तरथचक्रच्छिद्रोपममार्गो वायुलोकादनन्तरमा**दित्यलोक**मादित्यदेवतां ऽम्बराकाशसमानमार्गदात्रीं चन्द्रमसः पूर्वभाविनीम् ।

**स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोकस्य**

**स** आदित्यलोकात्प्राप्तचन्द्रविद्युल्लोको विद्युल्लोकादमानवेन पुरुषेण नीयमानो **वरुणलोकं** वरुणदेवतां सोऽमानवेन पुरुषेण नीयमानो वरुणात्प्राप्तसहायको वरुणादनन्त-

१ घ. 'रांभध्वं' ।

रमिन्द्रलोकमिन्द्रदेवतां **स** प्राप्तेन्द्रसहायकस्ततः **प्रजापतिलोकं** प्रजापतिदेवतां विराड्रूपां **स** प्राप्तविराट्सहायकस्ततो **ब्रह्मलोकं** हिरण्यगर्भलोकममानवपुरुषैकगम्यम् । **तं** ब्रह्मलोकं वर्णयति—**तस्यामानवपुरुषनयनेन** प्राप्तस्य ह शास्त्रप्रसिद्धस्य **वै** ब्रह्मविद्भिः स्मर्यमाण**स्यैतस्य** प्रत्यक्षस्यैव प्रकृतत्वेन **ब्रह्मलोकस्य** हिरण्यगर्भनिवासस्य ।

**आरो ह्रदो मुहूर्ता * येष्टिहा विजरा नदील्यो वृक्षः**
**सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ ।**

**आरो ह्रदः** प्रथमं ब्रह्मलोकप्रवेशे ब्रह्मलोकमार्गनिरोधकः समुद्रशतसमानगाम्भीर्योऽजस्रनीलजलोऽरिभिः कामक्रोधादिभिर्विरचितत्वेनाऽऽरेतिनामा ह्रदः । तस्येत्यादि वक्ष्यमाणेष्वप्यनुवर्तते । आरह्रदस्य परपारे वर्तमाना **मुहूर्ता** घटिकाद्वयकालाभिमानिनो देवाः । तान्विशिनष्टि—**येष्टिहाः**[1] । य इष्टिमिष्टं ब्रह्मलोकानुकूलमुपासनं कामक्रोधादिप्रवृत्त्युत्पादनेन घ्नन्तीति येष्टिहाः । **विजरा नदी** विगता जरा यस्या दर्शनादिना सेयमुपासनक्रियैव तन्नाम्नी नदी । **इल्यो वृक्षः,** इला पृथिवी तद्रूपत्वेनेल्येतिनामा तरुः । अयमन्यत्राश्वत्थः सोमसवन[2] इत्याचक्षते । **सालज्यं संस्थानं** सालवृक्षसमाना ज्या धनुषां गुणा इव वस्तु यत्रोपतीरं तत्सालज्यम् । अनेक[3]सुरसेव्यमानारामवापीकूपतटाकसरिदादिविविधजलपरिपूर्णमित्यर्थः । संस्थानम्, अनेकजननिवासरूपं पत्तनमित्यर्थः । **अपराजितमायतनं** न केनचित्पराजितमनेकसूर्यसमानत्वेनेत्यपराजितं ब्रह्मणो निवासस्थलम् । हिरण्यगर्भस्य राजमन्दिरमित्यर्थः । तस्मिन्नपराजितनाम्न्यायतन **इन्द्रप्रजापती** स्तनयित्नुयज्ञत्वेनोपलक्षितौ वाय्वाकाशाविन्द्रप्रजापतिनामानौ **द्वारगोपौ** द्वाररक्षकौ द्वारस्थावित्यर्थः ।

**विभुप्रमितं विचक्षणाऽऽसन्द्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा**
**च चाक्षुषी पुष्पाण्यावयतौ वै च जगान्यम्बाश्चाम्बायवीश्चाप्सरसः ।**

**विभुप्रमितम**त्यन्तमप्यधिकमहंकारस्वरूपमहमित्येव सामान्येन प्रमितं विभुप्रमितं ब्रह्मणः सभास्थानमेतन्नाम । **विचक्षणाऽऽसन्दी** विचक्षणा कुशला बुद्धिमहत्तत्त्वेत्यादिशब्दाभिधेयाऽऽसन्दी सभामध्यवेदिः । **अमितौजाः पर्यङ्कः,** अमितमपरिमितं प्राणसंवादादौ प्रसिद्धमोजो बलं यस्य सोऽमितौजाः प्राणः पर्यङ्को ब्रह्मण आसनभूतो मञ्चकः[5] । **प्रिया च मानसी** मनसः कारणभूता प्रकृतिर्मनोगताह्लादकारिणी भार्या । चकारस्तस्या अलंकरणादिकमपि सैवेत्येतदर्थः । **प्रतिरूपा च चाक्षुषी** चक्षुष्प्रकृतिभूता तैजसी प्रतिरूपा प्रतिच्छाया । चकारः प्रतिरूपालंकरणादेरपि चाक्षुषीत्वसंग्रहार्थः ।

* यष्टिहेति पाठः ।

१ च. °हाः । या ब्रह्मप्राप्त्यामिष्टिरिष्टं । २ च. °मसवन । ३ च. °कसुर° । ४ क. घ. °म्बाश्चा° । ५ च. °कः सिंहासनम् । प्रि° ।

**पुष्पाण्यावयतौ वै च जगानि** जगानि जगन्ति चतुर्विधानि भूतानि सलोकसंस्थानानि पुष्पाणि कुसुमानि वै प्रसिद्धानि पुष्पसमानधर्मत्वेन न केवलं पुष्पाणि जगानि किंत्वावयतौ च आ समन्तात्तन्तुसंतानेन निष्पादितौ पटावप्याच्छादनपरिधानरूपौ । अनयोरपि भूतैः संकोचविकासादिसामान्यमवगन्तव्यम् । **अम्बाश्चाम्बायवीश्चाप्सरसः**, अम्बा जगज्जनन्यः श्रुतयः । अम्बायवो न विद्यतेऽम्बोऽभ्यधिकोऽयवश्च न्यूनो यासां ता अम्बायवा बुद्धयोऽम्बायवा एवाम्बायव्यः श्रुतिबुद्धयोऽप्सरसः साधारण्यो योषितः । चकारावुभयोरपि प्रत्येकमप्सरस्त्वयोगार्थौ ।

**अम्बया नद्यस्तामित्थंविदागच्छति तं ब्रह्माऽऽहाभिधावत मम यशसा विजरां वा अयं नदीं प्रापन्न वा अयं जरयिष्यतीति ॥ ३ ॥**

**अम्बया नद्यः**, अम्बमम्बकं लोचनं ब्रह्मज्ञानं यान्तीत्यम्बया[२] उपासनाः । नद्यो वारां प्रवाहधारिण्यः पुरायतनादिवासिलोकभोग्याः । तमुक्तं ब्रह्मलोकमारो ह्रद इत्यादिनाऽम्बया नद्य इत्यन्तेन । **इत्थंविदु**क्तेन वक्ष्यमाणेन वा प्रकारेण पर्यङ्कस्थब्रह्मवित् । **आ गच्छति** समन्तात्प्राप्नोति । तममानवेन पुरुषेणाऽऽनीयमानमुद्दिश्य **ब्रह्मा** हिरण्यगर्भ **आह** ब्रूते स्वपरिचारकानप्सरसश्च । ब्रह्मोक्तिमाह—**अभिधावत** पर्यङ्कविद्याविदमभितः संमुखं धावत गच्छत । **मम यशसा** मदीयकीर्त्या ममार्हं संभारं स्वीकृत्य मत्प्रतिपत्त्या पूजां कुरुतेत्यर्थः । ननु भवानजरोऽयं भवतो विपरीतः कथं भवतः पूजामर्हतीत्यत आह—**विजरां** जराहारिणीं सार्थनामधारिणीं **वै** प्रसिद्धामस्मदादीनाम**यं** पर्यङ्कविद्याविन्न**दीं** सिन्धुं **प्रापद**वाप्तः । **न वै** नैव । **अयं** प्राप्तविजरो **जरयिष्यति** वयोहानिमवाप्स्यति । इत्यनेन प्रकारेणाऽऽहेत्यन्वयः ॥ ३ ॥

**तं पञ्च शतान्यप्सरसां प्रतियन्ति[३] शतं चूर्ण[४]हस्ताः शतं वासोहस्ताः**

एवं ब्रह्मण उक्त्यनन्तरमनेकब्रह्मसभास्थजनैः समं **तं** ब्रह्मलोकमागतं पर्यङ्कविद्याविदं **पञ्च शतानि** पञ्चसंख्याकानि शतानि । **अप्सरसां** रूपयौवनसंपन्नानां मनोरमाणां स्तनजघनभारवशीकृतमध्यदेशानां मदनमदमोमुह्यमानदिगन्तराणां साधारणस्त्रीणां **प्रतियन्ति** संमुखमागच्छन्ति तद्दर्शनलालसानाम् । संविभागेन संभारानाह—**शतं** शतसंख्याकाश्चू**र्णहस्ता** हरिद्राकेसरकुङ्कुमचूर्णकराः । **शतं** शतसंख्याका **वासोहस्ता** विविधदुकूलकराः ।

---

१ घ. °यबाश्चा । २ घ. °या न° । ३ क. °ति धावन्ति शतं ज्वालाहस्ताः शतमाञ्जनहस्ताः श° । ४ च. °तं फ° । ५ च. °का माल्यहस्ता अनेकवर्णविचित्रगन्धपुष्पदामकराः शतं शतसंख्याका आञ्जनहस्ता अञ्जनोपयोगिद्रव्यमाञ्जनं कर्पूरकस्तूरिकाङ्कोलकतैलादिकराः शतं शतसंख्याकाश्चूर्णहस्ता हरिद्राकेसरकुङ्कुमचन्दनादिचूर्णकराः शतं शतसंख्याका वासोहस्ता विविधदुकूलादिकराः शतं शतसंख्याकाः फलहस्ता विविधाभरणहस्तास्तमनुत्तीर्णा° ।

**शतं फलहस्ताः शतमाञ्जनहस्ताः शतं माल्यहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्माभिप्रैति स आगच्छत्यारं ह्रदं तं मनसाऽत्येति ।**

**शतं** शतसंख्याकाः **फलहस्ताः शतं** शतसंख्याका **आञ्जनहस्ता** विविधाभरणहस्ताः **शतं** शतसंख्याका **माल्यहस्तास्त**मनुत्तीर्णारह्रदं प्राप्तब्रह्मलोकं **ब्रह्मालंकारेणालंकुर्वन्ति** हिरण्यगर्भयोग्येण मण्डनेन मण्डयन्ति । **स** पर्यङ्कविद्यावित् । अप्सरोभिर्**ब्रह्मालंकारेणालंकृतः**, स्पष्टम् । **ब्रह्म विद्वा**न्हिरण्यगर्भज्ञानवान्**ब्रह्मैवाभिप्रैति** हिरण्यगर्भरूपमेव सर्वतः प्राप्नोति न त्वन्यत् । ब्रह्मप्राप्तौ क्रममाह—**स** प्राप्तब्रह्मलोकोऽप्सरोभिर्ब्रह्मालंकारेणालंकृतस्ताभिः सभाजनैश्चा[३]ऽऽ**गच्छति** । प्राप्नोति । **आरं ह्रद**मारनामानं ह्रदम् । तमारं ह्रदं **मनसा** नावाद्यनपेक्षः केवलेनान्तःकरणे**नात्येति**, अतीत्य गच्छति । युक्तं ह्येतत् । न ह्यारो ह्रदः कामक्रोधादिवृत्तिभेदः स्वातिक्रमणे मनोव्यतिरिक्तं साधनान्तरमपेक्षते ।

ये हि ब्रह्मविद्याशून्यास्तेषामनर्थमाह—

**तमित्वा संप्रतिविदो मज्जन्ति स आगच्छति मुहूर्तान्येष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छति विजरां नदीं तां मनसैवात्येति ।**

**तमारं ह्रदमित्वा** केनचित्कर्मणा प्राप्य **संप्रतिविद** आत्मनः प्रतिकूलं वैषयिकं सुखं तत्सम्यक्त्वेनानुकूलत्वेन जानन्तीति संप्रतिविदोऽज्ञा इत्यर्थः । **मज्जन्ति** भिन्ननौका इव समुद्रे पान्था अपुनरुद्धारं मग्ना भवन्ति । **सो**ऽतिक्रान्तारह्रद **आगच्छति** प्राप्नोति । **मुहूर्तान्येष्टिहा**न्येष्टिहेतिनामकान्मुहूर्तांस्ते मुहूर्ताः कामक्रोधादिवृत्त्युत्पादका **अस्मान्म**नसाऽतिक्रान्तारा**दपद्रवन्ति,** अपगच्छन्ति स्वप्राणपरीप्सवो हतहिरण्यकशिपोर्नृसिंहादिव विप्रचित्तिप्रभृतयः । **स** स्वदर्शनेनापद्रावितमुहूर्त **आगच्छति** प्राप्नोति । **विजरां नदीं** विजरेतिनाम्नीं नदीं **तां** विजरां नदीं **मनसैव** साधनान्तरनिरपेक्षेणान्तःकरणेनैव । अत्येत्यतीत्य गच्छत्येव न त्वारह्रदोत्तारवन्मुहूर्तादिद्रावणं किंचित्करोति ।

ननु सुकृतमप्यस्ति सहायमस्य विजरोत्तार इत्यत आह—

**तत्सुकृतदुष्कृते धुनुते ।**

तत्तत्र शरीरपरित्यागावसर उपास्यमानब्रह्मसाक्षात्कारावसरे वा **सुकृतदुष्कृते** पुण्यपापे **धुनुते**ऽश्व इव रोमाणि कम्पनेन सुकृतदुष्कृतयोः परिपाकज्ञानेन परित्यजति ।

---

१ क फणहस्तास्तं । २ च. °हस्ताः शतं वासोहस्ताः शतं चूर्णहस्तास्तं । ३ घ. °कृतस्ताभिः । ४ घ. °नैश्च सह ब्रह्म विद्वान्ब्रह्म जानन्ब्रह्माभिप्रैति । ( स्पष्टम् ) । स उपासक आग° ।

ननु सुकृतदुष्कृतयोः सतोः कथं परित्याग इत्याशङ्क्य यथाऽग्निना सतां काष्ठानां दाहस्तथेति परमं परिहारं परित्यज्य प्रसङ्गाद्ब्रह्म विदुषि प्रीतिद्वेषयोः फलं विवक्षुर्ब्रह्मविद्यां स्तौति—

**तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षत एवमहोरात्रे पर्यवेक्षत एवं सुकृतदुष्कृते सर्वाणि च द्वंद्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति ॥ ४ ॥**

**तस्य** ब्रह्म विदुषः शत्रुमित्रादिसमबुद्धेः **प्रियाः** प्रीतिं कुर्वाणा **ज्ञातयो** ज्ञात्युपलक्षिता मनुष्याः **सुकृतं** पुण्य**मुपयन्ति** प्राप्नुवन्ति विष्णोरेव प्रियाः । **अप्रिया** ब्रह्मविदुषि विद्वेषं कुर्वाणा **दुष्कृतं** पापमुपयन्तीत्यनुवर्तते । नन्विदमतिचित्रं यो हि यत्करोति न स तत्प्राप्नोतीत्याशङ्क्य दृष्टान्तेन समाधानमाह—**तत्**तत्र कारयितुर्लेपे **यथा** दृष्टान्ते । अयं दृष्टान्तः—**रथेन** निमित्तभूतेन कारणेन **धावयन्**भूमौ प्रेरयन्**रथचक्रे** रथाङ्गे **पर्यवेक्षते** भूमौ संयोगवियोगफलवती रथचक्रे समन्तादवलोकयते न तु तत्फलं प्राप्नोति । **एवमनेन** प्रकारेणान्तःकरणशरीरादिकृतादृष्टनिमित्तं प्रवर्तमाने **अहोरात्रे** रात्र्यहनी **पर्यवेक्षते** समन्तादवलोकयति । **एवं** यथा रात्र्यहनी पर्यवेक्षते तथा **सुकृतदुष्कृते** पुण्यपापे न केवलं ते एव किंतु **सर्वाणि च द्वंद्वानि** च्छायातपशीतोष्णसुखदुःखादीनि निखिलान्यपि द्वंद्वानि पर्यवेक्षते न तु तत्फलभाग्भवति । न हीक्षितुः फलं कलहादेर्द्रष्टुर्मध्यस्थस्य दुःखस्यादर्शनात् । **स** उपासक **एष** प्राप्तब्रह्मलोको ब्रह्मलोकप्राप्तेः पूर्वमेव **विसुकृतो विदुष्कृतो**ऽपगतपुण्योऽपगतपापो **ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति** व्याख्यातम् ॥ ४ ॥

**स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छति ।**

**स** उपासक उत्तीर्णविजर **आगच्छति** प्राप्नोति । **इल्यं वृक्ष**मिल्यनामानं वृक्षं **तं** प्राप्तेल्यवृक्षं **ब्रह्मगन्धो**ऽननुभूतपूर्वः सर्वसुरभिगन्धातिशायी ब्रह्मगन्धो येनाऽऽघ्रातेन ब्रह्मलोकव्यतिरिक्तलोकेषु सुगन्धेष्वपि दुर्गन्धबुद्धिर्भवति तादृशो विड्वराहाणामिव मनुष्यजन्मन्याघ्रातश्चम्पकादिगन्धो विड्गन्धे दुर्गन्धबुद्धिजनकः **प्रविशति** घ्राणद्वारेणान्तर्हृदयकमलमुकुलमागच्छति । स आघ्रातब्रह्मगन्ध **आगच्छति** प्राप्नोति **सालज्यं संस्थानं** सालज्यनामकं पत्तनम् । तं प्राप्तसालज्यम् । **ब्रह्मरसो**ऽनास्वादितपूर्वोऽन्यरसहेयताबुद्धिजनको ब्रह्मलोक एवाऽऽसक्तिजनकोऽपूर्वो रसो रसनाद्वारेण **प्रविशति**

१ घ. °न साधनमा° । २ घ. °रलोपे । ३ च. °न कर° ।

व्याख्यातम् । स आस्वादितब्रह्मरस आगच्छति प्राप्नोति । अपराजितमायतनमपराजितनामकं ब्रह्मगृहम् । तं प्राप्तापराजितं ब्रह्मतेजोऽदृष्टपूर्वं सर्वतेजसां न्यक्कारकारकं ब्रह्मलोक एवाऽऽसक्तिकारकं चक्षुर्द्वारा प्रविशति व्याख्यातम् । स प्रविष्टब्रह्मतेजा आगच्छति प्राप्नोति ।

**इन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मतेजः प्रविशति स आगच्छति विचक्षणामासन्दीं[२] बृहद्रथंतरे सामनी पूर्वौ पादौ श्यैतनौधसे चापरौ[३] वैरूपवैराजे अनूच्यते शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति स आगच्छत्यमितौजसं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ**

**इन्द्रप्रजापती द्वारगोपा**विन्द्रप्रजापतिनामानौ द्वाररक्षाकारकौ द्वारस्थौ **ताविन्द्रप्रजापती** द्वारस्थौ । **अस्मात्**प्राप्तब्रह्मगन्धरसतेजसो ब्रह्मण एव दर्शनमात्रेण बद्धाञ्जली परित्यक्तासनौ द्वारप्रदेशात्सरभसं जय जयेति शब्दमुच्चारयन्तौ । **अपद्रवतो**ऽपसरतः । **सो**ऽपद्रावितेन्द्रप्रजापति**रागच्छति** प्राप्नोति । **विभुप्रमितं** विभुनामकं प्रमितं सभास्थलम् । तं प्राप्तविभुप्रमितं **ब्रह्मतेजो** ब्रह्माहमस्मीति प्रकृतेरहंकारो मनसा द्वारेण **प्रविशति,** व्याख्यातम् । **स** प्राप्तब्रह्मतेजा **आगच्छति** प्राप्नोति **विचक्षणामासन्दीं** विचक्षणेतिनामिकाम्[७] । तस्या आसन्द्याः प्रकारमाह—**बृहद्रथंतरे सामनी** अस्याः **पूर्वौ पादौ श्यैतनौधसे** सामनी अस्या **अपरौ** पादौ **वैरूपवैराजे** सामनी अस्या **अनूच्ये** दक्षिणोत्तरे अस्रे **शाक्वररैवते** सामनी अस्यास्तिरश्ची पूर्वपश्चिमे सा चतुरस्रा वेदी प्रज्ञा । **सा** विचक्षणाऽऽसन्दी **प्रज्ञा** महत्तत्त्वरूपिणी बुद्धिः । तत्राऽऽगतस्य फलमाह—**प्रज्ञया हि विपश्यति** हि यस्माद्विचक्षणां प्राप्तस्तस्मात्प्रज्ञयाऽऽत्मबुद्ध्या विविधं विश्वं पश्यति । **स** प्राप्तप्रज्ञः । **आगच्छति** प्राप्नोति । **अमितौजसं पर्यङ्कम् ।** अमितौजोनामकं पर्यङ्कम् । **स प्राणः** पञ्चवृत्तिः सर्वेन्द्रियेभ्योऽभ्यधिकः क्रियाशक्तिः । **तस्या**मितौजसः पर्यङ्कस्य **भूतं च भविष्यच्च पूर्वौ पादौ** मस्तकाधारगात्रस्याधस्ताद्वर्तमानौ प्राच्यां दिशि चरणातीतं भावि च विश्वम् । चकारावेकैकस्यैकैकपादत्वार्थौ । **श्रीश्चेरा चापरौ,** इरा इला । पादगात्रस्याधस्ताद्वर्तमानौ पश्चिमायां दिश्यन्यौ चरणौ लक्ष्मीर्धरणी च । चकारौ पूर्ववत् ।

**बृहद्रथंतरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्ये ऋचश्च सामानि च प्राची-**

---

१ क. च. ह्मयशः प्र° । २ क. °न्दीं सा । ३ ब. °रौ पादा वै° । ४ च. ह्मयशो ब्र° । ५ च. °ति ब्रह्मकीर्तिर° । ६ च ह्मयशा आ° । ७ घ °काम् । सा विचक्ष° ।

**नातानानि यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणं तस्मिन्ब्रह्माऽऽस्ते तमित्थंवित्पादेनैवाग्र आरोहति ।**

**बृहद्रथंतरे अनूच्ये** दक्षिणोत्तरयोर्दीर्घे खट्वाङ्गे अनूच्यसंज्ञे बृहद्रथंतरसामनी। **भद्रयज्ञायज्ञीये शीर्षण्ये** पूर्वपश्चिमयोर्ह्रस्वे खट्वाङ्गे पादाधारे शीर्षण्ये शीर्षपादस्थले भद्रयज्ञायज्ञीयसामनी। एवं कोष्ठचतुष्टये पादचतुष्टयेन निष्पन्ने पट्टिकामाह—**ऋचश्च सामानि च प्राचीनातानानि**। प्राक्प्रत्यगुपर्यधोभागेन वर्तमाना दीर्घाः पट्टिकाः प्राचीनातानानि तदृचश्च सामानि च। चकारावृक्सामयोरधउर्ध्वभागनियमार्थौ। **यजूंषि तिरश्चीनानि** यजूंषि प्रसिद्धानि दक्षिणोत्तरयोस्तिर्यक्पट्टिकारूपाणि। **सोमांशव उपस्तरणं** सोमकिरणाः सुकोमलकशिपुस्वरूपम्। **उद्गीथ उपश्रीः**, उद्गीथः सामभक्तिविशेषः। उपस्तरणस्योपर्यापादमस्तकं प्रक्षिप्यमाणं क्षीरगौरं मृदुतरं वस्त्रमुपश्रीस्तदुद्गीथः **श्रीरुपबर्हण**मुच्छीर्षकं लक्ष्मीः। यद्यपीयं पादत्वेन पूर्वमुक्ता तथाऽपि पूर्वा लौकिक्युत्तरा तु वैदिकीति विभागात्पुनरुक्तिर्न दोषः। **तस्मिन्**प्राणपर्यङ्के भूतं चेत्यारभ्य श्रीरुपबर्हणमित्यन्तेनोक्ते। **ब्रह्माऽऽस्ते** हिरण्यगर्भस्वरूपं स्वतादात्म्येनोपास्यमानमुपविष्टं वर्तते। **तं** ब्रह्मण आसनभूतं पर्यङ्कमुक्तमि**त्थंवि**दुक्तपर्यङ्कस्थेन ब्रह्मणा तादात्म्यवि**त्पादेनैव** चरणेनैव नतु पादावधस्तात्प्रक्षिप्य जघनकराद्यारोपणे**नाग्रे** प्रथमत **आरोह**त्यारोहणं करोति।

**तं ब्रह्मा पृच्छति कोऽसीति तं प्रतिब्रूयात् ॥ ५ ॥**

तं पादेनैवोक्तपर्यङ्कमारोहन्तं प्रियं पुत्रमिव पिता **ब्रह्मा पृच्छति** हिरण्यगर्भो ब्रूते। ब्रह्मोक्तिमाह—**कः** प्रश्नेऽसि भवसीत्यनेन प्रकारेण श्रुतिः शिक्षयति **तं** कोऽसीति ब्रुवाणं ब्रह्माणं **प्रतिब्रूया**त्प्रत्युत्तरं वदेत् ॥ ९ ॥

वक्तव्यं प्रत्युत्तरमाह—

**ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भाया एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य भूतस्याऽऽत्मा**

**ऋतुरस्मि** वसन्ताद्यृतुस्वरूपो भवामि। कालात्मकत्व उपपत्तिमाह—**आर्तवोऽस्मि,** ऋतुसंबन्धी भवामि। कालात्मकेन मया संबन्धात्। मम कालात्मनस्त्वया तादृशेनाभेदप्राप्तिर्यतस्ततः कालः कालसंबन्धी चाहं भवामीत्यर्थः। तर्हि किं यथा चन्द्रमसः समागत ऋतुरार्तवश्च तथेत्याशङ्क्य नेत्याह—**आकाशाद**व्याकृताद्यो**नेरु**पादानकारणा**त्संभूत** उत्पन्नो **भायाः** स्वयंप्रकाशाद्ब्रह्मणः। अयमर्थः।

---

१ च. °तानं य°। २ च. °तानम्। प्रा°। ३ च. °तानं तदृच°। ४ क. ह्माऽऽह को°। ५ च. °ह्माऽऽह हि°। ६ च. भार्यायै रेतः संव°। ७ च. भार्यायै भार्यायाः।

न केवलं जडमुपादानकारणं किंतु स्वयंप्रकाशं ब्रह्म शबलमिति[1] । **एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य भूतस्य** । ननु कथं माया आकाशाद्योनेः संभूतः कथमृतुरार्तवश्चेत्यत आह—भूतस्यातीतस्य भूतस्य यथार्थस्य कारणरूपस्य भूतस्य चतुर्विधचेतनाचेतनात्मकस्य भूतस्य पञ्चमहाभूतात्मकस्य। न हि संवत्सरमन्तरेण चतुर्विधानि भूतानि पञ्च भूतानि चोत्पद्यन्ते । संवत्सरस्य वसन्ताद्यनेकर्तुस्वरूपस्यैतत्संवत्सरप्रवर्तकमन्तर्बहिर्वर्तमानं तेजो दीप्तिस्वरूपं मद्बुद्धिप्रकाशकमात्माऽऽत्मेति प्रत्ययव्यवहारयोग्यम् । संवत्सरस्य च तत्कार्यस्य च मयि स्वयंप्रकाशस्वरूपेऽध्यस्तत्वात् । यदाऽप्येतत्संवत्सरस्यास्य तेजोभूतस्य तेजःस्वरूपस्याऽऽदित्यादितेजसः प्रवर्तमानत्वाद्भूतस्य व्यवहारयोग्यस्य चेतनाचेतनात्मकप्रपञ्चस्य भूतस्य कारणस्य भूतस्य कार्यस्याऽऽत्माऽधिष्ठानभूत इति व्याख्येयम् । तदाऽपि ऋतुत्वमार्तवत्वं चाविरुद्धं कालस्यापि कारणस्य समत्वात् ।

ननु कोऽयमात्मेत्यत आह—

**त्वमात्माऽसि यस्त्वमसि सोऽहमस्मीति तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तत्त्यं तदेतया वाचाऽभिव्याहियते सत्यमित्येतावदिदं सर्वमिदं सर्वमसि ।**

**त्वं** पर्यङ्कस्थो ब्रह्माऽऽत्माऽस्यात्मशब्दप्रत्ययभाग्भवासि । यद्येवं तर्हि किं तवेत्यत आह—**यः** प्रसिद्धः पर्यङ्कस्थस्त्वमसि ब्रह्मा मत्पुरतः स्थितोऽसि **स** युष्मच्छब्दप्रत्ययालम्बन **उक्तोऽहमस्म्यस्मच्छब्दप्रत्ययालम्बनो** भवामि **इत्य**नेन प्रकारेण प्रतिब्रूयादित्यन्वयः । तमेवं वदन्तमुपासकमाह ब्रूते पर्यङ्कस्थो ब्रह्मा । **कः** प्रश्ने । अहमस्मि यस्त्वमात्माऽसीति भवतोक्तः स कोऽहं ब्रह्मा भवामि । **इत्य**नेन प्रकारेण ब्रह्मणा पुनः पृष्ट उपासको ब्रह्माणं प्रति **सत्यं** सत्यशब्दाभिधेयाधिष्ठानम्। इति **ब्रूया**दनेन प्रकारेण वदेत् । एवमुक्ते पुनर्ब्रह्मा पृच्छति—**किं** प्रश्ने । **तद्भ**वतोक्तं **यद्भ**वतः प्रसिद्धं **सत्यं** सत्यशब्दाभिधेयम् । इत्यनेन प्रकारेण ब्रह्मणा पृष्टः पुनः प्रत्युत्तरं ब्रूयात् । यत्प्रसिद्धम् । **अन्यद्देवेभ्यश्च प्राणेभ्यश्चे**न्द्रियाधिष्ठातृभ्योऽग्न्यादिभ्य इन्द्रियेभ्यः[3] सप्राणेभ्यो व्यतिरिक्तम् । चकारौ वाय्वाकाशाभ्यामप्यन्यदित्येतदर्थौ । तदुक्तमिन्द्रियप्राणव्यतिरिक्तं **सत्स**च्छब्दालम्बनम् । **अथ** पक्षान्तरे **यत्प्र**सिद्धं **देवाश्च प्राणाश्चा**ग्न्यादय इन्द्रियाणि सप्राणकानि वाय्वाकाशौ च पूर्ववत् । **तदुक्तं** देवादिकं **त्यं** त्यच्छब्दालम्बनं **तदुक्तं** सचराचरं विश्वमेतयोक्तया सत्यरूपया **वाचा** वचनेनाभिव्याह्रियते सर्वत उच्यते । एतच्छब्दार्थमाह—**सत्यमिति** ।

१ ख. °ति । रेतः संव° । २ ख. ° पस्य रेतः संव° । ३ ग. °भ्यः मा° ।

सत्यं सत्यशब्दरूपमित्यनुकरणार्थः । **एतावदेतत्परिमाणमिदं** प्रत्यक्षादिप्रमाणगम्यं **सर्वं** निखिलं जगत् । इदानीं श्रुतिराह—**इदं सर्वमसि,** इदं प्रत्यक्षादिप्रमाणगम्यं सर्वं निखिलं भूतभौतिकात्मकं जगद्ब्रह्म त्वं भवसि ।

**इत्येवैनं तदाऽऽह [*तदेतदृक्श्लोकेनाभ्युक्तम् । यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति स विज्ञेय ऋषिर्ब्रह्ममयो महानिति ।]तमाह केन मे पौंस्यानि नामान्याप्नोषीति प्राणेनेति ब्रूयात् ।**

**इत्येवैनं तदाऽऽह** तदा तस्मिन्ब्रह्मणो मञ्चकसमीपागमनकाल इत्येवोक्तेनैव प्रकारेण न त्वन्येन । एनं ब्रह्माणम् । आहोपासकः समागतो ब्रूते तमुपासकं स्वात्मनः सर्वात्मत्वं ब्रुवाणमाह ब्रूते ब्रह्मा । **केन** करणभूतेन रूपेण वा मे मम ब्रह्मणः सर्वात्मनः **पौंस्यानि** पुंलिङ्गसंबन्धीनि नामानि नामधेयानि । **आप्नोषि** प्राप्नोषि । इत्यनेन प्रकारेण ब्रह्मणा पृष्टे **प्राणेन** पञ्चवृत्त्यात्मकेन साधिदैविकेन करणेन रूपेण वा । **इति ब्रूयात्,** अनेन प्रकारेण प्रत्युत्तरं वदेदुपासकः ।

पुनर्ब्रह्मा पृच्छति—

**केन स्त्रीनामानीति वाचेति केन नपुंसकानीति मनसेति केन गन्धानिति प्राणेनेत्येव ब्रूयात् ।**

**केन** करणेन रूपेण वा **स्त्रीनामानि** स्त्रीलिङ्गनामधेयानि । आप्नोषीत्यत्र वक्ष्यमाणेषु चानुवर्तते । इत्यनेन प्रकारेण पृष्टे । **वाचा** प्राणनिष्पाद्यया वर्णाभिव्यक्तिहेतुभूतया । इत्यनेन प्रकारेण ब्रूयादित्यनुवर्ततेऽत्र वक्ष्यमाणेषु च । पुनः पृच्छति—**केन** करणेन रूपेण वा **नपुंसकानि** नपुंसकलिङ्गनामानि । इत्यनेन प्रकारेण । पृष्ट उत्तरमाह—**मनसा**ऽन्तःकरणेन साधिदैविकेन । इत्यनेन प्रकारेण । पुनः पृच्छति—**केन** करणेन गन्धान्पृथिव्येकगुणान् । इत्यनेन प्रकारेण । उत्तरमाह—**प्राणेन** साधिदैविकेनेत्येव **ब्रूयात्,** अनेनैव प्रकारेण वदेत् । ब्रूयादित्यनुवर्तत इत्येतदर्थं मध्ये च ग्रहणमन्तेऽपि ग्रहीष्यति । एवकारः प्राणशब्दस्य द्विरभिधानं कथं करणीयमिति शङ्कानिवारणार्थः ।

पुनः पृच्छति—

**केन रूपाणीति चक्षुषेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे**

* एतच्चिह्नान्तर्गतग्रन्थस्य व्याख्यानं त्रुटितम् । क. पुस्तके त्वयं ग्रन्थो नास्त्येव ।

१ च. °तच्छ्लोके° । २ च. पौंस्तानि । ३ च. तदेतच्छ्लोकेनाभ्युक्तम् ॥ द ॥ श्रुत्याऽप्येतत्सर्वात्मत्वमुक्तमित्युपासकः श्रुतिमुदाहरति । तमु° । ४ च. पौंस्नानि । ५ क. प्राणेनेति ॥ ६ घ, ङ. °नेति के° । ७ घ. प्राणेन । ८ च. °ध्येऽपि ग्र° ।

**इति शरीरेणेति केनाऽऽनन्दं रतिं प्रजातिमित्युपस्थेनेति ।**

**केन** करणेन **रूपाणि** तेजोबन्नगुणभूतानीत्यनेन प्रकारेण । उत्तरमाह— **चक्षुषा** नेत्रेण साधिदैविकेन करणेन । इत्यनेन प्रकारेण । केन स्पर्शांस्त्वचेति प्रश्नोत्तरे बहिरेवावगन्तव्ये । पुनः पृच्छति—**केन** करणेन शब्दान्ध्वनिवर्णपदवाक्यादिरूपान् । इत्यनेन प्रकारेण । उत्तरमाह—**श्रोत्रेण** शब्दोपलब्धिकरणेन साधिदैविकेन । इत्यनेन प्रकारेण । पुनः पृच्छति—**केन** करणे**नान्नरसान**न्नस्यादनीयस्य लेह्यपेयचोष्यभोज्यस्य रसान्कटुकाम्ललवणतीक्ष्णकषायमधुररसान् । इत्यनेन प्रकारेण । उत्तरमाह—**जिह्वया** रसनेन्द्रियेण साधिदैविकेन । इत्यनेन प्रकारेण । पुनः पृच्छति—**केन** करणेन **कर्माण्या**दातव्यानि । इत्यनेन प्रकारेण । उत्तरमाह— **हस्ताभ्यां** हस्तद्वयरूपेण करणेन साधिदैविकेन । इत्यनेन प्रकारेण । पृच्छति— **केन** करणेन **सुखदुःखे** अनुकूलप्रतिकूलवेदनीये । इत्यनेन प्रकारेण । उत्तरमाह— **शरीरेण** स्थूलसूक्ष्माख्येण[1] पुण्यापुण्यसहकृताज्ञानहेतुना देहेन । इत्यनेन प्रकारेण । पुनः पृच्छति—**केन** करणे**नाऽऽनन्दं** मैथुनावसानसमुत्थं सुखं **रति**मैथुनरागजं सुखमामैथुनावसानं योषिदालिङ्गनमारभ्य । **प्रजातिं**[2] प्रजाः कन्यासुतादिरूपाः । इत्यनेन प्रकारेण । उत्तरमाह—**उपस्थेनो**पस्थाख्येन करणेन स्त्रीपुंसलिङ्गभेदभिन्नेन साधिदैविकेन । इत्यनेन प्रकारेण ।

पुनः पृच्छति—

**केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति**[3] **ब्रूयात्तमाह ।**

**केन** करणेनेत्या गतीः । इत्यनेन प्रकारेण । उत्तरमाह—**पादाभ्यां** पादद्वयाख्येन करणेन साधिदैविकेन । इत्यनेन प्रकारेण । पृच्छति—**केन** करणेन **धियो** बुद्धिवृत्तीः । **विज्ञातव्यं** धियां विषयज्ञानं **कामा**न्विविधेच्छापरपर्यायरूपान् । इत्यनेन प्रकारेण । उत्तरमाह—**प्रज्ञया** स्वयंप्रकाशेनाऽऽत्मबोधेन । यद्यपि सर्वमिदमनयैवाऽऽप्यते तथाऽपि वागादिकं नामाद्यवाप्तौ साक्षात्करणमस्ति व्यवधायकं नत्वेवं बुद्ध्यादौ किंचिदस्ति । यद्यपि सुखदुःखे अपि प्रज्ञैकवेद्ये तथाऽपि मम पादे सुखं शिरसि च दुःखमित्यादिप्रत्ययानुसारेण शरीरेणेत्युक्तम् । यद्यपि नाममात्राप्तौ करणं वाक्प्राणश्च जीवनमन्तरेण न करणम् । मनश्च सर्वोपलब्धिसाधारणं करणम् । तथाऽपि स्त्रीपुंसव्यक्तिवज्ज्ञदित्येव नपुंसकव्यक्तेर्बाह्यकरणैः प्रत्ययानुदयादस्ति नपुंसकाधिगमे मनसोऽभ्यधिको व्यापारो यतस्तत उक्तं मनसा नपुंसकानीति । प्राणस्य जीवनमन्तरेणाकरणस्यापि वाग्व्यापारसहकारित्वाद्वाक्प्राणौ नामाप्तौ करणं भवतः ।

१ च. °ख्यस्वरूपभो° । २ ग. °क्ष्मःरव्येन पु° । ३ च. प्रजातीः । ४ घ. च. °ज्ञयैवेति ।

स्थिते च करणत्वे प्राणस्य पुरुषत्वाद्वाचः स्त्रीत्वाच्च वाक्प्राणयोर्विभागेन करणत्वमविरुद्धम् । प्रतर्दनाग्निहोत्रे च वाक्प्राणयोर्नामासौ करणत्वमर्थाद्वक्ष्यति—यावद्वा इत्यादिना । **इति ब्रूयात्** । व्याख्यातम् । तं पादेन पर्यङ्कमारूढमुक्तोत्तरवादिनमाह पर्यङ्कस्थो ब्रह्मा ब्रूते ।

ब्रह्मोक्तिमाह—

**आपो वै खलु मे[1] ह्यसावयं ते लोक इति सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ६ ॥**

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषदि प्रथमोऽध्यायः ॥ १ ॥

**कौषीतकिब्राह्मणारण्यकक्रमेण षष्ठोऽध्यायः ॥ ६ ॥**

**आपो**ऽप्शब्दाभिधेयान्यप्प्रधानानि पञ्चीकृतपञ्चमहाभूतानि सभौतिकानि **वै** प्रसिद्धानि लोकवेदयोः **खलु** निश्चितमनुपचारितमित्यर्थः । **मे** मम सर्वस्रष्टुर्हिरण्यगर्भस्य परब्रह्मभिन्नस्य **हि** यस्मादापो मम तस्माद्**सा**वम्मयो मदीयोऽनेककोटियोजनविस्तीर्णः सर्वसुखभूमि**र**यं प्रत्यक्षो मन्निवासस्**ते** तव मदुपासकस्य मदभिन्नस्य **लोको** ब्रह्मलोको यावन्मदीयं तावत्त्वदीयमित्यर्थः । **इ**त्यनेन प्रकारेण तमाहेत्यन्वयः । इदानीमुक्तोपासनस्य फलं संक्षेपेण श्रुतिराह—**सा** शास्त्रैकवेद्याऽऽप इत्यादिना प्रकृता **या** प्रसिद्धा ब्रह्मविदां **ब्रह्मणः** पर्यङ्कस्थस्य हिरण्यगर्भस्य **जिति**र्जयरूपा सर्वानियन्तृत्वमित्यर्थः । **या** प्रसिद्धा **व्यष्टि**र्व्याप्तिः सर्वात्मकत्वमित्यर्थः । **ता**मुक्तां **जितिं** जयरूपां **जयति** स्वाधीनां करोति । **ता**मुक्तां **व्यष्टिं** व्याप्तिं **व्यश्नुते** व्याप्नोति । व्याप्तारमाह—**यः** प्रसिद्ध उपासक **एवं वेद**, उक्तेन प्रकारेण पर्यङ्कस्थं ब्रह्मोपास्ते । **य एवं वेद** । व्याख्यातम् । वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ६ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यशंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

---

प्रथमेऽध्याये पर्यङ्कविद्योक्ता । तत्र चोक्तं स आगच्छत्यमितौजसं पर्यङ्कं स प्राणस्तस्येत्यादिना प्राणस्य महाप्रभावत्वम् । उपासकश्च मन्दमध्यमोत्तमभेदेन त्रिविधो भवति । तत्र यः सकृदुक्तं सोपपत्तिकं गृह्णाति स उत्तमः । यस्त्वनेकश उच्यमानमात्मानं गुरुं च संक्लेश्य गृह्णाति स मन्दः । यस्तु गुरूक्तं गृह्णन्स्वचित्तं निरोद्धुमशक्तः

---

१ घ. च. मे लोकोऽयं तेऽसाविति । २ च. सर्वातिशायित्व° ।

स तु मध्यमः । स तु गुरुणोक्तस्य वाऽन्यस्य वोपदेशेन चित्तस्थैर्यं विविधैर्वैदिकैरुपायैर्नेतव्य इति न्यायमाश्रयन्ती भगवती श्रुतिः प्राणोपासनं चित्तस्थैर्यकरमनेकफलकल्पद्रुमरूपं तद्विदश्च बाह्याध्यात्मिककर्माणि विविधफलानि वक्तुं द्वितीयाध्यायमारभते—

**प्राणो ब्रह्मेति ह स्माऽऽह कौषीतकिस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वाक्परिवेष्ट्री चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति**

तत्र प्राणो ब्रह्मेत्युपासनं विवक्षुः प्रसिद्धस्यर्षेर्मतमाह—**प्राणो** योऽयमास्येऽन्तः पञ्चवृत्तिर्ब्रह्म सत्यज्ञानानन्दादिरूपं जगत्कारणमिति । **ह स्माऽऽह**, ह ऐतिह्ये स्म प्रसिद्धौ । इत्याहैवमुक्तवान्**कौषीतकिः** कुत्सितं निन्द्यं हेयमित्यर्थः । सीतं सीतलं सांसारिकं सुखं यस्य स कुषीतः कुषीत एव कुषीतकस्तस्यापत्यं कौषीतकिः । ननु ब्रह्म महाराजोपचारार्हं प्राणश्च न तथेत्याशङ्क्य प्राणेऽपि महाराजचिह्नानि कानिचित्संपादयति—**तस्योक्तस्य ह** प्रसिद्धस्य **वै** स्मर्यमाण**स्यैतस्य** प्रत्यक्षस्यैव मुखबिले वर्तमानस्य **प्राणस्य** पञ्चवृत्ते**र्ब्रह्मणो** ब्रह्माभिन्नस्य **मनः** संकल्पविकल्पात्मकमन्तःकरणं **दूतं** महाराजस्येव संधिविग्रहकारिभृत्यवद्वर्तमानम् । **वाक्**ताल्वादिस्थानस्थमिन्द्रियं **परिवेष्ट्री** परिवेषणस्य कर्त्री महाराजस्य विश्वसनीया योषिदिव । **चक्षू** रूपोपलब्धिकरणमिन्द्रियं **गोप्तृ** गोशब्दवाच्यानामिन्द्रियाणां रक्षकं महाराजस्येव गोर्भूमे रक्षको मन्त्री । **श्रोत्रं** शब्दोपलब्धिकरणं **संश्रावयितृ** सम्यक्श्रवणकारकं प्रतीहाररूपम् । **तस्मै वा एतस्मै प्राणाय ब्रह्मणे** कृतं व्याख्यानम् । हकारषष्ठ्योरभावो विशेषः । अत्र चतुर्थी तु बलिशब्दयोगार्था । **एता** उक्ता मनआद्याः **सर्वा** निखिला **देवता** देवताशब्दवाच्या **अयाचमानायेदं** मह्यमाहरन्त्विति प्रार्थनामकुर्वाणाय **बलिं** गर्भदासा इव राज्ञः करमपेक्षितमर्थजातमित्यर्थः । **हरन्त्या**हरन्त्यर्पयन्तीत्यर्थः ।

**तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति ।**

तथो एव उ अपि तथैव न त्वन्यथाऽस्मै प्राणोपासकाय **सर्वाणि** निखिलानि **भूतानि** स्थिरजङ्गमानि **अयाचमानायैवेदं** मे प्रयच्छन्त्विति प्रार्थनामकुर्वाणायैव न तु कुर्वाणायापि **बलिं हरन्ति** । व्याख्यातम् । अस्मा इति यदुक्तस्तमाह—**यः** प्रसिद्ध उपासक **एवं वेदोक्तेन** प्रकारेणोपास्ते तस्य प्राणस्य ब्रह्मणो मनो दूतमित्यादिनो-

१ च. °तं च° । २ क. °र्गोत्रं श्रो° । ३ च. °तृ वाक्परिवेष्ट्री स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान्भवति यश्चक्षुर्गोप्तृ गोप्तृमान्भवति यः श्रोत्रं संश्रावयितृ संश्रावयितृमान्भवति यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान्भवति त° । ४ घ. च. °रन्त्येवं हैवा° । ५ घ. गोत्रं ।

पासकस्योपनिषद्रहस्यव्रतं न याचेत्प्राणात्ययेऽपि याच्ञां न कुर्यात् । इत्युपनिषत्कथनसमाप्त्यर्थम् ।

**तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति ।**

अयाच्ञायां दृष्टान्तमाह—**तत्**तत्रायाच्ञायां दृष्टान्तः । **यथा** दृष्टान्ते । **ग्रामं** ब्राह्मणादिसमाकीर्णं देशविशेषं **भिक्षित्वा** भिक्षार्थं प्रतिगृहं गत्वाऽलब्ध्वैकमपि सिक्थमप्राप्योपविशेत्ततो भिक्षाप्राप्तौ निराशः सन्नुपवेशनं कुर्यात्तदप्राप्तौ संजातक्रोध एवंसंकल्पवान् । भिक्षुकस्य संकल्पमाह—**नाहमतो दत्तमश्नीयाम**तोऽनेन ग्रामेण मिलितेनामिलितेन वा दत्तं समर्पितं नाश्नीयामहं भोजनं न करवाण्यहं भिक्षुकः । इत्यनेन प्रकारेण संकल्पः ।

**य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति ।**
**एष धर्मो याचितो भवति ।**

**य एवा**दातृत्वेन प्रसिद्धा एव न त्वन्ये । **एनं** स्वस्मादप्राप्तभिक्षं स्वेभ्यो विगतस्पृहं **पुरस्तात्**पूर्वमस्मात्संकल्पात्**प्रत्याचक्षीर**न्गच्छास्मत्तो न दास्याम इतिः निराकरणं कुर्युस्त **एव** प्रत्याख्यातार एव न त्वन्ये । **एनमयाचकं** तन्मुखावलोकनपराङ्मुखमुपमन्त्रयन्त उपमन्त्रणं कुर्वन्ति । **ददाम** दानं करवाम **ते** तुभ्यं पूर्वमस्मत्प्रार्थकायेदानीमपगताशाय । **इत्य**नेन प्रकारेण । **एष** प्रत्यक्षो दीनवक्त्रत्वादिलक्षणो **धर्मो** गुणविशेषः । **याचितो** याचको याचकस्य । **भवति** । स्पष्टम् ।

**अन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति । प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धे चक्षुः परस्ताच्छ्रोत्रमारुन्धे श्रोत्रं परस्तान्मन आरुन्धे मनः परस्तात्प्राण आरुन्धे तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इत्येष धर्मो याचितो भवत्यन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥**

**अन्यतस्त्वेव** तुशब्दः पक्षान्तरेऽन्यस्मान्निस्पृहः प्रसन्नवदनोऽन्य एवायाच्ञायामेव न

---

१ च. याचतो । २ च याचतो याचक° । ३ च. °न्यद्रास्त्वे° । ४ च. °रुन्धे च° । ५ च. °रुन्धते श्रो° । ६ च. °रुन्धते म° । ७ च. °रुन्ध्ते त° । ग. °रुध्यते च त° । ८ च. °रुन्त्येवं हैवा° । ९ ध. च. याचतो । १० च. °न्यद्रास्त्वे° ।

तु याच्ञायां यदि वर्तते तदैवैनमुपमन्त्रयन्ते ददाम त इति व्याख्यातम् । एवं याच्ञायाच्ञयोर्गुणदोषान्पर्यालोच्य न याचेदित्यर्थः । यथा कौषीतकिस्तद्वत्पैङ्ग्यनामाऽप्यृषिरित्याह—**प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणः** पैङ्ग्यनामा पैङ्ग्यगोत्रो वा व्याख्यातमन्यत् । ननु मनोदूतत्वादिलक्षणेन ब्रह्मत्वं प्राणस्य यद्यपि तथाऽप्यप्रत्यक्त्वादब्रह्मत्वमपीत्यत आह—**वाग्वागिन्द्रियात्परस्तात्परतश्चक्षुश्चक्षुरिन्द्रियमारुन्धे** समन्तादावृत्य तिष्ठति । वाचश्चक्षुरान्तरमुक्तिवद्दृष्टे प्रायेण विसंवादाभावात् । **चक्षुश्चक्षुरिन्द्रियात्परस्ताच्छ्रोत्रमारुन्धे** श्रोत्रं श्रवणेन्द्रियम् । व्याख्यातमन्यत् । चक्षुषा शुक्तिकां रजतवत्पश्यति नत्वेवं श्रोत्रमविद्यमानं शृणोति । ततो युक्तं चक्षुष आन्तरत्वं श्रोत्रस्य । **श्रोत्रं** श्रोत्रेन्द्रियात्**परस्तान्मनः** संकल्पविकल्पात्मकमन्तःकरणम् । **आरुन्धे** व्याख्यातम् । मनसः सावधानत्वे श्रोत्रेण श्रवणं ततो युक्तं श्रोत्रादान्तरत्वं मनसः । **मनो** मनसः **परस्तात्**परत आन्तरः **प्राणः** पञ्चवृत्तिः । प्राणबन्धनं हि मनः प्रसिद्धम् । **आरुन्धे** समन्तादावृत्य तिष्ठतीत्यवगम्यते पण्डितरूपैः। एवमान्तरत्वेन ब्रह्मत्वं युक्तम् । तस्मै वा इत्यादि व्याख्यातं पूर्ववत् ॥ १ ॥

प्राणविदोऽर्थेच्छायां सत्यां कर्तव्यतामाह—

**अथात एकधनावरोधनं यदेकधनमभिध्यायात्पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्योत्पूय दक्षिणं जान्वाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति**

**अथ** प्राणब्रह्मज्ञानानन्तरम् । **अतो** यस्मादिच्छा जातैतस्मात्कारणा**देकधनावरोधनमेकधन** इतिप्राणस्य नामधेयं जगत्यस्मिन्नेक एव धनरूप एकधनः । प्राणांस्तु सततं रक्षेद्दारैरपि धनैरपीति न्यायेन प्राणस्य परमधनत्वात् । तस्यावरोधनमेकत्र स्थापनमेकधनावरोधनम् । अयमर्थः । सत्यामर्थेच्छायामर्थाप्राप्तौ व्याक्षिप्तचेतसो न प्राणब्रह्मचिन्तनं वक्ष्यमाणेनोपायेनार्थप्राप्तौ प्रसन्नचेतसः प्राणचिन्तनस्य संभवादिदमेकधनावरोधनं स्यात् । **यद्येकधनं** प्राणम**भिध्यायात्**सर्वतो ध्यानं कुर्यादर्थेप्सुस्तदाऽर्थावाप्त्या इदं कुर्यादिति शेषः । अथवैकधनमनन्यलभ्यं धनं तस्यावरोधनं प्राप्त्युपायस्तच्च नोचितम् । एवमपि यद्येकधनमभिध्यायात्प्राणोपासकस्तदा **पौर्णमास्यां वाऽमावास्यायां वा** वाशब्दाविच्छाविकल्पार्थौ स्पष्टमन्यत् । **शुद्धपक्षे वा** शुक्लपक्षे । वाशब्दः कृष्णपक्षार्थः । तत्रापि **पुण्ये** धन्य आत्मनोऽनुकूल इत्यर्थः । **नक्षत्रे**ऽश्विन्यादौ शास्त्रविहिते । **अग्निमुपसमाधाया**ग्निं श्रौतं स्मार्तं वा स्वशाखोक्तक्रमेण कुण्डस्थण्डिलादौ प्रतिष्ठाप्य **परिसमुह्य** समन्तात्तृणादिकमपनीय

---

१ ब. च. आरुध्यते । २ च. °पक्षविकल्पार्थ. ।

**परिस्तीर्य** समन्ताद्दर्भानवकीर्य **पर्युक्ष्य** मन्त्रपूतेन वारिणा समन्तात्परिषिच्योत्**पूयाऽऽज्यं** स्वगृह्योक्तप्रकारेणोत्पवनसंस्कारेण संस्कृत्य **दक्षिणं जान्वाच्य** दक्षिणं जान्वधो निपात्य **स्रुवेण वा चमसेन वा कंसेन वा** । स्रुवचमसौ प्रसिद्धौ याज्ञिकानाम् । कंसं कांस्यदर्व्यादिकं तेन करणेन वा । त्रयं तु प्रातीच्छयोरनियत्यर्थम् । **एता** वक्ष्यमाणा **आज्याहुती**राज्यविभागविशेषा**ज्जुहोति** जुहुयात् ।

होममन्त्रानाह—

**वाङ्नाम देवताऽवरोधिनी = सा मेऽमुष्मादिदमवरुन्धां × तस्यै स्वाहा । प्राणो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । चक्षुर्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा ।**

**वाङ्नाम देवता** वागभिधाना देवता**ऽवरोधिनी,** उपासकाभीष्टार्थसंपादिका । **सोक्ता** देवता **मे** मम प्राणोपासकस्यार्थेच्छो**रमुष्मा**न्मदभीष्टार्थस्वामिनः सकाशा**दिदं** मदभीष्टमर्थजात**मवरुन्धा**मवरोधनं कुरुतां संपादयत्वित्यर्थः । **तस्या** उक्तनाम्न्यै देवतायै **स्वाहा** होमाहुतिमतदर्थप्रधानां स्वी करोतु स्वाहुतं स्वी करोतु । **प्राणो नाम** प्राणाभिधाना । प्राणग्रहणं च तन्त्रेणावगन्तव्यम् । तेन घ्राणाभिधानेति मन्त्रान्तरमनुक्तमपि सिद्धं भवति ।

**श्रोत्रं नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । मनो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । प्रज्ञा नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाऽऽज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्यार्थं[३] ब्रुवीत दूतं वा प्रहिणुयाल्लभते[१][२] हैव ॥ २ ॥**

**श्रोत्रं नाम** श्रोत्राभिधाना । प्राणचक्षुःश्रोत्रमनःप्रज्ञामन्त्रा वाङ्मन्त्रवद्व्याख्येयाः । प्रज्ञाया ब्रह्मत्वं चोक्तम् । इति मन्त्रपरिसमाप्त्यर्थः । **अथ** होमानन्तरं **धूमगन्धं** होमधूमगन्धं **प्रजिघ्राय** प्रतिघ्रायाऽऽघ्राणं कृत्वाऽऽ**ज्यलेपेन** होमावशिष्टाज्यलेपेनाङ्गा**न्यनु विमृज्य** होमधूमघ्राणमनु सर्वगात्राण्युपलिप्य **वाचंयमो** मौन्यभिप्रव्रज्य होमप्रदेशाद्यत्र क्वाप्यवस्थितमर्थस्वामिनं गत्वाऽर्थं[४] स्वाभीष्टमर्थं **ब्रुवी**तेदं मे त्वत्तो भूयादिति

= च, पुस्तके 'अवरोधनी' इति सर्वत्र मूले टीकायां च । × अवरुन्ध्यादिति च. पुस्तके सर्वत्र मूले टीकायां च ।

१ च. °र्थं ब्रूयाद्दूतं । २ क. °ल्लभेते° । ३ च. प्रज्ञया° । ४ च. °र्थं ब्रूयाद्ब्रुवी° ।

वदेत् । अर्थस्वामिनो दूरदेशावस्थाने दूतं वा प्रहिणुयात्स्वभृत्यसुतादिकं दूतं प्रेरयेत् । भृत्याद्यभावे वाचं वेति बहिरेवावगन्तव्यम् । लभते हैव प्रसिद्धमर्थं स्वाभीष्टं स्वात्मजदूतवाक्यानामन्यतमेन गतेन प्राप्नोत्येव न तु न प्राप्नोति ॥ २ ॥

एवमर्थोपायमुक्त्वा वश्योपायमाहोपासकस्य——

**अथातो दैवः स्मरो यस्य प्रियो बुभूषेद्यस्यै वा[1] एषां वै तेषामेवैक[2]स्मिन्पर्वण्यग्निमुपसमाधायैतयैवाऽऽवृतैता आज्याहुतीर्जुहोति वाचं ते मयि जुहोम्यसौ स्वाहा । प्राणं ते मयि जुहोम्यसौ स्वाहा । चक्षुस्ते मयि जुहोम्यसौ स्वाहा । श्रोत्रं ते मयि जुहोम्यसौ स्वाहा । मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाऽऽज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्य**

अथ प्राणब्रह्मज्ञानानन्तरम् । अतो यस्मादात्मनः प्रियस्येच्छैतस्मात्कारणात् । दैवो देवैर्वागादिभिः संपाद्यः स्मरोऽभिलाषः संपन्नो भवति यथा तथा कथ्यत इति शेषः । यस्य पुरुषस्य व्यक्तिविशेषस्याऽऽत्मन्यनुरागशून्यस्य प्रियो बुभूषेत्प्राणवित्प्रियो भवितुमिच्छेत् । यस्यै यस्याः स्त्रिया वै प्रसिद्धाया राजादिपत्न्याः । एषां[3] प्रत्यक्षाणां राजादीनां श्रीमतां सर्वस्नेहशून्यानां वै प्रसिद्धानां[4] तेषामेव वागाद्यधिष्ठातॄणामग्न्यादीनां न त्वन्येषाम् । अत्र वाशब्दाध्याहारेण योजनीयम् । यस्यै वा प्रियो बुभूषेदे[5]षां वा प्रियो बुभूषे[6]त्तेषामेव प्रियो बुभूषते । एक[7]स्मिन्पर्वणि दर्शपूर्णमासयोरन्यतरस्मिञ्शुक्लपक्षात्मके वा पुण्ये नक्षत्रे पर्वदिवसेऽग्निमुपसमाधाय व्याख्यातम् । एतयैवाऽऽवृतोक्तेनैव प्रकारेण पारिसमुह्येत्यादिनैता वक्ष्यमाणसंख्याका आज्याहुतीर्जुहोति व्याख्यातम् । वाचं वागिन्द्रियरूपां ते तव मयि प्रीतिं करिष्यतो मयि प्रीतिविषये तवाप्रीत्यौदासीन्ययोरन्यतरेन्धनसंदीप्तेऽग्नौ जुहोमि प्रक्षिपामि । असावेतन्नामाऽहमयं कामो वा मम संपन्नो भवतु । स्वाहा मदीया वाङ्ममैतत्कामिन आज्याहुतेरनुज्ञां प्रयच्छतु । **प्राणं ते मयि जुहोमीत्यादिप्रज्ञां त** इत्यन्तं प्राणचक्षुःश्रोत्रमनःप्रज्ञामन्त्रा वाङ्मन्त्रवद्व्याख्येयाः । इत्यथेत्यादि प्रव्रज्येत्यन्तं व्याख्यातम् ।

एवं कृते फलमाह—

**संस्पर्शं जिगमिषेदपि वाताद्वा संभाषमाणस्तिष्ठे-**
**त्प्रियो हैव[8] भवति स्मरन्ति हैवास्या(स्मा)त् ॥ ३ ॥**

१ च. वा येषां वा यासां वै । २ क. °वैतस्मि° । ३ च. ऐषां । ४ च. °नां यासां वाऽन्य-स्त्रीणां ते° । ५ ख. °षेदेषां । ६ च. °षेद्यासामेव वा प्रियो बुभूषेत् । ए° । ७ घ. एतस्मि° । ८ घ. च. हैवास्य ।

**संस्पर्शं जिगमिषेत्** । स्वसाध्यस्य संस्पर्शी गन्तुमिच्छेत् । गच्छेदित्यर्थः । अथ स्वसाध्यस्य महाविभूत्यादिमत्त्वेन स्पर्शः कर्तुमशक्यस्तदा पक्षान्तरमाह—**अपि वाताद्वा संभाषमाणस्तिष्ठेत्** । अपिशब्दः पक्षान्तरे । साध्यस्य स्पर्शाभावे तेन सह वार्तां कुर्वंस्तिष्ठेत् । संभाषणस्यापि कर्तुमशक्यत्वे वाशब्दः पक्षान्तरमाह । वातात्तिष्ठेत्स्वशरीरवायुसंस्पर्शो यथा भवति तथाऽवस्थानं कुर्यादित्यर्थः । अथवा वातात्संभाषमाणस्तिष्ठेत्स्वकीयाः शब्दा यथा वायुनाऽस्य कर्णरन्ध्रेऽवस्थानं कुर्वन्ति तथा कुर्यादित्यर्थः । **प्रियो हैव भवति,** ह प्रसिद्धः सर्वत्र स साध्यस्य प्रिय एव भवति न त्वप्रियः । न केवलं प्रियत्वमात्रं स्वसंनिधौ किंतु **स्मरन्ति** हैवास्मिन्ग्रामान्तरादिगते ह प्रसिद्धा राजादयोऽस्य साध्याः । अस्य स्मरन्त्येव न तु विस्मरन्ति पित्रादेरिव पुत्रादयः । अयं च तान्सर्वान्हन्तुकामानिवाऽऽसक्तिशून्योऽस्मात्प्रक्षिपेद्यत्र क्वाप्यस्य विधेयाश्च भवन्तीत्यर्थः ॥ ३ ॥

इदानीं प्राणोपासकस्याग्निहोत्रफलं विवक्षुराध्यात्मिकमग्निहोत्रमाह—

**अथातः सांयमनं प्रातर्दनमान्तरमग्निहोत्रमिति चाऽऽचक्षते यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोति ।**

**अथ** प्राणब्रह्मोपासनानन्तरम् **अतो** यस्मादग्निहोत्रफलस्येच्छावान्बाह्यमग्निहोत्रमनुष्ठातुमशक्तोऽनिच्छुर्वाऽस्मात्कारणात् **सांयमनं** सम्यग्यमनमहिंसादिकं तत्संबन्धि तत्सांयमनं **प्रातर्दनं** प्रतर्दनेन दैवोदासिनाऽनुष्ठितत्वेन तन्नामाङ्कितं **प्रातर्दनमान्तरमग्निहोत्रमिति चाऽऽचक्षते** । आन्तरं बाह्यसाधननिरपेक्षमग्निहोत्रनामाङ्कितं कर्मेत्याचक्षतेऽनेन प्रकारेण कथयन्ति । चकारोऽग्निहोत्रान्तरत्वयोः प्रत्येकं मिलितयोरपि संज्ञात्वसमुच्चयार्थः । विद्वांसो यदान्तरमित्याचक्षते तद्वक्तुं वाक्प्राणयोरमितव्यापारकर्तृत्वमाह—**यावद्य**त्परिमाणं **वै** प्रसिद्धम् । **पुरुषः** पुरुषाकारशरीरधारी जन्तुर्**भाषते** वाग्व्यापारं करोति **न तावत्प्राणितुं शक्नोति** वाग्व्यापारपरिमाणं प्राणव्यापारं कर्तुं न शक्नोति । अथवा वाक्प्राणयोः समकालव्यापारं वारयति—**यावदित्यादिना** । अस्मिन्पक्षे यावत्तावच्छब्दौ कालपरौ व्याख्येयौ । **प्राणं** वाग्व्यापारे सति स्वव्यापारशून्यं वाचो न्यूनव्यापारं दधिपयःसमानं **तदा** तस्मिन्वाग्व्यापारकाले **वाचि** व्यापारत्वेनाधिकायामग्निसमानायां **जुहोति** होमं करोति । वाक्समानधर्मत्वं प्राणस्य प्राणसमानधर्मत्वं वाचश्चाऽऽह—

---

१ ख. °वैस्य सा° । २ च. °तः संय° । ३ च. °णात्तंय° । ४ ख. यत्तत्संय° । ५ ख. °मित्याच°

**यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोति ।**
स्पष्टम् । प्रसिद्धं हि सर्वजनीनं वदन्न श्वसिति श्वसन्न ब्रूते चेति ।

इदानीमग्निहोत्रमाह—

**एते अनन्ते अमृताहुती जाग्रच्च स्वपंश्च संततमव्यवच्छिन्नं जुहोत्यथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि भवन्त्येतद्ध वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः ।**

**एते** वाक्प्राणरूपे उक्ते **अनन्ते** असंख्यातव्यापाराधारे परस्पराग्नौ प्रविशन्त्यावप्यक्षीणे वा । **अमृताहुती** अन्तवद्धि म्रियते यतोऽन्तशून्ये ततोऽमृतरूपे आहुती अमृतत्वफलहेतुत्वाद्वाऽमृताहुती । **जाग्रच्च स्वपंश्च** जाग्रति स्वप्ने च । चकारौ जाग्रत्स्वप्नयोरितरेतरयोगार्थौ । **संततं** निरन्तरमागर्भनिर्गमनादोत्तरश्वासम**व्यवच्छिन्नं** भोजनाच्छादनादिव्यवधानशून्यम् । न हि वाक्श्वसनयोरन्यतरेण शून्यः कालो जीवतो **जुहोति** होमं करोति होमबुद्धिं कुर्यादित्यर्थः । एतदग्निहोत्रं स्तोतुमन्यं निन्दति । **अथ** पक्षान्तरे । **याः** प्रसिद्धाः पयोदध्यादिद्रव्यसाध्या **अन्या** वाक्प्राणाहुतिभ्यां व्यतिरिक्ता **आहुतय** आसेचनान्ता देवतामुद्दिश्य द्रव्यत्यागा **अन्तवत्यः** स्वरूपेण फलतोऽपि नाशवत्यः । तत्र हेतुमाह—**ता** वाक्प्राणाहुतिभ्यामन्यत्वेन प्रसिद्धाः **कर्ममय्यः** शरीरव्यापारसाध्याः कृतकाः फलतः स्वरूपतश्च **हि** यस्मात्तस्मादन्तवत्यो **भवन्ति** स्पष्टम् । अस्याग्निहोत्रस्य ज्ञाने सर्वसङ्गपरित्यागलक्षणं संन्यासमाह—**एतद्ध वै पूर्वे विद्वांसः** । ह प्रसिद्धाः । वै स्मर्यमाणाः पूर्वेऽतीताः । एतद्विद्वांसो वाच्यग्नौ भाषणव्यापारवत्यां प्राण आज्यं निःश्वासोच्छ्वासव्यापारशून्यो हूयते । प्राणे चाग्नौ निःश्वासोच्छ्वासव्यापारवति वागाज्यं भाषणव्यापारशून्या हूयत इत्येतज्ज्ञानवन्तो**ऽग्निहोत्रं न जुहवांचक्रुर**ग्निहोत्रहोमं न कृतवन्तः । सर्वसङ्गपरित्यागलक्षणं संन्यासं कृतवन्त इत्यर्थः ।

प्राणो वा उक्थमिति काण्वादिशाखासूक्थशब्दस्य प्राणे प्रसिद्धत्वात्तां प्रसिद्धिमनुरुन्धाना श्रुतिः प्राणमुक्थशब्देन निर्दिश्य तत्र ऋगादिदृष्टीर्विधातुमस्य ब्रह्मत्वे कौषीतकिपैङ्ग्यवच्छुष्कभृङ्गारसंमतिमाह—

**उक्थं ब्रह्मेति ह स्माऽऽह शुष्कभृङ्गारस्तदृगित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्चन्ते तद्यजुरित्युपासीत**

**उक्थ**मुक्थशब्दाभिधेयः प्राणो **ब्रह्मेति ह स्माऽऽह** व्याख्यातम् । **शुष्कभृङ्गार** एतन्नामा मुनिः । **तदुक्थमृगिति** ऋग्बुद्ध्योपासीत यावत्प्राण ऋगिति साक्षात्कारो भवति तावद्विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कुर्वीत ।

---

१ घ. च. °ततं जु° । २ च. °वन्ति । तद्ध स्मैतत्पूर्वे ।

प्राण ऋग्बुद्धौ कृतायां फलमाह—

**सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते तच्छ्रीरित्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत**

**सर्वाणि** निखिलानि ह प्रसिद्धानि । अस्मै प्राण उक्थ ऋग्बुद्धिकर्त्रे **भूतानि** स्थिरजङ्गमानि **श्रैष्ठ्याय** प्रशस्यतमत्वायाभ्यर्चन्ते सर्वतः पूजां कुर्वन्ति । **तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते । तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते** । ऋग्बुद्ध्या समत्वं यजुःसामबुद्ध्योः । युज्यन्त उद्युक्तानि भवन्ति । संनमन्ते सम्यक्प्रह्वीभूतानि भवन्ति । अन्यत्कृतव्याख्यानम् । ऋग्यजुःसाम्नां च पादबद्धाविवक्षितच्छन्दस्कप्रगीतिमन्त्रात्मकानां प्रसिद्धत्वान्न ऋगादिपदव्याख्या कृता । एवमेवाऽऽह—**तच्छ्रीरित्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत** मनुष्यादेर्विभूतिः श्रीः कीर्तिर्यशो भास्वरं प्रकाशादिकारणं ज्योतिस्तेजः । व्याख्यातमन्यत् ।

श्रीयशस्तेजोबुद्धीनां सदृष्टान्तं फलमाह—

**तद्यथैतच्छस्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति तथो एवैवं विद्वान्सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति[3] ।**

**तत्**तत्र श्रीयशस्तेजोबुद्धिषु फले दृष्टान्तः । **यथा** दृष्टान्ते । **एतदा**कर्णपूर्णगुणनिरुद्धपृष्ठं पृथुतरसुवर्णपट्टिकावृतसर्वगात्रं पृथापुत्रसमधन्विकरस्थं वमद्बहुनिमण्डलशरसमूहवृष्टिकरं धनुः **शस्त्राणां** खड्गपट्टिशतोमरशक्तिऋष्टिगदाभिन्दिपालचक्रक्षुरिकायमदंष्ट्रादीनां **श्रीमत्तमम**तिशयेन विभूतिमत् । न ह्यन्यच्छस्त्रं धनुष्मतः सुभटस्य विभूतिदम् ।

" धन्वी चेत्तुरगारूढो जयत्येकोऽपि मेदिनीम् "

इति प्रसिद्धेः । **यशस्वितमम्**, अतिशयेन यशःसंपन्नम् ।

" विशिखा इव राजन्ते धनुषः सगुणादिव ।

निर्गताः शस्त्रसंपाताः शूराणां लघुयोधिनाम् " ॥ इति प्रसिद्धेः ।

**तेजस्वितमम्**, अतिशयेन तेजःसंपन्नम् । यद्यपि लौहेषु शस्त्रेषु तेजस्वितमत्वं प्रसिद्धं तथाऽपि संप्रहारावसरेऽन्यान्यपगतसौवर्णाद्यावरणानि भवन्ति । धनुस्तु तस्मिन्नप्यवसरे सुवर्णमणिरत्नादियुक्तमिति तेजस्वितमम् । धन्विनश्च श्रीयशस्तेजांसि प्रसि-

---

१ ब. च. °तच्छ्रीम° । २ च. °तममिति शस्त्रेषु भवत्येवं हैव स सर्वेषु भूतेषु श्री° ।
३ च. °ति य एवं वेद तद्वेतवैद्विकं ।

द्धानि पार्थादिः । **भवति** । स्पष्टम् । **तथो एव** उ अपि तं[1]द्वदेव न त्वन्यथा । **एवं विद्वान्**प्राणः श्रीयशस्तेजोबुद्धीनामालम्बनमिति जानञ्श्रीयशस्तेजोबुद्धिरुपासक इत्यर्थः । **सर्वेषां भूतानां** निखिलानां स्थिरजङ्गमानां मध्ये **श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति** । स्पष्टम् ।

इदानीं त्रयीविद्यानां कृतसंसारफलान्तर्वर्तिनामपि प्राणविज्ञानं मोक्षसाधनमित्याह—

**तमेतमैष्टकं कर्ममयमात्मानमध्वर्युः संस्करोति तस्मिन्यजुर्मयं प्रवयति यजुर्मय ऋङ्मयं होत ऋङ्मये साममयमुद्गाता स एषं[2] सर्वस्यै त्रयीविद्याया आत्मैष उ ए[3]वास्याऽऽत्मा एतदात्मा भवति य एवं वेद ॥ ४ ॥**

**तमुक्थ**शब्दाभिधेयमृगादिबुद्ध्यालम्बनं **प्राणमेतं** मुखबिलान्तर्वर्तमानं प्रत्यक्षमि**वैष्टक**मिष्टकासंबन्धिरूपमैष्टकं **कर्ममयं** कर्मस्वरूप**मात्मान**मध्वर्युशब्दप्रत्ययालम्बनम् । **अध्वर्यु**र्ऋत्विग्विशेषः प्राणबुद्ध्या **संस्करोति**, संस्कारं करोति योषितामिवाग्निबुद्ध्या । अयमर्थः । योऽयमिष्टकासु चितोऽग्निः कर्मसाधनः सोऽपि प्राणात्मक एव प्राणस्य ऋगाद्यात्मकत्वात् । अयं च ऋगादिसाध्यकर्मनिष्पादकोऽहं च तत ऋगाद्यात्मकः सर्वात्मा प्राणोऽहमस्म्ययमग्निश्च मदात्मक इत्यात्मानं संस्करोतीति । **तस्मि**न्प्राणबुद्ध्या संस्कृतेऽग्न्यभिन्नात्मनि **यजुर्मयं** यजुःसाध्यं कर्मवितानं कुविन्द इव **प्रवयति** प्रकर्षेण कर्ममन्त्रतन्तुभिर्विस्तारयति । **यजुर्मये** यजुःसाध्ये कर्मविताने प्रवृत्ते सत्याधारभूते वा, **ऋङ्मय**मृक्साध्यं कर्मवितानं प्रवयति **होता**, ऋत्विग्विशेषः । **ऋङ्मये** ऋक्साध्ये कर्मणि प्रवृत्ते सत्याधारभूते वा **साममयं** सामसाध्यं कर्मवितानं प्रवयति । **उद्गाता**, ऋत्विग्विशेषः । **सो**ऽध्वर्युः संस्कारहेतुः प्राण **एष** मुखबिलान्तस्थः **सर्वस्यै** सर्वस्या निखिलाया**स्त्रयीविद्याया**स्त्रयी ऋग्यजुःसामरूपा सैव विद्या तस्या **आत्मा**ऽऽप्त्यादेः कर्ता शरीरस्येव जीवः । उक्तेन प्रकारेणोक्तमात्मानं शृङ्गग्राहिकयाऽऽह—**एष उ एव**, उ अपि मुखबिलान्तस्थ एव न त्वन्यः । **अस्याऽऽत्मा**, अस्या उक्तायास्त्रय्या विद्याया आत्मोक्तः । इदानीमेतज्ज्ञाने फलमाह—**एतदात्मा भवति**, प्राणरूपो भवति । **यः** प्रसिद्धः कर्मण्यृत्विग्यजमानादिरेवं प्राणबुद्ध्या संस्कृतेऽध्वर्युरूपाग्नौ यजुर्मयमध्वर्युर्यजुर्मय ऋङ्मयं होता, ऋङ्मये साममयमुद्गातेति **वेद**[4] जानाति स एतदात्मा भवतीत्यन्वयः ॥ ४ ॥

प्राणो ब्रह्मेति कौषीतकिपैङ्ग्यशुष्कभृङ्गारमतैः सोपपत्तिकैरुक्तम् । तत्र च, ऋगादिदृष्टयः । स हि प्राणो बाह्य आध्यात्मिकश्च । बाह्य आधिदैविकः पुत्रादिरूपश्च ।

---

१ च. धनुर्वदेव । २ च. °ष त्रय्यै विद्याया आ° । ३ च. एवैतदिन्द्रस्याऽऽत्मा भ° । ४ च. °ति ए° ।

आधिदैविकस्त्वादित्यः । स चाग्नीषोमात्मकः । तत्राऽऽधिदैविकं प्राणमुररीकृत्य फलविशेषसिद्ध्यर्थं प्रथमतः कानिचिदुपासनान्याह—

**अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति[1] यज्ञोपवीतं कृत्वाऽप आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत वर्गोऽसि पाप्मानं मे वृङ्धीत्येतयैवाऽऽवृता मध्ये सन्तमुद्वर्गोऽसि पाप्मानं म उद्वृङ्धीत्येतयैवाऽऽवृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्धीति[2] ।**

**अथ** प्राणो ब्रह्मेतिकथनानन्तरम् । **अतो** यस्मात्फलान्तरस्यापीच्छोपासकस्यास्मात्कारणात्**सर्वजितः** स्ववर्णाश्रमाचारैर्निखिलांस्त्रैवर्णिकाञ्जयतीति सर्वजित्तस्य **कौषीतकेः** कुषीतकस्यापत्यस्य **त्रीणि** त्रिसंख्याकान्यु**पासनानि,** आधिदैविकस्य प्राणस्य ज्ञानानि **भवन्ति** वर्तन्ते । कौषीतकिदृष्टानि कथयिष्यामीत्यर्थः । **यज्ञोपवीतं कृत्वा** यज्ञोपवीतं विधाय । यद्यपि त्रैवर्णिकत्वेनैव यज्ञोपवीतं प्राप्तं तथाऽप्यपसव्यादिविकारनिवारणार्थमिदं वचनम् । **अप आचम्य** स्पष्टम् । अपामाचमनमपि यज्ञोपवीतवत्प्राप्तं तथाऽपि त्वरादिनिमित्तनिवारणार्थमवगन्तव्यम् । तेनोभयत्र नियमः सिद्धो भवति । **त्रि**स्त्रिवार**मुदपात्रं** सौवर्णं राजतं ताम्रं वा चषकं **प्रसिच्य** शुद्धैः स्वच्छैर्जलैः प्रकर्षेण सेचनं विधायो**द्यन्त**मुदयं गच्छन्त**मादित्य**मदितिपुत्रं भास्कर**मुपतिष्ठेत** जानुभ्यामवनिं गत्वा ससंभारनीरपूर्णचषकमुद्धृत्य समन्त्रमुपस्थानं कुर्यात् । मन्त्रमाह—**वर्गः** सर्वमिदं जगदात्मबोधेन तृणवद्वृङ्क्ते परित्यजतीति वर्गः । **असि** भवसि । **पाप्मानं** कृतमागामि च पापं फलस्वरूपेणैव **मे** मम समन्त्रकेणार्घ्येणाऽऽदित्यमुपस्थातुर्वृङ्धि वर्जय विनाशयेत्यर्थः । **इति** मन्त्रसमाप्तौ । **एतयैवो**क्तयैव यज्ञोपवीतमित्यादिना न त्वन्यथा, **आवृता** प्रकारेण **मध्ये सन्तं** मध्याह्ने वर्तमानमादित्यमुपतिष्ठेत । उपस्थानमन्त्रमाह—**उद्वर्गोऽसि पाप्मानं म उद्वृङ्धीति** । उदुत्कर्षार्थः । अतिशयेन नाशयेत्यर्थः । व्याख्यातमन्यत् । **एतयैवाऽऽवृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्धीत्यस्तं** यन्तमस्तं गच्छन्तमुपतिष्ठेत समित्यादिमन्त्रेण । सं सम्यगर्थः । व्याख्यातमन्यत् ।

एवं त्रिवारमादित्यस्यार्घ्यं कुर्वतः फलमाह—

**यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते । अथ मासि मास्यमावास्यायां[3] पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता**

---

१ च. °न्ति सर्वजिद्ध स्म कौषितकिरुद्यन्तमादित्यमुपतिष्ठते यज्ञोपवीतं कृत्वोदकमानीय त्रिः प्रसिच्योदपात्रं वर्गो° । २ च. °ति तद्यदहोरात्राभ्यां पापमकरोत्सं तद्वृङ्क्ते तथो एवैवं विद्वानेतयैवाऽऽवृताऽऽदित्यमुपतिष्ठते । य° । ३ च. यां वृत्तायां प° ।

**हरिततृ[1]णाभ्यां वाक्प्रत्यस्यति यत्ते[2] सुसीमं[3] हृदय[4]मधि चन्द्रमसि श्रितं[5]**

यत्प्रसिद्धं दृष्टं दुःखफलम् । **अहोरात्राभ्यामहनि रात्रौ च पापं करोति** स्पष्टम् । **सं तद्वृङ्क्ते** तदशास्त्रीयं कर्म फलतः संवृङ्क्ते सम्यक्परित्यजति पापफलं न प्राप्नोतीत्यर्थः । एकमिदमुपासनं कर्मात्मकम् । इदानीं द्वितीयमाह——**अथ** पूर्वस्मात्कर्मरूपादुपासनात्प्रकृतादर्थादग्निरूपादादित्यादनन्तरं कर्मरूपमुपासनान्तरमादित्यस्य बाह्यप्राणस्य सुषुम्नानाडीरूपसोमात्मकं **मासि मासि** प्रतिमासमभ्यासबलादासंवत्सरमिति निश्चीयते । **अमावास्यायाम**माख्यरश्मौ सोमस्य निवासदिवसे **पश्चाच्चन्द्रमस**मादित्यस्य पश्चिमे भागे सुषुम्नाख्ये रश्मौ वर्तमानं सोमं **दृश्यमानं** शास्त्रतोऽवलोक्यमान**मुपतिष्ठेत** वर्गोद्वर्गसंवर्गमन्त्रैरुदये मध्याह्नेऽस्तमये चोपस्थानं कुर्यात् । **एतयैव** यज्ञोपवीतामित्यादिकयैव न त्वन्यया**ऽऽवृता** प्रकारेण[6] । तत्र विशेषमाह—**हरिततृणाभ्याम**शुष्काभ्यां द्वाभ्यां दूर्वाङ्कुराभ्यां सहार्घ्यानन्तरं **वाँ**[7]ग्वाचं यत्त इत्यादिमन्त्ररूपां **प्रत्यस्यति** चन्द्रमसं प्रति अस्यति क्षिपति क्षिपेदित्यर्थः । वाचं मन्त्ररूपामाह—**यत्प्रसिद्धं** योषितां स्तनमण्डलाधारं **ते** तव सोमात्मिकायाः प्रकृतेः **सुसीमं** शोभनमर्यादावदादित्यात्मकपुरुषस्यैकदेशरूपं[8] **हृदयं** हृदयपद्माकारं पञ्चच्छिद्रमधोमुखं मांसखण्डं[9] हृत्तदयति गच्छति यदानन्दात्मस्वरूपं तद्धृदयम् । **अधिचन्द्रमसि श्रितं** चन्द्रमण्डलं स्तनाकारमधिकृत्य श्रितं वर्तमानम् ।

**तेनामृतत्वस्येशाने माऽहं पौत्रमघं रुदमिति नै[10] हास्मा-**
**त्पूर्वाः प्रजाः प्रैतीति नु जातपुत्रस्याथाजातपुत्रस्याऽऽ-**
**प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा**

**तेनोक्तेन** चन्द्रमण्डलस्थेन हृदयेन हेतुनाऽ**मृतत्वस्या**ऽऽनन्दरतिप्रजातिरूपस्य निरतिशयानन्दाभिव्यक्तिहेतुत्वेन च निरपेक्षस्य मोक्षस्ये**शाने** हे नियन्त्रि **माऽहं पौत्रमघं रुद**महं सोमात्मिका स्त्री, अग्न्यात्मकः पुमानितिज्ञानवानघं पापं निरुपमदुःखकरं पुत्रसंबन्धि पुत्रस्य प्रागभावप्रध्वंसाभ्यां शारीरव्याध्यादिना संतत्याद्यभावेन च कृतं पौत्रं मा रुदं रोदनं मा कुर्याम् । तवेशानायाः प्रसादत इति शेषः । इति मन्त्रपरिसमाप्त्यर्थः[11] । **न हास्मात्पूर्वाः प्रजाः प्रैति,** अस्मादुक्तप्रकारिणो ह प्रसिद्धादुपासकात्पूर्वाः प्रथमत एतन्मरणमन्तरेणेत्यर्थः ।

---

१ च. °तृणे वा प्र° । २ च. यन्मे । ३ च. °मं तद्धृद° । ४ च. °दयं दिवि च° । ५ च. °तं मन्येऽहं मां तद्विद्वांसं माऽहं पुत्र्यम° । ६ च. °ण । अमावास्यायां वृत्तायामिति पाठे द्वितीयायां चन्द्रोदय इति व्याख्यानम् । त° । ७ च. वाचं । ८ घ. °पं तद्धृद° । ९ घ. °ण्डं त° । १० च. न ह्यस्मा° । ११ च. °र्थः । मन्त्रे पाठान्तरं यन्मे सुसीमं हृदयं दिवि चन्द्रमसि श्रितं मन्येऽहं मां तद्विद्वांसं माऽहं पुत्र्यमघं रुदमिति । तदाऽहं मां तस्य चन्द्रमसो विद्वांसं मन्य इत्यन्वयः । न ।

प्रजाः पुत्रादिरूपा न प्रैति न प्रयन्ति न म्रियन्ते । इति नु, एवं खल्वयं प्रकार इत्यर्थः । **जातपुत्रस्योत्पन्नसुतस्य** न त्वनुत्पन्नसुतस्य । अथ जातपुत्रस्योपासनकथनानन्तरम् । **अजातपुत्रस्यानुत्पन्नतनयस्योपासनप्रकारः** कथ्यत इति शेषः । अजातपुत्रो जातपुत्रवत्सर्वं तन्त्रं संपाद्य हरिततृणे स्वीकृत्य यान्मन्त्राञ्जपेत्तानाह—**आप्यायस्वाऽऽप्यायनं** गच्छ । **समेतु** सम्यग्गच्छतु । **ते** तव त्वयीत्यर्थः । अयमृक्पादः श्रुत्या प्रतीकत्वेन पठितः । एतावृक्पादौ परिशिष्टौ—विश्वतः सोम वृष्ण्यं भवा वाजस्य संगथे । विश्वतः सर्वतोऽग्निरूपात्पुरुषगात्रात् । सोम हे सोम स्त्रीरूप वृष्ण्यं वृष्णः पुरुषस्य हेतुभूतं शुक्रमाग्नेयं तेजो वाजस्यान्नस्य संगथे संगते भव । अयमर्थः । पुत्रोत्पत्तिद्वारा पितॄणां पिण्डाद्यन्नदो भवेति । प्रजासंपत्त्या त्वदीयं वृष्ण्यमाप्यानं विश्वतः समेतु मह्यं विश्वतो वाजस्य संगमाय भवेति वाऽर्थः । इदानीं मन्त्रान्तरप्रतीकभूतं पादान्तरमाह—**सं ते पयांसि समु यन्तु वाजा** इति । ते तव सोमात्मिकायाः प्रकृतेः संपयांसि सम्यक्क्षीराणि स्तनेन्दुमेघमण्डलस्थानि समु यन्तु वाजा उ अपि वाजा वाजिनोऽन्नोपजीविनस्तनयान्संयन्तु सम्यग्गच्छन्तु । इदमपि पठितं श्रुत्या । शिष्टं पादत्रयम्—संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व । संवृष्ण्यानि सम्यक्पुरुषोपकारीणि । अभिमातिषाहो वैरिसाहः पुत्रप्रवृत्त्या क्षीराणि वैरिणामभिभवकारीणीत्यर्थः । हे सोमामृतायामृतत्वाय पुत्रोत्पत्त्यर्थमित्यर्थः । आप्यायमानः स्वेनाऽऽग्नेयेन च तेजसाऽऽप्यायनमाह्लादनं गच्छन्दिवि स्वर्गे श्रवांस्युत्तमानि श्रवणयोग्यानि यशांसि प्रौढानि धिष्व धत्स्व ।

तृतीयमन्त्रस्य प्रतीकं पादमाह—

**यमादित्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा माऽस्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठा**

**यं** तृतीयं प्रसिद्धं सर्वोत्पत्तिकारणम् । **आदित्या** अग्न्यात्मकाः पुमांसोंऽशुं सूर्यस्य सौषुम्नं किरणं सोमं स्त्रीरूपमाप्याययन्त्याह्लादयन्ति । अस्य मन्त्रस्यापठितं श्रुत्या पादत्रयम्—यमक्षितमक्षितयः पिबन्ति । तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः । यं सोमं राजानं सूर्यं प्रकृतिरूपं सुषुम्नानाडीरूपेणाक्षितमक्षीणमक्षितयः क्षयशून्या आदित्यादयः पुरुषाः पतिपुत्रत्वादिना वर्तमानाः पिबन्ति लावण्यदुग्धादिरूपेण पानं कुर्वन्ति । तेनांशुनाऽक्षितरूपेण सुषुम्नानाम्नेत्यर्थः । नोऽस्मान्सोमस्योपासकान्भुवनस्य गोपा लोकस्य रक्षकः प्रजापतिर्बृहस्पतिर्वरुणो राजा चाऽऽप्याययन्त्वानन्दयन्त्विति मन्त्रत्रयप्रतीकपादत्रयपरिसमाप्त्यर्थः । **एता** उक्तपादत्रयाद्यास्तिस्रस्त्रिसंख्याका ऋचः पादबद्धान्मन्त्राञ्जपित्वा वाचनिकं

१ घ. शुक्रमा° । २ घ. °ति । इ° ।

जपं विधाय । अनेन वक्ष्यमाणेन मन्त्रेण सोमाभिमुखं दक्षिणं हस्तं निःसारयेदित्याह— **माऽस्माकं प्राणेन प्रजया पशुभिराप्यायिष्ठाः,** अस्माकं सोमोपासकानां मुखबिलान्तःसंचारिणा वायुना प्राणेन पुत्रादिरूपया प्रजया गवादिरूपैः पशुभिरस्मत्प्राणप्रजापश्वभावेनेत्यर्थः । माऽऽप्यायिष्ठा अस्मच्छत्रूनानन्दं मा नयेथाः ।

**योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिराप्यायस्वेति[1] दैवीमावृतमावर्त[2] आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ५ ॥**

किंतु **यः** प्रसिद्धोऽस्मद्द्वेषी, अस्मान्सोमोपासकान्द्वेष्टि द्वेषं करोति **यं च** कृतापकारमकृतापकारं वा प्रसिद्धं प्रतिकूलम्, चकारोऽस्मासु द्वेषिणोऽस्य च समुच्चयार्थः । **वयं** सोमोपासका **द्विष्मो** द्वेषं कुर्मः । तस्यास्मदज्ञातस्य वैरिणः **प्राणेन प्रजया पशुभि-**र्व्याख्यातम् । आप्यायस्वास्मानानन्दयेति[3] एवमेतन्मन्त्रार्थरूपां दैवीं देवेन भवता संपाद्यामावृतं संचरणक्रियामावर्ते समन्ताद्वर्तनं कुर्वे । **आदित्यस्या**ग्नीषोमात्मकस्याऽऽवृतं संचरणक्रियामन्वावर्ते[4] भवतः सोमस्य प्रसादमन्वावर्तनं कुर्वे । इति मन्त्रपरिसमाप्त्यर्थः । एतैर्मन्त्रैरित्यर्थः । **दक्षिणं बाहुं** दक्षिणं भुजं पूर्वं सोमाभिमुखं नीतमन्वा**वर्तते** मन्त्रपाठमनु निःसारयति ॥ ५ ॥

उपासनद्वयमुक्त्वा तृतीयमुपासनं पुनः सोमस्याऽऽह—

**अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि**

**अथा**मावास्योपासनात्प्रकृतादुपासनान्तरं कथ्यत इति शेषः । **पौर्णमास्यां** पञ्चदश्यां षोडशकलचन्द्रसहितायां **पुरस्ताच्चन्द्रमसं दृश्यमानं** स्वस्याभिमुखेन प्रत्यहं षोडशकलं सोमम**ुपतिष्ठेतैतयैवाऽऽवृता** पूर्ववद्व्याख्येयम् । उपस्थानमन्त्रमाह—**सोम** उभया विश्वप्रकृत्या सह वर्तमानः प्रियदर्शनः **सोमो** वा **राजा** दीप्तिमानसि भवसि । **विचक्षणः** सर्वलौकिकवैदिककार्यकुशलः **पञ्चमुखः** पञ्चवदनोऽसि भवसि ।

**प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि तेन मुखेन मामन्नादं कुरु राजा त एकं मुखं तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन मामन्नादं कुर्वग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु माऽस्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभि-**

१ क. ध. °दस्वे । २ ध. °स्वेत्यैन्द्रीमा° । ३ ध. °यस्वा° । ४ ध. °र्त्तर° । ५ घ. °र्त्तर° ।

**रवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ।**

**प्रजापतिः** प्रजानां स्थिरजङ्गमानां पालयिता । पञ्चापि मुखानि विभागेन प्रार्थयते । **ब्राह्मणो** द्विजोत्तमस्ते तव सोमस्यैकं **मुखमेकं** वदनं **तेन मुखेनोक्तेन** वदनेन **राज्ञो** राजजातीयान्क्षत्रियान**त्सि** भक्षयसि **तेन मुखेनोक्तेन** वदनेन **मां** सोमोपासक**मन्नादं कुरु**, स्पष्टम् । **राजा त एकं मुखं तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु । श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन मामन्नादं कुरु । अग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु । त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु** राजा मूर्धाभिषिक्तः क्षत्रियः । विशो वैश्यप्रधानाः प्रजाः । श्येनः पक्षिमांसाशी क्रूरः पक्षी । पक्षिणः कपोतादीन्विहंगमान् । अग्निर्दाहपाकप्रकाशहेतुः प्रसिद्धः कृशानुः । इमं लोकं प्रत्यक्षादिप्रमाणगम्यमवाय्वाकाशं विश्वम् । त्वयि सोमे राजनि पञ्चमं ब्राह्मणराजन्यश्येनाग्न्यपेक्षया पञ्चसंख्यापूरणम् । सर्वाणि भूतानि निखिलानि स्थिरजङ्गमानि । शेषं ब्राह्मणपर्यायवद्राजश्येनाग्निसोमपर्यायेषु व्याख्येयम् । **माऽस्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते** । अवक्षेष्ठा अस्मद्बन्धूनामवक्षयं मा कार्षीः । अवक्षीयस्वास्मद्वैरिबन्धूनवक्षयं नय । अन्यत्पूर्ववद्व्याख्येयम् । अथवाऽऽप्यायनावक्षयौ भाविशुक्लकृष्णपक्षापेक्षया चन्द्रनिष्ठौ व्याख्येयौ । तथाचैकेनैव पक्षेण स्वात्मनो वृद्धिर्वैरिणो नाशश्चेति फलप्राप्तिरर्थादुक्ता भवति ।

**अथ संवेश्यञ्जायायै हृदयमभिमृशेद्यत्ते सुसीमे हृदये[1] हितमन्तः प्रजापतौ[2] मन्येऽहं मां तद्विद्वांसं तेन माऽहं पौत्रमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रैतीति ॥ ६ ॥**

**अथैवं** सोमप्रार्थनानन्तरम् । **संवेश्यन्**भार्यया सह सम्यगानन्दरतिप्रजात्यर्थं वेश्यन्नुपवेशनं करिष्य**ञ्जायायै** जायाया **हृदयं** स्तनमण्डलाधारदेश**मभिमृशेद्**वक्ष्यमाणेन मन्त्रेण सर्वतः स्पृशेत् । मन्त्रमाह—**यत्**प्रसिद्धं शरीरान्तरकारणं सुखं **ते** तव सोमरूपायाः स्त्रियाः **सुसीमे** हे शोभनगात्रे हे सुसीमन्निति वा । अथवा सप्तम्यन्तमिदं हृदयविशेषणम् । शोभना सीमा पुरुषस्य केदाररूपा यस्य तत्सुसीमं तस्मि**न्हृदये**[3] हृदयपुण्डरीकाख्य आनन्दात्मनिवासे **हितं** चन्द्रमण्डल इवामृतम् । **अन्त**-

१ च. °ये श्रित° । २ च. °तौ तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगा इति न ह्यस्याः पूर्वाः । ३ च. °से श्रितं निहि° ।

मंध्ये **प्रजापतौ** प्रजापालके । अथवा प्रजापतौ प्रजापतिना स्रष्ट्रा मयेत्यर्थः । **मन्येऽहं मां तद्विद्वांसम्** । अहं सोमोपासकस्तव पतिस्तदुक्तं प्रजापतिना निहितं मां सोमोपासकं विद्वांसं समस्तशास्त्रार्थविदं मन्येऽवगच्छामि । **तेन सत्येन माऽहं पौत्रमघं रुदमिति**[1] **न हास्मात्पूर्वाः प्रजाः प्रैतीति** व्याख्यातम् ॥ ६ ॥

इदानीं सपुत्रस्य सोमोपासकस्य पुनः कृत्यान्तरमाह—

**अथ प्रोष्याऽऽयन्पुत्रस्य मूर्धानमभिमृशेत्**[2] **। अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा**[3] **त्वं पुत्र माऽऽविथ स जीव शरदः शतमसाविति नामास्य गृह्णाति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव तेजो वै पुत्रनामासि स जीव शरदः शतमसाविति नामास्य गृह्णाति**

**अथो**क्तसोमोपासनानन्तरं **प्रोष्य** ग्रामान्तरं देशान्तरं वा गत्वाऽऽयन्नागच्छन्नागतः सन्नित्यर्थः । **पुत्रस्य** पितुर्दुःखनिवारकस्य बाह्यप्राणस्य **मूर्धानं** मस्तकम**भिमृशे**त्करेण संस्पृशेत् । संस्पर्शमन्त्रमाह—**अङ्गादङ्गा**द्गात्राद्गात्राच्छिरःपाण्यादिभ्यः सर्वेभ्यो गात्रेभ्य इत्यर्थः । **संभवसि** निर्गच्छसि **हृदयादधिजायसे** सर्वेभ्यो गात्रेभ्यो निर्गतो हृदयादधिकं प्रकटी भवसि । **आत्मा** मत्स्वरूपः **पुत्र** हे पुत्र त्वं पुन्नाम्नो निरयान्मा **माऽऽविथ** मम रक्षणं कृतवान् । **स** मम रक्षको **जीव** प्राणान्धारय **शरदः शतं** शतसंवत्सरानसावेतन्नामा, इत्यनेन मन्त्रेण **नामास्य गृह्णाति** अस्य पुत्रस्य नामग्रहणं करोति पिता । नामग्रहणे पुनर्मन्त्रान्तरमाह—**अश्मा भव** पाषाणो भव रोगैरनुपद्रुतो वज्रसारशरीरो भवेत्यर्थः । **परशुर्भव** कुठारवद्वैरिवृक्षच्छेदकरो भव **हिरण्यमस्तृतं भवा**स्तृतमास्तृतं सर्वतः परिस्तृतं कनकवत्सर्वप्रजाप्रियो भव । **तेजो वै पुत्रनामासि** वै प्रसिद्धं सर्वगात्रसारभूतं यत्तेजः संसारवृक्षबीजं तन्नाम त्वमसि भवसि हे पुत्र । **स जीव शरदः शतमसाविति नामास्य गृह्णाति** । व्याख्यातम् ।

तृतीयवारनामग्रहणे तृतीयं मन्त्रमाह—

**येन प्रजापतिः प्रजाः पर्यगृह्णाद**[11]**रिष्ट्यै तेन त्वा परिगृह्णाम्यसा**[12]**विति नामास्य गृह्णात्यथास्य दक्षिणे कर्णे जपत्यस्मे प्रयन्धि मघवन्नृजीषिन्नितीन्द्र श्रेष्ठानि द्रविणानि धेहीति सव्ये**

१ च. °ति तेनामृतत्वस्येशाने मां त्वं पुत्र्यमं निगा इति पाठो वा । न ह्यस्मा° । २ च °भिजिघ्रेत् । ३ घ. च. °त्मा वै पुत्र नामासि स । ४ च. °तमिति । ५ च. दधाति । ६ घ. च. तमिति । ७ च. °हृगात्यथैनं परिगृह्णाति । ८ च. अथ सो° । ९ च. तन्नामा । १० च. °यना° । ११ च °ह्णाद° । १२ घ. विनि मा च्छेत्स्या मां व्यतिष्ठाः । च. °विश्व° ।

**मा च्छित्था मा व्यथिष्ठाः शतं शरद आयुषो जीवं पुत्र ते नाम्ना मूर्धानमवजिघ्राम्यसाविति त्रिर्मूर्धानमवजिघ्रेद्गवां त्वा हिंकारेणाभि हिं करोमीति त्रिर्मूर्धानमभि हिं कुर्यात् ॥ ७ ॥**

**येन** प्रसिद्धेन स्वयंप्रकाशेन तेजसा प्रजापतिः प्रजानां पालको धाता **प्रजाः** स्वसंतानभूताः स्थिरजङ्गमाख्याः **पर्यगृह्णात्**सर्वतः स्वीकृतवान् । **अरिष्टचै** प्रजानामविनाशार्थं **तेन** प्रजापतिप्रजाग्रहणेन तेजसा **त्वा** त्वां पुत्रं **परिगृह्णामि** सर्वतः स्वी करोमि । **असाविति नामास्य गृह्णाति** व्याख्यातम् । ( * **अथास्य दक्षिणे कर्णे** पिता जपति । **अस्मै प्रयन्धि मघवन्नृजीषिन्निति, इन्द्र श्रेष्ठानि द्रविणानि धेहीति** पुत्रस्य **सव्ये** कर्णे पिता जपति । ) इदानीं मूर्ध्न आघ्राणे मन्त्रमाह—**मा च्छित्था** मत्संतानच्छेदं मा कार्षीर्मा **व्यथिष्ठाः** शरीरेन्द्रियमनोभिर्व्यथां मा गाः । **शतं शरद आयुषो जीवं** शतं संवत्सराञ्जीवेत्यर्थः । **पुत्र** हे पुत्र **ते नाम्ना** तव पुत्रस्याभिधानेन देवदत्तादिलक्षणेन **मूर्धानं** मस्तक**मवजिघ्राम्या**घ्राणं करोमि । **असावे**तन्नामाऽहं तव पिता । इत्यनेन मन्त्रेण **त्रि**स्त्रिवारं **मूर्धानमवजिघ्रे**न्मूर्ध्न आघ्राणं कुर्यात् । इदानीं हिंकारमन्त्रमाह—**गवां** कामधेन्वादीनां सवत्सानां घटोध्नीनां **त्वा** त्वां पुत्रं **हिंकारेण** वत्साकारणार्थं गोभिः क्रियमाणः स्वरो हिंकारस्तेनाभि **हिं करोमि** सर्वतो हिंकारेणाऽऽकारयामि । इत्यनेन मन्त्रेण **त्रि**स्त्रिवारं **मूर्धानमभि हिं कुर्यात्**सर्वतो मूर्ध्नि हिमिति शब्दं कुर्यात् ॥ ७ ॥

एवं कौषीतकेस्त्रीण्युपासनान्युक्त्वा प्रकृतं प्राणस्य ब्रह्मत्वं संवर्गविद्यारूपेणान्तर्हितं विवक्षुः फलान्तराय नामान्तरमाह—

**अथातो दैवः परिमर एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतान्म्रियते यन्न ज्वलति तस्याऽऽदित्यमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते ।**

**अथ** प्राणस्य ब्रह्मत्वकथनानन्तरम् । **अतो** यस्मात्स्ववैरिणो मरणस्येच्छाऽस्मात्कारणात् । **दैवो** देवानामाश्विवागादीनां संबन्धी दैवः । **परिमरः** प्राणं परितो म्रिय-

---

* धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति ।

---

१ क. छैत्ता । ख. छेत्था । २ घ. °वस्व पु° । ३ च. °मभिजिघ्रामीति । ४ घ. त्रिरव° । च. त्रिरस्य मूर्धा° । ५ च. त्रिरस्य मूर्धा° । ६ घ. छेत्स्या । च छेत्था । ७ घ. व्यतिष्ठाः । ८ च. °वस्व शरदः शतमायुषो जीव श° । ९ च. °वानां वा° ।

न्तेऽन्याद्या वागाद्याश्चेति प्राणो ब्रह्मरूपः परिमरः कथ्यत इति शेषः । **एतत्प्रत्यक्षं वै** प्रसिद्धं **ब्रह्म** प्राणोपाधिकं सत्यज्ञानादिरूपं **दीप्यते** प्रकाशते **यद्यदा**ऽग्निर्दाहपाकप्रकाशहेतुः कृशानुः । **ज्वलति** दीप्तिमान्भवति । **अथ** तदा, **एतदु**क्तं ब्रह्म **म्रियते** प्राणं मुञ्चति **यन्न ज्वलति** यदाऽग्निर्दीप्तिमान्न भवति **तस्य** दीप्तिशून्यस्याग्नेरादित्य**मेव** भास्करमेव न त्वन्यं **तेजो गच्छति** दीप्तिः प्राप्नोति **वायुमा**धिदैविकं प्राणं[1] वातं **प्राणः** प्रकर्षेण चेष्टाहेतुर्वातो गच्छति । **एतद्वै ब्रह्म दीप्यते** यत्पूर्ववव्द्याख्येयम् । **आदित्यो दृश्यते** भास्करो नयनपथमागच्छति । **अथैतन्म्रियते** यत्पूर्ववव्द्याख्येयम् । **न दृश्यते** नयनाभ्यां न निरीक्ष्यते तस्यादृष्टस्याऽऽदित्यस्य **चन्द्रमसमेव** सोममेव न त्वन्यं **तेजो गच्छति वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते ।**

**अथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योततेऽथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणः ।**

**अथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यत्** । चन्द्रमाः सोमस्तस्य चन्द्रमसो विद्युतमेव सौदामिनीमेव **न** त्वन्यम् । अन्यत्पूर्ववव्द्याख्येयम् । विद्युत्सौदामिनी **विद्योतते** विद्योतनं कुरुते दृश्यत इत्यर्थः । **अथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणः** । न विद्योतते न दृश्यते तस्य विद्युद्रूपस्य तेजःप्राणौ वायुमेवाधिगच्छतः । अन्यत्पूर्ववव्द्याख्येयम् ।

**ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृता[2] न मूर्च्छन्ते तस्मादेवं उ पुनरुदीरत इत्यधिदैवतमथाध्यात्ममेतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्यति तस्य श्रोत्रमेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृता न मूर्च्छन्ते तस्मादेवं उ पुनरुदीरते**

१ च. °णं प्रा° । २ घ. च. तस्या दिश एव ते° । ३ घ. सृता । च. मृत्वा । ४ क. मूर्छन्ते । ५ क. च. °व पु° । ६ घ. च. मृत्वा । ७ क. मूर्छन्ते । ८ क. घ. च. °व पु° ।

**ता** उक्ता **वै** प्रसिद्धा **एता** अग्न्यादित्यचन्द्रमोविद्युद्रूपाः **सर्वा** निखिला **देवता** देवताशब्दाभिधेया **वायुमेव** वातं प्राणमेव न त्वन्यं **प्रविश्य** प्रवेशनं कृत्वा **वाया**वाधिदैविके प्राणे **मृता** अस्तं गता **न मृच्छन्ते** न विनश्यन्ति वायुतादात्म्येन । **तस्मादेव उ** अपि तत एव वायोर्न त्वन्यस्मात्**पुनरुदीरते** भूय उदयमागच्छन्ति । **इत्यनेन** प्रकारेणा**धिदैवतं** देवतामधिकृत्योक्तमधिदैवतम् । **अथा**धिदैवतकथनानन्तरम् । **अध्या**त्ममात्मानमधिकृत्योक्तमध्यात्मम् । *वाचा चक्षुषा श्रोत्रेण मनसा चेन्द्रियेण वदनमवलोकनं श्रवणं ध्यानं च यथाक्रमेण कुरुते चेद्दीपनं न चेन्मरणम् । अग्नेर्वागादित्यस्य चक्षुश्चन्द्रमसः श्रोत्रं विद्युतो मनो वायोः प्राण इत्यत्र विशेषः । अन्यत्पूर्ववद्व्याख्येयम् ।

दैवपरिमरज्ञानस्य फलमाह—

**तद्यदि ह वा एवं विद्वांस उभौ पर्वतावभिप्रवर्तेयातां तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्च न हैवैनं स्तृण्वीयाताम् ।**

**त**त्तस्मिन्दैवे परिमरे ज्ञाते **यदि** पक्षान्तरेऽसंभावितमिदम् । अथ कथंचिदिच्छा भवेत् । **ह** प्रसिद्धा **वै** स्मर्यमाणाः । **एवं विद्वांस** उक्तेन प्रकारेण दैवपरिमरज्ञानवन्त **उभौ** द्वौ **पर्वतौ** गिरी **अभिप्रवर्तेयाताम**भिप्रवर्तयेरन्सर्वतः प्रवृत्तिं द्वंद्वयुद्धैरिवोत्पतनाधोभूमिप्रवेशादिकं कारयेयुः । तौ च पर्वतौ किमल्पावेकदेशस्थौ चेत्याशङ्क्य नेत्याह—**तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्चा**ऽऽस्तरणं कुर्वाणौ । दक्षिण एकस्तादृशश्चोत्तरः । चकारौ दक्षिणोत्तरयोस्तुस्तूर्षमाणपदसंबन्धार्थौ । अयमर्थः । उत्तरकुर्वादिदेशस्थ एकोऽपरश्च भारतखण्डादिस्थः । उभावपि भास्करगतिनिरोधकौ पृथिवीं पादपीडनेन पातालं नयन्तौ विश्वावकाशं स्वदेहेन ग्रसन्ताविति । **न हैवैनं स्तृण्वीयाताम्** । एनमेतान्विदुषः । ह प्रसिद्धं नैव स्तृण्वीयातां नैव हिंस्यातामतिक्रमणं नैव कुर्वीयातां यदुक्तमेभिस्तदेव कुर्वीयातामित्यर्थः ।

**अथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परिम्रियन्ते ॥ ८ ॥**

**अ**थैवं सफलदैवपरिमरज्ञानानन्तरं **ये** दैवपरिज्ञानशून्या गतभाग्या **एनं** दैवपरिज्ञानवन्तं **द्विषन्ति,** असहिष्णवोऽपकारान्कुर्वन्तो न बहु मन्यन्ते **यांश्च** प्रसिद्धान्गतभाग्यान् । चकारः पूर्वेषामपि समुच्चयार्थः । **स्वयं** दैवपरिमरज्ञानवान्द्वेष्टि न सहते कुतश्चितभाग्ययोगात्त **एनं सर्वे परिम्रियन्ते,** एनं दैवपरिमरज्ञानवन्तं त एतस्मिन्द्वेषिण

* अ१ च पुस्तक एनद्वा इत्यादि पुनरुदीरत इत्यन्तं सर्वं मूलं विद्यते ।

१ ध. मृता । २ क. घ. °वर्तेया° । ३ च. °वर्तया° । ४ च. °रपूर्वं° । ५ च. °र्यातां° । ६ घ. च. एवैनं ।

एतस्य द्वेष्याश्च सर्वे निखिलाः सपुत्रपशुबान्धवा इत्यर्थः । परिम्रियन्ते सर्वतो निधनं गच्छन्ति ॥ ८ ॥

**अथातो निःश्रेयसादानं सर्वा ह वै देवता अहंश्रेयसे विवदमानाः ।**

**अथ** परिमरगुणोपासनानन्तरम् । **अतो** यस्मात्फलान्तरापेक्षाऽस्मात्कारणान्निःश्रेयसादानं निःश्रेयसं सर्वस्मादुत्कर्षरूपो गुणो मोक्षविशेषस्तद्गुणविशिष्टस्य प्राणस्याऽऽदानं स्वीकारः क्रियत इति शेषः । तत्र प्राणो निःश्रेयसमिति नाविचार्य स्नेहादिना स्वीकृतं किंतु महता संघर्षेण विचारितम् । एतदर्थमाख्यायिकामाह—**सर्वा** निखिला **ह** किल **वै** प्रसिद्धा **देवता** देवताशब्दवाच्या वागाद्याः । **अहंश्रेयसे**ऽहंवादेनाऽऽत्मनः श्रेय आधिक्यं तदर्थं **विवदमाना** मामन्तरेण का भवत्य इति स्वव्यतिरिक्ताः परास्तिरस्कुर्वत्य इत्यर्थः ।

स्वयं निश्चयं कर्तुमशक्ताः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति । स हि प्राणे श्रैष्ठ्यं जानन्नपि स्वसुतानां दुःखं दातुमशक्तोऽमुमुपायं प्रत्यपद्यत । यस्मिन्व उत्क्रान्त इदं शरीरं पापिष्ठं शवसमानं भविष्यति स वः श्रेष्ठ इत्युक्ते तथैव स्वश्रैष्ठ्यनिर्धारणार्थं क्रमेणोत्क्रमणं कृतवत्य इत्याह—

**अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्येऽथैनद्वाक्प्रविवेश तद्वाचा वदच्छिश्य एव ।**

**अस्मा**त्प्रत्यक्षा**च्छरीरा**न्मनुष्यादिदेहा**दुच्चक्रमु**र्वागादयः क्रमेणोत्क्रमणं चक्रुः । **तत्**स्थूलशरीरं वागादीनां प्रत्येकमुत्क्रमणे वदनादिव्यापारमकुर्वत्स्थितं यदा पुनर्मुख्यप्राण उत्क्रान्तस्तदा दारुभूतं चिताकाष्ठसमानमस्पृश्यं सर्वव्यापारशून्यं **शिश्ये** शयनं कृतवत् । एवं व्यतिरेकेण निश्चये संपन्नेऽप्यतिस्पर्धावशादन्वयमन्तरेण निश्चयमनधिगच्छन्तोऽन्वयमप्यनुष्ठितवन्त इत्याह—**अथ** शरीरस्य दारुभूतस्य शयनानन्तर**मेतच्छरीरं वाग्**वागिन्द्रियं **प्रविवेश** प्रवेशं कृतवत् । तच्छरीरं **वाचा** वागिन्द्रियेण **वदद्**वाग्व्यापारं कुर्व**च्छिश्य एव** शयनं कृतवदेव न तूत्थितवत् ।

वाक्प्रवेशानन्तरं चक्षुरिन्द्रियं प्रविष्टं ततश्चावलोकनं वदनं चाभूत् । अनन्तरं श्रोत्रेन्द्रियं प्रविष्टं ततश्च श्रवणावलोकनवदनान्यभूवन् । अनन्तरं मनः प्रविष्टं ततश्च ध्यानश्रवणावलोकनवदनान्यासन्न तु शरीरमुत्थितवदित्येतत्पर्यायत्रयेणाऽऽह—

**अथैनच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिश्य एवाथैनच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिश्य एवाथैनन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एवाथैनत्प्राणः प्रविवेश तत्तत एव समु-**

**त्तस्थौ[1] ते देवाः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानम-**
**भिसंभूय सहैतैः[2] सर्वैरस्माल्लोकाद्[3]उच्चक्रमुः ।**

**अथैनच्चक्षुः प्रविवेश तद्वाचा वददिति ।** स्पष्टम् । अथ वाक्चक्षुःश्रोत्रमनः-प्रवेशानन्तरमेतच्छरीरं वदत्पश्यच्छृण्वद्ध्यायत्**प्राणो** मुखबिलान्तर्वर्ती पञ्चवृत्तिर्वायुविशेषः **प्रविवेश** प्रवेशं कृतवान् । तच्छरीरं तत **एव** तस्मात्प्राणप्रवेशादेव न त्वन्यस्मा-त्**समुत्तस्थौ** सम्यगुत्थानं कृतवत् । **ते** वागादयः परित्यक्ताभिमाना **देवा** देवशब्दाभिधेयाः **प्राणे** शरीरोत्थापनहेतौ प्रकृष्टचेष्टावति **निःश्रेयसं** सर्वेभ्यो वागादिभ्य उत्कर्षं **विदित्वा प्राणमेव** प्रकृष्टचेष्टावन्तं न त्वन्यं **प्रज्ञात्मानं** प्रज्ञात्मनो भूम्न उपाधिभूतं संप्रसादम् । अथवा प्राणे सति प्रज्ञाया दर्शनादसति चादर्शनात्प्राणस्य प्रज्ञात्मत्वमविरुद्धमभिहितं प्राणमेव प्रज्ञात्मानमिति । **अभिसंभूय** सर्वतः संभवनं प्राप्तिं कृत्वा **सहैतैः[4] सर्वैरेतैः** प्राणापानव्यानोदानसमानैर्निखिलैः सह यथा प्राणवृत्तिभेदा आध्यात्मिकपारिच्छेदशून्यास्तद्वद्वागादयोऽपीत्यर्थः। **अस्मात्**प्रत्यक्षा**ल्लोका**त्[5]तनुरूपाच्छरीराच्चक्षुराद्यभिमानादित्यर्थः । **उच्चक्रमुः**उत्क्रमणं चक्रुः ।

**ते वायुप्रतिष्ठा[6] आकाशात्मानः स्वरीयुस्तथो एवैवं विद्वान्स-**
**र्वेषां[7] भूतानां प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः[8] सर्वैरस्मा-**
**च्छरीरादुत्क्रामति स वायुप्रतिष्ठ[9] आकाशात्मा स्वरेति स तं[10]द्भ-**
**वति यत्रैते देवास्तत्प्राप्य[11] तदमृतो भवति यदमृता देवाः ॥ ९ ॥**

**ते** परित्यक्ततदभिमाना वागादयो **वायुप्रतिष्ठा[12]** वायावाधिदैविके प्राणे प्रतिष्ठा प्राणो निःश्रेयसमिति ज्ञानमाश्रयो येषां ते वायुप्रतिष्ठाः । **आकाशात्मान** आकाशवत्सर्वगत आत्मा येषां त आकाशात्मानः । **स्वरीयुः** स्वः स्वर्गमग्न्यादिस्वरूपमीयुर्ययुर्गतवन्त इत्यर्थः । **तथो एव,** उ अपि तद्वदेव यथा देवा न त्वन्यथा । **एवं विद्वा**-नुक्तेन प्रकारेण प्राणे निःश्रेयसं जानन्**सर्वेषां भूतानां** निखिलानां स्थिरजङ्गमानां **प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः[13] सर्वैरस्मात्** । व्याख्यातम् । **शरीरा**च्छरीराभिमानाद्**उत्क्रामत्**युत्तिष्ठति शरीराभिमानं परित्यजतीत्यर्थः । **स वायुप्रतिष्ठ आकाशात्मा स्वरेति** । व्याख्यातम् । उपासकस्यैकत्वादेकवचनं विशेषैः[14] ।

---

१ घ. च. °स्थौ ता वा एताः सर्वा देवताः प्रा° । २ च. °हैतैः । ३ घ. च. °स्माच्छरीरादु° । ४ च. °हैवैतैः । ५ घ. °काज्जलरू° । ६ च. °प्रविष्टा आ° । ७ घ. °द्वान्प्राणे निःश्रेयसं विदित्वा सर्वे° । च. °द्वान्प्राणे निःश्रेयसं विदित्वा प्रा° । ८ घ. च. °हैवैतैः । ९ च. °प्रविष्ट आ° । १० च. तद्गच्छति । ११ घ. च. °प्य यदमृता देवास्तदमृतो भवति य एवं वेद ॥ ९ ॥ १२ घ. °प्रविष्टा वा° । १३ च. °हैवैतैः । १४ च. °षः । एवं प्राणो ब्रह्मेत्युपासनं स्थाप्यत इति तत्फलमाह—स्वः ।

स्वः स्वर्गं प्राणं ब्रह्मज्ञानोत्पादनद्वाराऽऽनन्दात्मानं वैति गच्छति । स्वरेतीत्येतद्व्याकरोति—**स** उपासकस्तद्भवत्युक्तं प्राणस्वरूपं भवति । तच्छब्दार्थमाह—**यत्र** यस्मिन्प्राणस्वरूप **एते देवा** एते वागादयोऽग्न्याद्यात्मका देवशब्दाभिधेयाः । ननु वागादीनामग्न्याद्यात्मकत्वेऽपि विलक्षणममृतत्वं जातं तत्प्राप्तावुपासकस्य पुनस्तत्प्राप्तौ किं स्यादित्यत आह—तत्प्राणस्वरूपं प्राप्याप्य **तदमृतस्**तत्सर्वपरिच्छेदशून्यममृतत्वं यस्य सोऽयं **तदमृतो भवति** स्पष्टम् । **यदमृता** यत्प्रसिद्धं सर्वपरिच्छेदशून्यममृतत्वं येषां ते यदमृता **देवा** वागाद्याः ॥ ९ ॥

इदानीं प्राणविदः संप्रत्तिकर्माऽऽह—

**अथातः पितापुत्रीयं संप्रदानमिति चाऽऽचक्षते । पिता पुत्रं प्रेष्यन्नाह्वयति नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नः स्वयं श्येत एत्य पुत्र उपरिष्टादभिनिपद्यते,**

**अथ** प्राणोपासनानन्तरम् । **अतो** यस्मान्मरणमवश्यंभावि, अस्मात्कारणात्**पितापुत्रीयं** पित्रा पुत्राय दीयमानं पितापुत्रीयं **संप्रदानं** सम्यक्प्रदीयत इति संप्रदानं संप्रत्तिकर्मेत्यर्थः । **इति चाऽऽचक्षते**ऽनेनैव प्रकारेण कथयन्ति । **पिता पुत्रं प्रेष्यन्**कुतश्चिन्निमित्तान्मरिष्यामीति निश्चित्येत्यर्थः । पिता जनकः पुत्रमौरसं तनय**माह्वयति**, आकारयति संप्रत्तिकर्मार्थम् । आकारण इतिकर्तव्यतामाह—**नवैस्तृणैर्**नवीनैः कुशादिभिस्तृणै**रगारं संस्तीर्य** गृहमाच्छाद्या**ग्निमुपसमाधाय** तस्मिन्गृहे श्रौतं स्मार्तं वाऽग्निं संस्थाप्याग्नेरुत्तरतः पूर्वतो **वोदकुम्भं सपात्रमुपनिधाय** नीरपूर्णं कलशं व्रीहिपूर्णपात्रसहितं समीपे संस्थाप्या**हतेन वाससा संप्रच्छन्नो** नवीनवस्त्रेण संवृतः **स्वयं श्येतः** श्वेतः सितमाल्याम्बरधर इत्यर्थः । **एत्या**ऽऽगत्याऽऽह्वयतीत्यन्वयः । **पुत्र** आगते तनय **उपरिष्टा**दुपरिभागे**ऽभिनिपद्यते** सर्वतो नितरां प्राप्नोति ।

अभिनिपदन इतिकर्तव्यतामाह—

**इन्द्रियैरस्येन्द्रियाणि संस्पृश्यापि वाऽस्याभिमुखत एवाऽऽसीताथास्मै संप्रयच्छाति वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः**

**इन्द्रियै**श्चक्षुरादिभिः स्वकीयैर**स्य** पुत्रस्ये**न्द्रियाणि** चक्षुरादीनि **संस्पृश्य** सम्यक्स्पर्शनं विधायाभिनिपद्यत इत्यन्वयः । पक्षान्तरमाह—**अपि वा**ऽथवा । **अस्य** पुत्र-

१ च. °न्नः पिता शेत । २ घ. °तः सि° । ३ च. वाऽस्मा आसीनायाभिमुखायैव संप्र-वृध्यावृधा° । ४ च. °यः । यद्वा पिता शेते पुत्रेऽभिनिपद्यत इति पाठादन्वयः । प° ।

**स्याभिमुखत एव** संमुखत एव न त्वन्यथोपरि[1]पतनस्य लोकगर्हितत्वादित्यर्थः। **आसीतोपविशेत्**। अथानन्तरमस्मै पुत्राय **संप्रयच्छति** सम्यक्प्रयच्छेद्वक्ष्यमाणेन विधिना स्ववागादीन्दद्यादित्यर्थः। **वाचं** वागिन्द्रियं मे मम पितुर्मुमूर्षोस्त्वयि पुत्रे ममाऽऽनृण्यस्य विधातरि **दधानि** धार[2]याणि। इत्यनेन प्रकारेण **पिता** जनकः। आहेति शेषः। एवं पित्रोक्ते **वाचं** वागिन्द्रियं ते तव पितुर्मयि पुत्रे दधे धारये। इत्यनेन प्रकारेण **पुत्रस्तनय** आहेति शेषः *।

**प्राणं मे त्वयि दधानीति पिता प्राणं ते मयि दध इति पुत्रः। चक्षुर्मे त्वयि दधानीति पिता चक्षुस्ते मयि दध इति पुत्रः। श्रोत्रं मे त्वयि दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रः। अन्नरसान्मे त्वयि दधानीति पिता अन्नरसांस्ते मयि दध इति पुत्रः। कर्माणि मे त्वयि दधानीति पिता कर्माणि ते मयि दध इति पुत्रः। सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध इति पुत्रः। आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता, आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः। इत्या मे त्वयि दधानीति पिता, इत्यास्ते मयि दध इति पुत्रः[3]। धियो विज्ञातव्यं कामान्मे त्वयि दधानीति पिता धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रः।**

प्राणं घ्राणं मुख्यं च प्राणम्। चक्षुःश्रोत्रे स्पष्टे। अन्नरसान्मधुरादीन्। पूर्वं करणग्रहणमित आरभ्य विषयग्रहणम्। उभयत्र करणविषययोः समर्पणार्थं कर्माण्याद्तव्यानि। सुखदुःखे शरीरोपभोग्ये। आनन्दं रतिं प्रजातिं मैथुनस्यावसान आनन्दस्ततः प्राप्तिस्ततः प्रजातिः पुत्राद्या। इत्या गतीः।

धियोऽन्तःकरणवृत्तीः। विज्ञातव्यं तासां विषयः। कामानिच्छाविशेषान्। अन्यत्रस्वपि पर्यायेषु वाक्पर्यायवद्व्याख्येयम्[4]।

**अथ दक्षिणावृत्प्राङुपनिष्क्रामति तं पिताऽनुमन्त्रयते यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषतामित्यथेतरः सव्यमंसमन्ववेक्षते**

* एतदनन्तरं च. पुस्तके प्राणं म इत्यादि कामांस्त मयि दध इति पुत्र इत्यन्तं मूलं वर्तते.

१ च. पदस्य। २ घ. 'यामि। इ'। ३ च. पुत्रो मनो मे त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्र. प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां ते मयि दध इति पुत्रो यद्यु वा उपाभिगदः स्यात्समासेनैव ब्रूयात्प्राणान्मे त्वयि दधानीति पिता प्राणां ते मयि दध इति पुत्रोऽथ। ४ च. °म्। पाठान्तरमित्यां ते मयि दध इति पुत्र इत्यनन्तरं मनो मे त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्रः प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां ते मयि दध इति पुत्र इति। यद्यु वा उपाभिगदः प्रत्येकं वक्तुमसमर्थः स्यात्समासेनैव वदेत्प्राणान्मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्र इति। अ°।

अथानन्तरम् । दक्षिणावृत्पितुः प्रदक्षिणप्रकारेण प्राङ् प्राच्यां दिशि **उपनिष्क्रामति** पितुः समीपदेशान्निर्गच्छति । तं पुत्रं **पिता** जनकः, **अनुमन्त्रयते** पश्चात्संबोध्य ब्रूते । अनुमन्त्रणवाक्यमाह—**यशो** लौकिकी बन्धुजनादिभ्यः कीर्तिः । **ब्रह्मवर्चसं** ब्रह्मतेजः । **अन्नाद्यमन्नं** च तदाद्यं चान्नाद्यम् । **कीर्तिः** शास्त्रीयं यशस्त्वा त्वां पुत्रं **जुषतां** सेवताम् । इत्यनेन प्रकारेणानुमन्त्रयत इत्यन्वयः । **अथैतदनुमन्त्रणानन्तरम्** । **इतरः** पुत्रः **सव्यं** वामम**संं** बाहुमूलं स्वस्या**न्ववेक्षते** पश्चादवलोकयते ।

अवलोकनप्रकारमाह—

**पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल्लोकान्कामानाप्नुहीति स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्परि वा व्रजेद्यद्यु वै प्रेयाद्यदेवैनं समापयति तथा समापयितव्यो भवति तथा समापयितव्यो भवति ॥ १० ॥**

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषदि

द्वितीयोऽध्यायः ॥ २ ॥

**कौषीतकिब्राह्मणारण्यकक्रमेण सप्तमोऽध्यायः ॥ ७ ॥**

**पाणिना** करेणान्तर्धाय व्यवधाय **वसनान्तेन वा**, वाशब्दः पूर्वेण सहेच्छाविकल्पार्थः । **प्रच्छाद्या**ऽऽच्छाद्य पितरं प्रत्याह । **स्वर्गाँल्लोका**न्निरतिशयप्रीतिजनकान्देशविशेषान्**कामा**न्कमनीयांस्तत्र स्थितान्भोगान्**वाऽऽप्नुहि** प्राप्नुहि । इत्यनेन प्रकारेण ब्रूयादित्यनुषङ्गः । एवं पुत्रेण कृते **स** पिता **यदि** कथंचि**दगदः स्या**न्नीरोगो भवेत् । **पुत्रस्य** तनय**स्यैश्वर्ये** विभूतौ **पिता** जनको **वसे**न्निवासं कुर्यात्प्रवासिवद्गृहकार्यं किमपि नानुसंदध्यादित्यर्थः । **परि वा व्रजेत्** । वाशब्दः पक्षान्तरार्थः । यदि वैराग्यं तदा परिव्रजेत्सर्वसङ्गपरित्यागं कुर्यादित्यर्थः । **यद्यु वा** अपि कथंचित्प्रसिद्धं **प्रेया**त्परलोकं गच्छेत् । **यदेव** प्रसिद्धमेव वागादिकं न त्वन्यत् । **एनं** पुत्रं प्रति **समापयति** सम्यक्प्रापयति । **तथा** तद्वदेव **समापयितव्यो भवति** सम्यक्प्रापणीयो भवति । सर्वैः कामैरिति शेषः । **तथा समापयितव्यो भवति** । व्याख्यातम् । वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ १० ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां द्वितीयोऽध्यायः ॥ २ ॥

---

१ घ. °यात्तदे° । च. °यात्तथैनं । २ च. °पयेयुर्यथा । ३ ग. यथा । ४ च यथा ।

अथ तृतीयोऽध्यायः ।

यस्या हेतोः पर्यङ्कोपासना प्राणोपासना च विविधगुणोक्ता तां ब्रह्मविद्यां विवक्षुस्तस्यामास्तिक्यं जनयितुं प्रतर्दनं काश्यं देवेभ्योऽप्यधिकबलं लक्ष्म्यादिमन्तं ब्रह्मविद्यार्थिनं शिष्यं देवराजं च सत्यपाशनिबद्धं मनुष्येषु ब्रह्मविद्यां वक्तुमनिच्छन्तमपि गुरुं संपाद्याऽऽख्यायिकामाह—

ॐ[1] **प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम ।**

**प्रतर्दनः** प्रकर्षेण तर्दयति भर्त्सयत्यभिभवति स्वशत्रूनिति सार्थकनामा प्रतर्दनः । **ह** किल **दैवोदासिर्दिवोदासस्य** काशिराजस्य पुत्रो दैवोदासिः । **इन्द्रस्य** देवराजस्य परमैश्वर्यसंपन्नस्य । **प्रियं धाम** प्रियं स्थानं स्वर्गमिति यावत् । **उपजगाम** प्राप्तवान् ।

तत्प्राप्तौ कारणमाह—

**युद्धेन च पौरुषेण च तं हेन्द्र उवाच ।**

**युद्धेन च पौरुषेण च** समरयज्ञेनानेकभटपश्वाहुतिदीप्यमानशस्त्राग्निना पुरुषसंबन्धिनोत्साहेन च स्वर्गमर्मपरिज्ञानेनेत्यर्थः । चकारावुभयोरपि कारणत्वसमुच्चयार्थौ । **तं** समरशौण्डमुत्साहिनं स्वर्गमागतं प्रतर्दनम् । **ह** किल । **इन्द्रो** युद्धपौरुषाभ्यां परितोषं प्राप्तो देवराजः । **उवाचोक्तवान्** ।

इन्द्रोक्तिमाह—

**प्रतर्दन वरं[2] ते ददानीति[3] स होवाच प्रतर्दनः ।**

**प्रतर्दन** हे प्रतर्दन । **वरमभिलषितमर्थम्** । **ते** तुभ्यं प्रतर्दनाय मत्परितोषकारिणे । **ददानि** प्रयच्छानीत्यर्थः । इत्यनेन प्रकारेणोवाचेत्यन्वयः । **स** इन्द्रेणोक्तः । **ह** किल । **उवाच प्रतर्दनः** । स्पष्टम् ।

प्रतर्दनोक्तिमाह—

**त्वमेव[4] मे[5] वृणीष्व**

**त्वमेव** मत्पुरतः स्थितो हिताहितज्ञो देवराजो न त्वन्यः । **मे** मह्यं प्रतर्दनाय हितार्थिने मदर्थमित्यर्थः । **वृणीष्व** हितमिष्टमात्मने च प्रार्थयस्व ।

प्रार्थ्यमानवरमाह—

**यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच ।**

**यं** प्रसिद्धमभीष्टमर्थं **त्वं** सर्वज्ञो देवराजः । **मनुष्यायाज्ञानान्तरवर्तिनेऽनेकशुभाशुभव्यामिश्रफलदावाग्निसंतप्तगात्राय मनुष्यजातियुजे । हिततममतिशयेन** हितं नातः—

१ क. ॐ भद्रं नो अपि वातय मनः । ॐ शान्तिः ३ प्र° । २ ख. °रं वृणीष्वेति । ३ क. ददामीति । ४ ख. °व वृ° । ५ क. मे वरं वृ° ।

परं हितमित्यर्थः । मन्यसे निश्चिनोषि । इति, अनेन प्रकारेण । तमिन्द्रं प्रत्येवंवादिनं प्रतर्दनम् । ह किल । इन्द्रो देवराजो ब्रह्मविद्याज्ञानावृतदृष्टिनाऽयाचितं परोक्त्या तर्हि किल निश्चितं दातुमशक्तः । उवाचोक्तवाँल्लौकिकं नयम् ।

इन्द्रोक्तिमाह—

**न वै[1] वरोऽवरस्मै वृणीते त्वमेव वृणीष्वे[2]त्येवमवरो वै[3] किल म इति होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय ।**

**न वै वरोऽवरस्मै वृणीते** । वै प्रसिद्धमवरस्मा अन्यार्थं वरो वरं न वृणीतेऽन्यो न प्रार्थयते । यत एवमतः स्वार्थं वरं **त्वमेव वृणीष्वेति** । स्पष्टम् । एवमिन्द्रेणोक्तः । **अवरः** । वरं ददानीति प्रतिज्ञाय भवता निर्दिष्टोऽर्थोऽदत्तः स्यादिति शेषः । **वै** प्रसिद्धो मनुष्याय **मे** मह्यं हिताहितज्ञानशून्याय । **इति होवाच प्रतर्दनः किल** । एवमुक्तवान्प्रतर्दनो देवराजानं स्वार्थो वरोऽयमिति । **अथो** अथ प्रतर्दनवाक्यानन्तरम् । **खलु** निश्चितम् । **इन्द्रः** सत्यवादिनामग्रगण्यो देवराजः । **सत्याद्**वरं ते ददानीति स्वप्रतिज्ञाताद्यर्थवचनात् । **एव नेयाय** नापजगामैव । प्रतर्दनार्थं वरदाताऽपि स्वयं स्वस्मै वरं याचितवान्न तु लौकिकं नयमङ्गीचकारेत्यर्थः ।

सत्यादनपगमने कारणमाह—

**सत्यं हीन्द्रः स होवाच ।**

**सत्यं हीन्द्रः** सत्यं यथार्थस्वरूपं यत्किंचिद्वागर्थस्वरूपम् । इन्द्रो देवराजो हि यस्मात्तस्मान्नेयायेत्यन्वयार्थः । **स** सत्यपाशनिबद्ध इन्द्रः । ह किल । **उवाचोक्तवान्** । प्रतर्दनार्थमात्मानं वरं याचितवानित्यर्थः ।

अद्वैतोपक्रम इन्द्रोक्तिमाह—

**मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये ।**

**मामेवास्मत्प्रत्यये** व्यवहारयोग्यमानन्दात्मानमेव न त्वन्यम् । **विजानीह्य**वगच्छ साक्षात्कुर्वित्यर्थः । **एतदेव** मज्ज्ञानमेव न त्वन्यत् । **अहं** भवते वरस्य दाता याचिता च **मनुष्याय हिततमम्** । व्याख्यातम् । **मन्ये** निश्चिन्वे ।

एतच्छब्दार्थमाह—

**यो[4] न्मां विजानीयात् ।**

यत्प्रसिद्धं वेदान्तेषु 'ब्रह्मविदाप्नोति परम्' इत्यादिना । **मामु**क्तमानन्दात्मानं **विजानीया**त्साक्षात्कुर्यादित्यर्थः । यन्मां विजानीयादेतदेव हिततमं मन्य इत्यन्वयः ।

---

१ क. वै वरं परः परस्मै । २ 'ष्वेत्यवरो' इत्यपि पाठः । ३ क. ख. वै तर्हि कि° । ४ ख. ग. यो मां ।

ननु किं त्वद्विज्ञानेन तवान्यस्माद्यदि कश्चनातिशयो भवेत्तर्हि तद्धिततमं न त्वन्यथेति शङ्कायामद्वैतज्ञानं गुरुमातृवधप्रमुखपापोन्मूलकमित्याह—

**त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालखाञ्जान् ।**

**त्रिशीर्षाणं** त्रिशीर्षम् । त्वाष्ट्रं त्वष्टुरपत्यं विश्वरूपम् । **अहनं** निपातितवान् । **अरुन्मुखान्,** रुच्छब्दो वेदाध्ययनं तेनोपनिषदर्थविचारो ब्रह्ममीमांसापरपर्यायो लक्ष्यते स येषां मुखे नास्ति तेऽरुन्मुखास्तान् । **यतीन्**प्रयत्नवतश्चतुर्थाश्रमिणः । **सालावृकेभ्यः** सालावृकाणामपत्यानि सालावृकाः सालावृकेया इति यावत् । तेभ्य आरण्यश्वभ्य इत्यर्थः । **प्रायच्छं** प्रकर्षेण वज्रेण शतधा विभज्य दत्तवान् । अद्यापि च तेषां मस्तकविपाकाः करीरा दृश्यन्ते । **बह्वी**र्भूयसीः स्वरूपतः संख्यातश्च । **संधाः** संधीनित्यर्थः । **अतिक्रम्य** त्यक्त्वा **दिवि** स्वर्गे । **प्रह्लादीया**न्प्रह्लादिनः प्रह्लादेन नित्यसंबन्धिनः । अनेकटोटिसंख्याकान्महामायाननेकच्छिद्रघातिनोऽसुरान्प्रह्लादपरिचारकानित्यर्थः । **अतृणं** हिंसितवान् । **अह**मात्मज्ञानीन्द्रस्तुभ्यं वरस्य दाता । **अन्तरिक्षे** भुवर्लोके । **पौलोमा**न्पुलोमसंबन्धिनोऽसुरविशेषान् । बह्वीः संधा अतिक्रम्यातृणमित्यनुवर्तते वक्ष्यमाणे च । **पृथिव्यां** भूलोके च । **कालखाञ्जा**न्कालखञ्जसबंन्धिनोऽसुरान्भूयां(य)सः परस्परसंबन्धस्यावश्यंभावित्वात् । कालखञ्जा एव कालखाञ्जास्तान् ।

ननु किं प्रकृत इत्यत आह—

**तस्य मे तत्र नलोम च मा मीयते ।**

**तस्य** गुरुब्राह्मणवधस्य कर्तुः संन्यासिनां च श्वभ्यो दातुर्लोकत्रयेऽपि यज्ञादिसंपन्नमहामायासुरसंघस्योपसंहर्तुरात्मज्ञानिनोऽन्येन मनसाऽपि कर्तुमशक्यं कुर्वतो **मे** ममेन्द्रस्य तवोपदेशकस्य । **तत्र** तस्मिन्नतिक्रूरे कर्मणि क्रियमाणे ब्रह्मवधादिलक्षणे । **नलोम च मा मीयते** । नलोमापि । अल्पोऽपि केश इत्यर्थः । मा मीयते न हिंस्यते । उक्तेन केनचित्कर्मणाऽधिकारिशरीरवानिति त्रैलोक्यस्थापनायेदं कृतवानहमिति त्वदयम् ।

नन्वेतद्भवत एव न त्वस्मदादेरित्यत आह—

**स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते ।**

**स** मदन्यो मज्ज्ञानी प्रसिद्धः । **यो** यः कश्चिद्देवो मनुष्यो वा । **मा**मानन्दात्मानमिन्द्रम् । **विजानीया**दहमिन्द्रोऽस्मीति साक्षात्कुर्यात् । **नास्य केन च कर्मणा**

---

१ क. प्रह्लादादी° । २ क. °लकाश्यान् ।

**लोको मीयते** । अस्य मामानन्दात्मानं साक्षात्कुर्वतः केन च वक्ष्यमाणेन भ्रूणहत्यादिना कर्मणा पातकेन शास्त्रनिषिद्धेन व्यापारेण लोकः कृतस्य करिष्यमाणस्य च सुकृतस्य फलमुदर्कं न मीयते न हिंस्यते ।

हिंसकानि कर्माण्येव दर्शयन्नाह—

**न¹ मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया**
**नास्य पापं च न चक्रुषो² मुखान्नीलं वेतीति ॥ १ ॥**

**न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया** । मातापितरौ प्रसिद्धौ तयोर्वधो लोकद्वयभ्रंशहेतुः प्रत्येकं प्रसिद्धः । स्तेयं सुवर्णपरिमितसुवर्णस्य ततोऽप्यधिकस्य वा स्वामिनः परोक्षमादानं तेन । भ्रूणो वेदस्य वेदयोर्वेदानां वाऽधिगमेनाध्ययनेन सह वर्तमानो द्विजोत्तम इत्यर्थः । तस्य मनसा वाचा कर्मणा वाऽपराधशून्यस्य स्वहस्तादिना वधो भ्रूणहत्या । तथा कर्मसामान्यस्य विशेषोऽयमिति दर्शयितुं पर्यायचतुष्टयेऽपि नकारचतुष्टयम् । **नास्य पापं च न चक्रुषो मुखान्नीलं वेतीति** । किं बहुनाऽस्य मदात्मज्ञानिनः पापं च न चक्रुषः पापमपि कर्तुमिच्छोर्मुखाद्वदनान्नीलं मुखकान्तिस्वरूपं नीलं नीलिमाश्रयस्वरूपं वा मुखात्कण्ठजिह्वावदनान्न वेति न व्येति नापगच्छति । इतिशब्दः प्रकृतब्रह्मज्ञानस्तुतिपरिसमाप्त्यर्थः ॥ १ ॥

**स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व ।**

एवं ब्रह्मज्ञानं स्तुत्वाऽऽत्मनो ब्रह्मणः स्वरूपं विवक्षुः **स इन्द्रः** । **ह** किल**ोवाचो**क्तवान् । **प्राणः** प्राणशब्दाभिधेयः प्राणोपाधिको वा । **अस्मि** भवामि । **प्रज्ञात्मा** बुद्धिवृत्तिप्रतिफलितः प्रज्ञानैकस्वभावः । **तं** प्राणप्रज्ञात्मस्वरूपम् । **मामानन्दात्मान**मिन्द्रम् । **आयुः** सर्वप्राणिनां जीवनकारणं प्राणापानव्यतिरिक्तं प्राणापानयोराश्रयभूतम् । **अमृतं** मरणशून्यं षड्भावविकारशून्यमित्यर्थः । **इति** प्राणः प्रज्ञात्मेन्द्र आयुरमृतमस्मीत्यनेन रूपेण । **उपास्स्व** यावदात्मसाक्षात्कारं विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहं कुरु ।

नन्वेकस्यैव भवत इन्द्रस्य प्राणः प्रज्ञात्माऽऽयुरमृतमिति गुणाः किमित्याशङ्क्य नेत्याह—

**आयुः प्राणः ।**

**आयुरुक्तं** यत्स **प्राण** उक्तः ।

नन्वायुषः प्राणत्वेऽपि न प्राणस्याऽऽयुष्ट्वं यथा सास्नाया गोत्वेऽपि न गोः सास्नात्वमित्यत आह—

**प्राणो वा आयुः ।**

१ ख. ग. न स्तेयेन न भ्रूणहत्यया न मातृवधेन न पितृवधेन ना° । २ क. ख. चक्रुषो ।

**प्राणो वा आयुः** प्राण एवाऽऽयुः । न त्वङ्गाङ्गिगुणगुण्यादिभेदः ।

न त्वेतदायुष एव किं त्वमृतत्वस्यापीत्याह—

**प्राण एवामृतम् ।**

**प्राण एवामृतं** न जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति च । अमृतमपि प्राण एव ।

प्राणस्याऽऽयुष्ट्वममृत्वं चोपपादयति—

**यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः ।**

**यावत्,** यावन्तं कालम् । हि यस्मात् । **अस्मिन्**प्रत्यक्षे **शरीरे** शीर्णावयवे कलेवरे । **प्राणो वसति तावदायुः,** तावत्तावन्तं कालम् । स्पष्टमन्यत् ।

इदानीममृतत्वमुपपादयति—

**प्राणेन ह्येवामुष्मिँल्लोकेऽमृतत्वमाप्नोति ।**

**प्राणेन ह्येव** हि यस्मात्प्राणेनैव न तु शरीरेणापि । **अमुष्मिन्**परोक्षे **लोके** स्वर्गादौ । **अमृतत्वं** सुखम् । **आप्नोति** स्पष्टम् ।

ननु प्राणस्य क्रियाशक्तेर्भवतु किं प्रज्ञयेत्यत आह—

**प्रज्ञया सत्यं संकल्पम् ।**

**प्रज्ञया** ज्ञानशक्तिरूपेण । **सत्यं** सत्यवचनं निष्प्रपञ्चं ब्रह्म वा । **संकल्प**मिदं मे स्यादित्येवंरूपं मनसः प्रचारमधिगच्छतीति शेषः ।

एवं प्रज्ञादीनामुपयोगमुक्त्वाऽऽयुष्ट्वामृतत्वोपासनयोः फलमाह—

**स यो ममाऽऽयुरमृतमित्युपास्ते सर्वमायुरस्मिँल्लोक एति ।**

**स** प्रसिद्ध उपासकः । **यः** कश्चिन्**मम**न्द्रस्य । प्राणात्मना प्रत्यग्भूत**मायुरमृतमिति** व्याख्यातम् । **उपास्ते** स्पष्टम् । य उपास्ते स इत्यन्वयः । **सर्वमायुरस्मिँल्लोक एति** निखिलं शतसंवत्सरमायुराप्नोति ।

आयुरुपासनस्य फलमुक्त्वाऽमृतोपासनस्य फलमाह—

**आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके ।**

**आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके ।** क्षयरहितममृतत्वम् । स्पष्टमन्यत् ।

प्रतर्दनः प्राणशब्दं श्रुत्वा प्राणानामिन्द्रियाणामेकत्वं स्वयमवगतं प्रसङ्गात्पृच्छति—

**तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति ।**

**तत्**तत्र प्राणानामनेकत्वे सति । ह किल । **एके** केचिद्विद्वांसः । **आहुः** कथयन्ति । **एकभूयं वै,** एकभावमेव । **प्राणा** इन्द्रियाणि । **गच्छन्ति** स्पष्टम् । इत्यनेन प्रकारेणाऽऽहुरित्यन्वयः ।

---

१ क. प्राणो वा अमृ° । २ क. स या° । ३ क सत्यसं° । ४ ख. यो मामा° ।

प्राणानामेकभाव उपपत्तिं यां कथयन्ति तामाह—

**न[1] हि कश्चन शक्नुयात्सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यातुमित्[2]येकभूयं वै प्राणाः ।**

**न हि कश्चन शक्नुयात्** । हि यस्मात्कोऽपि न शक्नुयात् । **सकृ**देकवारं युगपदित्यर्थः । **वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दम्** । वागिन्द्रियेण नाम वक्तुमिति शेषः । प्रज्ञापयितुमवगमयितुमवगन्तुमिति यावत् । एतच्चक्षुःश्रोत्राभ्यां संबध्यते । स्पष्टमन्यत् । **मनसा ध्यातुं** मनसा ध्यानं कर्तुम् । इत्यनेन प्रकारेणैकहेलया व्यापाराभावेन । **एकभूयं वै प्राणाः** । व्याख्यातम् । पुनरभिधानं निगमनार्थम् ।

उक्तं हेतुं विवृणोति—

**ए[3]कैकमेतानि सर्वाण्येव प्रज्ञापयन्ति ।**

**एकैकं** रूपरसादिकं **सर्वाण्येव** निखिलान्येकैकमेवेत्यनेन संबध्यते । स्पष्टमन्यत् । **एतानि** वागादीनि करणानि । **प्रज्ञापयन्ति** प्रकर्षेण निष्पादयन्ति ।

एकैकमेव प्रज्ञापयन्तीत्युक्ते शृङ्गग्राहिकयाऽऽह—

**वाचं वदन्तीं सर्वे प्राणा अनु वदन्तिः ।**

**वाचं वदन्तीं** वागिन्द्रियं स्वव्यापारं कुर्वत्सर्वे **प्राणा** निखिलानीन्द्रियाणि राजानमिव वदन्तं सर्वे सभागता **अनु वदन्ति** पश्चाद्वदनोपलक्षितं स्वं स्वं व्यापारं कुर्वन्त्यनुमोदन्ते वा न त्वेकहेलया व्यापारं कुर्वन्तीत्यर्थः ।

यथा वाचो व्यापार इतरेषां स्वव्यापारादुपरमस्तथा चक्षुःश्रोत्रमनःप्राणानां व्यापारेऽपीत्याह पर्यायचतुष्टयेन—

**चक्षुः पश्यत्सर्वे प्राणा अनु पश्यन्ति श्रोत्रं शृण्वत्सर्वे प्राणा अनु शृण्वन्ति मनो ध्यायत्सर्वे प्राणा अनु ध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनु प्राणन्तीति ।**

**चक्षुः पश्यत्सर्वे॰ प्राणा अनु प्राणन्ति** । स्पष्टम् । अनेनानेकावधानान्येककाले सूच्यग्रेण शतपत्रसहस्रपत्रवेधनवदस्पष्टविभिन्नकालानि व्याख्येयानि । **इतिः** प्रतर्दनप्रश्नपरिसमाप्त्यर्थः ।

प्रतर्दनप्रश्नस्येन्द्रोऽङ्गीकारेणैवोत्तरमुक्तवानित्याह—

**एवमु हैतदिति हेन्द्र उवाच ।**

**एवमु** इत्थमेवैकहेलया न सर्वे प्राणाः स्वस्वव्यापारवन्तः । **ह** प्रसिद्धं सर्वजनीनानुभवेन । **एतदे**कहेलया सर्वेन्द्रियाणां स्वस्वव्यापाराकरणम् । **इति ह**, एवं किल । **इन्द्र उवाच** । स्पष्टम् ।

---

१ क. न क° । २ ख. त्येककालमेक° । ३ ख. भूत्वैकै° ।

ननु सर्वेषां तवोपाधित्वे समाने कः पक्षपातस्तव प्राणोऽस्मीत्यभिमान इत्यत आह–

**अस्ति त्वेव प्राणानां निःश्रेयसमिति ॥ २ ॥**

**अस्ति त्वेव** तुशब्दः शङ्कानिराकरणार्थः । प्राणो हि मम निःश्रेयसात्मन उपाधिर्निःश्रेयसरूपः । प्रसिद्धं तस्य निःश्रेयसं प्राणसंवादादौ न च तदासीद्भविष्यति वा किं त्वस्त्येव वर्तत एव न तु कदाचिन्न वर्तते । **प्राणानां** प्राणस्य पञ्चवृत्तीनां **निःश्रेयसं** शरीरधारणोच्छ्वयनादिकम् । इतिर्निःश्रेयसवर्तमानत्वप्रतिज्ञापरिसमाप्त्यर्थः ॥ २ ॥

न चैतन्निःश्रेयसं वाक्चक्षुःश्रोत्राणामपि भवतीत्याह पर्यायक्रमेण सहेतुकम्—

**जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इति ।**

**जीवति वागपेतो० बालान्हि पश्यामः** । स्पष्टम् । वाक्चक्षुःश्रोत्रमनोभिरपेतो रहितो जीवतीति प्रज्ञाऽत्र हेतुः । मूकान्धबधिराणां च दर्शनम् । अयमर्थः । इन्द्रियाणां कार्यैकगम्यत्वात्कार्याभावे तदभाव इति च । **जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्नः** । स्पष्टम् । पर्यायद्वयेन हस्तपादरहितस्य जीवनमुच्यते । **इतिः** प्रकृतपर्यायपरिसमाप्त्यर्थः ।

एकहेलयोभयत्र हेतुमाह—

**एवं हि पश्याम इति ।**

**एवं हि पश्यामः** । हि यस्मादेवं छिन्नहस्तपादानां जीवनं पश्यामोऽवलोकयामः । न च दृष्टेऽनुपपन्नं नामेत्यर्थः । इत्यनेन प्रकारेणाङ्गीकृत्य । इति हेन्द्र उवाचेत्यन्वयः । अथवाऽऽद्य इतिशब्दोऽङ्गीकारार्थोऽन्यस्तु प्रकारार्थ इति ।

एतन्निःश्रेयसमस्त्येवेत्यस्मिन्नर्थ उपपत्तिर्मृग्येत्याह—

**अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति ।**

**अथ** यस्मात्**खलु** निश्चितं सर्वप्रत्यक्षमिति यावत् । **प्राण एव प्रज्ञात्मा** क्रियाशक्त्युपाधिक एव ज्ञानशक्त्युपाधिको न त्वन्यः । **इदं** प्रत्यक्षं **शरीरं** देहं **परिगृह्य**ाहं ममेति वा स्वीकृत्योत्थापयति शयनासनादिभ्य ऊर्ध्वं नयति ।

इदानीं प्रसङ्गादुपासनान्तरं श्रुत्यन्तरप्रसिद्धं प्राणे स्मारयति ।

**तस्मादेतदेवोक्थमुपासीते ।**

---

१ ख. °सीतेति तैषा प्राणे सर्वाप्तिर्यो वे । २ ग. °त सैषा प्राणे सर्वाप्ति यो ।

तस्माद्यत इदं शरीरमुत्थापयति प्राणस्तत **एतदे**वोत्थापनहेतुभूतमेव नान्यत् । **उक्थ**मुक्थशब्दाभिधेयम् । **उपासीत** । व्याख्यातम् ।

ननु यदि प्राण उक्थत्वेनोपास्यस्तर्हि पञ्चवृत्तिमात्रं विवक्षितं न परमात्मेत्यत आह—

**यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः ।**[1]

**यो वै प्राणो** य एवात्र प्राणशब्दाभिधेयः । **सा** प्रसिद्धा **प्रज्ञा** सर्वबोधसाक्षिणी संवित् । **या वा** या वै प्रज्ञोक्ता । **स** प्रसिद्धः । **प्राणः** प्राणोपाधिकः परमात्मा ।

ननु कस्मादेतदेकमेव तवोपाधिभूतमित्यत आह—

**सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतस्तस्यैषैव दृष्टिः ।**[2]

**सह** मिलित्वा । **हि** यस्मात् । **एतौ** प्रज्ञाप्राणौ । **अस्मिञ्शरीरे** । स्पष्टम् । **वसतो** निवासं कुरुतो जीवेन **सह** मिलित्वो**त्क्रामतो**ऽस्माच्छरीरादुत्क्रमणं कुरुतो मरणे । पाठान्तरे यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति । **तस्य** प्राणोपाधिकस्य । **एषैवे**त्थमेव वक्ष्यमाणा । **दृष्टि**र्दर्शनापरपर्यायाऽवगतिः । अस्यामवस्थायां प्राणशब्दाभिधेयोऽवगन्तव्य इत्यर्थः ।

एषैव दृष्टिरिति व्याकरोति—

**एतद्विज्ञानम् ।**

**एतद्विज्ञानं** यदेतत्सुषुप्तं तदेवाऽऽत्मनः प्राणत्वविज्ञप्तिकारणम् ।

एतच्छब्दार्थमाह—

**यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति ।**

**यत्र** यस्यामवस्थायाम् । **एतत्**सर्वविशेषबोधशून्यं यथा स्यात्तथा । **पुरुषो** वस्तुतः परिपूर्णोऽपि पुरिशयः । **सुप्तः** शयनमधिगतः । **स्वप्नं** जाग्रद्वासनारूपं पदार्थजातं **न कंचन पश्यति** कमपि नावलोकयति । **अथ** तदा स्वप्नानवलोकनकाले । **अस्मि**न्मुखादिसंचारिणि तिरस्कृतज्ञानशक्तौ । **प्राण एव** क्रियाशक्तावेव न त्वन्यत्र । **एकधा भवति**, एकत्वं गच्छति । प्राणोपाधिकः प्राणशब्दार्हः पुरुषो भवतीत्यर्थः ।

ननु तदा वागादीनि करणानि क्व यान्तीत्यत आह—

**तदैनम् ।**

पयरा

**त**दा तस्मिन्प्राण एकधाभवनकाले । **एनं** प्राणोपाधिकमात्मानम् ।

वाक्चक्षुःश्रोत्रमनांसि सविषयाणि लयं गच्छन्तीति पर्यायचतुष्टयेनाऽऽह—

**वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति ।**[3]

---

१ ग. प्राणस्त° । २ ख. °हो त्क्रम° । ३ ख. °ध्यातैः स° ।

**वाक्सर्वैर्नामभिः०** सहाप्येति । स्पष्टम् ।

ननु प्राणे लीनानां तेषां समुद्र इव सरितां कुतः पुनरुत्पत्तिरित्यत आह—

**स यदा प्रतिबुध्यते ।**

**स** प्राणोपाधिकः पुरुषो **यदा** यस्मिन्काले **प्रतिबुध्यते** जागरणं गच्छति ।

जागरणावसर एतस्मादुत्पत्तौ दृष्टान्तमाह—

**यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ।**

**यथा** दृष्टान्ते । **अग्नेर्**जातवेदसो **ज्वलतो** जाज्वल्यमानात् । **सर्वा दिशो विस्फुलिङ्गाः** क्षुद्रा अग्निकणा **विप्रतिष्ठेरन्**विविधासु दिक्षु निर्गच्छन्ति । **एवमेवा**नेनैव प्रकारेण न त्वन्यथा । **एतस्मात्**प्राणोपाधिकादा**त्मन** आनन्दात्मनः **प्राणा** वागादयो **यथायतनं** यस्य यादृशं स्थानं जिह्वादि तदुद्दिश्य **विप्रतिष्ठन्ते** विविधं निर्गच्छन्ति । **प्राणेभ्यो देवा** अग्न्यादयः । विप्रतिष्ठन्त एतदनुवर्ततेऽत्र वक्ष्यमाणे च । **देवेभ्यो**ऽग्न्यादिभ्यो **लोका** नामादयो विषयाः ।

जीवतः प्राणोपाधिकत्वमुक्त्वा मरणेऽपि प्राणोपाधिकत्वमाह—

**तस्यैषैव सिद्धिः ।**[1]

**तस्य** प्राणोपाधिकस्य । **एषैव** मरणावस्थारूपैव न त्वन्या । **सिद्धिः** प्रसिद्धिः प्राणत्वे ।

एषैव सिद्धिरिति व्याकरोति—

**एतद्विज्ञानम् ।**

**एतन्**मरणं सर्वप्रत्यक्षम् । **विज्ञानं** विज्ञायतेऽनेनेति विज्ञानं प्रमाणमिति यावत् ।

एतच्छब्दोक्तं मरणमाह—

**यत्रैतत्पुरुष आर्तो मरिष्यन्नाबल्यं न्येत्य संमोहं न्येति तदाहुः ।**[2] [3]

**यत्र** यस्यामवस्थायामे**तत्पुरुषो**ऽयं पुमान्प्रत्यक्षो मनुष्यत्वाद्यभिमानी । **आर्तो** जराव्याध्यादीनां वश्यं प्राप्तः । **मरिष्यन्**मरणं करिष्यन्नासन्नमरण इत्यर्थः । **आबल्य**मबलस्य दुर्बलस्य भाव आबल्यं हस्तपादाद्यवश्यत्वमित्यर्थः । **न्येत्य** नितरामागत्य । **संमोहं** बन्ध्वाद्यपरिज्ञानलक्षणं **न्येति** नितरामागच्छति । **तदाहुः** समीपस्थाः कथयन्ति ।

समीपस्थोक्तिमाह—

**उदक्रमीच्चित्तम् ।**

**उदक्रमी**दुत्क्रमणमकरोत् । **चित्तं** मनः ।

---

१ ख. काः स एष प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेनदेवोक्थमुपासीतेति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणस्त° । २ ख. °बल्यमेत्य सं° । ३ ख. °मोहमेति तमाहुः ।

चित्तोत्क्रमणे लिङ्गान्याहु:—

**न शृणोति न पश्यति न वाचा वदति न ध्यायत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥**

**न शृणोति न पश्यति न वाचा वदति न ध्यायाति ।** स्पष्टम् । इत्यनेन प्रकारेणाऽऽहुरित्यन्वयः । **अथास्मिन्प्राण० देवा देवेभ्यो लोकाः ।** अथ तदाऽस्मिन्मरणकाले प्रतिबुध्यत उत्पद्यते शरीरान्तरग्रहणं करोति तास्मिन्नपि शरीरे मोहाद्विमुक्तो भवतीत्यर्थः । व्याख्यातमन्यत् ॥ ३ ॥

एवं मरणकाले मूर्छामिन्द्रियाणां लयमभिधाय शरीरादुत्क्रमणे तस्मिन्नेव लये विशेषमाह—

**स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति वागस्मात्सर्वाणि नामान्यभिविसृजते ।**

**स** मुमूर्षु**र्यदा** यस्मिन्काले । अस्मात्प्रत्यक्षाच्छरीराच्छीर्णावयवाद्देहादुत्क्रामत्यूर्ध्वं गच्छति **सहैवैतैः सर्वैरुत्क्रामति । वाग्**वागिन्द्रिय**मस्मात्**स्वामिनः **सर्वाणि** निखिलानि **नामानि** स्वविषयभूतानि । **अभिविसृजते** सर्वतः परित्यजति स्वविषयव्यापारात्सर्वथोपरमं प्राप्य पुनर्भोगं न प्रयच्छतीत्यर्थः ।

ननु यदि वाङ्नामान्यभिविसृजतेऽस्मात्तर्ह्यन्येन तत्प्राप्तिरस्त्वित्यत आह—

**वाचा सर्वाणि नामान्याप्नोति ।**

**वाचा सर्वाणि नामान्याप्नोति ।** स्पष्टम् । अथवा नाम्नां परित्यागं चेद्वाक्करोति तथा च स्वयं प्राणे विलीना स्वविषयरहिता स्यादित्यत आह—**वाचे**त्यादि अयमर्थः, न वाङ्मात्रं प्रलीयते प्राणे किं तु प्राणो वाचा सह सर्वाणि नामान्याप्नोति वाग्न स्वविषयरहिता प्राणे प्रलीयत इति ।

यथा वाक्तथा घ्रा(प्रा)णचक्षुःश्रोत्रमनांसीति पर्यायचतुष्टयेनाऽऽह—

**प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते प्राणेन सर्वान्गन्धानाप्नोति चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्या-**

---

१ ख. °र्ध्यानैः स° । २ ख. ग. वागेवास्मिन्सर्वा° । ३ क. °ति चक्षु° । ४ ख. प्राण एवास्मिन्सर्वा° । ५ ख °क्षुरेवास्मिन्सर्वा° ।

**प्नोति श्रो[1]त्रमस्मात्सर्वाञ्शब्दानभिविसृजते श्रोत्रेण सर्वाञ्शब्दानाप्नोति मनो[3]ऽस्मात्सर्वाणि ध्या[4]नान्यभिविसृजते मनसा सर्वाणि ध्या[5]नान्याप्नोति सैषा प्राणे सर्वाप्तिः ।**

**प्राणोऽस्मा० ध्यानान्याप्नोति** । वाक्पर्यायवत्प्राणचक्षुःश्रोत्रमनःपर्यायाः सविषया व्याख्येयाः । **सा** प्रसिद्धा । **एषा** स यदेत्यादिनोक्ता । **प्राणे** प्राणोपाधिक आत्मनि । **सर्वाप्तिः** निर्विषयेन्द्रियादिलक्षणस्य सर्वस्य प्राप्तिः ।

न चायं प्राणः पञ्चवृत्तिमात्रं किंतु क्रियाज्ञानशक्त्युपाधिक आत्मेत्येतदुक्तमर्थं स्मारयति—

**यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्राम[6]तः ।**

**यो वै प्राणः० सहोत्क्रामतः** । व्याख्यातम् ।

ननु प्राणे सर्वेषां भूतानामेकीभाव उक्तो न तु प्रज्ञायां तत्कथं प्राणप्रज्ञयोः सर्वात्मनैक्यमित्याशङ्क्य प्रज्ञाया अपि प्राणवत्सार्वात्म्यकथनायाऽऽह—

**अथ[7] खलु यथाऽस्यै प्रज्ञायै सर्वाणि भूता[8]न्येकं भवन्ति तद्व्याख्यास्यामः ॥ ४ ॥**

**अथ** प्राणस्य सार्वात्म्यकथनानन्तरम् । **खलु** निश्चितम् । **यथा** येन प्रकारेण । **अस्यै प्रज्ञायै,** अस्यां प्रज्ञायां ज्ञानशक्तौ चैतन्ये साक्षिण्याम् । **सर्वाणि भूतानि** निखिलानि वागादीनि सविषयाणि स्थिरजङ्गमशब्दाभिधेयानि । **एकं भवन्ति** प्राणवदेकधा भवन्ति । **तत्तथा** । **व्याख्यास्यामो** विस्पष्टमासमन्तात्प्रकथयिष्यामः ॥ ४ ॥

एकभावं प्रतिज्ञाय प्रथमतः प्रज्ञाया विभागमाह—

**वागेवास्या एकमङ्गमदूदुह्ळं* तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा ।**

**वागेव** वागिन्द्रियमेव प्रसिद्धं न त्वन्यत् । **अस्याः** प्रज्ञायाः । **एकमङ्ग**मेकं भागं गोरिवैकस्तनम् । **अदूदुह्ळ**मदूदुहत् । स्वाधीनं कृतवतीत्यर्थः । **तस्यै** तस्या दुग्धैकभागप्रज्ञाया वाचो **नाम** वक्तव्यं शब्दजातम् । **परस्ता**द्विषयत्वेन परस्मिन्बाहिर्देशे । **प्रतिविहिता** विनिर्मिता **भूतमात्रा** भूतभागः । मीयत इति मात्रा । तस्या विषयत्वेन प्रतिविहिता भूतमात्रा वा नामेत्यन्वयः ।

---

* क. पुस्तके अदूदुह्ळमित्यस्य स्थानेऽदूदुहदित्येव पाठ उपलभ्यते । ग. पुस्तके चोदूह्ळमिति ।

---

१ क °ति प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते प्राणेन सर्वान्गन्धानाप्नोति श्रो° । २ ख. °त्र मेवास्मिन्त्सर्वा° । ३ ख. मन एवास्मिन्त्सर्वा° । ४ ख. ध्यातान्य° । ५ ख. ध्यातान्या° । ६ क. °मत इत्यथ । ७ ख. ग. °थ य° । ८ क. °न्येकीभ° ।

यथा वाक्प्रज्ञाया एकमङ्गमदूदुहद्यथा च तस्याः परस्तात्प्रतिविहिता भूतमात्रा नामैवं प्राणचक्षुःश्रोत्ररसनहस्तशरीरोपस्थपादबुद्धिस्थसंविद् एकैकमङ्गमदूदुहत् । आसां यथाक्रमं परस्तात्प्रतिविहिता भूतमात्रा गन्धरूपशब्दान्नरसकर्मसुखदुःखानन्दरतिप्रजातीत्याधीविज्ञातव्यकामा इति पर्यायनवकेनाऽऽह—

**प्राण एवास्या एकमङ्गमदूहूळं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमदूहूळं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमदूहूळं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमदूहूळं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमदूहूळं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमदूहूळं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रोपस्थ एवास्या एकमङ्गमदूहूळं तस्याऽऽनन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा पादावेवास्या एकमङ्गमदूहूळं तयोरित्याः परस्तात्प्रतिविहिता भूतमात्रा[1] प्रज्ञैवास्या एकमङ्गमदूहूळं तस्यै[2] धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥**

**प्राण एवास्या॰भूतमात्रा।** वाक्पर्यायवच्चक्षुरादयो नवापि पर्याया व्याख्येयाः॥५॥

एवं प्रज्ञाया विभागमुक्त्वेदानीमविभागमाह—

**प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति ।**

**प्रज्ञया** वाचा दुग्धयोक्तया संविदा **वाचं** वागिन्द्रियं **समारुह्य** सम्यक्तादात्म्यलक्षणेन संबन्धेनाऽऽरोहणं कृत्वाऽहं वागस्मीत्यभिमानं प्राप्येत्यर्थः । **वाचा,** उक्तप्रज्ञाभिन्नेनोक्तेनेन्द्रियेण । **सर्वाणि** निखिलानि **नामानि** वक्तव्यान्याप्नोति वाच्यधिरूढा प्रज्ञा प्राप्नोति । अयमर्थः । न प्रज्ञामन्तरेणोक्तविषयप्राप्तिस्ततो यद्विना न भवति नोपलभ्यते वा तत्तदात्मकं यथा तन्तून्विनाऽनुपलभ्यमानः पटस्तन्त्वात्मकः शुक्तिकामन्तरेण वाऽनुपलभ्यमानं रजतं शुक्त्यात्मकं तथा चोक्तेन्द्रियमन्तरेणाविद्यमानोऽनुपलभ्यमानो विषय उक्तेन्द्रियात्मकः । उक्तं च—"इन्द्रियं प्रज्ञामन्तरेणानुपलभ्यमानं प्रज्ञात्मकम्" इति ।

यथा वाङ्नामनी प्रज्ञाया भेदरहिते एवं घ्राणगन्धौ चक्षूरूपे श्रोत्रशब्दौ जिह्वान्नरसौ हस्तकर्माणि शरीरसुखदुःखान्युपस्थानन्दरतिप्रजातयः पादगतयः प्रज्ञाधीविज्ञातव्यकामाश्चेत्याह—

**प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान्गन्धानाप्नोति प्रज्ञया चक्षुः**

---

१ ध. °त्रा मन एवा° । २ ख. तस्य धीः का° ।

**समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्शब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञयैव धियं[2] समारुह्य[3] प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥**

**प्रज्ञया प्राणं समारुह्य० धियो विज्ञातव्यं कामानाप्नोति ।** वाक्पर्यायवन्नवकमपि व्याख्येयम् ॥ ६ ॥

ननु किं प्रज्ञया यावता वागादिभिरेव स्वः स्वोऽर्थोऽवगम्यत इत्याशङ्क्य वागादीनां प्रज्ञया रहितानां सत्यपि स्वार्थसंबन्धे न तदवगमहेतुत्वमिति सर्वजनीनानुभवेनाऽऽह—

**न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेत् ।**

**न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेत् ।** हि यस्मात्प्रज्ञारहितं वागिन्द्रियं किमपि वक्तव्यं स्वं परं नावगमयेत् । प्रज्ञारहिता वाक्स्वव्यापारं न कुरुते कुर्वत्यप्यविवक्षितार्थमसंबद्धार्थं वा कुर्यादित्यर्थः ।

ननु प्रज्ञारहिता वाङ्न प्रज्ञापयेदित्यस्मिन्नर्थे किं प्रमाणमित्याशङ्क्य सर्वजनीनमनुभवमभिनयेन प्रमाणयति—

**अन्यत्र मे मनोऽभूदित्याह ।**

**अन्यत्र** विषयान्तरे **मे** ममेन्द्रियस्वामिनो **मनो**ऽन्तःकरणधीवृत्तिजनकं प्रज्ञासाक्ष्यभूदभवदित्याहैवं ब्रूते ।

मनसोऽन्यत्रावस्थाने किं स्यादित्यत आह—

**नाहमेतन्नाम प्राज्ञासिषमिति ।**

**नाहमेतन्नाम प्राज्ञासिषमिति ।** अहमिन्द्रियस्वामी । एतत्त्वया कथ्यमानं नाम वक्तव्यमस्येन्द्रियस्य विषय इत्यर्थः । न प्राज्ञासिषं न प्रकर्षेण ज्ञातवान् । उक्तमपि विशदमस्पष्टवर्णं विक्षिप्तार्थं तद्विपरीतं वेत्यनेन प्रकारेणाऽऽहेत्यनुषङ्गः । अयमर्थः । परज्ञानाज्ञानयोरप्रत्यक्षत्वेऽपि परस्य तद्वचनेन लिङ्गेनानुमातुं शक्येते । तथाच प्रज्ञारहितमुक्तमिन्द्रियं न स्वव्यापारकरमिति ।

यथा वाक्तथा प्राणचक्षुःश्रोत्रजिह्वाहस्तशरीरोपस्थपादप्रज्ञा इति पर्यायनवकेनाऽऽह—

**न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदि-**

---

१ ख. ग. प्रज्ञया । २ ख. मनः । ३ ख. °ह्य मनसा सर्वाणि ध्यातान्याप्नो° ।

त्याह नाहमेतं गन्धं प्राज्ञासिषमिति न हि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषमिति न प्रज्ञापेतं श्रोत्रं शब्दं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञासिषमिति न हि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्राज्ञासिषमिति न प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति न हि प्रज्ञापेतं शरीरं सुखं दुःखं किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतत्सुखं दुःखं प्राज्ञासिषमिति न हि प्रज्ञापेत उपस्थ आनन्दं रतिं प्रजातिं कांचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतामित्यां प्राज्ञासिषमिति ।

**न हि प्रज्ञापेतः० प्राज्ञासिषमिति** । वाक्पर्यायवत्पर्यायाष्टकं व्याख्येयम् ।

विज्ञातव्यकामयोर्बुद्धिमन्तरेणानुपलम्भस्य सर्वजनीनत्वाद्धियमेवोररीकृत्याऽऽह—

न हि प्रज्ञापेता धीः काचन सिध्येत् ।

**न हि प्रज्ञापेता धीः काचन सिध्येत्** । काऽपि विज्ञातव्यकामादिभेदभिन्ना धीरन्तःकरणवृत्तिः प्रज्ञापेताऽसाक्षिका न सिध्येन्न प्रजायेत नावगम्यत इत्यर्थः ।

ननु मिथोपेक्षावतामिन्द्रियतद्विषयमानप्रज्ञानां तुल्यत्वात्कथं प्राणोपाधिका प्रज्ञैवोपास्येति नियमोऽस्तीत्याशङ्क्य प्रज्ञायामेवान्येषां कल्पितत्वमाह—

न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

**न प्रज्ञातव्यं प्रज्ञायेत** प्रज्ञातव्यं धियो विषयो न प्रज्ञायेत न च गम्यते योग्यानुपलब्ध्या बुद्धेरभाव इत्यर्थः ॥ ७ ॥

इन्द्रियैः सह प्रज्ञाया अभेदश्चेत्तर्हि तं मामायुरमृतमित्युपास्स्वेत्यत्र वाचनिक्या रीत्या वागेवोपास्या स्यादित्याह—

न वाचं विजिज्ञासीत ।

**न वाचं विजिज्ञासीत** वागिन्द्रियमुपास्स्वेत्येवं न विजिज्ञासीत न विचारयेन्नावगच्छेदित्यर्थः ।

तर्हि किमवगम्यमित्यत आह—

वक्तारं विद्यात् ।

**वक्तारं** वागिन्द्रियप्रेरकमानन्दात्मानं सर्वकरणवृत्तिसाक्षिणमित्यर्थः । **विद्यात्प्रा-**

णोऽस्मि प्रज्ञात्मा वक्ताऽऽयुरमृतमित्यवगच्छेत् । अथ वा प्राणोऽस्मि प्रज्ञात्मा वक्तेत्येवावगच्छेत् । अत्रैवाऽऽयुरमृतत्वयोरन्तर्भावादत एव प्राणप्रज्ञे सर्वप्राणो मुख्य इति प्राणे तावपीत्यङ्गीकृत्य सह ह्येतावित्याद्युक्तम् । अथवा वागादिभ्यः प्राणो मुख्य इति प्राणे ब्रह्मामृतत्वोपासनं समर्पितम् । अधुना वक्तर्यात्मनि प्राणस्यापि प्राणे ब्रह्मामृतत्वबुद्धिरुपदिश्यत इति रहस्यम् । पूर्वं न वाचं विजिज्ञासीतेति करणनिषेधः कृतोऽन्ते च न मनो विजिज्ञासीतेति तस्यैव निषेधं करिष्यति तेनाऽऽद्यन्ताभ्यामिन्द्रियनिषेधः सर्वेन्द्रियोपलक्षणार्थं(र्थः,) मध्ये पर्यायाष्टकेन विषयं निषिध्यति पूर्वोत्तरयोः करणस्येवेतरविषयनिषेधोपलक्षणार्थम् । न चात्रानेकश इन्द्रियप्राये शरीरस्य पाठाच्छरीरमपीन्द्रियमिति मन्तव्यम् । करणस्येव विषयोपलब्धेर्विवक्षितत्वात्तस्य च भोगायतनेऽपि शरीरे यथाकथंचित्संपादयितुं सुशकत्वात् । अथैवमपि प्रायपाठस्याऽऽग्रहस्तर्हि शरीरशब्देन त्वगिन्द्रियमस्तु । न चैवं सुखदुःखयोर्विषयत्वं विरुध्यते ताभ्यामुपलक्षितस्य तज्जनकस्य स्पर्शस्यैव कल्पयितुं शक्यत्वात् । एवं च शरीरेऽपि प्रायपाठो न बाधितो भवेत् ।

पर्यायाष्टकेन विषयं निषिध्य तत्तद्विषयिण एवाऽऽत्मनो वेद्यत्वमाह—

**न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविदं विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यान्नाऽऽनन्दं न रतिं न प्रजातिं विजिज्ञासीताऽऽनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यात् ।**

**न गन्धं०** विजिज्ञासीतैतारं विद्यात् । रूपविदं रूपविदम् । एतारं गन्तारम् । स्पष्टमन्यत् ।

आदाविन्द्रियं निषिध्येन्द्रियस्वामिनो यथा ज्ञातव्यत्वमुक्तं तथाऽन्तेऽप्याह—

**न मनो विजिज्ञासीत मन्तारं विद्यात् ।**

**न मनो** विजिज्ञासीत मन्तारं विद्यात् । वाक्पर्यायवद्व्याख्येयम् ।

एवं सर्वेन्द्रियविषयसाक्षिणो ज्ञानमभिधाय प्रसङ्गात्सर्वानर्थमूलं संसारचक्रमिन्द्रियविषयाभ्यामितरेतरसापेक्षाभ्यां प्रवर्ततेऽन्यतराभावे च न प्रवर्तत इत्यभिप्रायवानाह—

**ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः ।**

**ताः** प्रकृताः संसारचक्रस्य मूलभूताः । **वै** प्रसिद्धाः । **एताः** प्रत्यक्षा अनुमेयाश्च ।

१ क. रूपविदं । ख. द्रष्टारं ।

**दशैव** दशसंख्याका एव न त्वधिकाः । शरीरस्य सुखदुःखयोः स्पर्शस्य चावान्तरभावेन मनसश्च सर्वेन्द्रियेषु मन्तृत्वेन च **भूतमात्रा** वक्तव्याद्या विषयाः । **अधिप्रज्ञं** प्रज्ञानीन्द्रियाण्यधिकृत्य वर्तन्त इत्यधिप्रज्ञम् । **दश** दशसंख्याकाः **प्रज्ञामात्रा** वागादीनीन्द्रियाणि । **अधिभूतम्** । स्पष्टम् । यद्यादि हि प्रसिद्धा **भूतमात्रा** नामादिरूपा **न स्युर्न** भवेयुस्तर्हि **न प्रज्ञामात्राः स्युर्न** निर्विषयमिन्द्रियं भवति **यद्वा** पक्षान्तरे **प्रज्ञामात्रा** उक्तानीन्द्रियाणि **न स्युर्न** भवेयुः । **न भूतमात्रा** उक्ता भूतमात्राः **स्युर्न** भवेयुः ।

तत्र हेतुमाह—

**न ह्यन्यतरतो रूपं किंचन सिध्येत् ।**

**अन्यतरत** एकस्मात्प्रज्ञामात्राभूतमात्रयोर्मध्ये । **हि** यस्मात् । **किंचन** किमपि **रूपं** विषय इन्द्रियं **न सिध्येत्** । अयमर्थः । न हि विषयो विषयेणेन्द्रियं वेन्द्रियेणावगम्यते किंत्विन्द्रियेण विषयो विषयेणेन्द्रियमिति ।

ननु यदि विषयेन्द्रियमितरेतरसापेक्षं तर्ह्यस्य परस्परं विभिन्नत्वात्प्रज्ञाया अपि तन्निमित्तं विभेदः स्यात्तथा च यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्तीति प्रतिज्ञा व्याहता स्यादित्यत आह—

**नो एतन्नाना ।**

**नो एतन्नाना,** एतत्प्रज्ञामात्राभूतमात्रारूपं नाना भेदवन्नो ।

नानात्वाभावं प्रतिज्ञाय तत्र दृष्टान्तमाह—

**तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता**
**एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः**
**प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः ।**

तत्तत्र । **यथा** दृष्टान्ते । **रथस्य** रथचक्रस्या**रेषु** नाभिप्रतिष्ठितेषु तीक्ष्णाग्रेषु काष्ठेषु **नेमि**ररेभ्यो बहिर्देशवर्ति वर्तुलं काष्ठम् । **अर्पितो**ऽरेषु वर्तत इत्यर्थः । **नाभा**वन्तःकाष्ठेऽक्षाधारच्छिद्रवति वर्तुले । **अरा** दीर्घाणि तीक्ष्णानि काष्ठानि । **अर्पिताः** प्रतिष्ठिताः । **एवमेव** तद्वदेव न त्वन्यथा । **एता** उपलभ्यमाना **भूतमात्रा** विषया नेमिस्थानीयाः । **प्रज्ञामात्रासु** इन्द्रियेष्वरस्थानीयेषु । **अर्पिताः** प्रतिष्ठिताः । **प्रज्ञामात्रा** इन्द्रियाण्यरभूतानि **प्राणे** मुखनासिकासंचारिणि नाभिस्थानीयेऽ**र्पिताः** प्रतिष्ठिताः । **स** प्राणोपाधिक **एष प्राण एव प्रज्ञात्मा** धीवृत्तौ प्रतिफलितः प्राज्ञ उपाधिविरहे प्रज्ञया नित्यया स्वयंप्रकाशयाऽवियुक्त आत्मा व्यापको व्यवहारावस्थायामस्मत्प्रत्ययव्यवहारयोग्यः ।

---

१ ख. °त्माऽनन्तोऽज° ।

**आनन्दः** सुखैकस्वभावः । **अजरो** जरारहितः । **अमृतो** मरणरहितः स्वयंप्रकाशविज्ञानानन्दात्मस्वरूपः सर्वविक्रियाशून्य इत्यर्थः ।

नन्वेवंरूपस्यापि साध्वसाधुकर्मभ्यामाधिक्यन्यूनते स्यातां समुद्रस्येवोदयास्तमयाभ्यामित्यत आह—

**न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् ।**

**न साधुना कर्मणा भूयान्** । साधुना शास्त्रविहितेन कर्मणा पुण्यरूपेण न भूयानाधिको भवतीति शेषः । **नो एव** नैव । **असाधुना** शास्त्रप्रतिषिद्धेन कर्मणा । **कनीयान्**कनिष्ठो न्यून इत्यर्थः । भवतीति शेषः । अयमर्थः । विक्रियावतो ह्यतिशयो दृष्टः समुद्रादेर्न तु विपरीतस्य गगनेऽदर्शनादिति ।

साध्वसाधुकर्मणी आत्मानं न स्पृशत इत्यस्मिन्नर्थे हेतुमाह—

**एष ह्येवैनं[1] साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवैनमसाधु[2] कर्म कारयति तं यमधो निनीषते ।**

**एष ह्येव** हि यस्मादेष एव प्राणप्रज्ञोपाधिक एव न त्वन्यः । **एनं** शरीराद्यात्मत्वा(द्य)भिमानिनम् । **साधु कर्म** शास्त्रविहितं कर्म धर्मरूपम् । **कारयत्**ययस्कान्तवच्छरीर आविष्टः स्वयं निर्व्यापारस्तच्छरीराभिमानिनं विविधान्व्यापारान्कारयति । **तमेनं** प्रकृतं वक्ष्यमाणं यं प्रसिद्धं स्वर्गार्थिनम् । **एभ्यः** प्रत्यक्षेभ्यो लोकेभ्यः । **उन्निनीषत** ऊर्ध्वं नेतुमिच्छतीत्यर्थः । **एष उ एव** यथोक्त एव न त्वन्यः । **एनं** शरीराद्यभिमानिनम् । **असाधु** शास्त्रनिषिद्धं कर्म पातकं **कारयत्**यनिच्छन्तमप्यनुष्ठापयति । **तं** प्रियसुखमप्यनर्थार्थिनं यं प्रसिद्धं पातकिनमेभ्यः प्रत्यक्षेभ्यो लोकेभ्यो मनुष्यादिनिवासेभ्यः । **अधो निनीषते**ऽधो नेतुमिच्छतीत्यर्थः ।

साध्वसाधुकर्मकारयितृत्वं स्वर्गनरकनयनार्थमित्युक्तं तदप्यस्य शरीरोपाधिरहितस्य चिन्मात्रस्य नियन्तृत्वशक्तिमात्रोपहितस्यान्तर्यामिणः प्रक्रान्तत्वादुपपन्नमित्याह—

**एष लोकपालः ।**

**एष** स्वर्गनरकयोर्नेता । **लोकपालो** लोकानां साधूनां सुखेनासाधूनां दुःखेन च पालको रक्षको लोकपालः ।

तथा च लोकपालत्वं मन्व्यादिवत्स्यादित्यत आह—

**एष लोकाधिपतिः ।**

**एष** उक्तो लोकपालः । **लोकाधिपति**र्लोकानां रक्षकः । पित्रादिवदधिष्ठाय पालयतीति लोकाधिपतिः ।

---

१ ख. ग. ह्येव सा° । २ ख ग. एवासा° ।

तथाऽपि संकुचितमैश्वर्यमस्य स्याद्राजादिवदित्यत आह—

**एष सर्वेशः स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ८ ॥**

**इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषदि**

**तृतीयोऽध्यायः ॥ ३ ॥**

**कौषीतकिब्राह्मणारण्यकक्रमेण–अष्टमोऽध्यायः ॥ ८ ॥**

**एष** उक्तो लोकाधिपतिः । **सर्वेशः** सर्वस्य निखिलस्य भूतभौतिकस्येशो नियन्ता सर्वेशः । **स** उक्तः सर्वेशत्वादिगुणः । **मे** ममेन्द्रस्य वक्तुः । **आत्मा,** अस्मत्प्रत्ययव्यवहारयोग्यो मामेव विजानीहीति मयोक्त आत्मा स्वरूपम् । **इति विद्या**देवं जानीयात् । **स म आत्मेति विद्यात्** । व्याख्यातम् । वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः
कृतौ, ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषद्दीपिकायां
तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

पूर्वाध्याये पूर्वं प्रायेण प्राणोपाधिक आत्मोक्तस्तत्र च भवति कस्यचिद्विभ्रमः प्राण एव चैतन्यविशिष्ट आनन्दादिगुणक आत्मेति तद्भ्रमनिवारणार्थं प्राणात्सुषुप्तावस्थादपगतबाह्यचैतन्यात्परं चेतनमानन्दादिरूपमात्मानं विवक्षुः पूर्वोत्तरपक्षाभ्यां ब्रह्मविद्याया अमानित्वादिगुणानन्तरेणातिदुर्लभत्वं दर्शयितुमाख्यायिकामाह—

**अथ[1] गार्ग्यो ह वै बालाकिरनूचानः संस्पृष्ट आस सोऽवसदुशीनरेषु स वसन्मत्स्येषु कुरुप[2]ञ्चालेषु का[3]शिविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच[4] ।**

अथेत्यधिकारार्थः । **गार्ग्यो** गर्गगोत्रीय एतन्नामा । **ह वै** किल प्रसिद्धो दृप्तत्वेन श्रुत्यन्तरे । **बालाकि**र्बालाकस्यापत्यम् । **अनूचान** आचार्यं वदन्तमनु स्वयमप्युच्चारयतीत्यनूचानोऽधीतवेद इत्यर्थः । **संस्पृष्टः** सम्यक्स्पृष्टः सर्वत्र प्रथितकीर्तिरित्यर्थः । **आस** बभूव । **स** प्रकृतो गार्ग्यः । **अवस**न्निवासमकरोत् । **उशीनरेषू**शीनरसंज्ञकेषु देशेषु । **स वसन्**संचरन्स्वकीर्तिकामः सर्वत्र पर्यटन्नित्यर्थः । **मत्स्येषु** मत्स्यसंज्ञकेषु । अवसदित्येतद्वक्ष्यमाणवाक्यद्वये चानुवर्तते । **कुरुपञ्चालेषु**

---

१ ख. °थ ह गार्ग्यो वै । २ क. °रुपाञ्चा° । ३ क. काशीवि° । ४ ग. °श्यमाव्रज्योवा° ।

कुरुसंज्ञकेषु देशेषु पञ्चालसंज्ञकेषु। **काशिविदेहेषु** काश्युपलक्षितेषु विदेहसंज्ञकेषु। इत्येवंप्रकारेष्वन्येष्वपि त्रैवर्णिकनिवासदेशेष्ववसदित्यर्थः । **स** नानादेशनिवासी प्रथितकीर्तिर्गर्वाढ्यो गार्ग्यः । **ह** किल। **अजातशत्रुं** न विद्यते जात उत्पन्नो यदपेक्षया शत्रुः शात्रवः स्वस्य स्वेन वा सर्वत्र समबुद्धेः सोऽयं सार्थकनामधार्यजातशत्रुस्तम्। **काश्यं** काशिदेशाधिपतिम्। **एत्य** कदाचित्सभागतं प्राप्य। **उवाचोक्तवान्**।

गार्ग्योक्तिमाह—

**ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः।**

**ब्रह्मानु**पचरितब्रह्मशब्दाभिधेयं **ते** तुभ्यमजातशत्रवे। **ब्रवाणि** यदि भवतोऽपेक्षा तदा वदानीत्यनेन प्रकारेणोवाचेत्यन्वयः। **त**मेवं वदन्तं गार्ग्यं **ह** किल। **उवाचो**क्तवा**नजातशत्रु**रजातशत्रुनामा राजा।

अजातशत्रूक्तिमाह—

**सहस्रं दद्मस्त इत्येतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥**

**[*आदित्ये बृहच्चन्द्रमस्यन्नं विद्युति सत्यं स्तनयित्नौ शब्दो वायाविन्द्रो वैकुण्ठ आकाशे पूर्णमग्नौ विषासहिरित्यप्सु तेज इत्यधिदैवतमथाध्यात्ममादर्शे प्रतिरूपश्छायायां द्वितीयः प्रतिश्रुत्कायामसुरिति शब्दे मृत्युः स्वप्ने यमः शरीरे प्रजापतिर्दक्षिणेऽक्षिणि वाचः सव्येऽक्षिणि सत्यस्य] ॥ २ ॥**

**सहस्रं** गवां सहस्रम्। **दद्मो** वयं राजानोऽल्पेऽपि कार्ये प्रभूतं प्रयच्छामः किमुत त्वादृशानामित्यर्थः। **ते** तुभ्यं ब्राह्मणाय ब्रह्मविदे दानपात्राय। नेयं ब्रह्मविद्याया दक्षिणा किं त्वित्ये**तस्या**मिदानीमुक्तायां **वाचि** ब्रह्म ते ब्रवाणीत्येवंरूपवाङ्मात्रनिमित्तम्। **जनक** एतन्नामा मिथिलेश्वरो ब्रह्मविद्यायाः ससाधनाया दाता **जनकः** स एव ब्रह्मविद्यायाः प्रतिग्रहीता। **इति**त्यनेन प्रकारेण तं ज्ञात्वाऽत्यर्थं **वै** प्रसिद्धः। **उ** अपि। **जना**स्त्रैवर्णिका **धावन्ति** गच्छन्ति। अयमर्थः। ब्रह्मविद्याया यो दाता वक्ताऽपि चेत्येवं वदन्तो जना मिथिलेश्वरमेत्य गच्छन्ति। अपि मां तादृशं ततोऽप्यधिकं वा न जानन्तीत्यनेन प्रकारेणोवाचेत्यन्वयः ॥ १ ॥ २ ॥

**स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः।**

**स उक्तः। ह** किलोवाचोक्तवान्। **बालाकि**र्बालाकस्यापत्यम्। **य एव**

* एतत्खण्डं क. ग. पुस्तकयोर्नोपलभ्यते टीकायां चास्य व्याख्याऽपि नोपलभ्यते।

१ क. °ग्न एन°।

प्रसिद्ध एव न त्वन्यः । **एष** मादृशस्य प्रत्यक्षः । **आदित्ये,** आदित्यमण्डले । **पुरुषः** पुरुषाकारश्चेतनः । **तमेवो**क्तस्थानस्थमेव न त्वन्यम् । **अहं** गार्ग्यो ब्रह्मवित् । **उपासे** विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण ब्रह्मेति साक्षात्कुर्वे । इत्यनेन प्रकारेणो-वाचेत्यन्वयः । **तमे**वं ब्रुवाणं गार्ग्यं ह किलोवाचोक्तवान् । **अजातशत्रु**रेतन्नामा हस्त-संज्ञया निवारयन् । **मा मा,** आबाधायां द्विर्वचनम् । **एतस्मिन्नु**क्तपुरुषे । उक्त-पुरुषोपदेशनिमित्तमित्यर्थः । आवयोर्ज्ञाने समाने सति **संवादयिष्ठाः,** त्वं गुरुरहं शिष्य इति गुरुशिष्योक्तिरूपं संवादं मा कारय । एतस्मिन्कार्यमाणे वयं बाधिताः स्यामः ।

ननु यद्यपि त्वं जानीष एनं पुरुषं तथाऽपि तद्गुणोपासनां फलं च न जानीष इत्यत आह—

**बृहन्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेत-मुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ ३ ॥**

**बृहन्न**भ्यधिकः **पाण्डरवासाः**[1] शुक्लगुणोज्ज्वलवस्त्रश्चन्द्रमसः सूर्यसुषुम्नानाडीरूप-त्वात् । एतौ शास्त्रान्तरोक्तौ गुणौ सूर्येऽप्यविरुद्धौ । **अतिष्ठाः,** सर्वाणि भूतान्यतीत्य तिष्ठतीत्यतिष्ठाः । **सर्वेषां भूतानां** निखिलानां स्थिरजङ्गमानां **मूर्धा** मस्तकम् । **इत्य-**नेन प्रकारेण । **वै** प्रसिद्धः सर्वेषां ब्रह्मविदां निरभिमानिनाम् । अहमजातशत्रुः । **एतं** त्वयोक्तं पुरुषमुपास उपासनया साक्षात्कुर्वे । इतिरुक्तपुरुषगुणपरिसमाप्त्यर्थः । **स यो हैतमेवमुपास्ते** । यः प्रसिद्ध उपासकः । ह किल । एतमुक्तगुणकं पुरुषम् । एवमुपास्ते उक्तगुणोपासनया साक्षात्कुरुते । सः, **अतिष्ठाः सर्वेषां भूतानां मूर्धा** । व्याख्या-तम् । **भवति** यद्गुणं ब्रह्मोपास्ते स्वयमपि तद्गुणो भवति । उपासनस्थानमेतन्न तु शुद्धं निरुपाधि ब्रह्मेत्युक्तं भवति ॥ ३ ॥

**स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सोमो राजाऽन्न-स्याऽऽत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्न-स्याऽऽत्मा भवति ॥ ४ ॥**

**चन्द्रमसि** चन्द्रमण्डले । **सोमो राजा** प्रियदर्शनो दीप्तिमान् । **अन्नस्याऽऽत्मा** । चतुर्विधस्यादनीयस्याऽऽत्मा कारणं स्वरूपं वा । फले तु तद्वान्भवतीति व्याख्येयम् ॥ ४ ॥

**स होवाच बालाकिर्य एवैष विद्युति पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठास्तेजस आत्मेति वा अह-मेतमुपास इति स यो हैतमेवमुपास्ते तेजस आत्मा भवति ॥ ५ ॥**

१ ख. यिष्ठा अन्न° । २ ख. °यिष्ठः सत्यस्याऽऽत्मे° । ३ ख. °स्ते सत्यस्याऽऽत्मा ।

विद्युति सौदामनीमण्डले । तेजस आत्मा तेजस्वीत्याद्यभिमानः ॥ ९ ॥

**स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः शब्दस्याऽऽत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्याऽऽत्मा भवति ॥ ६ ॥**

**स्तनयित्नौ** मेघमण्डले **शब्दस्याऽऽत्मा** ध्वनिवर्णभेदभिन्नस्य कारणं स्वरूपं वा॥६॥

*** सहोवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिः।**

**आकाशे** गगनेऽव्याकृते वा । **पूर्णमप्रवर्ति** क्रियाशून्यं **ब्रह्म** बृहत्सर्वस्मादप्यधिकं **पूर्यते प्रजया पशुभिः** पूर्णगुणोपासनफलं पुत्रगवादिपरिपूर्तिः ।

अप्रवर्तिगुणोपासनफलमाह—

**नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ७ ॥**

**नो एव स्वयं॰ प्रवर्तते** । शतसंवत्सरकालात्पूर्वं स्वयमुपासको नो एव प्रवर्तते प्रमीयते । अस्योपासकस्य प्रजा तनयादिका । पुरा कालान्न प्रवर्तत इत्यनुवर्तते ॥ ७ ॥

**स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते ।**

**वायौ** पवने । **इन्द्रः** परमैश्वर्यसंपन्नः । **वैकुण्ठो** विगता कुण्ठा परेण निवारणा यस्मात्स विकुण्ठः । विकुण्ठ एव वैकुण्ठः । **अपराजिता सेना** न परैः पराजिताऽपराजिता सेना ।

इन्द्रगुणफलमाह—

**जिष्णुर्ह वा ।**

**जिष्णुर्ह वा** जयनशीलः । ह प्रसिद्धौ । वाशब्द एवकारार्थः ।

वैकुण्ठगुणफलमाह—

**अपराजयिष्णुः ।**

**अपराजयिष्णुः** परैर्जेतुमशक्यशीलः ।

---

* एतस्यानन्तरखण्डस्य च व्यत्यासेन पाठः ख पुस्तके ।

---

१ °शुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ८ ॥ स ।

अपराजितसेनागुणफलमाह—

अन्यतस्त्यजायी भवति ॥ ८ ॥

**अन्यतस्त्यजायी,** अन्यतस्त्योऽन्यतो भवो वैरी तज्जयलक्षणं शीलमस्येत्यन्यतस्त्यजायी ॥ ८ ॥

**स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्[1]हैवान्वेष भवति ॥ ९ ॥**

**अग्नौ** जातवेदसि । **विषासहि**र्विविधसहनशीलो दुःसहो वाऽन्यैः । **हैवान्वेष भवति** । ह प्रसिद्धम् । एष एव न त्वन्यः । अनूपासनादेष उपासको भवति ॥ ९ ॥

**स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा[2] नाम्न आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते[3] नाम्न आत्मा भवतीत्यधिदैवतमथाध्यात्मम् ॥ १० ॥**

**अप्सु** जलेषु । **नाम्नः** स्वात्मनाम्नः । **आत्मा** स्वरूपं कारणं वा भवति । न च शाखान्तरप्रातिरूपगुणेन विरोधः । अस्ति हि सादृश्यं नाम्नो वस्तुना । तथा हि । घट इति वस्तु घट इति नामेति वाऽत्यन्तसादृश्योपलम्भात् । इत्यधिदैवतमनेन प्रकारेण दैवतमाधिकृत्योक्तमधिदैवतम् । अथाधिदैवतोपासनानन्तरम् । अध्यात्ममात्मानं शरीरमधिकृत्योच्यमानमुपासनमध्यात्मम् ॥ १० ॥

**स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ ११ ॥**

**आदर्शे** दर्पणे भास्वरे द्रव्य इत्यर्थः । **प्रतिरूपः** सदृशो रोचिष्णुरित्यर्थः । **प्रतिरूपो हैवास्य,** उपासकस्य सदृशः प्रसिद्ध एव प्रजायाम् । **प्रजायां** संताननिमित्तम् । **आजायते** पुत्रः स्पष्ट उपपद्यते । **नाप्रतिरूपो** न विलक्षणः ॥ ११ ॥

**स होवाच बालाकिर्य एवैषं[4] प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते ।**

---

१ ख. 'हिर्हैं वा अन्येषु भ° । २ ख. ग. °ष्ठास्तेजस आ° । ३ ख. ग. °स्ते तेजस ."° । ४ ख. °ष च्छायाय' पु° ।

प्रतिश्रुत्कायां श्रवणं श्रवणं प्रत्यधितिष्ठतीति प्रतिश्रुत्का । द्वितीयो द्विसंख्यापूरणः । अनपगो गमनशून्यः ।

द्वितीयगुणस्य फलमाह—

**विन्दते द्वितीयात् ।**

विन्दते लभते । द्वितीयाद्भार्याशरीराद्द्वितीयमिति शेषः ।

अनपगगुणस्य फलमाह—

**द्वितीयवान्भवति ॥ १२ ॥**

द्वितीयवान्भवति । अनपगतपुत्रपौत्रादिर्भवतीत्यर्थः ।

**स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्संमोहमेति ॥ १३ ॥**

शब्दः पुरुषमन्वेति । गच्छन्तं पुरुषं योऽयं ध्वन्यात्मकः शब्दः पश्चाद्गच्छति । असुर्जीवनहेतुरित्यर्थः । नो एवेत्याद्याकाशपर्याये व्याख्यातम् । संमोहमेति । निधनं गच्छति ॥ १३ ॥

**स होवाच बालाकिर्य एवैष च्छायापुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥ १४ ॥**

छायापुरुषश्छायारूपः । मृत्युर्मरणहेतुः । नो एवेत्यादिकमाकाशपर्याये व्याख्यातम् । प्रमीयते निधनं गच्छति ॥ १४ ॥

**स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १५ ॥**

शरीरे भवः शारीरः। प्रजापतिः प्रजायाः पालकः । प्रजायते प्रजया पशुभिः । प्रजापशुवृद्धिर्भवति ॥ १५ ॥

**स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत्पुरुषः सुप्तः स्वप्नयया चरति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैत-**

---

१ ख. °ष प्रतिश्रुत्कायां पुरुषस्तमे° । २ क °ष्ठा आयुरि° । ३ ख. °स्ते न पु° । ४ ख. °ष शब्दे पु° । ५ क. °यायां पु° । ६ ख. °स्ते न पु° । ७ ख. पुरा कालात्प्रैतीति । स । ८ ख. °किर्येनैष° ।

स्मिन्संवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १६ ॥

सुषुप्तः प्राज्ञः प्रज्ञया नित्ययुक्तः प्राणोपाधिकः । आत्माऽऽत्मशब्दप्रत्ययालम्बनम् । येन प्राज्ञेनाऽऽत्मना सहैकतायै । एतत्सुप्तम् एतत्स्वप्नदर्शनरूपं शयनं प्राप्तः स्वप्न्यया चराति स्वप्नेन गच्छति स्वप्नाननुभवति । सर्वं निखिलं ह प्रसिद्धम् । अस्मा अस्योपासकस्य । इदं प्रत्यक्षादिप्रमाणैरुपलभ्यमानम् । श्रैष्ठ्यायाधिकत्वाय । यम्यते नियमेन प्रवर्तत इत्यर्थः ॥ १६ ॥

स होवाच बालाकिर्य एवैष दक्षिणेऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा नाम्न आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १७ ॥

दक्षिणेऽक्षन्दक्षिणेऽक्षाणि दक्षिणे चक्षुषि । नाम्न आत्मा वर्णात्मकशब्दस्य कारणं स्वरूपम् । ज्योतिष आत्मा प्रकाशमात्रस्य स्वरूपम् । एतेषां नामाग्निज्योतिषां सर्वेषां निखिलानामात्मा भवति स्वरूपं भवति ॥ १७ ॥

स होवाच बालाकिर्य एवैष सव्येऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सत्यस्याऽऽत्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवतीति ॥ १८ ॥

सव्येऽक्षन्सव्येऽक्षाणि वामे चक्षुषि । सत्यस्य प्राणरूपस्याऽऽत्मा स्वरूपम् । विद्युत आत्मा सौदामन्याः स्वरूपं तेजस आत्मा ज्योतिर्मात्रस्य स्वरूपम् । एतेषां सत्यविद्युत्तेजसां सर्वेषामात्मा भवति सर्वेषां स्वरूपं भवति । शेषं पर्यायपञ्चदशकेऽपि प्रथमपर्यायवद्व्याख्येयम् । इतिः पुरुषोपदेशपरिसमाप्त्यर्थः ॥ १८ ॥

तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुः ।

ततः सव्ये चक्षुषि पुरुषस्य निराकरणानन्तरम् । उ एव तदनन्तरमेव । ह किल । बालाकिर्बालाकस्यापत्यं तूष्णीमास मौनी बभूव । तं तूष्णींभूतं बालाकिम् । होवाचाजातशत्रुः । व्याख्यातम् ।

---

१ ग. °ष शरीरे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । स होवाच बालाकिर्य एवैष दक्षिणेऽक्षिणि पुरु° । २ ख. वाच । ३ ख. °व्येऽक्षिणि पु° ।

राजोक्तिमाह—

**एतावन्नु बालाका३इ इत्येतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै किल मा संवादयिष्ठा ब्रह्म ते ब्रवाणीति ।**

**एतावदि**यत्प्रमाणम् । **नु** वितर्के । उतान्यदपीत्यर्थः । **बालाका३इ** । हे बालाके । प्लुतिर्निर्भर्त्सनार्था । यद्यप्ययोग्यं ब्राह्मणस्य भर्त्सनं तथाऽपि गर्वपरिहारार्थं क्रियमाणं न विरुद्धम् । गर्वो ह्यस्य महान्तं पुरुषार्थं नाशयन्कण्टकः कण्टकोद्धरणं च राज्ञा करणीयमिति न्यायात् । इत्यनेन प्रकारेण राजोवाचेत्यन्वयः । एवं राज्ञोक्तेऽपगतगर्वः । **एतावद्धि,** इयदेवोक्तं नातोऽधिकमहं किंचिद्ब्रह्म वेद्मीति शेषः । **इति होवाच बालाकिः,** एवं किलोक्तवान्बालाकस्यापत्यम् । तमपगतगर्वं बालाकिम् । **होवाचाजातशत्रुः** । व्याख्यातम् । **मृषा वै किल मा** मामजातशत्रुम् । **मृषा वै** वितथमेव **किल** निश्चितम् । **समवादयिष्ठा ब्रह्म ते ब्रवाणीति** । व्याख्यातम् ।

**स होवाच ।**

एवमुक्त्वा पुनर्बालाकेरवाग्वदनस्य लज्जाजडस्यापगतगर्वस्यानुग्रहार्थं **सोऽजातशत्रुर्ह** किलो**वाचो**क्तवान्बालाकिं प्रति ।

राजोक्तिमाह—

**यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेवं तत्स्याद्यत्क्षत्रियो ब्राह्मणमुपनयेत् ।**

**य**स्त्वया प्रस्तावितो ब्रह्मत्वेन । **वै** प्रसिद्धः सत्यज्ञानादिलक्षणः । **बालाके** हे बालाके । **एतेषा**मादित्यादीनां **पुरुषाणां** त्वयोक्तानां पुरुषाणां **कर्तो**त्पादकः । **यस्य वा** यस्य प्रसिद्धस्य वेदान्तेषु । वाशब्दः पूर्वोक्तव्युदासार्थः । किमल्पाभिधानेनेत्यर्थः । **एत**द्भूतभौतिकरूपं विश्वम् । **कर्म** क्रियत इति **कर्म** । येनोत्पाद्यत इत्यर्थः । **स** त्वदुक्तपुरुषैः सह विश्वकर्ता । **वै** प्रसिद्धः सत्यज्ञानादिलक्षणः । **वेदितव्यः** साक्षात्करणीयः श्रवणाद्युपायैः । इत्यनेन प्रकारेण स होवाचेत्यन्वयः । **तत उ** तत एव राजोक्तेरनन्तरं **ह** किल **बालाकि**र्बालाकस्यापत्यं ब्रह्म जिज्ञासुः **समित्पाणिः** समित्करः **प्रतिचक्रमे** प्रतिचक्राम राजानं प्रति ब्रह्मोपदेशार्थं गृहीतोपायन आजगामेत्यर्थः । वाचा चैवं व्याहरन् । **उपायानी**ति यदि भवतोऽनुज्ञा तदा भवन्तं गुरुत्वेन समीप आगच्छामीत्यनेन प्रकारेण प्रतिचक्रामेत्यन्वयः । **तमपगतगर्वं ब्राह्मणं दीनतमा-**

१ ख. ग. °ब्रीति । २ ख. ग. °ब्रु । ३ क. संवदिष्ठा । ४ ग. °ति तं स । ५ क. °व स्याद्य° । ६ ख. तन्मन्ये यत्क्ष° । ७ ख. ग. °येतैहि ।

मवस्थां प्राप्तं ह किलोवाचाजातशत्रुरुक्तवान्राजा । प्रतिलोमरूपमेव विपरीतरूपमेव न त्वनुरूपं तत्स्याद्भवेत् । यत्क्षत्रियो न्यूनवर्णः क्षतत्राणकारी ब्राह्मणमुत्तमवर्णं द्विजोत्तममुपनयेद्ब्रह्मविद्यायै दीक्षयेत् ।

मा च ते भयं यदसौ राजा न वक्ष्यतीत्येवमाह—

**एहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयांचक्रे ।**

एह्यस्माज्जनसमाजादेकान्तमागच्छ । व्येव त्वा ज्ञपयिष्यामि त्वा त्वां गुरुं विज्ञपयिष्याम्येव यज्जानामि तत्तुभ्यं वदन्न वञ्चयिष्यामीत्यर्थः । इत्यनेन प्रकारेणोक्त्वाऽनन्तरं तं बालाकिं ब्रह्मविद्यार्थिनं ह किल पाणावभिपद्य करे सस्नेहं गृहीत्वा प्रवव्राज सभादेशाद्देशान्तरं जगाम । तौ राजबालाकी । ह किल सुप्तं पुरुषमाजग्मतुरनेककर्मश्रमाकुलं शयानं राजपुरुषं कंचिदीयतुः प्राप्तवन्तौ । तं सुप्तं पुरुषं ह किलाजातशत्रुरेतन्नामा राजाऽऽमन्त्रयांचक्रे वक्ष्यमाणैर्नामभिः संबोधयांचक्रे ।

संबोधननामान्याह—

**बृहन्पाण्डरवासः सोम राजन्निति ।**

बृहन्, हे सर्वस्मादप्यधिक प्राण । पाण्डरवासः पाण्डरा आपो वाससी यस्य ते प्राणस्य तस्य संबोधनं हे पाण्डरवासः प्राण । सोम हे सोमात्मक प्राण । राजन्हे दीप्तिमन्प्राण । इतिः संबोधनपरिसमाप्त्यर्थः ।

**स उ ह तूष्णीमेव शिश्ये ।**

स बृहन्नित्यादिना संबोधितः प्राणः । उ हापि प्रसिद्धो यो जागर्ति ततोऽन्यो जीवोऽवस्थान्तरात्मत्वेन तूष्णीमेव मौनेनैव शिश्ये शयनं चक्रे ।

**तत उ हैनं यष्ट्याऽऽविचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः ।**

तत उ तदनन्तरमेव । ह किल । एनं शयानं पुरुषम् । यष्ट्या वेत्रादितनुकाष्ठेनाऽऽविचिक्षेपाऽऽसमन्तात्ताडितवान् । स शयानः पुरुषः प्राणाद्व्यतिरिक्तो यष्टिपातसंजातवेदनस्तत एव तदानीमेव न तु कालान्तरे समुत्तस्थौ सम्यगुत्थानं कृतवान् । तं होवाचाजातशत्रुः । तं प्राणात्मवादिनं बालाकिम् । व्याख्यातमन्यत् ।

**क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् ।**

एवं प्राण आत्मा न भवति यो जाग्रदपि न बुद्धवान् । क्व कुत्र । एष प्राणाद्व्यतिरिक्तः शयानः । एतत्सर्वचैतन्यशून्यं यथा तथा । बालाके हे बालाके । पुरुषश्चेतनः प्राणादीनां स्वामी । अशयिष्ट शयनमकुरुत क्व कस्मिन्प्रदेश एतदुक्तं शयनमभूज्जातम् ।

उक्तः प्रश्नः पुरुषविषयेऽपरोऽवस्थाविषये । पुरुषशयनयोर्देशं पृष्ट्वा पुरुषस्याऽऽगमनदेशं पृच्छति—

**कुत एतदागा३दिति ।**

**कुतः** कस्माद्देशात् । एतज्जागरणं प्रत्येतदागमनं वा । **आगादागतवान्**प्लुतिर्विचारार्था । विचार्य कथयेत्यर्थः । इत्यनेन प्रकारेण प्रश्नमकरोदिति शेषः ।

**तत उ ह बालाकिर्न विजज्ञे तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागादिति ।**

**तत उ** अपि राज्ञा पृष्टं ह किल **बालाकि**र्बालाकस्यापत्यं **न विजज्ञे** न विज्ञातवान् । तमज्ञातस्वप्रश्नं बालाकिम् । **होवाच० एतदागादिति** । व्याख्यातम् ।

स्वयं तद्देशविशेषमाह राजा—

**हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वान्ति तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ति ।**

**हिता नाम** प्राणिनां हितकारणाद्धिता इत्यभिधानम् । **हृदयस्य** हृदयपुण्डरीकसंबन्धिन्यो त्द्धृदयपुण्डरीकान्निर्गता इत्यर्थः । **नाड्यः** शिराः । **हृदया**द्धृदयपुण्डरीकान्निर्गत्य **पुरीतत**मान्त्रं हृदयवेष्टन**मभिप्रतन्वन्ति** सर्वतः प्रकर्षेण विस्तारयन्ति वेष्टयन्तीत्यर्थः । **तद्यथा** यावत्परिमाणा इत्यर्थः । **सहस्रधा केशो विपाटितः** । वालः सहस्रप्रकारेण विविधं पाटितः केशस्य सहस्रांश इत्यर्थः । **ताव**त्तत्परिमाणा **अण्व्यः** सूक्ष्माः **पिङ्गलस्य** चित्रवर्णस्या**णिम्ना**ऽणुतमेन रसेनातिसूक्ष्मेणेत्यर्थः । **तिष्ठन्ति** पूर्णा वर्तन्ते ।

सामान्यतो वर्णमुक्त्वा विशेषेण वर्णानाह—

**शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति तासु तदा भवति ।**

**शुक्लस्य** श्वेतस्य । अणिम्नेति सर्वेषु वर्णेष्वनुवर्तते । **कृष्णस्य** कालस्य **पीतस्य** सुवर्णवर्णस्य **लोहितस्य** रक्तस्येत्येवंप्रकारस्य वर्णान्तरस्याप्याणिम्ना रसेन पूर्णास्तिष्ठन्ति । **तासु** त्द्धृदयवेष्टनपुरीतत्प्रतिष्ठितासु हृदयगमनमार्गभूतासु सामीप्येन **तदा भवति** तस्मिञ्शयनकाले वर्तते न स्वप्नोऽन्यनाडीषु वर्तमानस्य भवतीत्यर्थः ।

स्वप्नस्थानमभिधाय विस्तृतं सुषुप्तस्थानं सजागरणमाह—

**यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठे-**

१ ख. ग. पुरुषस्य । २ ख. °तस्य च ता° ।

**एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः[1] ॥ १९ ॥**

**यदा** यस्मिन्काले । **सुप्तः स्वप्नं न कंचन पश्यतीत्यादि** लोका इत्यन्तं व्याख्यातम् । अयमर्थः । नाडीद्वारा पुरीतद्वेष्टनेऽनेकनाडीकारणे हृदयपुण्डरीके स्थिताकाशान्तर्वर्तिक्रियाशक्त्युपाधावानन्दात्मनि सुषुप्तिं प्राप्य तत एव जागरणमागच्छति स उ-(सोऽ)पगताधाराधेयभेदो विज्ञानानन्दस्वरूपो ब्रह्मशब्दाभिधेयो न तु भवदभिमतः प्राणादिरधिदैवतमथाध्यात्मं चेति ॥ १९ ॥

कथमसौ ब्रह्मशब्दाभिधेय उपलब्धुं शक्यत इति बालाकेर्हृदयगतां शङ्कामपाकरिष्यन्दृष्टान्तपुरःसरमाह—

**तद्यथा क्षुरः क्षुरधाने[2]ऽवहितः स्यात् ।**

**तत्** तत्रोपलब्धौ दृष्टान्तः । **यथा** दृष्टान्ते । **क्षुरः** तीक्ष्णाग्रः प्रसिद्धः क्षौरकर्मणि । **क्षुरधाने** क्षुरो धीयते यस्मिन्पात्रे तत्क्षुरधानं तस्मि**न्नवहितः** प्रक्षिप्तः **स्या**द्भवेत् । अयं हृदयपुण्डरीके शरीरैकदेश उपलब्धौ दृष्टान्तः ।

इदानीं सर्वशरीरोपलब्ध्यर्थं दृष्टान्तमाह—

**विश्वंभरो वा विश्वंभरकुलाय एवमेवैष प्रज्ञ[3] आत्मेदं शरीरमात्मानमनुप्रविष्टः ।**

**विश्वंभरो वा** विश्वंभरोऽग्निः । वाशब्दो दृष्टान्तान्तरे । **विश्वंभरकुलाये**ऽग्निनीडेऽरण्यादौ । **एवमेवा**नेनैव प्रकारेण । **एष** ब्रह्म ते ब्रवाणीति यो भवता प्रकृतः । **प्रज्ञो** नित्यस्वयंप्रकाशप्रज्ञायुक्तः । **आत्मा**ऽस्मत्प्रत्ययव्यवहारयोग्यः । **इदं शरीर**मिदंशरीरे भवमेतच्छरीरस्थेन्द्रियमित्यर्थः । **आत्मान**मात्मशब्दप्रत्ययावलम्बनम् । **अनुप्रविष्टः** सृष्टमनु प्रवेशं कृतवान् ।

प्रवेशावधिमाह—

**आ लोमभ्य आ नखेभ्यः ।**

**आ लोमभ्य आ नखेभ्यः** । लोमनखपर्यन्तं नखाग्रशरीरबहिर्गतकेशान्मुक्त्वा समग्रे शरीर इत्यर्थः ।

स्वप्नसुषुप्तिजागरणेषु प्राणाद्व्यतिरिक्तमात्मानमभिधाय तस्य च सर्वस्मिञ्शरीरे हृदये च सामान्यविशेषाभ्यां व्याप्तिं चेदानीं तस्यैव स्वामित्वं विवक्षुर्दृष्टान्तपुरःसरमाह—

**तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति ।**

**तमा** लोमभ्य आ नखेभ्यः शरीरे सामान्यविशेषाभ्यां प्रविततम् । **एतं** बुद्धिसाक्षि-

---

१ ख. °काः । स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यस्तद्य° । २ ख. °नेवोपहितो विश्वं° । ३ ख. ग. प्रज्ञात्मे° ।

णम् । **आत्मानम**स्मत्प्रत्ययव्यवहारयोग्यं वस्तुत आनन्दात्मानम् । **एते**ऽपगताधिदैवभेदा अध्यात्मं प्रत्यक्षा इव । **आत्मानो** वागाद्याः । **अन्ववस्यन्ति**, आत्मनो निश्चयमनु पश्चान्निश्चयं कुर्वन्ति ।

तत्र दृष्टान्तमाह—

**यथा श्रेष्ठिनं स्वाः ।**

**यथा** दृष्टान्ते । **श्रेष्ठिनं** श्रेष्ठत्वं प्रधानत्वं स गुणो यस्यास्ति स तु श्रेष्ठी तं प्राधान्यवन्तं कुटुम्बिनमित्यर्थः । **स्वाः** स्वसंबन्धिनो ज्ञात्युपलक्षिता उपजीवकाः । अन्ववस्यन्तीत्यनुवर्तते ।

निश्चये प्राधान्यमुक्त्वा भोगेऽपि प्राधान्यं वक्तुं दृष्टान्तमाह—

**तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्माभिर्भुङ्क्ते ।**

तत्तत्र भोगप्राधान्ये । **यथा** दृष्टान्ते । **श्रेष्ठी** कुटुम्बी **स्वै**र्ज्ञात्यादिभिः सह **भुङ्क्ते**ऽन्नमत्ति । **यथा वा** यद्वद्वाशब्दः प्रकारान्तरेण दृष्टान्तार्थः । **श्रेष्ठिनं** प्रधानं कुटुम्बिनं **स्वा** ज्ञात्याद्या **भुञ्जन्त्य**दन्ति । **एवमेवा**नेन प्रकारेण न त्वन्यथा । **एष प्रज्ञात्मा** । व्याख्यातम् । ज्ञानक्रियाशक्त्युपाधिरित्यर्थः । **एतैः** प्रतिप्राणिव्यवस्थितैः । **आत्मभि**रात्मशब्दप्रत्ययालम्बनैर्वागादिभिः सह । **भुङ्क्ते**ऽत्ति । अथ वा दृष्टान्तदार्ष्टान्तिकयोस्तृतीया करणार्था । न हि निर्मनुष्यकुटुम्बिनो द्रव्यवतोऽपि भोगः संभवति परैर्द्रव्यापहारादेः संभवात् । एवमसङ्गोदासीनस्य चितिस्वभावस्याऽऽत्मनोऽपि विना करणादिकं न भोगः । यथा श्रेष्ठी स्वैर्व्याख्यातम् । उत्पन्ने कार्ये प्रधानकुटुम्बी येन प्रकारेण स्वैर्ज्ञातिभिः सह पर्यालोच्यान्ववस्यत्येवमेतैरात्मभिरयमात्मेति बहिरेवावगन्तव्यम् ।

तमेतमात्मानमित्यस्य प्रपञ्चार्थमाह—

**एवं वै तमात्मानमेत आत्मानो भुञ्जन्ति ।**

**एवं वा**, अनेनैव यथा श्रेष्ठिनं स्वा इति वक्ष्यमाणेन प्रकारेण । **एत**मिन्द्रियाणामधिष्ठातारमात्मानमेत **आत्मानो भुञ्जन्ति** । यथा श्रेष्ठिनं स्वा व्याख्यातम् । अत्राऽऽद्यन्तपर्याययोः सामान्यविशेषाभ्यां पुनरुक्तिपरिहारः । अथवा श्रेष्ठिनं स्वा इत्यस्य दार्ष्टान्तिक एवं वा इत्यादिः । न त्वात्मनो निश्चयमन्तरेणोपभोगः कर्तुं शक्यः । अस्मिन्पक्षे यथा श्रेष्ठी स्वैर्यथा श्रेष्ठिनं स्वा इति वचनद्वयं निगमनार्थत्वेन व्याख्येयम् । अथवा निश्चयो द्व्यात्मको भवति । आपत्कालीनोऽनापत्कालीनश्च । तत्रानापत्कालीनः प्रधानबुद्ध्यनुसारी निश्चयो मृगयायां मन्त्रिणा तादृशं हृदि निधाय तमेवमात्मानमिति प्रथममुक्तम् । आपत्कालीनस्तु बन्धुभिः सह कुटुम्बिनः कुटुम्बिना सह बन्धूनां च

---

१ ख. एगमेवै । २ ख. ल आत्मान एतमात्मानं भु° ।

विचार्य भवति तादृशमङ्गीकृत्योक्तं यथा श्रेष्ठी स्वैरेवं वेत्यादि । अस्मिन्पक्षे यथा वा श्रेष्ठिनं स्वा भुञ्जन्तीत्यस्यैवमात्मानं प्राणा भुञ्जन्त इति । इदं बाहिरेवावगन्तव्यम् ।

अस्याऽऽत्मनो ज्ञानेन कस्य किं फलं जातमिति बालाकिशङ्कां व्यावर्तयितुमजातशत्रुराह—

**स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः स यदा विजज्ञेऽथ हत्वाऽसुरान्विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय तथो एवैवं विद्वान्सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥**

**स** प्रसिद्धः प्रतर्दनस्य गुरुः । **यावद्**यावन्तं कालं **ह** किल श्रुतमस्माभिः पूर्वेभ्य इत्यर्थः । **वै** प्रसिद्धः प्रजापतिशिष्य एकाधिकशतवर्षब्रह्मचारी ब्रह्मविद्यार्थम् । **इन्द्रः** परमैश्वर्यसंपन्नस्त्रिलोकीपतिः । **एतं** मयोक्तं सर्वेन्द्रियोपजीव्यम् । **आत्मानम**ानन्दात्मानं **न विजज्ञे** विशेषेणायमसाविति न ज्ञातवान् । **ताव**त्तावन्तं कालम् । **एनमा**त्मज्ञानशून्यमिन्द्रम् । **असुराः** शास्त्रनिषिद्धार्थप्रवृत्ता वागादयो विरोचनादयो वाऽ**भिबभूवु**रभिभवं पराभवं चक्रुः । **सः**, असुरैरभिभूतो **यदा** यस्मिन्काले "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" इति प्रजापतिवाक्यं सभायां श्रुत्वाऽनन्तरं **विजज्ञे** य एषोऽक्षिणि पुरुषो दृश्यत इत्यादेः प्रजापतेरुपदेशाद्विशेषेणायमसाविति ज्ञातवान्साक्षात्कृतवानित्यर्थः । **अथ** तदा **हत्वा** निपात्यासुरानुक्तान्**विजित्य** विजयं प्राप्य त्रिलोकीं स्वाधीनां विधायेत्यर्थः । **सर्वेषां** निखिलानां **देवाना**मग्न्यादीनां **श्रैष्ठ्यं** श्रेष्ठत्वं प्राधान्यम् । **स्वाराज्यं** स्वराजस्य भावोऽप्रतिहतेच्छत्वम् । **आधिपत्यं** गर्भदासानिव सर्वानधिष्ठाय पालयितृत्वमाधिपत्यं **परीयाय** सर्वतो गतवान् । **तथो एव** तद्वदेव न त्वन्यथा । **एवं विद्वा**नवस्थात्रयातीतः प्राणादिभिराश्रयणीयोऽसङ्गोदासीनस्वभाव आकाशवत्सर्वगतोऽपि शरीरे हृदये च सामान्यविशेषाभ्यामुपलभ्यमानचैतन्योऽपगतसर्वधर्म आनन्दात्माऽहमस्मीत्येवंज्ञानवान् । **सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यम्** । भूतानां स्थिरजङ्गमानाम् । व्याख्यातमन्यत् । **पर्येति** प्राप्नोति । **यः** शमादिसाधनचतुष्टयसंपन्नः । **एवं वेद,** इन्द्रवदुक्तमात्मानं जानीते । **य एवं वेद** । व्याख्यातम् । वाक्याभ्यास उपनिषत्समाप्त्यर्थः ॥ २० ॥

---

१ ख. पर्यैत्तथो ।

*ऋतं वदि० वक्तारम् । मयि भर्गो मयि महो वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्मर्योऽभूर्वेदसा मत्साऽऽणीर्ऋतं मा मा हिंसीरनेनाधीतेनाहोरात्रात्संवसाम्यग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वति मा ते व्योम संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषादि
चतुर्थोऽध्यायः ॥ ४ ॥

कौषीतकिब्राह्मणारण्यकक्रमेण नवमोऽध्यायः ॥ ९ ॥

कौषीतकिब्राह्मण आत्मविद्या गुप्ताऽपि सम्यक्प्रकटीकृतेयम् ।
लोकोपकाराय मया श्रुतीनां पदावलोकैकपरेण नित्यम् ॥ १ ॥
त्रय्या अथर्वाङ्गिरसश्च तद्वद्ये वा प्रसिद्धा इह लोकमध्ये ।
अतो मयाऽकारि पदावलोकस्तेषां कृतेऽस्मिञ्शिव एतु तुष्टिम् ॥ २ ॥
गङ्गादयः शीतलनीरपूरा नैवाऽऽश्रिताश्चेत्सरितोऽल्पभाग्यैः ।
न्यूनत्वमासां किमिवात्र भूयान्ममापि तद्वत्कृतयः प्रवृत्ताः ॥ ३ ॥
आत्मावबोधाय मदुक्तिवारां प्रवृत्तिरेषोपनिषत्समूहे ।
विबुध्य सन्तः सततं स्वचित्तं प्रक्षालयन्तु प्रविमुक्तिकामाः ॥ ४ ॥
सर्वं न सर्वस्य हितं प्रियं वा व्यवस्थितं येन लभामहेऽदः ।
प्रिया हितास्तेन विमुक्तिभाजां पदावलोका विहितास्ततोऽमी ॥ ५ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

समाप्तेयं सदीपिका कौषीतक्युपनिषत् ॥

---

* इयं शान्तिः क. ग. पुस्तकयोर्नोपलभ्यते ।

ॐ तत्सद्ब्रह्मणे नमः ।

# क्षुरिकोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

क्षुरिका शस्त्रिका प्रोक्ता तत्तुल्या धारणा यतः ।
तद्वाचकस्त्रिखण्डोऽयं क्षुरिकाग्रन्थ उच्यते ॥

**ॐ क्षुरिकां संप्रवक्ष्यामि धारणां योगसिद्धये ।**
**यां प्राप्य न पुनर्जन्म योगयुक्तः स जायते ॥**

गुरुतः प्राप्तविद्यस्य तत एव लब्धज्ञानप्रणवमन्त्रस्य षडङ्गयोगेऽधिकार इति तदर्थमुत्तरो ग्रन्थः—**क्षुरिकामित्यादि** । क्षुरिकां क्षुरिकामिव संसारोच्छित्तये शस्त्रिकामिव । रूपकम् । धारणामात्मनि चित्तावस्थानलक्षणाम् ।

उक्तं च **योगयाज्ञवल्क्ये**—

" शमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः " इति ॥

न पुनर्जन्म भवतीति शेषः । स धारणावान्कुतश्चिदपराधाद्यदि योगभ्रष्टो भवति तर्हि जन्मान्तरे योगयुक्त एव जायत इत्यर्थः । योगश्चित्तवृत्तिनिरोधः । " तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् " इति स्मृतेः ॥

**वेदतत्त्वार्थविहितं यथोक्तं हि स्वयंभुवा ॥ १ ॥**

**वेदेति** । इदं योगस्वरूपं वेदेन तत्त्वार्थेन परमार्थत्वेन विहितं विधिविषयीकृतम् । स्वयंभुवा ब्रह्मणा यथोक्तं यथा वर्तते तथोक्तं न विसंवादीत्यर्थः । तदुक्तं **योगयाज्ञवल्क्येन**—" वक्ष्यामि योगसर्वस्वं ब्रह्मणा कीर्तितं पुरा " इति । धात्रोक्तं परमेष्ठिनेति च ॥ १ ॥

**निःशब्दं देशमास्थाय तत्राऽऽसनमवस्थितः ।**
**कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ॥ २ ॥**

योगस्वरूपं साधयितुं षडङ्गान्याह—**निःशब्दमिति** ।

यदुक्तम्—" कान्तारे विजने देशे फलमूलोदकान्विते ।
तपश्चरन्वसेन्नित्यम् " इति ॥

षडङ्गलक्षणान्यमृतबिन्दावुक्तानि । यमनियमयोः पूर्वकाण्डादेव सिद्धत्वादिहानभिधानं न तु कापालिकवदनङ्गीकारात् ।

यमा यथा—" अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चैते यमा दश " ॥

नियमा यथा—"तपः संतोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् " इति ॥

अवस्थित आस्थित आरूढः ।

तदुक्तं **गीतासु**—

" शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् " इति ॥

तथा तन्त्रेणाऽऽसनं पद्माद्यास्थित इत्यपि बोद्धव्यम् ।

तदुक्तं **हठप्रदीपिकायाम्**—

" हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते ।
तत्कुर्यादासनस्थैर्यमारोग्यं चाङ्गपाटवम् " इति ॥

कूर्मोऽङ्गानीवेति प्रत्याहार उक्तः । अत्रेन्द्रियाणीति शेषः ।

तदुक्तम्—" इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते " इति ॥

अन्तरप्रत्याहारसिद्धये मन इति । हृदि हृत्पुण्डरीके । मनोनिरोधे दोषस्मरणात् ।

तदुक्तम्—" कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते " इति ॥ २ ॥

**मात्राद्वादशयोगेन प्रणवेन शनैः शनैः ।**
**पूरयेत्सर्वमात्मानं सर्वद्वारान्निरुध्य च ॥ ३ ॥**

**मात्रेति** । द्वादशमात्रा नादबिन्दावुक्ताः ' घोषिणी प्रथमा मात्रा ' इत्यादिना तत्रैव द्रष्टव्याः । प्रणवेन शनैरुच्चारितेन वायुं पूरयेत् । कीदृशेन मात्रा अकारोकारमकारार्धमात्राख्याश्चतस्रस्तासां प्रत्येकं तिस्रास्तिस्रो मात्रा घोषिण्यादयो भौपत्यादिफला द्वादश तासां योगश्चिन्तनं यस्मिंस्तेन प्रणवेन पूरयेत् । यदा दशभिः प्रणवैः पूरणं तदाऽष्टाचत्वारिंशद्भिः कुम्भनं चतुर्विंशतिभिश्च रेचनम् । यदा तु षोडशभिः पूरणं तदा चतुःषष्टिभिः कुम्भनं द्वाविंशद्भी रेचनम् । अष्टभिर्यदा पूरणं तदा द्वात्रिंशद्भिः कुम्भनं षोडशभी रेचनमिति विवेकः । सर्वमात्मानं न तु कतिपयाङ्गनिरोधेनोपविशेत्तथा सति वायुवैषम्यं स्यात् । सर्वद्वारान्सर्वद्वाराणीत्यर्थः । अधोद्वारमाकुञ्चनमूलबन्धाभ्यामूर्ध्वद्वाराणि जालंधरबन्धनेन ॥ ३ ॥

**उरोमुखकटिग्रीवं किंचिद्धृदयमुन्नतम् ।**
**प्राणान्संचारयेत्तस्मिन्नासाभ्यन्तरचारिणः ॥ ४ ॥**

उरोमुखकटिग्रीवमुन्नतं धारयेदिति शेषः । तदुक्तं गीतासु—"समं कायशिरोग्रीवं धारयन्नचलं स्थिरः" इति । हृदयं किंचिदुन्नतं धारयन् । अनेन जालंधरबन्धः सूचितः ।

स यथा—"कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम् ।
बन्धो जालंधराख्योऽयममृताक्षयकारकः" इति ॥

संचारयेत्पूरकमात्राभिस्तस्मिन्हृदये । नासेत्यनेन मुखेन पूरकरेचकौ निषिद्धौ मुखेनैव पूरणे शिरोनैर्मल्यासिद्धेः ॥ ४ ॥

**भूत्वा तत्र गतः प्राणः शनैरथ समुत्सृजेत् ॥ ५ ॥**

**भूत्वेति** । प्राणस्तत्र सर्वशरीरे गतः प्रविष्टो भूत्वा तिष्ठतीति शेषः । एतेन कुम्भक उक्तः । स च पूरकमात्रापेक्षया चतुर्गुणाभिः कार्यः । अथ रेचकमाह—**शनैरिति** । समुत्सर्जनं च पूरणापेक्षया द्विगुणाभिर्मात्राभिः । शीघ्रोत्सर्जने विमार्गे वायुर्गच्छेत् ॥ ५ ॥

**स्थिरमात्रादृढं कृत्वा अङ्गुष्ठेन समाहितः ।**
**द्वे तु गुल्फे प्रकुर्वीत जङ्घे चैव त्रयस्त्रयः ॥**
**द्वे जानुनी तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः ॥ ६ ॥**

**स्थिरेति** । स्थिराभिरेकरूपाभिर्मात्राभिर्दृढं स्थिरं प्राणं कृत्वा केवलकुम्भके सिद्ध इत्यर्थः । ततो धारणाभिः प्रत्याहारमभ्यसेदित्याह—**अङ्गुष्ठ इत्यादिना** । अङ्गुष्ठेत्यादौ जातावेकवचनम् । अङ्गुष्ठयोर्गुल्फयोर्जङ्घयोरित्यादि बोद्धव्यम् । अङ्गुष्ठयोर्धारणे कुर्वीतेत्यन्वयः । द्वे तु धारणे कुर्यादित्यर्थः । **त्रयस्त्रय इति** । जङ्घे प्राप्याऽऽद्यन्तमध्येषु निरोधाः कर्तव्या इति शेषः । जानुनी आद्यन्तयोः । ऊरुभ्यां साधनाभ्यामूर्वोरपि तथा द्वे इत्यर्थः । **गुद इति** । मूलाधारे स्वाधिष्ठाने वाऽऽद्यन्तमध्येषु निरोधाः ॥ ६ ॥

**वायोरायतनं चात्र नाभिदेशे समाश्रयेत् ।**
**तत्र नाडी सुषुम्ना तु नाडीभिर्बहुभिर्वृता ॥**
**अणुरक्ताश्च पीताश्च कृष्णास्ताम्रविलोहिताः ॥ ७ ॥**

**वायोरिति** । अत्र नाभिदेशे वायोरायतनं मुख्यस्थानमस्ति तच्च धारणया समाश्र-

---

१ ङ. °न्संधार° । २ ग. °येच्चित्यं नासा° । ङ. °येद्योगी नासा° । ३ ग. °त्वा ह्यङ्गु° । ४ क. °ल्फे च कु° । ख. ङ. °ल्फे तु कु° ।

येदित्यर्थः । तत्र नाभौ सुषुम्ना मध्यनाडी बहुभिर्द्वासप्ततिसहस्रैर्वृता मूलं तु तस्याः कन्दमध्यम् ।

कन्दस्तु—" गुदध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं विदुः " इत्युक्तः ।

" गुदमेढ्रान्तरे यद्वै वेणुकन्दं तदुच्यते " इति च ॥

वेणुः सुषुम्ना सा च षट्चक्रवती मूलाधारदण्डान्तरविवरगता मूर्धानं भित्त्वा ब्रह्मलोकान्तं निर्गता । यच्छान्दोग्ये—" शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका " इति । नाभेरूर्ध्वं तु चक्रानुक्रमेण धारणा मूर्धान्तं द्रष्टव्या ।

उक्तं च योगयाज्ञवल्क्ये—

" मर्मस्थानानि सिद्ध्यर्थं शरीरे योगक्षेमयोः ।
तानि सर्वाणि वक्ष्यामि यथावच्छृणु सुव्रते ॥
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्यौ तथैव च ।
धृत्योर्मूलं च जान्वोश्च मध्ये चोरूभयस्य च ॥
पायुमूलं ततः पश्चान्मध्यदेहश्च मेढ्रकम् ।
नाभिश्च हृदयं गार्गि कण्ठकूपस्तथैव च ॥
तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले ।
भ्रुवोर्मध्यं ललाटं च मूर्धा च मुनिसत्तमे ।
मर्मस्थानानि चैतानि " इति ॥

एतेषु च तत्रैव धारणोक्ता—

" स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत् ।
स्थानात्स्थानं समुत्कृष्य प्रत्याहारं प्रकुर्वतः ॥
सर्वे रोगाश्च नश्यन्ति योगाः सिध्यन्ति तस्य वै " इति ॥

प्रपञ्चसारेऽपि—

" अङ्गुष्ठगुल्फजानुद्वययोनिगुदं च सीवनी मेढ्रम् ।
नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासा च ॥
भ्रूमध्यललाटसुषुम्नाधाग्रं द्वादशान्तमित्येव ।
उत्क्रान्तौ परकायप्रवेशने चाऽऽगतौ पुनः स्वप्ने ॥
स्थानानि धारणायाः प्रोक्तानि मरुत्प्रयोगविधिनिपुणैः " इति ॥

अङ्गुष्ठादूर्ध्वमारोहे फलमिदमुक्तम् । मूर्ध्नोऽङ्गुष्ठपर्यन्तमवरोहेऽपि च धारणानां फलमुक्तम्—

---

१ ख. सुमत ।

नधाम्

"स्थानात्स्थानात्समाकृष्य यस्त्वेवं धारयेत्सुधीः ।
सर्वपापविशुद्धात्मा जीवेदाचन्द्रतारकम्" इति ॥

अणुरक्ताश्चेत्यादि नाडीनां विशेषणम् । तदुक्तं छान्दोग्ये—"अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य" इति । अण्व्यश्च ता रक्ताश्चेति समासः ॥ ७ ॥

**अतिसूक्ष्मां च तन्वीं च शुक्लां नाडीं समाश्रयेत् ।**
**ततः संचारयेत्प्राणानूर्णनाभीव तन्तुना ॥ ८ ॥**

एवं केवलकुम्भके सिद्धे प्राणमनसोः स्थानविशेषेषु प्रत्याहारमभ्यस्य धारणासिद्धये सुषुम्नायां प्राणमनसोः प्रवेशः कर्तव्यः । तत्रोपायो मूलोड्डियानजालंधरबन्धैः शक्तिचालनेन चापानमूर्ध्वमाकुञ्च्य तेन देहमध्येऽग्निं प्रज्वाल्य तज्ज्वालया कुण्डलीं प्रताप्योद्बोध्य ब्रह्मनाडीं द्वारमध्यस्थतन्मुखप्रसारणेन तत्र वायुमनोवह्नीन्प्रवेशयेदित्याशयेनाऽऽह—अतिसूक्ष्मामिति । तत्र जालंधरबन्ध उक्त उड्डियानो यथा—

"उदरे पश्चिमं तानं नाभेरूर्ध्वं तु कारयेत् ।
उड्डियानो ह्ययं बन्धो मृत्युमातङ्गकेसरी" इति ॥

मूलबन्धो यथा—

"पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम् ।
अपानमूर्ध्वमाकृष्य मूलबन्धो निगद्यते" इति ॥

शक्तिचालनं यथा—

"अवस्थिता चैव फणावती सा प्रातश्च सायं प्रहरार्धमात्रम् ।
प्रपूर्य सूर्यात्परिधानयुक्त्या प्रगृह्य नित्यं परिचालनीया" इति ॥

अतिसूक्ष्मां तन्वीं वालाग्रशतभागोपमां नाडीं सुषुम्नां समाश्रयेदन्या नाडीरुत्सृज्य तत्रैव मनो दध्यादित्यर्थः । तृतीयार्थे तसिः । तन्तुनेति प्रतियोगिनि तृतीयाश्रवणात् । सुषुम्नया प्राणान्संचारयेदूर्ध्वं नयेत् । ऊर्णनाभी कीटविशेषो लूताख्यः । तन्तुना यथोर्ध्वं संचरति तथा संचारयेदित्यर्थः ॥ ८ ॥

**ततो रक्तोत्पलाभासं पुरुषायतनं महत् ।**
**दहरं पुण्डरीकेति वेदान्तेषु निगद्यते ॥**
**तद्भित्त्वा कण्ठमायाति तां नाडीं पूरयन्यतः ॥ ९ ॥**

ततः संचारानन्तरं तद्भित्त्वेत्यग्रतनेनान्वयः । तत्पुण्डरीकम् । कीदृशं रक्तोत्पलवद्रक्तवर्णम् । नानावर्णनाडीयोगाद्रक्तता । 'पुण्डरीकं सिताम्बुजे' इति कोशात्सितत्वेऽप्यौपाधिकी रक्तता ज्ञेया । पुरुषायतनं जीवनीडः । महत्सर्वावभासकत्वात् । दहरं दभ्रं

१ ख. रयेद्दिवि । म° । ग °रयेच्छनैः । म° ।

सूक्ष्मं स्वरूपेण पुण्डरीके हृत्पद्मदहराख्यमाकाशं वेदान्तेषु छान्दोग्यादिषु पठ्यते। तद्यथा—"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति। तत्पुण्डरीकमनाहताख्यं कुण्डलीमनःप्राणाग्निभिर्भित्त्वा कण्ठं विशुद्धिचक्रस्थानमर्गलां भेत्तुमायाति जविस्तां सुषुम्नां पूरयन्व्याप्नुवन्यतः सावधानः। पूरयन्दिवीति पाठे दिवीति निमित्तसप्तमी। फलमपि च निमित्तं भवति। दिवः प्राप्त्यर्थमूर्ध्वमारोहयेदित्यर्थः॥ ९॥

**मनसस्तु क्षुरं गृह्य सुतीक्ष्णं बुद्धिनिर्मलम्॥**

मनसस्तु क्षुरं मनःप्राकृतिकं क्षुरं शास्त्रनिष्णातं मन एवेत्यर्थः। सुतीक्ष्णं तर्केण घर्षणोपलेन निशानस्थानीयया शास्त्रीयबुद्ध्या निर्मलम्॥

**पादस्योपरि मर्मृज्य तद्रूपं नाम कृन्तयेत्॥ १०॥**

**पादस्येति**। ब्रह्मणः पादस्य श्रुत्यन्तरोक्तस्य पुंसपादस्थानीयस्योपरि तदुपासनया। मर्मृज्य निर्मलीकृत्य। मृजेर्यङन्तात्क्त्वो ल्यपूछान्दसः। ब्रह्मणः पाद यथा—"तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च" इति। अथ वा प्रणवस्य चत्वार्यक्षराण्येवं जाग्रदादिरूपाणि पादाः। ओमित्येतदक्षरस्य पादाश्चत्वार इत्यथर्वशिखोक्तेस्तत्प्रसिद्धं रूपं भूतादिस्वरूपं नाम तद्वाचकः शब्दस्तद्द्वयं ब्रह्मणो लोमस्थानीयं स्वरूपाद्वाह्यं कृन्तयेन्निवर्तयेत्तद्विष। वृत्तिं भूतशुद्धिमार्गेण त्यजेदित्यर्थः। इदमेव तस्य निकृन्तनं यदविषयीकरणं मनोमयत्वात्संसारस्य मनसा मुक्तस्य स्वरूपाभावात्। हठपक्ष उत्तरमार्गरोधकं सग्रन्थि नाडीचक्रं छिन्द्यात्।

**तदुक्तम्**—"नासादक्षिणमार्गवाहिपवनः प्राणोऽतिदीर्घीकृत-
श्चन्द्राम्भःपरिपूरितामृततनुः प्राग्घण्टिकायां तदा॥
छिन्द्यात्कालविशालवह्निवशगान्ब्रूरन्ध्रनाडीगणां-
स्तत्कार्यं कुरुते पुनर्नवतरं छिन्नद्रुमस्कन्धवत्" इति॥ १०॥

**मनोद्वारेण[1] तीक्ष्णेन योगमाश्रित्य नित्यशः।**
**इन्द्रवज्र इति प्रोक्तं मर्मजङ्घानुकीर्तनम्॥**

किं कृत्वा निकृन्तेदत आह—**मन इति**। मनसोपायेन नित्यशोऽभीक्ष्णं योगं जीवात्मपरमात्मनोरैक्यम्। पक्षान्तरे योगमुद्योगम्। आश्रित्य। कीदृशं योगमिन्द्रस्य वज्र इवेति। तथा प्रोक्तम्—यथेन्द्रो वज्रेणाभेद्यं भिनत्त्येवमयं योगोऽच्छेद्यवासनाजालमिन्द्रवज्रो विद्युत्तत्तुल्यया कुण्डल्या नाडीजालं छिनत्ति। पुनः कीदृशं मर्मणो

१ घ. च. °नोधारे।

जङ्घाया अनुकीर्तनं यस्मिन्स तं जङ्घारूपं मर्मध्यानस्थानं यत्र कथितम् । जङ्घाग्रहणमङ्गुष्ठादेरप्युपलक्षणं तुल्यन्यायत्वात् । अङ्गुष्ठादिमूर्धान्तानां मर्मणामनुकीर्तनात् । मर्मजङ्घानुकर्तनमिति पाठे यथा नापितेन क्षुरस्य तैक्ष्ण्यज्ञानाय जङ्घाऽनुकृत्यते मुण्ड्यते तथाऽनेनाङ्गुष्ठादिमर्मस्थानानि नाडीमलानुकृन्तनेन निर्मली क्रियन्त इत्यर्थः ॥

**तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् ॥ ११ ॥**

**तदिति** । तच्छब्देन योग्यतावशान्मर्मजङ्घादिगुणीभूतमपि परामृश्यते तत्सनामकं मर्मादिधारणाभिश्छिन्द्यादथवा व्यवहितमपि रूपं नाम तच्छब्देन परामृश्यते स एव । इमामिन्द्रवज्रयोगं जिह्वायास्तालुमूले प्रवेशार्थं जिह्वामूलसूत्रकृन्तनरूपं हठयोगिनो वर्णयन्ति ।

तदुक्तं खेचर्याम्—

"तालुमूलं समुत्कृत्य सप्तवासरमात्मवित् ।
स्वगुरूक्तप्रकारेण मूलं सर्वं विशोषयेत् ॥
स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम् ।
समादाय यतस्तेन रोममात्रं समुच्छिदेत् ॥
छित्त्वा सैन्धवपथ्याभ्यां चूर्णं तेन प्रघर्षयेत् ।
पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिदेत् ॥
एवं क्रमेण षण्मासं नित्ययुक्तः समाचरेत् ।
षण्मासाद्रसनामूलशिराबन्धः प्रणश्यति" इति ॥

ततो दोहनमुक्तम्—

"अथ वागीश्वरीं नाम शिरोवस्त्रेण वेष्टयेत् ।
शनैरुत्कर्षयेद्योगी कालवेलाविधानवित्" इति ॥

प्रवेशोऽप्युक्तः—

"यदा तु बाह्यमार्गेण जिह्वा ब्रह्मबिलं व्रजेत् ।
तदा ब्रह्मार्गलं देवि दुर्भेद्यं त्रिदशैरपि ॥
अङ्गुल्यग्रेण संघृष्य जिह्वां तत्र प्रवेशयेत्" इति ॥

ततो जिह्वाया मथनाभ्यासात्फलमप्युक्तम्—

"एवं द्वादशवर्षान्ते संसिद्धिः परमेश्वरि ।
शरीरे सकलं विश्वं पश्यत्यात्माविभेदतः" इति ॥

स हठतरः पन्थाः ॥ ११ ॥

**ऊरोर्मध्ये तु संस्थाप्य मर्मप्राणविमोचनम् ।**
**चतुरभ्यासयोगेन छिन्देदनभिशङ्कितः ॥ १२ ॥**

ऊरोरिति । ऊरुग्रहणमुत्तरोत्तरस्थानोपलक्षणम् । ऊरोर्मध्ये समनस्कं प्राणं संस्थाप्य मर्मणः प्राणस्य च विमोचनं कर्तव्यम् । अस्मिन्मर्मण्यहं स्थित इत्यभिमानं त्यक्त्वा निरालम्बस्तिष्ठेदित्यर्थः । एवं स्थानान्तरेष्वप्यूह्यम् । अथवा सर्वत्रात्र च्छेदनं व्यवधायकं नाड्यादि विदार्य स्थानान्तरे गमनम् । चतुरिति । ऊरोरुत्तरेषु चतुर्षु गुदशिश्ननाभिहृदयेषु स्थानेष्वभ्यासयोगेन नामरूपमर्मप्राणांश्छिन्देत् । अथवा चतुर्वारं चतुरावृत्त्या प्रातर्मध्याह्ने सायं निशीथे च सर्वेषु स्थानेष्वभ्यासयोगेन । नन्वेवं छेदने देहाभिमानत्यागे च देहपातः स्यादत आह—अनभिशङ्कित इति । अयं भावः । न ह्यभिमानत्यागेन देहत्यागो भवति सुषुप्त्यादिषु तथा दर्शनाद्ध्यानिनां चिरकालदेहावस्थानस्मृतेर्न वा चक्रादिभेदनेऽपि शङ्केति ॥ १२ ॥

**ततः कण्ठान्तरे योगी समूहं नाडिसंचयम् ।**
**एकोत्तरं नाडिशतं तासां मध्ये वराः स्मृताः ॥ १३ ॥**
**इडा रक्षतु वामेन पिङ्गला दक्षिणेन तु ।**
**तयोर्मध्ये वरं स्थानं यस्तं वेद स वेदवित् ॥ १४ ॥**

तत इति । तदनन्तरं योगी कण्ठमध्ये नाडिसंचयं समूहं संधीकुर्वंश्छिन्देदित्यनुषङ्गः । कियत्यो नाड्यः सन्तीत्यपेक्षायां मध्यमसंख्यामाह—एकेति । वरा उत्तमाः । इडा वामेन पिङ्गला दक्षिणेनेत्येव च वक्तव्ये रक्षतुशब्दयोगः शिष्याणामाशिषे विद्यासंप्रदायोच्छेदो मा भूदिति । वरं स्थानं सुषुप्त्याख्यं तदधिष्ठातारं पुंलिङ्गनिर्देशात् ॥ १३ ॥ १४ ॥

**सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी ।**
**द्वासप्ततिसहस्राणि प्रति नाडीषु तैतिलम् ॥**

किं तत्स्थानं कश्च तदधिष्ठातेत्यपेक्षायामाह—सुषुम्नेति । परे पुरुषे ब्रह्मणि लीना । विरजा निर्मला । ब्रह्मरूपिणी ब्रह्मस्थानत्वात् । सुषुम्नैव वरं स्थानं पर एव तदधिष्ठातेत्यर्थः । कथंभूता सुषुम्ना नाडीषु मध्ये द्वासप्ततिसहस्राणि नाडीः प्रति तैतिलमुत्सीषं(च्छीर्षं) गण्डुकं यथा गण्डुकाधार उत्तमाङ्गं तिष्ठत्येवं सुषुम्नाधारे सर्वा नाड्यः स्थिता इत्यर्थः । "तैतिलो गण्डुके प्रोक्तस्तैतिलं करणान्तरे" इति विश्वः ॥

**छिद्यन्ते ध्यानयोगेन सुषुम्नैका न च्छिद्यते ॥ १५ ॥**

छिद्यन्त इति । ध्यानयोगेन ताश्छिद्यन्ते तासां छिन्नत्वादुच्चावचदेहेषूत्क्रान्तौ जीवस्य गमनं न भवति । यदुक्तम्—"तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । एका सुषुम्ना न च्छिद्यते तस्याः परमसूक्ष्मत्वेन मनोविषयताऽयोग्यत्वान्मनोविषयस्यैव योगेन च्छेद्यत्वादृजुतयाऽप्रातिद्वंद्वित्वाच्च ॥ १५ ॥

---

१ छ. °ति । सुषुम्न्निति प°।

**योगनिर्मलधारेण क्षुरेणामलवर्चसा ।**
**छिन्देन्नाडीशतं धीरः प्रभावादिह जन्मनि ॥ १६ ॥**

योगेति । योग एव निर्मला धारा यस्य तेन क्षुरेण मनसाऽमलवर्चसा पादस्योपरि मृष्टत्वान्निर्मलतेजसा नाडीशतं छिन्देत् । तासां छेदे तत्प्रभूतस्य द्वासप्ततिसहस्रस्यापि च्छेदः सिद्धः । धीरो धीमान् । प्रभावाद्योगसामर्थ्यात् ॥ १६ ॥

**जातीपुष्पसमायोगैर्यथा वास्यन्ति तैतिलम् ।**
**एवं शुभाशुभैर्भावैः सा नाडी तां विभावयेत् ॥ १७ ॥**

इह जन्मनि मनुष्यशरीरे तैतिलेन सुषुम्नायाः सादृश्यान्तरमाह—जातीति । जाती मालती तस्याः पुष्पाणां समायोगैः संयोगैः कृत्वा यथा प्रसाधकास्तैतिलं गण्डुकं वास्यन्ति वासेन परिमलेन युक्तं कुर्वन्त्येवं सा नाडी शुभाशुभैर्भावैर्वास्यत इति विपरिणामः । पुष्पादिवासाश्रयो यथा गण्डुकं भवति तथेयं नाडी वासनाश्रयेत्यर्थः । तर्हि किं कार्यमत आह—तामिति ॥ १७ ॥

**तद्भाविताः प्रपद्यन्ते पुनर्जन्मविवर्जिताः ॥ १८ ॥**

चिन्तनफलमाह—तदिति । प्रपद्यन्ते संपद्यन्ते ॥ १८ ॥

**ततो विदितचित्तस्तु निःशब्दं देशमास्थितः ।**
**निःसङ्गस्तत्त्वयोगज्ञो निरपेक्षः शनैः शनैः ॥ १९ ॥**
**पाशं छित्त्वा यथा हंसो निर्विशङ्कः[1] खमुत्क्रमेत् ।**
**छिन्नपाशस्तथा जीवः संसारं तरते तदा ॥ २० ॥**
**यथा निर्वाणकाले तु दीपो दग्ध्वा लयं व्रजेत् ।**
**तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् ॥ २१ ॥**

विदितं चित्तं येन स विदितचित्तः ॥ १९ ॥ २० ॥ २१ ॥

**प्राणायामसुतीक्ष्णेन मात्राधारेण योगवित् ।**
**वैराग्योपलघृष्टेन छित्त्वा तन्तुं न बध्यते ॥ २२ ॥**
**अमृतत्वं समाप्नोति यदा कामात्समुच्यते ।**
**सर्वैषणाविनिर्मुक्तश्छित्त्वा तन्तुं न बध्यते ॥**
**छित्त्वा तन्तुं न बध्यत इति[2] ॥ २३ ॥**

**इत्यथर्ववेदे क्षुरिकोपनिषत्समाप्ता ॥ ९ ॥**

मात्राधारेण मात्रा द्वादशादिसंख्याः प्रणवमात्रास्ता एव धारा यस्य मनःक्षुरस्य स तथा तेन । तन्तुं वासनारूपं नाडीरूपं च । द्विरुक्तिर्निश्चयार्था । समाप्त्यर्थ इतिशब्दः । अयमारोहप्रकार उत्क्रान्तिसमये खेचरीपटल उक्तस्तद्यथा—

१ क. ख. 'ङ्कः समु' । २ क. ख. 'ध्यत इति ।

"यदा तु योगिनो बुद्धिस्त्यक्तुं देहमिमं भवेत् ।
तदा स्थिरासनो भूत्वा मूलाच्छक्तिं समुज्ज्वलाम् ॥
सूर्यकोटिप्रतीकाशां भावयेच्चिरमात्मनः ।
आपादतलपर्यन्तं प्रसृतं जीवमात्मनः ॥
संहृत्य क्रमयोगेण मूलाधारपदं नयेत् ।
तत्र कुण्डलिनीं शक्तिं संवर्तानलसंनिभाम् ॥
जीवं निजं चेन्द्रियाणि ग्रसन्तीं चिन्तयेद्धिया ।
संप्राप्य कुम्भकावस्थां तडिज्ज्वलनभासुराम् ॥
मूलाधाराद्यतिर्देवि स्वाधिष्ठानपदं नयेत् ।
तत्रस्थं जीवमखिलं ग्रसन्तीं चिन्तयेद्व्रती ॥
तडित्कोटिप्रतीकाशां तस्मादुन्नीय सत्वरम् ।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरेत् ॥
तत्र स्थित्वा क्षणं देवि पूर्ववद्योगमार्गवित् ।
अनाहतं नयेद्योगी तत्र पूर्ववदाचरेत् ॥
ततो विशुद्धादानीय कुण्डलीं पूर्ववच्चरेत् ।
उन्नीय तस्माद्भ्रूमध्ये नीरक्षीरं ग्रसन्पुनः ॥
ग्रस्तं क्षीरं महाशक्त्या कोटिसूर्यसमप्रभम् ।
मनसा सह वागीश्या भित्त्वा ब्रह्मार्गलं क्षणात् ॥
परामृतमहाम्भोधौ विश्रान्तिं तत्र कारयेत् ।
तत्रस्थं परमं देवं शिवं परमकारणम् ॥
शक्त्या सह समायोज्य तयोरैक्यं विभावयेत् " इति ॥

ज्ञातमुत्क्रान्तिकालं वञ्चयित्वा यदि जीवितुमिच्छेत्तदाऽवरोहं कुर्यादित्यपि तत्रोक्तं तद्यथा––

" यदि वञ्चितुमुद्युक्तः कालं कालविभागवित् ।
कालस्तु यावद्व्रजति तावत्तत्र सुखं वसेत् ॥
ब्रह्मद्वारार्गलस्याधो देहं कालप्रयोजनम् ।
तस्मादूर्ध्वं पदं देयं (हं) न हि कालप्रयोजनम् ॥
यदा देव्यात्मनः कालमतिक्रान्तं प्रपश्यति ।
तदा ब्रह्मार्गलं भित्त्वा शक्तिं मूलपदं नयेत् ॥

१ ख. °गच्छत् ।

शक्तिदेहप्रसूतं तु स्वजीवं चेन्द्रियैः सह ।
तत्तत्कर्माणि संयोज्य स्वस्थदेहः सुखं व्रजेत् ॥
अनेन देवि योगेन वञ्चयेत्कालमागतम् " इति ॥

आरोहावरोहाभ्यास एव सर्वयोगशास्त्रेषु मुख्यो योग इति द्रष्टव्यम् । स च क्षुरिकायां प्रकाशितः ॥ २२ ॥ २३ ॥

नारायणेन रचिता श्रुतिमात्रावलम्बिना ।
अस्पष्टपदवाक्यानां दीपिका क्षुरिकाभिधे ॥ १ ॥

इति श्रीनारायणविरचितक्षुरिकोपनिषद्दीपिका समाप्ता ॥ १३ ॥



१ छ. स्वच्छदे° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# गर्भोपनिषत् ।

नारायणविरचितदीपिकासमेता ।

गर्भसंस्था निरूप्याऽत्र गर्भोपनिषदित्यतः ।
पञ्चखण्डाऽष्टमी मुण्डात्पैप्पलादाभिधा तथा ॥

गर्भवासान्मुच्यत इत्युक्तं तत्र को गर्भः कथं च तत्र वास इत्यपेक्षायां संसारवैराग्यार्थं च जन्ममरणादिदुःखं निरूपणीयमिति गर्भोपनिषदारभ्यते । तत्र गर्भस्य मातापितृशरीरापेक्षत्वात्प्रथमं शरीरस्वरूपमाह—

**ॐ भद्रं कर्णेभिः० । सह नाविति शान्तिः ॥**

**ॐ पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम्[1] ।**
**तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम् ॥ १ ॥**

पञ्चात्मकं पञ्चभूतात्मकम् । पञ्चसु धारणादिषु शब्दादिष्वानन्दादिषु च वर्तमानम् । पञ्चस्वित्यत्र वीप्सा द्रष्टव्या । प्रश्नोत्तरपञ्चकानां त्रित्वात् । षडाश्रयं षण्णां मधुरादिरसानामाश्रयमाश्रयतीत्याश्रयम् । पचाद्यच् । षड्रसभोगायतनमित्यर्थः । षड्गुणयोगयुक्तं षण्णां गुणानां षड्जादिसप्तस्वरविशिष्टरागाणां योगः स्वस्त्रीभी रागिणीभिः परस्परं संबन्धस्तेन युक्तं गानादिकलाकुशलत्वात् । सप्त शुक्लादिगुणा रसादयो धातवो यस्मिंस्तत्सप्तधातु । कबभावो बहुव्रीहौ । अग्रे तु कपि सप्तधातुकमिति निर्देशः शेषाद्विभाषेति । त्रिमलं त्रयो मला नखलोमकेशा यत्र । तत्र भू(मूर्ध)जादीनां त्वशितपीतमलत्वात्तद्देहमलत्वम् । अथवा कफादीनां श्लेष्मादिरूपाणां मलत्वात् । द्वियोनि द्वयोर्मातापित्रोर्योनिरुत्पत्तिर्यस्य । चतुर्विधाहारमयं लेह्यपेयखाद्यचोष्यलक्षणचतुर्विधाहारविकार इत्यर्थः ॥ १ ॥

**भवति पञ्चात्मकमिति कस्मात्, पृथिव्यापस्तेजो वायुराकाशमित्यस्मिन्पञ्चात्मके शरीरे[2] ।**

गुरुणा प्रतिज्ञाते शिष्यो विशेषज्ञानाय पृच्छति पञ्चात्मकं कस्मादिति । अत्र पञ्चसु वर्तमानं कथमित्यपि प्रश्नो द्रष्टव्यः । उत्तरानुरोधात् । इतिशब्दान्तमुत्तरम् ।

**का पृथिवी का आपः किं तेजः को वायुः किमाकाशम् ।**

---

१ क. °स् । तं सप्त° । २ क. ग. °काशमित्यस्मिन्पञ्चात्मके शरीरे य° ।

पृथ्वीप्रभृतिभागे किं लिङ्गमित्यपेक्षया पृच्छति—केति ।

**तत्र यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्संचरति स वायुर्यत्सुषिरं तदाकाशमित्युच्यते ।**

काठिन्यादि पृथिव्यादिलिङ्गमित्युत्तरयति—तत्र यदिति ।

शरीरे तेषां प्रत्येकमुपयोगं दर्शयन्पञ्चसु कथं वर्तमानमित्यस्योत्तरमाह—

**तत्र पृथिवी नाम धारण आपः पिण्डीकरणे तेजो रूपदर्शने वायुर्व्यूहन आकाशमवकाशप्रदाने ।**

तत्रेति । व्यूहनं मेलनम् ।

ननु माभूदवकाशप्रदानमित्यत आह—

**पृथुस्तु ।**

**पृथुस्त्विति** । पृथुरेष शरीरपदार्थोऽवकाशं विना पार्थवं न स्यादिति भावः । द्वितीयपञ्चकमाह—

**श्रोत्रे शब्दोपलब्धौ त्वक्स्पर्शे चक्षुषी रूपे जिह्वा रसने नासिकाऽऽघ्राणे ।**

**श्रोत्रे इति** । श्रोत्रे द्वे शब्दोपलब्धौ वर्तेते ।

तृतीयपञ्चकमाह—

**उपस्थश्चाऽऽनन्दनेऽपानमुत्सर्गे बुद्ध्या बुध्यति मनसा संकल्पयति वाचा वदति, षडाश्रयमिति कस्मात् ।**

**उपस्थ इति** । षडाश्रयं कस्मादित्यत्र षड्गुणयोगयुक्तं च कस्मादित्यपि द्रष्टव्यम् ।

आद्यस्योत्तरमाह—

**मधुराम्ललवणतिक्तकटुकषायरसान्विन्दते ।**

**मधुरेति** । विन्दते लभते जानातीत्यर्थः ।

द्वितीयस्योत्तरम्—

**षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्चेति ।**

**षड्जेति** । आद्याक्षरग्रहणेन षऋगमपधनीति गायनेषु प्रसिद्धाः । एतत्सप्तस्वरग्रहणं षड्रागोपलक्षणार्थं षड्गुणेत्युक्तत्वात् ।

ते च—"श्रीरागोऽथ वसन्तश्च पञ्चमो भैरवस्तथा ।
मेघनादश्च विज्ञेयाः षष्ठो नट्टनरायणः" इति ।

---

१ च. ता आपो । २ च. °शम् । त° । ३ च. °वी धा° । ४ च. तेजः प्रकाशने । ५ क. ग. पृथक्चक्षु श्रो° । ६ क. ग. °त्रे च । ७ क. ग. °स उ° । ८ °नन्दोऽपाने चोत्सर्गो बु° ।

तेषां प्रत्येकं सप्त सप्त स्वरा भवन्ति तेषां षट् च षट् च रागिण्यो देश्यास्त्रियो भवन्तीति षट्त्रिंशत्ता ज्ञेयाः ।

ता यथा—"गौडी कोलाहली धाली द्रविडी मालवकौशिका ।
षष्ठी स्यादेव गान्धारी श्रीरागाच्च विनिर्गताः ॥
अन्दोली कौशिकी चैव रागरी पुटमञ्जरी ।
गंगरी चैव देशाख्या वसन्तस्य प्रियास्त्विमाः ॥
भैरवी गुर्जरी चैव भाषा वेलावली तथा ।
कर्णाटी रक्तसिंहा च पञ्चमतो विनिर्गताः ॥
त्रिगुणा स्तम्भनीया च आभीरी कुकुभा तथा ।
विप्री राडी च सामेरी भैरवाच्च विनिर्गताः ॥
वङ्गारा मधुरा चैव कामोदा चोकसाटिका ।
कम्बुग्रीवा च देवाला मेघरागाद्विनिर्गताः ॥
त्रोटकी मौटकी डुम्बी नट्वा चैव प्रकीर्तिता ।
गान्धारी शूद्रमहूलारी जाता नट्टनरायणात् " इति ॥

तेषां मिथुनानां योगोऽस्मिञ्शरीरे भततीति षड्गुणयोगयुक्तमित्यर्थः । इतिशब्द एतदर्थविवक्षार्थः ।

ननु पृथ्व्यादीनां वृत्तयो धारणादयस्त्रयः पञ्चका उक्तास्ते किं सर्वे पुरुषप्रवृत्तिनिवृत्त्योरुपयुञ्जत आहोस्वित्कतिपय इति संशये निर्णयमाह—

**इष्टानिष्टा शब्दसंज्ञाप्रणिधानाद्दशविधा भवन्ति ॥ २ ॥**

**इष्टानिष्टेति** । धारणादिष्विष्टानिष्टानि प्रवृत्तिनिवृत्तिहेतुभूतानि दशविधानि शब्दादीनि पञ्चाऽऽनन्दादीनि चैवं दशविधानि भवन्तीति भावः । धारणाद्युक्तिस्तु पृथिव्यादिसद्भावज्ञापनार्था । इष्टानिष्टत्वे द्वारमुक्तं शब्देति । शब्दप्रणिधानं शब्दप्रयोगजनकत्वं संज्ञाप्रणिधानं प्रत्ययजनकत्वं व्यवह्रियमाणाः प्रतीयमानाश्च दशैव शब्दादय इष्टानिष्टत्वेन प्रवृत्तिनिवृत्तिजनका इत्यर्थः । उभयत्र शेश्छन्दसि बहुलमिति शेरदर्शनम् ॥ २ ॥

**शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुरः सप्तधातुकमिति कस्माद्यथा देवदत्तस्य द्रव्यविषया जायन्ते परस्परं सौम्यगुणत्वात्षड्विधो रसः ।**

सप्तधातुकं कस्मादिति प्रश्न उत्तरविशेषणत्रयप्रश्नस्याप्युपलक्षणम् । समाधानं तु

१ क. ख. ग. °निष्टश° । २ क. ग. °प्रतिविधाः सप्तवि° । ३ च. द्रव्याद्वि° । ४ क. ख. ग. °स्परंरसो गु° ।

तत्र तत्र भविष्यति । शुक्ल इत्याद्यभ्यवहार्यद्रव्याणां प्रकारभेदकथनं न त्वेत एव सप्त धातवस्तेषामग्रे वक्ष्यमाणत्वात् । शुक्लपाण्डुरयोः कृष्णपाण्डुरयोः पीतकपिलयोश्चैत-दवान्तरभेदो द्रष्टव्यः । नीलं च कृष्णेऽन्तर्भाव्यं चित्रं च सर्वेषु । यथा यथालाभम् । देवदत्तस्य पुंसः । द्रव्याणि सप्तप्रकाराणि विषयभोग्यानि । जायन्ते संपद्यन्ते । तेषां परस्परमन्योन्यं सौम्यगुणत्वादनुकूलगुणत्वात् । यथौदनादीनां व्यञ्जनादयोऽनुकूलाः । तेषां परिणामे षड्विधो रसो वर्णतः शुक्लादिरूपः स्वादतो मधुरादिरूपो भवति । चित्र-रसस्य चित्ररूपस्य च षट्स्वेवान्तर्भावात् ।

शोणितादीन्सप्त धातूनाह—

**रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्ज्ञः शुक्रं शुक्रशोणितसंयोगादा वर्तते गर्भः ।**

**रसादिति ।** रसो धातुमूलं न स्वयं धातुस्तादर्थ्यात्तु कैश्चिद्धातुत्वेनोक्तः । रसधा-तुत्वादीनां तु भेदस्ततो नैक्यं द्रष्टव्यम् । **मज्ज्ञ इति ।** मज्जन्शब्दस्य पञ्चम्येकवचनेऽ-ल्लोपोऽनः स्तोश्चुना श्चुः । **वर्तत इति ।** शुक्रशोणितसंयोगादा शुक्रशोणितसंयो-गमारभ्य वर्तते प्रवर्ततेऽस्तित्वं भजत इत्यर्थः ।

धातूनां स्थानमाह—

**हृदि व्यवस्थानीति ।**

**हृदिव्यवस्थानीति ।** एतान्युक्तानि धातुरूपाणि हृदि व्यवस्था येषां तानि हृदि-व्यवस्थानि । सप्तम्या अलुक् । अत एव धातुन्यासो हृदय उक्तः । धातुप्राणेषु हृत्स्थलमिति ।

पुनर्हृदये कानीत्यत आह—

**हृदयेऽन्तराग्निरग्निस्थाने पित्तं पित्तस्थाने वायुः ।**

हृदयेऽन्तराग्निर्वर्तते । अन्तरश्चासावग्निश्च । अग्निरोजः । तदुक्तं **प्रपञ्चसारे**— " शुक्रं परिणतं हि स्यादोजो नामाष्टमी दशा " इति । अग्निस्थाने पित्तमिति । अग्निरोजः स एव स्थानमाधारस्तत्र पित्तम् । अग्नौ तेजोरूपं प्रवर्तकं पित्तमित्यर्थः । *पित्तस्थो वायुर्वातः । वायुं विना प्रवृत्त्यनुपपत्तेः । हृदयावकाशे तनुजाः पित्तवाता

* मूलेऽयं पाठो न दृष्टः ।

१ क. ख. ग. 'द्वसोऽस्थी' । २ क. ख. ग. मज्जायाः । च. मज्जातः । ३ क. ख. ग. शुक्लं । ४ क. ख. ग. शुक्लशो' । ५ क. ख. ग. 'वस्थां नयति हृदयेभ्योऽन्त' ।

वर्तन्त इत्यर्थः । एतत्कफस्याप्युपलक्षणं दोषाणां वातपित्तकफानां दूष्यापरनामकधातुसमानदेशत्वस्यौचित्यात् ।

ततः किमित्यत आह—

**वायुस्थाने हृदयं प्राजापत्यात्क्रमात् ॥ ३ ॥**

त्हृदयं लिङ्गं प्राजापत्यात्क्रमात्प्रवर्तते । प्राजापत्यः क्रमो यथा । स आत्मानं द्वेधाऽपातयत् । पतिश्च पत्नी चाभवतामिति । प्रजापतिर्यथैकः सन्द्विधा भूतस्तथा हृदयोपलक्षितं लिङ्गमपि द्विधा भवति वाय्वाघातेन दीपादिव प्रदीपः कुसुमादिव गन्ध इति न समूलोत्क्रमश्चाऽऽशङ्कनीयस्तेन **शरीरं** वातपित्तकफात्मकमुच्यते । अत्रार्थे त्हृदयादधिजायस इति मन्त्रो लिङ्गम् । यद्वा प्राजापत्यः क्रमो धूमादिमार्गः प्रश्ने संवत्सरो वै प्रजापतिरित्यादिना प्रजापतित्रतोक्तो द्रष्टव्यः । स चाऽऽरोहावरोहक्रमः 'तद्य इत्थं विदुः' इत्यादिश्छान्दोग्य उक्तः ।

**गीतायां** च—"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।

तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते" इति ॥

प्राजापत्यात्क्रमात्पञ्चम्यामाहुतावृतुकाले प्रयोगादित्यन्वयः । एतेन त्रिमलं कस्मादिति प्रश्न उत्तरितः कफादीनां श्लेष्मादिमलरूपत्वात् ॥ ३ ॥

**ऋतुकाले[2] प्रयोगादेकरात्रोषितं कलिलं[3] भवति सप्तरात्रोषितं बुद्बुदं भवत्यर्धमासाभ्यन्तरेण पिण्डो भवति मासाभ्यन्तरेण कठिनो भवति मासद्वयेन शिरः कुरुते मासत्रयेण पादप्रदेशो भवत्यथ चतुर्थे मासेऽङ्गुल्यजठरकटिप्रदेशो भवति पञ्चमे मासे पृष्ठवंशो भवति षष्ठे मासे नासाक्षिणी श्रोत्राणि भवन्ति सप्तमे मासे जीवेन संयुक्तो भवत्यष्टमे मासे सर्वसंपूर्णो भवति ।**

**ऋतुकाल इति** । अनृतुकाले तु योषिद्धातुपोषकं पुंबीजं भवति । तेन पुंसः संप्रयोगे स्त्रियास्तेजोविशेषो दृश्यते । असंभोगे च जरा दृश्यते । कलिलमीषद्घनं बुद्बुदं वर्तुलम् । **यास्केन** तु सूक्ष्मेक्षिका कृता । तद्यथा—"एकरात्रोषितं कलिलं भवति पञ्चरात्राद्बुद्बुदः सप्तरात्रात्पेशी द्विःसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो भवति मासमात्रात्कठिनो भवति द्विमासाभ्यन्तरे शिरः संपद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्टयेन त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुखनासिकाक्षिश्रोत्रं च संभवति सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याऽध्यवस्यति नवमे सर्वाङ्गसंपूर्णो भवति" इति । जीवेन जीवालिङ्गेन चलनवलनादिना प्राग्जीवाभावे वृद्ध्यसंभवात् ।

**पितू[4] रेतोतिरिक्तात्पुरुषो भवति मातू[5] रेतोतिरिक्तात्स्त्रियो भव-**

---

१ च. 'युर्मे हृ°' । २ क. ख. ग 'ले संप्रयोग एक°' । ३ च. कललं । ४ क. च पितुरे° । ५ क. च मातुरे° ।

**न्त्युभयोर्बीजतुल्यत्वान्नपुंसको भवति व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्त्यन्योन्यवायुपरिपीडितशुक्रद्वैध्या-द्द्विधा तनूः स्याद्युग्माः प्रजायन्ते पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादिज्ञाना ध्यानात्क्षरमक्षरं मोक्षं चिन्तयतीति**

पितुरिति । अनेन द्वियोनि कस्मादिति परिहृतम् । व्याकुलितमनसो भयादिविक्षिप्तचित्तान्निषेक्तुः । अन्योन्यस्य स्त्रीपुंसस्य वायुना परिपीडितं यच्छुक्रं तस्य द्वैविध्यात्तनूः शुक्रस्वरूपं द्विधा स्यात्ततो युग्माः प्रजायन्ते । पञ्चात्मकः पञ्चभूतात्मकः पिण्डः समर्थश्चिन्तनादौ । पञ्चात्मिका शब्दादिविषया । चेतसाऽन्तःकरणेन । गन्धरसादिविषयं ज्ञानं यस्याः सा गन्धरसादिज्ञाना बुद्धिर्भवति । सा क्षरमनित्यमक्षरं नित्यं मोक्षं च चिन्तयति । इतिशब्दो गर्भनिष्पत्तिसमाप्तौ ।

किं चिन्तयतीत्यत आह—

**तदेकाक्षरं ज्ञात्वाऽष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनाम् ।**

तदेकाक्षरं ब्रह्म प्रणवं चिन्तयति । तज्ज्ञात्वा प्रकृतयोऽष्टौ विकाराः षोडश ज्ञायन्त इति शेषः । उपादानज्ञानात् ।

तदुक्तम्—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति ॥

तत्र मुख्यव्यापाराभावेऽनश्नन्कथं वर्धत इत्यत आह—

**अथ मात्राऽशितपीत नाडीसूत्रगतेन प्राण अप्यायते ।**

अथेति । मात्रा जनन्या । अशितपीतेत्यविभक्तिको निर्देशः । अशितपीतेनेत्यर्थः । बालकस्तु रतिसमये पुरुषासनवान्मातुः संमुखो वर्धते पितृप्रतिशरीरत्वात्तथा च तस्य नाभिसंबद्धा नाडी मातुर्हृदयेन संबध्यते सैव सूत्रं तद्गतेनान्नरसेन तस्य प्राण आप्यायतेऽत एव जातमात्रस्य शिरसि कर्णद्वयमध्यदेशे मातृहृदयास्थिचिह्नं लेखा दृश्यते सा मातुः संमुखत्वं व्यनक्ति ।

**अथ नवमे मासि सर्वलक्षणसंपूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म भवति शुभाशुभं च कर्म विन्दति ॥ ४ ॥**

सर्वेति । सर्वैर्लक्षणैर्ज्ञानैर्मनुष्यत्वादिजातिव्यञ्जकैरवयवैः । अथवा सर्वेषां लक्षणानां ज्ञानकारणानामिन्द्रियाणां ज्ञानेन दर्शनश्रवणादिना सम्यक्पूर्णो भवति संपद्यते । पूर्वजातीः प्राक्तनजन्मानि । विन्दति लभते जानीत इत्यर्थः ॥ ४ ॥

---

१ क. ख. ग. °डितानां शुक्रद्वैधे स्त्रियो योन्या युग्माः । २ क. °श्चात्मकेन चेतसाऽधिगन्धनसश्च ज्ञानाद्ध्यानादक्षरमोंकारं चिन्तयति । ३ क. ख. ग. °दैतदेका° । ४ ख. °त्वा चाष्टौ । ५ क. ग. °थ नव° ।

नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः[1] ॥ ५ ॥

नानेति । इतोऽस्याभिलाषमाह—आहारा इति । विविधाः श्वशूकरादिभोग्या अपि । पीताश्चेति नानायोनिषु जातत्वात् ॥ ५ ॥

जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्[2] ॥ ६ ॥

मृतस्यैवेति शरीरं कस्मादिति प्रश्नस्य शीर्यत इति व्युत्पत्त्योत्तरम् । जन्मेति । जन्मनः प्रादुर्भाव एको जन्मान्तरं वा द्वितीयं जन्म ॥ ६ ॥

यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।
एकाकी तेन दह्यामि गतास्ते फल[3]भोगिनः ॥ ७ ॥

पारिजनस्य पुत्रकलत्रादेः । एकाकीति । कर्तुरेव पापसंबन्धो नार्जितद्रव्यभोक्तुरित्यत्रार्थ इदं लिङ्गम् ॥ ७ ॥

यदि योन्यां प्रमुञ्चामि सांख्यं यो[4]गं समभ्यसेत् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ ८ ॥
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम्[5] ॥ ९ ॥

यदीति । हरिहरयोरविशिष्टं भुक्तिप्रदत्वमत्रार्थ इदं लिङ्गम् । अभ्यसेदभ्यसेयम् । ॥ ८ ॥ ९ ॥

जन्तुः स्त्रीयोनिशतं योनिद्वारि संप्राप्ते
यन्त्रेणाऽऽपीड्यमानो महता दुःखेन

अथ प्रसूतिवायुनाऽधोमुखत्वं नीतो योनियन्त्रेण संकोचमानगात्रो दुःखेन जन्ममरणानि न स्मरतीत्यग्रेतनेन संबन्धः ।

जातस्य ततोऽस्मरणे हेत्वन्तरमाह—

जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति
जन्ममरणं न च कर्म शुभाशुभम् ॥ १० ॥

जातेति । वायुना मायारूपेण ।

---

१ ख. °नाः । मातरो विविधा दृष्टाः पितरः सुहृदस्तथा । अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः । जा° । २ क. ग. °म् । यदि । ३ ख. °लभागि° । ४ क. ग. °गं वा समाश्रये । अ° । ५ क. ग. °म् । यदि योन्यां प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम् । अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् । यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्यामि गतास्ते फलभोगिनः । ज° ।

तदुक्तम्—" दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते " इति ॥ १० ॥

**शरीरमिति कस्मात्साक्षादग्नयोऽत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति ।**

**श्रियन्त इति** । श्रयन्त इति वक्तव्य इयङ् । ज्ञानाग्निः शारीरोऽग्निर्भोक्ता शुभाशुभस्य । दर्शनाग्निः प्रमाता । कोष्ठाग्निः—

" अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् " इत्युक्तः ॥

अन्त्यादिक्रमेण त्रयाणां लक्षणमाह—

**तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पचतीति रूपादीनां दर्शनं करोति ज्ञानाग्निः शुभाशुभं च कर्म विन्दति यस्तत्र ।**

**तत्रेति** । **अशितेति** । अनेन चतुर्विधाहारमयं कथमिति प्रश्नस्योत्तरमुक्तं भवति । **स** च गार्हपत्यो भूत्वा नाभ्यां तिष्ठति । **दर्शनाग्निरिति** । स चतुरस्र आहवनीयो भूत्वा मुखे तिष्ठति । **ज्ञानाग्निरिति** । स चार्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति । विन्दति लभते भोक्तेत्यर्थः ।

अत्राग्नित्रये सति शरीरे यज्ञदृष्ट्योपासनमाह—

**त्रीणि स्थानानि भवन्ति हृदये दक्षिणाग्निरुदरे गार्हपत्यं मुखादाहवनीयमात्मा यजमानो बुद्धिः पत्नीं मनो ब्रह्मा निधाय लोभादयः पशवो धृतिर्दीक्षा संतोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भा मुखमन्तर्वेदिः ।**

**त्रीणीति** । आहवनीयो दर्शनाग्निर्गार्हपत्यः कोष्ठाग्निर्दक्षिणाग्निर्ज्ञानाग्निः । अग्नित्रयं स्थानत्रये स्मृत्वाऽऽहवनीयादिबुद्धिः कार्या । आत्मा यजमानोऽधिपतित्वात् । मनो ब्रह्मा सौम्यत्वात् । लोभादयः पशवो वध्यत्वात् । धृतिः संतोषश्च दीक्षा निवृत्तिसाम्यात् । बुद्धीन्द्रियाणि यज्ञपात्राण्युपयुज्यमानतया व्याप्रियमाणत्वात् । कर्मेन्द्रियाणि हवींषि ज्ञानाग्नौ होमात् । शिरः कपालं तत्साम्यात् । केशा दर्भा विक्षिप्तत्वात् । मुखमन्तर्वेदिर्मुखस्थलत्वात् ।

इदानीं शरीरेऽवयवविभागमाह—

**चतुष्कपालं शिरः षोडश पार्श्वदन्तोष्ठपटलानि सप्तोत्तरं मर्म-**

१ क. ग °स्म ज्ज्ञाना° । २ क ग. ° ति य° । ३ क. ग °नीयं य° । ४ क. ग °मानाय बु° । ५ क. ग. °त्नीं निधाय दीक्षां संतोषं बुद्धीन्द्रियाणि यज्ञपात्राणि शि° । ६ क. ग. °णि शि° । ७ क ग. °वेदिः षो° । ८ क. ग. °दन्तपटलान्यष्टोत्त° ।

**शतं साशीतिकं संधिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतान्यस्थीनि च ह वै त्रीणि शतानि षष्टिश्चार्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पलानि जिह्वा पित्तप्रस्थम् ।**

**चतुरिति** । तदुक्तं याज्ञवल्क्येन—"द्वौ शङ्खौ कपालानि चत्वारि शिरसस्तथा" इति । अष्टकपालं शिरः संपद्यत इति तु **यास्कः** । **षोडशेति** । षोडश पार्श्वानि षोडश दन्ताः षोडशौष्ठा दन्तस्थलानि षोडश पार्श्वस्थलानि । एवं द्वितीयभाग एवं सति चतुःषष्टिर्दन्ता स्थालैः सह तावन्ति पार्श्वानि पटलैः सह ।

तदुक्तम्—"स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः" इति ।
"पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः" इति ॥

**सप्तोत्तरमिति** । तदुक्तम्—'सप्तोत्तरं मर्मशतम्' इति । **साशीतिकमिति** । तदुक्तम्—'द्वे च संधिशते तथा' इति । अवान्तरभेदमादायाऽऽधिक्यं **स्मृतावुक्तम्** । सनवकमित्यादि नवसंख्यापरिमाणमस्येति नवकं नवकत्वेन सह वर्तते सनवकं सधीरं सानुकूलमितिवद्भावप्रधानो निर्देशो नव स्नायुशतानीत्यर्थः । तदुक्तम्—"शिराशतानि सप्तैव नव स्नायुशतानि च" इति । **पञ्च मज्जाशतानीति** । मज्जा पेशी । तदुक्तम्—"पञ्च पेशिशतानि च" इति । **अस्थीनि चेति** । तदुक्तम्—"तथाऽस्थ्नां च सह षष्ट्या शतत्रयम्" इति । **अर्धचतस्र इति** । तिस्रः कोट्य एका चार्धको ट्यित्यर्थः । इदं तु स्थूलकेशाभिप्रायेण सूक्ष्माभिप्रायेण तु **याज्ञवल्क्योक्तं** बोद्धव्यम् ।

यथा—"रोम्णां कोट्यस्तु पञ्चाशच्चतस्रश्च तथाऽपराः ।
सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह ॥
वायवीयैर्विगण्यन्ते विभक्ताः परमाणुभिः" इति ॥

**हृदयमिति** । हृदयशब्देन रसः । जिह्वाशब्देन च जलमुच्यते । तदुक्तम्—"रसस्य नव विज्ञेया जलस्याञ्जलयो दश" इति । **पित्तप्रस्थमिति** । पित्तस्य प्रस्थं सपादमानीद्वयं मानी तरुष्काणां सेरः । तदुक्तम्—'पञ्च पित्तम्' इति । अञ्जलय इति वर्तते ।

**कफस्याऽऽढकं शुक्रं कुडवं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषैमाहारपरिमाणात् ।**

**कफस्याऽऽढकमिति** । चतुष्प्रस्थं तथाऽऽढकम् । **शुक्रं कुडवमिति** । शुक्रस्यार्धशराव इत्यर्थः । **याज्ञवल्क्येन** तु—"श्लेष्मौजसस्तावदेव रेतसस्तावदेव च" इति कफशुक्रयोः समपरिमाणत्वमुक्तम् । **मेदः प्रस्थौ द्वाविति** । **याज्ञवल्क्येन** तु—'द्वौ

१ क. ग. °शतमशीतिसंधिशतं नव स्ना° । २ क. ग. °शतमष्टसहस्रं रोमको° । ३ क. ग. °दयप° । ४ क. ख. ग. °षणोरहरहः पानपरिमाणं पैप्प° ।

मेदे' इत्युक्तम् । अञ्जलिग्रहणं वर्तते । अनियतमिति । याज्ञवल्क्येन तु नियम उक्तः— "सप्तैव तु पुरीषस्य चत्वारो मूत्रमेव च" अञ्जलय इति वर्तते तत्तु प्रायोभिप्रायेण । निष्कर्षे क्रियमाणे तु नास्ति नियमः । अनियमे हेतुराहारपरिमाणादिति । तस्मिन्नधिकेऽधिकं न्यूने न्यूनमित्यर्थः ।

**पैप्पलादं मोक्षशास्त्रं परिसमाप्तं पैप्पलादं मोक्षशास्त्रं परिसमाप्तम् ॥ ११ ॥**

**ॐ भद्रं कर्णेभिः ० सह नाविति शान्तिः ॥**

**इति गर्भोपनिषत्समाप्ता ॥ १० ॥**

पिप्पलादेन प्रोक्तं पैप्पलादम् । द्विरुक्तिः समाप्त्यर्था । अत्र प्रसङ्गात्पलादिज्ञानार्थं मागधपारिभाषोच्यते ।

तद्यथा—"न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः ।
त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते ॥
जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते ।
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरेणुः स निगद्यते ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रोऽसौ वटकश्चैव ईक्षणः स निगद्यते ॥
कोलद्वयं च कर्षः स्यात्स प्रोक्तः पाणिनामिकः ।
अक्षः पिचुः पाणितलं किंचित्पाणिश्च तिन्दुकम् ॥
बिडालपदकं चैव तथा षोडशिका मता ।
करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥
औदुम्बरं च पर्यायैः कर्ष एव निगद्यते ।
स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिता तथा ॥
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ।
प्रकुञ्चं षोडशी बिल्वं पलमेवात्र कीर्तितम् ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतिश्च निगद्यते ।
प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्धशरावकः ॥

अष्टमानं च विज्ञेयः कुडवाभ्यां च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥
शरावाभ्यां भवेत्प्रस्थं चतुष्प्रस्थैस्तथाऽऽढकम् ।
भाजनं कांस्यपात्रं च चतुषष्टिपलश्च सः ॥
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः ।
उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञिताः ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।
सूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मदर्शिभिः ।
चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥
पलानां द्विसहस्रं च भार एकः प्रकीर्तितः ।
तुला पलशतं प्रोक्तं सर्वत्रैवैष निश्चयः ॥
माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् ।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥
गुञ्जादिमानमारभ्य यावच्च कुडवास्थितिः ।
द्रव्यादिशुष्कद्रव्याणां तावन्मानं समं मतम् ॥
प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः ।
मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ॥
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ।
विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ॥
यदौषधं तु प्रथमं यस्य योगस्य कथ्यते ।
तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चये" इति ॥ ११ ॥
नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां गर्भोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचितगर्भोपनिषद्दीपिका समाप्ता ॥ १४ ॥

---

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ गर्भोपनिषत् ।

## शंकरानन्दविरचितदीपिकासमेता ।

संसारदुर्वैतरणीनिमग्नान्निरीक्ष्य सर्वान्बहुधाऽस्मदादीन् ।
मातेव पुत्रान्घृणया श्रुतिर्नः प्राहेदमत्र त्यजताभिमानम् ॥ १ ॥
गर्भोपनिषदो व्याख्यां करिष्येऽस्मिन्शरीरके ।
अहंबुद्धिहरां तस्याः करणात्तुष्यताद्धरः ॥ २ ॥

सर्वोपनिषदां संबन्धादिचतुष्टयस्य साधारण्यान्न तत्पृथग्वर्णनीयम् । अत्र तु सत्यप्युपनिषत्साधारण्ये शरीरके वैराग्यं विशेषतः प्रतिपाद्यते ततः शरीरमेवोररीकृत्याऽऽह—

**ॐ भद्रं कर्णेभिः० सह नाववितु शान्तिः ॥**

**ॐ पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् ।**
**तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमयं शरीरम् ॥ १ ॥**

**पञ्चात्मकं** पञ्च पृथिव्यप्तेजोवाय्वाकाशा आत्मानः स्वरूपमुपादानं वा यस्य तत्पञ्चात्मकम् । **पञ्चसु** शब्दस्पर्शरूपरसगन्धेषु वक्तव्यादानगतिविहरणानन्देषु च विषयेषु चक्षुःश्रोत्रघ्राणरसनत्वग्वाक्पाणिपायूपस्थेषु च निमित्तेषु । **वर्तमानं** वृत्तिं कुर्वन् । **षडाश्रयं** षण्मधुराम्ललवणतिक्तकटुकषायास्त्वगसृङ्मांसमज्जास्थिशुक्रहेतवः स्तम्भ इवाऽऽश्रया यस्य शरीरस्य तत्षडाश्रयम् । **षड्गुणयोगयुक्तं** षडशनायापिपासाशोकमोहजरामरणलक्षणा गुणास्तेषां योगः संबन्धो मनःषष्ठानामिन्द्रियाणां वा गुणा ज्ञानानि तैर्योगः षड्गुणयोगस्तेन युक्तं संबद्धं षड्गुणयोगयुक्तम् । तं तद्वक्ष्यमाणम् । **सप्तधातुं** सप्त त्वगसृङ्मांसमेदोस्थिमज्जाशुक्ररूपा धातवो धारका गृहस्येव स्तम्भा यस्य तत्सप्तधातु सप्तधात्वेव सप्तधातुम् । **त्रिमलं** त्रयो लोहितशुक्लकृष्णरूपाः शरीरारम्भकबीजस्योपष्टम्भकाः सत्त्वरजस्तमःशब्दाभिधेयाः शुक्रशोणिततत्संबन्धा वा पुण्यपापव्यामिश्ररूपा वा मूत्रपूरीषशरीरारम्भकरूपा वा मला इव हेया यस्य तत्त्रिमलम् । **द्वियोनिं** द्वियोनि द्वे पुण्यपापे समसुखदुःखसंस्कारे शुक्रशोणिते वा योनी कारणे यस्य तद्द्वियोनि द्वियोन्येव द्वियोनिम् । **चतुर्विधाहारमयं** लेह्यपेयचोष्यभोज्यैश्चतुर्भिः प्रकारैर्वर्तमानमन्नमहार्यमाणं चतुर्विधाहारस्तस्य विकारश्चतुर्विधाहारमयम् । **शरीरं** शीर्यत इति शरीरं विनाशि कलेवरम् ॥ १ ॥

अत्रापेक्षितं क्रियापदमाह श्रुतिः—

**भवति पञ्चात्मकमिति कस्मात्,**

**भवति** । स्पष्टम् । यस्मादिदमेतादृशं तस्मादस्माज्जुगुप्सा करणीयेति वाक्यशेषः । इदानीं मन्त्रं व्याकर्तुं साक्षेपं मन्त्रपदमादत्ते—**पञ्चात्मकम्** । व्याख्यातम् । **इतिः** प्रतीकार्थः । **कस्मात्**केन कारणेन । पञ्चात्मकशब्दप्रवृत्तावस्ति किंचिन्निमित्तमथ वा डित्थादिवत्परिभाषा निमित्तमित्याक्षेपार्थः । उच्यत इति शेषः ।

यौगिकोऽयं शब्द इत्यभिप्रायेणोत्तरमाह—

**पृथिव्यापस्तेजो वायुराकाशमिति ।**

**पृथिव्यापस्तेजो वायुराकाशम्** । स्पष्टाः पृथिव्यादयः पञ्चापि पदार्था आरम्भका इति शेषः । इति यस्मात्पृथिव्यादय आरम्भकास्तस्मात्पञ्चात्मकमुच्यत इति शेषः ।

इदानीं पृथिव्यादिस्वरूपज्ञानार्थं पृच्छति—

**अस्मिन्पञ्चात्मके शरीरे का पृथिवी का आपः किं तेजः को वायुः किमाकाशमिति ।**

**अस्मिन्**प्रत्यक्षे । **पञ्चात्मके** पञ्चभूतात्मके । **शरीर** उक्ते । **का पृथिवी का आपः किं तेजः को वायुः किमाकाशम्** । अत्र किंशब्दपञ्चकं यथालिङ्गं यथावचनं प्रश्नार्थं व्याख्येयम् । स्पष्टाः पृथिव्यादयः पञ्चापि पदार्थाः । इति अनेन प्रकारेण । प्रश्नमकरोदिति शेषः ।

उत्तरार्थमुक्तमनुवदति—

**अस्मिन्पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्संचरति स वायुर्यत्सुषिरं तदाकाशमित्युच्यते।**

**अस्मिन्पञ्चात्मके शरीरे** । व्याख्यातम् । **यत्**प्रसिद्धम् । **कठिनं** करस्पर्शे निबिडावयवं च । **सा** वक्ष्यमाणा **पृथिवी** । स्पष्टम् । **यत्**प्रसिद्धम् । **द्रवं** शिथिलावयवं स्नेहावयववच्च । **तत्**छरीरैकदेशभूतम् । **आपः** । स्पष्टम् । **यत्**प्रसिद्धम् । **उष्ण**मुष्णस्पर्शवत् । **तत्**छरीरैकदेशभूतमुक्तम् । **तेजः** । स्पष्टम् । **यत्**प्रसिद्धम् । **संचरति** सम्यक्चलनं करोति । **सः**, वक्ष्यमाणः । **वायुः** । स्पष्टम् । **यत्**प्रसिद्धम् । **सुषिरं** छिद्रवच्छिद्रमित्यर्थः । **तद्**वक्ष्यमाणम् । **आकाशम्** । स्पष्टम् । **इति** अनेन प्रकारेण । **उच्यते** कथ्यते विद्वद्भिः । इदं पदद्वयं पृथिव्यादिपञ्चकेऽपि संबध्यते ।

इदानीं पृथिव्यादीनां कर्माण्याह—

**तत्र पृथिवी नाम धारण आपः पिण्डीकरणे तेजो रूपदर्शने वायुर्व्यूहन आकाशमवकाशप्रदाने पृथक्,**

**तत्र** तेषु पृथिव्यादिषु । **पृथिवी** । स्पष्टम् । **नाम** प्रसिद्धा । **धारणे** पतनप्रति-

बन्धकर्मणि । भवतीत्यत्र वक्ष्यमाणे च वाक्यचतुष्टये शेषोऽवगन्तव्यः । **आपः** । स्पष्टम् । **पिण्डीकरणे** विशिथिलावयवस्य कठिनस्य बन्धनकर्मणि । **तेजः** स्पष्टम् । **रूपदर्शने** रूपस्य शुक्ललोहितकृष्णादेर्दर्शने चक्षुरादीनां साक्षात्कारकरणकर्मणि । **वायुः** । स्पष्टम् । **व्यूहन** इतस्ततो नयनकर्मणि । **आकाशम्** । स्पष्टम् । **अवकाशप्रदाने**ऽवकाशप्रदानकर्मणि । **पृथक्**, पृथिव्यादीनां व्यापारा उक्तेन प्रकारेण विभिन्नाः । अनेन व्यापारकथनेन शरीरस्यापि व्यापारपञ्चकस्योक्तत्वात्पञ्चसु वर्तमानमित्येतदपि व्याख्यातमर्थात् ।

इदानीं पञ्चसु वर्तमानमित्येतदेव व्याख्यातुं विनाऽपि प्रश्नमुत्तरमाह—

**चक्षुःश्रोत्रे ।**

**चक्षुःश्रोत्रे** । चक्षू रूपग्राहकमिन्द्रियं श्रोत्रं च शब्दग्राहकम् । इन्द्रियाणां प्राधान्यादेतयोरेवेह ग्रहणेन ज्ञानकर्मेन्द्रियाणां ग्रहणं सिद्धं भवति ।

इदानीमुपलक्षणन्यायेन केषांचिदिन्द्रियाणां विषयान्व्यापारांश्चाऽऽह—

**चक्षुषी रूपे जिह्वोपस्थश्चाऽऽनन्दश्चापाने चोत्सर्गः,**

**चक्षुषी** चक्षुर्गोलकरूपे तदुपलक्षितं चक्षुरिन्द्रियमित्यर्थः । **रूपे** रूपविषये व्यापारं कुरुत इति शेषः । **जिह्वा** रसनेन्द्रियं रसे व्यापारं कुरुत इति शेषः । **उपस्थश्च** प्रजननेन्द्रियमपि । चकारात्पाय्विन्द्रियमपि । **आनन्द** आनन्दहेतुः । **अपाने च**, अपाने कर्मण्यप्यधोनयनरूपे पायुः । **उत्सर्गो** मलमूत्रोत्सर्गहेतुः । चकारादपाने चेत्यत्र पठितादपानोत्सर्गयोरुक्तयोः कर्मणोः समुच्चयः ।

इदानीं प्रसङ्गादन्तरेन्द्रियस्य द्विधाभिन्नस्य कर्माऽऽह—

**बुद्ध्या बुध्यति मनसा संकल्पयति वाचा वदाति ।**

**बुद्ध्या** निश्चयरूपिण्या । **बुध्यति** बुध्यत इदमित्थमिति निश्चिनोति । **मनसा संकल्पयति** । संकल्पविकल्पात्मकं मन इदं भूयादिति संकल्पं करोति । **वाचा** वागिन्द्रियेण **वदाति** वदनव्यवहारं करोति । उपलक्षणमेतत्पद्भ्यां गच्छति पाणिभ्यामादत्ते त्वचा स्पृशति घ्राणेन जिघ्रति श्रोत्रेण शृणोतीत्येतेषामनुक्तानामपि ।

पूर्ववत्पदान्तरमादत्ते व्याकर्तुम्—

**षडाश्रयमिति कस्मात्,**

**षडाश्रयं** प्रतीकमिदम् । **इतिः** प्रतीकार्थः । **कस्मात्** । व्याख्यातम् ।

षड्रसलाभादित्युत्तरमाह—

**मधुराम्ललवणतिक्तकटुकषायरसान्विन्दते ।**

**मधुराम्ललवणतिक्तकटुकषायरसान्** । कटुर्मरीच्यादेः । मधुरो दुग्धादेः । अम्लो जम्बीरादेः । लवणः सैन्धवादेः । तिक्तो निम्बादेः । कषायो हरीतक्यादेः ।

मधुराम्ललवणातिक्तकटुकषायाश्च ते रसाश्च मधुराम्ललवणातिक्तकटुकषायरसास्तान्विन्दते जीवकृतादृष्टानुसारेण प्राप्नोति।

इदानीं सप्तधातुमिति पदस्य व्याख्यानार्थं पूर्वपक्षमाह—

**षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्चेतीष्टानिष्टशब्दसंज्ञाः प्रतिविधाः सप्तविधा भवन्ति ॥ २ ॥**

**षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्च**। षड्जादयः सप्त स्वरा मयूरादिजीवयोनयः सामशिक्षागन्धर्वशास्त्रादौ प्रसिद्धास्ते धातुशब्दवाच्या इति केषांचिन्मते तन्मतं तु दुष्टमिति षड्जादीनां सप्तानामनुवादेनैव दर्शितवती चकारात्सप्त लोकाः पातालानि चेत्यादीनि परेषां मतानि सूचितवती। **इति**। अनेन प्रकारेण। **इष्टानिष्टशब्दसंज्ञाः**। सर्वे हि शब्दाः षड्जादिभिः सप्तभिः स्वरैर्व्याप्ताः सुखकारिणो दुःखकारिणश्चेति द्वेधा भवन्ति तद्द्वैधमुररीकृत्येदं वचनम्। इष्टो मनोनुकूलोऽनिष्टस्तद्विपरीत इष्टानिष्टाश्च ते शब्दसंज्ञाश्चेष्टानिष्टशब्दसंज्ञाः। **प्रतिविधाः**। विधां विधां प्रकारं प्रति वर्तन्त इति प्रतिविधाः सर्वप्राणिभेदेषु सुखदुःखकारिण इत्यर्थः। **सप्तविधाः**। षड्जादिस्वरसंभेदात्सुखदुःखकारित्वेन द्विविधा अपि स्वरूपेण सप्तप्रकाराः। **भवन्ति**। स्पष्टम् ॥ २ ॥

उपेक्ष्यैतन्मतं मतान्तरमप्येतादृशं वर्णमात्रमेव सप्तधातुशब्दाभिधेयमिति दर्शयति—

**शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुरः।**

**शुक्लो** गोक्षीरवर्णाभः। **रक्तः** प्रवालारुणः। **कृष्णो**ऽञ्जनचयाभः। **धूम्रः** शिखरिशिखरस्थशिखितत्केतुसमानवर्णः। **पीतः** कनकसमानवर्णः। **कपिलः** कपिलगोवर्णः। **पाण्डुरः** काश्मीरपाषाणसमानवर्णः। एते सप्त धातुशब्दाभिधेया इति केचन।

एतदपि पूर्ववदुपेक्ष्यैव स्वमतं दर्शयितुं पूर्ववत्पक्षान्तरमादत्ते—

**सप्तधातुमिति कस्मात्,**

**सप्तधातुम्,**। प्रतीकमिदं स्पष्टत्वाच्छ्रुत्या न व्याख्यातमिति व्याख्येयम्। अथवा यथा पञ्चसु वर्तमानमिति पदं विना प्रश्नं व्याख्यातं तद्वत्षड्गुणयोगयुक्तमित्यपि। षट् षड्जाद्या गुणाः शुक्लाद्यास्तेषां योगः संबन्धस्तदुपलम्भ इत्यर्थः। तेन युक्तं संबद्धं षड्गुणयोगयुक्तम्। सममन्यत्। **इतिः** प्रतीकार्थः। **कस्मात्**केन निमित्तेनोच्यत इति शेषः।

धातुशब्दस्य त्वगादिद्रव्यवाचित्वात्तत्संबन्धात्सप्तधातुशब्दस्य द्रव्यवाचित्वमुपपादयति—

**यथा देवदत्तस्य द्रव्यविषया जायन्ते।**

**यथा** येन प्रकारेण। **देवदत्तस्य** धातुशब्दधातुप्रत्यया **द्रव्यविषया**स्ताम्रगैरिकादिविषयाः। **जायन्ते**। स्पष्टम्। तद्वदत्रापीति शेषः।

धातूनां परस्परोपकार्योपकारकभावमन्तर्बहिः समानमाह—

**परस्पररसः,**

**परस्पररसः** । परस्परं त्रपुसीसादे रजतसुवर्णादिः केनाचिदौषधेन संबन्धाद्रसः सारो भवतीति शेषः । एवं रजतसुवर्णादेरपि त्रपुसीसादिः ।

न चात्रान्ययोगादन्यस्य विनाशः शङ्कनीय इत्याह—

**गुणत्वात्,**

**गुणत्वा**द्यथा लोके सौशील्यादिगुणसमागमे न पुंसो विनाशस्तद्वत्त्रपुसीसादेः सुवर्णरजतरसो गुणस्तस्य भावस्तत्त्वं तस्मात् ।

एवं बाह्येष्वपि फलादिषु कषायाम्लादिभ्यो मधुरादिर्गुडादिभ्यः कषायादिः । तथा चैक एव रसस्तत्परिणामभेदादनेकधा तदेतदभिप्रायेण मधुरादिरसेष्वाह—

**षड्विधो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रम् ।**

**षड्विधो** मधुरादिभेदेन षट्प्रकारः । **रसः** प्रत्यहमुपभुज्यमान आपादमस्तकं त्वगाकारेण परिणतः । **रसा**दुक्तात्त्वगाकारेण परिणतात् । **शोणितं** रक्तम् । **शोणिता**दुक्तात् । **मांसं** क्रव्यम् । **मांसा**दुक्तात् । **मेदः** श्वेतः कार्पाससमो मांसपिण्डः । **मेदस** उक्तात् । **अस्थीनि** शरीरशालावंशस्तम्भादिभूतानि प्रसिद्धानि । **अस्थिभ्य** उक्तेभ्यः । **मज्जा** वसन्तकालीनघृताकारमस्थ्नोऽन्तर्गतं मांसम् । **मज्जाया** उक्तायाः । **शुक्रं** शरीरपादपबीजम् । एते सप्त धातवः ।

त्रिमलमित्येतद्व्याकरोति—

**शुक्रशोणितसंयोगादावर्तते गर्भो हृदि व्यवस्थां नयाति ।**

**शुक्रशोणितसंयोगात्** । शुक्रं पुंसो बीजम् । शोणितं योषितः । नारीणां षड्धातव इति केचन स्नायुसहिताः सप्तेत्यपरे शुक्रमेव नारीशरीरस्थं रक्तमिति सप्त धातव इति न्यायविदः । यतोऽव्यक्तौ वृषणावप्यङ्गीक्रियेते तासु तत्र कः प्रद्वेषः शुक्रे । अपि च लोहितमात्रस्य तद्बीजत्वाङ्गीकारे पुंस्येव गर्भः स्यात् । ततो लोहितविशेषोऽङ्गीकरणीयः । तथाच तत्रापि सप्तमो धातुरङ्गीकृत इति । विपक्षे च सप्तधातुमित्यादि बाधकमवगन्तव्यम् । तयोः संयोगोऽदृष्टादिसहकृतः संबन्ध इति त्र्यं तस्मा**दावर्तते**ऽमेध्यमूत्रपरिपूर्णां वैतरणीं पूर्वतनूरूपेण परित्यक्तां पुनस्तादृशीमेव नवीनतनुरूपां संसारचक्रे परिवर्तमानो धर्मादिनिमित्तनुत्तः समागच्छति । तदावृत्तिप्रकारमाह । जननीजठरपिठरे मलमूत्रादिदुर्गन्धपूर्णे क्रिमिकोटिकठोरदंष्ट्राकठिने गर्भावरणपटवारुणपाशे भृशं दुःखसहस्रसंतप्तगात्रः परिवर्तते तदेतद्गर्भपदेनोच्यते । गर्भे प्रवेशं कुर्वन्प्रथ-

मतो जन्तुः स्वजनकस्य हृदि सर्वगात्रेभ्यो विनिर्गतरेतोरूपेण हृदयकमले **व्यवस्थां** व्यवस्थाविशेषेणावस्थानं **नयति** प्राप्नोति । इदं सामान्यम् ।

इदानीं हृदि व्यवस्थाया अपि प्राप्तिं दर्शयितुमाह—

**हृदयेभ्योऽन्तराऽग्निरग्निस्थाने पित्तं पित्तस्थाने वायुर्वायुस्थाने हृदयं प्राजापत्यात्क्रमात् ॥ ३ ॥**

**हृदयेभ्यः** । हृदयशब्देन हृदययोग्या जन्तवोऽभिधीयन्ते । तेषु पुराकृतपुण्यपापानुसारेण स्वर्गनरकादिभ्यो यथाशास्त्रं समागतोऽधिष्ठानं करोति तत्र च तेष्वन्नरूपेणावस्थितेषु रेतःसिचाऽद्यमानेषु तेभ्यः । **अन्तरा** रेतःसिग्मध्ये । **अग्निः,** देहान्तःप्रवेशाद्रेतःसिग्जाठरजातवेदसं प्राप्नोति तत्सदृशः संस्तदभिप्रायमिदमाग्निः । अनन्तरम**ग्निस्थाने** यावदापाकमग्निसदृशोऽग्निस्थाने स्थित्वाऽनन्तरं **पित्तं** पित्तसदृशः सन्पित्तं प्राप्नोति । अनन्तरं **पित्तस्थाने** पित्तसदृशः सन्पित्तस्थाने कंचित्कालं स्थित्वा **वायुर्**वातरूपं दोषं तत्सदृशः सन्प्राप्नोति । अनन्तरं **वायुस्थाने** वायुसदृशः सन्वायुस्थाने कंचित्कालं स्थित्वा पितुर्योषित्पिशाचीस्मरणदर्शनादिना संक्षुब्धहृदयस्य सर्वगात्रेभ्यः श्लेष्मबहुलरेतसा सार्धं **हृदयं** हृदयपुण्डरीकं प्राप्नोतीति शेषः । एवं पितुर्हृदये स्थित्वा **प्राजापत्या**त्प्रजापतेरयं प्राजापत्यः प्रजाकामेन विधात्राऽनुष्ठितस्तस्मा**त्क्रमा**त्संचरणाद्योषितोऽधोपहासादित्यर्थः ॥ ३ ॥

तत्रापि कालविशेषनियममाह—

**ऋतुकाले प्रयोग एकरात्रोषितं कलिलं भवति सप्तरात्रोषितं बुद्बुदं भवत्यर्धमासाभ्यन्तरेण पिण्डो भवति मासाभ्यन्तरेण कठिनो भवति मासद्वयेन शिरः कुरुते मासत्रयेण पादप्रदेशो भवत्यथ चतुर्थे मासेऽङ्गुल्यजठरकटिप्रदेशो भवति पञ्चमे मासे पृष्ठवंशो भवति षष्ठे मासे नासाक्षिणीश्रोत्राणि भवन्ति सप्तमे मासे जीवेन संयुक्तो भवत्यष्टमे मासे सर्वसंपूर्णो भवति ।**

**ऋतुकाले** यदा स्वजाया पुष्पवती स्यात्तस्मिन्काले समनन्तरं शुभे दिवस इत्यर्थः । **प्रयोगः** स्वहृदये समागतस्य गर्भस्य प्रकर्षेण योगः स्वभार्यायोनौ प्रक्षेप इत्यर्थः । **एकरात्रोषितं** तद्रेतःसिचा योनौ निषिक्तं रेतः शोणितेन मिलितं गर्भाशयं प्रविष्टमेकेनाहोरात्रेणोषितं निवासं प्राप्तमेकरात्रोषितं सानुशय्यनुशायिकर्मवशाद्गर्भमरुता शोषं नीयमानं गर्भाग्निना च पच्यमानं **कलिलं** पिष्टकमिव नीरे प्रक्षिप्तं बन्धमागच्छद्दर्व्यादौ लग्नं तादृशम् । **भवति** । स्पष्टम् । **सप्तरात्रोषितं** सप्ताहोरात्रोषितं सप्तरात्रोषितम् । **बुद्बुदं** कुक्कुटाण्डाकारं बुद्बुदवददृढावयवम् । **भवति** । स्पष्टम् । **अर्धमासाभ्यन्तरेण** । पक्षस्य मध्ये **पिण्डो** दृढावयवो बिल्वाकारो गोलको **भवति** । **मासाभ्यन्तरेण** । स्पष्टम् ।

**कठिनो** नारिकेलान्तर्गोलकवद्भवति। **मासद्वयेन**। स्पष्टम्। गोलकभावात्प्रच्युतश्चतुरस्रो मांसपिण्डः **शिरो** मस्तकं **कुरुते**। **मासत्रयेण**। स्पष्टम्। **पादप्रदेशः**, अधःकोणद्वयाच्चरणद्वयप्रदेशो दण्डाकारः। **भवति**। स्पष्टम्। ऊर्ध्वकोणद्वयात्पादप्रदेशावद्धस्तप्रदेशोऽपि भवतीत्यनुक्तमपि द्रष्टव्यम्। अथ चतुःशाखे चतुरस्रमस्तकशिखरमांसपिण्डे व्यवस्थिते तदनन्तरं **चतुर्थे मासे**। स्पष्टम्। **अङ्गुल्यजठरकटिप्रदेशः**, अङ्गुलीनामयमङ्गुल्यो हस्तपादतलप्रदेश इत्यर्थः। जठरमुदरं यद्यपि पूर्वमप्यन्तरधिविद्यते तथाऽपि चतुर्थे मासे सुषिरबाहुल्यं भवतीत्येतदभिप्रायं जठरवचनम्। कटिप्रदेशः पादमूलयोरुन्नतौ मांसपिण्डौ जठरसंगतौ। अङ्गुल्यजठरकटीनां प्रदेशः स्थानविशेषो **भवति**। **पञ्चमे मासे** स्पष्टम्। **पृष्ठवंशः** शरीरशालायाः पृष्ठवंशे स्थितः पायुप्रदेशमारभ्याऽऽगलं दण्डायमानो वंशवदस्थिपृष्ठवंशो **भवति**। **षष्ठे मासे**। स्पष्टम्। **नासाक्षिणीश्रोत्राणि** नासा नासापुटद्वयम्। अक्षिणी चक्षुर्गोलके। अत्र समासमध्ये विभक्तेरलोपश्छान्दसः। श्रोत्रे कर्णविवरे नासा चाक्षिणी च श्रोत्रे च नासाक्षिणीश्रोत्राणि। उपलक्षणमिदमास्यपायुशिश्नानाभ्यादिविवराणामन्येन्द्रियाधिष्ठानानां च। भवन्ति। **सप्तमे मासे** स्पष्टम्। **जीवेन** प्राणधारकेण। **संयुक्तः** संबद्धः सुखदुःखाभिज्ञ इत्यर्थः। **भवति**। **अष्टमे मासे**। स्पष्टम्। **सर्वसंपूर्णः** सर्वैरङ्गैरुपाङ्गैः साधिष्ठानैरिन्द्रियैश्च महाराज इव प्रकृतिभिः सम्यक्पूर्णः संभृतः। **भवति**। स्पष्टम्।

द्वियोनिमित्येतद्व्याकरोति—

**पितू रेतोतिरिक्तात्पुरुषो भवति।**

**पितुर्जनकस्य**। **रेतोतिरिक्ताद्**रेतोतिरेकाद्रेतआधिक्यात्। **पुरुषो भवति**। स्पष्टम्।

यथा पितू रेतोतिरेकात्पुंगर्भस्तथा मातुर्वीर्याधिक्यात्स्त्रीगर्भ इत्याह—

**मातू रेतोतिरिक्तात्स्त्रियो भवन्ति,**

**मातू रेतोतिरिक्ता**ज्जनन्या वीर्यातिरेकात्। **स्त्रियो** योषितो **भवन्ति**।

**उभयोर्बीजतुल्यत्वान्नपुंसको भवति।**

**उभयो**र्मातापित्रो**र्बीजतुल्यत्वा**द्वीर्यसाम्या**न्नपुंसको** गर्भः स्त्रीपुंसलिङ्गशून्यः। **भवति**। स्पष्टम्।

**व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति,**

**व्याकुलितमनसः** कुतश्चिन्निमित्तात्कलुषितान्तःकरणान्मातापित्रोरन्यतरस्माद्द्वाभ्यां वा। **अन्धा** रूपसाक्षात्कारकरणशून्याः। **खञ्जा** वामदक्षिणयोरन्यतरपादहीनाः। **कुब्जा** वक्रीभूतशरीराः पृष्ठवंशविधृतमांसास्थिलिङ्गाः। **वामनाः** अल्प-

करचरणा अदीर्घशरीराः । भवन्ति जायन्ते । उपलक्षणमेतत्पङ्गुकुणिकाणबधिरादीनाम् ।

इदानीं युग्माद्युत्पत्तौ निमित्तमाह—

**अन्योन्यवायुपरिपीडितानां शुक्रद्वैधे स्त्रिया योन्या युग्मा जायन्ते ।**

**अन्योन्यवायुपरिपीडितानां** स्त्रीपुंसवीर्याणां परस्परापानवायुपरिपीडितानां **शुक्रद्वैधे** शुक्रद्वयत्वादेः । **स्त्रिया योन्या** नार्या गुह्येन्द्रियात् । **युग्माः** स्त्रीपुंसद्वयरूपाः पुरुषद्व-यरूपा वा प्रजाः । **जायन्ते** । स्पष्टम् ।

इदानीं जातस्य गर्भस्य पञ्चात्मकं शरीरं भवतीत्याह—

**पञ्चात्मकसमर्थः पञ्चात्मकेन चेतसाऽधिगन्धनसश्च**
**ज्ञानाद्ध्यानादक्षरमोंकारं चिन्तयति तदेतदेकाक्षरं ज्ञात्वा ।**

**पञ्चात्मकसमर्थः** । जातो बालः पृथिव्यादिपञ्चभूतशरीरो विषयादानसमर्थश्च पञ्चात्मकसमर्थः **पञ्चात्मकेन** पृथिव्यादिभूतपञ्चकविकारेण भूतपञ्चकविकारत्वं मनसः शब्दादिपञ्चकग्राहकत्वात् । अन्यथा शब्दाद्यन्यतमग्राहकत्वं श्रोत्रादिवत्स्यात् । **चेतसा**ऽन्तःकरणेन । समर्थ इति समस्तं विच्छिद्यानुषञ्जनीयम् । न केवलं पञ्चात्मकः पञ्चात्मकेन चेतसा समर्थः किं त्व**धिगन्धनसश्चा**धिगन्धनासश्च गन्धमधिकृत्य नासिका यस्यासावधिगन्धना अधिगन्धना एवाधिगन्धनसः । चकारादधिरूपचक्षुरित्यादि । सर्वै-रिन्द्रियैः सर्वविषयग्रहणसमर्थ इत्यर्थः । स चागण्यपुण्यपुञ्जवशात्कथंचित्तुल्यवैराग्यो **ज्ञाना**च्छास्त्रत ओंकारावबोधात् । **ध्याना**दोंकारोऽहमस्मीतिबोधसंततिरूपात्स्वाधीनान्तः-करणः । **अक्षरं** विनाशरहितं व्याप्तिमन्तमानन्दात्मानं स्वाभिन्नम् । **ओंकार**मोंकाराभि-धेयम् । **चिन्तयति** विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहं करोति सर्वतस्तमेवाव-गच्छतीत्यर्थः । **तत्**परोक्षं शास्त्रप्रसिद्धम् । **एतत्**प्रत्यक्षम् । **एकाक्षर**मोंकाररूपमेकाक्ष-रम् । **ज्ञात्वा** सर्वभेदशून्यमात्मरूपेण साक्षात्कृत्य मुक्तो भवतीति शेषः । तस्मात्कष्ट-तममपि शरीरकं बुद्धिमतः परमपुरुषार्थकारणमित्यभिप्रायः ।

अपि चेदं शरीरकं चतुर्विंशतितत्त्वरूपमवगतमहं ब्रह्मास्मीतिबोधकारणं भवतीत्यभि-प्रायेणाऽऽह—

**अष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनाम् ।**

**अष्टा**वष्टसंख्याकाः । **प्रकृतयः** प्रकृतिशब्दवाच्या भूम्यप्तेजोवाय्वाकाशमनोबुद्ध्य-हंकाराः । **षोडश** षोडशसंख्याका **विकारा** विकारशब्दाभिधेया दशेन्द्रियाणि पञ्च प्राणाश्चित्तं चेति । **शरीरे** विनाशिनि चतुर्विधाहारविकारे । तिष्ठन्तीति शेषः । **तस्यै-वाष्टमे** मासि संपूर्णावयवस्य गर्भस्य योनियन्त्राद्बहिःस्थितस्यान्तर्गतस्य वा नत्वन्यस्य कलिलत्वाद्यवस्थस्य । **देहिनां** देहिनः ।

इदानीं प्रासङ्गिकं परिसमाप्य प्रकृतमेवाऽऽह—

**अथ नवमे मासि सर्वलक्षणसंपूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म भवति ।**

**अथा**वयवसंपूर्त्यनन्तरम् । **नवमे मासि** । स्पष्टम् । **सर्वलक्षणसंपूर्णः** सर्वैर्लक्षणैर्वाक्कायमानसैः संपूर्णः परिपूर्णो ध्यानारूढ इव योगी । **भवति** । स्पष्टम् । **पूर्वजातीर**नादौ संसारे पूर्वगृहीतश्वशूकरक्रिमिकीटदेवमनुष्यादिशरीरजातीः । **स्मरत्य**हं श्वा सूकरो मनुष्योऽभूवमित्याद्यनन्तानि जन्मानि स्वानुभूतचराणि स्मरति **कृताकृतं च कर्म** कृतं सुकृतमकृतं दुष्कृतम् । कृतं चाकृतं च कृताकृतम् । कर्म व्यापाररूम् । चकारः स्मरतीतिपदसंबन्धार्थः । **भवति** कृताकृतकर्मस्मरणेन संतप्तगात्रो भवति ।

उत्तमे जन्मनि सुकृतं कृतं मया कष्टे तस्मिञ्जन्मनि कष्टं कृतं मयेत्यादिस्मरणेनैव कथं दुःखमित्यत आह—

**शुभाशुभं च विन्दति ॥ ४ ॥**

**शुभाशुभं च** शुभं पुण्यकर्मणः फलमशुभं पाप्मनः कर्मणः फलं दुःखम् । **शुभं** चाशुभं च शुभाशुभं चकारात्तत्साधनमप्याह । क्रिम्यादिकं कर्मफलावस्थं **विन्दति** विन्दते सुखदुःखसाक्षात्कारं प्राप्नोतीत्यर्थः ॥ ४ ॥

पूर्वजातीः स्मरतीति यदुक्तं तदेतद्विवृणोति—

**नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।**
**आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ ५ ॥**

**नानायोनिसहस्राणि** । स्पष्टम् । **दृष्ट्वा चैव,** अनन्तानि स्तम्बादीनि ब्रह्मान्तानि शरीराणि प्राप्यैव । चकारात्तद्ग्रहणपुण्यपापादिकमपि संप्राप्यैव । वस्तुतोऽसङ्गोदासीनस्य पुरुषस्य शरीरसंबन्धाभावात्तद्दर्शनमेव शरीरग्रहणमिति मन्वाना दृष्ट्वा चैवेत्याह श्रुतिः । **ततो** नानायोनिसहस्रप्राप्तेरनन्तरम् । कासुचित्सर्पदेवादियोनिषु प्रथमत एव । **मया** तत्तद्योनियन्त्राद्विनिर्गतेन । **आहारा** आहार्यन्त इति क्षुन्निवारकाः स्थावरजङ्गममांसभेदाः । **विविधा** मण्डूकचक्रकाद्याश्चतुर्विधा इत्यर्थः । **भुक्ता** भक्षिताः । पशुमनुष्यादिशरीरेषु योनियन्त्रविनिर्गमनानन्तरं प्रथमतः शुनीशूकरीचण्डाल्यादीनां **पीताश्च विविधाः स्तनाः,** अङ्गुलीपर्वाङ्गुल्यमेध्यपिण्डाद्याकारविचित्राः स्तनाः स्तनेऽहं मुखं प्रक्षिप्य पयःपूयास्राविण आस्वादिताः । चकाराल्लेह्यपेयचोष्यभोज्यरूपामेध्यमूत्रपरिपाकाः स्थावरजङ्गमलोहितमांसादिरूपा आहारा विविधा भुक्ताः ॥ ५ ॥

न चात्र जनिर्वा मरणं वा प्रतीकार इत्याह—

**जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ।**

**जातस्यैव** स्वीकृतमनुष्यादिशरीरस्यैव । **मृतस्यैव** परित्यक्तमनुष्यादिशरीरस्यैव । **जन्म चैव पुनः पुनः** । भूयो भूयो जन्मैव चकारान्मरणमपि । अयमर्थः । जातस्य मरणमवश्यं भावि मृतस्य जन्मापि ततो न जननेन नापि मरणेन संसारनिवृत्तिरिति ।

एवं चिन्तयन्भृशमुद्विग्न आह—

**अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ ६ ॥**

**अहो** खिन्नस्याऽऽत्मनः परस्य च संबोधनमथवा निरुपायत्वावलोकनात्सखेदाश्चर्यार्थता । **दुःखोदधौ** यथा जलधौ दशसु दिक्षु मध्ये च जलमेव तद्वत्संसारोदधौ दुःखमेव ततोऽयं दुःखोदधिस्तस्मिन् । **मग्नो** यथा नौनिमज्जने नौस्थो निरुपायो जनो जलधौ मज्जति तद्वच्छरीरेन्द्रियादीनां मज्जने दुःखोदधावुपायशून्योऽहमपि मग्नः । वेदाचार्यदृष्टिमन्तरेण पुरुषाकाररूपामस्य दुःखोदधिनिमज्जनस्य **न पश्यामि प्रतिक्रियाम्** । स्पष्टम् ॥ ६ ॥

**यदि योन्यां प्रमुञ्चामि सांख्यं योगं वा समाश्रये।**
**अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ ७ ॥**

यतोऽस्य दुःखोदधेर्वेदाचार्यदृष्टिप्रतीकारः स च पूर्वं जानताऽपि न कृतस्ततः इतःपरं **यदि** संभावनार्थः । प्रायेणास्माद्योनियन्त्रान्मत्प्राणनिर्गमो दुर्लभोऽद्य कथंचिद्**योन्यां** योनाववस्थितमात्मानं केनचिददृष्टेन **प्रमुञ्चामि** योनेर्बहिर्निर्गच्छामीत्यर्थः । **सांख्यं** सम्यगात्मैक्यप्रथमकथनपरं ज्ञानं यस्मिन्वेदान्तशास्त्र ऐक्यप्रकाशरूपं वा तत्सांख्यम् । **योगं वा** ब्रह्मात्मैक्यावगतिप्राप्त्युपायभूतं विविधवैदिककर्मरूपम् । वाशब्द उभयोरप्युपायोपेयत्वेन समुच्चयार्थः । **समाश्रये** सम्यगात्मसाक्षात्कारपर्यन्तमाश्रयणं कुर्वे । **अशुभक्षयकर्तारमिदं** योगस्य विशेषणम् । पापक्षयकारिणम् । **फलमुक्तिप्रदायिनमशुभक्षये** फलं सांख्यज्ञानमात्मसाक्षात्कारशिरस्कं ततो विमुक्तिरविद्यातत्कार्येभ्यो विमोक्ष एवं फलमुक्त्योः प्रदायी तं फलमुक्तिप्रदायिनम् ॥ ७ ॥

**यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम्।**
**अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ ८ ॥**

**यदि योन्यां प्रमुञ्चामि** । व्याख्यातम् । **तं** सर्वशास्त्रप्रसिद्धम् । **प्रपद्ये**ऽयमहमस्मीतिभावेन शरणं गच्छामि । **महेश्वरम**भ्यधिकनियन्तारं पिनाकपाणिमुमापतिम् । महेश्वरस्य विशेषणम् । **अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम्** । व्याख्यातम् ॥ ८ ॥

**यदि योन्यां प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम् ।**
**अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ ९ ॥**

**यदि योन्यां प्रमुञ्चामि तं प्रपद्ये** । व्याख्यातम् । **भगवन्तं** समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन्तम् । **नारायणं** जलशायिनं सर्वजीवबिम्बमविद्यादिदोषवर्जितमानन्दा-

त्मानं शेषपर्यङ्कस्थं शङ्खचक्रगदाधरम् । **देवं** द्योतनात्मकं नारायणस्य विशेषणम् । **अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम्** । व्याख्यातम् ॥ ९ ॥

इदानीं संग्रामकत्थनधूर्तभटसहस्रप्रलुब्धकृतबलवद्वैरस्तेन निगृहीतो भूप इवैकाकी गर्भे शोचति—

**यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।**
**एकाकी तेन दह्यामि गतास्ते फलभोगिनः ॥ १० ॥**

यत्प्रसिद्धम् । **मया** मूढेन मदीयोऽयमित्यभिमानिना । **परिजनस्य** देहपितृमातृकलत्रपुत्रभृत्यादेः । **अर्थे** प्रयोजने । **कृतं कर्म शुभाशुभम्** । स्पष्टम् । **एकाकी**, एक एव । **तेन** परिजनरक्षणार्थं शुभाशुभकरणेन । **दह्यामि** दह्ये । **गता** विकत्थना इव भटा रणाङ्गणेऽपगताः । **ते** देहपित्रादयोऽस्मदीयत्वेन गृहीताः । **फलभोगिनः** सुखभोगिनः ॥ १० ॥

इदानीं श्रुतिराह—

**जन्तुः स्त्रीयोनिशतं योनिद्वारि संप्राप्ते यन्त्रेणाऽऽपीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति,**

**जन्तु**र्जननधर्मा नवमे मासि दशमे वा । **स्त्रीयोनिशतं** योषिदपानपन्नगफूत्कारभीषणस्थानशतमुक्तं चिन्तावृतः प्राप्नोत्युक्तेन प्रकारेणेति शेषः । एवं चिन्तयन्प्रबलैः सूतिमारुतैः प्रपीडितगात्रोऽवाङ्मुखो व्याकुलीकृतान्तःकरणो जन्मनि मातुर्जठरपिठरान्निर्गमनावसरे योनिद्वारमागच्छति । ततो **योनिद्वारि** योनिमार्गे स्वदेहोच्छ्रितगुणलूने **संप्राप्ते** संप्राप्तो जन्तुः । **यन्त्रेण**तरेतरपिनद्धाल्पद्वारक्रकचद्वयसंनिभेना**ऽऽपीड्यमानो** लोहसूचीसहस्रैः संविध्यमान इव सर्वरोमकूपेषु **महता**ऽनुपमेन मरणशतादप्यधिकेन **दुःखेन** प्रतिकूलवेदनीयेन समानदुःखां जननीं कुर्वञ्जायत इति शेषः । **जातमात्रस्तु** जातमात्र एव । **वैष्णवेन वायुना** योनियन्त्रबहिःसंचारिणा पारमेश्वरेण पवनेनातीवाज्ञानकारणेन **संपृश्य** संस्पष्टो भूमावुत्तानशायी योनियन्त्रविनिर्गमनपीडया विगतज्ञानचेष्टो मूर्छितो यदा **तदा** तस्मिन्काले **न स्मरति** स्वेन गर्भे चिन्त्यमानं गर्भे च स्थानं योनियन्त्रविनिर्गमनादिकं च समनन्तरमनुभूतमप्यौषधादिप्रयोगेणेव भ्रान्तो न **स्मरति** ।

यन्न स्मरति तदाह—

**जन्ममरणे न च कर्म शुभाशुभम् ॥ ११ ॥**

**जन्ममरणम्** । स्पष्टम् । **न च कर्म शुभाशुभम्** । चकारः स्मरतीत्यनुवृत्त्यर्थः । स्पष्टमन्यत् ॥ ११ ॥

गर्भस्य पूर्वजातिस्मरणावसर आहारा विविधा भुक्ता इत्युक्तं तेन चतुर्विधाहारमय-

मित्यर्थोद्व्याख्यातम् । आहारस्य चातुर्विध्यं कोष्ठाग्निव्याख्यानावसरे वक्ष्यति । ततः शरीरमित्येतद्व्याकर्तव्यमवशिष्यते तदेतद्व्याकर्तुं पृच्छति—

**शरीरमिति कस्मात्,**

**शरीरमिति कस्मात्** । स्पष्टम् । उच्यत इति शेषः ।

अग्नित्रयशिखाभिः शीर्यमाणत्वादित्यभिप्रायेणाऽऽह—

**ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति तत्र कोष्ठाग्निर्नाम ।**

**ज्ञानाग्निः** । तत्र त्रीणि स्थानानीत्यादिनोच्यमानं मानं तदेव ब्रह्मज्ञानोत्पादेन देहस्य सकारणस्य विनाशकत्वादग्निरिव ज्ञानाग्निः । **दर्शनाग्निर्दर्शनं** विषयज्ञानं तदेव विषयप्राप्त्यप्राप्तिभ्यां हर्षविषादौ कुर्वच्छरीरस्याग्निरिव संतापकं दर्शनाग्निः । **कोष्ठाग्निर्जा**ठराग्निश्चतुर्विधाहारपाचकः प्रसिद्धः कलेवरविनाशहेतुः क्षुत्पिपासाकारी । इति अनेन प्रकारेण त्रिविधेनाग्निना विनाश्यत्वाच्छरीरमित्युच्यत इति शेषः । **तत्र** तेषु त्रिष्वग्निषु मध्ये । **कोष्ठाग्निः** । व्याख्यातम् । **नाम** प्रसिद्धः ।

प्रसिद्धिमाह—

**अशितपीतलेह्यचोष्यं पचतीति ।**

**अशितपीतलेह्यचोष्यम्** । अशितं भोज्यमानलड्डुकादि । पीतं दुग्धनीरादि । **लेह्यं** दधिद्रवप्रचुरगुडमध्वादि । **चोष्यं** चूतफलरसाद्यशितपीतलेह्यचोष्यम् । अशितं पीतं चतुर्विधमन्नं नीरं चेत्यर्थः । **पचति** पाकं करोति । इति अनेन प्रकारेण नामेत्यन्वयः ।

इदानीं दर्शनाग्निमाह—

**रूपादीनां दर्शनं करोति यस्तत्र त्रीणि स्थानानि भवन्ति हृदये दाक्षिणाग्निर्गार्हपत्यं मुखादाहवनीयं यजमानाय बुद्धिः पत्नीं निधाय दीक्षां संतोषं बुद्धीन्द्रियाणि यज्ञपात्राणि शिरः कपालं केशा दर्भा मुखमन्तर्वेदिः ।**

**रूपादीनां** रूपरसगन्धस्पर्शशब्दानां **दर्शनं** साक्षात्कारं **करोति** स्पष्टम् । **यो** दर्शनाग्निरिति शेषः । **तत्र** तेष्वग्निषु मध्ये ज्ञानाग्निः कथ्यत इति शेषः । **त्रीणि स्थानानि भवन्ति** । स्पष्टम् । ज्ञानाग्निरिति शेषः । **हृदये** हृदयकमले । **दाक्षिणाग्निर्**दक्षिणाग्निमग्निविशेषम् । **उदरे** जठरे । **गार्हपत्यं** गार्हपत्याभिधमग्निम् । **मुखात्,** मुखे । **आहवनीयमा**हवनीयाभिधमग्निं **यजमानाय** ज्ञानाग्नेर्ज्ञातुर्यजमानत्वेन कल्पितस्यार्थे । **बुद्धिर्**बुद्धिम् । **पत्नीं** यागगृहकारिणीं **निधाय** स्थापयित्वा । हृदयादिषु दक्षिणाग्न्यादीन्परिकल्प्याऽऽत्मानं यजमानं बुद्धिं च स्वपत्नीं वक्ष्यमाणं च यथायोगं चिन्तयेदित्यर्थः । **दीक्षां संतोषं** दीक्षाऽध्वर्युणा क्रियमाणः संस्कारो यज्ञप्रवृत्तिहेतुः ।

स्पष्टमन्यत् । **बुद्धीन्द्रियाणि** चक्षुरादीनि पञ्च । **यज्ञपात्राणि** चमसोलूखलादीनि । **शिरो** मस्तकं **कपालं** पुरोडाशार्थमग्नौ प्रक्षिप्यमाणमेकमनेकं वा कपालम् । **केशाः** केशान्मूर्धजान्सलोमान् । **दर्भा** दर्भान् । **मुखमास्यम्** । **अन्तर्वेदिः,** अग्नित्रयमध्यप्रदेशं निम्नम् । एतानि यथावचनं विचिन्तयेत् । वक्ष्यमाणान्यपि यज्ञोपकरणत्वेन सामान्येन चिन्तनीयानि ।

स्वभावतश्च ज्ञायमानानि योगोपयुक्तान्यतस्तान्याह—

**षोडश पार्श्वदन्तपटलान्यष्टोत्तरं मर्मशतमशीतिसंधिशतं नवस्नायुशतमष्टसहस्रो रोमकोट्यो हृदयपलान्यष्टौ द्वादशपलानि जिह्वा पित्तप्रस्थं कफस्याऽऽढकं शुक्रं कुडवं मेदःप्रस्थौ ।**

**षोडश** षोडशसंख्याकानि । **पार्श्वदन्तपटलानि,** एकत्र पार्श्वास्थीन्येकत्र दन्तास्त एव पटलानि । **अष्टोत्तरं मर्मशतम्,** अष्टाधिकं शतं मर्माणि जीवस्थानानि वैद्यशास्त्रादौ प्रसिद्धानि हस्तयोः पादयोश्चाशीतिः शेषे चाष्टाविंशतिः । **अशीतिसंधिशतम्,** अशीत्यधिकं शतं संधीनां हस्तपादाङ्गुलीष्वशीतिः शेषमात्रे शतमेतदपि वैद्यशास्त्रादौ प्रसिद्धम् । **नवस्नायुशतं** नवशतं नाडीनां सुषुम्नाव्यतिरिक्तानां शतसंख्यानां नाडीनां प्रत्येकं नवधा प्रधानभेदान्नवशतं नाडीनां भवति । तदेतदुक्तं नवस्नायुशतम् । **अष्टसहस्रो रोमकोट्यः,** रोम्णामष्टसहस्रकोट्यो यद्यपि कोटित्रयं सार्धं रोम्णां प्रसिद्धं तथाऽपि तद्रोमकूपविवराभिप्रायम् । इदं तु रोमकूपे रोमकूपे पञ्चषाणां द्वित्राणां वा रोम्णामुपलम्भादनन्तरोमाभिप्रायमवगन्तव्यम् । अथवा शरीरेऽस्मिन्प्रधानानि रोमाण्यष्टाधिकं सहस्रं कोटिश्चेति । तदेतदुच्यतेऽष्टसहस्रो रोमकोट्यः । **हृदयपलानि** हृदयपद्ममांसस्य पलानि षोडशनिष्कं पलं तानि । **अष्टावष्टसंख्याकानि** । **द्वादशपलानि जिह्वा** । स्पष्टम् । **पित्तप्रस्थं** पुरुषाहारपरिमितं पित्तम् । **कफस्य** श्लेष्मण **आढकं** प्रस्थचतुष्टयपरिमाणमाढकम् । **शुक्रं कुडवं** शुक्रस्य वीर्यस्य कुडवं प्रस्थचतुर्थांशः । **मेदःप्रस्थौ** । मेदसो नीरक्तस्य मांसस्य प्रस्थौ मेदःप्रस्थौ ।

प्रस्थाविति यदुक्तं तदेतद्विवृणोति—

**द्वावनियतं मूत्रपुरीषयोः ।**

**द्वौ,** उभौ । **अनियतं मूत्रपुरीषयोः** । अनियतं मूत्रपुरीषयोः प्रसिद्धयोः परिमाणमिति वक्ष्यमाणेनानुषङ्गाद्व्याख्येयम् ।

तत्र हेतुमाह—

**अहरहः पानपरिमाणम् ।**

**अहरहः पानपरिमाणं** नित्यं नित्यं पानस्य नीरादेः पीतस्य । उपलक्षणमेतदशि-

तस्यापि। परिमाणं पानपरिमाणम्। अशितपतितपरिमाणं मूत्रपुरीषं ततोऽनियतपरिमाणमित्यर्थः।

इदानीमस्य शास्त्रस्य मलमूत्रादिपरिमाणाभिधायित्वेनानादेयत्वं प्राप्तं वारयति—

**पैप्पलादं मोक्षशास्त्रं परिसमाप्तं पैप्पलादं मोक्षशास्त्रं परिसमाप्तम् ॥ १२ ॥**

**ॐ भद्रं कर्णेभिः० । सह नाविति शान्तिः।**

*** इति गर्भोपनिषत्समाप्ता ॥ १२ ॥**

**पैप्पलादं** पिप्पलादेन स्वशिष्यान्मोक्षकामिनः प्रत्युक्तं पैप्पलादम्। **मोक्षशास्त्रं** मोक्षस्याविद्यादिनिवृत्तिरूपस्य हितस्य शासनान्मोक्षशास्त्रम्। **परिसमाप्तं** सर्वतः समाप्तिं गतम्। **पैप्पलादं मोक्षशास्त्रं परिसमाप्तम्**। व्याख्यातम्। वाक्याभ्यास उपनिषत्समाप्त्यर्थः ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतिर्गर्भोपनिषद्दीपिका समाप्ता ॥ १९ ॥



* अस्या अमृतगर्भोपनिषदित्यपि नाम।

ॐ तत्सद्ब्रह्मणे नमः ।

# गोपालपूर्वतापनीयोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

गोपालतापनीयोपनिषदाद्याऽष्टखण्डिका ।
षड्भिश्चत्वारिंशतां च पूरण्याथर्वपैप्पले ॥ १ ॥

आथर्वणपिप्पलशाखायामिदं तापनीयद्वयं कृष्णोपनिषच्चेत्युपनिषत्त्रयमाम्नातम् । तत्राऽऽद्या सगुणब्रह्मोपचारपूजनपरा मन्त्रजपध्यानपूजादिना हि तुष्टो देवः स्वात्मानं दर्शयतीति सा प्रथममाम्नाता तत्र गोपालस्य स्वरूपं नारसिंहे निर्णीतं शुद्धचिदानन्दस्वरूपो ह्यसौ मायया मूर्तिमान् । तत्राऽऽदौ कृष्णशब्दार्थमाह—

*ॐ कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ १ ॥

**कृषिर्भूवाचकः शब्द** इति । कृषिरिति कृङ्भूमिः । **नश्च निर्वृतिवाचक** इति । निर्वृतिरानन्दः सुखं शुद्धं ब्रह्मेति यावत् । ' नः पुनर्वधशुद्धयोः ' इत्येकाक्षरनिघण्टुः । कृङ्भूमिः सर्वाधारः सन्नः शुद्धः कृष्णस्तयोरैक्यं सामानाधिकरण्यं तच्च यदा कर्मधारयेण भवति तदा परं ब्रह्म कृष्ण इति शब्देनाभिधीयते । सर्वकार्याधारत्वं मायाया अप्यस्तीत्यत उक्तं न इति । तावन्मात्रे चैश्वर्यं न स्यादत उक्तं कृङिति । अथवा भूग्रहणं दृश्योपलक्षणं निर्वृतिः सुखस्वरूपं ब्रह्म तयोरैक्यमध्यासनिवृत्त्या शुद्धात्मतापादनमेवं सति यत्सिद्धं तत्परं ब्रह्म कृष्णः । कस्मादिति प्रश्नोत्तरानुरोधाद्द्रष्टव्यम् । अयं श्लोकः कैश्चिन्न पठ्यते ॥ १ ॥

मङ्गलार्थमादावुपनिषत्प्रतिपाद्येष्टदेवतामेव प्रणमति—

ॐ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥

**ॐ सच्चिदानन्दरूपायेति** । अनुभविनामादौ सद्रूपं भाति ततश्चिद्रूपं तत आनन्दरूपमिति क्रमेणोपादानम् । आद्यन्ताभ्यां प्रत्याहारेणोक्तार्थस्यैव ग्राहकं नामाऽऽह—

* अयं श्लोकः कुत्राप्यादर्शपुस्तकेषु नोपलभ्यते परं च नारायणव्याख्यानुरोधादत्र ग्रथित इति सुधीभिरूह्यम् ।

**कृष्णायेति**। सदानन्दायेत्यर्थः। स्वरूपलक्षणमुक्त्वा जगत्कर्तृत्वेन तटस्थलक्षणमाह— **अक्लिष्टेति**। अक्लिष्टं क्लेशरहितं यथा भवति तथा सर्वं करोति तस्मै। तज्ज्ञानोपायमाह— **वेदान्तेति**। औपनिषदत्वात्। वेदकर्तृत्वेन लक्षणम्—**गुरव इति**। वेदोपदेष्ट्रे। बुद्धिसाक्षिणे बुद्ध्यादीनां साक्षाद्द्रष्ट्रे। अन्यायिभिर्वञ्चयितुमशक्यायेति यावत्॥ १॥

अष्टादशाक्षरमन्त्रदेवतां निरूपयितुमाख्यायिकामाह—

**ॐ मुनयो ह वै ब्राह्मणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं भाति केनेदं विश्वं संसरतीति**

**ॐ मुनय इति**। ब्रह्मणः प्रत्यगात्मनो हरेरपत्यं ब्राह्मणः स्वयंभूस्तमूचुः। जातिपुरस्कारेण प्रवृत्ते 'ब्राह्मोऽजातौ' इति टिलोपाभावः। आकाशप्रभवो ब्रह्मेति क्रमेणोपादानम्।

चतुर्षु प्रश्नेषु क्रमेणोत्तरमाह—

**तदु होवाच ब्राह्मणः**

**तदु होवाचेति**। तत्तत्र प्रश्नेषु। उ अनर्थकः। ह प्रसिद्धौ। उवाचोत्तरम्। चतुर्व्यूहात्मकविष्णुवाचकाष्टदशाक्षर इत्यभिप्रायेणोत्तरयति—

**श्रीकृष्णो वै परमं दैवतं**

**श्रीकृष्णो वा इति**। परमं दैवतं परमात्मा सदानन्दो वासुदेव इति यावत्। य उक्तो **गीतायाम्**—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः"॥

"वासुदेवः सर्वम्" इति च।

**गोविन्दान्मृत्युर्बिभेति**

**गोविन्दान्मृत्युर्बिभेतीति**। स संकर्षणव्यूहो य उक्तः—"कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः" इति।

**गोपीजनवल्लभज्ञानेन तज्ज्ञातं[1] भवति**

**गोपीति**। अयमनिरुद्धव्यूहः। य उक्तः—"स एष इह प्रविष्टः" इति "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति च "ययेदं धार्यते जगत्" इति च। अत्र च वक्ष्यति "गोपीजनवल्लभो भुवनानि दध्रे" इति। यस्य ज्ञानेन तदखिलं विश्वं ज्ञातं भवति। स हि जगदात्माऽऽत्मनि च ज्ञाते सर्वं ज्ञातं भवति।

**स्वाहेदं संसरतीति**

**स्वाहेति**। अयं प्रद्युम्नव्यूहः। य उक्तः—"मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्" इति "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" इति च। "अहं बीज-

---

१ घ. तज्ज्ञानं।

प्रदः पिता " इति च । बीजं तु मायापतिः पुरुषोत्तम इति ज्ञेयः । य उक्तः—" तदैक्षत बहु स्यां प्रजायेय " इति । " इन्द्रो मायाभिः " इति च । " दैवी ह्येषा गुणमयी मम माया " इति च । न चैवं मन्त्रस्य नानादैवतत्वापत्तिः " वायुर्यथैको भुवनम् " इत्यादिनैकत्वस्य वक्ष्यमाणत्वात् ।

कृष्णादिशब्दार्थं पृच्छति—

**तदु होचुः कः कृष्णो गोविन्दश्च कोऽसाविति गोपीजनवल्लभः कः का स्वाहेति तानुवाच ब्राह्मणः पापकर्षणो**

**तदु होचुः कः कृष्ण इति** । कृष्णशब्दस्य किं प्रवृत्तिनिमित्तमित्यर्थः । एवमुत्तरत्रापि । पापकर्षणः । पापानि कर्षति कृष्णः । एतन्मूलविरोधात्कृषिर्भूवाचक इत्यादिरग्रन्थ इति लक्ष्यते ।

**गोभूमिवेदविदितो वेदिता गोपीजनाविद्याकलाप्रेरकः ।**

**गोभूमीति** । गोभूमिवेदैर्विदितः । विग्रहस्तु गां सौरभेयीं गां भूमिं गां वाचं वेदं वा विन्दतीति गोविन्दः । ' पाघ्राध्माधेट्दृशः शः ' इत्यत्र ' गवि विन्देः संज्ञायाम् ' इति वार्तिकेन शप्रत्ययः । ज्ञानमपि लाभः । वेदिता तेषां ज्ञातेत्यर्थः । गोपीजनस्य या अविद्याकला अविद्यावयवास्तासां प्रेरको निवर्तको गोपीजनवल्लभः । कामरागाद्यविद्यानिवर्तनेन स्वात्मभावप्रद इत्यर्थः । तासां तदुल्लेखो यथा—

" हारिगो मतिमति किमिदं हारिहरिहरिणा कथं सङ्गः ।
जातं पीतं वसनं मेचकमङ्गं गतोऽङ्गनाभावः " ॥

' वल वल्ल संवरणे ' इति पाणिनिस्मरणाद्वल्लभः संवरीता । यद्वा गोपीजन एवाऽऽसमन्ताद्विद्याकला ज्ञानप्रदो ग्रन्थभागः । ' गोप्यो गाव ऋचः ' इति श्रुतेः । तासां प्रेरकः स्वोन्मुखतासंपादकः ।

**तन्माया चेति**

का स्वाहेत्यस्योत्तरम् । **तन्माया चेति** । तस्य कृष्णस्य माया स्वाहेत्यर्थः । नन्वेवं कृष्णादिदेवताभेदः स्यान्नेत्याह—

**सकलं परं ब्रह्मैतद्यो ध्यायति रसति भजति**
**सोऽमृतो भवति सोऽमृतो भवतीति ॥ १ ॥**

**सकलमिति** । सकलं चतुष्टयमपि ब्रह्मैतत्कृष्णाख्यमेतच्च यो ध्यायति रसति वदति भजति सेवते सोऽमृतो मोक्षभाग्भवति । द्विरुक्तिः खण्डसमाप्त्यर्था ॥ १ ॥

**ते होचुः किं तद्रूपं किं रसनं कथं वाऽहो तद्भजनं तत्सर्वं विविदिषतामाख्याहीति तदु होवाच हैरण्यो गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितं तदिह श्लोका भवन्ति—**

किं तद्रूपं तस्य कृष्णस्य रूपं किं रसनं शब्दानां नामेत्यर्थः । कथं वा । अहो संबोधने । तद्भजनं केन प्रकारेण तद्भजनं किं तदित्यर्थः । तत्सर्वं विविदिषतां वेदितुमिच्छतामस्माकमाख्याहि कथयेति । तत्तत्र । उ होवाच हैरण्यो हिरण्यगर्भो ब्रह्मा । किमुवाच । गोपवेषम् । गोपस्येव वेषो यस्य तम् । अभ्राभमभ्रमुन्नमितो घनस्तस्येवाऽऽभा यस्य तम् । अब्दाभमिति केषांचित्पाठः । अब्दो मेघः । तरुणं युवानम् । कल्पद्रुमाश्रितं देवतायाः कल्पतरुमूले चिन्तनीयत्वादेवमुक्तम् । तदिहेति । तत्तत्र । इहार्थे श्लोका मन्त्रा भवन्ति वर्तन्ते ।

**सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ।**
**द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥**

सत्पुण्डरीकनयनं सद्विकसितं यत्पुण्डरीकं सिताम्भोजं तद्वन्नयने यस्य तम् ।

" पुण्डरीकं सिताम्भोजे सितच्छत्रे च गोव्रजे ।
कोषकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे " ॥ इति विश्वः ।

मेघाभं मेघवर्णम् । वैद्युताम्बरं वैद्युते विद्युद्वर्णे अम्बरे यस्य तम् । ज्ञानमुद्राढ्यम् ।

" तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ।
वामहस्ताम्बुजं वामे जानुमूर्धनि विन्यसेत् ॥
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी " ॥

प्रेयसीत्यातिशायिकनिर्देशादन्येषामप्यवताराणां प्रियेति गम्यते । मौनमुद्राढ्यमिति तु युक्तः पाठः । मौन[१]वत्त्व[२]स्यैव पूजनादिषु शान्तानां नियतत्वात् । तत्स्वरूपस्य च लोके प्रकाशनात् । गोपगोपीजनेषु गुप्तभावेन स्थितं ब्रह्मेत्यर्थः । वनमालिनं पुष्पपल्लवफलसमुदायो वनं तस्य मालैकसूत्रग्रन्थनं तद्वन्तम् । व्रीह्यादित्वादिनिः ।

" वनमालामधाद्विष्णुर्भुवनानि चतुर्दश ।
पृथ्वी पीता वारि शुक्लं रक्तोऽग्निरासितो मरुत् ॥
नभो नीलं पञ्चवर्णा वनमाला हरेरिति " ॥

तस्या उपासनम् । ईश्वरमीष्टे तद्धर्मा ' स्थेशभासपिसकसो वरच् ' ।

**गोपगोपाङ्गनावीतं सुरद्रुमतलाश्रितम् ।**
**दिव्यालंकरणोपेतं रत्नपङ्कजमध्यगम् ॥**

गोपगोपाङ्गनावीतं गोपै[३]र्गोपाङ्गनाभिश्च वीतं परिवेष्टितम् । *गोपीगोपगवा वीतमिति कैश्चित्पठ्यते तत्राभ्यर्हितत्वाद्गोपीपदस्य पूर्वनिपातः । गोपा हि प्रायेण स्त्रीनेत्रा भवन्तीति व्याख्यानम् । दिव्यालंकरणोपेतं दिव्यालंकरणानि कौस्तुभादीनि । रत्न

अयं प्रे

* आदर्शपुस्तकयोस्त्वयमेवोपलभ्यते ।

इति " मयाऽन्य

१ क ... तु सान्तानानिपातित° । ३ क. गोप्यो । ४ फ. वति सुरेति ।

पङ्कजमध्यगं रत्नखचितं यत्पङ्कजपीठं तत्कर्णिकायामुपविष्टम्। पीठदेवतास्तु नारसिंहोत्तर उक्तास्तत एव बोद्धव्याः।

**कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम्।**
**चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः॥ इति।**

कालिन्दी यमुना तस्या जलं तस्य कल्लोलास्तरङ्गास्तैरासङ्गी संबद्धो यो मारुतस्तेन सेवितम्। चिन्तयन्ध्यायंश्चेतसा मनसा संसृतेः संसारात्। इतिशब्दः श्लोकसमाप्तौ।

**तस्य पुना रसनभजनभूमीन्दुसंपातः**

**तस्य पुना रसनभजनभूमीन्दुसंपात** इति। तस्य कृष्णस्य पुनरपि रसनं शब्दनं मन्त्रस्वरूपं भजनं सेवनं पूजादि ताभ्यां सह भूमीन्दुसंपात उच्यते। भूम्यामिन्दोरिव संपातो यथा जलादाविन्दोः संपातः प्रतिबिम्बमेवं भूम्यां तस्य संपात उद्भव उच्यत इत्यर्थः।

तदुक्तम्—"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"॥ इति।

तत्र रसनमाह—

**कामादि कृष्णायेत्येकं पदं गोविन्दायेति**
**द्वितीयं गोपीजनेति तृतीयं वल्लभार्ये(ये)ति तुरीयं**
**स्वाहेति पञ्चममिति पञ्चपदीं प्रजपन्पञ्चाङ्गं**

**कामादि कृष्णायेत्येकं पदमिति**। कामो वक्ष्यमाणं कामबीजं तदादि कृष्णायेति चतुर्थ्यन्तमेकं पदमित्यर्थः। एवं चत्वारि चतुरक्षराणि पञ्चमं द्व्यक्षरम्। इति पञ्चपदीमेवंरूपां पञ्चपदीं प्रजपन्पञ्चाङ्गं कुर्यादिति शेषः।

पञ्चाङ्गानि हृदयशिरःशिखाकवचास्त्राणि चतुरक्षराणि चत्वार्यङ्गानि पञ्चमं द्व्यक्षरमेतत्पञ्चाङ्गं पञ्चरूपेणोपास्यमित्याह—

**द्यावाभूमी सूर्याचन्द्रमसौ साग्नी**

**द्यावाभूमी सूर्याचन्द्रमसौ साग्नी इति**। क्लीं कृष्णाय दिवा(द्व्या)त्मने हृदयाय नमः। गोविन्दाय भूम्यात्मने शिरसे स्वाहा। गोपीजनसूर्यात्मने शिखायै वषट्। वल्लभाय चन्द्रमसा(मआ)त्मने कवचाय हुम्। स्वाहा साग्न्यात्मनेऽस्त्राय फट्। इत्यादिप्रयोगः।

पञ्चात्मदृष्टेः फलमाह—

**तद्रूपतया ब्रह्म संपद्यते ब्रह्म संपद्यत इति॥ २॥**

**तद्रूपतयेति**। द्यावाभूम्यादिरूपतया तद्रूपो भूत्वा विराड्भावमापद्य ब्रह्म संपद्यते ब्रह्म भवति। द्विरुक्तिः खण्डसमाप्त्यर्था। अस्य मन्त्रस्य नारद ऋषिर्गायत्री छन्दः

कृष्णो देवता क्लीं बीजं स्वाहा शक्तिर्जं कीलकं वं जीवः । उद्धारादिकमुक्तं च **शार-दातिलके**—

"कृष्णाय पदमाभाव्य गोविन्दाय ततः परम् ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥
कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥
देवता कथिता कृष्णः सर्वकामफलप्रदः ।
चतुष्करणवेदाब्धिनेत्रसंख्याक्षरैः क्रमात् ॥
पञ्चाङ्गानि मनोः कुर्यान्मन्त्रविज्जातिसंयुतैः" इति ॥ २ ॥

तदेष श्लोकः—

ब्राह्मणोक्तमर्थं त्रयोदशाक्षरेणातिजगतीमन्त्रेण निश्चिनोति—**तदेष श्लोक इति** । कामबीजमाह—

**क्लीमित्येवाऽऽदावादाय कृष्णाय योगं गोविन्दायेति च ।**
**गोपीजनवल्लभाय बृहद्घनं श्यामं तदप्युच्चरेद्यो गतिस्त-**
**स्यास्ति मङ्क्षु नान्या गतिः स्यादिति**

**क्लीमित्येवाऽऽदाविति** । आदौ प्रथमत आदाय गृहीत्वा । कीदृशं क्लीमिति कृष्णाय योगं कृष्णायेति पदेन युक्तं गोविन्दायेतापि चाऽऽदाय । बृहद्घनं च श्याम-वर्णं तदपि मायारूपं संसारकारणं स्वाहेति पदमुच्चरेत् । अविद्या हि तमोरूपा तमश्च श्यामं भवति । य उच्चरेद्गतिः प्राप्तिस्तस्य कृष्णस्यास्ति मङ्क्षु शीघ्रम् । मङ्क्षु शीघ्रे भृशार्थेऽपि तत्त्वार्थेऽपि क्वचिन्मतमिति **विश्वः** । नान्या गतिः स्यात् । कृष्णस्यैव गतिः स्यान्नान्या संसारगतिरित्यर्थः ।

तदुक्तम्—"कृष्णे रताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते भिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशे" ॥ इति ।

बृहद्भावनया सकृदप्युच्चरेद्यदिति पाठे भावना होमविधानहेतुभूता स्वाहैव तया सहेति स एवार्थः । महाश्रद्धयेति च तन्त्रेणार्थः ।

रसनमुक्त्वा भजनमाह—

**भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्ये-**
**नैवामुष्मिन्मनःकल्पनमेतदेव च नैष्कर्म्यं**

---

१ क. श्यामा ।

**भक्तिरस्येति** । इहास्य लोकस्यामुत्र परलोकस्य च य उपाधिः फलं तन्नैरास्येन तत्र स्पृहां त्यक्त्वैवामुष्मिन्कृष्णे मनःकल्पनं भक्तिरेतदेव च नैष्कर्म्यं संन्यासः ।

भजनरसनयोर्मन्त्रसंमतिमाह—

***कृष्णं सन्तं विप्रा बहुधा यजन्ति गोविन्दं सन्तं बहुधा रसन्ति**
**गोपीजनवल्लभो भुवनानि दध्रे स्वाहाश्रितो जगदैजयत्सुरेताः,**

**गोविन्दं सन्तमिति** । कृष्णं सन्तमिति युक्तः पाठो गोविन्दं सन्तमित्यग्रे दर्शनात् । विप्रग्रहणेन ब्राह्मणानां भजने मुख्योऽधिकारो दर्शितः ।

तदुक्तं भगवता—"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा" ॥ इति ।

बहुधा यज्ञव्रततपोदानादिभिर्यजन्ति पूजयन्ति । रसन्त्युच्चरन्ति । रसयन्तीति युक्तः पाठः । न ध्यायेन्न रसयेदित्युपसंहारेऽपि ण्यन्तप्रयोगदर्शनात् ।

तदुक्तम्—"गोविन्देति सदा स्नानं गोविन्देति सदा जपः ।
गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम्" ॥ इति ।

दध्रे धृतवान्दधाति । स्वाहा माया तदाश्रितोऽसौ सुरेताः सुवीर्यः सञ्जगद्विश्वमैजयन्नानागातिकं चकार । तदुक्तम्—"मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्" इत्यादि । कामस्य दुर्जयत्वेन जगदेजकत्वम् ।

स्वरूपेणैकस्यापि पञ्चपदानुगतत्वे दृष्टान्तं मन्त्रेणाऽऽह—

**वायुर्यथैको भुवनं प्रतिष्ठो जन्ये जन्ये पञ्चरूपो बभूव ।**
**कृष्णस्तथैकोऽपि जगद्धितार्थं शब्देनासौ पञ्चपदो विभातीति ॥ ३ ॥**

**वायुर्यथैक इति** । जन्ये जननार्हे प्राणिनि । वीप्सायां द्वित्वम् । पञ्चरूपः प्राणापानादिभेदेन । पञ्चपदो बिभाति पञ्च पदानि निमित्तभेदेन वाचकानि यस्य स विभाति प्रकाशतेऽभिधीयत इत्यर्थः । एतेनैकाधिष्ठातृत्वकथनाद्भूमिन्दुप्रकाशो दर्शितः । इममर्थं पञ्चमखण्डे स्पष्टं वक्ष्यत्येको वशीत्यादिना ॥ ३ ॥

इदानीं मुनयस्तस्योपासनप्रकारं पृच्छन्ति—

**ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याखिलाधारिणो**
**ब्रूहीति तानुवाच ब्रह्मा यत्तस्य पीठं हैरण्यमष्टपलाशमम्बुजं**

**ते होचुरिति** । अखिलाधारिणः । अखिलमाधरति तच्छीलोऽखिलाधारी तस्य । उवाच ब्रह्मा । हैरण्यं सुवर्णमयम् । अष्टपलाशमष्टपत्रमम्बुजं कमलम् । इदं पूजापीठमष्टपलाशं धारणयन्त्रं तु दशपलाशं भवति ।

**तदन्तरालिकानलास्त्रयुगं तदन्तराऽऽद्यार्णं विलिखीत**

* कृष्णमित्यत्र व्याख्यानुरोधेन गोविन्दमिति पाठोऽनुमीयते ।

**तदन्तरालिकानलास्त्रयुगमिति** । तस्याम्बुजस्यान्तराले भवमनलास्रे तस्य युगं द्वयं कर्णिकायां षडस्रं[1] भवतीत्यर्थः । तदन्तरा तस्य षट्कोणस्यान्तरा मध्ये । आद्यार्णं प्रथमवयसः कृष्णस्यार्णं पिण्डबीजमित्यर्थः । विलिखीत विलिखेत् ।

पिण्डबीजं यथा—"पञ्चातको धरेरस्थो मनुबिन्दुविभूषितः ।
पिण्डबीजमिदं प्रोक्तं सर्वसिद्धिकरं परम्" ॥ इति ।

पञ्चातको गकारः । धरा ल इरो यस्तत्स्थो मनुरौ बिन्दुश्चैतद्युक्तः । तेन ग्ल्यौम् । इदं राघवभट्टीयव्याख्यानम् । सर्वसिद्धिकरत्वेन स्वातन्त्र्यमपि । नमोन्तत्वेन त्र्यक्षरत्वं प्रणवमायादिमत्त्वेन वा तेन सप्त्योदिकमुच्यते ।

"मुनिर्नारद आख्यातो गायत्रं छन्द उच्यते ।
देवता बालकृष्णोऽङ्गं षड्दीर्घक्रान्तबीजतः ॥"

तेनाऽऽद्यवयसः कृष्णस्यार्णं बीजं पिण्डबीजमन्तरा षट्कोणमध्ये विलिखीतेति सिद्धम् ।

**कृष्णाय नम इति बीजाढ्यं स ब्राह्मणमाधायानङ्गमनु गायत्रीं यथावद्व्यासज्य भूमण्डलं[2] मूलवेष्टितं कृत्वाऽङ्गवासुदेवादिरुक्मिण्यादिस्वशक्तीन्द्रादिवसुदेवादिपार्थादिनिध्यावीतं यजेत्संध्यासु प्रतिपत्तिभिरुपचारैस्तेनास्याखिलं भवत्यखिलं भवतीति ॥ ४ ॥**

किंच कृष्णाय नम इति बीजाढ्यं विलिखीत मध्ये पिण्डस्य लिखितत्वात्पूर्वादिषट्कोणेषु षडक्षराणि विलिखेदित्यर्थः । विलिखीत वेति पाठे बीजं क्लीमिति तेनाऽऽढ्यं पञ्चाक्षरं कोणेषु विलिखेत् । अस्मिन्पक्षे मध्येऽपि कामबीजमेव । कीदृशं मन्त्रं सब्राह्मणम् । ब्राह्मणो ब्रह्मा ककारस्तत्सहितं मन्त्रस्य ककारादित्वात्स्वरूपकथनमिदं सिद्धानुवादः । आधाय क्लीं कृष्णाय नम इति षट्सु कोणेष्वेकैकशो निधाय । **अनङ्गमनु[3] गायत्रीं यथावद्व्यासज्येति** । अनङ्गमनु कामबीजानन्तरं[4] संनिधानात्तस्यैव गायत्रीम् " कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनङ्गः प्रचोदयात् " तां यथावदष्टसु पत्रेषु त्रिशो गायत्रीवर्णान्व्यासज्य लिखित्वा भूमण्डलं पिण्डबीजं कर्णिकामध्यस्थं पिण्डस्य घनत्वात्पार्थिवान्तरप्रायत्वाच्च भूमण्डलता । एवं कामबीजपक्षेऽपि मूलेनाष्टाक्षरेण वेष्टितं कृत्वा । **अङ्गवासुदेवादिरुक्मिण्यादिस्वशक्तीन्द्रादिवसुदेवादिपार्थादिनिध्यावीतं यजेदिति** । अङ्गादिभिरावृतमम्बुजं यजेदित्यर्थः । भूमण्डलं शूलवेष्टितमिति पाठे बहिर्भूमण्डलं कृत्वाऽन्तःशूलानि राशिपत्रार्थं कर्तव्यानीत्यर्थः । भृत्याङ्गेति[5] पाठे भृत्या दामसुदामवसुदामकिंकिनामानः पार्षदाः समीपे प्रधानस्य पूर्वादिषु[6] पूज्या

१ क. षडस्रे । २ घ. °लं शूल° । ३ क. °मनुं गा° । ४ क. °न्तरसं° । ५ क. °शिवत्रा° । ६ क. °दिपू° ।

इत्यर्थः । अङ्गानि पञ्च पूर्वोक्तानि तान्याग्नेयादिकोणेषु चत्वारि दिशास्वस्त्रमिति क्रमेण पूजयेत् । वासुदेवादयो मूर्तयतश्चतस्रः [1]सशक्तिका रामचन्द्रावरण उक्ताः । शारदोक्ता वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः शान्तिश्रीसरस्वतीरतिसहिताः पत्रमूलेषु पूज्याः । रुक्मिण्यादयोऽष्टौ पट्टराज्यः ।

ता तथा—"रुक्मिण्याख्या सत्या सनग्नजित्याह्वया सुनन्दा च ।
भूयश्च मित्रविन्दा सलक्ष्मणर्तना(र्क्षी) सुशीला च" ॥ इति ।

स्वशक्तयो विमलाद्याः ।

ता तथा—"विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी मता" ॥ इति ।

तास्तु पीठशक्तयो मध्येषु दिक्षु च पीठपूजावसरे यष्टव्याः । अत्र तु पाठक्रमो न विवक्षितोऽर्थक्रमस्य बलीयस्त्वात् । रुक्मिण्यादिविशेष्यं वा स्वशक्तिग्रहणम् । इन्द्रादिग्रहणमैरावताद्यष्टदिग्गजवज्रादीनामप्युपलक्षणं तेनेन्द्रादीनामादितो दिग्गजानामन्ते च वज्रादीनामावरणं द्रष्टव्यम् ।

ते तथा—"इन्द्रमग्निं यमं रक्षो वरुणं पवनं विधुम् ।
ईशानं पन्नगाधीशमध ऊर्ध्वे पितामहः" ॥ इति ।

अधऊर्ध्वग्रहणं तत्स्थानप्रदर्शनार्थं पूजा तु पूर्वेशानयोरन्तरे ब्रह्मणः । रक्षोवरुणयोरन्तरे पन्नगाधीशस्य । वज्रादयो यथा—

"वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।
शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः" ॥ इति ।

अत्राप्यर्थक्रमादिदमावरणद्वयं सर्वेषामन्ते द्रष्टव्यम् । रक्षकत्वेन तेषां बहिरेवोचितत्वात् । ऐरावतादयो यथा—

"ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च ते क्रमात्" ॥ इति ।

एत इन्द्रादिभ्यः प्राक्पूज्याः । वसुदेवादयो यथा—

"ततो यजेद्दलाग्रेषु वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च बलभद्रं सुभद्रिकाम् ॥
गोपान्गोपीश्च गोविन्दं विलीनमतिलोचनान्" ॥ इत्यष्टौ ।

पार्थादयः पञ्च पाण्डवाः सात्यकिर्जयन्तो विदुर इत्यष्टौ । केशवाचार्यैस्तु पार्थादिस्थाने मन्दरादय उक्ताः ।

---

१ क स्वशक्तिका ।

तद्यथा—"मन्दरादींश्च तद्बाह्ये पूजयेत्कल्पपादपान् ।
मन्दारसंतानकपारिजातकल्पद्रुमाख्यान्हरिचन्दनं च ।
मध्ये चतुर्दिक्ष्वपि वाञ्छितार्थदानैकदीक्षान्गुरुनम्रशाखान्" ॥ इति ।

यद्वा पार्थग्रहणमेव कल्पद्रुमोपलक्षणम् । निधयो नव—
"महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव" ॥ इति ।

तैरावीतम् । नवमो निधिरैशान्यामेव निवेश्यः । अधिकस्यान्ते निवेश इति न्यायात् । तत्रायमावरणक्रमः । भृत्याङ्गवासुदेवादिरुक्मिण्यादिवसुदेवादिपार्थादिनिधीन्परित्यज्य सप्तोक्तानि । तद्यथा 'कथितमावृतिसप्तकमच्युतार्चनविधाविति सर्वसुखावहम्' भृत्यवसुदेवादीन्परित्यज्य पञ्चाप्युक्तानि तथा त्रीण्यपि । तद्यथा—"प्रयजतादथ वाऽङ्गपुरंदराशनिमुखैस्त्रितयावरणं त्विदम्" । अष्टनामभिरेकमप्युक्तं तद्यथा—

"श्रीकृष्णो वासुदेवश्च नारायणसमाह्वयः ।
देवकीनन्दनयदुश्रेष्ठौ वार्ष्णेय इत्यपि ॥
असुराक्रान्तशब्दान्तो भारहारीति सप्तमः ।
धर्मसंस्थापकश्चाष्टौ चतुर्थ्यन्ताः क्रमादिति ॥
एभिरेवाथ वा पूजा कर्तव्या कंसवैरिणः" इति ॥

य एते षडपि १०, ९, ७, ५, ३, १, पक्षा मुख्या एव । पूजायन्त्रस्य लेखनप्रकारो यथावत्संप्रदायादवगन्तव्यः । संध्यासु तिसृषु । प्रतिपत्तिभिर्गौरवैर्गुणस्तुतिभिः । "प्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्रगल्भे च प्रबोधे च प्रतिपत्तिः प्रयुज्यते" इति **विश्वः** । उपपूजाप्रकारैः "अष्टात्रिंशत्षोडशार्कदशसप्त च पञ्च च" इत्याद्युक्तैः षड्विधैः । तेन यजनेनास्य साधकस्याखिलमिष्टं भवति । द्विरुक्तिः खण्डसमाप्त्यर्था । अस्य ध्यानं तु—

"स्मरेद्वृन्दावने रम्ये मोदयन्तं मनोरमम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥
आत्मनो वदनाम्भोजप्रेरिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥
मुक्ताहारलसत्पीनतुङ्गस्तनभरान्विताः ।
स्रस्तधम्मिल्लवसना मदस्खलितभूषणाः ॥
दन्तपङ्क्तिप्रभोद्भासिस्पन्दमानाधराञ्चिताः ।
विलोभयन्त्यो विविधैर्विभ्रमैर्भावगर्वि(र्भि)तैः ॥

१ क. हणं पूर्व क० ।

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोपालसंघावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥
मन्त्रमेनं यथान्यायमयुतद्वितयं जपेत् ।
जुहुयादरुणाम्भोजैस्तद्दशांशैः समाहितः " ॥ इति ।

अत्रायुतद्वितयजपस्तु पूर्वसेवाविषयः । पञ्चलक्षं तु पुरश्चरणे जपः । त्रिमधुराक्तै-रुरुणाम्बुजैस्तद्दशांशेन होमः । होमसंख्यया तर्पणं तद्दशांशेन द्विजभोजनं तद्दशांशेन मार्जनमिति पुरश्चरणम् । अत्र ध्यानान्तरम् । वेणुश्रीवत्सकौस्तुभवनमालाबिल्वमुद्राः प्रदर्शयेत् । तासां लक्षणानि—

" ओष्ठे वामकराङ्गुष्ठो........स्तस्य कानिष्ठिका । (?)
दक्षिणाङ्गुष्ठसंलग्ना तत्कानिष्ठा प्रसारिता ॥
तर्जनीमध्यमानामाः किंचित्संकुच्य वालिताः ।
वेणुमुद्रा भवेदेषा सुगुप्ता प्रेयसी हरेः ॥
अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन तु बध्नीयात्कनिष्ठामूलसंश्रिते ।
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ॥
दक्षिणस्यानामिकाङ्गुष्ठसंलग्नां कनिष्ठिकाम् ।
कनिष्ठयाऽन्यया बद्ध्वा तर्जन्या दक्षया तथा ॥
वामानामां च बध्नीयाद्दक्षाङ्गुष्ठस्य मूलके ।
अङ्गुष्ठमध्यमे वामं संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका ॥
स्पृशेत्कण्ठादिपादान्तं तर्जन्याऽङ्गुष्ठनिष्ठया ।
करद्वयेन तु भवेन्मुद्रेयं वनमालिका ॥
अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाथ बद्ध्वा
तस्याग्रं पीडयित्वाऽङ्गुलिभिरपि ततां(तो) वामहस्ताङ्गुलीभिः ।
बद्ध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं
बिल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीयाऽविसुज्ञैः ॥
मनोवाणीदेहैर्यदिह वपु(जनु)षा वाऽपि विहितं
स्वमत्या मत्या वा तदखिलमसौ दुष्कृतचयम् ।

इमां मुद्रां जानन्क्षपयति नरस्तं सुरगणा
नमन्त्यस्याधीना भवति सततं सर्वजनता॥" इति।

अथास्य धारणयन्त्रमुच्यते—

"पिण्डं मूलेन वीतं दहनपरयुगे कोणराजत्षडर्णै-
र्यात्पाद्यं दशार्णं स्फुरितदशदलं कामबीजेन वीतम्॥
पद्मं किञ्जल्कसंस्थस्वरविकृतिदलं प्रोल्लसत्षोडशार्णं
किञ्जल्कव्यञ्जनाढ्यं विकृतिदलयुगेष्वर्पितानुष्टुबर्णम्।
पाशाङ्कुशाभ्यामावीतं क्षी(क्षो)णीपुरयुगास्रि(स्त्रि)षु।
अष्टाक्षरेण सहितं यन्त्रं गोविन्ददैवतम्।
धर्मार्थकामफलदं सर्वरक्षाकरं स्मृतम्"॥

ङंबीजमुक्तं षडर्णोऽप्युक्तः—

"गोपीजनान्ते प्रवदेद्वल्लभायाग्निसुन्दरी।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः॥
प्रणवं हृदयं कृष्णं ङेन्तमुक्त्वा ततः परम्।
तादृशं देवकीपुत्रं हुंफट्स्वाहासमन्वितम्।
षोडशाक्षरमन्त्रोऽयं गोविन्दस्य समीरितः॥
पिण्डं रतिपतेर्बीजं नमो भगवते ततः।
नन्दपुत्राय बालादिवपुषे श्यामलाय वा।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधि॥
अनुष्टुम्मन्त्र आख्यातो गोपालस्य जगत्पतेः।
अनङ्गः कृष्णगोविन्दौ ङेन्तावष्टाक्षरो मनुः"॥

एते मनवः स्वातन्त्र्येणाप्युपास्याः। यद्वक्ष्यति—

"तस्मादन्ये पञ्चपदादभूवन्गोविन्दस्य मनवो मानवानाम्।
दशार्णाद्यास्तेऽपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत्"॥ इति।

तल्लेखनप्रकारः। षट्कोणं लिखित्वा तन्मध्ये पिण्डबीजं लिखित्वा तन्मूलमन्त्रेण वेष्टयित्वा तद्बहिः पद्मं दशपत्रं षट्कोणेषु गोपालषडक्षरं लिखेत्। पत्रेषु दशाक्षरं लिखेत्। तत्पत्रे कामबीजं कामबीजेन वेष्टयेत्। ततः षोडशदलं तत्केसरेषु स्वरान्पत्रेषु षोडशार्णं लिखेत्। तद्बहिर्द्वात्रिंशत्पत्रं व्यञ्जनकेसरमनुष्टुब्मन्त्रं पत्रेषु लिखेद्बहिः पाशाङ्कुशवेष्टितम्। तद्बहिर्भूपुरं द्वैधं कोणेषु गोपालाक्षरमन्त्रवर्णाल्लिखेत्। लेखनं यथावत्कार्यम्॥ ४॥

---

१ क. °पुरद्वे°।

कृष्णस्वरूपप्रकाशकमन्त्रानाह—

तदिह श्लोका भवन्ति—

**एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन्बहुधा यो विभाति।**
**तं पीठस्थं येऽनुभजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥**

**तदिहेति।** **एक इति।** मुख्यः। वशी सर्वं वशमस्यास्तीति। ईड्यः स्तुत्यः। **एकोऽपीति**। जलचन्द्रादिवद्घटाकाशादिवद्वा। पीठस्थं पूर्वोक्ते वैष्णवे पीठे वर्तमानम्। पीठपूजा तु **नारसिंहे रामतापनीये** चोक्ता। धीराः स्थिरबुद्धयः।

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।**
**तं पीठगं येऽनुयजन्ति विप्रास्तेषां सिद्धिः शाश्वती नेतरेषाम्॥**

नित्यानां नित्यत्वाभिमतानां व्योमादीनां मध्ये चेतनानां चेतनत्वाभिमतानां मनआदीनां मध्ये 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः। बहूनां सर्वजीवानाम्। विप्रा मुख्यत्वादुपात्ता वैदिकोपासनाविध्यभिप्रायेण वा स्त्रीशूद्रादिव्यावृत्त्यर्थम्।

**एतद्विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामात्।**
**तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदैव॥**

नित्योद्युक्ताः कदाचिदपि यजने न प्रमादिनः। न कामात्फलेप्सया।

**यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गापयति स्म कृष्णः।**
**तं ह देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणममुं व्रजेत्॥**

पूर्वं सृष्ट्यादौ ब्रह्माणं पद्मयोनिं विदधाति करोति। तस्मै गापयति स्म गानं कारितवान्। क्रियाग्रहणात्संप्रदानता। आत्मवृत्तिप्रकाशं चरमान्तःकरणवृत्त्या भासमानम्। यद्वा स्वयंप्रकाशम्।

अष्टादशाक्षरस्य प्रकारान्तरेण प्रयोगमेकादशाक्षरेण त्रिष्टुभाऽऽह—

**ओंकारेणान्तरितं यो जपति गोविन्दस्य पञ्चपदं मनुं तम्।**
**तस्यैवासौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै॥**

**ओंकारेणान्तरितं यो जपति गोविन्दस्य पञ्चपदं मनुं तमिति।** मनुं मन्त्रं तं प्रसिद्धम्। एवमस्योच्चारणप्रकारः। ॐ क्लीं कृष्णाय। ॐ गोविन्दाय। ॐ गोपीजनवल्लभाय। ॐ स्वाहेमिति। **तस्यैवेति**। तस्याऽऽत्मरूपमसौ दर्शयेदेवेत्यन्वयः। **तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्या इति**। तस्माद्यत एव ध्यायतामात्मरूपं दर्शयेदतो मुमुक्षुर्मुक्तिकामो नित्यशान्त्यै मोक्षायाभ्यसेदर्थात्प्रकरणाद्वा। ओंकारान्तरितं पञ्चपदं तस्मै जापकाय निशान्ते सदने पस्त्ये गृहे क्षरति वाञ्छितं वर्षति। परंतु संवादसेवनात्सेवनं विनैवोच्चारणमात्रेण सेवनस्य भजनस्य फलं संपत्तिर्न भवति किंतु मोक्षरूपमेव। संपत्त्वानुषङ्गिकं फलम्।

तदुक्तम्—"रूपमारोग्यमर्थांश्च भोगांश्चैवाऽऽनुषङ्गिकान् ।
ददाति ध्यायतो नित्यमपवर्गप्रदो हरिः" ॥ इति ।

**एतस्मादन्ये पञ्चपदादभूवन्गोविन्दस्य मनवो मानवानाम् ।**
**दशार्णाद्यास्तेऽपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ॥**

**एतस्मादिति** । मानवानां हितायेति शेषः । दशार्णाद्या दशाक्षराद्याः पूर्वोक्ता मनवो मन्त्रा अभूवन्नित्यर्थः । तेऽपि मन्त्राः । संक्रन्दनाद्यैः संक्रन्दयति रिपुस्त्रीरिति व्युत्पत्त्या संक्रन्दन इन्द्रः । 'संक्रन्दनो दुश्च्यवनः' इत्यमरात् । तत्प्रभृतिभिः । भूतिकामैः श्रीकामैर्यथावन्न्यासादिपूर्वकमभ्यस्यन्त उपास्यन्ते । तेषामानन्त्येऽपि कतिपयानामुपासनान्युच्यन्ते । तस्य(त्र) दशाक्षरस्य यथा—

"गोपीजनान्ते प्रवदेद्वल्लभायाग्निसुन्दरी ।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥

अस्य मुन्यादिपूजान्तमष्टादशार्णवत् । जपस्त्वद्रिशृङ्गे नद्यास्तटे बिल्वमूले तोये ह्रदस्थे गोकुले विष्णुगृहेऽश्वत्थस्याधस्तादम्बुधेश्च तीरे । स्थानेष्वेतेष्वासीन एकैकशस्तु प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक्क्रमशः । अष्टादशाक्षरं वेदयुतद्वयमित्युदीरिता संख्या । शाकमूलफलगोक्षीरगोदधिभैक्षसक्तुकैरेयाणि क्रमेण भोजनमिति पूर्वसेवा । ततो दशलक्षैः पुरश्चरणं त्रिमधुराक्तारुणाम्बुजैर्दशांशहोमस्तावदेव तर्पणं तद्दशांशेन ब्रह्मभोजनं दशांशमार्जनम् । आचक्राय विचक्राय सुचक्राय त्रैलोक्यरक्षणचक्रायासुरान्तकचक्रायेति पञ्चाङ्गानि । वर्णाक्षरैर्वा सबिन्दुभिर्दशाङ्गानि । वर्णन्यासादिकं तत्पटलादेव ज्ञेयमिति दशाक्षरविधिः । षडर्णो यथा—"स्मरः कृष्णाय उद्दण्डषडर्णो मनुरीरितः" अस्य सर्वं दशाक्षरवज्जपस्तु लक्षम् । षोडशार्णो यथा—

"प्रणवं हृदयं कृष्णं ङेन्तमुक्त्वा ततः परम् ।
तादृशं देवकीपुत्रं हुंफट्स्वाहासमन्वितम् ॥
षोडशाक्षरमन्त्रोऽयं गोविन्दस्य समीरितः" ॥

हृदयं नमःपदं ङेन्तं कृष्णं कृष्णायेति तादृशं ङेन्तं देवकीपुत्रायेति । सर्वमस्य दशाक्षरवज्ज्ञेयम् । द्वात्रिंशदर्णो यथा—

"पिण्डं रतिपतेर्बीजं नमो भगवते ततः ।
नन्दपुत्राय बालादिवपुषे श्यामलाय च ॥

१ क. ह्रदस्थे ।

गोपीजनपदस्यान्ते वल्लभाय द्विठावधि ।
अनुष्टुम्मन्त्र आख्यातो गोपालस्य जगत्पतेः" ॥

अस्यर्ष्यादिकं यथा—

"अमुष्य नारद ऋषिश्छन्दोऽनुष्टुप्समीरितम् ।
देवता हरिराख्याता आचक्राद्यैरथाङ्गकम् ॥
दक्षिणे रत्नचषकं वामे सौवर्णवल्लकी ।
करे दधानं देवीभ्यामाश्लिष्टं चिन्तयेद्धरिम् ॥
जपेल्लक्षं मनुवरं पायसैरयुतं यजेत् ।
पूजा तु वैष्णवे पीठे ह्यङ्गदिक्पालवज्रकैः ॥
एवं सिद्धमनुर्मन्त्री त्रैलोक्यैश्वर्यभाग्भवेत्" ॥ इति ।

अष्टार्णो यथा—"अनङ्गः कृष्णगोविन्दौ ङेन्तावष्टाक्षरो मनुः" ।

अस्य दशार्णवद्विधिः । पिण्डविधिर्यथा नमोन्तत्वेनाष्टाक्षरत्वं प्रणवमायादित्वेन वा । अस्यर्ष्यादिकमुच्यते—

"मुनिर्नारद आख्यातश्छन्दो गायत्रमीरितम् ।
देवता बालकृष्णोऽङ्गं षड्दीर्घक्रान्तबीजतः ॥
अव्याद्व्याकोशलीलाम्बुजरुचिररुणाम्भोजनेत्रो द्विहस्तो
बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः ।
दोर्भ्यां हैयङ्गवीनं विदधति विमलं पायसं विश्ववन्द्यो
गोपीगोपालवीतो रदनखविलसत्कर्णभूषश्चिरं वः ॥
लक्षं जपेद्दशांशं वा पायसं ससितं हुनेत् ।
पूजा च वैष्णवे पीठे अङ्गदिक्पालवज्रकैः" ॥ इति ।
"यद्वर्षिर्नारदः प्रोक्तो जगतीछन्द ईरितम् ।
श्रीकृष्णो देवता बीजं लो भा शक्तिः प्रकीर्तिता ॥
षडङ्गमूलमन्त्रेण अथदेवं विचिन्तयेत् ।
कदम्बमूले तिष्ठन्तं देवदेवं जनार्दनम् ॥
इन्दीवरदलश्यामं पूर्णचन्द्रनिभाननम् ।
देवगन्धर्वयक्षौघनरोरगानिषेवितम् ॥
मोहनं गोपगोपीनां वल्लभं देवकीसुतम् ।
मयूरपिच्छसंयुक्तं वनमालाविभूषितम् ॥
पूर्णचन्द्रनिभं कान्तं वृन्दावननिवासिनम् ।

वेणुं गायन्तममलं सर्वभूतमनोरमम् ।
लेलिह्यमानं वत्सैश्च मृगैः सिंहैस्तथा द्विजैः ॥
सर्वाभरणसंयुक्तं सर्वाभरणशोभितम् ।
कौस्तुभोद्भासितोरस्कं दामपिच्छसमावृतम् ॥
अप्रमेयमचिन्त्यं च गोपालं शिशुरूपिणम् ।
ध्यायेत्तं देवदेवेशं सर्वलोकैकनायकम् ॥
अङ्गैश्च वासुदेवाद्यै रुक्मिण्याद्यैस्तृतीयकम् ।
कुमुदेन्द्रायुधैश्चापि षडावरणमीरितम् ॥
जपोऽयुतचतुष्कः स्याद्दशांशं जुहुयात्ततः ।
पायसेन सिताक्तेन तर्पयेत्तावदेव तु ॥
सिद्धमन्त्रस्य लोकोऽयं सद्यो वश्यो भविष्यति "॥ इति ।

एकाक्षरो यथा—

" ब्रह्मा भूम्यासनासीनः शान्तिबिन्दुसमन्वितः ।
बीजं मनोभुवः प्रोक्तं जगत्त्रितयमोहनम् ॥
ऋषिः संमोहनः प्रोक्तो गायत्रीछन्द ईरितम् ।
मनःसंमोहनः साक्षाद्देवता मकरध्वजः ॥
बीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ।
जपारुणं रत्नविभूषणाढ्यं मीनध्वजं चारुकृताङ्गरागम् ।
कराम्बुजैरङ्कुशमिक्षुचापं पुष्पास्त्रपाशौ दधतं स्मरामि ॥
लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ॥
पुष्पैः किंशुकजैः फुल्लैर्जुहुयात्तद्दशांशतः ।
वक्ष्यमाणे यजेत्पीठे विधिवन्मकरध्वजम् ॥
मोहनी क्षोभणी त्रासा स्तम्भिन्याकर्षणी पुनः ।
द्राविण्युन्मादिनीक्लिन्नोत्क्लेदिन्यः पीठशक्तयः ॥
बीजाढ्यमासनं दत्त्वा मूर्तिं मूलेन कल्पयेत् ।
अस्यां सम्यग्यजेद्देवं वक्ष्यमाणेन वर्त्मना ॥
इष्टाङ्गावरणं पूर्वं मध्ये दिक्षु यजेच्छरान् ।
द्रामाद्यं शोषणं पूर्णं द्रीमाद्यं मोहनं ततः ॥
संदीपनाख्यं क्लीमाद्यं द्रूमाद्यं तापनं पुनः ।
सर्गान्तभृगुणा भूयो मादनं पञ्चमं मतम् ॥
प्रणामबाणहस्ता मध्ये यास्ता बाणदेवताः ।
संपूज्याः पत्रमध्ये तु शक्तयोऽष्टौ यथाक्रमम् ॥

अनङ्गरूपाऽऽद्याऽनङ्गमदनाऽनङ्गमन्मथा ।
अनङ्गकुसुमा पश्चादनङ्गमदनातुरा ॥
अनङ्गशिशिराऽनङ्गमेखलाऽनङ्गदीपिका ।
लीलाकमलधारिण्यः स्मेरवक्त्रानुशोभिताः ॥
बहिः षोडशपत्रेषु पूज्याः षोडश शक्तयः ।
युवतिप्रतिलम्भाऽन्या ज्योत्स्ना सुभ्रूर्मदा द्रवा ॥
सुरता वारुणी राका कान्तिः सौदामनी पुनः ।
कामच्छत्री चन्द्रलेखा मुकी स्यान्मदना पुनः ॥
ज्योतिर्मायावती ताः स्युः कह्लारविकसत्कराः ।
स्मेरवक्त्रा युवतयो मदविभ्रममन्थराः ॥
दलाग्रेषु पुनः पूज्याः स्मरस्य परिचारकाः ।
शोको मोहो विलासोऽन्यो विभ्रमो मदनातुरः ॥
अपत्रपो युवा कामी भूतपुष्पो रतिप्रियः ।
ग्रीष्मस्तपान्त ऊर्जोऽन्यो हेमन्तः शिशिरो मदः ॥
इक्षुकार्मुकपुष्पेषुधरा रक्ताः सुपूजिताः ।
अपराङ्गनिषङ्गाढ्या वनितासक्तमानसाः ॥
रतिप्रियानष्टदिक्षु यजेदष्टौ विशिष्टधीः ।
परभृत्सारसौ पश्चाच्छुकमेघाह्वयौ पुनः ॥
अपाङ्गकविलासौ द्वौ हावभावौ प्रकीर्तिताः ।
चतुरस्रस्य कोणेषु पूज्यास्तत्परिचारिकाः ॥
माधवी मालती पश्चाद्धीर(द्धरि)णाक्षी मदोत्कटा ।
सितचामरधारिण्यः सर्वाभरणभूषिताः ॥
बाह्ये लोकेश्वरान्पश्चात्तदस्त्राण्यर्चयेत्क्रमात् ।
इत्थं यो भजते देवं सुगन्धिकुसुमादिभिः ।
स भवेल्लब्धसौभाग्यो लक्ष्म्या जितधनेश्वरः " ॥ इति ।

एकाक्षरस्य ककारो बीजमीकारः शक्तिः । अयं मनुर्द्विरूपो विष्णुरूपः कामरूपश्च । एवमादयो मनवः संक्रन्दननारदसंमोहनादिभिरभ्यस्यन्ते भूतिकामैः । यथावदुक्तविधिना ।

**तदेतस्य स्वरूपार्थं वाचा वेदयेति ते पप्रच्छुस्तदु होवाच ब्राह्मणः,**

**तदिति** । तस्मात्कारणादेतस्य कृष्णस्य स्वरूपार्थं स्वरूपं मन्त्रस्तदर्थं वाचा वचनेन

वेदय बोधयेत्येवं ते मुनयः पप्रच्छुः पृष्टवन्तः । तत्स्वरूपसंबोधने । ह प्रसिद्धौ । उवाचोक्तवान् । ब्राह्मणो ब्रह्माऽसौ पूर्वोक्तः ।

किमुवाचेत्याह—

**अनवरतं मया ध्यातस्ततः परार्धान्ते सोऽबुध्यत**
**गोपवेषो मे पुरस्तादाविर्बभूव ततः प्रणतो मया,**

अनवरतं निरन्तरम् । मया ध्यातः स्तुतः स्तुतिविषयीकृतः परार्धान्ते "पञ्चाशद्ब्रह्मवर्षाणि परार्धमभिधीयते" इति विष्णुस्मरणाद्ब्रह्मणः पञ्चाशद्वर्षावसाने स कृष्णोऽबुध्यत बुद्धवान्मां ध्यायतीति चिन्तितवान् । चिन्तयित्वा गोपवेषो गोपस्येव वेषो यस्य तादृशः सन्मे मम पुरस्तादग्र आविर्बभूव प्रकटीभूतो गोपवेषधरस्तेन सनातनः । ततस्तदनन्तरं प्रणतो नमस्कृतो मया ब्रह्मणा कृतनमस्कारः संश्च ।

**अनुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये दत्त्वाऽन्तर्हितः पुनः सिसृक्षा मे प्रादुरभूत्तेष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयंस्तदाह तदाह ॥ ५ ॥**

**अनुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये दत्त्वाऽन्तर्हित इति ।** अनुकूलेन दयार्द्रेण हृदा मनसा मह्यं ब्रह्मणेऽष्टादशार्णं मन्त्रराजं स्वरूपं श्रीकृष्णरूपमेव मन्त्रमयत्वाद्देवतायाः "देवतागुरुमन्त्राणां भावयेदैक्यमात्मना" इति स्मृतेर्मूलेन कल्पयेदिति च स्मृतेः । सृष्टये सृष्ट्यर्थं दत्त्वा प्रदर्श्यान्तर्हितोऽप्रत्यक्षो बभूव । पुनस्तपःफलप्राप्त्यनन्तरं सिसृक्षा स्रष्टुमिच्छा मे मम प्रादुरभूत्प्रादुर्भूता । तेष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयंस्तदाहेति तेष्वष्टादशास्वक्षरेषु भविष्यद्भावि जगतो रूपमाकाशादि प्रकाशयन्प्रकटीकुर्वन्ब्रह्मा तज्जगदाह वक्तीति श्रुतेर्वचः । प्राकाशयं तदिहेति युक्तः पाठः । तज्जगदिह प्राकाशयं प्रकटितवानहमित्यर्थः । तदाह प्रकारमेवाऽऽह ब्रह्मोत्तरग्रन्थेनेति श्रुतेर्वचः ॥ ६ ॥

पञ्चपदानां क्रमेण सृष्टिविभागमाह—

**आकाशादापो जलात्पृथ्वी ततोऽग्निर्बिन्दोरिन्दुः,**

**आकाशादिति ।** आकाशादापो वायुतेजोद्वारेति बोद्धव्यम् । "तस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" इति श्रुत्यन्तरात् । ततोऽग्निस्ततः पृथिव्या अग्निरिदं स्थूलाग्न्यभिप्रायमम्बरस्थपाषाणकाष्ठादौ निमित्तत्वेनाग्न्युत्पत्तिदर्शनात् । बिन्दोर्जलैकदेशादिन्दुश्चन्द्रः ।

**तत्संपातादर्कः ।**

**तत्संपातादर्क इति ।** तेषां पृथिवीजलतेजसां संपातात्संयोगादर्कः सूर्यः । घनत्वात्पार्थिवभागो जलाकर्षणादुदकभाग उष्णत्वात्तेजोभागः । सूर्य इव इन्दौ यद्यपि तेज

उपलभ्यते तथाऽपि तस्य सौरप्रतिबिम्बरूपत्वान्न स्वाभाविकताऽस्य तत्त्वं तु ज्योतिःशास्त्रे निर्णीतम्। युक्तिश्रुतिविरोधात्पुराणप्रक्रियाऽर्थवादः।

**इति क्लींकारादसृजं कृष्णादाकाशं खाद्वायुरित्युत्तरा-**
**त्सुरभिविद्याः प्रादुरकार्षं तदुत्तरात्तु स्त्रीपुमादि च,**

**इति क्लींकारादसृजमिति।** इति भूतद्वयमाग्निः सूर्याचन्द्रमसौ चाऽऽद्यबीजात्सृष्टवानस्मि। कृष्णात्कृष्णपदादाकाशं यत्प्रसिद्धं श्रोत्रेन्द्रियादिरूपम्। खादाकाशाद्वायुरिति यः प्रसिद्धः प्राणादिरूपस्तमसृजम्। बीजेनोत्पन्नादाकाशाज्जलं सृष्टं न त्वाकाशः स तु कृष्णेन सृष्टस्ततो वाय्वग्नी अपि कृष्णेनैव सृष्टौ। जलादारभ्य तु बीजात्सृष्टिस्तेन जायापती बीजं सौम्यं कृष्णपदं क्रूरम्। उत्तरात्सुरभिविद्याः प्रादुरकार्षम्। उत्तराद्गोविन्दपदात्सुरभयो गावो विद्यास्ताः प्रादुरकार्षं वेदादिचतुर्दशविद्याश्च प्रकटीकृतवानस्मि। सुरभिमिति पाठे सुरभिं गां गोजातिं विद्याश्चेत्यर्थः। युक्तं चैतत्। गोशब्देन गवां विन्दशब्देन च विद्यानामभिधानात्। तदुत्तरात्तु स्त्रीपुमादि चेदं सकलं तस्मादुत्तराद्गोपीजनादिपदात्तु पुनः स्त्रीपुमादि च स्त्रीपुंसादि चासृजम्। आदिशब्दात्स्वेदजोद्भिज्जाण्डजजरायुजात्मकं चतुर्विधं प्राणिजातं गृह्यते। युक्तं चैतत्। गोपीजनपदे स्त्रीपुंसान्वयात्।

**इदं सकलमिदं सकलमिति**[1] ॥ ६ ॥

**इदमिति।** अत्रापि तदुत्तरादिति बोद्धव्यम्। तच्च स्वाहापदं तस्मादिदं सकलं तदुपकरणं चासृजं यत्स्वत्वेन हेयत्वेन च व्यवह्रियते तत्र स्वाहाशब्दानुगमात्। यद्वा तदुत्तरात्पदद्वयात्क्रमेण स्त्रीपुंसादि सकलं चासृजमित्यर्थः। एवं व्याख्याने नाध्याहारापेक्षा। द्विरुक्तिः पञ्चपदसृष्टिसमाप्त्यर्था ॥ ६ ॥

एतदावर्तनस्तुत्यर्थं चन्द्रध्वजनाम्नो भक्तस्य राज्ञ आख्यायिकामाह—

**एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं**
**वेदयित्वोंकारान्तरालिकं मनुमावर्तयन्,**

**एतस्यैवेति।** एतस्यैव कृष्णस्य यजनेन पूजनेन गतमोहं त्यक्तमिथ्याज्ञानमात्मानं वेदयित्वा ज्ञात्वा। विदङ्क्चेतनाख्यानवाकसंदेश इति बोपदेवः। ओंकारस्यान्तरालिकं मध्यवर्तिनं मनुं मन्त्रमावर्तयंस्तदोंकारपुटितं जपितवान्।

फलमाह—

**सङ्गरहितोऽभ्यपतत्।**

सङ्गरहितः सन्नत्यापतत्संसारमतिक्रम्याऽऽपतदाप्तवान्। अभ्यापतदिति पाठ आभिमुख्येन प्राप्तवान्।

[1] क ख. °मिदमिति।

किं प्राप्तवानित्यत आह—

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्,**

**तद्विष्णोरिति** । तन्मुक्त्याख्यं विष्णोर्व्यापकस्य परमात्मनः परमं पदं स्थानमत्यापतत् । नन्वनुभवासंभवे कथमापेत्याशङ्क्य विद्वदनुभवमाह—**सदा पश्यन्ति सूरय इति** । ननु सर्वानुभवे सर्वमुक्तिप्रसङ्गः । इष्टमेवैतन्मुक्त एव विमुच्यत इति श्रुतेः । प्रयत्नवैयर्थ्यमिति चेद्दृशमस्त्वमसीत्यादिवत्स्वस्यैव दर्शनाय शास्त्रगुरुपरिचर्यादीनां साफल्यात् ।

उपसंहरति—

**तस्मादेतन्नित्यमभ्यसेन्नित्यमभ्यसेदिति ॥ ७ ॥**

**तस्मादिति** । एतदष्टादशाक्षरं नित्यं सदाऽभ्यसेदावर्तयेत् । द्विरुक्तिराख्यायिका समाप्त्यर्था ॥ ७ ॥

पञ्चपदाज्जगत्सृष्टौ मतभेदमाह—

**तदाहुरेके यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलं तृतीयपदात्तेजश्चतुर्थाद्वायुश्चरमाद्व्योमेति वैष्णवं पञ्चव्याहृतिमयं मन्त्रं कृष्णावभासं कैवल्यसृत्यै सततमावर्तयेदिति,**

**तदाहुरेक इति** । तत्तत्रार्थे । आहुर्वदन्त्येक आचार्याः । यस्य कृष्णस्य प्रथमपदाद्बीजाद्भूमिः पृथिवी जाता । एवं चतुर्षु । चरमादन्त्यात्स्वाहाकाराद्व्योम प्रथमम् । इत्थं मन्त्रावरोहेण सृष्टिः । वैष्णवं विष्णुदेवताकं पञ्च व्याहृतयः क्रमेण भूराद्या जनान्तास्तन्मयं प्रतिपदमेकमेकैकव्याहृतिदृष्टिविधानात्पञ्चत्वमुक्तम् । अथवा पञ्चभूतान्येव पञ्चव्याहृतिशब्देनोच्यन्ते तन्मयं मन्त्रमष्टादशाक्षरं कृष्णावभासं कृष्णप्रतिपादकं कैवल्यसृत्यै कैवल्यस्य मोक्षस्य सृत्यै मार्गाय मोक्षपद्धतये सततं नित्यमावर्तयेज्जपेत् । इतिशब्दो मन्त्रोपासनासमाप्त्यर्थः ।

उक्तेऽर्थे मन्त्रसंमतिमाह—

**तदत्र गाथाः—**

**यस्य पूर्वपदाद्भूमिर्द्वितीयात्सलिलोद्भवः ।**
**तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः ॥**
**पञ्चमादम्बरोत्पत्तिस्तमेवैकं समभ्यसेत् ।**
**चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम् ॥**

**तदत्र गाथा इति** । वर्तन्त इति शेषः । तमेवैकमष्टादशाक्षरमेव नान्यत् । 'अन्या वाचो विमुञ्चथ' इति श्रुतेः । चन्द्रध्वजो राजा क्षत्रियस्यैवौचित्यात् ।

अनुष्टुब्द्वयमुक्त्वा वृत्तान्तरमाह—

**ततो विशुद्धं विमलं विशोकमशेषलोभादि निरस्तसङ्गम् ।**

**यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥**

**तत इति ।** अशेषलोभादि न शेषा लोभाद्यो यस्मिन् । यतो निरस्तसङ्गम् । एवंविधं यत्पदं ब्रह्माख्यं पञ्चपदं तदेव ब्रह्मरूपमेव ब्रह्मात्मकोऽष्टादशाक्षर इत्यर्थः । यत्पञ्चपदं स वासुदेवो ब्रह्मात्मकमन्त्रस्वरूपो वासुदेवो यतो वासुदेवादन्यन्नास्ति ।

**तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्च-**

**पदं वृन्दावने सुरभूरुहतलासीनं सततं**

तमेकमित्यादि गद्यम् । सुरभूरुहः कल्पवृक्षस्तस्य तले सततमासीनम् । सततमित्यनेन नित्यसंनिहितत्वमुक्तं तेन द्वापारान्त एवेति न भ्रमितव्यम् ।

**समरुद्गणोऽहं परमया स्तुत्या तोषयामि ।**

**समरुद्गणोऽहं परमयेति ।** मरुद्गणैरूनपञ्चाशद्भिः सहितः परमया मुख्यया स्तुत्या स्तवनेन तोषयामि प्रीणयामि ।

स्तुतिमेवाऽऽह, ॐ नम इत्यादिद्वादशभिः श्लोकैः—

**ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे ॥**

**विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥ १ ॥**

**नमो विज्ञानरूपाय परमानन्दरूपिणे ॥**

**कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥ २ ॥**

**नमः कमलनेत्राय नमः कमलमालिने ॥**

**नमः कमलनाभाय कमलापतये नमः ॥ ३ ॥**

॥ १ ॥ २ ॥ ३ ॥

**बर्हापीडाभिरामाय रामायाकुण्ठमेधसे ॥**

**रमामानसहंसाय गोविन्दाय नमो नमः ॥ ४ ॥**

**कंसवंशविनाशाय केशिचाणूरघातिने ॥**

**वृषभध्वजवन्द्याय पार्थसारथये नमः ॥ ५ ॥**

बर्हाणां मयूरपिच्छानामापीडो मुकुटस्तेनाभिरामाय स्वरूपेणापि रामायाभिरामाय ॥ ४ ॥ ५ ॥

**वेणुवादनशीलाय गोपालायाहिमर्दिने ॥**

**कालिन्दीकूललोलाय लोलकुण्डलधारिणे ॥ ६ ॥**

**बल्लवीनयनाम्भोजमालिने नृत्यशालिने ॥**

**नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥ ७ ॥**

नमः पापप्रणाशाय गोवर्धनधराय च ॥
पूतनाजीवितान्ताय तृणावर्तासुहारिणे ॥ ८ ॥

अहिमर्दिने कालीयदर्पदलनाय। तथा च मन्त्रवर्णः—

"कालीयको नाम सर्पो नवनागसहस्रबलः।
यमुनाह्रदेशो जातो [यो] नारायणवाहनः" ॥ इति।

॥ ६ ॥ ७ ॥ ८ ॥

निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे ॥
अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥ ९ ॥
प्रसीद परमानन्द प्रसीद परमेश्वर ॥
आधिव्याधिभुजंगेन दष्टं मामुद्धर प्रभो ॥ १० ॥
श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर ॥
संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥ ११ ॥
केशव क्लेशहरण नारायण जनार्दन ॥
गोविन्द परमानन्द मां समुद्धर माधव ॥ १२ ॥

निष्कलाय "कला स्यान्मूलतो वृद्धौ शिल्पे चाण्वंशमात्रके। षोडशांशे च चन्द्रस्य कला नौकालयोः कला" इति कोशः। यथार्हं तद्रहिताय। अशुद्धाः कंसादयस्तेषां वैरिणेऽन्तकाय ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

अथ हैवं स्तुतिभिराराधयामि

**अथ हैवं स्तुतिभिराराधयामीति**। अथ पश्चादद्याप्येवं कृष्णं स्तुतिभिराराधयामि साधयाम्यनुकूलं करोमि।

मदुपदेशं भवन्तोऽप्यर्हन्त्वित्याह—

ते यूयं तथा पञ्चपदं जपन्तः श्रीकृष्णं ध्यायन्तः
संसृतिं तरिष्यथेति स होवाच हैरण्यः। अमुं पञ्चपदं
मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तत्। अने-
जदेकं मनसो जवीयो नैतद्देवा आप्नुवन्पूर्वमर्षदिति

**ते यूयमिति**। तथा यथाऽहं जपामि। अमुं पञ्चपदमावर्तयेद्यः स यात्यनायासतः केवलं तदिति पूर्वार्धपाठो युक्तः। एवं तर्ह्युत्तरार्धसमानाक्षरतया त्रिष्टुप्स्यात्। अनायासतोऽप्रयत्नात्केवलं शुद्धं तद्ब्रह्मानेजत्स्थिरमपि मनसो जवीयः। यत्र मनो याति तत्रापि सत्त्वात्। देवा वागादय एतन्नाऽऽप्नुवन्न प्राप्ताः 'यतो वाचो निवर्तन्ते' इति श्रुतेः। यतः पूर्वमर्षत्। ऋष गतौ। व्याप्य गतवत्।

उपसंहरति—

तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं
रसेत्तं भजेत्तं भजेदित्यों तत्सदिति ॥८॥

इत्यथर्वोपनिषदि गोपालपूर्वतापनीयोपनिषत्समाप्ता ॥ ११ ॥

**तस्मादिति** । रसेन्नाम गृह्णीयात्तस्येत्यर्थः । तं भजेदिति द्विरुक्तिः समाप्त्यर्था । ॐ तत्सदिति ब्रह्मव्यपदेशः "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति स्मृतेः ॥ ८ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका कृष्णपूर्वके ॥ १ ॥

इति नारायणविरचिता गोपालपूर्वतापनीयोपनिषद्दीपिका समाप्ता ॥ १६ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# गोपालोत्तरतापनीयोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

खण्डोनविंशतियुता कृष्णासङ्गत्वदर्शिनी ।
सप्तचत्वारिंशत्तमी गोपालोत्तरतापनी ॥ १ ॥

ज्ञानिनोऽकर्तृत्वमभोक्तृत्वं च ज्ञापयितुं कृष्णगोपीसंवादरूपामाख्यायिकामारचयति—

ॐ एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा
सर्वेश्वरं गोपालं कृष्णं हि ता ऊचिरे। उवाच ताः कृष्ण-
मनुः कस्मै ब्राह्मणाय भैक्षं दातव्यं भवति दुर्वाससेति ।

**एकदा हीति** । एकदा कदाचित् । हि निश्चितम् । अत्र प्रायेण हिवैशब्दा निश्चयार्थो एव । सकामाः कामक्रीडासहिताः कृष्णेन सह विलसन्त्य इत्यर्थः । शर्वरीमुषित्वा । अत्यन्तसंयोगे द्वितीया । पूर्णां रात्रिं कामक्रीडासक्तं कृष्णं पश्यन्त्यः कौतुकमनुभूयेत्यर्थः । सर्वेश्वरं गोपालं सर्वेषामीश्वरमनन्तकोटिब्रह्माण्डाधीश्वरमपि सन्तं गवां

पालकं पशुपालकत्वलक्षणां हीनदशामाश्रितं कृष्णं ध्यातृणां कर्ममूलनिर्हणनम् । हि निश्चितम् । सकामं निर्धार्य ता गोप्य ऊचिरे जगुः । उवाच ताः कृष्णमनुः कृष्णो मनुरिव धर्मोपदेष्टा ताः प्रत्युवाच । कृष्णस्य गोपीनां च वाको वाक्यमभूदित्यर्थः । गोपीनां वचः कस्मा इति । भैक्षं भिक्षासमूहः 'भिक्षादिभ्योऽण्' । दातव्यमित्यर्हार्थे कृत्यः । यद्दानेन कृतार्थाः स्यामेति प्रश्नः । कृष्णवाक्यं दुर्वाससेतीति । संधिस्तु हे सखेतीतिवच्छान्दसः प्रामादिको वा ।

**कथं यास्यामोऽतीर्त्वा जलं यमुनायाः,**

गोपीनां वचः कथमित्यादि । अतीर्त्वा जलं यमुनाया इति । यमुनाया अगाधं जलं मध्ये वर्तते तच्चास्माभिः ससंभाराभिः स्त्रीभिस्तरीतुमशक्यं कश्चिदुपायोऽस्ति येन तज्जलमतीर्त्वैवास्पृष्ट्वैव दुर्वाससे यामो भवानतुलबुद्धिपराक्रमोऽस्ति तेन पृच्छामः ।

मा गुरिति चेन्नेत्याहुः—

**यतः श्रेयो भवति**

**यतः श्रेयो भवतीति** । श्रेयस्यस्माकं यद्गुरुतरेच्छा वर्तते तच्च श्रेयोऽतिथिरूपयतिभैक्षदानमन्तरेण न भवति । ततो यमुनाजलस्पर्शमन्तरेण तद्गमनोपायं नो ब्रूहीति गोपीवाक्यार्थः ।

**कृष्णेति[1] कृष्णो ब्रह्मचारीत्युक्त्वा मार्गं**
**वो दास्यत्युत्ताना भवति यं मां स्मृत्वा,**

कृष्णवाक्यं कृष्णेतीति । कृष्णेति प्रातिपदिकार्थमुपक्रम्यायं ब्रह्मचारी कृष्ण इति सत्यं वचः शपथरूपमुक्त्वा स्थितानां सत्यवादिनीनां वो युष्माकमनेन सत्यवादेन मार्गं दास्यतीति कृष्णोपदेशवाक्यार्थः ।

तथा पक्षान्तरमाह—

**अगाधा गाधा भवति *यं मां स्मृत्वा,**

**अगाधेति** । यदि भवतीनां मार्गदानेच्छा तर्हि मार्गं दास्यति यदि वोत्तानतेच्छा तर्ह्युत्ताना भवति भविष्यति 'वर्तमानसामीप्ये वर्तमानवद्वा' । यं मां स्मृत्वेति पूर्वेण संबध्यते । यं मां स्मृत्वाऽगाधा गाधा भवतीति ।

इदमल्पं कार्यं मुग्धासाध्यमपि मत्स्मरणमात्रेण सिध्यतीति कैमुतिकन्यायेनाऽऽह—

**अपूतः पूतो भवति यं मां स्मृत्वाऽव्रती व्रती भवति यं मां स्मृत्वा,**

**अपूत इति** । यं मां कृष्णं स्मृत्वा संचिन्त्यापूतो महापातकादिदुष्टोऽपि पूतो

* अत्रोत्तरत्रापि च ख. पुस्तके यं मामित्यत्र यन्नामिति पाठो दृश्यते ।

१ ख. ङ. °ति ब्र° ।

निर्मलो भवति । अव्रती ब्रह्मचर्यादिश्रुतिस्मृत्युक्तव्रतरहितोऽपि व्रती चीर्णव्रतो भवति ।

"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्" ॥ इति स्मृतेः ।

न्यूनं कृतमर्धकृतमकृतं वा ।

**निष्कामः सकामो भवति यं मां स्मृत्वा,**

**निष्कामः** सकाम इति । अप्राप्तकामः प्राप्तकामो भवति । 'स्मृतमात्रोऽखिलेष्टदः' इति स्मृतेः ।

**अश्रोत्रियः श्रोत्रियो भवति यं मां स्मृत्वा श्रुत्वा तद्वाचं ह वै स्मृत्वा तद्वाक्येन तीर्त्वा तां सौर्यां हि वै गत्वाऽऽश्रमं पुण्यतमं नत्वा मुनिश्रेष्ठतमं हि रौद्रं चेति दत्त्वाऽस्मै ब्राह्मणाय क्षीरमयं घृतमयं मिष्टतमं हि वा इष्टतमः स तुष्टः स्नात्वा भुक्त्वा[1]ऽऽशिषं प्रयोज्या[2]ऽऽज्ञामदात्कथं यास्यामोऽतीर्त्वा सौर्याम्,**

**अश्रोत्रिय इति ।** श्रोत्रियशब्दो रूढः । छन्दोमात्राध्यायी तु च्छान्दस एव । अतादृशोऽपि तत्फलभाग्भवति ।

"स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः" ॥ इति स्मृतेः ।

श्रुत्वाऽऽकर्ण्य तद्वाचं तस्य कृष्णस्य वाचं वाणीम् । ह वै प्रसिद्धौ । स्मृत्वा तद्वाचमेवाऽऽपरामृश्य तद्वाक्येन कृष्णवाक्येन सत्यशपथात्मकेन तीर्त्वोत्तीर्य तां सूर्यतनयां हि वै प्रसिद्धां गत्वा प्राप्याऽऽश्रमं मुनिनिवासं पुण्यतमं नत्वा नमस्कृत्य मुनिश्रेष्ठतमं दुर्वाससं रौद्रं चेति रुद्रकलावतारम् । चः समुच्चये । गत्वा नत्वा चेति । दत्त्वा प्रदायास्मै दुर्वाससे ब्राह्मणाय क्षीरमयं क्षीरविकारं घृतविकारं मिष्टतममतिशयेन मिष्टं मधुरं हि वा इष्टतमः प्रियतमो दर्शनीयतमः स मुनिर्हि वै तुष्टस्तुष्टमनाः स्नात्वा स्नानं कृत्वा भुक्त्वा भोजनं कृत्वाऽऽशिषं चिरजीवितरूपां प्रयोज्य गदित्वा । आज्ञां तु गमनाज्ञामदाद्दत्तवान् । कथं यास्यामोऽतीर्त्वा सौर्यामिति पूर्ववद्व्याख्येयम् ।

**स होवाच मुनिर्दुर्वासिनं[3] मां स्मृत्वा वो दास्यतीति[4] मार्गं तासां मध्ये श्रेष्ठा[5] गान्धर्वी होवाच सहैवैताभिरेवं विचार्य कथं कृष्णो ब्रह्मचारी कथं दुर्वासिनो[6] मुनिस्तां हि मुख्या विधाय पूर्वमनु कृत्वा तूष्णीमासुः**

स होवाच मुनिर्मननशीलः । किमुवाचेत्याह । दुर्वासिनमुपवासिनं मां स्मृत्वा

---

१ ख. °क्त्वा हित्वाऽऽशि° । २ ख. °ज्याऽऽज्ञां दत्त्वाऽदा° । ३ ख. °वाशिनं° । ४ ग °स्यति । ५ य °ध्ये हि वै श्रे° । ६ ख. °वाशिनो ।

शपथरूपेण वो युष्मभ्यं दास्यतीत्येवंप्रकारेण मार्गम् । कृष्णवाक्यदृष्टान्तेन तदपि तथ्यं मत्वाऽऽश्चर्यमापन्ना गोप्यः । ततस्तासां मध्ये श्रेष्ठा गान्धर्वी नाम्ना गोपी होवाच । गन्धर्वलोकादागत्यावतीर्णा गान्धर्वी गोपी । किं कृत्वा सहैवैताभिरेवं विचार्यैताभिः सर्वाभिः सहैवं वक्ष्यमाणं विचार्यैव । एवं किम् । कथं कृष्णो ब्रह्मचारी योऽस्माभिः सहैवं कृत्स्नां रात्रीं क्रिडितवान् । कथं दुर्वासिनो मुनिर्दुर्वास्युपवास्येव । दुर्वासिनः स्वार्थिकोऽकारश्छान्दसः । यथा ज्यायसा असुरा इति । एवं विचार्य तां हि मुख्यां विधाय कृत्वा । पूर्वमनु कृत्वा तूष्णीमासुः । पूर्वं पूर्वोक्तं विचारं कृत्वाऽनु पश्चात्तूष्णीमासुः स्थितवत्यः ।

**शब्दवानाकाशः शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशे तिष्ठत्या-**
**काशस्तं न वेद स ह्यात्माऽहं कथं भोक्ता भवामि ॥ १ ॥**

तासां मनोविचारव्याजमालक्ष्याभिप्रायज्ञः करुणया मुनिरुवाच **शब्दवानित्यादि** । आकाशः शब्दवान् । आत्मा तु शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशे तिष्ठत्यधिष्ठानत्वेनाऽऽकाशस्तमात्मानं न वेद सर्प इव रज्जुं स हि निश्चितमात्माऽहं न शब्दो नाप्याकाशः कथं भोक्ता भवामि नैव भवामि । अध्यस्तस्याधिष्ठानेन वास्तवसंबन्धाभावात् । न हि गगने शतशोऽपि तलमलिनिमादावारोपिते गगनं तलवन्मलिनं वा भवत्येवमाश्रयाश्रयिभूतं जगदात्मन्यध्यस्तमप्यात्मानं न स्पृशति ततोऽसङ्गोऽहं कथं भोक्ता भवामीत्यर्थः ॥ १ ॥

**स्पर्शवान्वायुः स्पर्शवायुभ्यां भिन्नस्तस्मिन्वायौ तिष्ठति वायुर्न**
**वेदे[1] तं स ह्यात्माऽहं कथं भोक्ता भवामि रूपवदिदं तेजो रूपा-**
**ग्निभ्यां भिन्नस्तस्मिन्नग्नौ तिष्ठत्यग्निर्न वेद तं हि स ह्यात्माऽहं**
**कथं भोक्ता भवामि ॥ २ ॥**

एवं स्पर्शवद्वायुरूपवत्तेजःपर्यायौ व्याख्येयौ । सर्वत्र तिष्ठतीति प्रथमपुरुष आत्माभिप्रायेण भवामीत्युत्तमपुरुषोऽहमभिप्रायेण ॥ २ ॥

**रसवत्य आपो रसाद्भ्यो भिन्नस्तास्वप्सु तिष्ठति ।**

**रसवत्य आप इति** । अपामप्त्वेनैकत्वेऽपि सरित्समुद्रादिभेदेनानेकत्वादाप इति बहुवचनम् । स्वभावतः केचिच्छब्दा अवयवसंख्यामेवाऽऽददते । यथा दाराः सिकता इति । अपरे समुदायसंख्यां यथा जलं स्त्री वालुकेति । रसाद्भ्यो भिन्नः । रसादुदकाच्चान्यः । अन्यारादितरर्ते इति भिन्नशब्दयोगे पञ्चमी । रसाद्भिरिति तु प्रमादपाठश्छान्दसो वा व्यत्ययः । तास्वप्सु तिष्ठति ।

**आपो न विदुस्तं हि स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ३ ॥**

१ ग. वेदेति स ।

**आपो न विदुस्तं** हीति । स्वाधिष्ठानमपि "तमापो न जानन्ति पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इति श्रुतेः । रसनेन्द्रियाद्यगम्य इत्यर्थः । सोऽहमात्मा सर्वाविषयः सर्वास्पृष्टो न भोक्तेत्यर्थः ॥ ३ ॥

**गन्धवती भूमिर्गन्धभूमिभ्यां भिन्नस्तस्यां भूमौ तिष्ठति**
**भूमिर्न वेद तं हि स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ४ ॥**

एवं गन्धभूमिपर्यायोऽपि ॥ ४ ॥

सविषयबाह्येन्द्रियानात्मतां तदसङ्गतां तदग्राह्यतां चोक्त्वा मनसोऽपि त्रितयाभावं दर्शयति—

**इदं हि मनस्तेष्वेवं हि मनुते तानिदं गृह्णाति**

**इदं हीति** । तेषु विषयेष्वाकाशादिषु । एवं बाह्येन्द्रियवन्मनुते संकल्पविकल्पान्कुरुते । तानाकाशादीन्विषयानिदं मनो गृह्णाति ।

**यत्र हि सर्वमात्मैवाभूत्तत्र वा कुत्र मनुते क्व वा गच्छ-**
**तीति स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ५ ॥**

**यत्रेति** । यत्र हि परमार्थदशायां तुरीयेऽस्मदादीनां सुषुप्ते वा भवदादीनामज्ञानिनां सर्वमात्मैवाभूज्जगत्तत्र । वाशब्दो ह्यर्थे । तत्र हि कुत्र विषये मनुते मननं कुर्यात् । क्व वा कुत्र वा विषये गच्छति प्रवर्तत इति भेदाभावात् । अनेन मनोविकारा अपि कामादयो मयि न स्पृष्टा इति दर्शितं सोऽहमात्मा सर्वातीतः कथं भोक्ता भवामि ॥ ५ ॥

स्वस्याभोक्तृत्वमुक्त्वा कृष्णस्य ब्रह्मचारितामप्युपपादयति—

**अयं हि कृष्णो यो वो हि पृष्टः शरीरद्वयकारणं**
**भवति द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूतस्तथेतरो**
**भोक्ता भवति । अन्यो हि साक्षी भवतीति ॥ ६ ॥**

**अयं हि कृष्ण इति** । यो वो हि पृष्टः । युष्मत्संबन्धिप्रश्नविषयः स शरीरद्वयस्य स्थूलसूक्ष्मस्य कारणं हेतुर्भवति स एव द्वौ सुपर्णौ भवतः । "तदैक्षत बहु स्यां प्रजायेयेति । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति **श्रुतेः** ।

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्" ॥ इति **स्मृतेश्च** ।

तदेवाऽऽह—ब्रह्मणोंऽशभूतः । अंश इवांशस्तत्त्वं प्राप्तः । तथेतरो भोक्ता भवति

१ ग. °तीये भू° ।

जीवोऽन्यो हि साक्षी भवति । परमात्मैव बाह्यान्तरभेदेन कुशूलाकाशमहाकाशवद्द्वौ भवतीत्यर्थः ॥ ६ ॥

**वृक्षधर्मे तौ तिष्ठतोऽभोक्तृभोक्तारौ पूर्वो हि भोक्ता भवति तथेतरोऽभोक्ता कृष्णो हि भवतीति यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो[1] यः स कथं विषयी भवतीति ॥ ७ ॥**

वृक्षधर्मे वृक्षतुल्ये देहे तौ द्वौ तिष्ठतः । कौ तावभोक्तृभोक्तारौ । अभोक्ता च भोक्ता च । पूर्वो हि यो ब्रह्मणोंऽशभूत इत्युक्तः । कुशूलाकाशस्थानीयः स भोक्ता भवति । तथेतरः पश्चादुक्तः साक्षी भवतीति सोऽभोक्ता कृष्णो भवति । इतिर्वाक्यसमाप्तौ । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति **मन्त्रवर्णात्** । यत्र कृष्णे विद्याविद्ये न विदामो न जानीमो विद्याविद्याभ्यां भिन्नस्तयोर्मनोवृत्तिरूपत्वाद्विद्यामयो नित्यज्ञानरूप एवंविधो यः स कथं विषयी भवतीति स्वप्रकाशत्वेन वृत्तिरूपज्ञानान्तरावेद्यत्वात् ॥ ७ ॥

ननु तथाऽपि प्रत्यक्षमुपलब्धाऽस्माभिः कृष्णस्य कामक्रीडा तस्याः का गतिरिति चेत्तत्राऽऽह—

**यो हि[2] वै कामेन कामान्कामयते स कामी भवति यो हि वै त्वकामेन कामान्न कामयते सोऽकामी भवतीति।**

**यो हीति** । कामेनेच्छया कामान्कामनीयान्स्रक्चन्दनवनितादीन् । अयं भावः । वास्तवं कर्तृभोक्तृत्वं बन्धमोक्षादिकमात्मनो नास्ति किंतु स्वकामपरिकल्पितं शुकनलिकान्यायेन । तत्र ज्ञानी वस्तुतोऽकर्तैव सन्नाहं कर्तेति मन्यतेऽज्ञानी तु वस्तुतोऽकर्ताऽप्यहं कर्तेति मन्यमानो बद्ध इव भवति तत्रेन्द्रियेषु विषयवृत्तिष्वप्यात्मनो न किंचित्स्पृशतीति ।

**जन्मजराभ्यां भिन्नः,**

**जन्मजराभ्यां भिन्न इति** । जन्मजरयोर्देहधर्मत्वात्तद्रहित इत्यर्थः ।

तदुक्तम्—" प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमोहने ।
जरामृत्यू च देहस्य षडूर्मिरहितः शिवः " ॥ इति ।

**स्थाणुरयं[3]मच्छेद्योऽयम् ।**

**स्थाणुरयमिति** । स्थाणुः स्थिरोऽच्छेद्यश्छेत्तुमशक्यः ।

तदुक्तम्—" अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः " ॥ इति ।

---

१ ग. °यो हि यः । २ ग. ह । ३ ग. °यमणुरयम° ।

योऽसौ सूर्ये तिष्ठति

**योऽसौ सूर्ये तिष्ठतीति** । सूर्ये सूर्यमण्डले । " सूर्य आत्मा जगतस्तस्थुषश्च " इति **मन्त्रवर्णात्** । " आदित्यो ब्रह्मेत्यादेशः " इत्यादिब्राह्मणाच्च सूर्यमण्डले तस्यावस्थानमुचितम् ।

**योऽसौ गोषु तिष्ठति योऽसौ गोपान्पालयति योऽसौ गोपेषु तिष्ठति योऽसौ सर्वेषु देवेषु तिष्ठति योऽसौ सर्वैर्वेदैर्गीयते योऽसौ सर्वेषु भूतेष्वाविश्य तिष्ठति भूतानि च विदधाति स वो हि स्वामी भवतीति ॥ ८ ॥**

**योऽसौ गोषु तिष्ठतीति** । ईदृशोऽपि यो गोपालरूपेण तिष्ठति । योऽसौ गोपान्पालयति रक्षति योऽसौ प्रत्यक्षगोपेषु तिष्ठत्यथ च सर्वेषु देवेष्विन्द्रादिषु तिष्ठति । अध्यात्मव्याख्याने गोष्विन्द्रियेषु तिष्ठति । गोपानिन्द्रियाधिष्ठातृन्देवान्पालयति । गोपेष्विन्द्रियाधिष्ठातृषु तिष्ठत्यधिष्ठातृत्वेन न तेष्वेव किं तु सर्वेषु बुद्ध्याद्यधिष्ठातृष्वपि देवेषु तिष्ठति । वेदैर्ऋगादिभिर्गीयते निरूप्यते । भूतेषु स्थावरजङ्गमेष्वाविश्य तिष्ठति भूतानि च विदधाति करोति स वो युष्माकं स्वामी भवतीति ॥ ८ ॥

मुनिवचनमाश्चर्यरूपं श्रुत्वा गान्धर्वी पुनराह—

**सा होवाच गान्धर्वी कथं वाऽस्मासु जातोऽसौ गोपालः कथं वा ज्ञातोऽसौ त्वया मुने कृष्णः को वाऽस्य मन्त्रः किं वाऽस्य स्थानं कथं वा देवक्यां जातः**

**सेति** । कथं वेत्यसंभावनामुद्भावयति निरासयितुम् । अथवेदृशस्यास्मासु जन्मनि को हेतुरिति प्रश्नः । ईदृशोऽसौ स्वमायया गुप्तः कथं वा भवता ज्ञातोऽसौ त्वया मुने दुर्वासः कृष्ण इति द्वितीयः प्रश्नः । को वाऽस्य मन्त्र इति तृतीयः । किं वाऽस्य स्थानमिति चतुर्थः । कथं वा देवक्यां जात इति पञ्चमः ।

**को वाऽस्य ज्यायान्रामो भवति कीदृशी पूजाऽस्य गोपालस्य भवति साक्षात्प्रकृतिपरयोरयमात्मा गोपालः कथमवतीर्णो भूम्यां हि वै ॥ ९ ॥**

को वाऽस्येति षष्ठः । रामो बलभद्रः । कीदृशी पूजाऽस्येति सप्तमः । साक्षात्प्रत्यक्षः प्रकृतिपरयोर्मायाजीवयोरयमात्मा गोपालः । प्रकृतिपरो योऽयमात्मेति तु युक्तः पाठः । प्रकृतेः परोऽयमात्मेत्यर्थः । ' नान्योऽतोऽस्ति द्रष्टा ' इति **श्रुतेः** ।

---

१ ख. °सौ गाः पाल° । २ ख. °सौ दे° । ३ ग. °सौ वेदै° ।

" इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यस्तु परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः "॥

इति **मन्त्रवर्णाच्च** प्रकृतेः परोऽयमेव । स भूम्यां कथमवतीर्णोऽवतरणे कारणाभावात् । हि वै । अष्टमः प्रश्नः ॥ ९ ॥

तस्य भूम्यां गोकुलेऽवतरणे कारणं वक्तुमादितः सृष्टिमाह—

**स होवाच तां हि वा एको हि वै पूर्वं नारायणो देवो यस्मिँल्लोका ओताश्च प्रोताश्च तस्य हृत्पद्माज्जातोऽब्जयोनिः स पिता तस्मै ह वरं ददौ स कामप्रश्नमेव वव्रे तं हास्मै ददौ स होवाचाब्जयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भवति येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा वा मुक्ता अस्मात्संसाराद्भवन्ति कथं वाऽस्यावतारस्य ब्रह्मता भवति ॥ १० ॥**

**स होवाच तां हि वा** इति । यस्मिँल्लोका ओताश्च प्रोताश्चेति । यथोर्मयः समुद्रे यथा च तन्तवः पटे । स पिता नारायणः । तस्मा अब्जयोनये । सोऽब्जयोनिः कामप्रश्नं यस्य कामस्तन्मया प्रष्टव्यं त्वया चोत्तरयितव्यमिति । वरं देहीति वव्रे वृतवांस्तं वरमस्मै ब्रह्मणे ददौ नारायणः कामतः पृच्छते । स होवाचाब्जयोनिरवताराणामिति प्रथमः प्रश्नः । कथं वाऽस्यावतारस्य ब्रह्मतेति द्वितीयः प्रश्नः । तस्य मूर्तस्य ब्रह्मत्वविरोधादिति भावः ॥ १० ॥

**स होवाच तं हि[1] नारायणो देवः सकाम्या मेरोः शृङ्गे यथा सप्त पुर्यो भवन्ति तथा हि निष्काम्याः सकाम्याश्च भूलोकचक्रे सप्त पुर्यो भवन्ति तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी हीति सकाम्या निष्काम्या च देवानां सर्वेषां भूतानां च भवति ॥ ११ ॥**

तं हि ब्रह्माणम् । सकाम्याः सकामानर्हन्ति सकाम्या यमपुरीं वर्जयित्वा सप्तानां लोकपालानां सप्त पुर्यः । यमपुरीं प्रति पापिनामप्यधिकारात् । तासां नामानि पुराणतो द्रष्टव्यानि । दिशां पुर्यो यथा विष्णुपुराणे—

" वस्वौकसारा शक्रस्य याम्या संयामिनी तथा ।
पुरी सुखा जलेशस्य सोमस्य तु विभा पुरी "॥ इति ।

निष्काम्या निष्कामार्हा मोक्षपदत्वात् ।

---

१ ख. हि वै ना° ।

ता यथा—" अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती ज्ञेयाः सप्तैता मुक्तिदायिकाः " ॥ इति ।

साक्षात्प्रत्यक्षं ब्रह्म गोपालस्तस्य पुरी हीति सा सकाम्या निष्काम्या च देवानां भवति सर्वेषां भूतानां च भवति । सकामानां कामप्रदायिका निष्कामानां मोक्षप्रदा ॥ ११ ॥

**यथा हि वै सरसि पद्मं तिष्ठति तथा भूम्यां हि तिष्ठतीति ।**
**चक्रेण रक्षिता हि वै मथुरा तस्माद्गोपालपुरी हि भवतीति ।**

सरःपद्मवद्भूम्या मूर्ध्नि स्थिता । चक्रेण वैष्णवेन सुदर्शनेन रक्षिता पालिता । मधुरा मधोर्दैत्यस्य निवासभूमिः । वुञ्छणादिसूत्रेणाश्मादेराकृतिगणत्वाद्रः । मथुरेति पाठे मथ्यतेऽज्ञानमनयेति विग्रहः । तस्माद्यस्माद्गोपालचक्रेण रक्षिता तस्माद्गोपालपुरी हि भवतीति । पुरीवर्णनसमाप्त्यर्थ इतिशब्दः ।

पद्मोपमां निर्वोढुं द्वादशपत्रस्थानीयानि द्वादशवनान्याह—

**बृहद्बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यः कामवनं बहुलो बहुलवनं कुमुदः कुमुदवनं खदिरः खदिरवनं भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनं श्रीवनं लोहवनं वृन्दया वृन्दावनमेतैरावृता पुरी भवति ॥ १२ ॥**

बृहदिति । बृहदादयो वनविशेषणानि । केचित्पुंविशेषाः केचिद्वृक्षविशेषा द्वादश तैरुपलक्षितानि पुर्याः परितो द्वादश वनानि भवन्ति । एतैर्वनैरावृता पुरी मधुरा भवति ॥ १२ ॥

**तत्र तेष्वेवं गहनेष्वेव देवा मनुष्या गन्धर्वा**
**नागाः किंनरा गायन्तीति नृत्यन्तीति**

तत्र मथुरायाम् । **गहनेष्वेवेति** । ' अटव्यरण्यं विपिनं गहनं काननं वनम् ' इत्यमरः । तत्र देवादयः पञ्च गायन्ति च नृत्यन्ति च । इतिशब्दद्वयं प्रकारनानात्वद्योतनार्थम् ।

एषु वनेषु सर्वे देवा वसन्तीत्याह—

**तत्र द्वादशाऽऽदित्या एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायका वीरेश्वरो रुद्रेश्वरोऽम्बिकेश्वरो गणेश्वरो नीलकण्ठविश्वेश्वरो गोपालेश्वरो भद्रेश्वर एतदाद्यानि**

---

१ ग. ङ. मथुरा । २ ख. बहुला । ङ. बहुलो । ३ ख. बहुलावनं । ङ. बहुलावनं । ४ ग. न्धर्वाः किं ।

**लिङ्गानि चतुर्विंशतिर्भवन्ति द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तर्द्वादश वनानि पुण्यानि पुण्यतमानि तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्तास्तत्र हि रामस्य रामा मूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्यानिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिर्वनेष्वेव मधुरास्वेव द्वादश मूर्तयो भवन्ति ॥ १३ ॥**

तत्रेति । एषां नामानि नारसिंह उक्तानि । सप्त मुनयो गौतमभरद्वाजविश्वामित्रजमदग्निवसिष्ठकश्यपात्रयः । पञ्च विनायका मोदप्रमोदामोदसुमुखदुर्मुखाः । वीरेश्वरादयः सप्त कण्ठोक्ता एतदाद्यान्येतत्प्रभृतीनि लिङ्गानि चतुर्विंशतिर्भवन्ति वर्तन्ते । तेषां नामानि पुराणतोऽवगन्तव्यानि । द्वे वने स्तो भिन्ने द्वादशभ्यः । तयोर्वनयोरन्तर्मध्ये द्वादश पूर्वोक्तानि सन्ति । पुण्यानीति सर्वेषां विशेषणं तेषां मध्ये केषांचिदतिशयद्योतनाय पुण्यतमानीति । तेषु देवास्तिष्ठन्त्येव । तेषु सिद्धास्तपोभिः सिद्धिं प्राप्ताः । तत्र हि वनविशेषे । रामस्य बलभद्रस्य । रामा रमणीया मूर्तिः । प्रकृष्टं द्युम्नं द्रविणं यस्यास्तादृशी प्रद्युम्नस्य मूर्तिः । अथवोदपेषं पिनष्टीतिवदेकत्र प्रातिपदिकार्थो न विवक्षितः । एवं मधुरासु मधुरायां वनेषु । अवयवाभिप्रायं बहुवचनम् । द्वादशसु द्वादश मूर्तयो भवन्ति वर्तन्ते ॥ १३ ॥

तासां प्रत्येकमुपासकानाह—

**एकां हि रुद्रा यजन्ति द्वितीयां हि ब्रह्मा यजति तृतीयां हि ब्रह्मजा यजन्ति चतुर्थीं मरुतो यजन्ति पञ्चमीं विनायका यजन्ति षष्ठीं वसवो यजन्ति सप्तमीमृषयो यजन्त्यष्टमीं गन्धर्वा यजन्ति नवमीमप्सरसो यजन्ति दशमी हि दिवोऽन्तर्धाने तिष्ठत्येकादश्यन्तरिक्षपदं गता द्वादशी तु भूम्यां तिष्ठति**

एकां हीति । ब्रह्मजा ब्रह्मपुत्राः सनकादयः । मरुतो मरुद्गणाः । दशमी मूर्तिः । हि निश्चितम् । दिवो द्युलोकस्यान्तर्धाने द्युलोकेनाऽऽवृतालोकाऽप्रत्यक्षा तिष्ठति । अन्तरिक्षपदमन्तारिक्षलोकस्तं गता प्राप्ता । द्वादशी भूम्यां भूलोके ।

**ता हि ये यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्ते**

ता हि तिस्रो मूर्तयो द्युसदोऽन्तरिक्षसदः पृथिवीषदः प्रसिद्धा देवा यजन्ति । भजनफलम् । त इति । मुक्तिं कल्पावसाने लभन्ते ।

मुक्तौ किं स्यादत आह—

**गर्भजन्मजरामरणतापत्रयात्मकं दुःखं तरन्ति ॥ १४ ॥**

---

१ ग. सिद्धिप्रा° ।

**गर्भेति** । अथवा ता हीति द्वादशमूर्तीनां भजने सर्वस्याधिकारिणः फलम् ॥ १४ ॥

अत्रार्थे मन्त्रसंमतिमाह—

**तदप्येते श्लोकाः—**

**प्रथमां मधुरां रम्यां सदा ब्रह्मादिसेविताम् ।**
**शङ्खचक्रगदाशार्ङ्गरक्षितां मुशलादिभिः ॥**

**तदपीति** । प्रथमां मुख्यां मधुरां मधुपुरीम् । मुशलादिभी रक्षितामिति शेषः ।

**अत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः ।**
**रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ॥**

त्रिभी रामानिरुद्धप्रद्युम्नैरित्यन्वयः । शक्त्या रुक्मिण्या सहित इति चान्वयः ।

**चतुःशब्दो भवेदेको ह्योंकारः समुदाहृतः ।**

**चतुःशब्द इति** । एकोऽपि देवो वासुदेवादिचतुःशब्दवाच्यो भवेत् । ओंकारः समुदाहृतः । ओंकारस्य सार्धचतुर्थमात्रत्वात् । तत्रार्धमात्रात्मको वासुदेवः । प्राज्ञ आनन्दमयो मकारात्मकोऽनिरुद्धः । तैजसः स्वप्नाभिमान्युकारात्मकः प्रद्युम्नः । विश्वोऽकारात्मकः संकर्षणः ।

यथा वक्ष्यति—

"रोहिणीतनयो रामो अकाराक्षरसंभवः ।
तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः ॥
प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षरसंभवः ।
अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम्" ॥ इति ।

तथाच रामतापनीये—

"अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः ।
उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥
प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः ।
अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः" ॥ इति ।

तस्यैव चतुर्थमूर्तेः कृष्णावतारत्वात् । ओंकारश्च कृतस्तथेति वा पाठः ।

**तस्मादेव परो रजस इति सोऽहमि-**
**त्यवधार्य गोपालोऽहमिति भावयेत् ।**

**तस्मादेवेति** । यत एवं तस्मात् । **परो रजस इति** । रजसः परः परोरजास्तस्मै नम इत्यवधार्य सोऽहं स पुमानेवाहमित्यवधार्य[1] गोपाल एवाहं न शोकभागिति भावयेत् । भावना चिन्ततम् ।

---

१ ल. °मित्यवधारये° ।

फलमाह—

**स मोक्षमश्नुते स ब्रह्मत्वमधिगच्छति स ब्रह्मविद्भवति**

**स मोक्षमिति** । त्रयाणां व्युत्क्रमेण प्राप्तिर्ज्ञेया ।

गोपालपदनिर्वचनमाह—

**गोपाञ्जीवान्वा आत्मत्वेनाऽऽ सृष्टिप-**
**र्यन्तमालाति स गोपालो भवति ह्यों**

**गोपानिति** । गोपानिन्द्रियपालकान् । आ सृष्टिपर्यन्तम् । आङो व्याख्यानं सृष्टिपर्यन्तमिति । स गोपालो गोपालशब्दवाच्यो भवति हि निश्चितम् ।

कः श्रेष्ठोऽवतारो यं स्मृत्वाऽस्माल्लोकान्मुक्ता भवन्तीतिप्रश्नस्योत्तरमुक्त्वा कथमस्यावतारस्य ब्रह्मतेत्यस्योत्तरमाह—

**तद्यत्तत्सत्परं ब्रह्म कृष्णात्मको नित्यानन्दैकरूपः सोऽहम् ।**

**तद्यदिति** । ओंकारादिवाच्यं तदेवेत्यर्थः । तदेव यत् । तदेव सत् । तदेव परं ब्रह्म । नित्यानन्दैकरूपः । नित्यानन्द एवैकं रूपं यस्य सोऽहं स एवाहं न शोकभाक् ।

**ॐ तद्गोपालदेव एव परं सत्यमबाधितं**

आत्मनो गोपालैक्यमुक्त्वा गोपालस्य परब्रह्मणैक्यमाह—**ॐ तद्गोपालदेव एवेति** ।

आत्मनो गोपालेनैक्यभावने प्रकारमाह—

**सोऽहमित्यात्मानमादाय मनसैक्यं कुर्यात्,**

**सोऽहमित्यात्मानमिति** । मनसा बुद्ध्या ।

कथमैक्योल्लेखोऽत आह—

**आत्मनो गोपालोऽहमिति भावयेत्स**
**एवाव्यक्तोऽनन्तो नित्यो गोपालः ।**

**आत्मनो गोपालोऽहमिति भावयेदिति** । स एवाव्यक्तो मायोपाधिः । अनन्तो देशतः परिच्छेदशून्यः । नित्यः कालतः परिच्छेदरहितः ।

कदाचिदपीमां पुरीं न जहामीत्याह—

**मथुरायां स्थितिर्ब्रह्मन्सर्वदा मे भविष्यति ।**
**शङ्खचक्रगदापद्मवनमालावृतस्तु वै ॥**
**चित्स्वरूपं परं ज्योतिःस्वरूपं रूपवर्जितम् ।**
**सदा मां संस्मरन्ब्रह्मन्मत्पदं याति निश्चितम् ॥**

**मथुरायामिति** । भविष्यति कदाचिदपि न त्यक्ष्यामीत्यर्थः ।

हरेः पूजनस्य सर्वत्र महाफलत्वेऽपि मथुरायां विशेष इत्याह—

**मधुरामण्डले यस्तु जम्बुद्वीपस्थितोऽपि वा ।**
**योऽर्चयेत्प्रतिमां प्रीत्या स मे प्रियतरो भुवि ॥ १५ ॥**

**मधुरेति** । मथुरा मधुरेति चेति शब्दभेदो विश्वे । **जम्बुद्वीप इति** । तत्रापि भारतखण्डे तत्रापि सप्तपुरीषु तत्रापि मधुरायां विशेष इति बोद्धव्यम् । प्रतिमां पाषाणादिनिर्मितां लक्षीकृत्येत्यर्थः । मां योऽर्चयेत्पूजयेत्स मे मम प्रियतरोऽत्यन्तवल्लभो भुवि भूमौ ॥ १९ ॥

**तस्यामधिष्ठितः कृष्णरूपी पूज्यस्त्वया सदा ।**
**चतुर्धा चास्याधिकारिभेदत्वेन यजन्ति माम् ॥**
**युगानुवर्तिनो लोका यजन्तीह सुमेधसः ॥**

**तस्यामिति** । हे ब्रह्मंस्तस्यां प्रतिमायामधिष्ठितः कृष्णरूपोपाधिस्त्वया ब्रह्मणा सदाऽहं पूज्यः पूजनीयः । **चतुर्धेति** । अस्य कृष्णस्य मम रूपं चतुर्धा यजन्ति । अधिकारिभेदत्वेनाधिकारिणं भिनत्तीत्याधिकारिभेदं रूपं तद्भावस्तत्त्वं तेन । के युगानुवर्तिनः । कृते शुक्लं त्रेतायां रक्तं द्वापरे पीतं कलौ श्याममिति । सर्वेऽपि सुमेधसः । विष्णुपराङ्मुखास्तु दुर्बुद्धयः ।

तानि चत्वारि रूपाण्याह—

**गोपालं सानुजं रामं रुक्मिण्या सह तत्परम् ॥**

**गोपालमिति** । गोपालं श्यामं कलौ यजन्ति । सानुजम्, अनु पश्चाज्जातौ प्रद्युम्नानिरुद्धौ ताभ्यां सहितमनिरुद्धं पीतं द्वापरे । प्रद्युम्नं रक्तं त्रेतायाम् । रामं संकर्षणं श्वेतं कृते । रुक्मिण्या सह वर्तमानं तत्परं तस्याः प्रियम् ।

चत्वार्यपि ममैव रूपाणीत्याह—

**गोपालोऽहमजो नित्यः प्रद्युम्नोऽहं सनातनः ।**
**रामोऽहं ह्यनिरुद्धोऽहमात्मानमर्चयेद्बुधः ॥**
**मयोक्तेन स्वधर्मेण निष्कामेण विभागशः ।**
**तैरयं पूजनीयो वै भद्रकृष्णो निवासिभिः ॥**

**गोपालोऽहमिति** । मदर्चनं पूजयितुः स्वार्चनमेवेत्याह—**आत्मानमिति** । वस्तुतस्त्वहंग्रहोपासनपरो मन्त्रः । अजो नित्यो वासुदेवोऽहं प्रद्युम्नोऽहमित्यात्मानमर्चयेदित्यन्वयः । मयोक्तेन वेदोक्तेन । 'यस्य निःश्वसितं वेदाः' इति श्रुतेः । निष्कामेण फलाभिसंधानरहितेन । विभागशो युगविभागेन वर्णभेदेन वा । तैर्लोकैरयमात्मा भद्रकृष्णो भद्रवनवने कृष्णः । तन्निवासिभिः, तत्प्रदेशस्य पुण्यतमत्वात् ।

मधुरानिवासाधिकारिणमाह —

**तद्धर्मगतिहीना ये तस्यां मयि परायणाः ।**
**कलिना ग्रसिता ये वै तेषां तस्यामवस्थितिः ॥**

**तद्धर्मेति** । तद्धर्मेण विष्णुप्रोक्तेन धर्मेण या गतिः स्वर्गो वाऽपवर्गो वा तद्धीनास्तद्रहिता ये स्वर्गिणां मुक्तानां चाधिकाराभावात्तस्यां मधुरायां वसन्तो ये मयि परायणा अन्यायिनां तीर्थवासे दोषातिशयात् । बाहिर्मुखाणां निवासे प्रत्युत पापसंभवात् । ये च कलिना युगेन ग्रसिताः । ग्रसितस्तुभितस्तभितोत्तभितेति सूत्रेणेण्णिपातनान्न्याय्यम् । अनुत्पन्नज्ञानानां विष्णुपराणां पुरुषार्थसिद्धये वासेऽधिकार इत्यर्थः ।

भक्तानहं त्वरितमनुगृह्णामीत्यभिप्रायेणाऽऽह—

**यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह ।**
**यथा श्रियाऽभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ १६ ॥**

**यथा त्वमिति** । पुत्रैर्नारदादिभिः सह यथा त्वमभियुक्तो ममत्वाभिमानसहितः । तव यथा नारदादिषु प्रीतिरित्यर्थः । गणैः सह रुद्रो यथाऽभियुक्तः । यथा श्रिया लक्ष्म्याऽहमभियुक्तः प्रीतिमांस्तथा भक्तोऽनन्यगतिर्मे मम प्रियो वल्लभः । तत्र महान्ममाभियोग इत्यर्थः । अथवा यथा त्वं सह पुत्रैर्मम प्रियः । रुद्रो गणैः सह यथा मम प्रियः । यथा च श्रियाऽहमभियुक्तः प्रीतस्तथैव भक्तो मम प्रिय इत्यर्थः ॥ १६ ॥

**स होवाचाब्जयोनिश्चतुर्भिर्देवैः कथमेको देवः स्यात् ।**

**चतुर्भिर्देवैरिति** । उत्तरसंख्यायाः पूर्वसंख्याव्यपदेशनिवर्तकत्वान्न हि त्रिपुत्रो द्विपुत्रो भवति ।

प्रश्नान्तरमाह—

**एकमक्षरं यद्विश्रुतं ह्यनेकाक्षरं कथं भूतं स होवाच तं हि वै ।**

**एकमिति** । एकमक्षरमोंकारोऽनेकाक्षरमकारोकारमकारार्धमात्रात्मकं कथं भूतं केन प्रकारेण संपन्नम् । अथ वैकमक्षरं ब्रह्म कथमनेकं ब्रह्मविष्णुरुद्रादिभेदेन संपन्नमित्यर्थः । स नारायण उवाच । ह प्रसिद्धौ । तमब्जयोनिम् । हि वै निश्चितम् ।

एकस्याप्यनेकत्वमुपाधिभेदेन संभावयितुमाह—

**पूर्वं ह्येकमेवाद्वितीयं ब्रह्माऽऽसीत्तस्मादव्यक्तं व्यक्तमेवा-**
**क्षरं तस्मादक्षरान्महन्महतो वा अहंकारस्तस्मादेवाहंकारा-**
**त्पञ्च तन्मात्राणि तेभ्यो भूतानि तैरावृतमक्षरं भवति ।**

**पूर्वं हीति** । तस्माद्ब्रह्मणोऽव्यक्तं लीनं सद्व्यक्तमेव प्रकटमेवाक्षरं शक्त्याख्यमभूत् । महदव्याकृतम् । अहंकारोऽभिमानः । पञ्च तन्मात्राणि रूपरसगन्धस्पर्शशब्दतन्मा-

त्राणि। भूतानि पृथिव्यप्तेजोवाय्वाकाशसंज्ञानि। तैर्भूतैरावृतं वेष्टितम्। अक्षरं पराक्षरमोंकारः।

**अक्षरोऽहम्।**

अतस्तस्य किं पारमार्थिकं रूपमत आह—अक्षरोऽहमिति।

**ओंकारोऽहम्।**

किमकारादिरक्षरो नेत्याह—ओंकारोऽहमिति।

स तु नैयायिकानामिवोच्चारितप्रध्वंसीत्याशङ्क्य तस्याव्ययत्वमाह—

**अजरोऽभयोऽमृतो ब्रह्माभयं हि वै स मुक्तोऽहमस्म्यक्षरोऽहमस्मि।**

**अजर इत्यादि।** स ओंकारोऽजरादिरूपः। अजरादिरूपब्रह्मप्रतीकं तद्वाचकश्च। तथाच 'वाचा विरूपनित्यया' इति लिङ्गाद्वाचकस्य नित्यत्वमुचितम्, 'सदृशं त्रिषु लिङ्गेषु' इति श्रुत्या प्रणवस्याव्ययत्वप्रतिपादनाच्च। अहं नारायणोऽजो जातोऽस्मि। तथाऽक्षर ओंकारोऽस्मि।

मन्त्रेण वास्तवं रूपमाह—

**सत्तामात्रं विश्वरूपं[1] प्रकाशं व्यापकं तथा।**
**एकमेवाद्वयं ब्रह्म मायया तु चतुष्टयम्॥**

**सत्तेति।** चतुर्भिर्विशेषणैः कथमेक इत्यस्योत्तरमित्यत आह—मायया तु चतुष्टयमिति।

एकमक्षरमनेकाक्षरं कथमिति प्रश्ने संधिविभागेनानेकत्वं संभवतीत्युत्तारिते केषां संधिः किमात्मकश्च को वर्ण इत्याशङ्क्योत्तरमाह—

**रोहिणीतनयो रामो अकाराक्षरसंभवः।**
**तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः॥**
**प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षरसंभवः।**
**अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम्॥**

**रोहिणीति।** **अकारेति।** 'प्रकृत्याऽन्तःपादमव्यपरे' इत्येकादेशाभावः। रामो विश्व इति ज्ञेयम्। तैजसः स्वापनस्तदात्मकः। प्राज्ञः सुषुप्त्यभिमानी। अर्धमात्रात्मकोऽव्यक्तः स च तुरीय इति ज्ञेयम्।

रुक्मिण्या मूलप्रकृतेः कृष्णाद्ब्रह्मणोऽनतिरेकमाह—

**कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी॥**

**कृष्णेति।** मूलप्रकृती रुक्मिणीत्युद्देश्यविधेयभावेऽपि गमकत्वात्समासः।

---

१ ग. चित्स्वरूपं।

रुक्मिण्याः प्रकृतित्व उपपत्तिमाह—

**व्रजस्त्रीजनसंभूतश्रुतिभ्यो ब्रह्मसंगत—**
**प्रणवेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः ॥**

**व्रजेति ।** व्रजस्त्रीजनत्वेन संभूता याः श्रुतयस्ताभ्यस्तदपेक्षया ब्रह्म कृष्णस्तं संगतो यः प्रणवस्तेन रुक्मिण्याः प्रकृतित्वं ब्रह्मवादिनो वेदविदो वदन्ति । ब्रह्म कृष्णो गोप्यो वेदर्चस्ता दूरस्थाः कृष्णं स्तुवन्ति प्रणवो रुक्मिणी च ब्रह्मणा कृष्णेन साक्षात्संबद्धौ प्रणवश्च जगत्प्रकृतिस्तत्समानयोगक्षेमतया रुक्मिण्यपि प्रकृतिरित्यर्थः । श्लोकार्धे यत्यभावश्चिन्त्यः ।

**तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितिः ।**
**क्लीमोंकारं च एकत्वं पठ्यते ब्रह्मवादिभिः ॥**
**मधुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते ॥**

तस्मादित्युपसंहारः । ओंकारसंभूतो गोपालः । ओंकार एव चतुरवयवश्चतुर्धा संभूतः प्रकटीभूतो गोपालः कृष्णो विश्वेषां संस्थितिः स्वरूपेण लोकसंस्थाहेतुः । क्लीमोंकारं क्लींकारमोंकारं च प्रकृत्येति शेषः । प्रस्तुत्यैकत्वं पठ्यते । अर्थान्तरे द्वयस्यैव । **विशेषेणेति ।** वचनादन्यत्रापि ध्यायतो मोक्षो भवति ।

कीदृशी पूजाऽस्येति प्रश्नस्योत्तरार्थमन्तर्यागमाह—

**अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम् ।**
**दिव्यध्वजातपत्रैस्तु चिह्नितं चरणद्वयम् ।**
**श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ॥**

**अष्टपत्रमिति ।** हृत्पद्मं वर्तते तत्र संस्थितं चरणद्वयं ध्यायेदित्यग्रेतनेनान्वयः । हृत्स्थं कौस्तुभं प्रभया युतं श्रीवत्सलाञ्छनं ध्यायेत् । एतद्यवयवध्यानम् ।

**चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदान्वितम् ।**
**सुकेयूरान्वितं बाहुं कण्ठं मालासुशोभितम् ॥**
**द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम् ।**
**हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रदम् ॥**
**ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वा ॥**

चतुर्भुजमिति समुदायध्यानम् । बाहुं कण्ठं च ध्यायेदित्यवयवध्यानम् । द्युमदिति समुदायध्यानम् । हिरण्मयं तप्तहाटकसंनिभमिदमात्मध्यानम् । आत्मा च सूर्यमण्डलाधिष्ठाता पुरुषः स च 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' इत्युदित-

१ ग. °म् । शङ्कुध्व° । २ ग. °स्तुभालंकृतं बुधः । च । ३ ख. °ण्डले । हि° । ४ ग. °रं स्वभ । म° ।

स्वरूपस्तेन हिरण्मयत्वमुक्तम् । सौम्यतनुं रम्यदेहम् । यद्वा सर्वत्रावयवैरवयव्युपलक्षणीयः । ध्यानान्तरमाह—वेणिवति । अस्मिन्पक्षे घनश्यामो ध्येयः ।

मधुराशब्दनिर्वचनमाह—

**मध्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा ।**
**तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते ।**
**अष्टदिक्पालिभिर्भूमिपद्मं विकसितं जगत् ॥**

**मध्यत** इति । तत्सारभूतं तद्विषयतामापन्नं कृष्णाख्यं यद्यस्माद्यस्यां पुर्यां सा मथुरा निगद्यते कथ्यते । मथ्नाति सारेण कृष्णेन संसारं सा मथुरेति व्युत्पत्त्यन्तरम् । मथुरा मधुरा पुरीति वर्णविवेकः । तेन मधुरेत्यपि भवति । 'यथा ह वै सरसि पद्मं तिष्ठति तथा भूम्यां मधुरा तिष्ठति' इत्युक्तम् । 'तस्यामधिष्ठितः कृष्णरूपी पूज्यस्त्वया' इति चोक्तं तत्र द्वितीयावरणं ब्रह्मस्थानीयं भूमण्डलस्वरूपं द्वितीयं पद्मरूपमष्टदिक्पालिभिरिति । पद्मत्वं च ब्रह्माण्डस्य ब्रह्मणः पद्मयोनिसमाख्यया सिद्धं ब्रह्माण्डलक्षणे पद्मे ब्रह्मणः प्रथमं जातत्वात् । अष्टौ दिशः पालयन्ति तेऽष्टदिक्पालिन इन्द्राद्यास्तैरेव विकसितं पत्रस्थानीयैर्भूमिरेव पद्मं जगद्विश्वरूपं विकसितं प्रबुद्धम् ।

ननु पद्ममुदकोद्भवं भवतीत्यत आह—

**संसारार्णवसंजातं सेवितं सममानसैः ।**

**संसारार्णवसंजातमिति** । संसारोऽर्णव इव दुरवगाहत्वात्ततः संजातमुत्पन्नम् । ननु पद्मं हंसैः सेव्यतेऽत उक्तं सेवितं सममानसैरिति । समान्तःकरणैः समदर्शिभिर्विष्णुपरायणैः । मधुरास्थितविष्णुपीठपद्मतया सेवितमाराधितमन्यदपि पद्मं समैस्तुल्यवर्णादिभिर्हंसैः सेव्यते ।

ननु विष्णोः सर्वेश्वरस्य निकेतने सपताकेन ध्वजेन भाव्यमत आह—

**चन्द्रसूर्याम्बरौचित्या ध्वजो मेरुर्हिरण्मयः ॥**

**चन्द्रेति । ध्वजो मेरुर्हिरण्मय** इति । ध्वजदण्डस्थानीयो हिरण्मयो मेरुः । कस्मादिदं निश्चितमत आह—**चन्द्रसूर्याम्बरौचित्येति** । चन्द्रसूर्यलक्षणं यदम्बरं शुभ्रवस्त्रं पताकास्थानीयं तस्यौचित्योचितस्य भाव औचिती तया ध्वजपटस्थानीयसूर्येन्दुदर्शनान्मेरोः सुवर्णध्वजदण्डताऽनुमीयत इत्यर्थः । चन्द्रसूर्याविवौचित्येति पाठे । ननु राज्ञश्चामराभ्यां भाव्यं तत्स्थानीयौ कावत आह—**चन्द्रेति** । चामराविति शेषः । चन्द्रसूर्यौ चामराविव ज्ञेयौ । तत्र हेतुः—**औचित्येति** । चलत्वोज्ज्वलत्वाभ्यामुचितत्वादित्यर्थः । अत्र पक्षे ध्वजस्थानीयो मेरुरुच्चत्वात् ।

**आतपत्रं ब्रह्मलोकं ममोर्ध्वचरणः स्मृतम् ।**

१ घ. ममोर्ध्व॰ ।

मधुराप्रतिष्ठितभवत्पीठे किमातपत्रमित्यपेक्षायामुक्तम् । आतपत्रं ब्रह्मलोकं ब्रह्मलोकः स्मृतं स च ब्रह्मलोको ममोर्ध्वचरणस्तृतीयपदम् । ब्रह्मलोकमिति लिङ्गव्यत्ययः । मयोर्ध्वचरणं स्मृतमिति पाठे मयोर्ध्वचरणत्वेन संभावितमित्यर्थः ।

श्रीवत्सलाञ्छनं हृत्स्थमित्युक्तं हृदि च ब्रह्मामृतं परमस्ति निर्वचनं चास्ति हृदयमात्मेति हृदयं तेन संस्थानत्वाच्छ्रीवत्सो लाञ्छनं शुक्लावर्तो हृत्स्थो भृगुचरणस्पर्शनिर्मितः सलक्षणो ब्रह्मत्वेनोपास्य इत्याह—

**श्रीवत्सं च स्वरूपं च वर्तते लाञ्छनैः सह ।**
**श्रीवत्सलाञ्छनं तस्मात्कथ्यते ब्रह्मवादिभिः ॥**

**श्रीवत्सं चेति** । स्वरूपं ब्रह्म लाञ्छनैर्लक्षणैर्हृत्स्थत्वोज्ज्वलत्वादिभिः सहितं वर्तते तस्माच्छ्रीवत्सलाञ्छनं ब्रह्मवादिभिर्वेदवादिभिः कथ्यते । चित्स्वरूपं चेति पाठे स्पष्टम् ।

कौस्तुभमणौ सर्वतेजोदृष्टिमाह—

**येन सूर्याग्निवाक्चन्द्रतेजसा स्वस्वरूपिणा ।**
**वर्तते कौस्तुभमणिं तं वदन्तीशमानिनः ॥**

**येनेति** । येन कारणेन सूर्याग्निवाणीचन्द्रतेजसा स्वस्वरूपिणा ब्रह्मतेजसा च वर्तते तेन मणितेजोरूपमीशमानिनः परमेश्वरभक्तं वदन्ति ब्रुवते । कौस्तुभस्य स्वरूपतेजस्त्वे संमतिः **सात्वततन्त्रे**—

" आत्मानमस्य जगतो निर्लेपमगुणात्मकम् ।
दधार कौस्तुभमणिं निर्गुणं भगवान्हरिः " ॥ इति ।

' चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ' इति च **परमहंससंहितायाम्** । कौ पृथिव्यां स्तोभते रुणद्धि सर्वतेजांसि कौस्तुभ इति विग्रहः । स्तुभ निरोधने । वाक्तेजस्त्वम् । ' तेजोमयी वाक् ' इति **श्रुतेः** ।

गुणत्रयाहंकारभूतपञ्चकत्वेन शङ्ख उपास्य इत्याह—

**सत्त्वं रजस्तम इति अहंकारश्चतुर्विधः ।**
**पञ्चभूतात्मकः शङ्खः परोरजासि संस्थितः ॥**

**सत्त्वमिति** । **चतुर्विध इति** । वैकारिको देवतामनोयोनिः । तैजस इन्द्रिययोनिः । तामसो भूतादिः पञ्चभूतयोनिः । न किंचिदहमास्मि सर्वमहमस्मीति वा प्रपञ्चातीतश्चतुर्थः । यथा भगवतोक्तम्—'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इत्यादि । पञ्चभूतात्मक इत्यनेन पाञ्चजन्यप्राज्ञन्युत्पत्तिर्दर्शिता । परोरजसि रजःपरे श्रीकृष्णकरे संश्रितः ।

मनोदृष्ट्या चक्रमुपास्यमित्याह—

**चलस्वरूपमत्यन्तं मनश्चक्रं निगद्यते ।**

---

१ ध. °त्सं चित्स्वरू° ।

चलस्वरूपमिति । चक्रं सुदर्शनं मनो निगद्यत इत्यन्वयः । चलस्वरूपमित्यनेन सादृश्यं दर्शितम् । 'एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते' इति वाराहे ब्रह्मवाक्यम् ।

शार्ङ्गे मायादृष्टिमाह—

आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् ।

आद्येति । करे स्थितं पद्मं विश्वरूपेणोपास्यमित्याह—पद्ममिति ।

मूलविद्यारूपेण गदोपास्येत्याह—

आद्या विद्या गदा वेद्या सर्वदा मे करे श्रिता ।

आद्येति । वेद्या ज्ञेया । आद्यविद्या याज्ञवल्क्येनोक्ता—

" पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश "॥ इति ।

अत एव गदेति नाम गदति वदति सर्वार्थानादौ । अत एव साधूपकाराय मया करेऽभयस्थाने धृतेत्याह—सर्वदेति । ' बुद्धिरूपां गदां विद्यात् ' इति पारमहंसी संहिता । ' गदा तु कालिका साक्षात् ' इति कृष्णोपनिषच्छ्रुतेराद्याऽविद्या गदेति व्याख्येयम् । ' बुद्धिरूपां गदां विद्यात् ' इति तु बुद्धेस्तदाश्रितत्वाभिप्रायेण ।

केयूरचतुष्टये तु पुरुषार्थचतुष्टयदृष्टिः कर्तव्येत्याह—

धर्मार्थकामकेयूरैर्दिव्यैर्नित्यमवारितैः ।

धर्मेति । धर्मादिग्रहणं मोक्षस्याप्युपलक्षणम् । दिव्यैरलौकिकैर्नित्यं सर्वदाऽवारितैरप्रतिहतैरुपलक्षिते कर इति संबन्धः । चतुर्षु करेषु चत्वारः केयूरा धर्मादय इत्यर्थः । विद्यावति करे पुरुषार्थवत्त्वमुचितमेव ।

स कण्ठो ब्रह्मैवेत्याह—

कण्ठं तु निर्गुणं प्रोक्तं माल्यते माययाऽजया ।
माला निगद्यते ब्रह्मंस्तव पुत्रैस्तु मानसैः ॥

कण्ठं त्विति । कण्ठं कण्ठः । निर्गुणं गुणातीतम् । मल मल्ल धृतौ ण्यन्तः । अजया मायया हेतुकर्त्र्या । हे ब्रह्मन् । मानसैः सनकादिभिस्तेन माला निगद्यते ।

किरीटं कूटस्थस्वरूपदृष्ट्या ध्यायेदित्याह—

कूटस्थस्य स्वरूपं च किरीटं प्रवदन्ति माम् ।
अक्षरोत्तमं प्रस्फुरत्तत्कुण्डलं युगुलं स्मृतम् ॥
ध्यायेन्मम प्रियो नित्यं स मोक्षमधिगच्छति ।
स मुक्तो भवति तस्मै च आत्मानं ददामीति ॥

एतत्सर्वं भविष्यति मया प्रोक्तं विधे तव ।
स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा ॥ १७ ॥

**कूटस्थस्येति** । सर्वोपरिस्थितत्वसाम्येन । युगुलं युग्मरूपं कुण्डलं यत्स्मृतं तत्प्रस्फुरति दीप्यमानमक्षरोत्तममोंकारं यो ध्यायेत्स मम कथितं सगुणं च निर्गुणं च सकाम्या मेरोः शृङ्ग इत्यादिना सगुणं पूर्वं ह्येकमेवाद्वितीयं ब्रह्माऽऽसीदित्यादिना निर्गुणम् । उपासने न वस्तुतत्त्वमपेक्षितामिति न्यायेनातद्ब्रह्मादिबुद्धिवदतस्मिंस्तत्त्वद्दृष्टिः क्रियत इत्याशङ्कानिवृत्त्यर्थं स्वरूपपदोपादानम् । तेन श्रीवत्सादिकं वस्तुतश्चित्स्वरूपादिकमेव न त्वारोप इति भावः ॥ १७ ॥

इदानीमुक्तानां द्वादशमूर्तीनां यजनप्रकारमधिकारमधिकरणं च पृच्छति—

स होवाचाब्जयोनिर्व्यक्तानां मूर्तीनां प्रोक्तानां कथं वाऽवधारणा भवन्ति कथं वा देवा यजन्ति रुद्रा यजन्ति ब्रह्मा यजति विनायका यजन्ति द्वादशाऽऽदित्या यजन्ति वसवो यजन्त्यप्सरसो यजन्ति गन्धर्वा यजन्ति स्वपदं[2] गताऽन्तर्धाने तिष्ठति कां मनुष्या यजन्ति स होवाच तं तु ह वै नारायणो देवः,

**स हेति** । व्यक्तानां प्रत्यक्षाणां विविक्तानां कथं वा केन प्रकारेण । अवधारणा निश्चयः । कथं वाव धारणेति वा पदच्छेदः । वावशब्दः संबोधने । धारणा निश्चयः । अन्तर्हितमूर्तिव्यावृत्त्यर्थं व्यक्तानामिति विशेषणम् । कथं वेति देवसामान्यप्रश्नः । रुद्रा इत्यादिर्विशेषप्रश्नः । सर्वत्र प्रकारविषयः प्रश्नः । स्वपदं गतेति । अप्रत्यक्षतया च कथं तिष्ठतीति । स्वपदगादन्तर्धान इति पाठे द्युलोकगमनादन्तर्हिता कथं तिष्ठतीत्यर्थः । तु पुनः । तं ब्रह्माणम् । ह प्रसिद्धौ । वै निश्चितम् । देव ईश्वर उवाच ।

अधिकारिणमाह—

आद्या अव्यक्ता द्वादश मूर्तयः सर्वेषु लोकेषु सर्वेषु देवेषु सर्वेषु मनुष्येषु तिष्ठति

**आद्या इति** । अव्यक्ता लोकैरज्ञायमानाः । सर्वलोकस्थितानां मूर्तीनामव्यक्तत्वं गीतासूक्तम्—" मया ततमिदं विश्वं जगदव्यक्तमूर्तिना " इति । अपृष्टा अप्यव्यक्ता उक्ताः ।

व्यक्ता आह—

रुद्रेषु रौद्री ब्रह्मण्येव ब्राह्मी देवेषु दैवी मानसेषु मानसी विनायके विघ्ननाशिन्यादित्येषु ज्योतिर्गन्धर्वेषु गान्धर्व्यप्सरःस्वेवं

१ ख. °विष्यं वै म° । २ ङ °पदगादन्त° ।

**गौर्वसुष्वेवं काम्याऽन्तर्धाने प्रकाशन आवि-**
**र्भावा तिरोभावा केवला तु स्वपदे तिष्ठति**

रुद्रेष्विति । ब्रह्मणि ब्राह्म्येवेत्यन्वयः । ज्योतिर्ज्योतीरूपा । एवं पूर्वोक्तप्रकारेणाप्सरःसु गौर्नाम्ना । काम्या नाम्ना । अन्तर्धान उद्देश्ये सति तिरोभावा तिष्ठति प्रकाशन उद्देश्ये सति स्वपद आविर्भावा तिष्ठतीत्यन्वयः । " आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः" इति पञ्चरात्रे । कदाचिदाविर्भवति भक्तानुग्रहवशादाविर्भावा तथा तिरो भवति तिरोभावा । स्वपदे तिष्ठतीति । एका तु स्वपद एव वैकुण्ठे तिष्ठतीत्यर्थः ।

त्रिगुणात्मिका मनुष्येष्वित्याह—

**तामसी सात्त्विकी राजसी मानुषी विज्ञानघन आनन्द-**
**घनः सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति ॥ १८ ॥**

तामसीति । गुणत्रयवती मानुषीत्यर्थः । विज्ञानघनस्तथाऽऽनन्दघनो भक्तियोगे तिष्ठति । प्रेमात्मकभक्तियोगस्य सच्चिदानन्दमात्रैकविषयस्य विज्ञानघन एव संभवात् । न वा अरे पुत्राणामिति न्याये स्वभिन्ने प्रेमरसस्य गौणत्वाद्भिन्नस्य निरुपाधिकप्रियत्वाभावाद्विज्ञानघनः सैन्धवघनवद्विज्ञानैकमूर्तिः ॥ १८ ॥

इदानीं सप्तदशभिः पर्यायैर्नारायणो गोपालस्तुतिमुपदिशति—

*** ॐ टां प्राणात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै प्राणात्मने नमो नमः ॥ १ ॥ ॐ टां कृष्णाय गोविन्दाय गोपीजनवल्लभाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २ ॥ ॐ टामपानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मा अपानात्मने नमो नमः ॥ ३ ॥ ॐ टां कृष्णाय प्रद्युम्नायानिरुद्धाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४ ॥ ॐ टां व्यानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै व्यानात्मने नमो नमः ॥ ५ ॥ ॐ टां कृष्णाय रामाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ६ ॥ ॐ टामुदानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मा उदानात्मने नमो नमः ॥ ७ ॥ ॐ टां कृष्णाय देवकीनन्दनाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ८ ॥ ॐ टां समानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै समानात्मने नमो नमः ॥ ९ ॥ ॐ टां गोपालाय निजस्वरूपाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १० ॥ ॐ टां योऽसौ प्रेयानात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः**

* ग. ङ. पुस्तकयोः सर्वमन्त्रेषु ' ओं टाम् ' इत्यस्य स्थाने ' ओम् ' इति टामित्यस्य स्थाने ओमिति ।

१ ङ. °काशिन्य वि° । २ ग. ङ. °वा स्वपदं ति° ।

॥ ११ ॥ ॐ टां योऽसाविन्द्रियात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥१२॥ ॐ टां योऽसौ भूतात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १३ ॥ ॐ टां योऽसावुत्तमपुरुषो गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १४ ॥ ॐ टां योऽसौ परब्रह्मगोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १५ ॥ ॐ टां योऽसौ सर्वभूतात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १६ ॥ ॐ टां योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १७ ॥

ॐ टां प्राणात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै प्राणात्मने नमो नम इत्याद्यपर्यायः। टान्तं चन्द्रमनुस्मरन्निति टकारस्याङ्गन्यासे चन्द्ररूपत्वेनोक्तत्वाट्टकारश्चन्द्रबीजं तेनाऽऽद्यदीर्घद्वययुतेन क्रमेण सर्वत्र संपुटा मन्त्राः। ततः परं तत्सदिति ब्रह्मवाचकौ शब्दौ। ततो भूराद्यास्तिस्रो व्याहृतयः। ततस्तस्मै संपुटितमन्त्रोक्ताय नमो नम आदराय द्विरुक्तिः। तत्सदादि सप्तदशस्वपि तुल्यम्। एवं च गोविन्दादिविष्णुमन्त्राः पञ्चभिः प्राणादिमन्त्रैर्ग्रथिताः कार्याः।

ग्रथनलक्षणं तु—"मन्त्रार्णान्तरितान्कुर्यान्नामवर्णान्यथाविधि।
ग्रथनं तद्विजानीयात्प्रशस्तं शान्तिकर्मणि" ॥ इति।

अत्र मन्त्रार्णानां नामवर्णग्रहणं पत्राणामपि परस्परग्रथकानामुपलक्षणम्। तत्र क्रमः प्राणापानसमानोदानव्यानानां प्रथमतृतीयपञ्चमसप्तमनवमा मन्त्रा एषु तस्मै परतो वैशब्दो नास्ति। कृष्णगोविन्दगोपीजनवल्लभानां चतुर्थ्यन्तानां द्वितीयः। कृष्णप्रद्युम्नानिरुद्धानां चतुर्थ्यन्तानां चतुर्थः। कृष्णरामयोश्चतुर्थ्यन्तयोः षष्ठः। श्रीकृष्णदेवकीनन्दनयोस्तादृशयोरष्टमः। गोपालनिजस्वरूपयोस्तादृशयोर्दशमः। ततः सप्त मन्त्राः सप्तगोपालानां प्रथमान्तानां तत्र प्रेयानात्मा गोपाल एकादशः। इन्द्रियात्मा गोपालो द्वादशः। भूतात्मगोपालस्त्रयोदशः। उत्तमपुरुषो गोपालश्चतुर्दशः। परब्रह्मगोपालः पञ्चदशः। सर्वभूतात्मा गोपालः षोडशः। जाग्रत्स्वप्नसुषुप्तमतीत्य तुर्यातीतो गोपालः सप्तदशः। एषां सप्तानामों टां योऽसाविति प्रथमतः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नम इत्यन्ते पठनीयम्।

एतन्मन्त्रस्तुत्यस्य गोपालस्य पारमार्थिकं रूपं मन्त्रेणाऽऽह—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥

एक इति। प्रागेव व्याख्यातोऽहं कृष्णाभिधो नारायणः। एक इत्यादिरष्टादशः

पर्यायः । एष्वष्टादशाक्षरस्यैकैकमक्षरं सबिन्दुकमादौ प्रयोक्तव्यमित्याम्नायः । अयं कृष्णाख्यमूलव्यूहस्याष्टादशतत्त्वव्यूहः ।

**रुद्राय नम आदित्याय नमो विनाय-**
**काय नमः सूर्याय नमो विद्यायै नमः ।**

रुद्रादित्यविनायकसूर्यविद्याः कृष्णार्चनेऽवश्यमर्च्या इत्याह—**रुद्राय नम इत्यादि** ।

आयुधोपलक्षितानिन्द्रादीनन्ते पूज्यान्स्मारयति—

**इन्द्राय नमोऽग्नये नमः पित्रे नमो निर्ऋतये नमो वरुणाय**
**नमो [१]मरुते नमः कुबेराय नम ईशानाय नमो ब्रह्मणे नमः**

**इन्द्राय नम इत्यादि** । पित्रे यमाय । मरुते वायवे । ब्रह्मणे नम इति पूर्वेशानयोरन्तरे । अनन्ताय नम इति रक्षोवरुणयोरन्तर इत्यपि द्रष्टव्यम् ।

**सर्वेभ्यो देवेभ्यो नमः ।**

किं बहुना सर्वदेवमयो हरिः पूज्य इत्याह—**सर्वेभ्य इति** ।

नारायणब्रह्मणोः संवादमनुष्टुभा दुर्वासा गान्धर्वीं प्रत्युपसंहरति—

**दत्त्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे ।**
**कर्तृत्वं सर्वलोकानामन्तर्धाने बभूव सः ॥**

**दत्त्वा स्तुतिमिति** । स्तुतिं सप्तदशमन्त्रात्मिकाम् । सर्वलोकानां कर्तृत्वं च ब्रह्मणे दत्त्वाऽन्तर्धाने फलभूते मयि सति बभूव स्वात्मानं धृतवान् । यस्य च भावेनेति सप्तमी । आत्मधारणं तिरोधानेन लक्ष्यते । ह प्रसिद्धम् । स इति पाठः । आदितो नारायणः कथं चास्मासु जातो गोपाल इत्यादिप्रश्नानामष्टानामुत्तरं यथासंभवमस्मिन्ग्रन्थकलापे द्रष्टव्यम् । मायिकं जन्म ब्रह्मण उपदेशादेतत्स्वरूपं मया ज्ञातमित्याद्युत्तरम् ।

ब्रह्मनारदादिभ्यो मया श्रुतोऽर्थस्त्वां प्रत्युक्तो न पुनः प्रतारयितुं कल्पित इत्याह—

**ब्रह्मणो ब्रह्मपुत्रेभ्यो नारदात्तु श्रुतं यथा ।**
**तथा प्रोक्तं तु गान्धर्वि गच्छ त्वं स्वालया-**
**न्तिकं गच्छ त्वं स्वालयान्तिकमिति ॥ १९ ॥**

**इत्यथर्ववेदोपनिषदि गोपालोत्तरतापनीयोपनिषत्समाप्ता ॥ १२ ॥**

**ब्रह्मण इति** । नारीं त्वां दातुमुपदेष्टुं मया यथा श्रुतं तथा प्रोक्तं न न्यूनातिरिक्तं श्रद्धत्स्व सौम्ये हे गान्धर्वि त्वामिममर्थं चिन्तयन्ती स्वस्याऽऽलयस्यान्तिकं समीपं मध्य-

---

१ ङ वायवे ।

मर्थाद्गच्छ प्राप्नुहि। वचनभङ्ग्या ब्रह्मैव प्राप्नुहीत्युक्तं भवति। * नारदात्तु श्रुतं यथेति क्वचिद्द्वितीयः पाठः ॥ १९ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिकोत्तरकृष्णके ॥ १ ॥

इति श्रीनारायणविरचिता गोपालोत्तरतापनीयोप-
निषद्दीपिका समाप्ता ॥ १७ ॥

---

* आदर्शपुस्तकेषु त्रयमेवोपलभ्यते।

ॐ तत्सद्ब्रह्मणे नमः ।

# चूलिकोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

चूलिका चूडिका लोके स्तम्भाग्रं तीक्ष्णमुच्यते ।
तद्वद्वेदान्तभागोऽयं चतुष्खण्डा हि पञ्चमी ॥ १ ॥

योगफलमात्मदर्शनं स चाऽऽत्माऽतिसंनिहितोऽपि कण्ठस्थहारवत्पराग्दृष्टिना गुरुं विना न दृश्यत इति तद्बोधनार्थमुत्तरो ग्रन्थस्तत्र हाररूपकेणाऽऽह—

**ॐ अष्टपादं शुचिर्हंसं त्रिसूत्रं मणिमव्ययम् ।**
**द्विवर्तमानं तेजसैद्धं सर्वः पश्यन्न पश्यति ॥ १ ॥**

**अष्टपादमिति ।** अष्टौ प्रकृतिरूपाः पादा अवयवा अस्य तमष्टपादम् ।

तदुक्तम्—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा"॥ इति ।

अस्याः पादत्वं सर्वतः प्राथम्यसाम्यात् । शुचिरुज्ज्वलः । शुचिःशब्दः सकारान्तो नपुंसकः । शुचिमिति वा पाठः । हन्त्यज्ञानमिति हंसस्तम् । त्रीणि सूत्राणि धर्मार्थकामा यस्य मोक्षस्य स्वरूपानतिरेकात् । त्रयो गुणा वा तिस्रो नाड्यो वा । मणिं प्रकाशत्वात् । न विविधमेत्यव्ययमेकरूपम् । द्वयोः स्थूलसूक्ष्मदेहयोर्वर्तमानं तिष्ठन्तं द्विवर्तमानम् । तेजसा प्रकाशेनेद्धं दीप्तं तेजसैद्धं छान्दसी वृद्धिः । एवंविधमात्मानं कण्ठस्थहारमिव सर्वो लोकः पश्यन्नपि न पश्यति । हारोऽप्यष्टकन्दुकावयव उज्ज्वलो हंसलक्षणोपेतस्त्रिवृत्सूत्रो रुक्मिमयो दृढो द्वयोर्दक्षिणोत्तरभागयोर्वर्तमानस्तेजसा दीप्तश्च भवति । सर्वो लोकस्तं पश्यन्नप्यतिसांनिध्यान्न पश्यति ॥ १ ॥

तर्हि तद्दर्शने क उपाय इत्यत आह—

**भूतसंमोहने काले भिन्ने तमसि वैश्वरे ।**
**अन्तः पश्यति सत्त्वस्थं निर्गुणं गुणगह्वरे ॥ २ ॥**

**भूतेति ।** भूतमोहजनके काले कृष्णवर्णे ऐश्वरे ईश्वराधिष्ठिते तमस्यज्ञाने भिन्ने नष्टे सत्यन्तरेव संनिहितं पश्यति सत्त्वस्थं बुद्धिस्थं तत्साक्षिणं तत्प्रकाश्यं वा । " दृश्यते

त्वग्र्यया बुद्ध्या" इति श्रुतेः । स्वयं निर्गुणमपि गुणकोटरे लिङ्गेऽहमिति भासमानं मेघण्डल इव सूर्यम् ॥ २ ॥

**अशक्यः सोऽन्यथा द्रष्टुं ध्येयमानः कुमारकः ।**
**विकारजननीं मायामष्टरूपामजां ध्रुवाम् ॥ ३ ॥**
**ध्यायतेऽध्यासिता तेन तन्यते प्रेरिता पुनः ।**
**स्तूयते पुरुषार्थं च तेनैवाधिष्ठिता पुरा ॥ ४ ॥**

स कुमारको जरारहितः "त्वं कुमार उत वा कुमारी" इति मन्त्रवर्णात् । अन्यथेश्वरानुग्रहेण तमोभेदं विना प्रकारान्तरेण द्रष्टुमशक्यः । ध्येयमानो बाह्यदृष्ट्या चिन्त्यमानोऽपि । छान्दस एकारः । अथवाऽद्यापि ध्येयं चिन्तनीयं विचार्यं मानं प्रमाणमस्य दुर्विज्ञेयत्वात् । मायां ध्यायते चिन्तयति जगत्सृष्ट्यर्थं संभावयति नारीमिवर्तुस्नाताम् ।

तदुक्तम्—" मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत " ॥ इति ।

तेनाध्यासिताऽऽक्रान्ताऽऽरूढा प्रेरिता च सती तन्यते स्वयमेव कार्यरूपेण तता भवति । कर्मकर्तरि कर्मप्रत्ययः । तेनैवाधिष्ठिता सती पुरा पुरुषार्थं भोग्यम् । स्तूयते प्रस्तुतवती । कर्मकर्ता । पुरि लुङ्चास्म इति भूतेऽनद्यतने लट् ॥ ३ ॥ ४ ॥

भोग्यवस्तुजनकत्वेन मायां धेन्वा रूपयति—

**गौरनादवती सा तु जनित्री भूतभाविनी ।**
**असिता सितरक्ता च सर्वकामदुघा विभोः ॥ ५ ॥**

**गौरिति** । इयं गौर्दोग्ध्रीश्वरवाहनानडुद्वत्सा चेत्किं हम्बारं करोति नेत्याह— **अनादवतीति** । नादरहिताऽचेतनत्वाद्वक्तुमसमर्थेश्वराधीनेत्यर्थः । यद्वा गौरी शुक्ला सत्त्वप्रधाना सती नादवती वेदप्रवर्तिका । पुंवद्भावः । सर्वस्य । "गौरं शुक्लेऽरुणेऽपि च" इति **विश्वः** । असिता तामसी । सिता चासौ रक्ता च सितरक्ता सात्त्विकी राजसी चेत्यर्थः । विभोरीश्वरस्य । सर्वकामदुघा सर्वान्कामान्दोग्धि यथेष्टकार्यकारिणी । **महानारायणीये श्वेताश्वतरे** चास्याश्छागीसाम्यमुक्तम्—" अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोऽन्यः " इति ॥ ५ ॥

**इति प्रथमः खण्डः ॥ १ ॥**

जीवानां बहुत्वं भोक्तृत्वमीश्वरस्यैकत्वं प्रयोजकत्वं चाऽऽह—

**पिबन्ते नामविषयमसंख्याताः कुमारकाः ।**
**एकस्तु पिबते देवः स्वच्छन्देन वशानुगः ॥ ६ ॥**

---

१ ख. जनयन्ती । २ क. ग पिबन्ति ।

[1]**पिबन्त इति** । नाम शब्दो विषयोऽर्थः । छान्दसत्वात्कर्त्रभिप्राये क्रियाफल आत्मनेपदम् । प्रयोजकव्यापारः कर्त्रभिप्रायं क्रियाफलमिति कैयटः । वशा वन्ध्या तामनुगतः । पर्वतराजपुत्र्या अप्रकृतत्वात् । यद्वा वशाः स्वविधेया अनुगाः परिवारो यस्य वशानुगः ॥ ६ ॥

तर्हि किमस्य सर्वथा भोक्तृत्वं नेत्याह—

**ध्यानक्रियाभ्यां भगवान्भुङ्क्तेऽसौ प्रथमं प्रभुः ।**

**ध्यानक्रियाभ्यामिति** । प्रथमं ध्यायति भगवानिदमिति ततः पश्यति सैव क्रिया तेन स प्रथमं भुङ्क्ते तदुच्छिष्टमन्यो भुङ्क्ते । ध्यात्वाऽवलोकनमेव तस्य भोजनम् । " न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति " इति श्रुतेः ।

भुङ्क्त इत्युक्ते कां भुक्ते तत्राऽऽह—

**सर्वसाधारणीं दोग्ध्रीमिज्यमानां सुयज्वभिः ॥ ७ ॥**

**सर्वेति** । सर्वेषां साधारणीं समभोग्यामव्याकृतरूपामित्यर्थः । " एकमस्य साधारणम् " इति श्रुतेः । दोग्ध्री तु स्वभक्ष्यमपेक्षतेऽन्यथा दोहासंभवादत आह—इज्यमानां सुयज्वभिः । साधुयाज्ञिकैर्हव्यकव्येन पूज्यमानाम् ॥ ७ ॥

तर्हि तेषामन्यापेक्षया फलविशेषेण भाव्यमित्यपेक्षायामाह—

**पश्यन्त्यस्यां महात्मानं सुपर्णं पिप्पलाशनम् ।**
**उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो हयेत् ॥ ८ ॥**

**पश्यन्तीति** । वृक्षस्थानीयमेकं देहं त्यक्त्वा देहान्तरं गच्छतीति सुपर्णोपमं सुपर्णम् । पिप्पलं कर्मफलमश्नाति तं पिप्पलाशनम् । वस्तुवृत्त्योदासीनं स्नातकाध्वर्यवो हवाद्धोमात्पश्यन्तीत्यन्वयः । आत्मदर्शनमेव यागादिफलम् । वहेदिति पाठे तानियं वहेन्निर्वहेद्योगक्षेमादिनेति व्याख्येयम् । हव इति पाठे हवनकर्मणि । हय इति पाठे हयोऽश्वस्तदुपलक्षितेऽश्वमेधकर्मणि । हयेदिति पाठे तानियं वर्धयेत् ॥ ८ ॥

आध्वर्यवफलमुक्त्वा हौत्रफलमाह—

**शंसन्तमनुशंसन्ति बह्वृचाः[2] शस्त्रकोविदाः[3] ।**

**शंसन्तमिति** । शस्त्रकोविदाः । सपादबन्धो मन्त्र ऋक्तया केवलया स्तुतिः शस्त्रं गीयमानया तया स्तुतिः स्तोत्रम् । " ऋग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति " इति यास्कवचनात् । शस्त्रे कोविदाः कुशलाः । फलं पूर्वोक्तमेवानुसंधेयं सर्वत्र ।

सामगानां व्यापारमाह—

**रथंतरे बृहत्साम्नि सप्तवैते च गीतये ॥ ९ ॥**

---

१ ख. पिबन्तीति । २ ख बह्वृचः । ३ ख. ग. शास्त्रकोविदाः ।

**रथंतर इति** । रथंतरे गीयते बृहत्साम्नि गीयते । सामगैर्दोग्ध्रीपतिरिरिति शेषः । किं बहुना सप्तैवैते च सामभेदा गायन्तीति विपरिणामः । रथंतरं बृहत्साम वैरूपं वैराजं महानाम्नी रेवती वामदेव्यमिति सप्त सामानि । दोग्ध्रीपतिः फलं पूर्वोक्तं ददातीति ज्ञेयम् ॥ ९ ॥

अथर्वणां व्यापारमाह—

**मन्त्रोपनिषदं ब्रह्म पदक्रमसमन्वितम् ।**
**पठन्ति भार्गवा ह्येतदथर्वाणो भृगूत्तमाः ॥ १० ॥**

**मन्त्रेति** । मन्त्राश्चोपनिषदं च मन्त्रोपनिषदम् । उपनिषदशब्दोऽकारान्तो नपुंसकमस्ति । ब्रह्म ब्राह्मणं पठन्ति मायापतिं भजन्तीति भावः ॥ १० ॥

**इति द्वितीयः खण्डः ॥ २ ॥**

भार्गवग्रन्थानां विषयमीश्वरमाह—

**ब्रह्मचारी च व्रात्यश्च स्कम्भोऽथ पलितस्तथा ।**
**अनड्वाँल्लोहितोच्छिष्टः पठ्यते भृगुविस्तरे ॥ ११ ॥**
**कालः प्राणश्च भगवान्मन्युः पुरुष एव च ।**
**शर्वो भवश्च रुद्रश्च श्यावाश्वः सासुरस्तथा ॥ १२ ॥**

**ब्रह्मचारीत्यादिसार्धद्वाभ्याम्** । ब्रह्मचारित्वव्रात्यत्वाभ्यां सर्वविरुद्धधर्मा अस्मिन्नविरुद्धा इत्युक्तम् । स्कम्भः स्तम्भकः । स्कम्भिः स्तम्भे । वृद्धः कुमारश्चेति विरुद्धम् । अनडुत्त्वं वाह्यवाहकयोरेकत्वात् । लोहितोच्छिष्ट आर्द्रगजचर्मपरिधानत्वात् । कालः संहर्तृत्वात् । प्राणो वायुमूर्तत्वात् । मन्युस्तमउपाधिना । शर्वः । शॄ हिंसायाम् । भवति प्रभवति भवः । रोदनाद्रुद्रः । श्यावा विकृता अश्वा इन्द्रियाणि नेत्रादीनि यस्य । त्रिनेत्रदशभुजादिरूपत्वात् । असुरैर्बाणादिभिः सहितः सासुरः ॥ ११ ॥ १२ ॥

**प्रजापतिर्विराट्चैव पार्ष्णिः सलिलँ एव च ।**
**स्तूयते मन्त्रसंयुक्तैरथर्वविहितैर्विभुः ॥**
**तं षाड्विंशकमित्येके सप्तविंशं तथाऽपरे ॥ १३ ॥**
**पुरुषं निर्गुणं सांख्यमथर्वाणं शिरो विदुः ।**
**चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तदर्शनम् ॥ ४ ॥**

पार्ष्णिः पादपृष्ठं तत्तुल्यः संहारे लोकमर्दनात् । सलिलः सलिलवर्णाङ्गदत्वात् । एवं विंशतिविशेषणो विभुर्मन्त्रब्राह्मणाभ्यां स्तूयते । अथर्वविहितैर्ब्राह्मणैः । विभुरीश्वरः परमात्मा । षड्विंशकं पौराणिकाः । सप्तविंशं तद्भेदा एवम् ।

---

१ ख. ग. पठ्यन्ते । २ ख. ग. °वान्मृत्युः पु° । ३ ख. ग. °लमेव ।

"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहंकृतिः ।
महान्प्रधानं तत्त्वानि षड्विंशः परमेश्वरः" ॥ इति ।

चित्तेन साहित्ये सप्तविंश इति । संख्यायतेऽनयेति संख्या तत्संबन्धी सांख्यस्तं ज्ञानगम्यमित्यर्थः ।

तदुक्तम्—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति ।

स्वयमव्यक्तमप्रत्यक्षं व्यक्तदर्शनं व्यक्तस्य जगतो भासकम् ॥ १३ ॥ १४ ॥

**अद्वैतं द्वैतमित्येतत्त्रिधा तं पञ्चधा तथा ॥ १५ ॥**

अद्वैतं वेदान्तिनो द्वैतं काणादास्त्रिधा गुणभेदेन पञ्चधा भूतभेदेन "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुनश्चैकादशः स्मृतः" इति श्रुत्यन्तरात्॥१५॥

इति तृतीयः खण्डः ॥ ३ ॥

**ब्रह्माद्यं स्थावरान्तं च पश्यन्तो ज्ञानचक्षुषः ।**
**तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः ॥ १६ ॥**

द्विजास्त्रैवर्णिका वेदविदः ॥ १६ ॥

**यस्मिन्सर्वमिदं प्रोतं ब्रह्म स्थावरजङ्गमम् ।**
**तस्मिन्नेव लयं यान्ति बुद्बुदाः सागरे यथा ॥ १७ ॥**
**यस्मिन्भावाः प्रलीयन्ते लीनास्या व्यक्ततां ययुः ।**
**नश्यन्ते व्यक्ततां भूयो जायन्ते बुद्बुदा इव ।**
**क्षेत्रज्ञाधिष्ठितं चैव कारणैर्व्यञ्जयेद्बुधः ॥ १८ ॥**

**ब्रह्मेति** । ब्रह्मकार्यं स्थावरादि यस्मिन्प्रोतं तमेकं ब्रह्मैव पश्यन्तीत्यन्वयः । लयं यान्ति सर्वे भावाः । लीनास्या लीनमास्यं मुखं द्वारमविद्यालक्षणं येषां ते तथोक्ताः सन्तो व्यक्ततां ययुर्गताः । पुनर्नश्यन्ते नश्यन्ति । भूयश्च व्यक्ततां जायन्ते जनयन्ति । अन्तर्भावितण्यर्थत्वात्सकर्मकः । गच्छन्ति वा । द्विः कथनं सृष्टिप्रलययोरभ्यासज्ञापनार्थम् क्षेत्रज्ञेनाधिष्ठितं शरीरम् । कारणैरनुमितकारणैर्हेतुभिर्विमतं चेतनाधिष्ठितं क्रियावत्त्वाद्रथवदित्यादिभिः । व्यञ्जयेल्लक्षयेत् । बुधः पण्डितः ॥ १७ ॥ १८ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

**एवं सहस्रशो देवं पर्यस्यन्तं पुनः पुनः ॥ १९ ॥**

**य एवं श्रावयेच्छ्राद्धे ब्राह्मणो नियतव्रतः ।**
**अक्षय्यमन्नपानं च पितॄणां चोपतिष्ठते ॥ २० ॥**

एवं सहस्रशः पुनः पुनः पर्यस्यन्तं देवं जन्ममरणादिप्रबन्धमापद्यमानं जीवम् । ईश्वराराधनेनोद्धरेदिति शेषः । वैराग्यार्थमिदमभिहितम् । तस्यान्नं पानं चाक्षय्यं भवति । पितॄणां चाक्षय्यमेवोपतिष्ठते ॥ १९ ॥ २० ॥

**ब्रह्म ब्रह्मविधानं तु ये विदुर्ब्राह्मणादयः ।**
**ते लयं यान्ति तत्रैव लीनास्या ब्रह्मशायिने**
**लीनास्या ब्रह्मशायिन इति ॥ २१ ॥**

**इत्यथर्ववेदे चूलिकोपनिषत्समाप्ता ॥ १३ ॥**

ब्रह्म कूटस्थम् । ब्रह्मविधानं तज्ज्ञानोपायम् । लीनास्या लीनमास्यं मुखं प्रवृत्तिद्वारं रागादि येषां ते तथोक्ताः । किमर्थं लीनास्याः । ब्रह्मशायिने ब्रह्मणि शेते तच्छीलो ब्रह्मशायी भावप्रधानो निर्देशः । ब्रह्मशायित्वाय ब्रह्मणि शयनं कर्तुमेकीभवितुमित्यर्थः । द्विरुक्तिः समाप्त्यर्था ॥ २१ ॥

**इति पञ्चमः खण्डः ॥ ५ ॥**

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका चूलिकाभिधे ॥ १ ॥

इति नारायणविरचिता चूलिकोपनिषद्दीपिका समाप्ता ॥ १८ ॥



ॐ तत्सद्ब्रह्मणे नमः ।

# जाबालोपनिषत् ।

## नारायणशंकरानन्दविरचितदीपिकाभ्यां समेता ।

ॐ भद्रं कर्णेभिरिति शान्तिः । बृहस्पतिरुवाच याज्ञवल्क्यं यदनु

नारायणविरचितदीपिकारम्भः ।

कृष्णद्वैपायनं व्यासं शंकरं लोकशंकरम् ।
आनन्दात्मानमध्यात्मगुरुं देवं नतोऽस्म्यहम् ॥ १ ॥
जाबालोपनिषद्व्याख्यां ख्यापयन्तीं सुधानिधिम् ।
कारिष्ये प्रीयतां देवो विमुक्तोऽयं तयेश्वरः ॥ २ ॥

सर्वासामुपनिषदां संगतिर्या कर्मकाण्डेन साऽस्या अपि । तत्संगतिश्चास्माभिर्बृहदारण्यकदीपिकारम्भे प्रदर्शिताऽत्र सर्वतर्थिसार आत्माऽशेषसंसारधर्मैरसंस्पृष्टोऽहंप्रतिपाद्य एतादृशज्ञानेन च निःशेषानर्थनिवृत्तिरानन्दावाप्तिश्च प्रयोजनमप्युपनिषदन्तरवत् । अत एव संबन्धाधिकारिणावपि न पृथग्वर्णनीयौ । ब्रह्मज्ञानोपायसंन्यासानधिकारिणां शतरुद्रियजपः संन्यासिनामपि श्रवणाद्यधिकारिणां सर्वसङ्गपरित्यागश्चाऽऽक्षेपसमाधानाभ्यां प्रतिपाद्यत इत्युपनिषदर्थसंक्षेपः । तत्राऽऽख्यायिकाऽऽचारविधिज्ञापनार्था । मिथिलोपवने कदाचिद्योगीश्वरो याज्ञवल्क्य आसांचक्रे शिष्यसंघैर्जनकेन राज्ञा मुनिभिश्च निवीतः । तं बृहस्पतिः शक्रगुरुरुवाच । याज्ञवल्क्यम् । स्पष्टम् । यदनु

शंकरानन्दविरचितदीपिकारम्भः ।

जाबालोपनिषद्व्याख्यां ख्यापयन्तीं सुधानिधिम् ।
कारिष्ये प्रीयतां देवो विमुक्तो यस्तयेश्वरः ॥ १ ॥

सर्वासामुपनिषदां संगतिर्या कर्मकाण्डेन साऽस्या अपि । तत्संगतिश्चास्माभिर्बृहदारण्यकदीपिकारम्भे प्रदर्शिता । अत्र सर्वतीर्थसार आत्माऽशेषसंसारधर्मैरसंस्पृष्टोऽहंप्रतिपाद्य एतादृशज्ञानेन च निःशेषानर्थनिवृत्तिरानन्दावाप्तिश्च परमप्रयोजनमप्युपनिषदन्तरवत् । अत एव संबन्धाधिकारिणावपि न पृथग्वर्णनीयौ ब्रह्मज्ञानोपायसंन्यासानधिकारिणां शतरुद्रियजपः संन्यासिनामपि श्रवणाद्यधिकारिणां । सर्वसङ्गपरित्यागश्चाऽऽक्षेपसमाधानाभ्यां प्रतिपाद्यत इत्युपनिषदर्थसंक्षेपः । तत्राऽऽख्यायिकाऽऽचारविधिज्ञापनार्था । मिथिलोपवने कदाचिद्योगीश्वर आसांचक्रे शिष्यसंघैर्जनकेन राज्ञा मुनिभिश्च निवीतस्तं बृहस्पतिः शक्रगुरुरुवाच याज्ञवल्क्यम् । स्पष्टम् । यदनु प्रसिद्धं यस्मात्सर्वस्मादपि

**कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छाति तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्र-**

---

**ना० दी०** प्रसिद्धं सर्वस्मादपि देशात्पुण्यकर्मैकलशभूतामित्यर्थः। कुरुक्षेत्रं कुत्सितं रौतीति कुरु पापं कर्म तस्य क्षपणाद्गमनकारणत्वात्क्षेत्रम्। अथवा कुः पृथिवी तस्यां रौति शब्दं करोति यः प्राणस्तस्य निवासभूतं कुरुक्षेत्रम्। देवानामिन्द्रियाणां देवयजनं देवस्य स्वयंप्रकाशस्याऽऽत्मनः पूजाधिकरणम्। अत्र हीन्द्रियाणि विविधविषयोपहारैः परमात्मानं पूजयन्ति। सर्वेषां भूतानां सर्वेषामिन्द्रियाधिष्ठातॄणां प्रसिद्धानां वा भूतानां ब्रह्मसदनं ब्रह्मणः सर्वस्मादधिकस्य देशकालवस्तुपरिच्छेदशून्यस्य सदनं निवासस्थलम्। रूपकमत्र द्रष्टव्यम्। यथा प्रसिद्धं कुरुक्षेत्रं देवयजनं देवानां हविर्भागप्राप्ति-

---

**शं० दी०** पुण्यकर्मफलभूतामित्यर्थः। **कुरुक्षेत्रं** कुत्सितं रौतीति कुरु पापं कर्म तस्य क्षेपणाद्गमनकारणत्वात्क्षेत्रम्। अथवा कुः पृथिवी तस्यां रौति शब्दं करोति यः प्राणस्तस्य निवासभूतं कुरुक्षेत्रम्। **देवाना**मिन्द्रियाणाम्। **देवयजनं** देवस्य स्वयंप्रकाशस्याऽऽत्मनो यजनं पूजाधिकरणम्। अत्र हीन्द्रियाणि विविधविषयोपहारैः परमात्मानं पूजयन्ति। **सर्वेषां भूताना**मिन्द्रियाधिष्ठातॄणां प्रसिद्धानां भूतानां वा **ब्रह्मसदनं** ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यस्य निवासमूलम्। रूपकमत्र द्रष्टव्यम्। यथा प्रसिद्धं कुरुक्षेत्रं देवानां हविर्भागप्राप्तिकारणं ब्रह्मणो यज्ञस्य सदनं सर्वेषां भूतानां दृष्टादृष्टप्राप्तिकारणं तथा तद्विशेषणविशिष्टमुक्तं कुरुक्षेत्रम्। किमिति शेषः। तदुत्तरमाह—**अविमुक्तं वै**। विशेषेणाविद्याकामक्रोधादिभिर्मुक्तः परित्यक्तश्चिदानन्दरस आत्मा स एवाविद्यादशायामविमुक्तस्तत्स्वरूपमविमुक्तं प्रसिद्धम्। विविधधर्मानात्मनि मन्यमानं सोपाधिकमैश्वरं रूपमिति यावत्। तदेव **कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्**। व्याख्यातम्। यस्मादेवं **तस्माद्यत्र क्वचन** यत्र क्वापि गङ्गाप्रयागादौ विपरीते वा स्थले। **गच्छति** गमनं करोति। **तदे**वाविमुक्तं **मन्येत** जानीयात्। इत्यनेन प्रकारेणे-**दं वै** मया प्राप्तं स्थूलमेव तदेवेत्यन्वयः। उक्तविशेषणमेव न तु केवलमित्येतदर्थं पुनराह—**कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्**। व्याख्यातम्। **अत्रा**विमुक्ते कुरुक्षेत्रादिरूपे यस्मिन्कस्मिंश्चिद्देशेऽविज्ञाते। **हि** यस्माज्**जन्तोः** प्राणिमात्रस्य। **प्राणेषूत्क्रममाणे**ष्विति वा पाठः। **रुद्रो** रुदुःखं द्रावयति नाशयतीति वा रुद्रः

---

१ क. गच्छेत्तदे॰। ङ. गच्छेत्तत्तदभिम॰। २ व. मन्यते तदविमुक्तमेवेदं। ३ ङ. ॰न्येताविमुक्तो वै देवा॰।

स्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मा-
दविमुक्तमेव निषेवेताविमुक्तं[1] न विमुञ्चेदेवमेवैतद्याज्ञल्क्यः[2] ।
इति प्रथमः खण्डः ॥ १ ॥

अथ हैनमत्रिः प्रपच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त

---

ना०दी० कारणं ब्रह्मणो यज्ञस्य सदनं सर्वेषां भूतानां दृष्टादृष्टप्राप्तिकारणं तथा तद्विशेषणद्वयविशिष्टमुक्तं कुरुक्षेत्रम् । किमिति शेषः ॥ इति प्रथमः खण्डः ॥ १ ॥

नामतो देशे ज्ञातेऽपि लिङ्गतोऽपि ज्ञानार्थमात्मोपासनप्रकारं पृच्छत्यत्रिरित्याह— **अथ हैनमत्रिरिति** । अत्र हि बृहदारण्यक इव ऋषिसंघः प्रष्टा याज्ञवल्क्यः समाधाता जनकः सभ्यः परंतु नात्र जल्पः किंतु वाद इति ज्ञेयम् । अनन्ताव्यक्तविशेषणे दुर्बोधत्वख्यापनाय । कथमित्याधिकरणप्रश्नः । इतरो विदिताभिप्राय आह—

---

शं०दी० सदाशिवो वामनो वा । **तारकं** संसारसमुद्रस्य तरणे कारणम् । **ब्रह्म** सत्यज्ञानादिलक्षणम् । **व्याचष्टे** कथयति तत्त्वमस्यादिनोक्तं मरणसमये स्मारयति । अविमुक्तक्षेत्तदानीमेवोपदिशति । **येना**हं ब्रह्मास्मीत्युपदेशेन । **असौ** रुद्रः शिवो जीवः । **अमृ**-स्यमृतो भूत्वा कर्ता भोक्ताऽस्मीत्यभिमानेन मृतो ब्रह्माहमस्मीत्यभिमानेनामृती **भूत्वा**ऽनन्तरमेव । **मोक्षी भवति,** अविद्यादशायाममोक्षो ब्रह्मज्ञानेनाविद्यापगमनान्मोक्षी भवति । स्वेन स्वयंज्योतिःस्वरूपेणाऽऽनन्दात्मनाऽवतिष्ठत इत्यर्थः । पूर्वस्य हेर्यस्मादर्थस्यात्रान्वयः । **तस्मा**द्ब्रह्मज्ञानोदयात्प्राग**विमुक्तमेव** सोपाधिकमेव । **निषेवेत** नितरां सेवेत विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहेण सेवेत नितरां साक्षात्कुर्यात् । यावद्ब्रह्मज्ञानोत्पादकम**विमुक्तं** सोपाधिकमीश्वरं स्वस्योपास्यं **न मुञ्चे**न्न कदाचिदपि परित्यजेत् । एवं सुरगुरुणा याज्ञवल्क्यस्य बुद्धिपरीक्षार्थं स्वस्य बुद्धिसिद्ध्यर्थं च पृष्टेन याज्ञवल्क्येनोक्तमङ्गीचकार बृहस्पतिः । **एवमेव** सोपाधिकमेवाविमुक्तं कुरुक्षेत्रं देवयजनं ब्रह्मसदनं च भाव(वि)ज्ञानवतोऽवस्थानस्थलं च तदेव तज्ज्ञानाच्च निर्गुणात्मज्ञानमरणकालादुपासनं चाऽऽमरणं न परित्याज्यमिति । इदानीं श्रुतिराह—**एतदविमुक्तं कुरुक्षे**-त्रमित्यादि । **याज्ञवल्क्यो** यज्ञवल्कस्यापत्यं योगीश्वरः । आह बृहस्पतय इति शेषः ॥ इति प्रथमः खण्डः ॥ १ ॥

**अथ हैनमत्रि**र्ब्रह्मपुत्रः **पप्रच्छ याज्ञवल्क्यम्** । यस्तारकं ब्रह्मेत्युक्तः । **एषो**ऽस्मद्बुद्धेः साक्षी । **अनन्तो** देशादिपरिच्छेदशून्यः । **अव्यक्तः,** व्यक्तो मूर्तवत्स्पष्टः । न

---

१ ङ. °कं वै न । २ क. ङ. °वैष भगवन्निति याज्ञ° ।

आत्मा तं कथमहं विजानीयामिति स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति का वै वरणा का च नासीति सर्वानि[1]*न्द्रियकृतान्दोषान्वार[2]यतीति[3] तेन वरणा भवति[4] सर्वानिन्द्रियकृतान्पापा-

ना० दी० सोऽविमुक्त इति । तत्र हेतुः—सोऽविमुक्ते प्रतिष्ठित इति । स आत्मा परमशिवाख्यो मुक्तेर्नित्यं संनिहित इत्यर्थः । इदानीं साक्षाल्लिङ्गं पृच्छति—स इति । उत्तरं वरणायां नेति ।

यत्स्कान्दे—" असीवरणयोर्मध्ये पञ्चक्रोशं महत्तरम् ।
अमरा मरणमिच्छन्ति का कथा इतरे जनाः " ॥ इति ।

वरणानासीशब्दयोः प्रवृत्तिनिमित्तं पृच्छति—का वा इति । अन्वर्थनिर्वचनेनोत्तरयति—सर्वानिति । लोकपुराणप्रसिद्ध्याऽधिभूतमविमुक्तं ज्ञातं संप्रत्यध्यात्माभिप्रा-

शं०दी० व्यक्तोऽव्यक्तः । आत्माऽस्मत्प्रत्ययलक्ष्यः । तमुक्तरूपमात्मानं कथं केन प्रकारेणाहं विजानीयामित्यवगच्छेयमिति । स होवाच याज्ञवल्क्यः । स कुरुक्षेत्रादिरूपेण य उक्तोऽविमुक्तः सोपाधिकः स निर्गुणात्मज्ञानार्थमुपास्यः साक्षात्कर्तव्यः । तत्र हेतुमाह—य एषोऽनन्तोऽव्यक्त आत्मा । व्याख्यातः । सोऽविमुक्ते प्रतिष्ठितः स भवता पृष्टो निर्गुणोऽविमुक्ते सोपाधिके विविधशक्तियुक्त ईश्वररूपे प्रतिष्ठितोऽवस्थितोऽतिशुद्धोपाधौ तस्मिन्सर्वात्मना स्वयमुपलभ्यत इत्यर्थः । इति यस्मात्तस्मादिति शेषः । तस्यापि सोपाधिकस्यापि दुर्गमत्वादुपलब्धिस्थानं पृच्छति । सः, निर्गुणस्वरूपाधार इवाविमुक्तः सोपाधिकः । अस्य देहस्य कस्मिन्नवयव उपलब्धिस्थाने प्रतिष्ठितः सर्वदा संनिहितः । इतिः प्रश्नसमाप्तौ । उत्तरमाह—वरणायां नास्यां च । वरणायां नास्या(नासाया)मिति वा पाठः [?] । चकारः समुच्चयार्थः । मध्येऽन्तः प्रतिष्ठितो भ्रुवोरन्तरित्यर्थः । इत्युत्तरसमाप्तौ । पृच्छति—× केन हेतुना वरणा वरणाशब्दवाच्या भवति । केन नासी भवतीति शेषः । इतिः प्रश्नसमाप्तौ । का वै वरणा का च नासीति वा पाठः । उत्तरमाह—सर्वान्निखिलान् । इन्द्रियपुरुषानिन्द्रियाण्येव पुरुषाः पुरि शयनात्तान् । इन्द्रियकृतान्दोषानिति वा पाठः = । वारयति । अतीन्द्रियं स्थूलमित्यर्थः । तेनोक्तेन हेतुना वरणा वरणाशब्दवाच्या भवति । सर्वानिन्द्रियकृतान् । सर्वानिन्द्रियकृतान्पापा-

* शंकरव्याख्यानुरोधेन त्वेन्द्रियपुरुषानिति पाठो द्रष्टव्यः । × मूले का वै वरणा का च नासीत्यत्र केन वरणा भवति केन नासीतिपाठानुसारेणेदम् । = आदर्शपुस्तकेषु त्वयमेवोपलभ्यते ।

१ ङ. °र्वाणीन्द्रि° । २ ङ. °तानि पापानि वार° । ३ ग. °यति । ४ क. ख. °वतीति ।

नाशयतीति तेन नासी भवतीति कतमच्चास्य स्थानं भवतीति भ्रुवो-घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भव-

ना० दी० येणाविमुक्तस्थानं पृच्छति—कतमच्चास्येति। पुनरुक्तादन्यदप्यविमुक्तस्य किं स्थानमिति प्रश्नः। इतरो विदिताभिप्राय आह—भ्रुवोर्घ्राणस्य चेति। भ्रुवोर्घ्राणस्य च यः संधिः कूर्चाख्यस्तदविमुक्तस्य स्थानमित्यर्थः।

तदुक्तम्—"इडा भगवती गङ्गा पिङ्गला यमुना नदी।
तयोर्मध्ये प्रयागं तु यस्तं वेद स वेदवित्"॥ इति।

नासाग्रं च प्रयागस्तेन ततः पूर्वभागे भ्रूमध्येऽविमुक्तमिति ज्ञेयम्। भ्रूघ्राणसंधेः संधित्वेन निमित्तान्तरमाह—स एष इति। द्यौर्लोकस्य द्युलोकस्य स्वर्गस्य च परस्य च यत्परो दिवो ज्योतिर्दीप्यते तस्य चैष एव संधिः। घ्राणमूलादर्वाग्द्युलोकस्तपोलोकान्तः। ललाटाच्चाऽऽरभ्य परः सत्यलोकः। अनेन शरीरेऽपि ब्रह्माण्डसंनिवेशोऽस्तीति सूचितम्।

तदुक्तं गरुडपुराणे—

"ब्रह्माण्डे ये गुणाः सन्ति शरीरे तेऽप्यवस्थिताः।
पातालं भूधरा लोकास्ततोऽन्ये द्वीपसागराः॥
आदित्याद्या ग्रहाः सर्वे पिण्डमध्ये व्यवस्थिताः।
पादाधस्त्वतलं प्रोक्तं पादोर्ध्वं वितलं स्मृतम्॥
जानुभ्यां सुतलं विद्धि वितलं सर्वबन्धने।
तथा तलातलं चोर्ध्वं गुह्यदेशे रसातलम्॥
पातालं कटिसंस्थं तु पादाद्यैर्लक्षयेद्बुधः।
भूर्लोकं नाभिमध्ये तु भुवर्लोकं तदूर्ध्वके॥
स्वर्लोकं हृदये विद्यात्कण्ठदेशे महस्तथा।
जनलोकं चक्रदेशे तपोलोकं ललाटतः॥
सत्यलोकं महारन्ध्रे भुवनानि चतुर्दश।
त्रिकोणे संस्थितो मेरुरधःकोणे च मन्दरः॥

शं० दी० निति वा पाठः। नाशयति तेन नासी भवति। शकारस्य सकारेण परिणामेन व्याख्यानम्। इत्युत्तरसमाप्तौ। वरणायां नास्यां च मध्ये प्रतिष्ठित इत्यनेन नासापुटयोरन्तरवस्थित इति सामान्यतः प्रतीयते तथाऽपि चतुरङ्गुलेऽस्मिन्देशे कतमच्च कतमदेव। कतमच्चास्येति वा पाठः। अस्याविमुक्तस्य स्थानं ध्यानस्थलं भवति। इतिः प्रश्नसमाप्तौ। उत्तरमाह—भ्रुवोर्घ्राणस्य च। घ्राणस्यापि। चकारस्त्रयाणां समुच्चयार्थः। यः प्रसिद्धः। संधिर्भ्रुवोर्घ्राणस्य मध्यवर्तिदेशः शास्त्रैकगम्योऽतिशयः। स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति। मस्तककपालरूपस्य स्वर्गलोकस्य

१ क. ख. वतीति।

तीत्येतद्वै संधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति

**ना० दी०** दक्षिणे चैव कैलासो वामे कोणे हिमाचलः ।
निषधश्चोर्ध्वभागे तु दक्षिणे गन्धमादनः ॥
रमणो वामरेखायां सप्तैते कुलपर्वताः ।
अस्थिस्थानस्थितं जम्बुशाकं मज्जासु संस्थितम् ॥
त्वचायां शाल्मलिद्वीपं प्लक्षं केशे प्रतिष्ठितम् ।
नखस्थं पुष्करं द्वीपं गोमेदं रोमसंचये ॥
क्षारोदं च तथा मूत्रे क्षीरे क्षीरोदसागरम् ।
क्षारोदधिं श्लेष्मसंस्थं मज्जायां घृतसागरम् ॥
रसोदधिं रसे विद्याच्छोणिते दधिसागरम् ।
स्वादूदं लम्बिकास्थाने गर्भोदं शुक्रसंस्थितम् ॥
नादचक्रे स्थितः सूर्यो बिन्दुचक्रे च चन्द्रमाः ।
लोचनाभ्यां कुजो ज्ञेयो हृदये च बुधः स्मृतः ॥
कण्ठदेशे गुरुं विद्याच्छुक्रः शुक्रे व्यवस्थितः ।
नाभिस्थाने स्थितो मन्दो मुखे राहुः स्थितः सदा ॥
पायुस्थाने स्थितः केतुः शरीरे ग्रहमण्डलम् ।
विभक्तं च समाख्यातमापादतलमस्तकम् " ॥ इति ।

तेन भ्रूघ्राणमध्यं द्युलोकपरलोकयोः संधिः । ननु संध्यादिकर्महीनस्य योगिनः कथं ब्राह्मण्यमत आह—एतद्वै संधिं संध्यामिति । एतदिति क्रियाविशेषणम् । संधिं संध्येयामिति तदुपासनां कुर्वन्ति तत्रत्यपरमज्योतिर्ध्यानमेव ब्रह्मविदां संध्यादिफलदमित्यर्थः । सर्वस्य कर्मफलसुखस्य ब्रह्मसुखेऽन्तर्भावात् ।

**तदुक्तं गीतायाम्—**

"यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः" ॥ इति ।

उपसंहरति—**स इति** । स आत्माऽविमुक्ते वाराणस्यां स्थित्वाऽविमुक्ते भ्रूमध्य उपास्यो ध्येय इत्यावृत्त्या योज्यम् । इतिरुपदेशसमाप्तौ । उपासनज्ञानफलमाह—

**शं०दी०** परस्य च चिबुकावसानस्य च भूर्लोकस्यापि । चकारो लोकद्वयसमुच्चयार्थः । **एतद्वै संधिमेतदेवाविमुक्तं** सर्वं संधीयतेऽस्मिन्निति संधिर्ब्रह्मस्वभावस्तं संधिं पूर्वोक्तभ्रुवोर्घ्राणस्य च संधौ । **संध्यामिति** सप्तमी । **ब्रह्मविदो** ब्रह्मज्ञानकुशला **उपासते** साक्षात्कुर्वत इति यस्मात्तस्मादिति शेषः । **सोऽविमुक्त उपास्य इति** पुनरभिधानं तन्निगम-

सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेतदेवं[1] वेद ॥ इति द्वितीयः खण्डः ॥ २ ॥

अथ हैनं ब्रह्मचारिण ऊचुः किं[2] जाप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतानि[3] ह वा अमृतनामधेयान्ये-

---

ना० दी० सोऽविमुक्तमिति । यो वा यश्चैतदात्मोपासनमेव सोऽविमुक्ताधिकरणकं वेद जानाति सोऽविमुक्तं नित्यसंबद्धं ज्ञानमात्माख्यमाचष्टे व्याचष्टे शिष्येभ्य उपदेष्टुं क्षमो भवति ॥ इति द्वितीयः खण्डः ॥ २ ॥

अव्यक्तानन्तमात्मानं ज्ञातुं चिन्तयितुं चाशक्ताः प्रथमाधिकारिणः सरलोपायं पृच्छन्ति स्मेत्याह—अथ हैनं ब्रह्मचारिण इति । ऊचुः पप्रच्छुः । किं जाप्येन केन जपनीयेनामृतत्वं मोक्षम् । सत्त्वशुद्धिद्वारा गच्छतीति तज्जाप्यं वदेति शेषः । ब्रूहीति पाठे स्पष्टम् । यथाधिकारमुत्तरयति—शतरुद्रियेणेति ।

"षट्षष्टिर्नीलसूक्तं च षोडशर्चैस्तथैव च ॥
एष ते द्वे नमस्ते द्वे नतं वि द्वयमेव च ।
मीढुष्टमं चतुष्कं च एतद्धि शतरुद्रियम्" ॥

नमस्त इत्यादिषट्षष्टिः । नीलसूक्तं वयं सोमेत्यष्टौ । षोडशर्चं ॐ नमस्त इत्यादेरेवाऽऽवृत्त्या ततो द्विकत्रयं ततश्चतुष्कमिति शतमृचो रुद्रजाप्यं यजुर्विदाम् । "रुद्रजापी दहेत्पापम्" इति स्मृतेर्ज्ञानं सत्त्वशुद्धिं प्राप्यामृता भवन्तीत्यर्थः । द्रोणपर्व पठतां वा स्तोत्रम् । परमहंसानां तु कैवल्योपनिषदाम्नातमेव शतरुद्रियमुचितम् । तत्र हेतुमाह—एतानि ह वा इति । अमृतस्य ब्रह्मणः । एतैर्जप्तैः । इतिर्वाक्यसमाप्तौ । एव-

---

शं० दी० नार्थम् । इतिर्वाक्यसमाप्त्यर्थः । फलमाह-सोऽविमुक्तोऽविमुक्तमविमुक्तसंबन्धि ज्ञानं वस्तुसाक्षात्कारकरणमाचष्टेऽन्तकाले ददातीत्यर्थः । यो वै य एव तन्निर्गुणात्मस्वरूपमेतदविमुक्तं स्वरूपमेव न ततो भिन्नमेवमुक्तस्थानादिसहितं वेद जानीयादित्यर्थः ॥ इति द्वितीयः खण्डः ॥ २ ॥

अथ हैनं ब्रह्मचारिणोऽविमुक्ते मनो धारयितुमशक्ताः शिष्या ऊचुः । किं केन जप्येनामृतत्वं मोक्षम् । ब्रूहि येन जप्येन मोक्षो भवति तं जपं कथयेत्यर्थः । इति स होवाच याज्ञवल्क्यः । शतरुद्रियेण नमस्ते रुद्र मन्यव इत्यध्यायेन । इति श्रुतिराह । एतानि रुद्राध्यायोक्तानि । ह वा अमृतनामधेयानि, अमृतस्य मोक्षरूपस्य

---

१ क. ख. घ. °देवं । २ ग. ङ. किं जप्ये° । ३ ग. ङ. रुद्रीये° ।

तेर्ह वा अमृतो भवतीत्येवमेवैतद्याज्ञवल्क्यः[1] ॥ इति तृतीयः खण्डः ॥ ३ ॥

अथ ह जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन्संन्यासमनुब्रूहीति[2] स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेद्गृही[3] भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजे-

ना०दी० मेवैतद्याज्ञवल्क्येति ब्रह्मचारिणामङ्गीकारवाक्यम् । याज्ञवल्क्य इति पाठे याज्ञवल्क्य इति यदाहैवमेवैतदिति श्रुतेर्वचः ॥ इति तृतीयः खण्डः ॥ ३ ॥

ननु संन्यासिनामेवाविमुक्तोपासनद्वारा यदि मुक्तिस्तर्ह्याश्रमान्तरपरिग्रहं न कोऽपि कुर्यादित्याशङ्क्य जनकः पृच्छति—अथ हेति । पितृव्यावृत्त्यर्थं वैदेह इति विशेषणम् । उपसमेत्य समीपमागत्येति विनयप्रदर्शनार्थम् । असत्यपि संन्यासे भवतः सिद्धिप्रदर्शनार्थं भगवन्निति संबोधनम् । संन्यासं संन्यासाधिकारं तद्विधिं च । इतरो विदिताभिप्रायः क्रमेणोत्तरयन्नादौ क्रमसंन्यासमाह—स होवाचेति । ब्रह्मचर्यं समाप्येति । अन्यथाऽनधीतवेदस्य कर्मण्यनधिकारात् । गृही भूत्वेति । अन्यथा संतत्यभावे पित्र्यर्णानपाकरणात् । वनी भूत्वेति । तपसा हन्ति किल्बिषमिति सकिल्बिषस्यानधिकारात् ।

शं०दी० रुद्रस्य नामानि । एतै रुद्रनामधेयैर्नित्यं जपितैः । ह वै प्रसिद्धैरेव । अमृतो भवति मोक्षभाग्भवति । इतिः खण्डसमाप्तौ ॥ इति तृतीयः खण्डः ॥ ३ ॥

अथ ब्रह्मचारिप्रश्नानन्तरं ह प्रसिद्धो जनको नामतः । ह प्रसिद्धः । वैदेहो विदेहदेशाधिपतिः । याज्ञवल्क्यमुपसमेत्योप समीपे समागत्योवाच । भगवन्षड्गुणैश्वर्यसंपन्न । संन्यासमनुब्रूहीति । अवसरमनु केन कथं कदा करणीय इत्यर्थः । स होवाच याज्ञवल्क्यः । इदानीमविरक्तस्य कालप्राप्तं संन्यासं वक्तुमाश्रमव्यवस्थामाह—ब्रह्मचर्यं विरक्तिशून्यः समाप्य स्नातकः प्रथमाश्रमविरक्तो भवेदिति शेषः । तत्र चेत्प्रीतिः संकल्पपुरःसरं तत्रैवावतिष्ठेत तत्र प्रीतेरभावेऽष्टवर्षानन्तरं द्विजातीनां संस्काररूपं वेदग्रहणाङ्गमेकं द्वौ त्रींश्चतुरो वेदानेकां स्वशाखां षडङ्गयुक्तां वा यथाशास्त्रं गुरुशुश्रूषापुरःसरमधीत्य समावर्तनकर्मणा समाप्य प्राप्तयौवनकालो गृही दारपरिग्रहलक्षणं श्रौतस्मार्तयोरन्यतरेण निषेवितसर्वकर्मसंपादकं त्रिवर्गकारणं कंचित्कालं गार्हस्थ्यं गृहमस्यास्तीति गृही भवेत् । गृह इच्छाभावे गृहाद्वनी कन्दमूलफलाद्याहारेण साग्निहोत्रो निरग्निहोत्रो वा वनं निवासस्थानमस्यास्तीति वनी भवेदित्यनुषङ्गः । भूत्वा वनस्थाश्रमं स्वीकृत्यात्रापीच्छाया अभावे प्रव्रजेच्चतुर्थाश्रमं गच्छेत् । अत्र चतुर्ष्वाश्रमेष्वनुक्रमोऽयमाश्रमान्तरं गन्तुमिच्छाया अभाव एकैकं यावज्जीवं संकल्पपुरःसरं गन्तुमिच्छेत् । संन्यासमन्तरेणानुक्रमोऽपि नियतः । प्रातिलोम्यं

१ ग. ङ. तीति । अ° । २ ख. घ. °न्यासं ब्रू° । ३ ग. ङ. °द्गृहाद्वनी भूत्वा प्र° ।

**यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाऽथ पुनरव्रती वा व्रती वा**

**ना०दी०** अत एव स्मृतिः—

"ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्" ॥ इति ।

तथा—"अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या तु यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा" ॥ इति ।
"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते" ॥

इति स्मृतेराश्रमान्तरस्यापि ज्ञानसाधनत्वाज्ज्ञानिनोऽपि याज्ञवल्क्यादेः क्रमसंन्यासो न विरुद्ध इति भावः । ननु तृतीयखण्डे ब्रह्मचारिभिरात्मज्ञानोपायः पृष्टो ब्रह्मचारिणां च विवाहादिकर्मव्यग्राणां कथमात्मज्ञानावसर इत्याशङ्क्य वैराग्यपाटवे क्रमातिक्रमेणापि संन्याससंभवाज्ज्ञानप्रश्नोपपत्तिरित्याशयेनाऽऽह—**यदि वेति** । यदि वेत्यनियम इतरथा गार्हस्थ्याद्यनङ्गीकृत्य व्युत्क्रमप्रकारेणापि परमाविरक्तस्य कर्मणि प्रवृत्त्यनुपपत्तेरर्थात्संन्याससिद्धिरिति भावः । **गृहाद्वनाद्वेति** । वाशब्दः प्रत्येकमभिसंबध्यते । वनात्तृतीयाश्रमात् । एतज्जन्मावच्छिन्नमेव व्रतादि न संन्यासाङ्गमित्याह—**अथ पुनरिति** । अव्रत्यचीर्णाध्ययनाङ्गव्रतः । स्नातकः कृतविद्याव्रतान्तस्नानः । उत्स-

**शं०दी०**तु चतुर्ष्वपि न कदाचिदपि । इदानीं सति वैराग्ये संन्यासे विशेषमाह—**यदि वा** पक्षान्तरे विकल्प **इतरथा** वैराग्यसंपन्नः संसारस्पृहातः प्रकारान्तरात् । अधीतस्वशाखावेदान्तः सर्ववेदान्ताध्यायी वा **ब्रह्मचर्यादेव** प्रथमाश्रमादेव स्वल्पकालं चीर्णाज्ज्ञानकाले वाऽसति यावज्जीवं तदाश्रमसंकल्प उत्तराश्रमं वाऽस्वीकृत्यापि **प्रव्रजेत्**पारमहंस्याश्रमं गच्छेत् । यद्यपि प्रव्रजेदिति श्रुतिः साधारणी कुटीचकादीनामपि तथाऽपीतरथाशब्देन वैराग्यसंपत्तेरभिधानाद्वैराग्यस्य साकल्ये सति संकोचस्यायुक्तत्वात्पारमहंस्यमेव युक्तग्रहम् । ब्रह्मचर्यादिति ब्रह्मचर्यावधिश्रवणादनुपनीतस्यानधिकारः सूचितः । यद्यपि जन्मान्तराधीतवेदत्वेन चेह तदर्थस्मरणादुपनयने नोपयोगस्तथाऽपि न तत्र वैधेन पारमहंस्येनाप्युपयोगः स्वतःसिद्धत्वात्तस्य । **गृहाद्वा** कृतत्रिवर्गादकृतत्रिवर्गाद्वाऽकृतगृहस्थाश्रमयावज्जीवसंकल्पः । **वनाद्वा**ऽचीर्णसमग्रवनस्थधर्माद्वा यावज्जीवं तदाश्रमसंकल्पाभावे । वाशब्दो द्वयोरेकस्य चोत्तराश्रमस्याग्रहणेऽपि वैराग्ये सति त्रिष्वप्याश्रमेषु प्रव्रज्याधिकारसमुच्चयार्थः । ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा प्रव्रजेद्वनादेव वा प्रव्रजेदित्यन्वयः । **अथ** प्रकृतेभ्यो ब्रह्मचारिगृहस्थवानप्रस्थाश्रमिभ्योऽर्थान्तरभूतः **पुनः** पश्चादुत्पन्नवैराग्यः । **अव्रती वा व्रती वा** । व्रतमस्यास्तीति व्रती न व्रत्यव्रत्यव्रतवान् । अस्य वनस्थस्य जपविमोक्षानन्तरं वनस्थाश्रमसमाप्त्यभिषेके प्राप्ते कुतश्चिन्निमित्तात्संन्यासाश्रमप्रवेशे यावदवस्थानं तद्द्वेधा

**स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यद-
हरेव विरजेत्तदहरेव प्रव्रजेत्तद्धैके प्राजापत्यामेवेष्टिं
कुर्वन्ति तदु तथा न कुर्यादाग्नेयीमेव कुर्यादग्निर्हि वै**

---

**ना॰दी॰** न्नाग्निर्मृतदारः । अनग्निकोऽगृहीताग्निकः । यदहरेवेत्येवकारोऽविलम्बार्थः । "हेतुहेतुमतोर्लिङ्" इति लिङ् । संन्यासविधिमाह—**तद्धैक** इति ।

तदुक्तं **याज्ञवल्क्येन—**

"वनाद्गृहाद्वा कृत्वेष्टिं सर्वस्वं वेददक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि" ॥ इति ।

मोक्षे मनः कुर्यादित्यपेक्षते । दूषयति—**तदु तथा न कुर्यादिति** । तर्हि कां कुर्यादत आह—**आग्नेयीमेव कुर्यादिति** । प्रजापतय इत्यपहायाग्नये त्वा जुष्टं निर्वपामीति प्रयोगः । आग्नेयीष्टिकरणे हेतुरग्निर्हि वै प्राण इति । प्रजापतिस्तु मनः । प्राणमनसोश्च प्राण एव बलीयान् । सुहयदृष्टान्तेन **च्छान्दोग्ये**

---

**शं॰दी॰** भवति मासोपवासजपादिव्रतत्वेन तद्विधुरत्वेन वा तेन भेदेन भिन्नौ व्रत्यव्रतीतिशब्दाभ्यामुच्येते । वाशब्दौ वैराग्ये सति प्रव्रजेदित्यनुषङ्गार्थावुभयत्र । ब्रह्मचारिणो वेदानामध्ययनेऽवस्थानं स्वशाखामात्रस्य सकृत्पाठोऽपि तावेतौ कुतश्चिन्निमित्तादकृतदारपरिग्रहौ स्नातकास्नातकशब्दाभ्यामुच्येते । **स्नातको वा** वेदान्साङ्गान्सर्वानधीत्य स्नातः स्नातकः स्वशाखामात्रपाठेन स्नातोऽ**स्नातको वा** मुख्यस्नातकत्वाभावात् । वाशब्दौ प्रव्रजेदित्युभयत्रानुषङ्गार्थौ । गृहस्थोऽपि द्वेधाऽऽश्रमी भवति । एकः स्वीकृताग्निः कलत्रमरणान्निनिमित्तान्तराद्वोत्सन्नाग्निः । अपरस्तु कस्माच्चिन्निमित्तात्सत्स्वपि दारेष्वपरिगृहीताग्निस्तावेतावुत्सन्नाग्न्यनग्निकशब्दाभ्यामुच्येते । उत्सन्ना विच्छिन्ना अग्नयो यस्य स **उत्सन्नाग्निः** । अगृहीता अग्नयो येन सोऽ**नग्निकः** । अत्रैक एव **वाकार** उभयत्र प्रव्रजेदित्यनुषङ्गार्थः । एवं पुरुषेष्वाश्रमिष्वनाश्रमिषु च पारमहंसस्यानियतिमुक्त्वा कालकृताऽपि नात्र नियतिरित्याह—**यदहरेव** यस्मिन्नेवाहनि **विरजेद्**वैराग्यं प्राप्नुया**त्तदहरेव** तस्मिन्नेवाहनि **प्रव्रजेत्** । साग्निकस्य संन्यास इष्टिविशेषमाह—**तत्त्र** ह किल । **एके** केचनाऽऽचार्याः **प्राजापत्यामेव** प्रजापतिदेवताकां न त्वन्यामि**ष्टिं** याज्ञिकप्रसिद्धां **कुर्वन्ति** । निर्वपन्तीति वा पाठः । **तदु** तेषामुक्तमपि विरक्तः । **तथा** प्राजापत्यानुष्ठानप्रकारं तद्वचनं **न कुर्यात्** । कर्तव्यां तामाह—**आग्नेयीमेवा**ग्निदेवताकामेव न त्वन्यामिष्टिं कुर्यात् । तत्रोपपत्तिमाह—**अग्निः** प्रसिद्धः साधनात्मा । **हि** यस्मा**त्प्राणः**

---

१ ङ 'ग्निर्हि प्रा°' ।

प्राणः । प्राणमेवैतया करोति[1] पश्चात्त्रैधातवीयामेव कुर्यादेतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इत्ययं ते योनिर्ऋत्वियो

---

**ना०दी०** तथोपपादनात् । आग्नेय्येष्टेः सामर्थ्यमाह—**प्राणमेवैतया करोतीति** । यत्र प्राणस्तत्र मनो यत्र मनस्तत्र सर्वेन्द्रियाणि यत्रेन्द्रियाणि तत्र विषया इत्याग्नेय्या सर्वं सिध्यति । ततोऽप्यधिकवीर्यामाह—**त्रैधातवीयामेव कुर्यादिति** । त्रयाणां वेदानां धातवो रसा गर्भाशय इव शेरतेऽस्यां सा त्रैधातवीयेष्टिस्तस्यां ह्यैन्द्राग्नं द्वादशकपालः पुरोडाशो हविः । तच्च तण्डुलपिष्टवेष्टितयवपिष्टरूपम् । सर्वस्वदानादस्याः संन्यासेऽधिकारः । तदुक्तं **शतपथब्राह्मणे**—" यो वै सहस्रं भूयो वा दद्यात्स एतया यजेत " इति । तस्याः सामर्थ्यमाह—**एतयैव त्रयो धातव इति** । वर्धन्त इति शेषः । के त इत्यपेक्षायां तदुपाधीन्निष्कृष्य दर्शयति—**यदु सत्त्वं रजस्तम इतीति** । त्रिविधा अपि त्रैविद्यरसा अनया वर्धन्त इत्यर्थः । तिसृणामिष्टीनां यथोत्तरमधिकाधिकवीर्यत्वं द्रष्टव्यम् । आघ्राणेनाग्नेरात्मनि समारोपलक्षणप्रतिपत्त्यर्थमग्न्याघ्राणमन्त्रमाह—**अयं ते योनिरिति** । अयं प्राणस्ते तवाग्नेर्योनिरुत्पत्तिस्थानम् । वायोरग्निरिति श्रुतेरनुभवाच्च । ऋत्विय ऋतुर्गर्भाधानसमयः प्राप्तोऽस्येति घसन्तः " समयस्तदस्य प्राप्तम् " इत्याधिकृत्य " ऋतोरण् " " छन्दसि घस् " । अग्नेः प्राणयोनित्वे प्रमाणमाह—**यत इति** । जातः सन्यतः प्राणादरोचथाः । रुच दीप्तौ । दीप्तिमापद्यते पितुः संयोगेनेव पुत्रस्तेन ते प्राणयोनित्वमिति गम्यते । तं प्राणं स्वयोनिं जानन्नग्न आरोह मत्प्राणारूढो भव मत्प्राणमाविशेत्यर्थः । अथ प्राणमाविष्टः सन्नोऽ-

---

**शं०दी०** सूत्रात्मा परमात्मा वा स्वरूपं नयतीत्यर्थः । अग्नेर्देवानां प्रथमस्य परमात्मत्वमुक्तम् "अग्निरग्रे प्रथमो देवतानां समानो वा चोत्तमो विष्णुरासीत्" इति । सुगमार्थः । " अग्निमेव देवतानां प्रथममसृजत " इति " अग्निः प्रथमो वसुभिर्नो अव्यात् " इति च । तादृशस्यान्यस्यापीश्वररूपत्वादित्यर्थः । तस्मात्**प्राणमेवो**क्तरूपमे**वैतया**ऽऽग्नेय्येष्ट्या **करोति** । **पश्चा**दनन्तरं **त्रैधातवीयामेव** यः कामयेतान्नादः स्यामिति तस्मा एतं त्रिधातुं निर्वपेदिति राजाधिराजराजसगुणयुक्तेन्द्रदेवताकामेवेष्टिं **कुर्यात्** । तत्रोपपत्तिमाह—**एतयैव** त्रैधातवीययैव । **त्रयो धातव**स्त्रिसंख्याका धातुशब्दवाच्या धातवो दृप्ता भवन्तीति शेषः । तानाह—**यदुत** यदेवाऽऽग्नेयं रूपत्रयं **सत्त्वं** शुक्लं रूपं **रजो** लोहितं रूपं **तमः** कृष्णं रूपमिति । एवमिष्टिं यथाशास्त्रं कृत्वाऽग्नेराघ्राणमनेन मन्त्रेण कुर्यादित्याह—**अयं प्राणस्ते** तव **योनिः** कारणम् । **ऋत्विय** ऋतुसंबन्ध्यृत्विक्संबन्ध्यृ-

---

१ क ख. घ. °ति त्रेधा ।

यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिमित्यनेन मन्त्रेणाग्निमाजिघ्रेदेष वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहेत्येवमेवैतदाह ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेद्यद्यग्निं न विन्देदप्सु जुहुयादापो वै सर्वा देवताः । ॐ सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वा

**ना० दि०** स्माकं कुले रयिं धनमैश्वर्यं वर्धय पोषयेति । पुत्रादिश्रेयःप्रार्थनामन्त्रं व्याचष्टे—**एष वा इति**। तृतीयं पादं व्याचष्टे —**प्राणं गच्छेति** । एतन्मन्त्ररूपमग्निं प्रति प्राणं गच्छ स्वाहेत्येवमेवाऽऽह प्रतिपादयति । यद्यनग्निकः स्यात्तदेष्ट्यनधिकारात्किं कार्यमत आह—**ग्रामादिति** । पूर्ववदयं त इति मन्त्रेण । अत्रापि संन्यासोपनिषदुक्तो होमविधिर्द्रष्टव्यः । प्राणापानेत्यादिर्वा विरजाहोमश्च । ननु महावनादौ यदि संन्यासिसिषा स्यात्तदा यदहरेवेति नियमविधानात्तत्कालं चाग्न्यलाभात्किं कार्यमत आह—**यद्यग्निं न विन्देदिति । आपो वा इति** । आपो वा इदमग्र आसन्निति श्रुतेरपां सर्वदेवताकारणत्वात्कार्यस्य च कारणानतिरेकादाप एव सर्वदेवताः । अयं मन्त्रः सर्वाभ्य इति । हविःशेषस्य प्रतिपत्तिमाह—**हुत्वेति** । उपोद्धृत्य पात्राद्गृहीत्वा

**शं० दी०** त्तुभिः परिकल्पितो वा । **यतो** यस्माज्जात उत्पन्नोऽरोचथा दीप्तिं कृतवानसि । **तमा**त्मजनकं **जानन्न**वगच्छन् । हेऽग्ने **आरोहा**स्मिन्नारोहणं कुरु प्राणमात्रो भवेत्यर्थः । **अथा**नन्तरम् । संहितापाठनिमित्तो दीर्घः । **नो**ऽस्माकं **वर्धय** वृद्धिं नय । **रयिं** सुवर्णं सम्यगर्थबोधादिकमित्यर्थः । इतिर्मन्त्रसमाप्तौ । गिर इति पाठे वाचो वर्धयेति । अत्र पूर्ववद्दीर्घः । **अनेन मन्त्रेणाग्निमाजिघ्रेत्** । उक्तमन्त्रार्थे श्रुतिः स्वयमेवाऽऽह—**एष वै**। एष एवाग्ने**र्योनिर्यः प्राणः प्राणं गच्छ स्वाहेति** । सा त्वदीया वागहमिति वागाह यस्मात्तस्मात्स्वाहा । तदुक्तं **तैत्तिरीयके**ऽग्निहोत्रब्राह्मणे—" तं वागभ्यवदज्जुहुधीति सोऽब्रवीत्कस्त्वमसीति । स्वैव ते वागित्यब्रवीत् । सोऽजुहोत्स्वाहेति तत्स्वाहाकारस्य जन्म । य एवं स्वाहाकारस्य जन्म वेद करोति स्वाहाकारेण वीर्यः । यस्यैवं विदुषः स्वाहाकारेण जुह्वति भोगायैवास्य हुतं भवति " इति । इतिर्व्याख्यासमाप्तौ । **एवमे**वेत्थमेव । **एत**दस्माभिर्व्याख्यातम् । **आह**ोक्तवान्मन्त्रः । इदानीं निराग्निकानां संन्यासविधिमाह—**ग्रामा**च्छ्रोत्रियागारादे**रग्निमाहृ**त्यान्वाधाय **पूर्ववदि**ष्टिव्यतिरेकेण विरजाहोमं पुरुषसूक्तादिना च यथाशास्त्रं हुत्वा पूर्णाहुत्यन्तेऽयं ते योनिरिति मन्त्रे संन्यासिनमध्वर्युणाऽग्निमाघ्रापयेदग्नेराघ्राणं कारयेत् । **यदि** पक्षान्तरे । **अग्निं न विन्दे**न्न लभेताप्सु **जुहुया**त्तडागोदकेषु जुहुयात् । तत्रोपपत्तिमाह—**आपो वै सर्वा देवताः** । तत्र विशेषमन्त्रमाह—पूर्णाहुतावुदकस्थले **सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा** । स्पष्टो मन्त्रः । इत्यनेन प्रकारेण **हुत्वा** हुतशेषं

समुद्धृत्य प्राश्नीयात्साज्यं हविरनामयं मोक्षमन्त्रस्त्रय्येवं[1] विन्देत्तद्ब्रह्मैतदुपासितव्यमेवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥ इति चतुर्थः खण्डः ॥ ४ ॥

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्य पृच्छामि त्वा याज्ञवल्क्यायज्ञोपवीती कथं ब्राह्मण इति स होवाच याज्ञवल्य इदमेवास्य तद्यज्ञोपवीतं य आत्मा

न०दी०प्राश्नीयाद्भुञ्जीत साज्यमाज्यसहितं हविश्चरुम्। संन्यासस्य फलमाह-**अनामयं मोक्षमन्त्र** इति। संन्यासो निष्प्रत्यूहं मोक्षोपाय इत्यर्थः। तत्र प्रमाणमाह--**त्रय्येवं वदेदिति**। वेदत्रय्येवं संन्यासो-नामयं मोक्षमन्त्र इत्येवं वदेद्वदतीत्यर्थः। वेदेति क्वचित्पाठः। **एतद्ब्रह्मेति**। एतत्संन्यासलक्षणवस्तु ब्रह्म ज्ञातव्यं ब्रह्मप्राप्तिहेतुत्वात्। एवं संन्यासानन्तरं ब्रह्मेति संन्यासिनां व्यवहरन्ति--**एतदुपासितव्यमिति**। मोक्षार्थिभिरेतत्संन्यासरूपमुपास्यमङ्गीकार्यम्। त्यागेनैके अमृतत्वमानशुरिति श्रुतेः। एवमेवैतादित्यादि पूर्ववत्॥ इति चतुर्थः खण्डः॥ ४॥

उपवीतत्यागे ब्राह्मण्यसंदेहप्रश्नपूर्वकं निराकरोति। **अथ हैनमत्रिरिति**। अयज्ञोपवीती त्यक्तयज्ञोपवीतः। इदमेवेत्युक्तं तत्किमित्यत आह--**य आत्मेति**। आत्मध्याने सर्वं धर्मफलमन्तर्भूतमित्यर्थः। तदुक्तं याज्ञवल्क्येन। "ध्यानमेव

शं०दी०**समुद्धृत्य प्राश्नीयात्**। **साज्यं हविरनामयं** हुतशेषत्वाद्रोगदोषशून्यम्। इदानीं जप्यमाह--**मोक्षमन्त्रो** मोक्षहेतुर्मन्त्रो मोक्षमन्त्रः। **त्रयी** प्रणवस्त्रयीरूपत्वात्तस्य। **एवं विन्देद्**वक्ष्यमाणप्रकारेण विद्यात्। **तद्ब्रह्म** सत्यज्ञानादिलक्षणं ब्रह्मैतदोंकाररूपमु**पासितव्यम्**। जनक आह--**एवमेवैत**त्त्वयोक्तं संन्यसनम्। एष इति पाठे संन्यासः। **भगवन्**पूजावन्। श्रुतिराह--**इति वै याज्ञवल्क्यः**। आहेति शेषः॥ इति चतुर्थः खण्डः॥ ४॥

**अथ हैनमत्रिः पप्रच्छ** पूर्वोक्तः प्राप्तावसरं जनकेन प्रष्टव्यं तदनुज्ञया पप्रच्छ **याज्ञवल्क्यं** हे **याज्ञवल्क्य त्वा पृच्छामि**। **अयज्ञोपवीती** स्नानाचमनक्रियाङ्गभूतं यज्ञोपवीतमस्यास्तीति यज्ञोपवीती लोके प्रसिद्धो ब्राह्मणोऽयं न यज्ञोपवीत्ययज्ञोपवीती **कथं** केन प्रकारेण **ब्राह्मणः**। इतिः प्रश्नसमाप्तौ। **स होवाच याज्ञवल्क्यः**। **इदमेव** स्वयंप्रकाशस्वरूपमेवास्य परमहंसस्य तत्सूत्रादिमयं **यज्ञोपवीतम्**। क्रियाशब्दप्रत्यययोग्यं प्रसिद्धम्। यज्ञस्य श्रौतस्य च स्मार्तस्य च विविधस्य तपोयोगस्वाध्यायज्ञानादेरुप सामीप्येन विशेषेण नित्यसंयोगेनेतं प्राप्तं यज्ञोपवीतम्। **यः** स्वयंप्रकाशसच्चिदानन्दत्वेन प्रसिद्धः। **आत्माऽस्मद्बुद्धेः** साक्षी।

१ क. ख. ग. घ. 'वं वदेदेतद्ब्र'।

प्राश्याऽऽचम्यायं विधिः[1] परिव्राजकानां वीराध्वाने वाऽनाशके वाऽ-

ना०दी०हि जन्तूनां कारणं बन्धमोक्षणे" इति । शङ्कां निवर्त्य प्राश्नीयादिति पूर्वोक्तमनुस्मरति—**प्राश्याऽऽचम्येति** । प्राशनमनूद्याऽऽचमने विधिः । आचम्याग्निमाप्रापयेदिति पूर्वेणान्वयः । अग्न्यभावे जलमेव । उपसंहरति—**अयं विधिः परिव्राजकानामिति** । एवं पारिव्राज्या कर्तव्येत्यर्थः । इमं विधिं पञ्चस्वातिदिशति—**वीराध्वाने वेत्यादि** । वाशब्दपञ्चकं समुच्चये । एतेष्वपि पञ्चसु यथाधिकारमयमेवेष्टयादिविधिः प्रोक्त **आदित्यपुराणे**—

" समायुक्तो भवेद्यस्तु पातकैर्महदादिभिः ।
दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः ॥
स्वीयदेहविनाशस्य काले प्राप्ते महामतिः ।
आ ब्रह्मणो वा स्वर्गादिमहाफलजिगीषया ॥
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ।
अगाधं तोयराशिं वा भृगोः पतनमेव वा ॥
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ।
प्रयागवटशाखाग्राद्देहत्यागं करोति वा ॥

शं०दी०प्राश्य व्याप्तं कृत्वा हस्ताभ्यां स्वभावतो वा व्याप्तमिदमभोजनमेवं वा बुद्धिस्थं कृत्वा । प्राश्येत्यादिना च संन्यासविधिः कथ्यते । ततः सकारस्य शकारोऽयं वा छान्दसः । ततः प्रैषोच्चारणानन्तरं ' समुद्रं गच्छ स्वाहा ' इत्यनेन मन्त्रेण सशिखस्य यज्ञोपवीतस्य यथाप्राप्तेषूदकेषु प्रक्षेपणं कृत्वाऽऽचम्यानन्तरं त्रिराचम्यायमेव **विधिः** रौपनिषदामुक्तो विधिः कर्तव्यताप्रकार आत्मा यज्ञोपवीतमित्यादिलक्षणः **परिव्राजकानां** परमहंसानाम् । क्षत्रियविशोः परमहंसलिङ्गधारणस्य **स्मृतौ** विरोधात्—

" मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानामयं धर्मो न विद्यते " ॥ इति ।

तद्विषयमिदं वक्ष्यमाणम् । अथवा कुतश्चिन्निमित्तादाश्रमभ्रष्टानामकृतप्रायश्चित्तानां शिष्टैरव्यवह्रियमाणानां वक्ष्यमाणप्रकारेण मरणम् । अथवाऽचिकित्स्यव्याध्यभिभूतानाम् । किंबहुना श्रवणाद्यसमर्थानामेवैतत् । **वीराणां** संग्रामेष्वनिवर्तिनां गोब्राह्मणबालस्त्र्याद्यर्थे कण्टकवृश्चिकसर्पसिंहव्याघ्राद्यभीतानामध्वानमध्वा तस्मिन्नध्वानेऽध्वनि तनुं त्यजेदिति पञ्चस्वपि शेषः । **अनाशके वा** न विद्यते यस्मिन्नशनं तदनाशकं

[1] ख. घ. 'धिः प्रव्राजिनां । २ ङ. °व्राजिनां ।

**पां प्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वाऽथ परिव्राड्विव-र्णवासा मुण्डोपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय**

**ना० दी०** "उत्तमान्प्राप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ।
महापापक्षयात्सद्यो दिव्यान्भोगान्समश्नुते ॥
एतेषामधिकारस्तु तपसां सर्वजन्तुषु ।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा" ॥ इति ।

वीराध्वानेऽग्निपुराणे फलमुक्तम्—
"यस्तु शास्त्रमनुसृत्य वीर्यवान्वाहिनीमुखे ।
संमुखे वर्तते शूरः स स्वर्गान्न निवर्तते ॥
वीरशय्या च वीराध्वा वीरस्थानस्थितिः स्थिरा" ॥ इति ।

अध्वानशब्दोऽध्वपर्यायः । अनाशके फलमुक्तं **भविष्योत्तरे**—
"समासहस्राणि तु सप्त वै जले दशैकमग्नौ पतने च षोडश ।
महाहवे षष्टिरशीतिगोग्रहे अनाशने भारत चाक्षया गतिः" ॥ इति ।

अनेनाप्प्रवेशोऽग्निप्रवेशो चापि फलमुक्तम् । महाप्रस्थाने **ब्रह्मपुराणो**क्तफलम्—
"महाप्रस्थानयात्रा तु कर्तव्या तुहिनोपरि ।
आसित्वसत्त्वधैर्यं च सद्यः स्वर्गप्रदा च सा" ॥ इति ।

आनुषङ्गिकमुक्त्वा प्रकृतपरिव्राजकधर्मानाह—**अथ परिव्राडिति** । विवर्णं गैरिकादिना त्यक्तस्वाभाविकवर्णं वासो यस्य स विवर्णवासाः । मुण्डो मुण्डितशिराः । अत्रामम इत्यपि क्वचित्पाठः । **अपरिग्रह** इति । स्त्रिया संन्यासिना सह न गन्तव्यमित्यर्थः । शुचिर्बाह्याभ्यतर-शौचवान् । अद्रोही भूतजिघांसारहितः । भैक्षाणो भैक्षेणानिति प्राणिति जीवति भैक्षाणः । यद्वा शानजन्तः । अनित्यमागमशासनमिति कामयानशब्दवन्मुगभावः । स्वार्थिकोऽण् । ब्रह्मभूयाय ब्रह्मभावाय भवति संपद्यते । नानेनानशनबलाद्देहस्त्याज्यः । आतुरसंन्या-

**शं० दी०** तस्मिन्नशनोदकपरित्यागेनेत्यर्थः । यदा तु कामानशनं तदादिकृतविषयमिदम् । इतोऽपकृष्टानां गङ्गाप्रयागादावपां **प्रवेशे वा** जाज्वल्यमानेऽग्नौ **प्रवेशे वा महाप्रस्थाने वा** महदावृत्तिशून्यं प्रस्थानं सर्पवृश्चिकसिंहव्याघ्रविषमभूम्याद्यपरिहारेण गमनं यावच्छ-रीरपातं तन्महाप्रस्थानं तस्मिन् । वाशब्दपञ्चकं मरणप्रकारपञ्चकेच्छाया विकल्पार्थम् । **अथ** पूर्वस्मादनधिकृतादर्थान्तरभूतोऽधिकारी परमहंसः **परिव्राड्विवर्णवासाः** काषा-यवासा **मुण्डो**ऽशिखः केशरहितो न विद्यते कन्थाकौपीनाच्छवस्त्रव्यतिरिक्तः परिग्रहो यस्य सो**ऽपरिग्रहः शुचि**र्मृत्स्नाजलादिना मनःशुद्ध्या च शुचिः । **अद्रोही** कर्मणा मनसा वाचा च भूतेभ्यो द्रोहोऽस्तीति द्रोही न द्रोह्यद्रोही **भैक्षाणः** प्राणसंधारणार्थं यथाशास्त्रं माधुकरादिभिक्षां कुर्वाणो भैक्षाणः । **ब्रह्मभूयाय** ब्रह्मसाक्षात्कारेण ब्रह्मत्वाय

भवति यद्यातुरः स्यान्मनसा वाचा वा संन्यसेदेष पन्था ब्रह्मणा हानुवित्तस्तेनैति संन्यासी ब्रह्म विदित्येवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥

इति पञ्चम खण्डः ॥ ५ ॥

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽ-

---

ना०दी०समाह यदीति । वाङ्मनसयोरेव सामर्थ्याद्दैहिकसामर्थ्याभावात् । संन्यासमार्गस्य कल्पितत्वशङ्कां निराकरोति—**एष पन्था इति** । ब्रह्मणा विरिञ्चिना । ह प्रसिद्धौ । अनुवित्तो बोधितः । तेन मार्गेणैति प्राप्नोति । संन्यासी ब्रह्म सच्चिदानन्दाख्यम् । कथं भूतः । वित् । तत्त्ववेत्ता । इतिरुपदेशसमाप्तौ । एवमेवैषोऽर्थो याज्ञवल्क्येत्यत्रेरङ्गीकारवाक्यम् । विसर्गपाठ एवमेवैषोऽर्थ इत्यत्रिणा याज्ञवल्क्य उक्त इति श्रुतेर्वचः ॥ इति पञ्चमः खण्डः ॥ ५ ॥

परमहंससंन्यास एव नास्तीति विप्रतिपन्नं प्रति तत्संप्रदायं दर्शयति—**तत्रेति** । संवर्तकादयोऽष्टौ **पुराण**प्रसिद्धाः । अरुणस्यापत्यं श्वेतकेतुः । ऋभुः परमेष्ठिसुतः ।

---

**शं०दी०भवति** संपद्यते । **यद्यातुरः स्याद्**व्याध्यादिना चोरादिनाऽभिभूतः स्यात्संन्यासाश्रमं कर्तुमशक्तश्चेद्यदि वक्तुं शक्तस्तदा समनस्कया **वाचा** । यदि वक्तुमशक्तश्चेत्तदा **मनसैव** । वाकारः स्वशक्त्या व्यवस्थितविकल्पविषयः । **संन्यसेत्**प्रैषमुच्चारयेत्संकल्पयेद्वा **एष** संन्यासलक्षणः **पन्था** मार्गो ब्रह्मज्ञानप्राप्तिहेतुर्ब्रह्माधिकारिणा **ब्रह्मणा हानुवित्तः** प्रसिद्धो वेदे वाऽनुज्ञातो लब्धो वा **तेन** पथा । **एति** गच्छति । **संन्यासी** लोकपुत्रवित्तैषणाविनिर्मुक्तः सर्वसङ्गपरित्यागी परमहंसो **ब्रह्मविद्**ब्रह्मसाक्षात्कारवान्भवति। संन्यासेन ब्रह्मज्ञानं तस्माद्विदेहकैवल्यमित्यर्थः । इति, आत्रिराह । **एवमेवैष भगवान्** श्रुतिराह—**इति वै याज्ञवल्क्यः** ॥ इति पञ्चमः खण्डः ॥ ५ ॥

इदानीं याज्ञवल्क्यः श्रोतॄणां श्रद्धामुत्पादयितुं तेषामभिप्रायज्ञोऽपृष्टोऽपि परमहंसाश्रमस्य महत्तरैरनुष्ठितत्वमाह—**तत्र** परिव्राजकाः **परमहंसा**स्तुरीयाश्रमाचारानुष्ठायिनो **नाम** प्रसिद्धा वक्ष्यमाणाः । **संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयः** । संवर्तोऽङ्गिरवतारः कः प्रजापतिः । आरुणिरौद्दालकः । श्वेतकेतुः षष्ठेऽध्याये छन्दोगानां प्रसिद्धस्तत्त्वमसि श्वेतकेतो इति । दुर्वासाः शंकरांशोऽत्रिपुत्रः सोऽपि कालाग्निरुद्रः सर्वत्र प्रसिद्धः । ऋभुर्ब्रह्मणः पुत्रः । निदाघ ऋभोः शिष्यः । ऋभुनिदाघौ **विष्णुपुराणे** प्रसिद्धौ । भरतो राजा ऋषभपुत्रः । **यन्नाम्नेदं**

---

१ क. ग. °ति या° । २ ख. °णिश्वे° ।

**व्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रि-
दण्डं कमण्डलुं पात्रं शिक्यं जलपवित्रं शिखां यज्ञोपवीतं
चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेद्यथा-**

---

**ना०दी०** निदाघः पुलस्त्यपुत्रो देविकातीरवास्यृभुशिष्यः । एतौ **विष्णुपुराणे** द्वितीयांशस्यान्त उक्तौ । प्रभृतिग्रहणादैतरेयकवृषभदेवादयः । अव्यक्तानि लिङ्गान्युपवीतादीनि येषां तेऽव्यक्तलिङ्गाः । अव्यक्त आश्रमविरुद्ध आचारो येषां तेऽव्यक्ताचाराः । तदेवाऽऽह— **उन्मत्तवदिति** । यथा दत्तात्रेयस्य मदिरास्त्रीनिषेवणादि । त्रिदण्डी यदा परमहंसपदवीमधितिष्ठति तदा दण्डादीनां का प्रतिपत्तिरत आह—**त्रिदण्डमिति** ।

---

**शं०दी०** भारतं वर्षमभवत् । विष्णोरंशो दत्तात्रिः स एवात्रेरपत्यं दत्तात्रेयो योगीश्वरः । रैवतकः प्रसिद्धः । क्वचित्पुराणे रेवत्याः पुत्रो रैवतकस्तस्य क्षत्रियत्वादत्र ग्रहणमयुक्तम् । ब्राह्मणप्रायपाठस्य विद्यमानत्वात् । प्रभृतिशब्देन सौभर्यादयः । संवर्तादयः श्रुत्या द्वंद्वसमासेन पठिता बुद्धिसौकर्यार्थमस्माभिर्विच्छिद्य व्याख्याताः । **अव्यक्तलिङ्गा** आचरन्त इत्यन्तं तेषामेव विशेषणजातम् । अव्यक्तानि लिङ्गानि पञ्चमुद्रादीनि कपाले येषां तेऽव्यक्तलिङ्गाः । **अव्यक्ताचारा** न व्यक्तः स्पष्टो लोकैर्विज्ञातुं शक्य आचारः शीलं कर्म सदसदात्मकं च येषां तेऽव्यक्ताचाराः । **अनुन्मत्ता** मत्ता लोकद्वयविचारशून्या विद्यामदवन्तः कलञ्जादिभक्षणेन प्राप्तमदास्तद्विपरीता अनुन्मत्ताः । **उन्मत्तवदाचरन्तो** यथा ग्रहाद्याविष्टा अनिष्टं वदन्तो वा तद्वद्विविधचेष्टाकारिणः । तथा लोकसमक्षदर्शने बुद्धिपूर्वकं तेषामश्रद्धोत्पादनार्थं विविधचेष्टाचारवन्तः । आश्रमत्रयस्यानधिकृतानां च पूर्वं पारमहंस्यमुक्तम् । इदानीं चतुर्थाश्रमस्यावान्तरभेदत्रयस्योपलक्षणन्यायेन पारमहंस्यमाह—**त्रिदण्डं** वैणवदण्डत्रयम् । **कमण्डलु**मलाबुदार्वादिविकारं जलपात्रम् । **शिक्यं** दर्भमौञ्ज्यादिरशनारचितं भिक्षापात्राधारभूतम् । **पात्र**मलाबुदार्वादिमयं दृढं भिक्षापात्रम् । **जलपवित्रं** वितस्तिमात्रं शुक्लवस्त्रं सर्वदाऽऽचमनादौ जलशोधनार्थं चतुष्कोणं त्रिदण्डबद्धं वस्त्रम् । त्रिदण्डाद्याः पञ्च मात्रास्त्रिदण्डिनां यासामन्यतमभेदेऽपि त्रिदण्डिनां प्रायश्चितम् । **शिखां यज्ञोपवीतं** शिखा केशमयी तां यज्ञोपवीतं ब्रह्मसूत्रमुभे अपि पूर्वकर्माङ्गे । **चकारः** पञ्चमात्राणां शिखायज्ञोपवीतयोश्च परित्यागसमुच्चयार्थः । इत्येवमन्यदपि गायत्र्यादिकमेतन्निखिलं **सर्वं** पूर्वोक्तम् । परित्यागे मन्त्रमाह—**भूः स्वाहा** । भूः सत्तामात्रं चिदानन्दरसं ब्रह्मैव भवतीत्यर्थः । **इति** मन्त्रेण । **अप्सु** यथाप्राप्तेषु गङ्गादिपाथःसु **परित्यज्य** सद्गुरोः पादमूलमुपसृत्य श्रवणमननादिभिः स्वयंज्योतिश्चैतन्य**मात्मानमन्विच्छे**त्साक्षात्कुर्यात् । शास्त्रीयान्वेषणेन शिखायज्ञोपवीतपरित्यागानन्तरमुत्तरे मार्गे गमनप्रकारमाह—**यथा-**

**जातरूपधरो निर्द्वंद्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा । शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्र-**

**ना०दी०** त्रयाणां दण्डानां समाहारः । पात्रादिः । जलपवित्रं जलशोधनवस्त्रम् । चकारात्तुण्डिकाचमसत्रिविष्टब्धकोपानत्कन्थाकौपीनस्नानशाटयुत्तरासङ्गानां ग्रहणम् । यथाजातरूपधरः । यथाजातो निर्वस्त्रस्तथारूपस्य धरो धर्ता । संपन्नः कुशलः । यथोक्तकाले "निवृत्ते धूमसंचारे मन्दीभूते दिवाकरे" इत्यादिस्मृत्युक्ते काले । विमुक्तोऽप्रतिबन्धः । अथवा जीवन्मुक्तः । तस्य स्थानान्याह—

**शं०दी०जातरूपधरो** यादृशं जातमात्रस्वरूपं तद्धारयतीति यथाजातरूपधरो दिगम्बर इत्यर्थः। उत्तरमार्गे गच्छेदिति शेषः। ततः संन्यासोऽ(सा)ध्वर्युणा विनिवारितः श्रवणादिसिद्ध्यर्थं लोकानुग्रहार्थमेवं भूयादित्याह । **निर्द्वंद्वो** द्वंद्वं शीतोष्णं सुखदुःखादि तन्निर्गतं यस्मात्स निर्द्वंद्वः शीतोष्णादिसहिष्णुः। निर्ग्रन्थ इति वा पाठः। निर्गता ग्रन्था अर्थशास्त्रादिरूपा यस्मात्सः । उपनिषत्संबन्धहीनशास्त्रतात्पर्यशून्य इत्यर्थः । **निष्परिग्रहो** निर्गतः कन्थाकौपीनाध्यात्मपुस्तकादिव्यतिरिक्तश्च परिग्रहो यस्मात्स निष्परिग्रहः । **तत्त्वब्रह्ममार्गे** तत्त्वमबाधितं रूपं तदेव ब्रह्म देशकालवस्तुपरिच्छेदशून्यं तस्य मार्गो ज्ञानं तस्मिन्ब्रह्ममार्गे **सम्यक्**संशयविपर्ययराहित्येन **संपन्नः** संपत्तिं प्राप्तः । ब्रह्मसाक्षात्कारवानित्यर्थः । तत्र हेतुमाह—**शुद्धमानसः**, मनसो मलाः कामक्रोधादयस्तैर्विमुक्तं विशुद्धं संकल्परहितं मानसं यस्य स शुद्धमानसः । **प्राणसंधारणार्थम्**, यद्यप्यन्नमयः प्राणस्तथाऽपि मनसोऽन्नमयत्वादन्नाभावेन तदपैति तदपायेन प्राणोऽप्यपैति । अपि च प्राणेन जग्धमन्नमन्येषां तृप्तिकारणं प्रसिद्धमतः प्राणस्य पञ्चवृत्तेः सम्यग्धारणार्थम् । **यथोक्तकाले** विधूमत्वाद्युपलक्षित आ सायं प्रदक्षिणेत्यादिना **मैत्रायणी**श्रुत्युक्तेऽवसरे । यथोक्तकाल इत्युपलक्षणं यथोक्तप्रकारेणापि । **अविमुक्त** ईश्वरोऽहमस्मीति मन्यमानः । विमुक्त इति वा पदच्छेदः । तदा निर्गतनिःशेषबन्धन इति व्याख्येयम् । **भैक्षं** माधुकरादिरूप**माचरन्**नाचरेत् । नियमोऽयम् । भैक्षपात्रमाह—**उदरपात्रे**णोदरमेव पात्रं तेन । भिक्षायामानीतायां मुखं व्याददीतेत्यर्थः । तत्र भिक्षाया **लाभालाभयो**र्हर्षशोकौ न करणीयौ । भिक्षालाभालाभयोस्तच्छून्यत्वेन **समौ भूत्वा** समावनुभूयाऽऽचरेदित्यन्वयः । इदानीं परमहंसस्य स्थलान्याह—**शून्यागारं देवगृहं** विष्णुशिवादिदेवायतनम् । **तृणकूटं** कुतश्चिन्निमित्ताज्जातस्तृणसमूहः । **वल्मीकं** पिपीलिकाभिः क्रियमाणो मृत्समुच्चयः । **वृक्षमूलं** वटाश्वत्थादिमूलम् । **कुलालशाला** भाण्डनिक्षेपस्थानम् । **अग्निहोत्र**मग्निगृहम् ।

१ ख. घ. °निर्ग्रन्थो । २ ख. ग. ङ. भैक्ष्यमा° ।

**नदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम स परमहंसो नामेति ॥ इति षष्ठः खण्डः ॥ ६ ॥**

**ॐ भद्रं कर्णेभिरिति शान्तिः ॥**

**इत्यथर्ववेदे जाबालोपनिषत्समाप्ता ॥ १४ ॥**

---

**ना०दी० शून्येति शुक्लेति** । शुक्लं ब्रह्म तच्चिन्तनपरः । **अशुभेति** । शुभस्याप्युपलक्षणम् । संन्यासेन देहत्यागं करोति न वीराध्वानादिना । परमहंसो नाम प्रसिद्धः । सेतिशब्दद्विरुक्तिः समाप्त्यर्था ॥ इति षष्ठः खण्डः ॥ ६ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां जाबालस्य प्रदीपिका ॥ १ ॥

इति नारायणविरचिता जाबालोपनिषद्दीपिका समाप्ता ॥ १९ ॥

---

**शं०दी० नदीपुलीनं** महानद्यास्तीरसमीपदेशः पुलिनम् । **गिरिकुहरं** निबिडवैणवादिसंततो देशः । **कन्दरं** गिरिगुहादिस्थलम् । **कोटरं** वृक्षान्तःसुषिरम् । **निर्झरः** पाथःस्रवणस्थलम् । **स्थण्डिलं** विशुद्धक्ष्मादेश आवरणशून्यः । शून्यागारादिस्थण्डिलान्ताः श्रुत्या द्वंद्वसमासेनोक्ता अस्माभिः सुखप्रतिपत्त्यर्थं विच्छिद्य व्याख्यातास्तेषु **शून्यागारादिष्वनिकेतवासो**ऽस्यास्तीत्य**निकेतवासी** । नानाविधोपकरणादिसंपादने प्रयत्नशून्योऽ**प्रयत्नः** । **निर्ममो** निर्गतं ममत्वं सर्वेषु वस्तुषु यस्य स निर्ममः । उपलक्षणं निरहंकार इत्यस्यापि । **शुक्लः** प्रणवोऽशेषदोषशून्यत्वात्स्वयंप्रकाश आनन्दात्मा वा तस्य **ध्यानं** विजातीयप्रत्ययप्रवाहशून्यत्वेन सजातीयप्रत्ययप्रवाहस्तदेकमेव **परमयनं** यस्य सः । **अध्यात्मनिष्ठा** यस्य सोऽन्तर्मुख इत्यर्थः । **अशुभानां कर्मणा**मनेकजन्मार्जितानां पापानां **निर्मूलने** नाशने **परस्**तत्परः स तथा । किं बहुनाऽत्रोक्तेन यः **संन्यासेना**नेकाहानुष्ठितेन स्वल्पाहानेहसा वा । **देहपरित्यागं करोति** । स्पष्टम् । **स** स्वल्पमधिकं वा कालमनुष्ठितसंन्यासः **परमहंसः** परमहंसशब्दाभिधेयो **नाम** निश्चितम् । इत्युपनिषत्समाप्तौ ॥ इति षष्ठः खण्डः ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ जाबालोपनिषद्दीपिका समाप्ता ॥ २० ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# तेजबिन्दूपनिषत् ।

---

## नारायणविरचितदीपिकासमेता ।

---

तेजबिन्दुः[1] परं ध्यानं विश्वातीतं हृदि स्थितम् ।
द्विखण्डमेकविंशं च तेजोभावफलं हि तत् ॥ १ ॥

प्रणवस्याकारोकारमकारबिन्दुनादानां ध्यानबिन्दौ ध्यानमुक्तम् । शक्तिशान्तयोर्ध्यानं वक्तुं तेजबिन्दूपनिषदारभ्यते—

**ॐ तेजबिन्दुः[2] परं ध्यानं विश्वातीतं हृदि स्थितम् ।**
**आणवं शांभवं शाक्तं स्थूलं सूक्ष्मं परं च यत् ॥ १ ॥**

**तेजबिन्दुरिति** । तेजनं तेजः । घञ् । तिजेः क्षमायां सन् । अत्र निशाने घञ् । तस्य बिन्दुः कलैवंविधं परं ध्यानं भवति । विश्वातीतं तदगोचरत्वात् । आणवमणुः सूक्ष्मोपायः क्रियावती दीक्षा तज्जन्यमाणवम् । शांभवं गुरुप्रसादमात्रेण शंभुतापादकम् । शाक्तं गुरुशक्त्यैवोपायनिरपेक्षया जातम् ।

तदुक्तं **महारत्ने**—

"त्रिविधा सा भवेद्दीक्षा प्रथमा त्वाणवी परा ।
शाक्तेयी शांभवी चान्या सद्योमुक्तिविधायिनी ॥
मन्त्रार्चनासनस्थानध्यानोपायादिभिः कृता ।
दीक्षा सा त्वाणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी ॥
सिद्धैः स्वशक्तिमालोक्य तया केवलया शिशोः ।
निरुपायं कृता दीक्षा शाक्तेयी परिकीर्तिता ॥
अभिसंधिं विना चायं शिष्ययोः परयोरपि ।
देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी ॥
सेयं तु शांभवी दीक्षा शिवादेशनकारिणी " ॥ इति ।

तत्क्तम् । स्थूलं तद्विषयत्वात् । एवं सूक्ष्मम् । परं सर्वातीतफलम् ॥ १ ॥

---

१ ङ. तेजोबि' । २ ग तेजोबि' ।

दुःसाध्यं च दुराराध्यं दुष्प्रेक्ष्यं च दुराश्रयम् ।
दुर्लक्षं दुस्तरं ध्यानं मुनीनां च मनीषिणाम् ॥ २ ॥

एवंविधं यद्ध्यानं ततो दुःसाध्यं च ।

तदुक्तम्—"चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् " ॥ इति ।

अत एव तद्ध्यानं दुराराध्यं दुःसेव्यं दुष्प्रेक्ष्यं दुर्दर्शं दुराश्रयं कष्टसाध्यविषयं दुर्लक्षं दुःखगम्यं दुस्तरं दुरन्तम् । न केवलमस्माकं मुनीनामपि मनीषिणां बुद्धिमताम् ॥ २ ॥

तर्हि प्राकृतस्यैव ध्यानप्राप्तौ किमन्तरङ्गसाधनमत आह—

जिताहारो जितक्रोधो जितसङ्गो जितेन्द्रियः ।
निर्द्वंद्वो निरहंकारो निराशीरपरिग्रहः ॥ ३ ॥

**जितेति** । हितमिताशी जिताहारः । हेयोपादेयानि द्वंद्वानि तेभ्यो निष्क्रान्तो निर्द्वंद्वः । समलोष्टाश्मकाञ्चन इत्यर्थः । निराशीर्वाञ्छारहितः ॥ ३ ॥

अगम्यगम्यकर्ता च गुरुमानार्थमानसः ।
मुखानि त्रीणि विन्दन्ति त्रिधामा हंस उच्यते ॥ ४ ॥

अगम्यगम्यकर्ता यदन्यैरगम्यं स्थलं तदपि प्रयत्नेन गम्यं करोति यः सः । गुरुमानार्थमानसः । गुरोर्मानं ( नः ) पूजा स एवार्थः प्रयोजनं यस्य स गुरोर्माने चार्थे च मानसं साधनाय प्रवृत्तं यस्येति वा सोऽधिकारीत्यर्थः । मुखानि द्वाराणि त्रिसंख्यानि पूर्वोक्तानि वैराग्यमुत्साहो गुरुभक्तिश्चेति त्रीणि द्वाराण्येतद्ध्याने विन्दन्ति प्राप्नुवन्ति साधवः । तेन हंसस्त्रिधामा, उच्यते । त्रीणि धामानि प्राप्त्युपायस्य जाग्रदादीनि वा ॥ ४ ॥

ध्यानं प्रशस्याधिकारिणं चोक्त्वा ध्येयस्वरूपमाह—

परं गुह्यमिदं स्थानमव्यक्तं ब्रह्म निराश्रयम् ।
व्योमरूपं कलासूक्ष्मं विष्णोस्तत्परमं पदम् ॥ ५ ॥

परमिति गुह्यं गुहामर्हति । अव्यक्तं सर्वजनाप्रतीतं ब्रह्म बृहत्त्वान्निराश्रयं सर्वाधारत्वा[illegible] कलात्मकं विष्णोः सत्त्वोपाधेः परमं पदं विश्रान्तिभूमिः ॥ ५ ॥

हरिहर[illegible]स्वरूपं ध्येयमुक्त्वा हरस्वरूपमाह—

[illegible]कं त्रिगुणं स्थानं त्रिधा तु[2] रूपवर्जितम् ।
निश्चलं निर्विकल्पं च निराधारं निराश्रयम् ॥ ६ ॥

१ ङ. च. प्रसिद्धं ब्र° । २ ख. ग. घ. त्रिधातुं ।

**त्र्यम्बकमिति** । त्रयाणां लोकानामम्बकः पिता । यथा वा(थाऽम्बा) माता तथाऽम्बकः पिता । अथवा त्रयाणां वेदानामम्बको वक्ता त्र्यम्बकः । त्रयाणां लोकानां गन्ता वा । अबि गतावबि शब्द इति धातुभ्यां ण्वुल् । त्रिगुणं सत्त्वादिगुणत्रयोपेतम् । स्थानमाश्रयः । त्रिधातु त्रयो लोका धातवो यस्य । अन्यदपि त्रयात्मकं सर्वमस्यैव धातवः ॥ ६ ॥

**उपाधिरहितं स्थानं वाङ्मनोतीतगोचरम् ।**
**स्वभावभावनाग्राह्यं संघातैकपदोज्झितम् ॥ ७ ॥**

वाङ्मनोतीतगोचरं वाङ्मनसयोरतीतं गोचरं स्थानं यस्य तत्तथा । स्वभावेति कृत्रिमसंस्कारत्यागेन स्वाभाविकवस्तुभावनया ग्राह्यम् । संघातैकपदोज्झितं संघातवाचिना पदेनैकवाचिना च पदेनोज्झितं त्यक्तं शब्दातीतत्त्वात् । यद्वा स्त्रीपुत्रादिसंघात एवैकं पदमाश्रयो यस्य रागिणस्तेनोज्झितं त्यक्तमगम्यत्वात् ॥ ७ ॥

**आनन्दं नन्दनातीतं दुष्प्रेक्ष्यमजमव्ययम् ।**
**चित्तवृत्तिविनिर्मुक्तं शाश्वतं ध्रुवमच्युतम् ॥ ८ ॥**

आनन्दं स्वयमानन्दरूपं नन्दनाऽन्यकृतानन्दस्तदतीतमन्येनास्याऽऽनन्दः कर्तुं न शक्यते । चित्तवृत्तिविनिर्मुक्तं विकारातीतत्वात् ॥ ८ ॥

**तद्ब्रह्माणं तदध्यात्मं तन्निष्ठा तत्परायणम् ।**
**अचित्तचित्तमात्मानं तद्व्योम परमं स्थितम् ॥ ९ ॥**

तद्ब्रह्माणं लिङ्गविभक्तिव्यत्ययो ब्रह्मेत्यर्थः । तदध्यात्मं तदेवाध्यात्ममात्मेत्यर्थः । तन्निष्ठा तदेव निष्ठा मर्यादा । तदुक्तम्—"मत्तः परतरं नान्यत्" इति । तत्परायणं परमयनम् । तदुक्तम्—"सा काष्ठा सा परा गतिः" इति । अचित्तचित्तं न चित्तं यस्य तादृशं चित्तं ज्ञानमात्मानमात्मरूपं परमं व्योम परमाकाशं स्थितं सर्वकार्येषु तत्परं नत्वासीनमलसवत् ॥ ९ ॥

**अशून्ये शून्यभावं च शून्यातीतमवस्थितम् ।**
**न ध्यानं न च वा ध्याता न ध्येयो ध्येय एव च ॥ १० ॥**

अशून्ये पूर्णे स्वस्मिन्सति शून्यभावं शून्यत्वेन भाव्यमानं जडैर्वस्तुतः शून्यातीतम् । अवस्थितं पूर्णत्वात् । न ध्यानमिति । क्रियाकारकभावशून्यम् । अथ च ध्येय एव ध्यातव्यमेव । संसारिणां मुक्तिदत्वात् ॥ १० ॥

**सर्वं तत्परमं शून्यं नपरं परमात्परम् ।**
**अचिन्त्यमप्रबुद्धं च न च सत्यं न संविदुः ॥**
**मुनीनां तत्त्वयुक्तं तु न देवा न परं विदुः ॥ ११ ॥**

१ ख. °मव्ययम् ।

**सर्वमिति** । तद्ब्रह्म सर्वं सर्वात्मकम् । अथ च परमम् । शून्यमसङ्गत्वात् । **नपरं न** परं यस्मात्तन्निषेधार्थेन नकारेण बहुव्रीहिः । परमादथाऽऽ(र्था)काशादेः परम् । मत्तः परतरं नान्यदिति स्मृतेः । अप्रबुद्धं जागरव्यापाररहितम् । तत्सत्यं न संविदुरिति नापि तु सत्यं विदन्त्येव । मुनीनामृषीणां तत्त्वभावेन युक्तमादरणीयम् । **न देवा इति** । देवाः परं न विदुरिति नापि तु विदुरेव । साधनानि पूर्वमुक्तानि ॥ ११ ॥

संप्रत्यसाधनान्याह—

**लोभं मोहं भयं दर्पं कामं क्रोधं च किल्विषम् ।**
**शीतोष्णं क्षुत्पिपासं च संकल्पं च विकल्पकम् ॥**
**न ब्रह्मकुलदर्पं च न मुक्तिं ग्रन्थसंचयम् ॥ १२ ॥**

**लोभमिति** । लोभं श्रिता न विदुरित्यन्वयः । शीतोष्णं श्रिताः कातरा न विदुर्वयं ब्रह्मकुले जाता इति दर्पं श्रिता न विदुः । मुक्तिग्रन्थानां संचयं समूहं श्रिता न विदुः ॥ १२ ॥

**न भयं सुखदुःखं च तथा मानापमानयोः ।**
**एतद्भावविनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परं**
**तद्ग्राह्यं ब्रह्म तत्परमिति ॥ १३ ॥**

**इत्यथर्ववेदे तेजबिन्दूपनिषत्समाप्ता ॥ १५ ॥**

**न भयमिति** । पुनर्भयग्रहणं लोकलज्जाभयवन्तोऽपि न विदुरित्येवमर्थम् । मानापमानयोर्वर्तमाना न विदुः । **एतदिति** । एतैर्भावैर्विनिर्मुक्तं रहितं प्रति तद्ग्राह्यं ब्रह्मैतद्भावसहितं लोभादिसहितं प्रति तद्ब्रह्म न ग्राह्यमित्यर्थः । तत्परं तच्च ब्रह्म परमुत्कृष्टम् । तत्परं ब्रह्मनिष्ठं प्रति ग्राह्यमिति द्वितीयावृत्त्यर्थः । इतिशब्दः समाप्तौ ॥ १३ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका तेजबिन्दुके ॥ १ ॥

इति नारायणविरचिता तेजबिन्दूपनिषद्दीपिका समाप्ता ॥ २१ ॥

ॐ तत्सद्ब्रह्मणेनमः ।

# ध्यानबिन्दूपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ध्यानबिन्दुर्द्विखण्डेयं विंशी ध्यानप्रधानिका ।
ध्यानस्य धारणादिभ्यो यदीत्याह विशिष्टताम् ॥ १ ॥

ध्यानस्य धारणादिभ्यो विशेषं वक्तुमिदमारभ्यते—

**ॐ यदि शैलसमं पापं विस्तीर्णं योजनान्बहून् ।**
**भिद्यते ध्यानयोगेन नान्यो भेदः कथंचन ॥ १ ॥**

**यदीति । विस्तीर्णमिति ।** स्वकार्योपलब्ध्या विस्तारो गम्यते । अन्यो भेदो भेदको नाशको नास्ति । अत्र यदीत्यतः प्राक्श्लोकद्वयं कैश्चित्पठ्यते ।

तद्यथा—“ॐ योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥
विष्णुर्नाम महायोगी महामायो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः” ॥ इति ।

तत ॐ यदि शैलसमं पापमित्यादि तत्तु योगतत्त्वोपनिषदादिभूतमत्र प्रमादपठितम् ॥ १ ॥

**बीजाक्षरात्परं बिन्दु नादं बिन्दोः परे स्थितम् ।**
**सुशब्दं चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥ २ ॥**

**बीजेति ।** बीजाक्षरं स्पष्टाक्षरमकारादित्रयं पञ्चाशदर्णबीजाद्यामिति पीठाब्जकर्णिकायां वर्णानां बीजत्वात्तस्मात्परं बिन्दुवदक्षरं[2] वर्तते बिन्दोः परे भागे नादं नादाक्षरं स्थितम् ।

---

१ क. ग. कदाच° । २ घ. बिन्दक्ष° ।

तदुक्तं शारदातिलके—

" सच्चिदानन्दविभवात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः " ॥ इति ।

अत्र शब्दार्थसृष्टिद्वारा प्रणवसृष्टिरुच्यते । सनातनं नित्यं ब्रह्म निर्गुणं सगुणं च ।

तत्र निर्गुणं यथा—

" नित्यः सर्वगतः सूक्ष्मः सदानन्दो निरामयः ।
विकाररहितः साक्षी शिवो ज्ञेयः सनातनः " ॥

तथा—" निष्क्रियं निर्गुणं शान्तमानन्दमजमव्ययम् ।
अजरामरमव्यक्तमज्ञेयमकलं ध्रुवम् ॥
ज्ञानात्मकं परं ब्रह्म स्वसंवेद्यं हृदि स्थितम् ।
सत्यं बुद्धेः परं नित्यं निर्मलं निष्कलं स्मृतम् " ॥ इति ।

सगुणं तु शक्तियुक्तम् । यदुक्तम्—

" तच्छक्तिभूतः सर्वेशो भिन्नो ब्रह्मादिमूर्तिभिः ।
कर्ता भोक्ता च संहर्ता सकलः स जगन्मयः " ॥ इति ।

तत्र सृष्टिक्रमः । आदौ सच्चिदानन्दाल्लीना शक्तिरुच्छूनरूपतयाऽभिव्यक्ता पार्थक्येन व्यवहार्याऽभूत् ।

तदुक्तम्—" तस्माद्विनिर्गता नित्या सर्वगा विश्वसंभवा " ॥ इति ।

तथा—" शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता ॥
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव " ॥ इति च ।

तस्याः शक्तेर्नादस्तस्या एवोत्तरावस्थारूपः पुंस्कालादिव्यपदेशार्हः ।

तदुक्तम्—" नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी ।
शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता " ॥ इति ।

नादो बिन्दुस्तस्या एव घनीभावः क्रियाप्रधानो बिन्दुः ।

तदुक्तम्—" सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः संनिधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् " ॥ इति ।

तथा—" अभिव्यक्ता परा शक्तिरविनाभावलक्षणा ।
अखण्डापरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः ।
समस्ततत्त्वभावेन विवर्तेच्छासमन्विता ॥
प्रयाति बिन्दुभावं च क्रियाप्राधान्यलक्षणम् " ॥ इति ।

---

१ ख नित्यस । २ ख, मता ।

स च बिन्दुः शिवशक्त्युभयात्मकः क्षोभ्यक्षोभकसंबन्धरूपश्चेति त्रिविधः । शिवात्मतया बिन्दुसंज्ञः शक्त्यात्मतया बीजसंज्ञः संबन्धरूपेण नादसंज्ञः । एतौ नादबिन्दू पूर्वोक्तनादबिन्दुभ्यामन्यौ तत्कार्यरूपौ । एभ्यस्त्रिभ्यस्तिस्रः शक्तयो जाता बिन्दो रौद्री नादाज्ज्येष्ठा बीजाद्वामा ।

तदुक्तम्—" बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः " ॥ इति ।

ताभ्यः क्रमेण रुद्रब्रह्मरमाधिपा जातास्ते क्रमेणेच्छाशक्तिक्रियाशक्तिज्ञानशक्तिस्वरूपाः । वह्नीन्द्वर्कस्वरूपिणो निरोधिकार्धेन्दुबिन्दुरूपाः शक्तेरेवावस्थाविशेषाः । एषामिच्छाक्रियाज्ञानात्मत्वं शक्तित उत्पन्नत्वादाद्यबिन्दोरखण्डो नादमात्रं शब्दब्रह्मात्मा ख उत्पन्नः ।

तदुक्तम्—" क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत्परम् " ॥ इति ।

स शब्दब्रह्म न तु शब्दार्थरूप आन्तरः स्फोटः शब्दरूपो वा बाह्यस्फोटः शब्दब्रह्म तयोर्जडत्वाद्ब्रह्मशब्दानर्हत्वात्किंतु चैतन्यमेव शब्दब्रह्म ।

तदुक्तम्—" अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः " ॥ इति ।

तद्बिन्दुरवस्यै(रस्यै)व सर्वशरीरेषु[1] बिन्दुत्वेनाऽऽविर्भावः ।

तदुक्तम्—" सोऽन्तरात्मा तदा देवो नादात्मा नदते स्वयम् ॥
यथासंस्थानभेदेन स भूयो वर्णतां गतः ।
वायुना प्रेर्यमाणोऽसौ पिण्डाद्व्यक्तिं प्रयाति हि " ॥ इति ।

शब्दब्रह्मैव परा नाम शब्दावस्था सैव च चैतन्यरूपा कुण्डली शक्तिस्ततः पश्यन्त्यादिरूपेण वेदराशिराविर्भवति । इयं शब्दसृष्टिः । अथार्थसृष्टिः । शंभोः शक्तिभावमापन्नान्नादरूपकालसहायान्मायाघनबिन्दुरूपमापन्नात्सृष्टिस्थितिध्वंसानिग्रहानुग्रहकार्यपञ्चककर्ताऽत एव जगन्निर्माणबीजरूपो जगत्साक्षी सदाशिवो जातः । ततः क्रमेणेशरुद्रविष्णुब्रह्माण उत्पन्नाः । सर्वसृष्टिमूलरूप दव्यक्तात्सृष्ट्युन्मुखाद्बिन्दोर्महांस्ततोऽहंकारः स त्रिधा । ततो वैकारिका देवास्तैजसादिन्द्रियाणि भूतादेस्तन्मात्रद्वारा पञ्चभूतानि ततो विराडित्यर्थसृष्टिः । तत्र शब्दसृष्टिक्रमः—

" शक्तिस्ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका ।
ततोऽर्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः ॥
पश्यन्ती मध्यमा वाचा वैखरी सर्गजन्मभूः " ॥ इति ।

तत्र सत्त्वप्रतिष्ठा चिच्छक्तिशब्दवाच्या परमाकाशावस्था सैव सत्त्वप्रतिष्ठा रजो-

१ ब. °षु शब्दत्वे° ।

नुविद्धा सती ध्वनिशब्दवाच्याऽक्षरावस्था सैव तमोनुविद्धा नादशब्दावाच्याऽव्यक्ताव-स्था सैव तमःप्राचुर्यान्निरोधिकाशब्दवाच्या सैव सत्त्वप्राचुर्यादर्धेन्दुशब्दवाच्या तदुभय-संबन्धाद्बिन्दुशब्दवाच्याऽसावेव बिन्दुर्मूलाधारेऽभिव्यक्तः । परा नाम स्वाधिष्ठाने पश्यन्ती हृदि मध्यमा जिह्वायां वैखरीति ।

तदुक्तम्—"सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रास्वरूपिणी ।
अश्रोत्रविषया तस्मादुद्गच्छन्त्यूर्ध्वगामिनी ॥
स्वयंप्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत् ।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ॥
ततः संकल्पमात्रा स्यादविभक्तोर्ध्वगामिनी ।
सैवोरःकण्ठतालुस्था शिरोघ्राणरदस्थिता ॥
जिह्वामूलोष्ठनिष्ठ्यूतरूपवर्णपरिग्रहा ।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी" ॥ इति ।

परशक्तिरूपत्वात्परा । ज्ञानात्मकत्वात्पश्यन्ती । मध्या मा बुद्धिर्यस्याः सा मध्यमा हिरण्यगर्भस्थानीया । विशेषेण खरत्वाद्वैखरी विराट्स्थानीया । निरोधिकाऽग्निशिव-रूपा । अर्धेन्दुः सोमशक्तिरूपः । तदुभयसंयोगः सूर्यरूपो बिन्दुः । तत्र शब्दसृष्टौ प्रणवस्याकारोकारमकाराः क्रमेण रुद्रब्रह्मरमाधिपा इच्छाक्रियाज्ञानशक्त्यात्मानो वह्नीन्द्वर्कस्वरूपिणो रौद्रीज्येष्ठावामाशक्तिरूपा गौरीब्राह्मीवैष्णवीरूपा बिन्दुनादबीजरूपा निरोधिकार्धेन्दुबिन्दुसंज्ञाः शक्तेरेवावस्थाविशेषा द्रष्टव्याः । अर्थसृष्टौ तु ब्रह्मविष्णुरुद्राः सूर्येन्दुपावका इत्येवंक्रमा इति विशेषः । मकारात्पराणि तु प्रणवस्य बिन्दुनादशक्ति-शान्ताख्यानि रूपाणि त्रीणि शक्तेरवस्थाविशेषाः । सप्तमी शान्ताख्या ब्रह्मावस्था । तत्र षण्णां देवता ब्रह्मविष्णुरुद्रेश्वरसदाशिवसर्वेश्वराः । शक्तिशान्तावस्थे त्यक्त्वा पञ्चधात्वपक्षे तु—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।
पञ्चधा पञ्चदेवत्यः प्रणवः परिकीर्तितः" ॥

इत्यथर्वशिखोक्ताः पञ्च देवता द्रष्टव्याः । क्वचिद्व्यत्यासेन देवताकथनं सर्गभेदादेवे-त्यपि द्रष्टव्यम् । प्रकृतमनुसरामः । सुष्ठु शब्दो नादो यस्मात्तत्सुशब्दं शक्तिरूपं तदपि परे स्थितमर्धान्नादादेवाकारादिशक्त्यन्ते तस्मिन्नक्षरे क्षीणे सति निःशब्दं परमं पदं वर्तते शान्ताख्यं परं ब्रह्म ॥ २ ॥

उक्तमेव स्पष्टयति—

**अनाहतं च यच्छब्दं तस्य शब्दस्य यत्परम् ।
तत्परं विन्दते यस्तु स योगी छिन्नसंशयः ॥ ३ ॥**

**अनाहतं चेति** । सर्वत्र स्वरूपापेक्षं नपुंसकत्वम् । तस्य शब्दस्य यत्परं कारणं शक्तिस्तत्परं तस्यापि परं सच्चिदानन्दरूपं यो विन्दते स च्छिन्नसंशयो नष्टसंदेहः । " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः " इत्यादिश्रुतेः ॥ ३ ॥

तस्यात्यन्तं सूक्ष्मतामाह—

**वालाग्रशतसहस्रार्धं तस्य भागस्य भागशः ।**
**भागस्य तस्य भागार्धं तज्ज्ञेयं च निरञ्जनम् ॥ ४ ॥**

**वालाग्रेति** । शतसहस्रार्धं लक्षार्धं तस्य भागस्य भागशो भागे सति तस्य भागस्य भागार्धं भागस्य यो भागस्तस्यार्धं तन्निरञ्जनं शुद्धं ब्रह्म ज्ञेयम् । सर्वपरिमाणानाश्रयत्वेऽपि दुर्लक्षत्वप्रतिपादनायातिसूक्ष्मत्वोक्तिः ॥ ४ ॥

**पुष्पमध्ये यथा गन्धं पयोमध्ये यथा घृतम् ।**
**तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम् ॥ ५ ॥**

**पुष्पेति** । पुष्पमध्ये यथा गन्धं गन्धस्वरूपं वर्तत एवमिदं गन्धस्थानीयदेहादिषु वर्तत इति शेषः ॥ ५ ॥

ननु तर्हि देहादयः क्व वर्तन्तेऽत आह—

**एवं सर्वाणि भूतानि मणिसूत्रमिवाऽऽत्मनि ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ ६ ॥**

**एवमिति** । एवमनेन प्रकारेण । सर्वेषु भूतेष्वात्मा वर्तत एवं सर्वाणि भूतान्यात्मनि वर्तन्ते । अत्रापि दृष्टान्तमाह—**मणिसूत्रमिवेति** । समाहारद्वंद्वः । यथा सूत्रे मणयो वर्तन्ते तद्वदित्यर्थः ।

तदुक्तम्—"सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः" ॥ इति ।

तथा—"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । " इति ॥ ६ ॥

ध्यानाभ्यासप्रदर्शनायोक्तस्यापि पुनरभिधानम् ।

**तिलानां तु यथा तैलं पुष्पे गन्धमिवाश्रितम्[1] ।**
**पुरुषस्य शरीरे तु सबाह्याभ्यन्तरे स्थितम् ॥ ७ ॥**

**तिलानां त्विति** । तिलानां मध्ये यथा तैलमर्पितं व्यवस्थितमिति ब्रह्म वर्तत इति शेषः ॥ ७ ॥

ननु कथं सत्यादसत्योद्भव इत्याशङ्क्य दृष्टान्तेन वारयति—

**वृक्षं तु सकलं विद्याच्छाया तस्यैव निष्कला ।**

**वृक्षमिति** । सकलं पूर्णं यथार्थम् । निष्कलाऽऽकृतिमात्रं न पारमार्थिकी ।

१ ख. ग. °तसाब° । २ ख. °तस ह° ।

ननु च्छाया यथा वृक्षातिरिक्ता भवत्येवं जगद्ब्रह्मातिरिक्तं चेदद्वैतापत्तिरित्याशङ्क्याऽऽह—

**सकले निष्कले भावे सर्वत्राऽऽत्माऽध्यवस्थितः ॥ ८ ॥**

**सकल इति** । यथार्थे चायथार्थे च ॥ ८ ॥

इदानीं गुरुरूपेणाज्ञानान्धतिमिरापहं साकारस्वरूपं ध्येयमित्याह—

**अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ।**
**चतुर्भुजं महावीरं पूरकेण विचिन्तयेत् ॥ ९ ॥**

**अतसीति** । पूरकेणोपलक्षितं पूरणकाल इति यावत् । षोडशभिः प्रणवैः पूरयन्नुकारमूर्तिं विष्णुं नाभौ स्मरेदिति ज्ञेयम् ॥ ९ ॥

**कुम्भकेन हृदि स्थाने चिन्तयेत्कमलासनम् ।**
**ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥ १० ॥**

पितामहं रक्तगौराङ्गं कपिलवर्णं हृदिस्थाने कुम्भकेन विचिन्तयेदित्यन्वयः । अत्रापि चतुःषष्टिभिः कुम्भयन्नुकारात्मकं चिन्तयेदिति ज्ञेयम् ॥ १० ॥

**रेचकेन तु विद्यात्मा ललाटस्थं त्रिलोचनम् ।**
**शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम् ॥ ११ ॥**

**इति प्रथमः खण्डः ॥ १ ॥**

रेचकेनोपलक्षितस्त्रिलोचनं चिन्तयेन्मकारमूर्तिं ध्यायन्द्वात्रिंशद्भी रेचयेदिति ज्ञेयम् । तदुक्तं **याज्ञवल्क्ये**—

"वर्णत्रयात्मका ह्येते रेचपूरककुम्भकाः ।
स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः" ॥ इति ।

तत्र तु पूरकुम्भरेचकेष्वकारोकारमकारा ब्रह्मविष्णुरुद्रात्मका ध्येयत्वेनोक्ताः । अत्र तु विष्णुब्रह्मरुद्रा इति । ब्रह्मणो हृदि ध्यानमत्र । अन्यत्र तु स्वाधिष्ठान उक्तम् । न वचनस्य पर्यनुयोगोऽस्ति । विद्यात्मा विद्यात्मानम् । व्यत्ययेन प्रथमा । अथवा कर्तृविशेषणं विद्यावान्साधक इत्यर्थः ॥ ११ ॥ इति प्रथमः खण्डः ॥ १ ॥

नाभौ हृदि ललाटे च विष्णुब्रह्मरुद्राणां ध्यानमुक्तं तत्र स्थानत्रयपद्मानां सुषुम्नारूपैकनालत्वादेकत्वमेवाभिप्रेत्यावान्तरभेदं दर्शयति—

**अष्टपत्रमधःपुष्पमूर्ध्वनालमधोमुखम् ।**
**कदलीपुष्पसंकाशं सर्वदेवमयोम्बुजम् ॥ १२ ॥**

१ ग. °यात्रिकम्° ।

**अष्टपत्रमिति** । अधःपुष्पमधोऽवस्थितं नाभिदेशे वर्तमानं पुष्पं यस्य । हृत्पद्ममाह—**ऊर्ध्वेति** । सर्वदेवमयमम्बुजं सर्वदेवमयाम्बुजम् । सर्वदेवमयात्मकमिति क्वचित्पाठः । मण्डूकाद्यावरणान्तदेवात्मकम् ॥ १२ ॥

**शताब्जं शतपत्राढ्यं विप्रकीर्णाब्जकर्णिकम् ।**
**तत्रार्कचन्द्रवह्नीनामुपर्युपरि चिन्तयेत् ॥ १३ ॥**

शताब्जं शतमब्जानि यत्र शताब्जम् । शतग्रहणमाधिक्योपलक्षणं तेन मूलादिमूर्धान्तं बहुपद्मं सुषुम्नानालरूपं तत्केचिद्द्वादशपद्ममाहुरपरे षोडशपद्ममपरे बहुतरपद्ममाहुः ।

**तद्यथा**—"ततस्तु ब्रह्मकङ्काले ध्यायेच्चक्रक्रमं सुधीः ।
आधारचक्रं प्रथमं कुलदीपमनन्तरम् ॥
वज्रचक्रं ततः प्रोक्तं स्वाधिष्ठानात्मकं परम् ।
रौद्रं करालचक्रं च गह्वरात्मकमेव च ॥
विद्यापदं च त्रिमुखं त्रिपदं कालदण्डकम् ।
झांकारचक्रं च ततः कालोद्धारं करंककम् ॥
दीपकं क्षोभजनकमानन्दकलिलात्मकम् ।
मणिपूरकसंज्ञं च लाकुलं कालभेदनम् ॥
महोत्साहं च परमं पादकं पदमुच्यते ।
कल्पजालं ततश्चिन्त्यं पोषकं लोलसं ततः ॥
नादावर्तपदं प्रोक्तं त्रिपटं च तदुत्तरम् ।
कङ्कालकं ततश्चक्रं विख्यातं पुटभेदनम् ॥
महाग्रन्थिविराका च बन्धोज्ज्वलनसंजिरे ।
अनाहतं पत्रपुटं व्योमचक्रं तथा भवेत् ॥
बोधनं ध्रुवसंज्ञं च कालकन्दलकं तथा ।
क्रौञ्चभेरुण्डविभवं डामरं कुलपीठकम् ॥
कलकोलाहलं हालाहालावर्तं महद्भयम् ।
घोराभैरवसंज्ञं च विशुद्धिः कण्ठमुत्तमम् ॥
पूर्णकं पदमाख्यातमाज्ञाकाकपुटं तथा ।
शृङ्गाटं कामरूपाख्यं पूर्णगिर्यात्मकं परम् ॥
महाव्योमात्मकं चक्रं शक्तिरूपमनुस्मरेत्" ॥ इति ।

तदेव मूर्ध्नि शतपत्राख्यमब्जं वर्तत इति शेषः । इदं सहस्रपत्रमित्याहुः । इदम-

१ ख. °रं कल° ।

म्बुजत्रयं सुषुम्नालक्षणैकनालत्वादेकत्वेन विवक्षितमिति विशेषणविशेष्यभावः । कीदृशं विप्रकीर्णाब्जकर्णिकं विप्रकीर्णानि विक्षिप्तान्यम्बुजानि पूर्वोक्तान्याधारादीनि तथा तत्कर्णिकाश्च यस्य तत्तथा नानाकमलमित्यर्थः । तत्र प्रत्येकमर्कचन्द्रवह्नीनां मूर्तिमेकैकोपरि ध्यायेत् । तदुक्तम्—"तस्मिन्सूर्येन्दुपावकान्" इति ॥ १३ ॥

**पद्मस्योत्थापनं कुर्याद्वोढुं चन्द्राग्निसूर्ययोः ।**

उत्थापनमूर्ध्वमुखत्वम् । यद्यपि शरीरावयवोऽन्यथा कर्तुं न शक्यते विनाशप्रसङ्गात्तथाऽप्यधोमुखत्वमधमो(र्मो)न्मुखतोर्ध्वमुखत्वमास्तिकत्वेनोर्ध्वलोकोन्मुखताविकाशश्च विनिद्रताऽनलसतेत्येवं बोद्धव्यम् । अथवा सुषुम्नानाललग्नानि पत्राण्येव वाताहतान्यूर्ध्वमुखानि भवन्ति तदुत्थापनं द्रष्टव्यम् । किमर्थमुत्थापनमत आह—**वोढुं चन्द्राग्निसूर्ययोरिति** । कर्मणि षष्ठी । यथा भजे शंभोश्चरणयोरिति । सूर्यचन्द्राग्नीन्वोढुमित्यर्थः । चन्द्रस्य मध्ये सूर्यपावकयोश्चाऽऽद्यन्तयोः क्रमार्थं प्रयोगे कर्तव्य एषां त्रित्वाद्बहुवचनप्रयोगे च कर्तव्ये तथाऽनुक्तिरग्निसूर्ययोरेकत्वसूचनार्था । अग्निसूर्यौ पुरुषरूपं चन्द्रश्च स्त्रीरूपं प्रकृतिरूपं तेन प्रकृतिपुरुषौ वोढुमित्यर्थः । प्रकृतेश्चन्द्रस्य मध्ये ध्यानं तु तस्याः पुरुषेण व्याप्तिं दर्शयितुं प्रकृतिर्हि पुरुषेण व्याप्ता पुरुषायत्ता च वर्तते पुंसः सर्ववशित्वोक्तेः । सप्तमी वा चन्द्रादिषु देवतां वोढुमित्यर्थः ।

**तस्याऽऽहुर्बीजमाहृत्य आत्मा संचरते ध्रुवम् ॥ १४ ॥**

**तस्येति** । तस्य पद्मस्य बीजं तद्दर्शितं कर्म ज्ञानं चाऽऽहृत्य गृहीत्वाऽऽत्मा जीवः संचरते लोकाल्लोकान्तरं गच्छतीत्याहुर्ध्रुवं निश्चितं श्रुतयः " पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन " इति " तमेतं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च " इति " साधुकारी साधुर्भवति पापकारी पापो भवति " इत्याद्याः । अथवा संचरते पत्रात्पत्रान्तरं गच्छति तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः । आग्नेय्यां निद्रालस्यादयो भवन्ति । याम्ये क्रूरे मतिः । नैर्ऋत्ये पापे मनीषा । वारुण्यां क्रीडा । वायव्ये गमनादौ बुद्धिः । सौम्ये रतौ प्रीतिः । ईशाने द्रव्यादाने । मध्ये वैराग्यम् । केसरे जाग्रदवस्था । कर्णिकायां स्वप्नम् । लिङ्गे सुषुप्तम् । पद्मत्यागे तुरीयमिति **हंसोपनिषादि** पत्रभेदेऽवस्थाभेदश्रुतेः । अथवा तस्य पद्मस्य बीजं पञ्चाशद्वर्णरूपमाहृत्योच्चार्याऽऽत्मा संचरते व्यवहरति । शाब्दव्यवहारस्य मातृकाधीनत्वात्पञ्चाशद्वर्णबीजाढ्यामिति कर्णिकाविशेषणोक्तेः ॥ १४ ॥

**त्रिस्थानं च त्रिमार्गं च त्रिब्रह्म च त्रिरक्षरम् ।**
**त्रिमात्रं चार्धमात्रं च यस्तं वेद स वेदवित् ॥ १५ ॥**

१ घ. मतौ । २ घ. °वहारस्य ।

तत्पदं त्रिस्थानं नाभिर्हृदयं मूर्धा चेति त्रीणि स्थानान्यस्य । त्रिमार्गं च स्थानभेदेनोपासने गतिभेदात् । त्रिब्रह्म नाभौ विष्णुर्हृदि ब्रह्मा मूर्ध्नि त्रिलोचन इति त्रीणि ब्रह्माण्यस्य । त्रिरक्षरं त्रिवारमक्षराण्यकारादीन्यस्य । त्रिमात्रं ता एव मात्रा अकारादिषु मात्राव्यवहारात् । तदेवाब्जं तदुपर्यर्धमात्रं च यः पुमांस्तमकारादिप्रणाल्याऽर्धमात्रास्थं पुरुषं वेद स वेदवित् । वेदोक्तं वेत्ति ॥ १९ ॥

इदानीमर्धमात्रारूपाद्बिन्दोः परस्य नादस्य स्वरूपं दर्शयंस्तज्ज्ञाने फलमाह—

**तैलधारमिवाच्छिन्नं दीर्घघण्टानिनादवत् ।**
**अवाग्जं प्रणवस्याग्रे यस्तं वेद स वेदवित् ॥ १६ ॥**

**तैलेति** । तैलस्य धारा तैलधारं छान्दसं क्लीबत्वम् । यथा तैलधाराऽच्छिन्ना सत्यविच्छेदेनानुभूयते तथा विशदा दीर्घा चानुभूयते तद्वत् । तर्हि धारावदेवाग्रे सूक्ष्मो न स्यादत उपमान्तरम्—दीर्घेति । अवाग्जं ब्रह्मणोऽवागधस्तदनुभवात्प्राग्वर्तमानम् । अथवा न वाचो जातमवाग्जं वाचो विराम उपलभ्यत्वात् । तथा प्रणवस्याग्रे प्रणवादूर्ध्वं प्रतीयमानं तं नादम् । वेदोपास्ते । वेदवित् । शक्तिशान्ते अपि प्रणवरूपे जानातीत्यर्थः ॥ १६ ॥

इदानीं शूरस्य युद्ध इव क्षिप्रकारित्वमुपदिशन्प्रणवाभ्यासे प्रकारमाह—

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ १७ ॥**

**प्रणव इति** । अयं मन्त्रो मुण्डकेऽप्यस्ति । वेद्धव्यं मनसा ब्रह्म प्रवेश्यम् । किंवच्छरवत् । यथा शरो विध्यति फलं तन्मय इति ब्रह्ममयो जीवः स्यादित्यर्थः ॥ १७ ॥

**स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।**
**ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ १८ ॥**

**स्वदेहमिति** । आत्मानमरणिमिति ब्रह्मोपनिषदि पाठः । स्वदेहो लिङ्गम् । एवमनेन प्रकारेण निगूढवन्निलीनवद्गुप्तवस्तुवत्पश्येत्सूक्ष्मदृष्ट्या निरीक्षेत ॥ १८ ॥

**यथैवोत्पलनालेन तोयमाकर्षयेत्पुनः ।**
**तथैवोत्कर्षयेद्वायुं योगी योगपदे स्थितः ॥ १९ ॥**

उत्कर्षयेद्वायुं स्वाधिष्ठानादिचक्रभेदेनोर्ध्वभूमिकां प्रापयेत् ॥ १९ ॥

अभ्यासप्रकारमाह—

**अर्धमात्रां रज्जुं कृत्वा कूपभूतं तु पङ्कजम् ।**
**कर्षयेन्नालमार्गेण भ्रुवोर्मध्ये नयेल्लयम् ॥ २० ॥**

---

१ क. ग. °ल्लक्ष्मु° ।

**अर्धेति** । कृषिकृद्यथा कूपाद्रज्ज्वा जलमाकर्षत्येवमर्धमात्रया समनोदहनपवनां कुण्डलीं भ्रूमध्यमानयेदित्यर्थः । पङ्कजमाधारादिनालं सुषुम्ना तन्मार्गेण ॥ २० ॥

अ(य)त्र लयस्तदमृतस्थानं तस्य लक्षणमाह—

**भ्रुवोर्मध्ये ललाटस्तु नासिकायां तु मूलतः ।**
**अमृतस्थानं विजानीयाद्विश्वस्याऽऽयतनं मह-**
**द्विश्वस्याऽऽयतनं महदिति ॥ २१ ॥**

**इत्यथर्ववेदे ध्यानबिन्दूपनिषत्समाप्ता ॥ १६ ॥**

**भ्रुवोरिति** । भ्रुवोर्मध्ये यो ललाटो ललाटैकदेशस्तदमृतस्थानम् । नासिकायां तु लक्षणीभूतायां मूलतो नासिकामूलादारभ्यामृतस्थानं बोद्धव्यम् । नासिकामूलं नासोपरिभागममृतस्थानमित्यर्थः । तदुक्तम्—"भ्रूमध्ये धाम यत्प्रोक्तं तत्प्रोक्तं सोममण्डलम्" इति । तस्यामृतस्य किं स्वरूपमत आह—**विश्वस्येति** । विश्वस्याऽऽयतनमित्युक्त आकाशादि स्यात्तदर्थमुक्तं महदिति । ब्रह्मैव निरवधिमहत्त्वाधिकरणममृतं तच्च भ्रूमध्ये धारणया ध्यातं सल्लभ्यते येनामृतो भवतीत्यर्थः । द्विरुक्तिः समाप्त्यर्था ॥ २१ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका ध्यानबिन्दुके ॥ १ ॥

इति नारायणविरचिता * ध्यानबिन्दूपनिषद्दीपिका समाप्ता ॥ २२ ॥

---

* इयं ध्यानबिन्दूपनिषद्बिन्दुपञ्चकान्तर्गता चतुर्थीति ज्ञातव्यं सुधीभिः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# नादबिन्दूपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

प्रणवः पञ्चधाऽकारोकारमैर्बिन्दुनादयुक् ।
अन्त्यो नादस्त्वत्र वर्ण्यस्त्रिखण्डे नादबिन्दुनि ॥ १ ॥

नादो बिन्दुना लेशेन वर्ण्यते तेन नादबिन्दुस्तत्राऽऽद्यमक्षरत्रयं सार्धमात्रं हंसाभिधानपक्षिरूपकेण तावद्विविनक्ति—

**ॐ अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः ।**
**मकारस्तस्य पुच्छं वा अर्धमात्रा शिरस्तथा ॥ १ ॥**

ॐ अकार इति । पक्षः पतत्रं येन पक्षीत्युच्यते । पुच्छमन्त्यत्वात् । वै प्रसिद्धौ । शिर उत्तमाङ्गमूर्ध्वलोकफलत्वात् ॥ १ ॥

**पादौ रजस्तमस्तस्य शरीरं सत्त्वमुच्यते ।**
**धर्मश्च दक्षिणं चक्षुरधर्मश्चोत्तरं स्मृतम् ॥ २ ॥**

रजस्तमः पादावधस्त्वसामान्यात् । सत्त्वं शरीरं सर्वाधारत्वात् । धर्माधर्मौ चक्षुषी गतिहेतुत्वात् ॥ २ ॥

सप्तलोकान्हंसशरीरे विभज्य दर्शयति—

**भूर्लोकः पादयोस्तस्य भुवोलोकस्तु जानुनोः ।**
**स्वर्लोकः कटिदेशे तु नाभिदेशे महर्जगत् ॥ ३ ॥**

भूर्लोक इत्यादिना । औत्तराधर्यसाम्याद्भूरादीनां पादाद्याश्रयत्वम् । भुवोलोक इति । भुवश्च महाव्याहृतेरिति सकारस्य रुत्वरेफयोर्विधानाद्रुत्वपक्ष उत्वे गुणे च रूपम् । महर्जगन्महर्लोकः ॥ ३ ॥

**जनलोकस्तु हृदये कण्ठदेशे तपस्ततः ।**
**भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः ॥ ४ ॥**

भ्रुवोर्ललाटमध्ये च सत्यलोकः । तुश्चार्थे ॥ ४ ॥

---

१ म. °रश्चोत्त° । २ ग. °नुनि । स्व° ।

सहस्राह्न्यमिति चात्र मन्त्र एष प्रदर्शितः ।
एवमेनं समारूढो हंसयोगविचक्षणः ॥
न बध्यते कर्मचारी पापकोटिशतैरपि ॥ ५ ॥

**सहस्राह्न्यमिति** । अयं चात्रार्थे मन्त्रः प्रदर्शितः संमतिरूपेण । यथा—"सहस्राह्न्यं विमतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गं स देवान्सर्वानुरस्युपदद्य संपश्यन्याति भुवनानि विश्वा" इति । स्वशाखायां पूर्वकाण्डे गतत्वात्संपूर्णो नोदाहृतः । अस्यार्थः । सहस्रमहानि किरणा यस्य स सहस्राहा सूर्य एकऋषिः स च मूर्धाधिष्ठानः । तदुक्तं **प्राणाग्निहोत्रे**—"तत्र सूर्योऽग्निर्नाम मण्डलाकृतिः सहस्ररश्मिभिः परिवृत एकऋषिर्भूत्वा मूर्ध्नि तिष्ठति" इति । तमर्हति सहस्राह्न्यस्तं सहस्राह्न्यं स्वर्गं द्युलोकं पततो गच्छतोऽस्य हरेर्विष्णुरूपस्य हंसस्योंकाररूपस्य वियतौ पूर्वापरावाकाशभागावकारोकाररूपौ पक्षौ पतत्रे ज्ञातव्यौ । स ओंकारः सर्वान्देवान्सात्त्विकानुरसि हृदये सत्त्वरूप उपदद्य निधाय विश्वानि भुवनानि साक्षात्पश्यन्याति शाश्वतब्रह्मलोकपर्यन्तं तदारूढ उपासकोऽपि तावद्यातीति भावः ॥ ५ ॥

ओंकारस्य हंसरूपेणोपासनं फलं चोक्त्वा चतसृणां मात्राणां देवता आह—

आग्नेयी प्रथमा मात्रा वायव्यैषा वशानुगा ।
भानुमण्डलसंकाशा भवेन्मात्रा तथोत्तरा ॥
परमा चार्धमात्रा च वारुणीं तां विदुर्बुधाः ॥ ६ ॥

**आग्नेयीति** । एषा मध्यमोकाराख्या वायव्या वायुदेवताका मध्यमवृत्तित्वादुभयोर्वशवर्तिनी वशानुगा । उत्तरा मकाराख्या भानुमण्डलसंकाशाऽर्थाद्भानुदेवत्या । अर्धमात्रा चतुर्थी ॥ ६ ॥

इदानीं चतसृणामुदात्तादिभेदेन प्रत्येकं तिस्रस्तिस्रो मात्रा दर्शयितुमाह—

कलात्रयानना वाऽपि तासां मात्रा प्रतिष्ठिता ।
एष ओंकार आख्यातो धारणाभिर्निबोधत ॥ ७ ॥

**कलात्रयानना वेति** । वाशब्दश्चार्थे । तासां चतसृणां मात्राणां मध्य एकैका मात्रा कलात्रयानना च प्रतिष्ठिता निश्चिता । कलात्रयेण मात्रात्रयेणाननं प्राणनं यस्याः सा मात्रात्रयशरीरेत्यर्थः । एष इत्युपसंहारः । इदानीं द्वादशानां कलानां मध्ये स्थानतो नामतश्च चिन्तनारूपा धारणा दर्शयति—धारणाभिरिति ॥ ७ ॥

घोषिणी प्रथमा मात्रा विद्युन्माली तथाऽपरा ।
पतङ्गी च तृतीया स्याच्चतुर्थी वायुवेगिनी ॥ ८ ॥

---

१ ख. घ. °धत चो° । २ ङ. °ता । क° ।

घोष आज्ञा तत्फला घोषिणी । विद्युन्माली यक्षराजस्तल्लोकप्रदा विद्युन्माली । पतङ्गी पक्षिणी । आकाशगतिप्रदत्वात् । वायुवेगिनी शीघ्रगतिप्रदा ॥ ८ ॥

पञ्चमी नामधेया च षष्ठी चैन्द्री विधीयते ।
सप्तमी वैष्णवी नाम शांकरी च तथाऽष्टमी ॥ ९ ॥

नामधेया पितृलोकप्रदत्वात्पितरो हि नामभिरिज्यन्ते । "यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्" इत्याद्युक्तेः । ऐन्द्रीन्द्रसायुज्यदत्वात् । वैष्णवी विष्णुलोकप्रदत्वात् । शांकरी शिवलोकप्रदत्वात् ॥ ९ ॥

नवमी महती नाम ध्रुवेति दशमी मता ।
एकादशी भवेन्मौनी ब्राह्मीति द्वादशी मता ॥ १० ॥

महती महर्लोकप्रदत्वात् । ध्रुवा ध्रुवलोकप्रदत्वात् । मौनी मुनीनां लोकं तपोलोकं ददाति तेन । ब्राह्मी ब्रह्मलोकं ददाति तेन । ततः परं तु फलं नादान्ते न लभ्यते॥१०॥

इदानीं तत्तद्धारणासु स्थिता(रा)न्तःकरणस्य प्राणवियोगे फलविशेषं नामभिः सूचितमाह—

प्रथमायां तु मात्रायां यदि प्राणैर्वियुज्यते ।
स राजा भारते वर्षे सार्वभौमः प्रजायते ॥ ११ ॥
द्वितीयायां समुत्क्रान्तो भवेद्यक्षो महात्मवान् ॥
विद्याधरस्तृतीयायां गन्धर्वस्तु चतुर्थिकाम् ॥ १२ ॥
पञ्चम्यामथ मात्रायां यदि प्राणैर्वियुज्यते ॥
ओषितः सह देवत्वं सोमलोके महीयते ॥ १३ ॥
षष्ठ्यामिन्द्रस्य सायुज्यं सप्तम्यां वैष्णवं पदम् ॥
अष्टम्यां व्रजते रुद्रं पशूनां च पतिं तथा ॥ १४ ॥
नवम्यां च महर्लोकं दशम्यां च ध्रुवं व्रजेत् ॥
एकादश्यां तपोलोकं द्वादश्यां ब्रह्म शाश्वतम् ॥ १५ ॥

प्रथमायामित्यादिना । चतुर्थिकां प्राप्य समुत्क्रान्त इत्यन्वयः । देवत्वं प्राप्य सह देवैरोषित आ उषितः सन् । ब्रह्म ब्रह्मलोकं शाश्वतं ब्राह्मायुःपरिमितम् ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

पञ्चमाक्षरस्य नादनामकस्य फलमाह—

अतः परतरं शुद्धं[2] व्यापकं निष्कलं शिवम् ॥
सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ १६ ॥

---

१ ग. स्मृता । २ ग. निर्मलं ।

अत इति । अतः परतरं परं ब्रह्मेत्यन्वयः । ज्ञेयमिति शेषः । पूर्वोक्तं[1] फलं परं तस्मादिदमुत्कृष्यत इति परतरम् । निष्कलं कला द्वादश मात्रास्तद्विषयातिगं निष्कलम् । यद्वा कलाः षोडश षष्ठप्रश्नोक्तास्तद्रहितम् । यतो ज्योतिषां मनआदीनां चक्षुरादीनां सूर्यादीनां चोदयः " तस्य भासा सर्वमिदं विभाति " इति श्रुतेः । कथमिदं लभ्यते यदा नादे धारणा भवति । किं नादधारणायाः फलं मनोलय एव ।

तदुक्तम्—"काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति ।
नादे प्रवर्तितं चित्तं नादेन सह लीयते" इति ॥ १६ ॥

तदेवाऽऽह—

अतीन्द्रियं गुणातीतं मनो लीनं यदा भवेत् ।
अनौपम्यमभावं च योगयुक्तं तदाऽऽदिशेत् ॥ १७ ॥

मनो लीनमिति । ननु मनोलये माध्यमि[क]वच्छून्यमेव तत्त्वं फलं स्यादत आह—आदिशेदिति । यदा मनो लीनं भवेत्तदाऽऽदिशेद्गुरुस्तदैव हि परमोऽधिकारो न तु मनागपि विषयाभिलाषे सति मुख्योऽधिकारः । अथवा तदाऽऽदिशेल्लब्धमिति कथयेन्मध्यस्थः । मध्ये मनोविशेषणानि । उपमैवौपम्यं स्वार्थे ष्यञ् । नौपम्यं यस्य मनसोऽनौपम्यम् । न भावयति चिन्तयत्यभावम् । जीवपरमात्मनोरैक्यं योगस्तद्युक्तम् । द्वितीयव्याख्यायां योगश्चित्तवृत्तिनिरोधस्तद्युक्तम् । अथवा योगयुक्तस्य मनसः किं लक्षणमत आह—मन इति । यदा मनो लीनं भवेत्तथाऽनौपम्यमभावं च तदा योगयुक्तं प्राप्तयोगमित्यादिशेत्कथयेदित्यर्थः ॥ १७ ॥

तद्भक्तस्तन्मनासक्तः शनैर्मुञ्चेत्कलेवरम् ।
सुस्थितो योगचारेण सर्वसङ्गविवर्जितः ॥ १८ ॥

तस्मिन्भक्तिर्यस्य तद्भक्तः । भक्त्या लभ्यस्त्वनन्ययेत्युक्तत्वात् । तस्मिन्मनो यस्य स तन्मनाः । असक्तो विषयेषु । छान्दसः संधिः । अथवा तन्मनाः सक्त इति पठनीयम् । सक्त आसक्तस्तत्रैव । योगचारेण योगमार्गेण सुस्थितः स्वस्थीभूतः ॥ १८ ॥

ततो विलीनपाशोऽसौ विमलः केवलः प्रभुः ।
तेनैव ब्रह्मभावेन परमानन्दमश्नुते परमानन्दमश्नुत इति ॥१९ ॥

इत्यथर्ववेदान्तर्गता नादबिन्दूपनिषत्समाप्ता ॥ १७ ॥

पाशाः कर्माणि । केवलः प्रभुर्जीवभावरहितः । द्विरुक्तिः समाप्त्यर्था । अत्र प्रणवस्य नादबिन्दोर्निरूपणादकारादित्रये सत्यपि प्राधान्यान्नादबिन्दूपनिषत्संज्ञा ॥ १९ ॥

---

[1] ङ °र्वोक्तफ° ।

नमः शिवाय गुरवे नादबिन्दुलयात्मने ।
निरञ्जनपदं यान्ति नित्यं वै यत्परायणाः ॥ १ ॥
नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका नादबिन्दुके ॥ २ ॥

इति नारायणविरचिता *नादबिन्दूपनिषद्दीपिका समाप्ता ॥ २३ ॥



* इय पञ्चबिन्दूपनिषन्मध्ये प्रथमा नादबिन्दूपनिषत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# नीलरुद्रोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

नीलरुद्रोपनिषदि षोडश्यां खण्डकत्रयम् ।
श्रुतिरूपेण तं देवं स्तौत्यपश्यमिति क्रमात् ॥ १ ॥

अस्पर्शयोगमुक्त्वा तत्संप्रदायप्रवर्तकं परमगुरुं योगसिद्धिप्रदं नीलरुद्रं स्तौति—

**ॐ अपश्यं त्वाऽवरोहन्तं दिवितः पृथिवीमवः ।**
**अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ॥**
**दिव उग्रोऽवारुक्षत्प्रत्यष्ठाद्भूम्यामधि ।**

**अपश्यमिति** । दिवितो दिवः । पृथिवीं भूमिमवोऽवस्तादवरोहन्तं त्वामहमपश्यमिति मन्त्रद्रष्टुर्वचः । अस्यन्तम् । असु क्षेपणे । क्षिपन्तं दुष्टान् । अनेनावतारप्रयोजनमुक्तम् । अयं ब्रह्मणः पुत्रः सनकादिषु सृष्टिमकुर्वत्सु ब्रह्मणः क्रोधादुत्पन्नः कुमारो रुरोद तेनाऽऽश्वास्य रुद्र इति नाम दत्तं तत एकादश स्थानान्येकादश नामान्येकादश पत्नीश्च ददौ तत्सृष्टानां रुद्राणामसंख्याततां दृष्ट्वा तं भयात्तपसे न्ययोजयत्स भुवि तपश्चचारेतीतिहासः । शिखण्डिनम् । "शिखण्डो बर्हचूडयोः" इति विश्वः । तयोरन्यतरदस्यास्तीति शिखण्डी तं दिवः सकाशादुग्रो रुद्रोऽवारुक्षदवतीर्णवान् । प्रत्यष्ठात् । प्रतिष्ठां स्थितिं कृतवान् । भूम्यामधि । अधिरीश्वर इत्यधिः कर्मप्रवचनीयः । यस्मादधिकं यस्य चेश्वरवचनमिति सप्तमी । भूमेरीश्वर इत्यर्थः ।

**जनासः पश्यतेमं नीलग्रीवं विलोहितम्[१] ॥**
**एष एत्यवीरहा रुद्रो जलासभेषजीः ।**
**वि तेऽक्षेममनीनशद्वातीकारोऽप्येतु ते ॥**

जनासः । आज्जसेरसुक् । संबोधने चेति प्रथमा । एत्यागच्छति । न वीरहाऽवीरहा सौम्यः । यद्वाऽवीराणि पापानि हन्त्यवीरहा । एत्याऽऽगत्य वीरान्दैत्यान्हन्तीति वा । जल आसः क्षेपो यासां ता जलासाश्च ता भेषज्यश्च ता एतीत्यन्वयः । जलक्षिप्तानामोषधीनाममङ्गलनाशकत्वं रुद्रसंनिधानादेव । यद्वा समुद्रमथनावसरे समुद्रे

---

१ ष. सुलोहितम् ।

क्षिप्तानामोषधीनामुद्भूतं विषं पातुमवतीर्णत्वादेवमुक्तम् । ते तव लोकस्याक्षेमं व्यनीनशत् । अनेन क्षेमकारित्वमुक्तम् । अलब्धलाभो योगस्तत्कारित्वमप्याह । **वार्तीकार इति ।** वार्तिः प्राप्तिः । अप्राप्तं प्राप्तं करोतीति वार्तीकारः सोऽपि ते तवापूर्वलाभकरोऽप्येत्वागच्छतु । योगक्षेमकरोऽभिषेकजले संनिहितो भवत्वित्यर्थः । मन्त्रलिङ्गादभिषेके विनियोगः ।

**नमस्ते भव भामाय नमस्ते भव मन्यवे ।**
**नमस्ते अस्तु बाहुभ्यामुतोत इषवे नमः ॥**

भामः क्रोधः । मन्युस्तत्पूर्वावस्था । उतापि । उतेषवे बाणरूपाय ।

**यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।**
**शिवां गिरित्र तां कृणु मा हिंसीः पुरुषान्मम ॥**

अस्तवे । असु क्षेपणे तवेन्प्रत्ययस्तुमर्थे । अस्तुं क्षेप्तुमित्यर्थः । कं क्षेप्तुं गिरिशन्तं श्यति श्यन्गिरेः श्यन्गिरिश्यन्संबन्धसामान्ये षष्ठ्या समासः । तं गिरिशन्तम् । छान्दसो यमलोपः । यद्वा कंशंभ्यां बभयुस्तितुतयसः । शमस्यास्ति शन्तो गिरिणा शन्तः सुखी पर्वतोत्पन्नत्वादिषोः । हे गिरित्र गिरिरक्षक तां शिवां कल्याणीं कुरु ।

**शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।**
**यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥**
**या त इषुः शिवतमा शिवं बभूव ते धनुः ।**
**शिवा शरव्या या तव तया नो मृड जीवसे ॥**

अच्छा वदामसि । अच्छ निर्मलं वदामः । अच्छशब्दस्य निपातस्य चेति दीर्घः । इदन्तो मसि । इदनर्थको निपातः । अयक्ष्मं नीरोगम् । सुमनाः सुमनस्कम् । असद्भवेत् । लिङर्थे लेट् । तिप् । इतश्च लोपः परस्मैपदेषु । लेटोऽडाटावित्यट् । शरव्या शरसंधात्री ज्या 'शरो दध्यग्रबाणयोः' इति विश्वः । शरमर्हति यत् । अवृशरस्य चेत्यवादेशः । शरुशब्दाद्वा सिद्धम् । शरुरायुधकोपयोः । उगवादिभ्यो यत् । जीवसे जीवितुं मृड मोदय । यद्वा हे मृड तया तन्वा नोऽस्माञ्जीवसे जीवयसि ।

**या ते रुद्र शिवा तनूरघोरा पापकाशिनी ।**
**तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशत् ॥**
**असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहितः ।**
**ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो वैषां**
**हेड ईमहे ॥ १ ॥**

---

१ ख. ग. हिंसीत्पुरु ।

शंतमया। अतिशयेन शं शंतमा तया। अभिचाकशत्। कशेर्यङ्लुङन्ताल्लेट्तिबट्। अतिशयेन प्रकाशयत्विति प्रार्थना। बभ्रूः पिङ्गलो वैषां ह ईडे स्तुतये। ईमहे कामयामहे। विष्णुपक्ष आभीराः॥ १॥

अदृश्यं त्वाऽवरोहन्तं नीलग्रीवं विलोहितम्।
उत त्वा गोपा अदृशन्नुत त्वोदहार्यः॥
उतो त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः॥

गोपा गोपाला अदृशन्नपश्यन्। उदहार्यः पानीयहारिण्यः। विश्वा विश्वानि भूतानि। अदृशन्। योगिनामप्यदृश्यं त्वां कृपयाऽऽविर्भवन्तमादित्यवत्प्रकाशमानं पामरा अपि ददृशुरित्यर्थः।

नमोऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने।
अथो ये अस्य सत्त्वानस्तेभ्योऽहमकरं नमः॥

वाजिनेऽन्नवते बाणरूपाय वा। सीदन्ति सत्त्वानो गणाः।

नमांसि त आयुधायानातताय धृष्णवे।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने॥
प्रमुञ्च धन्वनस्त्वमुभयो राज्ञोर्ज्याम्।
याश्च ते हस्त इषवः परा ता भगवो वप॥

नमांसि नमस्काराः। नाऽऽततायानातताय। धृष्णवे प्रगल्भाय। बाहुभ्यां कृत्वा धन्वने नमोऽकरवमित्यर्थः। उभयोरारिप्रत्यारिभूतयो राज्ञोर्धन्वनोर्ज्यां पारिप्रमुञ्चानाततां कुरु। राज्ञोर्विग्रहे लोकानां क्लेशो भवति ततस्तं शमयेति भावः। हे भगवो यास्ते हस्त इषवो बाणास्ताः परा वप पराङ्मुखान्मुञ्च। त्वमपि कोपं लोकेषु मा कृथा इति भावः।

इन्द्ररूपेण जगद्रक्षेति प्रार्थयते—

अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे।
निशीर्य शल्यानां मुखा शिवो नः शंभुराभर॥
विज्यं धनुः शिखण्डिनो विशल्यो बाणवाँ उत।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः॥

अवतत्येति। अधिज्यं कृत्वा। सहस्राक्ष शक्ररूप। शतमिषुधयस्तूणा यज्ञरूपा यस्य तत्संबोधनम्। निशीर्य तीक्ष्णीकृत्य मुखा मुखानि नोऽस्मान्शिवः कल्याणरूपः शंभुः सुखहेतुः सन्नाभर धारय पोषय। बाणवांस्तूणीरो विशल्योऽस्तु। शल्यरहितो भवतु। वैरिषु हतेषु तत्प्रयोजनाभावात्। अनेशन्नदृश्या अभूवन्। नशिमन्योरलिट्येत्वमिति वार्तिकेन लुङि पुषाद्यङ्येत्वम्। निषङ्गतिः। निषङ्गः।

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तया त्वं विश्वतो अस्मानयक्ष्मया परिभुज ॥

विश्वतः सर्वतोऽस्मान्परिवृणक्तु परिवृत्य रक्षतु । अरे संबोधने । अथो पश्चाद्रक्षणानन्तरं यस्तवेषुधिरस्मिन्निषुधौ तां हेतिं बाणं निधेहि स्थापय । हे मीढुष्टम मीढवत्तमेत्यर्थः । सेचकतम । अयक्ष्मया सज्जया तया हेत्या परिभुज परिपालय ।

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
ये चामी रोचने दिवि ये च सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २ ॥

सदस्कृतं गृहं कृतम् । यातुधानानां रक्षसां वनस्पतीनां चेषवः सर्पास्ते हि जनान्दशन्ति । अवटेषु गर्तेषु ॥ २ ॥

केदाराधीशमहिषस्वरूपं स्तौति—

यः स्वजनान्नीलग्रीवो यः स्वजनान्[१] हारिरुत ।
कल्माषपुच्छमोषधे जम्भयाऽऽश्वरुन्धाति ॥

य इति । यः शिवः स्वजनान्भक्तान्प्रति नीलग्रीवः । यश्च स्वजनान्भक्तान्प्रति हारिर्हरितवर्णो भक्तवत्सलो न भवति । महिषस्य हि तादृग्रूपं संभवति । यद्वा नीलग्रीवो रुद्रो हारिर्विष्णुश्च भवति । अनेन हारिहरयोरेकरूपतोक्ता । हे ओषधे । अरुन्धति रोधरहिते तं कल्माषपुच्छं कृष्णपाण्डुरपुच्छम् । आशु शीघ्रं जम्भय स्ववीर्येण वीर्यवन्तं कुरुषे । ओषधीनां पशुभ्यो बलप्रदत्वात् । " कल्माषो राक्षसे कृष्णे कल्माषः कृष्णपाण्डुरे " इति विश्वः । केदारेश्वरस्य महिषरूपत्वात्पुच्छवत्ता संभवति ।

बभ्रुश्च बभ्रुकर्णश्च नीलागलशीलाः शिवः ।
पश्य सर्वेण नीलशिखण्डेन भवेन मरुतां पिता ॥
विरूपाक्षेण बभ्रुणा वाचं वदिष्यतो हतः ।
सर्वनीलशिखण्डेन वीर कर्माणि कर्माणि ॥

---

१ क. ग. य. स्ते हे ।

बभ्रुः क्वचिदवयवे पिङ्गलवर्णः । बभ्रुकर्णः पिङ्गलवर्णकर्णः । नीलागलशीलाः शिव इत्यत्र नीलग्रीवश्च यः शिव इति पाठो युक्तः । पितेति । तृतीयार्थे प्रथमा पित्रेत्यर्थः । अथ वाचं वदिष्यतः पिता देहिमात्रस्य जनको ब्रह्मा येनेश्वरेण हतस्तं त्वं पश्येत्यन्वयः । हे वीर कर्मणि कर्मणि विहितनिषिद्धरूपे ।

**इमामस्य प्राशं जहि येनेदं विभजामहे ।**
**नमो भवाय नमः शर्वाय नमः कुमाराय शत्रवे ॥**
**नमो नीलशिखण्डाय नमः सभाप्रपादिने ॥**

इमामस्य जनस्य । प्राशं पृच्छतीति प्राट् तां प्राशं प्रच्छिकां वाचम् । जहि वेदविहितं निषिद्धकर्मविषयं संशयं निराकुर्वित्यर्थः । येन कर्मणेदं जगद्विभजामहे कर्मभूमिभोगभूमिरूपेण विभक्तं कुर्महे । कुमाराय कालानभिभूताय स्कन्दरूपाय वा । शत्रवे संहर्त्रे । सभाप्रपादिने सभां प्रपद्यते तच्छीलः सभाप्रपादी तस्मै सभ्यायेत्यर्थः ।

**यस्य हरी अश्वतरौ गर्दभावभितःसरौ ।**
**तस्मै नीलशिखण्डाय नमः सभाप्रपादिने**
**नमः सभाप्रपादिन इति ॥ ३ ॥**

**इत्यथर्ववेदे नीलरुद्रोपनिषत्समाप्ता ॥ १८ ॥**

अश्वतरौ, ईषदूनमश्वत्वं ययोस्तावश्वतरौ गर्दभादश्वायां जातौ । अभितःसरावभितः सरत इत्याभितःसरौ गर्दभौ वर्तेते । यथा पुरुषोत्तमक्षेत्रस्य नीलमाधवोऽधिष्ठातैवं केदारक्षेत्रस्य नीलरुद्रः । द्विरुक्तिः समाप्त्यर्था ॥ ३ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां नीलरुद्रस्य दीपिका ॥ १ ॥

इति नारायणविरचिता नीलरुद्रोपनिषद्दीपिका समाप्ता ॥ २४ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# परमहंसोपनिषत् ।

## नारायणशंकरानन्दविरचितदीपिकाभ्यां समेता ।

ॐ भद्रं कर्णेभिः शृणुयाम देवाः० । स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो

---

नारायणविरचितदीपिकारम्भः ।

बुद्धात्मा परमो हंसस्तस्योपनिषदुच्यते ।
त्रिखण्डाऽथर्वशिखरे चत्वारिंशत्तमी तता ॥ १ ॥

**संन्यासोपनिषदा** परमहंससंन्यास उक्तः । **हंसोपनिषदि** च योग उक्तस्तत्र प्राप्तयोगस्य ज्ञानिनः कीदृशी लोके स्थितिरिति संदिह्यते ।

यदुक्तम्—" स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् " ॥ इति ।

तथाच पामरत्वशङ्कयाऽवज्ञा स्यात्ततो महान्प्रत्यवाय इत्येतत्स्वरूपज्ञानाय **परमहंसोपनिषदारभ्यते—अथ योगिनां परमहंसानामिति** । योगश्चित्तवृत्तिनिरोधस्तद्वन्तो

---

शंकरानन्दविरचितदीपिकारम्भः ।

साध्वी परमहंसादिनामकोपनिषत्सुधा ।
पदावलोकनात्तस्या अर्थमाविष्करोम्यहम् ॥ १ ॥

यद्यप्यपौरुषेये वेदे न कोऽपि वक्ताऽत एव न प्रष्टाऽपि तथाऽपि भगवानस्माननुजिघृक्षुरेकं वक्तारं परं प्रष्टारं च लोकवदङ्गीकृत्याऽऽस्तिक्यबुद्धिसंरक्षणार्थं ब्रह्मनारदावुररीकृत्य प्रख्यातपौरुषौ सर्वज्ञकल्पौ वक्तृप्रष्टारौ संगृह्य परमहंसधर्मानाह— **अथ** नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागशमदमादिसाधनसंपत्तिमुमुक्षुत्वानन्तरम् । **योगिनां** यमनियमासनप्राणायामप्रत्याहारजीवपरमात्मैक्यवस्तुधारणाध्यानसमाधिभाजाम् । **परमहंसानां** तुरीयाश्रमतुरीयाभेदवताम् । **कः** प्रश्ने । **अयं** सर्वलोकविद्विष्टः शिखायज्ञोपवीतसंध्यावन्दनादिशून्यः प्रत्यक्षमुपलभ्यमानः । **मार्गः** पन्थाः साधुसेवितः श्रुतिमूल आहोस्विद्दुर्जनरमणीयः कुतर्कमूल इत्यर्थः । यदा साधुसेवितः श्रुतिमूलस्तदाऽपि **तेषां** योगिनां परमहंसानाम् । **का** प्रश्ने । **स्थितिः** करणीयमिति यावत् । **इत्यनेन** प्रकारेण । **नारदो** ब्रह्मणो मानसः पुत्रः । अरिसंबन्ध्यारं कामक्रोधादिजं दुःखं तद्ददाति

**ना०दी०**योगिनः परमहंसाश्चोत्पन्नतत्त्वज्ञानाः। तत्र निरुद्धचित्तोऽप्यणिमादिसिद्धिषु वियु(मु)क्तिदशायां समासक्तः सन्नात्मनि संशीतो विपर्यस्तश्च परमपुरुषार्थाद्भ्रश्यतीति परमहंसपदम्। परमहंसश्च तत्त्वविवेकेनैश्वर्येष्वसारतां बुद्ध्वा विरज्यति।

तदुक्तम्—" चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः।
इत्यस्याऽऽश्चर्यजालेषु नाभ्युदेति कुतूहलम् " ॥ इति।

परमहंसो विद्याबलेन विधिनिषेधाल्लँङ्घयति ततः शिष्टविगानं स्यात्।

तदुक्तम्—" सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः " ॥ इति।

तदर्थं योगिग्रहणम्। अधिकारप्राप्तनिष्कामकर्मानुष्ठानमपि योग एव। विशेषणद्वयेन स्थितप्रज्ञत्वगुणातीतत्वासङ्गत्वादयोऽपि विशेषा दर्शिताः। यदुक्तं प्रश्नप्रतिवचनाभ्यां **वासिष्ठे**—

राम उवाच—" एवं स्थिते हि भगवञ्जीवन्मुक्तस्य संमतः।
अपूर्वातिशयः कोऽसौ भवत्यात्मविदां वर ॥

वसिष्ठ उवाच—तस्य कस्मिंश्चिदेवांशे भवत्यतिशयेन धीः।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ॥
मन्त्रसिद्धैस्तपःसिद्धैस्तन्त्रसिद्धैश्च भूरिशः।
कृतमाकाशयानादि तत्र का स्यादपूर्वता ॥
एक एव विशेषोऽस्य न समो मूढबुद्धिभिः।
सर्वत्राऽऽस्थापरित्यागः सदा निर्वासनं मनः ॥

एतावदेव खलु लिङ्गमलिङ्गमूर्तेः संशान्तसंसृतिचिरभ्रमनिर्वृतस्य।
तज्ज्ञस्य जन्मदवकोपविषादमोहलोभापदामनुदिनं निपुणं तनुत्वम् " ॥ इति।

को मार्ग इति प्रष्टव्यः। अयमिति वचनमदृष्टपूर्वं प्रत्यक्षतो दर्शयेति प्रश्नार्थम्। प्रकृतान्वयेनैव सिद्धे पुनस्तेषामिति वचनं गौरवार्थम्। नारदो ब्रह्मपुत्रो देवर्षिः। भगवन्तं सनत्कुमारम्। स हि नारदाय शोकतरणाय भूमानमुपदिष्टवान्। यथा छन्दोगानामाम्नातम्—"अधीहि भगव इति होपससाद सनत्कुमारं नारदः" इत्यारभ्य "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः" इत्यन्तेन। स ततो लब्धसाक्षात्कारो मार्गस्थिती पृच्छति विज्ञानदार्ढ्याय। उपागम्य न्यायेनोपसन्नः सन्नुवाच प्रपच्छ। उपक्रमस्तमिति। आह ब्रवीति कालसामान्ये लट्। श्रद्धातिशयाय प्रशंसा-

---

शं०दी०यः स आरदः। अयं तु तद्विपरीतो नारदः। अथवाऽरदो दन्तशून्यो वृद्धः सर्वोपायपरिक्षीणः शून्य इत्यर्थः। अयं तु तद्विपरीतो नारदः। अथवा नारं नरसंबन्धिसुखं वैषयिकं तज्ज्ञानवैराग्याभ्यां स्वस्यान्यस्य च द्यति खण्डयतीति नारद इति सार्थकनामधारी।

**भगवन्तमुपगत्योवाच । तं भगवानाह । योऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतस्थः**

**ना०दी०**माह—**योऽयमिति** । यः पृष्टः सोऽयं मनसि स्फुरन् । परमकाष्ठां प्राप्तस्य वैराग्यस्यातिदुश्चरत्वाद्दुर्लभतरत्वस्यात्यन्ताशवयत्वमाशङ्क्याऽऽह—**न त्विति** । बाहुल्यमस्यास्तीति बाहुल्योऽर्शआद्यच् । अयं मार्गोऽतिदुर्लभश्चेन्नाऽऽदर्तव्यः "अतिक्लेशेन ये अर्था अनर्थास्ते मता मम" इति न्यायादित्याशङ्क्याऽऽह—**यदीति** ।

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" ॥

इति न्यायेन यद्येकः कश्चिद्भवति पुरुषधौरेयः । यथा जाबालोपनिषदुक्तम्—"तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः" इति । स एव नित्यपूतस्थः । नित्यपूतः परमात्मा तत्र तिष्ठति नित्यपूतस्थः स एव न केवलयोगी

**शं०दी०भगवन्तं** समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन्तम् । **उपगत्य** ब्रह्मलोकेऽपराजितायां पुरि हिरण्मयसभायां संपत्समृद्धायामासीनं चतुराननं समस्तजीवघनं हिरण्यगर्भं समित्पाणिर्विनयादिसंपन्नो यथाशास्त्रं समीपमागत्योवाचोक्तवान् । तमुक्तविशेषणं नारदं **भगवानुक्तविशेषणो हिरण्यगर्भ आहोक्तवान्** । योगिनां परमहंसानां कोऽयं मार्ग इति प्रश्नस्य साधुसंसेवितः श्रुतिमूल इत्युत्तरमाह—**यः** प्रसिद्धो वैराग्यसमनन्तरक्षणभावी चतुर्णामाश्रमाणाम् । तव पुत्रानित्यारुण्यादिश्रुतेः । **अयं** भवता मुमुक्षुत्वादिनाऽऽदिष्टः । **परमहंसमार्गः** परमहंसानां तुरीयतुरीयाश्रमाणां मार्गः पन्थाः परमहंसमार्गः । **लोके** महर्लोकादिभुवने जने वा । **दुर्लभतरो** दुःखेन महता क्लेशेनानेकभवार्जितानेकपुण्यपुञ्जैर्लभ्यो दुर्लभस्तुरीयाश्रमः । तुरीयतुरीयस्त्वतिशयेन दुर्लभो दुर्लभतर इत्यर्थः । दुर्लभत्वमुपपादयति—**न तु बाहुल्यः,** न तु बहुलः । यद्ययं सुलभः स्यात्तदाऽधिकोऽप्युपलभ्येत गृहस्थादिवत् । न च बहुलोऽधिक उपलभ्यते ततो दुर्लभतर इत्यर्थः । ननु यदि नैव बहुलस्ततो दुर्लभतरस्तन्नैवं दृष्टो वैपरीत्यादित्यत आह—**यद्येको भवति** । कथंचिद्बहुल उपलभ्यते चेत्तीर्थादौ तत्रापि प्रत्येकं देशग्रामं कुलादौ विचारिते सत्येको भवति न त्वनेकः । ननु तथाऽपि वेदाध्ययनादिसंन्यासाच्छूद्रसमानता शङ्कितुं शक्येतात आह—**स एव** यस्तु शिखायज्ञोपवीतवेदाध्ययनादित्यागी स एव न त्वन्यो यज्ञोपवीतादिमान् । **नित्यपूतस्थो** नित्यं सर्वदा कालत्रयेऽप्यशेषविशेषशून्यत्वेन पूतं पवित्रं शिखायज्ञोपवीतवेदाध्ययनादित्यागशुद्धिकारणं सत्यं ज्ञानमनन्तमानन्दात्मस्वरूपं यद्ब्रह्म तस्मिन्निदमहमस्मीत्यैक्येनावतिष्ठत इति नित्यपूतस्थो यतस्ततः शिखायज्ञोपवीत-

१ क. °मुपागम्योवा° । ग. °मुपागत्यो । २ ख. °पसमेत्यो° ।

**स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत्सर्वदा मय्येवावतिष्ठते तस्मादहं च**

**ना०दी०** वाऽ(ना)पि केवलपरमहंसः । स एव वेदपुरुषो वेदप्रतिपाद्यः पुरुषो ब्रह्मेति विदुषो विद्वांसो ब्रह्मानुभवचित्तविश्रान्तिप्रतिपादकशास्त्रपारं गता मन्यन्ते । विभक्तिव्यत्ययः । तस्य ब्रह्मनिष्ठत्वं त्वन्येऽपि मन्यन्ते विद्वांसस्तु ब्रह्मत्वमेव मन्यन्ते ।

तथाच स्मृतिः—"दर्शनस्पर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम्" ॥ इति ।

न तु बाहुल्योऽपि यद्येकोऽपीत्यापि शब्दद्वयमार्यपाठे दृश्यते तत्र पदार्थेऽपिशब्दावल्पतां द्योतयतः । नित्यपूतस्थत्वं वेदपुरुषत्वं च मुखतो विशदयन्नर्थात्का स्थितिरिति प्रश्नस्योत्तरं सूचयति—**महापुरुष इति** । महापुरुषत्वे हेतुर्यद्यस्माच्चित्तं सर्वदा मय्येव भगवत्यात्मन्यवतिष्ठते तत्तस्मान्महापुरुषः । संसारगोचराणां मनोवृत्तीनामभ्यासवैराग्याभ्यां निरुद्धत्वादात्मन्येव स्थापनात् । भगवाञ्शास्त्रसिद्धं परमात्मानं स्वानुभवेन परामृशन्मयीति व्यपदिशति । यस्माद्योगी मय्येव चित्तं स्थापयति तस्मादहं चाहमपि पर-

**शं०दी०** वेदाध्ययनादिपरित्याग्यपि न शूद्रादिसमानत्वेन शङ्कनीयः किं तु **स एव** यो नित्यपूतस्थो न त्वन्यो वेदाध्ययनादिमानपि । **वेदपुरुष** ऋगादीन्वेदान्साङ्गानन्यविद्यास्थानैः सहितान्पाठतोऽर्थतश्च योऽवगच्छति स वेदपुरुषः । अयमर्थः । केशयज्ञोपवीतादिधारणे वेदाध्ययनादौ च पुण्यं भवतीति शास्त्रमन्तरेण न प्रमाणमस्ति तत्रैतत्परित्यागोऽपि शास्त्रेणोच्यते तथैव भवतु को निर्बन्धः सूरीणां केशिनां पाठकानां च । नन्विदं संदिग्धमस्तीत्यत आह—**इति विदुषो मन्यन्त इति** । यो नित्यपूतस्थः शिखादिरहितोऽपीत्यनेन प्रकारेण विद्वांसो मदाद्याः सर्वज्ञाः साध्ववगच्छन्तीति । ननु यो वेदपुरुषः स भगवानन्यस्तूपचारितस्तर्हि कालात्मानं भवन्तं हिरण्यगर्भं विहायान्योऽकालात्मा न मुख्यो वेदपुरुष इत्यत आह—**महापुरुषः**, महान्कालत्रयशून्यत्वेन कालात्मा स चासौ पुरि शयानोऽपि परिपूर्णः पुरुषो महापुरुषः । मत्तो भेदशून्य इत्यर्थः । ननु प्रत्यक्षविरुद्धमिदं यतो भवान्ब्रह्मलोकेऽन्योऽन्यश्चायं परमहंस आकृत्यादिभेदादित्यत आह—**यत्प्रसिद्धं** सर्वभेदकारणं स्वप्नादौ **चित्तमन्तःकरणं** शुभाशुभवासनावासितं तदुक्तमन्तःकरणं **सर्वदा** सदैतच्छरीरानेतच्छरीरनिवासगमनागमनादिकाले, **मय्येवा**पगतसकलदुःखाकारेणाऽऽनन्दात्मनि न तु मायातच्छरीरादिरूपे**ऽवतिष्ठते**ऽयमहमस्मीत्यैक्यभावेनावस्थानं कुरुते । ततो नैव प्रत्यक्षविरोध इत्यर्थः । ननु सर्वोऽपि निसर्गसुन्दरे वस्तुनि चित्तं लीनं दधाति तथाऽपि कथं तदात्मत्वमित्यत आह—**तस्माद्य**स्मान्मय्येवावतिष्ठते भेदशून्यत्वेन ततो**ऽहं च** निसर्गसुन्दर आनन्दात्मा सर्वप्रियतमश्चापि

**तस्मिन्नेवावस्थीयते[1] । असौ स्वपुत्रमित्रकलत्रबन्ध्वा-
दीञ्शिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि**

**ना० दी०** मात्मा स्वरूपत्वेन तस्मिन्नेव योनिप्रादुर्भूतोऽवस्थीयतेऽवतिष्ठे ।पुरुषादिव्यत्ययः। नान्येषु योगज्ञानहीनेषु । इदानीं पृष्टं मार्गमुपदिशति—असाविति । असौ जनकया-ज्ञवल्क्यादिन्यायेन गार्हस्थ्य एवोत्पन्नज्ञानोऽयं विद्वांश्चित्तविश्रान्तिसिद्धये स्वपुत्रादि संन्यस्य कौपीनादि परिग्रहेत् । यद्यपि विदुषोऽर्थसिद्ध एव संन्यासस्तथाऽपि ज्योति-ष्टोमे ‘ कृष्णाविषाणया कण्डूयति ’ इति विहिताया विषाणाया यागान्तेऽर्थसिद्धेऽपि त्यागे ‘ नीतासु दक्षिणासु चात्वाले कृष्णाविषाणां प्रास्यति ’ इतिप्रतिपत्तिवदयं लौकिको वैदि-कश्च त्यागः ।

न च—“ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ” ॥

इति स्मृतिविरोधः सत्यपि ज्ञाने विश्रान्तिरहितस्य तृप्त्यभावेन विश्रान्तिसंपादनलक्ष-णकर्तव्यसद्भावेन कृतकृत्यत्वाभावात् । चित्तविश्रान्तिप्रतिबन्धवारणस्य दृष्टफलस्य संभ-वेन श्रवणादिविधिवन्नात्रादृष्टफलकल्पना । तस्माद्विविदिषुरिव विद्वानपि गृहस्थो नान्दी-मुखश्राद्धोपवासजागरणादिविधिपूर्वकमेव संन्यसेत् । प्रकृतिवद्विकृतिन्यायेनात्र विविदि-षासंन्यासवत्प्रैषमन्त्रेणैव पुत्रवित्तादित्यागः । बन्ध्वादीत्यादिशब्देन भृत्यपशुगृहक्षेत्रादि-लौकिकपरिग्रहादिविशेषाः संगृह्यन्ते । स्वाध्यायं चेति चकारेण तदर्थोपयुक्तानि पदवा-क्यप्रमाणशास्त्राणि वेदोपबृंहणादीनीतिहासपुराणानि च समुच्चिनोति । औत्सुक्यनिवृ-त्तिमात्रप्रयोजनानां काव्यनाटकादीनां त्यागः कैमुतिकन्यायसिद्धः । सर्वकर्माणीति सर्वश-ब्देन लौकिकवैदिकानित्यनैमित्तिकनिषिद्धकाम्यानि संगृह्यन्ते । पुत्रादित्यागेनैहिकभोगाः

**शं० दी० तस्मिन्नेव** नित्यपूतस्थे वेदपुरुषे परमहंसे न त्वन्यस्मिन्भेददर्शिनि । अवस्थीय-तेऽवतिष्ठे । परमहंसोऽहमस्मीति भेदशून्यत्वेन स्थितोऽस्मीत्यर्थः । कोऽयं मार्ग इत्यस्यो-त्तरमुक्त्वा का स्थितिरित्यस्योत्तरमाह—असावुक्तः परमहंसः । **स्वपुत्रमित्रकलत्रब-न्ध्वादीन्**स्वस्य डित्थादिनामवतो ब्राह्मणत्वाद्यभिमानिनो देहस्य पुत्रा औरसप्रभृतयः । मित्राण्यादावात्मनोपकृतानि ब्राह्मणत्वाद्यभिमानीनि शरीराणि स्वात्मन उपकारकर्तॄणि[2] । कलत्राणि ब्राह्मादिविवाहप्राप्तानि स्वात्मनः स्त्रीत्वमानीनि शरीराणि । बन्धवः पितृमातृ-योनिसंबन्ध्यादयो ब्राह्मणत्वादिमानिनो देहाः । आदिशब्देन स्वकृतक्षेत्रगृहादयः । तान्स्वपुत्रमित्रकलत्रबन्ध्वादीन् । शिखायज्ञोपवीते प्रसिद्धे त्रैवर्णिककर्मकारणे । **स्वाध्यायं च** वेदाध्ययनमुपनिषद्वर्जितम् । चशब्दाद्देशकुलादिकम् । **सर्वकर्माणि** ।

१ क. ख. ‘न्नेव स्थी’ । २ ख. ‘त्रि स्थितः । अ’ ।

**संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च**

**ना०दी०** परिहृताः। सर्वकर्मत्यागेनाऽऽमुष्मिकभोगाशा चित्तविक्षेपकारिणी परिहृता। अयमसौ परिग्रहेदित्यन्वयोऽयमस्म्यहमागममितिवत्। **ब्रह्माडं चेति**। ब्रह्माण्ड-त्यागो नाम तत्प्राप्तिहेतोर्विराडुपासनस्य त्यागः। चकारेण सूत्रात्मप्राप्तिहेतोर्हिरण्यगर्भो-पासनस्य तत्त्वज्ञानहेतूनां श्रवणादीनां च समुच्चयः। स्वपुत्रादिहिरण्यगर्भोपासनान्तमैहि-कमामुष्मिकं च सर्वं प्रैषमन्त्रोच्चारणेन परित्यज्य कौपीनादिकं परिगृह्णीयात्। **आच्छा-दनं चेति**। चकारेण पादुकादिपरिग्रहः समुच्चितः।

यत्स्मृतिः—"कौपीनयुगुलं वासः कन्थां शीतनिवारिणीम्।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्" ॥ इति।

स्वशरीरोपभोगो नाम कौपीनेन लज्जाव्यावृत्तिः। दण्डेन गोसर्पाद्युपद्रवपरिहारः। आच्छादनेन शीतादिपरिहारः। चकारेण पादुकाभ्यामुच्छिष्टदेशस्पर्शादिपरिहारं समु-च्चिनोति। लोकस्योपकारो नाम दण्डादिलिङ्गैर्नैतदीयमुत्तममाश्रमं परिज्ञाय तदुचिताभि-

**शं०दी०** निखिलकर्माणि संध्यावन्दनाग्निहोत्रादीन् (नि)। **संन्यस्य** सम्यग्यथाशास्त्रं पुन-रादानशून्यत्वेन परित्यज्य। **अयं** नानाकार्योपासनफलभूतं शरीरान्तरप्राप्यं वासनासूत्रप-टरूपं मनोमर्कटोद्यानम्। **ब्रह्माण्डं च** भूम्यादिसप्तावरणवेष्टितं नारिकेलफलाभं भूगोलकम्। चशब्दादेतदन्तर्बहिश्च वर्तमानान्विविधान्मायाविलासान्नियमादीन्। **हित्वा** न ममैत-स्मिञ्शरीरे शरीरान्तरे वा भूयादिति संकल्पेन परित्यज्य। यदाऽऽत्मविविदिषुस्तदा सन्मार्गवद्द्विजैनैतत्प्रार्थित उत्तराशाविनिर्गतो यथाजातरूपधर उपदेष्ट्रा चानुज्ञातः। **कौपीनं** कुत्सितं लोकलज्जाकरं मेढ्रादिकं पीनं पीवरमांसं कुपीनं तदाच्छादकं कौपीनं लोकलज्जाकरनिवारकं वस्त्रमित्यर्थः। **दण्डं** गोसर्पादिदर्शनेन दमनहेतुभूतमेकं वैणवम्। **आच्छादनं** वस्त्रम्। **च**शब्दात्पादुके अपि केशकीटास्थ्यादिदूषितभूम्यस्पर्शार्थम्। ननु कौपीनाच्छादनपादुकानां सकृत्स्वीकारेऽदृष्टसिद्धिः स्यादित्यत आह—**स्वशरीरोपभो-गार्थाय च**। स्वस्य परमहंसत्वमानिनः शरीरं नानावर्णोऽवयवो भूतावासस्तस्योपभोगः श्रवणविघ्नकारी लोकलज्जाशीतवातातपकण्टकवेधादिपरिहारकारणेन सेवनमुपभोगस्तदर्थं तत्प्रयोजनं स्वशरीरोपभोगार्थं स्वशरीरोपभोगप्रयोजनाय। नादृष्टाय तत्परिग्रह इत्यर्थः। चशब्दादाश्रमनिर्वाहाय च। ननु यस्य स्वशरीरोपभोगे नेच्छा तस्य कौपीनादिपरिग्र-होऽदृष्टार्थ एवेत्यत आह—**लोकस्य** स्वधर्मनिष्ठत्रैवर्णिकजनस्य भिक्षादिदातु**रुपका-रार्थाय चो**पकारो भिक्षादिदानेनादृष्टोत्पादनं श्रवणादिनाऽज्ञानहरणं च स एवार्थः

१ क. ख. ग. घ. °गय।

**परिग्रहेत्तच्च न मुख्योऽस्ति कोऽयं मुख्य इति चेदयं मुख्यः॥१॥**
**न दण्डं न शिखां न यज्ञोपवीतं नाऽऽच्छादनं चरति परमहंसः।**

**ना०दी०**क्षाप्रदानादिप्रवृत्त्या सुकृतसिद्धिः। चकारात्संन्यासाश्रममर्यादायाः शिष्टाचारप्राप्तायाः पालनं समुच्चीयते। कौपीनादिपरिग्रहस्यानुकल्पत्वमभिप्रेत्य मुख्यत्वं प्रतिषेधति—**तच्च न मुख्योऽस्तीति**। यत्कौपीनादिपरिग्रहणमस्ति तदस्य योगिनो मुख्यकल्पो न भवति किं त्वनुकल्प एव। विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यमिति दण्डवियोगस्य निषेधः स्मर्यते—

"दण्डात्मनस्तु संयोगः सर्वदैव विधीयते।
न दण्डेन विना गच्छेदिषुक्षेपत्रयाद्बुधः" ॥ इति।

प्रायश्चित्तमपि दण्डत्यागे प्राणायामशतं स्मर्यते—"दण्डत्यागे शतं चरेत्" इति। योगिनः परमहंसस्य मुख्यकल्पं पृच्छति—**कोऽयं मुख्य इति चेदिति**। उत्तरमयं मुख्य इति॥ १ ॥

अयं क इत्यत आह—**न दण्डमित्यादि**। **न शिखमिति**। छान्दसो ह्रस्वः। न स्वाध्यायमित्यपपाठः। चरति गच्छति। आदत्त इत्यर्थः। आच्छादनाद्यभावे शीतादिबाधायाः

**शं०दी०**प्रयोजनं तत्प्रयोजनायोपकारार्थाय। चकारादात्मनस्तत्त्वज्ञानार्थमपि। न ह्यविदुषो विरक्तस्य संन्यस्योत्तराशां गच्छत आत्यन्तिकी पुरुषार्थप्राप्तिरित्यर्थः। **परिग्रहेत्**परिग्रहेण स्वीकुर्यात्। स्वीकृत्य चेदं मदीयमिति योऽध्यासस्तं त्यजेदित्यर्थः। ननु तर्हि संवर्तकादिसंन्यासानाममुख्यत्वं तत्र दण्डादिपरिग्रहस्यादर्शनादित्यत आह—**तच्च** तत्कौपीनाच्छादनदण्डस्वीकरणमविदुषः। चशब्दादादौ स्वीकृत्य पश्चादुत्पन्ने ज्ञाने परित्यजनम्। **न मुख्योऽस्ति** मुख्यः संवर्तकाद्यनुष्ठितः संन्यास आत्मैक्यज्ञानात्स्वयंसंजातकौपीनाद्यपरिग्रहरूपो भवति। ननु व्याहतमिदमुच्यत इति मन्वानः पृच्छति—**कः** प्रश्ने। अयं परमहंसाश्रमः प्रत्यक्षः। **मुख्यः**, अनुपचरितपरमहंसशब्दाभिधेयः। इति चेदेवं यदि पृच्छसि तर्हि शृणु। अयमितः परं मयोच्यमानः संवर्तकाद्यनुष्ठितः। **मुख्यः**, व्याख्यातम्॥ १ ॥

**न दण्डं न शिखां न यज्ञोपवीतं नाऽऽच्छादनम्**, न दण्डो न शिखा। स्पष्टमन्यत्। परमहंसस्य। कण्टककीटवद्भूमौ वार्षिकांश्चतुरो मासानविहाय **चरति परमहंसः**। ननु शरीरे क्लेशो विदुषाऽपि संन्यासिना कर्तुं न शक्यत इत्यत आह—

१ ख. मुख्योऽस्तीति। २ ग. शिखं।

**न शीतं न चोष्णं न सुखं न दुःखं न मानावमाने च षडूर्मिवर्जं**
*** निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोह-**

**ना०दी०** कः प्रतीकार इत्यत आह—**न शीतमित्यादि** । निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतादि नास्ति । तत्प्रत्ययाभावाद्यथा वा बालस्य लीलासक्तस्य शीताद्यभाव एवं परमात्मन्यासक्तस्य योगिनः । **न चोष्णमिति** । वर्षाभावसमुच्चयार्थश्चकारः । शीतादिनिषेधे तज्जन्यसुखादेरभावान्न सुखमित्यादि । मानः पुरुषान्तरेण संपादितः सत्कारः । अवमानस्तिरस्कारः । यदा योगिनः स्वात्मव्यतिरिक्तं पुरुषान्तरमेव न प्रतीयते तदा मानावमानौ दूरापास्तौ । चकारः शत्रुमित्ररागादिद्वंद्वाभावं समुच्चिनोति । षडूर्मयः—"क्षुत्पिपासे शोकमोहौ जरा मरणमेव च" । तेषां त्रयाणां द्वंद्वानां क्रमेण प्राणमनोदेहधर्मत्वादात्मतत्त्वाभिमुखस्य योगिनस्तद्वर्जनं युज्यते । न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न मनोऽप्येवमित्यग्रन्थः शिष्टैरव्याख्याततवात् । अस्त्वेवं समाधिदशायां शीताद्यभावो व्युत्थानदशायां निन्दादिक्लेशः संसारिणमिवैनं बाधेतैवेत्यत आह—**निन्देति** । रोषमदावनर्षौ । विरोधिभिः पुरुषैः स्वस्मिन्नापादितदोषोक्तिर्निन्दा । अन्येभ्योऽहमधिक इति चित्तवृत्तिर्गर्वः । विद्याधनादिभिरस्य सदृशो भवामीति मतिर्मत्सरः । परेषामग्रे जपध्यानादिप्रकाशनं दम्भः । भर्त्सनादिषु बुद्धिर्दर्पः । धनाद्यभिलाष इच्छा । शत्रुवधादिषु बुद्धिर्द्वेषः । अनुकूललाभेन बुद्धिस्वास्थ्यं सुखम् । तद्विपर्ययो दुःखम् । योषिदाद्यभिलाषः कामः । कामितार्थविघातजन्यो बुद्धिविक्षोभः क्रोधः । प्राप्तस्य धनस्य त्यागासहिष्णुत्वं लोभः । हितेष्वहितबुद्धिरहितेषु च हितबुद्धिर्मोहः । चित्तगततुष्ट्यभि-

**शं०दी० न शीतं न चोष्णं न सुखं न दुःखम्** , चकारो वायोरपि समुच्चयार्थः। स्पष्टमन्यत् । **न मानावमाने च**, मानावमानौ । मानः शरीरपूजादौ संतोषस्तद्विपरीतोऽवमानस्तौ न भवतो विदुष इति शेषः । चकारो द्वैतदर्शनाभावार्थः । अत एव **षडूर्मिवर्जं** षट्संख्याका ऊर्मयः संसारसमुद्रस्य कल्लोलाः प्राणबुद्धिशरीरधर्मा अशनायापिपासाशोकमोहजरादयस्तद्वर्जम् । तद्वर्जितत्वेऽपि विदुषः स्वसंबन्धित्वेन न प्रतीयन्त इत्यर्थः । **निन्दागर्वमत्सराः** । निन्दा स्वस्याविद्यमानदोषसंकीर्तनं परैः । यद्यप्येतद्वर्जनं स्वेनानुष्ठातुमशक्यं तथाऽपि तत्कर्णपथप्रवेशेन तज्जविषादवर्जनमत्र लक्षितम् । अथवाऽऽस्येन परस्य विद्यमानाविद्यमानदोषसंकीर्तनम् । गर्वो विद्यानिमित्तात्स्वस्मिन्नधिकबुद्धिः । मत्सरो मनोमात्रवर्ती क्रोधस्तान् । **दम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोह-**

* एतदुत्तरम् 'न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवम्' इति ग्रन्थः क. ख. ग. पुस्तकेष्वधिको दृश्यते ।

१ क. ध. °नपमानं च । २ ख. °मानौ च । ३ ध. °त्सरा द° । ४ घ. °धरोषलो° । ५ ख. घ. °हमदह° ।

**हर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तं संशयविपरीतमिथ्याज्ञानानां**

**ना०दी०** व्यक्तिमुखविकासादिहेतुर्धीवृत्तिर्हर्षः । परगुणेषु दोषत्वारोपणमसूया । देहेन्द्रियादिसंघातेष्वात्मत्वभ्रमोऽहंकारः । आदिशब्देन भोग्यवस्तुषु ममकारसमीचीनत्वादिबुद्धयो गृह्यन्ते । चकारो यथोक्तनिन्दादिविपरीतस्तुत्यादिसमुच्चयार्थः । एतान्निन्दादीन्हित्वा पूर्वोक्तवासनाक्षयाभ्यासेन परित्यज्यावस्थीयत इति पूर्वेणान्वयः । ननु विद्यमाने देहे कथं निन्दापरित्यागोऽत आह—**स्ववपुः कुणपमिव दृश्यत इति** । पूर्वं यत्स्वकीयं वपुस्तदिदानीं योगिना चैतन्यभूतेन मृतकमिवाऽऽलोक्यत इत्यर्थः । लोकः स्पर्शभीत्या कुणपं यथा दूरस्थोऽवलोकयति तथा योगी तादात्म्यभ्रान्त्युदयभिया तटस्थो देहं नित्यमात्मनो विविनक्तीति भावः । तत्र हेतुमाह— **यतस्तद्वपुरपध्वस्तमिति** । यतो हेतोस्तद्वपुराचार्योपदेशानुभवैरपध्वस्तं चिदात्मभावान्निराकृतमतश्चैतन्यावियुक्तदेहस्य शवतुल्यतया दृश्यमानत्वात्सत्यपि देहे निन्दादित्यागो घटत इत्यर्थः । ननूत्पन्नो दिग्भ्रमो यथा सूर्योदयदर्शनेन विनष्टोऽपि कदाचिदनुवर्तते तथा चिदात्मनि संशयाद्यनुवृत्तौ निन्दादिक्लेशः पुनः प्रसज्येतेत्याशङ्क्याऽऽह—**संशयविपरीतमिथ्याज्ञानानां**

**शं०दी०** **हर्षासूयाहंकारादींश्च** । जनरञ्जनार्थमनुष्ठीयमानो धर्मो दम्भः । दर्पः स्वसामर्थ्यमविचार्याशक्यप्रवृत्तिहेतुर्बोधः । इच्छाऽनुकूलेऽनुभूते तज्जातीये च रागः । द्वेषः प्रतिकूलेऽनुभूते तज्जातीये विनाशाभिलाषः । सुखदुःखे अनुकूलप्रतिकूलवेदनीये । यद्यपि न सुखं न दुःखमित्यत्र सुखदुःखयोः परित्याग उक्तस्तथाऽपि न शीतं न चोष्णं न मानावमाने चेत्याधिदैविकाधिभौतिकसमभिहाराात्तद्विषयः सः । अयं तु निन्दादिभिः समभिव्याहारादाध्यात्मिक इति न पुनरुक्तम् । कामो मैथुनाभिलाषः । क्रोधो गात्रचलनादिहेतुः शत्रुवधाद्यभिलाषः । लोभो हस्तं गतस्यापि वित्तस्य बुद्धिपूर्वकमुचितव्ययवर्जनम् । मोहोऽतस्मिंस्तद्बुद्धिः । हर्षः प्रियवार्तादिजः सुखविशेषो वदनविकासादिहेतुः । असूया परगुणासहिष्णुत्वम् । अहंकारः सर्वत्र स्वात्मनः कर्तृत्वबुद्धिहेतुरभिमानविशेषः । आदिपदगृहीतोऽहंकारान्तादुक्तादन्यो मदादिस्तान् । चकारो निन्दादीनां दम्भादीनां चोक्तानामनुक्तानां च समुच्चयार्थः । **हित्वा** परित्यज्य । **स्ववपुः** संवर्तकादिभिः स्वकीयं शरीरं **कुणपमिव** मृतकलेवरमिवाऽऽत्मीयाभिमानशून्यत्वेन **दृश्यते**ऽवलोक्यते । ननु कथं जीववच्छरीरं संवर्तकादिः कुणपमिवावलोकयतीत्यत आह—**यतो** यस्मात्कारणा**त्तद्वपुरपध्वस्तं संशयविपरीतमिथ्याज्ञानानाम्** । संशयः कोटिद्वयावलम्बी प्रत्ययः । यथा स्थाणुर्वा पुरुषो वेति । विपरीतमतस्मिंस्तद्बुद्धिर्यथा शुक्तिकादौ रजतज्ञा-

१ क °ध्वस्तमिति सं° । ङ. ध्वस्तः सं° ।

यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्यबोध-

ना० दी० यो हेतुस्तेन नित्यनिवृत्त इति। आत्मा कर्तृत्वादिधर्मोपेतस्तद्रहितो वेत्यादि संशयज्ञानं देहादिरूप आत्मेति विपरीतज्ञानमेतदुभयं कर्तृत्वविषयं मिथ्याज्ञानं तु भोक्तृत्वविषयमिति विवक्षितं तदनेकविधम् "संकल्पप्रभवान्कामान्" इत्यादिनोक्तम्। तद्धेतुश्चतुर्विधः—"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति **पतञ्जलिसूत्रात्**। अनित्ये गिरिनदीसमुद्रादौ नित्यत्वभ्रान्तिरेका। अशुचौ पुत्रकलत्रादौ शुचित्वबुद्धिर्द्वितीया। दुःखे कृषिवाणिज्यादौ सुखत्वभ्रान्तिस्तृतीया। गौणात्मनि पुत्रादावन्नमयादिके च मुख्यात्मत्वभ्रान्तिश्चतुर्थी। एषां संशयादीनां हेतुरद्वितीयब्रह्मत्वावरकमज्ञानं तद्वासना च। तच्चाज्ञानं तस्य महावाक्यार्थबोधेन निवृत्तं वासना च योगाभ्यासेन निवृत्ता। दिग्भ्रान्तौ त्वज्ञाने निवृत्तेऽपि तद्वासनायाः सद्भावाद्यथापूर्वं व्यवहारः। योगिनस्तु भ्रान्तिहेतुराहित्यात्कुतः संशयादीन्यनुवर्तेरन्। तदयमर्थः संशयादीनां यो हेतुरज्ञानं तद्वासना च तेन हेतुद्वयेन योगी नित्यनिवृत्तः। अधिकरणे क्तः। अज्ञानतद्वासनयोर्निवृत्तिस्तत्र नित्या पुनस्तयोरनुद्भवादिति तेन नित्यं निवृत्तो हीनो रहित इति यावत्। सवासनाज्ञाननिवृत्तेर्नित्यत्वे हेतुमाह—**तन्नित्यबोध इति**। तस्मिन्परा-

शं० दी० नम्। मिथ्या सदसदुभयानुभयादिप्रकारैरनिर्वाच्यं तच्चाज्ञानं ज्ञाननिवर्त्यं चेति मिथ्याज्ञानम्। न चैतत्संशयविपर्ययाभ्यामन्यन्नास्तीति वाच्यम्। अनुभवविरोधात्। तथाहि। जाह्नवीतीरनिवासिनो मरीचमञ्जरीज्ञानं चाक्षुषमपि न प्रामाणिकं वदन्ति यतोऽयं किमिदमिति पश्यन्नपि न जानाति। नापि संज्ञाज्ञानं मरीचमञ्जरीति कर्णाटकेन कथितेऽप्यविदितमरीचवृत्तान्तो लोकस्त्वदुक्तां संज्ञामपि न जानामीति ब्रूते। न च ज्ञानाभावः। पश्यन्नपि न जानामीतिवादित्वात्। न च संशयः। कोटिद्वयाभावात्। न विपर्ययो मरीचमञ्जर्यां गोधूमबुद्धेरभावात्ततो लोकस्य कर्णाटकवाक्यं श्रुतवतोऽपि चक्षुषा मरीचमञ्जरीं पश्यतो यदत्राज्ञानं तत्प्रमाणसंशयविपर्ययज्ञानाभावेभ्योऽन्यत्तस्मात्संशयविपर्ययज्ञानाभ्यां क्षणभङ्गुराभ्यां कारणसापेक्षाभ्यां ज्ञानाभावाच्चान्यदनादिभावरूपं मिथ्याज्ञानं संसारहेतुः सिद्धम्। तेषां **यः** प्रसिद्धो **हेतुः** कारणमविद्यासंबन्धः। यद्यपि संशयविपर्यययोरेवोत्पत्तिर्न च मिथ्याज्ञानस्य मिथ्याज्ञानसंबन्धान्नोत्पत्तिरपित्वमिथ्याज्ञानात्तथाऽपि मिथ्याज्ञानस्य जडस्य चेतनसंबन्धमन्तरेणाकिंचित्करत्वादात्ममिथ्याज्ञानसंबन्धोऽत्र मिथ्याज्ञानादिहेतुरित्यभिधीयते। यथा राजा हेतुर्जगत इति। **तेन** मिथ्याज्ञानसंबन्धेन मिथ्याज्ञानादिप्रवृत्तिहेतुना **नित्यनिवृत्तो** नित्यं सर्वदा संवर्तकादिर्निवृत्तिं परां गतः परित्यक्ताविद्यासंबन्ध इत्यर्थः। कुतोऽस्याविद्यासंबन्धस्य निवृत्तिरित्यत आह—**तन्नित्यबोधः** तस्मिन्नानन्दात्मनि नित्ये

१ ख. °त पूनस्यन्त°। २ च. °नं तामि।

**स्तत्स्वयमेवावस्थितिस्तं शान्तमचलमद्वयानन्दविज्ञानघन**

**ना०दी०** त्मनि नित्यो बोधो यस्य सः । योगी हि 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतिमनुसृत्य चित्तविक्षेपान्योगेन परिहृत्य नैरन्तर्येण परमात्मविषयामेव प्रज्ञां करोति तेन बोधस्य नित्यत्वं तन्नित्यत्वात्तद्विनाश्ययोरज्ञानतद्वासनयोरपि निवृत्तिर्नित्येत्यर्थः । तन्नित्यपूतस्थ इति केषांचित्पाठः । तत्र तस्मिन्नित्यपूते परमात्मनि स्थित इत्यर्थः । बुध्यमानस्य परमात्मनस्तार्किकेश्वरवत्तटस्थत्वशङ्कां वारयति—**तत्स्वयमेवावस्थितिरि**ति । यद्वेदान्तवेद्यं परं ब्रह्मास्ति तत्स्वयं न तु स्वस्मादन्यदित्येवं निश्चित्य योगिनोऽवस्थितिर्भवति । अनुभवप्रकारमाह—**तं शान्तमचलमद्वयानन्दे**ति । पदत्रये द्वितीया प्रथमार्थे द्रष्टव्या । यः परमात्मा शान्तः क्रोधादिविक्षेपरहितोऽचलो गमनादिक्रियारहितः स्वगतसजातीयविजातीयभेदशून्यः सच्चिदानन्दैकरसोऽस्ति स एवाहमस्मि । तदेव ब्रह्मतत्त्वं मम योगिनः परमं धाम वास्तवं स्वरूपं न चैतत्कर्तृत्वभोक्तृत्वादियुक्तं तस्य मायिकत्वात् । आचार-

**शं०दी०** विनाशशून्ये सत्यज्ञानादिरूपे तत्त्वमस्यहं ब्रह्मास्मीत्येवंलक्षणोऽविद्यातत्संबन्धस्य निवर्तको बोधो यस्य संवर्तकादेः सोऽयं तन्नित्यबोधः । नन्वद्वैतबोधेनाविद्यातत्संबन्धस्य द्वैतस्य निवृत्तिः क्रियत आनन्दात्मना व्यवस्थितिः कुत इत्यत आह—**तत्स्वयमेवावस्थितिः** । तस्मिन्नानन्दात्मनि विक्षेपावरणात्मकमिथ्याज्ञानसंबन्धनिवृत्तौ स्वयं प्रकाशमानानन्दात्मस्वरूपमर्थादेव न तु तत्त्वतो व्यतिरिक्तकारणान्तरात् । कतकरजस्येव रजोन्तरनिवृत्तौ नीरस्यान्यानपेक्षत्वेन स्वात्मनि स्वच्छस्वभावेऽवस्थितिरवस्थानं पुनः प्रच्युतिशून्यत्वेन स्वभावप्राप्तिर्न कदाचित्केनापि हेतुनाऽतिरेकेण वा मिथ्याज्ञानतत्संबन्धस्पर्श इत्यर्थः । एवमात्मस्वरूपेऽवस्थानमुक्त्वा तदवस्थाननिमित्तमात्मबोधमभिनयेन दर्शयति—**तं** स्वयं प्रकाशमानः स्वच्छस्वभावः । **शान्तं** शान्तोऽविद्यातत्संबन्धाभ्यां कालत्रयेणाप्यसंस्पृष्टः । **अचल**मचलः कूटस्थः सर्वदैकस्वभाव इत्यर्थः । **अद्वयानन्दविज्ञानघन एव,** द्वयमानन्दात्मव्यतिरिक्तं वस्तु सदसदादिरूपं तद्रहितोऽद्वयः । स चासावानन्दः सुखस्वभावश्चेति । यद्यप्यद्वयपदेऽसाधनपारतन्त्र्यादिदोष आनन्दस्य निराकृत आनन्दपदेन चाऽऽत्मनोऽनन्यशेषत्वमुक्तं तथाऽपि तस्याप्रतीयमानत्वादपुरुषार्थत्वमन्यप्रतीतौ च द्वयत्वं द्वयत्वाच्चाशान्तत्वम् । न हि द्वयमविद्यातत्संबन्धहीनं किंचिदस्ति । अशान्तत्वाच्चलत्वं न ह्यविद्यादेरपरिणामित्वं तत आह—**विज्ञाने**ति । अद्वयानन्द एव विज्ञानं स्वयंप्रकाशं तस्यातः प्रतीतावनस्थाऽप्रतीतौ जगदान्ध्यादिदोषप्रसङ्गस्ततो नाप्रतीतिर्न द्वैतापत्तिश्च । तथाऽपि नीलोत्पलादिवदानन्दविज्ञानयोः सामानाधिकरण्य[1]मित्याह—**घने**ति । घनः खिल्यः पिण्ड इति यावत् । तथाचाद्वयानन्दस्य विज्ञानस्य

१ च. °मित्यत आह ।

**एवास्मि तदेव मम परमधाम तदेव शिखा च तदेवोपवीतं च परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या॥२॥**

ना०दी०त्यागे दोषमाशङ्क्य निरस्यति—**तदेव शिखा च तदेवोपवीतं चेति।** ज्ञानमेव शिखा चोपवीतम्। चकाराभ्यां मन्त्रद्रव्यरूपे अपि कर्माङ्गे ज्ञानमेव। यदाम्नातमाथर्वणिकैर्ब्रह्मोपनिषदि 'सशिखं वपनं कृत्वा' इत्यादि। अत्र यदेतन्नित्यपूतस्थस्तदेवावस्थानमिति ग्रन्थः शिष्टैर्नाऽऽदृतः। संध्यालोपे दोषमाशङ्क्याऽऽह—**परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्येति।** जीवब्रह्मणोरैक्यज्ञानेन महावाक्यजेन तयोर्यः प्रतीतो भेदः स विशेषेण भग्नः पुनर्भ्रान्त्यनुदयाद्ध्येयमेकत्वबुद्धिः सैवोभयोरात्मनोः संधौ जातत्वात्संध्या। अहोरात्रयोः संधावनुष्ठीयमाना क्रिया संध्या यथा तद्वत्। तथाच नास्य प्रत्यवायः॥ २॥

कोऽयं मार्ग इत्यस्यासौ स्वपुत्रेत्यादिनोत्तरमुक्तं का स्थितिरित्यस्य महापुरुष

शं०दी० च न भेदगन्धोऽपि। यथा लवणाकारेणापरिणतस्य समुद्रस्याम्भसो लवणपिण्डस्य च तथाऽप्यानन्दविज्ञानयोः सुखबोधपर्याययोरैक्येऽप्याधारादिप्रयुक्तो भेदो भविष्यति यथा सांसारिकयोरित्यत आह—**एवेति।** संसारे तयोर्जायमानत्वाज्जनिमतां चाऽऽधारादिप्रयुक्तो भेदोऽस्तु न त्वेतयोस्तद्वैपरीत्यात्। न चात्र सुखबोधत्वेनोत्पत्तिराशङ्कितुं शक्या। सर्वशास्त्रानुभवविरोधात्करणाद्यभावात्तर्कविरोधाच्च। **अस्मि** भवामि। नन्वेवंबोधवतोऽपि प्राप्यमन्यदेव यथा राजाऽहमस्मीतिबोधवतो नगरमित्यत आह—**तदेव** शान्तमचलमद्वयानन्दविज्ञानघनरूपं न त्वन्यत्। **मम** शान्ताचलाद्वयानन्दविज्ञानघनबोधवतः। **परमधाम** परमं च तद्भासुरं धाम स्थानं च परमधाम। प्राप्यमिति यावत्। ननु तथाऽपि संवर्तकादेरेव परस्य वा परमहंसस्य कथं ब्राह्मण्यं शिखायज्ञोपवीतरहितत्वादित्यत आह—**तदेव शिखा च तदेवोपवीतं च।** चकाराभ्यां स्वाध्यायसंध्यावन्दनादिकं श्रौतं स्मार्तं च परिगृह्यते। अन्यद्व्याख्यातं स्पष्टं च। ननु तथाऽपि संध्यावन्दनाभावाद्ब्राह्मणो विदितसमस्ततत्त्वोऽपि लोकनिन्दातो न निवर्तेत इत्यत आह—**परमात्मात्मनो**स्तत्त्वंपदार्थयोरपगतपारोक्ष्यदुःखित्वादिकयोः सत्यज्ञानानन्दानन्तसाक्षिण **एकत्वज्ञानेन** त्वंपदार्थस्य तत्पदार्थोऽस्मीतिबोधेन **तयो**स्तत्त्वंपदार्थयो**र्भेद एव विभग्नः,** भेदोऽननुसंधानहेतुः पारोक्ष्यसद्वयत्वादिप्रतीतिकारणम्। विभग्न एवाविशेषेण पुनरुत्थानशून्यत्वेन मत्तगजेनेव महातरुः समूलमामर्दितो न त्वल्पमूलेनाप्यवशेषितः। **सा** जीवपरमात्मनोर्भेदभङ्गेनैवानुसंधानलक्षणा। **संध्या** ब्रह्मचार्यादेरिव परमहंसस्यापि संधौ भवा क्रियैव। ततो निरालम्बना लोकनिन्देत्यर्थः॥ २॥

ननु संध्यादिकाले सर्वान्व्यापारान्विहाय तिष्ठन्त आसीना वा त्रैवर्णिका उपल-

१ ख. ग. घ. ङ. °रमं धा°। २ ख. °व न शिखा च°। ३ क. ख. घ. °त्र यदेतान्नरन्तरं पूतस्थस्तदेवावस्थानं प°।

सर्वान्कामान्परित्यज्य अद्वैते परमस्थितिः ।
ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ॥
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।

ना०दी० इत्यादिना संक्षिप्योत्तरमुक्त्वा संशयविपर्ययेत्यादिना तदेव प्रपञ्च्येदानीमुपसंहरति—सर्वान्कामान्परित्यज्य अद्वैते परमा स्थितिरिति । क्रोधलोभादीनां कामपूर्वकत्वात्कामपरित्यागेन चित्तदोषाः सर्वे त्यज्यन्ते । अत एव वाजसनेयिनाम्—'अथो खल्वाहुः काममय एवायं पुरुषः' इति । ननु मा भूत्कर्ममार्गत्यागे दोषश्चतुर्थाश्रमलिङ्गत्यागनिमित्तो दोषस्तु स्यादेवेत्यत आह—ज्ञानदण्ड इत्यादि । त्रिदण्डिनो यथा वाग्दण्डो मनोदण्डः कायदण्डश्चेति त्रिविधो दण्ड एवमेकदण्डिनां द्विविधो ज्ञानदण्डः काष्ठदण्डश्चेति । तेषां स्वरूपं च दक्षेणोक्तम्—

"वाग्दण्डे मौनमातिष्ठेत्कर्मदण्डे त्वनीहताम् ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते"॥ इति ।

एवं सति मौनादीनां वागादिदमनहेतुत्वाद्यथा दण्डत्वं तथैवाज्ञानतत्कार्यदमनहेतोर्ज्ञानस्यापि दण्डत्वम् । अयं ज्ञानदण्डो येन परमहंसेन धृतः स एव मुख्यदण्डीत्युच्यते । मानसस्य ज्ञानदण्डस्य चित्तविक्षेपेण विस्मृतिर्मा भूदिति स्मारकः काष्ठदण्डो ध्रियत एतदज्ञात्वा वेषमात्रेण पुरुषार्थसिद्धिमभिप्रेत्य येन परमहंसेन काष्ठदण्डो धृतः स बहु-

शं०दी० भ्यन्ते परमहंसस्तु तत्त्वंपदार्थभेदभङ्गेऽपि न नियतं तिष्ठन्नासीनो वोपलभ्यत इत्यत आह—**सर्वान्कामान्**, अखिलान्मनोरथानिहामुत्रार्थभोगविषयान् । **परित्यज्य** विहाय । **अद्वैते** निखिलद्वैतजालशून्य आनन्दात्मनि । **परमस्थितिः** परमोत्कृष्टोत्थानशून्या स्थितिरवस्थितिर्यस्य स परमस्थितिः । ततस्त्रैवर्णिकेभ्योऽभ्यधिक इत्यर्थः । ननु तथाऽपि "कृत्वोर्ध्वं वैणवं दण्डम्" इत्यादिश्रुतेः कथं वैणवदण्डराहित्येऽपि संवर्तकादेः पारमहंस्यमित्यत आह—**ज्ञानदण्डो** ज्ञानमहं ब्रह्मास्मीति बोधस्तदेव भेदजरागद्वेषगोसर्पादिदमनहेतुर्दण्डो ज्ञानदण्डः । **धृतः** स्वीकृतः । **येन** संवर्तकारुणिश्वेतकेतुदुर्वासोभृगुनिदाघजडभरतदत्तात्रेयरैवतकादिना । **एकदण्डी**, एक एव ज्ञानदण्डो यस्यास्त्येकदण्डी । **स उच्यते** स संवर्तकादिर्विद्वद्भिरेकदण्डीति कथ्यते । नन्वयमप्येकदण्डी वैणवदण्डधार्यपि तथा ततश्चोभयोः साम्यमित्याशङ्क्य नेत्याह—**काष्ठदण्डः** काष्ठं दण्डः काष्ठं वेणुरूपं दण्डः काष्ठदण्डः । **धृतः** स्वीकृतः । **येन** परमहंसेन विविदिषाशून्येन । एवं च सत्यूर्ध्वं क्रमसंन्यासो न कस्यापीत्यत आह—**सर्वाशी** सर्वं विषयजातं परमहंसाश्रमिणः शास्त्रे निषिद्धं तस्याशनमुपभोग आशः सोऽस्यास्तीति सर्वाशी । न त्वाश्रमधर्मवर्ती काष्ठदण्डधार्यपीत्यर्थः । ननु सर्वाशित्वं चेद्दोषस्तत्संवर्तकादिष्वपि क्वचित्संभावितं किमुताऽऽधुनिकेष्वित्यत आह—**ज्ञानवर्जितः**, अहं ब्रह्मास्मीति

१ घ. ङ °रमे स्थि° । ख. °रमा स्थि° ।

**स याति नरकान्घोरान्महारौरवसंज्ञकान्[1] ॥**

**ना०दी०** विधयातनोपेतत्वाद्घोरान्महारौरवसंज्ञकान्नरकान्याति प्राप्नोति । तत्र हेतुर्यतः

**शं०दी०** बोधशून्यः । यस्य ह्यत्वस्त्ययं बोधः काष्ठदण्डिनोऽन्यस्य वाऽनु निश्चितः । अस्य कृतकृत्यस्याऽऽप्तकामस्य न सर्वाशित्वशङ्काऽपि । अथ चेत्कुतश्चिन्निमित्तात्सर्वाशित्वमपि दृश्यते न तत्तस्य ज्ञानदण्डिनो निषिद्धं न हि शुष्कामार्द्रां वा समिधं दहतो जातवेदसोऽरण्यादिकुक्षिवर्तिनः कश्चिद्दोषः । अनेनैवाभिप्रायेणोक्तं ज्ञानवर्जितः । स काष्ठदण्डधारी यथेष्टचारी ब्रह्मास्मीतिबोधशून्यः । **याति** गच्छति । **नरकान्**नराणामुच्छास्त्रवर्तिनां वैषयिकाणि सुखानि कानि तान्यनुभूतानि परलोकदुःखार्थं प्रत्यवतिष्ठन्ते ते नरकास्तान् । **घोरान्दुः**खवेदनाकारान् । क्वचित्ताम्रबद्धा भूमीर्घर्मकालीनमध्याह्नार्कमरीचिकाभिः संतप्ता लोहहस्तिचमत्कारप्रभृतिभिः कण्टकैराकीर्णा अनेकयोजनशतविस्तीर्णा अन्नपानच्छायाशून्या वज्रतुण्डकाकगृध्रगोमायुशालावृकश्ववराहादिभिर्भृशं क्षुधार्तैः पूर्वं स्वेन विनिपातितैः स्ववैरमनुस्मरद्भिः संसेविताः खड्गमुद्गरपाशपरशुत्रिशिखशक्तिकुन्ततोमरभिण्डिपालक्षुरिकापट्टिशधनुर्बाणादिहस्तैर्भयंकरैः क्रोधसंरक्तनयनैः कृष्णाङ्गैर्विवर्णकेशैः करालगात्रैर्वज्रसंहननैर्निर्दीपैः पतद्भिरुत्पतद्भिर्धावद्भिश्च पाटच्चरैरिव मार्गे प्राणिपीडाकरैः संरक्षिता गले मृत्युपाशेनातिबद्धोऽङ्कुशेनाऽऽकृष्यमाणः पृष्ठतः कशया ताड्यमानः काकादिभिर्यमकिंकरैश्च मारं मारं नीयमानः क्षुत्पिपासापरीताङ्गः स्वजनमात्रविहीनोऽनेकजन्मशतकृतपातकानि स्मरन्मुहूर्तद्वयेन त्रयेण वा पादात्पादमाक्रम्य गच्छति । एवं गच्छन्नाकाशात्पातालतलमुपस्पृशन्तीमातिगम्भीरघोषामनेककोटिक्रूरपक्षिपक्षाघातादरुंतुदां त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रपूयविण्मूत्रश्लेष्मादिपयः—पूरामनेकयोजनशतविस्तीर्णां मृत्योरपि भयंकरीं वैतरणीं नाम नदीं दृष्ट्वा पशुवत्पृष्ठतो गच्छन्बलादेव यमकिंकरैराखेटकारैरिव मृगस्तत्र निपात्यते तत्र निपातितश्च घोरैरावर्तैर्दुर्गन्धैर्दुःस्नेहैश्च पीड्यमानस्तत्रास्थितपक्षिमकरादिभिर्भक्ष्यमाण उन्मज्जान्निमज्जंश्च शुष्कालाबुवद्यावत्कर्मक्षयं वर्तते ततो महीतलेषु खड्गपत्रखड्गकुण्डकाकादिसमाकुलेषु किंकरैः पाषाण इव प्रक्षिप्यते । क्वचित्कचित्तिलवत्तिलयन्त्रेषु प्रक्षिप्य प्रपीड्यते क्वचिज्ज्वाज्वल्यमानेषु तैलेषु वटकवन्निक्षिप्यते क्वचिज्ज्वाज्वल्यमाना लोहमय्यः कान्तास्तं परिरभन्ते क्वचिदन्धकूपेषु समाकुलेषु निपात्यते क्वचित्क्षुधितः स्वविष्ठामेव भक्षयति क्वचित्तृषार्तः स्वमूत्रमेव पिबति क्वचिन्मक्षिकापक्षिवातपरिवीतां दुर्गन्धसमूहधारिणीमुच्छूनां पूयमेव पयः कुर्वतीं योनिं लेहयति क्वचिन्मेढ्रादिच्छेदान्प्राप्नोति क्वचिदति तीक्ष्णकण्टकेषु निबध्यते क्वचिदात्मानं विविधदोषधारिणं पश्यति । एवमादीनि दुःखानि नरकशब्दवाच्यानि तानि स्मर्यमाणान्यपि दुःसहानि किमुतानुभूयमानानि । तदुक्तं घोरानिति । तेषां नामाऽऽह—**महारौरवसंज्ञकान्**, महच्च तद्रौरवं च तिर्यग्योनिगतस्य

---

१ अ. न्. । निरिक्ष ज्ञानवैराग्यशमादिगुणवर्जितः । भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा । इति ।

इदमन्तरं ज्ञात्वा स परमहंसः ॥ ३ ॥

आशाम्बरो[1] ननमस्कारो नस्वधाकारो न निन्दा . न स्तुतिर्यादृच्छिको

---

**ना०दी०**सर्वाशी वर्ज्यावर्ज्यमकृत्वा सर्वमश्नाति । "नान्नदोषेण मस्करी" "चातुर्मास्यं चरेद्भैक्षम्" इत्यादि ज्ञान(नि)विषयमयं च ज्ञानवर्जित इति युक्तोऽस्य नरकः । **इदमन्तरं ज्ञात्वा स परमहंस इति** । इदं ज्ञानदण्डकाष्ठदण्डयोरन्तरमुत्तमत्वाधमत्वलक्षणमुक्तं तज्ज्ञात्वोत्तमं ज्ञानदण्डं यो धारयति स एव परमहंसो मुख्यो ज्ञेय इत्यर्थः ॥३॥

ननु मा भूदस्य काष्ठदण्डोऽन्या तु चर्या कीदृशीत्याशङ्क्याऽऽह—**आशाम्बर** इत्यादि । आशा एवाम्बरं यस्य दिग्वासाः । तथा न नमस्कारः कर्तव्यो यस्य स ननमस्कारः । निषेधार्थनकारसमासत्वान्नलोपाभावः । तदुक्तम्—"निर्नमस्कारमस्तुतिम्" इति । गयादावपि न स्वधाकारो यस्य । तथा न निन्दा न स्तुतिः । निन्दागर्वेत्यादिवाक्ये परैः कृतया निन्दयाऽस्य क्लेशो निवारितोऽत्र तु स्वकर्तृके निन्दास्तुती निषिध्येते । यादृच्छिको

---

**शं०दी०**भावो रौरवमज्ञानप्रधानं क्रन्दनादि येषु ते महारौरवास्तेषां संज्ञा येष्वस्ति ते महारौरवसंज्ञास्तान् । इदमिदानीमुक्तं महारौरवादिप्राप्तिलक्षणं सर्वाशिनः काष्ठदण्डधारिणो ज्ञानवर्जितस्य । **अन्तरं** ज्ञानदण्डकाष्ठदण्डधारिणोर्भेदः । **ज्ञात्वा**ऽवगत्य । **स** यो ज्ञानदण्डधारी सति काष्ठदण्डे वाऽसति प्रसिद्धः **परमहंसः** परमहंसशब्दाभिधेयः ॥३॥

मानसानि कर्तव्यान्युक्त्वा शारीराण्याह—**आशाम्बरः** । आशा दिशोऽम्बराणि वस्त्राणि यस्य संवर्तकादेः सोऽयमाशाम्बरः । **न** अनेन कर्तव्यः । **नमस्कारः**, अष्टाङ्गादिर्देवादीन्प्रति नतिविशेषः । **नस्वधाकारः**, पितॄनुद्दिश्य स्वाधाकारोऽपि न । **न निन्दा** जनस्य विद्यमानाविद्यमानदोषा(ष)संकीर्तनम् । न च पुनरुक्तिः । निन्दापरत्वात् । यथाव्याख्यातस्यैव तत्राभीष्टत्वात् । यतः पूर्वं मानसस्य स्वनिमित्तस्य पारित्याग इदानीं स्वकर्तृकस्य वाचनिकस्येति विशेषः । **न स्तुतिः**, धनिकदेवादीनुद्दिश्य मनोरमणाद्यर्थं समुच्चारणं स्तुतिरपि न कर्तव्या । न च स्तुतिकरणे न कोऽपि बाध इति मन्तव्यम् । यत एकं स्तुवतोऽर्थादपरस्य निन्दा जायते द्वेषश्च कस्यचित्प्रत्यक्षतस्ततो गुणदोषदर्शनं दोषपक्ष एव निक्षेपणीयमित्यभिप्रायेणाऽऽह—**न स्तुतिरिति** । एतेन नमस्कारादयोऽपि व्याख्याताः । तत्राप्युक्तदोषस्य तुल्यत्वात् । शारीरं वर्ज्यमुक्त्वा करणीयमाह—**यादृच्छिकः**, सदनृतसुवृत्तदुर्वृत्तत्वादिपरित्यागेनानपकारिणी स्वात्मनो जनसङ्गवर्जनहेतुशास्त्रविव(वि)क्तिभ्यां प्रापितेच्छा यदृच्छा सा यस्यास्ति स यादृच्छिको

---

१ ख. °रो निर्नम° । २ ख. °तिर्न वषट्कारो याद्° ।

**भवेद्भिक्षुर्नाऽऽवाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं च न लक्ष्यं नालक्ष्यं**

**ना०दी०** निर्बन्धरहितो भवेत्स्याद्भिक्षुः परमहंसः। नन्वस्ति निर्बन्धः—

"भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम्।
कर्तव्यानि षडेतानि सर्वदा नृपदण्डवत्" ॥ इति।

मुख्यस्य भेदादर्शित्वात्तन्न संभवतीत्यभिप्रायेणाऽऽह—**नाऽऽवाहनमित्यादि**। ध्यानं स्मरणमुपासनं परिचर्येति भेदः यथा स्तुतिनिन्दादि लौकिकं न यथा वा देवपूजादि धर्मशास्त्रीयं न तथैव तत्त्वमस्यादिज्ञानं शास्त्रीयमपि लक्ष्यवाच्यादिव्यवहार्यं योगिनो नेत्याह—**न लक्ष्यं नालक्ष्यमिति**। साक्षिचैतन्यं त्वंपदेन लक्ष्यं देहादिविशिष्टं चैतन्यं न लक्ष्यमलक्ष्यं वाच्यं तदपि तस्य न व्यवहार्यमित्यर्थः। चित्पदार्थो जडात्पृथक्तत्त्वंपदयोर्वाच्यं पृथग्लक्ष्यमपृथगित्यपि योगिनो नास्ति। स्वदेहनिष्ठो वाच्योऽहं परदेहनिष्ठस्त्वं तदप्यस्य नास्ति सर्वं खल्विदं ब्रह्मेत्यपि न। चकारादसर्वं न किंचि-

---

**श०दी०** **भवेत्**स्यात्। **भिक्षुः** परमहंसः। ननु "त्रिकालमेककालं वा पूजयेत्पुरुषोत्तमम्" इत्यादिस्मृतेर्देवपूजाऽपेक्षितेत्यत आह—**नाऽऽवाहनम्**, आगच्छ गोपीजनमनोरमण कंदर्पकोटिकमनीयमूर्ते नीलोत्पलदलश्यामलेत्यादिभावनाभावितमहापीठादौ स्वाभीष्टदेवताया आकारणमावाहनं तत्परमहंसेन नानुष्ठेयम्। **न विसर्जनम्**, उक्तविशेषणस्य देवस्य पीठादौ स्थितस्य सूर्यादिषु प्रेरणं विसर्जनं तदपि न। **न मन्त्रं** तत्सवितुर्वरेण्यमित्यादिकं मननाद्रक्षणकारणमपि न। **न ध्यानं** पीनोन्नतपृथुश्रोणीभारमन्थराभिर्मदनमदविह्वलानिर्भिन्दस्वेदमुखीभिर्महिषीभिर्मुहुर्मन्दमन्दमीक्ष्यमाणमदनमहोत्सवं मन्दारपुष्पप्रचयामोदितमनोरमधम्मिल्लं माथुरस्त्रीमानसराजहंसमित्यादिविशेषणैर्विशिष्टं मम दैवतमित्यादिचिन्तासंतानोऽपि न। **नोपासनं च,** उपासनया सजातीयप्रवाहप्रवृत्त्या विजातीयप्रत्ययशून्यया विषयीकृतं स्वात्मनो भिन्नं साकारं स्त्रीपुंसादिशरीरं दैवतमपि न। चकारोऽर्घादीनामनुक्तानामपि समुच्चयार्थः। तेन स्मृतिरब्रह्मज्ञानिविविदिषासंन्यासादिविषयत्वेन व्याख्येया। ननु यदि मन्त्रध्यानदेवतादीनामभावः परमहंसस्येष्टस्तर्हि किमनेन चिन्त्यमित्यत आह—**न लक्ष्यम्**। लक्षणैर्वाङ्मनोव्यापारव्याप्यैर्भूतपञ्चकैः ससूक्ष्मैर्लक्षयितुं योग्यं लक्ष्यं विकारसंदर्भ इत्यर्थः। तन्नानेन चिन्त्यम्। तर्ह्यस्तु यवनानामिव लक्ष्यविपरीतं सर्वकारणं मिथ्याज्ञानमित्यत आह—**नालक्ष्यं** सदसदादिप्रकारैर्लक्षयितुमशक्यं मिथ्याज्ञानमपि न। ननु तर्हि मिथ्याज्ञानतत्कार्याभ्यां **विभिन्नं**

**न पृथङ्नापृथगहं न न त्वं न सर्वं चानिकेतस्थितिरेव भिक्षुः सौवर्णादीनां[1] नैव परिग्रहेन्न[2] लोकं नावलोकं चा-**

ना०दी०दस्तीत्यपि तस्य नास्ति तच्चित्तस्य ब्रह्मणि विश्रान्तत्वादत एवानिकेतस्थितिरेव स भिक्षुः । यदि नियतवासार्थं कंचिन्मठं संपादयेत्तदा तस्मिन्ममत्वे सति तदीयहानौ वृद्धौ वा चित्तं विक्षिप्येत । मठवद्धाटकादीनां सौवर्णराजतादिपात्राणां भिक्षाचमनाद्यर्थानामेकमपि नैव परिग्रहेत्परिगृह्णीयात् । विकरणव्यत्ययः ।

" हिरण्मयानि पात्राणि कृष्णायसमयानि च ।
यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः " ॥ इति ।

तथा न लोकं जनं शिष्यवर्गं परिग्रहेत् । न केवलं लोकं त्यजेत्किंतु नावलोकनं सांनिध्याल्लोकस्यैवावलोकनं च न कुर्यात् । योगिनो लौकिकवैदिकव्यवहारगतानां बाध-

शं०दी०चिन्त्यमित्यत आह—**न पृथक्,** मिथ्याज्ञानतत्कार्याभ्यां विभिन्नमपि न । अस्तु तर्हि ताभ्यामभिन्नं चिन्त्यमित्यत आह—**नापृथक्,** ताभ्यामभिन्नमपि न । अस्तु तर्ह्यहंप्रत्ययालम्बनं चिन्त्यमित्यत आह—**अहं न** । अस्मत्प्रत्ययावलम्बनं न तर्हि बलात्पारिशेष्येण युष्मत्प्रत्ययावलम्बनं चिन्त्यमित्यत आह—**न त्वं** युष्मत्प्रत्ययावलम्बनं **न** । ननु तर्हि लक्ष्म्यादिषट्करूपं चिन्त्यमस्त्वित्यत आह—**न सर्वं च** । तदुक्तं निखिलमपि । चकारस्तद्व्यतिरेकादेरपि निरासार्थः । एवं विद्वत्संन्यासमुक्त्वा विविदिषासंन्यासमुररीकृत्याऽऽह—**अनिकेतस्थितिरेव** । निकेतो नीडमाश्रयो गृहमिति पर्यायः । स्वनिर्मितगृहव्यतिरिक्तं शून्यागारदेवायतनादिकं स्थितिः स्थानं यस्य सोऽनिकेतस्थितिः । अत्रैवकारः स्थित्या संबध्यमानो विविदिषासंन्यासिनः श्रवणादिविरोधिभ्रमणं वारयति । ये त्वनिकेतस्थितिरनियतास्थितिरिति व्याचक्षते तत्पक्षे तु नियतं नियमनहेतुः स्वकृतादिकमिति व्याख्येयं न तु नित्यं न च तस्यानुदिनं गमनं प्रधानविरोधात् । कीटवत्पर्यटेद्भूमाविति स्मृतिस्तु कुतश्चित्पतितवंश्यातुरश्रवणानधिकारिपरमहंसविषयत्वेन व्याख्येया । अपरमहंसविषयत्वेन वा । **भिक्षुः** परमहंसः **सौवर्णादीनां** सुवर्णस्य विकारः सौवर्णम् । आदिशब्देन रजतादि तेषामन्यतममप्युदकपात्राद्यर्थं **नैव परिग्रहेन्नैव** स्वीकुर्यात् । एवकारो महत्यापि संकटे स्वत्वबुद्धिनिवारणार्थः । तेनातैजसमलाब्वादि स्वीकुर्वतो न कश्चिद्दोष इत्यवगम्यते । **न लोकं** सर्वालोकनयोग्यं मणिकुण्डलादि तदपि न **नावलोकं** नाकादिवद्द्वयं समासः । अवलोकनानर्हमनड्डुदादिग्रामक्षेत्रारामादिकं तदपि न

१ क. व. हाटकादीन । २ ग. दीनैव ।

ऽऽबाधकः क इति चेद्बाधकोऽस्त्येव । यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं[1] च स ब्रह्महा भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं[2] च स पौल्कसो भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं[3] च स

ना०दी०कानां वर्जनमभिहितम् । अथ प्रश्नोत्तराभ्यामत्यन्तबाधकं प्रदर्श्य तद्वर्जनमाह—आबाधकः क इति चेद्बाधकोऽस्त्येवेति । अथावलोकनमात्रेणेति प्रक्षिप्तम् । वाक्योपक्रम आकारः । तत्रापि हिरण्यस्यात्यन्तबाधकत्वमाह—यस्माद्भिक्षुरित्यादिना । रसेन प्रेम्णा । ब्रह्महेति । ब्रह्मैव सत्यमन्यन्मिथ्येत्यनङ्गीकाराद्ब्रह्म तेन हतमिव भवति तेन ब्रह्महा भवेत् ।

यत्स्मृतिः—"ब्रह्म नास्तीति यो ब्रूयाद्द्वेष्टि ब्रह्मविदं च यः ।
अभूतब्रह्मवादी च त्रयस्ते ब्रह्मघातकाः" ॥ इति ।

यद्वा ब्रह्मघ्न इव तस्य नरको भवति । पौल्कस इति । निषादाच्छूद्रायां जातः पुल्कसः प्रज्ञादित्वात्पौल्कसो वर्णव्यत्ययेन वा पौल्कसस्तत्तुल्य इति यावत् ।

यत्स्मृतिः—"पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ।
धीपूर्वं रेतउत्सर्गो द्रव्यसंग्रह एव च" ॥ इति ।

शं०दी० परिग्रहेदित्येतदनुवृत्त्यर्थश्चकारः । तेन यावता विना शरीरधारणं न स्याच्छ्रवणादिकारणमशनादिकं तावत्संगृह्णीयादित्यर्थः । तदेव कौपीनाच्छादनदण्डपादुकाभिक्षादि दृष्टोपकारसिद्धं यथा क्रियते तथा सौवर्णादिपरिग्रहेणापि । अपि च पारतन्त्र्यनिवृत्तिर्भिक्षादीनां भवति सौवर्णादिपरिग्रहादतस्तत्परिग्रहे को विरोध इति मन्वानः पृच्छति नारदः—आबाधकः कः सौवर्णादिपरिग्रहे भिक्षोः को नाम स बाधाजनको दोषः । ब्रह्मा तं दृष्टदोषाभावेऽप्यदृष्टदोषोऽस्तीति बुद्ध्वाऽऽह—इति चेत् । एवं यदि पृच्छसि तदा वदामि । बाधकः पीडाकरः प्रत्यवायः शास्त्रेष्वस्त्येव विद्यत एव विद्यते वा न वेति न संशयः । दोषमाह—यस्माद्यत्कारणाद्भिक्षुः परमहंसः । हिरण्यं कनकं रसेनाभिलाषेण ममेदं स्यादिति बुद्ध्येत्यर्थः । दृष्टं च पश्यत्यवलोकयेत् । चकारः प्रमादसंपातरागापरित्यागसमुच्चयार्थः । रागेण सुवर्णदर्शनानुवृत्त्या स ब्रह्महा भवेत् । स्वहस्तघातितश्रोत्रियब्राह्मणवधदोषभाक्स्यादिति । यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं च स पौल्कसो भवेत् । स्पृष्टं स्पृशत्यादातुं प्रवर्तते । पौल्कसोऽन्त्यजादुत्कृष्टोऽन्यस्मादनुलोमजप्रतिलोमजान्निकृष्टोऽन्त्यजविशेषोऽरण्यानीचरो मांसकृतान्त्यजजातिविशेषः । अन्यत्पूर्ववद्व्याख्येयम् । यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं च स

१ क. ख. ग. ङ. °ष्टं चेत्स ब्र° । २ क. ख. ग. ङ. °ष्टं चेत्स पौ° । ३ क. ख. ग. ङ. °ह्यं चेत्स आ° ।

आत्महा भवेत् । तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च स्पृष्टं च न ग्राह्यं च । सर्वे कामा मनोगता[1] व्या[2]वर्तेत । दुःखे नोद्विग्नः[3] सुखे न स्पृहा त्यागो रागे

**ना० दी०** आत्महेति । असङ्गस्याभोक्तुरात्मनो हिरण्यसाङ्गित्वभोक्तृत्वाङ्गीकारात् । यत्स्मृतिः—"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा" ॥ इति ।

श्रुतिरपि तस्यान्धतामिस्रलोक.नाह—"असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः" इति । **न दृष्टं च न स्पृष्टं च न ग्राह्यं चेति** । इच्छेदिति शेषः । चकारैः श्रुतं च कथितं च व्यवहृतं च नेच्छेदिति समुच्चयः । दर्शनस्पर्शनग्रहणवदभिलाषपूर्वका हिरण्यवृत्तान्तश्रवणतद्गुणकथनतदीयक्रियादिव्यवहारा अपि प्रत्यवायहेतव इत्यर्थः । हिरण्यवर्जनस्य फलमाह—**सर्वे कामा मनोगता व्यावर्तन्त इति** । पुत्रभार्यादिकामानां हिरण्यमूलत्वादिति भावः । कामनिवृत्तेः फलमाह—**दुःखे नोद्विग्नः सुखे निःस्पृह इति** । दुःखे सत्युद्वेगं न गतः सुखेऽभिलाषरहितः स्थितप्रज्ञ इत्यर्थः । सुखदुःखयोरविक्षेपकत्वे तत्साधनयोरप्यविक्षेपकत्वमाह—**त्यागो राग इति** । रागे रञ्जनहेतावैहिकामुष्मिके तस्य त्यागो भवति फलानपे-

**शं० दी० आत्महा भवेत्** । ग्राह्यं गृह्णाति मदीयमिति स्वी करोति । आत्महा सत्यज्ञानानन्दानन्तात्मस्वरूपस्य हन्ता । नाऽऽत्मवधादधिकं किंचित्पापं स्थावरजङ्गमात्मकस्य विश्वस्याऽऽत्मन्यन्तर्भावादित्यर्थः । अन्यत्पूर्ववद्व्याख्येयम् । **तस्मात्**तः । ब्रह्मवधपौल्कसत्वप्राप्त्याऽऽत्मवधदोषकारणाद्भिक्षुर्हिरण्यं **न दृष्टं न स्पृष्टं न ग्राह्यं च** । चकारो निषेधावधारणार्थः । व्याख्यातानि शिष्टानि पदानि । इदानीं मानसं कर्तव्यमाह—**सर्वे कामाः** सर्वेभ्य इहामुत्रार्थभोगेभ्यो **मनोगता** मनोगतेभ्यो विविधवासनारूपेण चित्ते वर्तमानेभ्यो **व्यावर्तेता**रतिं कुर्यात् । विविधेषु भोगेषु छर्दितान्नसमानबुद्धिं कुर्यादित्यर्थः । दुःखे **नोद्विग्नः**, अस्य भिक्षोः प्रतिकूलवेदनीये सति न संतापः शूरस्येव समरमूर्धनि प्रहारे । **सुखे न स्पृहा**, अनुकूलवेदनीये स्पृहाऽभिलाषो न दुर्जनवाक्यैर्दूषितहृदयस्येव स्रक्चन्दनादिभोगे । **त्यागो रागे** रागो योषित्सङ्गाभिलाषस्तद्विषये त्यागस्तस्य वर्जनम् । यद्यपि सर्वे कामा मनोगता व्यावर्तेतेत्यत्रापि परित्याग उक्तस्तथाऽप्येतत्त्यागे महान्यत्नः करणीय इत्येतदर्थमस्य विशेषतोऽभिधानम् । अथवा त्यागे राग इति विभक्त्योर्व्यत्ययेन वाक्यं पठित्वैवं व्याख्येयम् ।

१ ङ. °तोद्व्याव° । २ ख. व्यावर्तेते । ३ ख ग ङ. °खे निःस्पृहस्त्यागो ।

**सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदं च । सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते**

ना०दी०क्षत्वात् । रागत्यागं विवृणोति—**सर्वत्र शुभाशुभयोरनभिस्नेह इति** । अनभिद्वेष इत्यपि ज्ञेयम् । रागत्यागस्य फलमाह—**न द्वेष्टि न मोदते चेति** । प्रतिकूलान्न द्वेष्ट्यनुकूलं दृष्ट्वा मोदं च न याति । ततः किं स्यादत आह—**सर्वेषामिन्द्रियाणां गतिरुपरमत इति** । सुखप्राप्तये दुःखपरिहाराय चेन्द्रियप्रवृत्तिस्तद्द्वयस्य योगिनोऽनुद्दि(द्दे)श्यत्वादिन्द्रियोपरम इति भावः । ननु निर्बीजो योगो दुःसाध्य इत्याशङ्क्य परमप्रेमास्पदात्मावलम्बत्वात्सुसाध्य एवेत्याशयेनाऽऽत्मनिष्ठामुपसंहरति—**य आत्मन्येवावस्थीयत इति** । अवतिष्ठत इति वाच्ये व्यत्ययः ।

तदुक्तम्—" न सुखं देवराजस्य न सुखं चक्रवर्तिनः ।
यत्सुखं वीतरागस्य ज्ञाननिष्ठस्य योगिनः " ॥ इति ।

शं०दी०सर्वत्राभिलाषपरित्यागेऽपि संन्यासविषयेऽभिलाषो न त्याज्यः । **सर्वत्र** सर्वेषु देशेषु । **शुभाशुभयोः** स्रक्चन्दनवृश्चिकसर्पादिरूपयोर्विषययोः । **अनभिस्नेहो**ऽभितः समत्वाद्यथायोगं स्वात्मनोपलम्भनमभिस्नेहः । गुणदोषादिदर्शनं न कर्तव्यमित्यर्थः । एवं कुर्वतोऽस्य को लाभ इत्यत आह—**न द्वेष्टि** स्वप्नेऽपि स्वात्मनोऽपकारिण्यपि द्वेषं न करोति । **न मोदं च** स्वप्नेऽपि स्वात्मनो हरिचन्दनलेपेऽपि हर्षं न गच्छतीति शेषः । चकाराच्च मित्रबुद्धेरप्यभावो भवति । ननु दुर्गतेन्द्रियाश्वानामितस्ततः प्रधावतां शरीररथं दुर्मार्गनेतॄणां मनःप्रग्रह[वि]घटकानां बुद्धिसारथिकदर्थीकरणदक्षाणां शब्दादिविषयघासग्रासवतां सतां कथं नाम द्वेषमोदयोरनुदय इत्यत आह—**सर्वेषां** निखिलानां बाह्याभ्यन्तरकर्मज्ञानशक्तीनामेकादशसंख्याकानां चक्षुरादीनां मनःपर्यन्तानाम् । **इन्द्रियाणा**मिन्द्रस्य दक्षिणे चक्षुषि वर्तमानस्य स्वप्रकाशस्याऽऽनन्दात्मनो नामरूपादिबोधकानि बहिर्मुखत्वेन प्रवृत्तानि । अथवा स्वात्मनः सत्तया तदनुमापकानीन्द्रेण साक्षिरूपेण वा दृष्टानि । इन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वेतिपाणिनिसूत्रात् । तेन जुष्टानि सेवितानि वा राजे(ज्ञे)व नगराणि तेन वा दत्तान्यस्य शब्दादिग्रहणार्थं महादेवेनेव महाकुलेभ्यः स्वानन्दपुरं तेषाम् । **गति**र्विषयाविषयाभिलाषार्थं गमनम् । **उपरमते** निवृत्तं भवति । स्वशिक्षितानामिवाश्वानां दुर्गतिः । इन्द्रियगतिबोधपुरःसरं हर्षविषादनिवृत्तौ किंस्वित्फलमित्यत आह—**यः** । येन दान्तेन्द्रियेण हर्षविषादशून्येन । **आत्मन्येव** तत्पदार्थे न त्वन्यत्र । **अवस्थीयते** त्वंपदार्थगताभेदेनावस्थानं क्रियते । विविदिषासंन्यासिनः श्रवणादिसंपत्तौ फलमभिनयेन दर्शयति—यत्प्रसिद्धं श्रुतौ सत्यज्ञानान-

१ घ. मोदते ।

यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति ॥ ४ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो

---

ना०दी०इन्द्रियोपरतौ च न कदाचिदात्मनिर्विकल्पकसमाधेर्विघ्नो भवति । तेषां का स्थितिरिति प्रश्नस्य संक्षेपविस्तराभ्यामुत्तरं पूर्वमुक्तं तदेवात्र पुनरपि हिरण्यनिषेधप्रसङ्गेन स्पष्टीकृतम् । अथ विद्वत्संन्यासमुपसंहरति—**यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवतीति** । अधिकप्रक्षेपग्रन्थनिरासाय संपूर्णप्रतीकोपादानम् । यद्ब्रह्म वेदान्तेषु पूर्णानन्दैकबोधः परमात्मेति निरूपितं तद्ब्रह्माहमस्मीत्यनुभवन्योगी परमहंसः कृतार्थो भवतीत्यर्थः ।

**यत्स्मृतिः**—"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्" ॥ इति ।

द्विरुक्तिः समाप्त्यर्था ॥ ४ ॥

---

शं०दी० न्दादिलक्षणम् । **पूर्णानन्दैकबोधः** पूर्णानन्दैकबोधम् । पूर्णो देशकालवस्तुपरिच्छेदशून्यः । आनन्दैकबोधः । एकशब्द एवकारार्थः । सुखरूप एव न त्वन्यः । एको बोधः स्वयंप्रकाशमानसंवित्स्वभावस्तदेकं रूपं यस्य ब्रह्मणस्तत्पूर्णानन्दैकबोधरूपम् । **तदुक्तम्** । **ब्रह्म** बृहत् । सर्वजगत्कारणं तत्पदार्थोपगतपारोक्ष्यादि । **अहं** त्वंपदार्थोपगतदुःखित्वादि । **अस्मि,** अपगतसमस्तभेदस्वयंप्रकाशमानानन्दात्मस्वरूपेण भवामि । इत्यनेन प्रकारेण विविदिषासंन्यास्यपि विद्वान्भवतीत्यर्थः । ननु बोधस्य सर्वस्य व्रीहिमन्त्रादिजन्यस्य यथा कर्माङ्गता तथाऽत्रापि स्यादित्यत आह—**कृतकृत्यो भवति** । कृतं कृत्यमनुष्ठेयं स्वाभीष्टफलप्राप्तिलक्षणं येन स कृतकृत्यः संपद्यते । अयमर्थः । यदि व्रीह्यादिज्ञानं कर्मप्रवृत्तिहेतुस्तत्स्वानुष्ठितेऽपि यागे साधितेऽपि स्वर्गे किमिति तस्यैव तस्मिन्नेव प्रवृतिं जनयति ततो मयेदं करणीयमस्मै फलायेतीयं बुद्धिरकृतकृत्यतापरपर्याया प्रवृत्तिहेतुरिति वर्णनीयं स च स्वयंप्रकाशमानानन्दात्मनि स्फुरत्यपगतसमस्तभेदवान्पर इति सा कथं स्यात् । ततः साधूक्तं कृतकृत्यो भवतीति ॥ ४ ॥

अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः ॥

इति श्रीपरमहंसोपनिषत्समाप्ता ॥ १२ ॥

---

ना० दी० नारायणेन रचिता जीवन्मुक्तिविवेकतः ।
श्रुत्यर्थमाप्य परमहंसोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचिता परमहंसोपनिषद्दीपिका समाप्ता ॥ २९ ॥

---

शं० दी० इयं परमहंसानां व्याख्यातोपनिषन्मया ।
तद्धर्मज्ञानजननी सानन्दात्मप्रबोधिनी ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्येण श्रीशंकरानन्दभगवता विरचिता परमहंसोपनिषद्दीपिका समाप्ता ॥ २६ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# पिण्डोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

खण्डमेकं पिण्डहेतुः सप्तविंशतिपूरणी ।
पिण्डोपनिषदुद्दण्डवैराग्यजननाय सा ॥ १ ॥

संसारविमुक्तये परमहंससंन्यास उक्तस्तद्रहितानां विपन्नानां का गतिरिति संशये वैराग्यजननाय संसारिणां पराधीनां गतिं निरूपयितुं पिण्डोपनिषदारभ्यते—

**ॐ देवता ऋषयः सर्वे ब्रह्माणमिदमब्रुवन् ।**
**मृतस्य दीयते पिण्डः कथं गृह्णन्त्यचेतसः ॥ १ ॥**
**भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा ।**
**हंसस्त्यक्त्वा गतो देहं कस्मिन्स्थाने व्यवस्थितः ॥ २ ॥**

**देवता इति** । आख्यायिका संप्रदायाविच्छेदप्रदर्शनार्था । दीयते पिण्डो लोकैरिति शेषः । तं च शरीरमन्तरेण चेतनारहिता मृताः कथं गृह्णन्तीति प्रथमः प्रश्नः । पञ्चसु भूतेषु विषये पञ्चधा देहे गते सति हंसः कस्मिन्नवस्थित इति द्वितीयः प्रश्नः ॥१॥२॥

**त्र्यहं वसति तोयेषु त्र्यहं वसति चाग्निषु ॥**
**त्र्यहमाकाशगो भूत्वा दिनमेकं तु वायुगः ॥ ३ ॥**

द्वितीयस्योत्तरमाह—**त्र्यहमिति** ॥ ३ ॥

भोगोचितशरीरोत्पत्तिद्वारा चेतनः सन्पिण्डं गृह्णातीत्याद्यस्योत्तरमाह—

**प्रथमेन तु पिण्डेन कलानां तस्य संभवः ।**
**द्वितीयेन तु पिण्डेन मांसत्वक्शोणितोद्भवः ॥ ४ ॥**
**तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।**
**चतुर्थेन तु पिण्डेन अस्थिमज्जा प्रजायते ॥ ५ ॥**
**पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरो मुखम् ।**
**षष्ठेन कृतपिण्डेन हृत्कण्ठं तालु जायते ॥ ६ ॥**
**सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ।**
**अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्यवान् ॥ ७ ॥**

नवमेन तु पिण्डेन सर्वेन्द्रियसमाहृतिः ।
दशमेन तु पिण्डेन भावानां प्लवनं तथा ।
पिण्डे पिण्डे शरीरस्य पिण्डदानेन संभवः ॥ ८ ॥
इत्यथर्ववेदे पिण्डोपनिषत्समाप्ता ॥ २० ॥

**प्रथमेन** त्विति । कलाः षोडश षष्ठप्रश्नोक्ताः ।

यथा—"कलाः षोडश भूतानि प्राणोऽक्षं जन्म कर्म च ।
श्रद्धा यज्ञास्तपोमन्त्रा मनोमात्रं शरीरकम्" ॥ इति ।

दश पिण्डा दशसु दिनेषु पुत्रादिभिर्दीयमानाः प्रथमादिशब्देनोक्ताः । भावाः क्षुत्तृषादयः । प्लवनमुद्बोधः । अयमर्थो **गरुडपुराण** एतच्छ्रुतिमूल एव सोपपत्तिको भगवता गरुडं प्रत्युपपादितः देहावयवोत्पत्तौ च मूर्धादिः क्रम उक्तः ।

तथाहि—"प्रथमेऽहनि यः पिण्डस्तेन मूर्धा प्रजायते ।
ग्रीवास्कन्धं द्वितीयेन तृतीये हृदयं भवेत् ॥
चतुर्थेन भवेत्पृष्ठिः पञ्चमे नाभिरेव च ।
षट्सप्तमे कटिर्गुह्यमूरू चाप्यष्टमे तथा ॥
जानुपादौ तु नवमे दशमेऽह्नि क्षुधा भवेत् ।
देहभूतः क्षुधाऽऽविष्टो गृहद्वारे च तिष्ठति ॥
दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ।
यतो देहे समुत्पन्ने प्रेतो जीवः क्षुधाऽन्वितः ॥
अतस्त्वामिषबाह्यं तु क्षुधा तस्य न नश्यति ।
एकादशं द्वादशं च प्रेतो भुङ्क्ते दिनद्वयम्" ॥ इति ।

॥ ४ ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां पिण्डोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचिता पिण्डोपनिषद्दीपिका समाप्ता ॥ २७ ॥

---

१ क. पिण्डश° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# प्राणाग्निहोत्रोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

प्राणाग्निहोत्रोपनिषच्चतुष्खण्डविराजिता ।
एकादशी शौनकीये सारभूता हि सर्वतः ॥ १ ॥

ननु विरक्तस्यापि देहस्य स्थितयेऽन्नादनमावश्यकं तच्च मुक्तावनुपयुक्तत्वादनर्थकं स्यादित्याशङ्क्योपासनया सार्थकत्वायाग्निहोत्रोपनिषदारभ्यते—

**अथातः सर्वोपनिषत्सारं संसारज्ञानमधी-**
**तमन्नसूत्रं शारीरं यज्ञं व्याख्यास्यामः ।**

**अथात इति** । संसारज्ञानं संसारो हेयतया ज्ञायतेऽनेनेति । अधीतं वेदेषु । अन्न सूत्रमन्नमेव सूत्रं साधनं यस्मिन् । शारीरं शरीरभवम् ।

यज्ञप्ररोचनार्थमादौ फलमाह—

**अस्मिन्नेव पुरुषशरीरे विनाऽप्यग्निहोत्रेण विनाऽपि**
**सांख्ययोगेन संसारविमुक्तिर्भवतीति स्वेन विधिना,**

**अस्मिन्निति** । स्वेन स्वगृह्योक्तेन ।

**अन्नं भूमौ निक्षिप्य**

**अन्नं भूमाविति** । न त्वन्तरिक्षे पटा(पीठा)दावन्नपात्रमारोप्यमित्यर्थः ।
तदुक्तम्—“ पीठस्योपरि पात्रं यः संस्थाप्याश्नाति ब्राह्मणः ।
न देवास्तृप्तिमायान्ति दातुर्भवति निष्फलम् ॥ इति ।

यद्वा व्याहृतिभिर्बलित्रयं भूमौ दत्त्वेत्यर्थः ।

ताः स्वरूपेणाऽऽह—

**या ओषधयः सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्याम-**
**नुमन्त्रयते । या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।**

**या ओषधय इति । सोमराज्ञीरिति** । सोमो राजा यासां ताः सोमराज्य इत्यर्थः । ता नोऽस्मानंहसः पापान्मुञ्चन्त्वित्यन्वयः । शतमनेकजातीया विचक्षणा रोगाद्यपनयनज्ञानवत्यस्तयोः कर्मधारयः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ।

बृहस्पतिप्रसूता इति । बृहस्पतिना प्रसूता दर्शितवीर्याः ।

अनेकरूपत्वमेवोच्यते—

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥

याः फलिनीरिति । चकारेण वृक्षव्रतत्यादिरूपा उच्यन्ते ।

जीवलां नघारिषां मा ते बध्नाम्योषधिम् ।
या त आयुरुपहरादप रक्षांसि चाऽऽ.यात् ॥

जीवलां जीवं लात्यादत्ते सा विषौषधिरित्यर्थस्ताम् । नघारिषां हर्षाजननीमुद्वेगकारिणीं यथा लाङ्गली गृहोपरि निक्षिप्ता कलहं करोति कुटुम्बिना तादृशीम् । हे, ओषधे वनदेवते ते तव त्वत्संबन्धिनीं त्वत्स्वामिकां तां मा बध्नामि न स्वीयां करोमि । उपहरादुपहरेद्र‍क्षांसि चापाऽऽतयादागतानि कुर्यात् । तां ते मा बध्नामीत्यन्वयः ।

अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।
प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

अनमीवस्य न अमीवं पापं यस्य । शुष्मिणस्तेजस्विनः । शुष्मं तेजोर्कयोरुक्तमिति **विश्वः** । प्रप्रदातारं प्रसमुपोदः पादपूरण इति प्रशब्दस्य द्विर्भावः । तारिषस्तारयोर्ध्वलोकं नय । ऊर्जमन्नं बलं वा नोऽस्मभ्यं धेहि देहि । डुधाञ् हि धारणे पुष्टौ दान इति **बोपदेवः** । द्विपदे मनुष्याय ।

यदन्नमद्मि बहुधा विराद्धम् ।

विराद्धं सिद्धिविरोधि ।

विराद्धिमेवाऽऽह—

रुद्रैः प्रजग्धं यदि वा पिशाचैः । सर्वं तदी-
शानो अभयं कृणोतु शिवमीशानाय स्वाहा ।

रुद्रैरिति । रुद्रपिशाचादिभ्यो यजमानेनार्पितमित्यर्थः । सर्वं तदन्नमीशानः परमात्माऽभयं भयाजनकं कृणोतु करोतु तदर्थमीशानाय स्वाहा । आहुतिं ददामीत्यर्थः ।

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं
यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्त्वं विष्णुस्त्वं वषट्कारः ।
आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरों नमः ।

१ क ख. ग. ङ ब्रह्म ।

जठराग्नेः प्रार्थनाऽन्तारित्यपां प्रार्थनाऽऽपो ज्योतिरित्यादि । हे, आपो यूयं ज्योतिरादिरूपाः स्थ ताभ्य ॐ नम इत्यन्वयः ।

**आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं वा यद्वा दुश्चरितं मम । सर्वं पुनन्तु तं ह्यापो असतां च प्रतिग्रहम् ।**

**आपः पुनन्त्विति** । तासामेवापरो मन्त्रः । पूता सती मां पुनातु । ब्रह्मणस्पतिर्ब्रह्मणस्पतयः । पृथिवीं पुनन्तु । ब्रह्मपूता ब्रह्मभिर्ब्राह्मणैः पवित्रिता पृथिवी मां पुनातु । ममोच्छिष्टादि सर्वं तमापः पुनन्तु शोधयन्त्वित्यन्वयः ।

**आपोऽमृतमस्यमृतोपस्तरणमस्यमृतं प्राणे जुहोम्यमा शिष्यान्तोऽसि प्राणाय प्रदानाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति कनिष्ठिकयाऽङ्गुल्याऽङ्गुष्ठेन च प्राणे जुहोमि ।**

**आपोऽमृतमसीति** । आप आप्नोतेरसुन्विधेयवचनानुरोधेन वाऽसीत्येकवचनम् । अमा सह हे शिष्य प्रशिष्य । अन्तोऽस्यमितोऽसि भोजितोऽसि । अम गतौ भोजने शब्दे ।

**अनामिकयाऽपाने मध्यमिकया व्याने प्रदेशिन्या समाने सर्वाभिरुदाने तूष्णीमेकामेकऋषौ जुहोति द्वे आहवनीय एकां दक्षिणाग्नावेकां गार्हपत्य एकां सर्वप्रायश्चित्तीये ॥१॥**

**अनामिकयेति** । अङ्गुष्ठः सर्वत्रान्वेति । एकऋषावग्नौ तत्राग्निः सूर्य आहवनीयेदर्शनाग्नौ मुखस्थे दक्षिणाग्नौ शरीराग्नौ हृदयस्थे गार्हपत्ये कोष्ठाग्नौ नाभिस्थे । सर्वप्रायश्चित्तीये नाभेरधःस्थिते ॥ १ ॥

**अथापिधानमस्यमृताय[3] त्वोपदधामीत्युपस्पृश्य पुनरादाय पुनरुपस्पृशेत्सव्ये[4] पाणावपो गृहीत्वा हृदयमन्वालभ्य जपेत् ।**

अपिधानमाच्छादनम् । अनेन मन्त्रेण द्विराचम्य ततो वामेनोदकं गृहीत्वा दक्षिणेन हृदयमालभ्य स्पृष्ट्वाऽमृतोऽसीत्यन्तं जपेत् ।

**प्राणोऽग्निः परमात्मा पञ्चवायुभिरावृतः ।**
**अभयं सर्वभूतेभ्यो न भवेदहं कदाच नेति ।**

**अभयमिति** । सर्वभूतेभ्योऽभयं भवेत् । अहं कदाच कदाचिदपि न नापि तु भवेयमेवेत्यन्वयः । इमे द्वे प्रार्थने ।

**विश्वोऽसि वैश्वानरो विश्वरूपो[5] विश्वं त्वया धार्यते ।**
**जायमानं विश्वं तु त्वाहुतयः सर्वा यत्र ब्रह्म ।**

---

१ ङ. °स्तश्च प्र° । २ ङ. °प्रहात् । आ° । ३ म. °मृत त्योप° । ४ ग °व्येनापो । ५ ग. °पो वै वि° ।

**विश्वं त्विति** । विश्वं यत्ताः सर्वास्तवाऽऽहुतयः । यत्र विश्वस्मिन्ब्रह्मा वर्तते । ब्रह्मादिस्तम्बपर्यन्तं जगत्तवाऽऽहुतय इत्यर्थः ।

तर्हि त्वमपि कस्यचिदाहुतिः स्या अत आह—

**विश्वामृतोऽसीति ।**

**विश्वामृत इति** । विश्वामृतोऽसि विश्वेषु नित्योऽसि ।

**महानवोऽयं पुरुषो योऽङ्गुष्ठाग्रे प्रतिष्ठितः । तमद्भिः प्रतिषिञ्चामि सोऽस्यान्तेऽमृतायामृतयोनावित्येष एवाऽऽत्मा ।**

**महानिति** । अवोऽन्नतर्पक इत्यर्थः । अन्ते देहावसाने । अमृताय योनौ निषेकस्थानेऽमृतभावाय । अनेन दक्षिणाङ्गुष्ठाग्रं सिञ्चेत् । एष भोक्ताऽङ्गुष्ठाग्रे स्थितः स एवाऽऽत्मा ज्ञेयः ।

अत्राग्निहोत्रबुद्धिः कर्तव्येत्याह—

**ध्यायेताग्निहोत्रं जुहोमीति सर्वेषामेव सूनुर्भवत्यथ**

**ध्यायेतेति** । सूनुर्जनकः प्रसोता सूत इति व्युत्पत्त्या न तु रूढ्या । सूनुः पुत्रेऽनुजे रवाविति विश्वोक्तेः । यद्वा सूनुः पुत्रो यथा पितुस्तर्पक एवं सर्वेषां तर्पको भवतीत्यर्थः । यद्वा सूर्य इव भवति ।

**यज्ञपरिवृत आहुतीर्होमयति स्वे शरीरे यज्ञं परिवर्तयामीति ।**

**यज्ञपरिवृत इति** । यज्ञपरिवर्तनाय । संपदादित्वात्क्विप् । अथेत्याग्निहोत्रबुद्ध्यनन्तरमधिकारप्राप्तौ । आहुतीर्ग्रासान्यज्ञबुद्ध्या होमयति मुखे क्षिपति यज्ञं वर्तयामीतिबुद्ध्या ।

**चत्वारोऽग्नयस्ते किंनामधेयाः ।**

**चत्वार इति** । पञ्चमस्य प्रायश्चित्तीयस्यासार्वत्रिकत्वात् ।

**तत्र सूर्योऽग्निर्नाम सूर्यमण्डलाकृतिः सहस्ररश्मिभिः परिवृत एकर्षिर्भूत्वा मूर्ध्नि तिष्ठति**

उपासनार्थं नामानि पृच्छति—**तत्रेति** ।

**यस्मादुक्तः ।**

**यस्मादुक्त इति** । पूर्वेण संबध्यते । यस्मात्सूर्यः सहस्रदलाधिष्ठातेति वेदेषूक्तः ।

तदधस्तनमग्निमाह—

**दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा**

**दर्शनाग्निरिति** । चतुराकृतिश्चतुरस्राकृतिः ।

**मुखे तिष्ठति**

---

१ ग. °द्भिः परिषि° ।

मुख इति । तदुक्तम्—

"जिह्वामूले स्थितो देवि सर्वतेजोमयोऽनलः ।
तदग्रे भास्करश्चन्द्रस्तालुमूले प्रतिष्ठितः" ॥ इति ।

तृतीयमाह—

**शारीरोऽग्निर्नाम जराप्रणुदा हविर-
विस्कन्दत्यर्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा**

**शारीर इति** । शारीरो जठराग्निः शुभाशुभभोक्ता । जराप्रणुदा जरां प्रणुदति कनिन्प्रत्ययः । "अजरो न जीवो म्रियते" इति श्रुतेः ।

**हृदये तिष्ठति ।**

**हृदय इति** । तदुक्तम्—"हृत्सरोरुहमध्येऽस्मिन्" इत्युपक्रम्य "विश्वार्चितं महावह्निं ज्वलन्तं विश्वतोमुखम्" इत्यादि । हविर्भुक्तमविस्कन्दत्यवस्कन्दयति शोषयति तद्रसं गृह्णातीत्यर्थः ।

**तत्र कोष्ठाग्निर्नामाशितपीतलीढखादि-
तानि सम्यक्श्रपयित्वा गार्हपत्यो भूत्वा**

**तत्र कोष्ठाग्निरिति** । य उक्तः स निरूप्यत इति शेषः । प्रतिज्ञातमर्थं दर्शयति—**कोष्ठाग्निर्नामेति** । अशितं चोष्यं लीढं लेह्यम् ।

**नाभ्यां तिष्ठति । प्रायश्चित्तीयस्त्वधस्तात्तिस्रयस्तिस्रः ।**

**नाभ्यामिति** । तदुक्तम्—"नाभिमध्ये भवत्येष भास्करो दहनात्मकः" इति । प्रायश्चित्तीयस्त्वधस्ताद्वर्तते सर्वेषामिति शेषः । तदुक्तम्—"त्रिकोणं च पुरं वह्नेरधो मेढ्रादवस्थितम्" इति । स्त्रियास्तिस्रो यस्य वर्तन्त इति शेषः । नाडीनां बाहुल्येऽपि मुख्या नाड्यस्तिस्र एवेडा पिङ्गला सुषुम्ना ।

ताभिः किं करोतीत्यत आह—

**हिमांशुप्रभा[1] प्रजननकर्मा ॥ २ ॥**

**हिमांश्विति** । हिमांशोर्ललाटस्थचन्द्रमण्डलान्नाडीद्वारा चूताभिः प्रभाभिः शुक्ररूपाभिः प्रजननं प्रजोत्पत्तिः कर्म यस्य स तथा । पुंलिङ्गं ह्यग्निकुण्डमध्येऽस्ति तेनाग्निकुण्डे पतितं शुक्रं प्राणेनाऽऽकृष्टं लिङ्गाग्रेण गर्भाशयं प्रविश्य प्रजा भवति तेनाग्नीषोमात्मकं शरीरमुच्यते ॥ २ ॥

**अस्य शारीरयज्ञस्य यूपरशनाशोभितस्य को यजमानः का पत्नी ।**

---

१ क. ख. ग °प्रभ. प्र° ।

शारीरयज्ञस्य यूपेनोकारेण रशनयाऽऽशया शोभितस्योपकरणानि पृच्छ्यन्ते पृष्ट्वा चोत्तर्यन्ते क्वचित्क्रमेण क्वचिद्व्युत्क्रमेणानास्थया। दृष्टिसंपादन एव तात्पर्यात्।

क ऋत्विजः के सदस्याः कानि यज्ञपात्राणि कानि हवींषि का वेदिः कोत्तरवेदिः को द्रोणकलशः को रथः कः पशुः कोऽध्वर्युः को होता को ब्राह्मणाच्छंसी कः प्रतिप्रस्थाता कः प्रस्तोता को मैत्रावरुणः क उद्गाता को धारापोता के दर्भाः कः स्रुवः काऽऽज्यस्थाली कावाघारौ कावाज्यभागौ के प्रयाजाः केऽनुयाजाः केडा कः सूक्तवाकः कः शंयुवाक[1]ः के पत्नीसंयाजाः को यूपः का र[2]शना का इष्टयः का दक्षिणा किमवभृथमिति ॥ ३ ॥

क ऋत्विज इति सामान्यः प्रश्नः। कोऽध्वर्युरित्यादिर्विशेषप्रश्नः। धारा पोतो(त्रु)-पकरणविशेषः। इडा पात्रविशेषः। केडा का इडा ॥ ३ ॥

अस्य शारीरयज्ञस्य यूपरशनाशोभितस्याऽऽत्मा यजमानो बुद्धिः पत्नी वेदा महर्त्विजोऽहंकारोऽध्वर्युश्चित्तं होता प्राणो ब्राह्मणाच्छंस्यपानः प्रतिप्रस्थाता व्यानः प्रस्तोता समानो मैत्रावरुण उदान उद्गाता शरीरं वेदिर्नासिकोत्तरवेदिर्मूर्धा द्रोणकलशो दक्षिणहस्तः स्रुवः सव्यहस्त आज्यस्थाली श्रोत्रे आघारौ चक्षुषी आज्यभागौ ग्रीवा धारापोता तन्मात्राणि सदस्या महाभूतानि प्रयाजा भूतान्यनुयाजा जिह्वेडा दन्तोष्ठौ सूक्तवाकस्तालु शंयुवाकः स्मृतिर्दया क्षान्तिरहिंसा।

वेदा महर्त्विजः। ऋत्विजामप्यृत्विजः सर्वेषामुपदेष्टृत्वात्। सामान्यप्रश्नस्य विशेषपर्यवसायित्वाद्विशेषेणोत्तरम्। ग्रीवा कंधरा। धारापोता धाराभिरुपलक्षितः पोता पवमानाध्येता। जिह्वेडा। इडा पात्रविशेषः। इत्यादि। आत्मादीनां यजमानादिसाम्यं स्वातन्त्र्यादिना यथासंभवमूहनीयम्। अत्र पञ्चत्रिंशत्प्रश्नास्तावन्त्येवोत्तराणि। के प्रयाजाः केऽनुयाजा इत्येतयोर्महाभूतानि प्रयाजा भूतान्यनुयाजा इत्युत्तरम्। भूतानि शरीराश्रितप्राणिनः सात्त्विकादयस्त्रिविधाः।

पत्नीसंयाजा ओंकारो यूप आशा र[3]शना मनो रथः कामः पशुः केशा दर्भा बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींष्यहिंसा इष्टयस्त्यागो दक्षिणा अवभृथं म[4]रणात्।

---

१ ख. ग. शंयोर्वाकः। २ ग. रसन। ३ रसना। ४ क. मरणम्।

स्मृतिर्दया क्षान्तिरहिंसेति चत्वारः पत्नीसंयाजा मनो रथो मन एव रथः । मरणाद्देहाख्यमलापनयनादात्मनो यजमानस्य यज्ञान्तस्नानम् ।

ननु भवन्तु यज्ञोपकरणानि तथाऽपि देवताभावे कथं यज्ञः स्यादित्यत आह—

**सर्वा ह्यस्मिन्देवताः शरीरेऽधि समाहिताः ।**

**सर्वा हीति** । यावदधिदैवतं तावदध्यात्मं वर्तते चक्षुरादीनां सूर्याद्यधिष्ठितत्वादिति भावः ।

ननु ज्ञानाभावे कथं मोक्ष इत्याशङ्क्य वाराणसीमरणं दृष्टान्ती करोति—

**वाराणस्यां मृतो वाऽपि इदं वा ब्रह्म यः पठेत् ।**
**एकेन जन्मना जन्तुर्मोक्षं च प्राप्नुयादिति मोक्षं च प्राप्नुयादिति ॥४॥**
**इत्यथर्ववेदे प्राणाग्निहोत्रोपनिषत्समाप्ता ॥ २१ ॥**

**वाराणस्यामिति** । द्विरुक्तिः समाप्त्यर्था ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानामाग्निहोत्रस्य दीपिका ॥ १ ॥

इति नारायणविरचिता प्राणाग्निहोत्रोपनिषद्दीपिका समाप्ता ॥ २८ ॥

---

१ च °नयाद्दा° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# ब्रह्मोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ब्रह्मोपनिषदारभ्या ब्रह्मज्ञानप्रदायिनी ।
चतुष्खण्डा च दशमी शमिनां हृदयंगमा ॥ १ ॥

इदानीं चतुष्खण्डस्यस्य चतुःस्थानस्य चतुर्ध्यानास्पदस्याऽऽत्मनो निर्गुणध्यानसिद्धये स्वरूपं ससंन्यासं वक्तव्यमिति ब्रह्मोपनिषदारभ्यते—

**ॐ शौनकों ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादंमपृच्छत् ।**

**ॐ शौनक इति ।** ॐ अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धेति तत्र चतुष्पादं ब्रह्म विभातीति ग्रन्थो द्वितीयखण्डादौ पठितः प्रथमखण्डादावपि केचित्पठन्ति स पाठो नातिप्रयोजनोऽर्थसंबन्धाभावात् । महाशालो महत्यः शाला गृहाग्रभागा यस्य स तथा । अङ्गिरसं गोत्रतोऽपत्यापत्यवतोरभेदोपचारात् । पिप्पलादं नामतोऽपृच्छत्पृष्टवान् ।

प्रश्नानाह—

**दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवन्ति कथं सृजन्ति कस्यैष**
**महिमा बभूव यो ह्येष महिमा बभूव क एषः ।**

**दिव्य इति ।** दिव्ये वागादिदेवनिवासार्थे ब्रह्मोपलब्धिस्थाने ब्रह्मपुरे शरीरे संप्रतिष्ठिता भवन्ति कथम् । वागादय इति शेषः । किमाधारा वागादयः शरीरे प्रतिष्ठिता इति प्रश्नः । सृजन्तीत्यत्रापि कथमिति संबध्यते । किंबलेन स्वस्वविषयेषु व्याप्रियन्त इत्यर्थः । एष द्वितीयः प्रश्नः । कस्यैष महिमा बुद्ध्यादिविस्तारो बभूव जात इति तृतीयः । यो ह्येष प्रत्यक्षो महिमा बभूवैष किंतत्त्वको महिमा तत्त्वप्रश्नद्वारा महत एव तत्त्वं पृष्टं वेदितव्यमिति चतुर्थः ।

उत्तरमाह—

**तस्मै स होवाच ब्रह्मविद्यां वरिष्ठाम् ।**

---

१ ग. घ. ॐ अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धेति तत्र चतुष्पादं ब्रह्म विभाति । ॐ शौ° । २ ख. °कों वै । ३ क. लादं पप्रच्छ । दि° । ग. °लादं पप्रच्छ । क दि° । ४ ग. °व्ये स्म्ये ब्र° ।

तस्मा इति । स पिप्पलादः । ह प्रसिद्धौ । उवाच परितो बभाषे । ब्रह्मविद्याम् । सर्वैरपि प्रश्नैर्ब्रह्मण एव पृष्टत्वाद्ब्रह्मविद्येयम् । वरिष्ठामतिशयेनोर्वीम् ।

**प्राणो ह्येष आत्मा ।**

**प्राणो ह्येष इति ।** किं भौतिको नेत्याह—आत्मा । यस्मिन्देवाः प्रतिष्ठिता यद्बलेन च सृजन्ति यस्यैष महिमा यच्च महिम्नस्तत्त्वं स एष आत्मेत्यर्थः । सामान्येनेदं चतुर्णामप्युत्तरम् । आत्मनः प्राणत्वं प्राणाश्रयत्वात् । अत एव तथा प्राण इति भगवत्सूत्रम् ।

**आत्मनो महिमा बभूव ।**

विशेषेण तृतीयस्योत्तरमाह—**आत्मन इति ।**

प्रथमस्य विशेषमाह—

**देवानामायुः**

**देवानामिति ।** देवानां वागादीनामायुर्जीवितमात्मा "को ह्येवान्यात्कः प्राण्याद्यद्येष आत्माऽऽनन्दो न स्यात्" इति श्रुतेः । आत्मसत्तयैव तेषां सत्तालाभात् ।

तदेव विवृण्वन्नाह—

**स देवानां निधनमनिधनं**

**स इति ।** निधनं मरणमनिधनं जीवितं तद्धेतुरित्यर्थः ।

**दिव्ये ब्रह्मपुरे**[1]

स क्वास्तीत्याशङ्क्याऽऽह—दिव्ये ब्रह्मपुरे ।

चतुर्थमुत्तरयति—

**विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभाति स नियच्छति ।**

**विरजमित्यादि ।** यद्ब्रह्म परमात्मा विभाति प्रकाशते तद्विरजं निरवद्यं तत्त्वम् । निष्कलं कलाऽविद्याकार्यं प्राणादि तद्रहितम् । निषेधमुखेनोक्त्वा विधिमुखेनाप्याह— शुभ्रमुज्ज्वलं प्रकाशात्मकम् । अक्षरम् । अश्नुते व्याप्नोति "अश्नोतेर्वा सरोऽक्षरम्" इति स्मृतेः । कथं सृजन्तीत्यस्य द्वितीयस्योत्तरं स इति । नियच्छति । नियमनं करोति । नियमनं बृहदारण्यकेऽन्तर्यामिब्राह्मणे—"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इत्यादिचतुर्विंशत्या पर्यायैर्व्याख्यातं तत्र प्रत्येकं पृथिव्यादीनां नियमनमुक्तम् ।

अत्र तु हैकध्येनाऽऽह—

**मधुकरराजानं**

**मधुकरराजानमिति ।** मधुकरा इन्द्रियाणि तेषां राजानं तदभिमानिनं जीवं निय-

---

१ ख. पुरे ।

च्छति । तेन सर्वाणि नियतानीत्युक्तं भवति । समासान्तविधेरनित्यत्वाट्टज्न कृतः ।

एकस्य संघनियन्तृत्वे दृष्टान्तमाह—

**माक्षिकवत् ।**

**माक्षिकवदिति** । मक्षिकाभिर्जीवति माक्षिक ऊर्णनाभो लूता कीटविशेषस्तद्वत् । विवृणोति —

**यथा माक्षीकैकेन तन्तुना जालं विक्षिपति तेनाप-**
**कर्षति तथैवैष प्राणो यदा याति संसृष्टमाकृष्य ।**

**यथेति** । यथा माक्षीका । छान्दसमिकारस्य दीर्घत्वं टाप्च । लूता, एकेन तन्तुना नालरूपेण द्वारेण जालं स्वकुलायं विक्षिपति स्वशरीराद्बहिः करोति तेनैवैकेन तन्तुनाऽपकर्षति तत्स्थानादन्तर्णयति च ।

वक्ष्यति—"ऊर्णनाभिर्यथा तन्तुं सृजते संहरत्यपि ।
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः " ॥ इति ।

लूतास्थानीय आत्मा तन्तुस्थानीयः प्राणो जालस्थानीयं वागादि । यथाऽयं दृष्टान्तस्तथैवैष प्राणो यदा याति गच्छति तदा संसृष्टमाकृष्य गच्छति- वागादिसंघातं गृहीत्वैव याति । यथोक्तम्—यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत् " इति ।

ननु वागाद्याकर्षणे प्राणस्य तैः कः संबन्ध इति प्रश्ने नाडीद्वारक इत्युत्तरिते नाडीभिः प्राणस्य कः संबन्ध इति शङ्का स्यात्तामपनेतुमाह—

**प्राणदेवतास्ताः सर्वा नाड्यः**

**प्राणेति** । प्राणो देवता यासां ताः प्राणदेवतास्ताः पूर्वोक्ताः सर्वा नाड्यः सुषुम्नादयः ।

यातीत्युक्तं तत्केत्यपेक्षायामाह—

**सुष्वपे श्येनाकाशवद्यथा खं श्येनमा-**
**श्रित्य याति स्वमालयमेवं सुषुप्तो**

**सुष्वप इति** । सुतरां स्वप्नं सुषुप्तिस्तत्र सुषुप्तिकाले यातीत्यर्थः । एतन्मरणमूर्च्छादेरप्युपलक्षणम् । क्व यातीति प्रश्ने स्वालयं यातीत्युत्तरं तत्र दृष्टान्तः श्येनाकाशवदिति । विवरणं यथेति । श्येनं श्येनो यथा खमाकाशमाश्रित्य स्वालयं याति तथा सुप्तोऽपि स्वालयं ब्रह्म याति ।

कथं ज्ञायते स्वालयं ब्रह्म याति न यत्र कुत्रचिदिति पृष्ट उत्तरमाह—

**ब्रूते ।**

**ब्रूत इति** । उत्थितः सन्सुखमहमस्वाप्समिति लोकान्वदति तेनाऽऽनन्दं स्वालयं गत आनन्दाच्चाऽऽगत इति ज्ञायते । आनन्दश्च ब्रह्म ।

ननु शुभाशुभेषु कर्मसु सत्सु कथमानन्दानुभवः सुषुप्तेऽपि स्यादित्याशङ्क्य शुभाशुभाभावं प्रतिपादयितुं दृष्टान्तमाह—

**यथैवैष देवदत्तो यष्ट्याऽपि ताड्यमानो**
**न यत्येवमिष्टापूर्तैः शुभाशुभैर्न लिप्यते ।**

यथैवैष देवदत्तो यष्ट्याऽपि काष्ठेनापि ताड्यमानः । न यति न याति । छान्दसो ह्रस्वः । न गच्छति न पलायते सुषुप्तौ तत्कस्य हेतोरितरानुभवाभावादित्येव तदपि कुतः कारणाधर्माभावादेवमनेन निदर्शनेनेष्टापूर्तयोः कर्ता तत्फलैर्न लिप्यते ।

**यथा कुमारो**

ननु यथा सुषुप्ते दुःखहेतुरधर्मो नास्ति तथा सुखहेतुर्धर्मोऽपि नास्ति तत्कुत आनन्दानुभव इत्याशङ्क्य यद्यपि धर्महेतुक आनन्दो नास्ति तथाऽपि नित्यानन्दो वर्तते योऽनुभूयत इत्युत्तरिते किं तत्र प्रमाणमिति पृष्टेऽनुभवं प्रमाणयति—**यथेति** ।

ननु तस्यापि क्रीडनकादिनिमित्त आनन्दो भविष्यतीत्यत आह—

**निष्काम आनन्दमुपयाति तथैवैष देवदत्तः स्वप्ने आनन्दमभियाति ।**

**निष्काम इति** । तदुक्तम्—

"द्वावेव चिन्तया मुक्तौ परमानन्दसंप्लुतौ ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः" ॥ इति ।

स्वप्ने सुषुप्ते ।

नन्वानन्दः सुखं तत्सुषुप्तौ ज्ञानाभावे कथं भासतेऽत आह—

**वेद एव परं ज्योतिः ।**

**वेद एवेति** । वेत्तीति वेदः । जानात्येवेत्यर्थः । यतः परं ज्योतिः परं साधननिरपेक्षं ह्यात्मज्योतिः "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति **श्रुतेः** ।

ननु यद्यपि वेदस्तथाऽपि निष्कामः कथमानन्दं पश्येदत आह—

**ज्योतिष्कामो ज्योतिरानन्दयते ।**

**ज्योतिष्काम इति** । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेरात्मनो नित्यकाम्यत्वाज्ज्योतिष्कामः सन्नात्मरूपं ज्योतिरानन्दयते । आनन्दरूपमनुभवति । सुषुप्तावन्यकामाभावे परिशेषसिद्धमात्मकामत्वम् । विमतः सकामः पुरुषत्वाज्जाग्रत्पुरुषवन्न च परमात्मनि व्यभिचारः पक्षतुल्यत्वात् । "आत्मकाम आप्तकामः" इति **श्रुते**स्तस्याप्यात्मनः सकामत्वात् ।

---

१ ग 'ष्ट्यादिना ता° । २ ग. °प्रस्थानं आ° ।

इदानीं स्वप्नावस्थामाह—

**भूयस्तेनैव स्वप्नाय गच्छति**

**भूय इति** । येनैव पथा सुषुप्तिं गतस्तेनैव प्रत्यावृत्य स्वप्नाय स्वप्नं प्राप्तुं गच्छति ।

**जलौकावत् ।**

**जलौकावदिति** । जलौका तृणजलौका तृणस्थः कीटविशेषः ।

दृष्टान्तं विवृणोति—

**यथा जलौकाऽग्रमग्रं नयत्यात्मानं नयति परं संधय ।**

**यथेति** । सा यथाऽग्रं पादाग्रमग्रं तृणाग्रदेशं नयति प्रापयति पादाभ्यां गृह्णीते गृहीत्वा तत्राऽऽत्मानं देहं नयति स्वयं गच्छति तत्रेत्यर्थः । किं कृत्वा परं संधय । परमग्रे वर्तमानं तृणादिकं संधय संधायाभिप्रेत्येत्यर्थः । छान्दसं धातोर्ह्रस्वत्वम् । अयमर्थः । सा यथोत्तरं गृहीत्वैव पूर्वं त्यजत्येवमयं स्वप्नदेहाद्यालम्ब्यैव पूर्वावस्थां सुषुप्त्यादिरूपां त्यजति जाग्रदाद्यालम्ब्यैव स्वप्नादि त्यजति । एवं मरणे देहान्तरमालम्ब्यैव पूर्वदेहं त्यजति । तदुक्तम्—"यथा तृणजलौकैवं देही कर्मानुगोऽवशः" इति । तथा "यथा तृणजलौका तृणस्यान्तं गत्वा" इत्यादिश्रुतिश्च ।

इदानीं जाग्रत्स्थानमाह—

**यत्परं नापरं त्यजति स जाग्रदभिधीयते ।**

**यत्परमिति** । यद्यत्र परमुत्तरमपरं पूर्वं न त्यजत्यवस्थात्रितयानुगतं यत्र पश्यति स जाग्रदभिधीयते जाग्रति हि स्वप्नसुषुप्तयोरप्यनुसंधानं भवति । यद्वा यद्यत्र परं धर्ममपरमधर्मं न त्यजति शुभाशुभाधिकारी भवति स जाग्रत्स्वप्ने तु कृतं शुभाशुभं न फलति ।

नन्वेकस्यानेकावस्थाश्रयत्वं कथमित्याशङ्क्य दृष्टान्तमाह—

**यथैवैष कपालाष्टकं संनयति ।**

**यथेति** । एष देवतादिर्यथाऽष्टौ कपालानि संनयति समकालं वहति तथैकोऽप्यात्माऽनेकावस्थां वहतीत्यर्थः ।

ननु संकोचविकाशात्मकमवस्थात्रयं कथमेकरूप आत्मनीत्याशङ्क्य दृष्टान्तेन साधयति—

**तमेव स्तन इव लम्बते वेददेवयोनिः ।**

**तमेवेति** । तमेवाऽऽत्मानमाविर्भावतिरोभावस्वभावमप्यवस्थात्रयं लम्बते श्रयति स्तन इव संकोचविकाशात्मक एकरूपां स्त्रियम् । स जाग्रदेव वेददेवयोनिर्वेदयोनिर्देवयोनिश्च ।

---

१ ङ. °जलायुका । २ क. ग. °म्बते एष वे° ।

कथं ज्ञायते जाग्रदेव वेददेवयोर्निर्न स्वप्नादिरिति तत्राऽऽह—

**यत्र जाग्रति शुभाशुभं निरुक्तमस्य देवस्य स संप्रसारोऽन्तर्यामी खगः कर्कटकः पुष्करः पुरुषः प्राणो हिंसा परापरं ब्रह्म**

यत्रेति । यत्र जाग्रति स्थानेऽस्य देवस्य शुभाशुभं निरुक्तं नितरामुक्तं शुभाशुभफलं च वेददेवाधीनं तेन जाग्रदुत्पन्नेति भावः । नितरामुक्तमित्युक्तत्वात्स्वप्नेऽपि क्रियानपि फलसंबन्धो भवतीति लक्ष्यतेऽत एव स्वप्ननिमित्तरेतःस्खलनादौ प्रायश्चित्तस्मरणं शास्त्रे । स देवः । संप्रसारः सम्यक्प्रसारोऽस्माल्लोकस्येति । अन्तर्याम्यन्तःस्थितो नियच्छति । वागादीनयं संयच्छतीत्यस्योपसंहारः । खगो देशान्तरवस्तुग्राहित्वात् । कर्कटो जलचरः प्राणिभेदः स इव कामितया वक्रगतित्वात्कर्कटकः । पुष्करः पुष्टिकरः । यद्वा पुष्करं गगनं तद्वत्स्वच्छः । पुरुषः पुरि देहे वसति । प्राणः प्राणनकर्ता तेन प्राणीत्युच्यते । हिंसा हिंसात्मको हिंस्रः । परापरं परं कारणमपरं कार्यम् । सगुणनिर्गुणभेदेन वा । स एव ब्रह्म ।

तर्हि किं देहिनो भिन्नं नेत्याह—

**आत्मा देवता वेदयति ।**

आत्मा प्रत्यक्तेन ब्रह्मात्मनोरभेद इत्यर्थः । सा देवता वेदयति सर्वं चेतनत्वात् "नान्योऽतोऽस्ति द्रष्टा" इति श्रुतेः ।

फलमाह—

**य एवं वेद स परं ब्रह्म धाम क्षेत्रज्ञमुपैति ॥ १ ॥**

**य एवमिति** । धाम सर्वाधारं प्रकाशात्मकं वा । क्षेत्रज्ञं साक्षिणम् । उपैति स्वात्मतया प्रतिपद्यते ॥ १ ॥

**अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धेति ।**

पुरुषस्योक्तलक्षणस्य स्थानानि । तत्र ध्याने सति शीघ्रमभिव्यक्तेः । नाभिर्मणिपूरचक्रम् । हृदयमनाहतम् । कण्ठं कण्ठो विशुद्धिचक्रम् । मूर्धाऽऽज्ञाचक्रम् । आधाराद्यनेकध्यानस्थानसत्त्वेऽपि प्राशस्त्यार्थं चतुर्णां ग्रहणम् ।

यदुक्तम्—"आधारे प्रथमे चक्रे द्रुतकाञ्चनसंनिभे ।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखी भवेत् ॥
स्वाधिष्ठाने शुभे चक्रे सन्माणिक्यशिखोपमे ।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखी भवेत्" ॥ इत्यादि ।

ननु किमित्येतान्येव स्थानानि निर्दिश्यन्ते नाऽऽधारादीनीत्यत आह—

**तत्र चतुष्पादं ब्रह्म विभाति ।**

**तत्रेति** । तत्र तेषु स्थानेषु विभाति विशेषेण भात्यल्पायासेन प्रकाशते ।

के ते पादा इत्यत आह—

**जागरितं स्वप्नं सुषुप्तं तुरीयमिति जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्ते रुद्रस्तुरीयं परमाक्षरं[1] स आदित्यश्च[2] विष्णुश्चेश्वरश्च स पुरुषः स प्राणः स जीवः सोऽग्निः[3]**

**जागरितमिति** । एषां पादत्वं पर्यायव्यावृतत्वादारोपितत्वेनानुत्तमाङ्गत्वात्प्रवृत्तेस्तदधीनत्वाच्च । स चतुरवस्थ आत्माऽऽदित्यादिः ।

**सेश्वरश्च जाग्रत्तेषां मध्ये यत्परं ब्रह्म विभाति**

**सेश्वरश्चेति** । स ईश्वरश्च । जाग्रदिति ब्रह्मणो विशेषणम् । देदीप्यमानमित्यर्थः । तेषां जाग्रदादीनाम् ।

तस्य स्वरूपमाह—

**स्वयमनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितं न तत्र लोका नलोका वेदा नवेदा देवा नदेवा यज्ञा नयज्ञा माता नमाता पिता नपिता स्नुषा नस्नुषा चाण्डालो नचाण्डालः**

**स्वयमिति** । ज्योतिर्वर्जितं न किंत्विन्द्रियादिरहितमपि ज्योतीरूपमेव । स्नुषा पुत्रवधूः । शूद्राद्ब्राह्मण्यां जातश्चाण्डालः ।

**पौल्कसो नपौल्कसः**

**पौल्कस इति** । निषादाच्छूद्रायां पुल्कसो भिल्लः पौल्कसः स एव ।

**श्रमणो नश्रमणः पशवो नपशवस्तापसो नतापस इत्येकमेव परं ब्रह्म विभाति ।**

**श्रमण इति** । सोऽपि नीचजातिभेदः " श्रमणो जातिभेदे च श्रमणो निन्द्यजीविनि " इति विश्वः ।

क्व भाति किंरूपं च ब्रह्मेत्यत आह—

**हृद्याकाशे तद्विज्ञानमाकाशं**

**हृदीति** । विज्ञानं चिद्रूपम् । आकाशं स्वच्छं तद्ब्रह्म ।

उभयोराकाशयोरविशेषमाशङ्क्य क्रमेण द्वयोर्लक्षणे आह—

**तत्सुषिरमाकाशं तद्वेद्यं हृद्याकाशं यस्मिन्निदं संचरति विचरति यस्मिन्निदं सर्वमोतं प्रोतं[6]**

**तत्सुषिरमिति** । मन्त्रेऽप्युक्तम्—" हृदयं तद्विजानीयाद्विश्वस्याऽऽयतनं महत् "इति

---

१ ग. घ. °रमक्ष° । २ ग. घ. °दित्यः स विष्णुः स पु° । ३ ग. घ. °ग्निः स ईश्व° । ४ ङ. °व्यावृतत्वा° । ५ घ. °श्च स जा° । ६ ग. घ. °मोतप्रो° ।

एतज्ज्ञानस्य फलं सर्वज्ञतामाह——

**सं विभोः प्रजा ज्ञायेरन् ।**

**सं विभोरिति** । विभोः प्रजाः सम्यग्ज्ञायेरन्यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवतीत्यर्थः । **यच्छान्दोग्ये**—" स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते " इत्यादि ।

फलान्तरमाह——

**न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविदिति ॥ २ ॥**

**न तत्रेति** । तत्र ज्ञानिनो देवा ऋषयः पितरश्च नेशते । ऋणत्रयातीतो भवतीत्यर्थः । प्रतिबुद्धो यः सर्ववित्सर्वमात्मत्वेन बुद्धवान् । न ह्यात्मन एव भयं भवतीति-हेतोः ॥ २ ॥

विदितवेदितव्यस्य संन्यासं विवक्षुर्बाह्यदेवपूजादित्यागः साहसमित्याशङ्क्यान्तरेव सर्वमस्तीति प्रतिपादयति मन्त्रः——

**हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।**
**हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च यन्महत् ॥**

**हृदिस्था इति** । देवता ब्रह्मादय इन्द्रियाधिष्ठातारश्च । प्राणा वागादयः प्राणो मुख्यप्राणः । ज्योतिर्विषयप्रकाशः शुद्धं ब्रह्म च । सर्वमूलभूतमव्यक्तमपि हृद्येवास्तीत्याह——**त्रिवृदिति** । सत्त्वरजस्तमसां परस्परसंकरेण नवगुणमव्यक्तं त्रिवृत्सर्वकर्माङ्गं बाह्यार्थे नवतन्तुकं च सूत्रं प्रकृतिस्तन्तवश्च । महदव्याकृतं निष्पन्नमुपवीतं च । हृदि प्राणश्चेति ।

**हृदि चैतन्ये तिष्ठति ।**

मन्त्रस्थं हृदीति पदं व्याचष्टे—**हृदि चैतन्ये तिष्ठतीति** ।

स्थूलोपवीतस्य वाचकं परिधानमन्त्रमाह—

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

**यज्ञेति** । प्रतिमुञ्च परिधेहि । हे शिष्य बलं बलप्रदं तेजस्तेजःप्रदं चास्तु तवेति मन्त्रार्थः । अयं मन्त्रोऽपि हृदि चैतन्ये तिष्ठतीत्यन्वयः ।

कर्माङ्गभूतैतदुपवीतत्यागेन संन्यासयोगमाह—

**सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।**
**यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥**

---

१ ख. प्राजाः संज्ञा° । ग. प्राजाः संविज्ञा° । २ ग. °वा लोका ऋ° ।

सशिखमिति । शिखा न रक्षणीया । बहिःसूत्रं बाह्योपवीतं बुधो विप्रस्तस्यैवाधिकारात् ।

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
तेन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥
बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः ।
ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः ॥

सूचनादिति । सूच्यते वेदान्तैर्न तूच्यते तत्सूत्रम् ।

धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम् ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥ ३ ॥

नोच्छिष्ट इति । एतन्मूला 'नान्नदोषेण मस्करी' इति स्मृतिः ॥ ३ ॥

ध्यानाभ्यासं विधातुं वीतरागाणां कर्मण्यनधिकारात्सरागाणामेव तदित्याह—

कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैः संधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

कर्मणीति । ये ब्राह्मणादयस्त्रयः कर्मण्यधिकृताः सरागास्तैरेव बहिःसूत्रं सम्यग्धार्यं न निवृत्तैर्हि यस्मात्कर्माङ्गं स्मृतम् । अङ्गिनिवृत्तावङ्गस्याप्रयोजनत्वात् ।

निवृत्तस्य शिखासूत्रादित्यागे प्रत्यवायाभावं वक्तुं तयो रूपकमाह—

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥

शिखेति । ब्रह्मविदो वेदविदः ।

बाह्योपवीतिभ्यो ज्ञानोपवीतिनो विशेषमाह—

इदं यज्ञोपवीतं तु पवित्रं यत्परायणम् ।
स विद्वान्यज्ञोपवीती स्यात्स यज्ञः स च यज्ञवित् ॥

---

१ क. येन । २ ख. °त्रं साधये° । ३ क. ग. परमं ।

इदमिति। इदं ज्ञानाख्यं यज्ञोपवीतम्। यज्ञो विष्णुरात्मा तस्योपवीतं वेष्टकं तदाकारमिति यावत्। तत्पवित्रं बाह्यापेक्षया। तच्च यत्परायणं यस्य परमयनं स विद्वान्स यज्ञः स विष्णुः। किंच (चा)विरक्तस्य यज्ञादित्यागेऽपि प्रत्यवायोऽस्ति।

यदुक्तम्—"परिव्राडविरक्तश्चेद्विरक्तश्च गृही तथा।

कुम्भीपाके विनश्येते द्वावुभौ कमलानने"॥ इति।

यल्लाभेन विधिवैवश्यं बन्धो निवृत्तो यत्प्रसादाद्दिव्यं चक्षुरासं मृत्युमुखाच्च निष्क्रान्तस्तं प्रेष्ठतमं[1] मन्त्राभ्यां स्तौति—

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।**
**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥**

**एक** इति। एकस्य सतो नानाभूतेषु स्थितिरलौकिको धर्मः। न च सत्तादौ दृष्टत्वाल्लौकिक इति वाच्यम्। तत्स्वरूपातिरिक्तस्य सत्तादेरनभ्युपगमात्। सर्वव्यापी। एकस्य सतः सर्वाङ्गेण सर्वव्याप्तिरत्यद्भुतम्। सर्वभूतान्तरात्मा। एकस्य सर्वान्तरत्वे दृष्टान्तो नास्ति। कर्माध्यक्षस्तत्फलदाता। सर्वभूताधिवासः। अधिको वासः सर्वावस्थाश्रयत्वाव्यभिचारात्। यद्वा सर्वभूतान्यधिवसति। कर्मण्यण्। अधिशीङ्स्थासां कर्मेत्यधिकरणस्य कर्मत्वम्। सर्वभूतस्थ इत्यर्थः। साक्षी साक्षादीक्षते न त्विन्द्रियादिव्यवधानेन। चेतेति। चितिरन्तर्भावितण्यर्थः। चेतयितेत्यर्थः। अथवा पृथिव्यादिसंचयकर्ता। केवलः सजातीयविजातीयभेदशून्यः। निर्गुणोऽद्वितीयत्वात्।

**एको मनीषी निष्क्रियाणां बहूनामेकं सन्तं बहुधा यः करोति।**
**तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥**

एको मनीषी। असाधारणः पण्डितः। अनेन ज्ञानशक्तिरुक्ता। निष्क्रियाणां बहूनां मध्ये एकः क्रियावान्। निर्धारणस्य सजातीयापेक्षत्वात्। अनेन क्रियाशक्तिरुक्ता। एकमात्मानं सन्तं यो बहुधा करोति मायित्वात्। आत्मस्थं बुद्धिस्थं धीरा धीमन्तः। शाश्वती शान्तिर्मोक्षः। नेतरेषामुक्तसाधनरहितानाम्।

**आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।**
**ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत्॥**

आत्मानं बुद्धिम्। निगूढवत्। लूकानिक्षिप्तेन तुल्यं स्थितम्। देवं पश्येत्साक्षात्कुर्यात्।

**तिलेषु तैलं दधनीव[2] सर्पिरापः स्रोतःस्वरणीषु चाग्निः।**
**एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति[3]॥**

---

१ ङ. प्रेष्ठतमं। २ क. ख. दधनीव। ३ ग. सा येऽनुपश्यन्ति धीराः। क्र°।

ऊर्णनाभिर्यथा तन्तून्सृजते संहरत्यपि ।
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥

**आत्मेशः** । आत्मानि बुद्धौ । सत्येन वाङ्नियमेन । तपसा शारीरनियमेन । अनुपश्यति तेन गृह्यते जाग्रज्जीवः । तथा स्वप्ने स्वप्नदशां गच्छति । पुनः स्वप्नादागच्छते जाग्रद्दशां गच्छति ।

हृदये ध्येयत्वाद्धृदयलक्षणमाह—

पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् ।
हृदयं तद्विजानीयाद्विश्वस्याऽऽयतनं महत् ॥

**पद्मे**ति । सुषिरं सुखे सुषिर्बिलमस्यास्ति तत् । अधोमुखं कदलीकोशवत् । हृदयं मांसमयं पद्मं तद्ज्ञेयं तदेव विश्वस्याऽऽयतनं सर्वस्याऽऽस्थानम् । ननु सूक्ष्मेऽत्र कथं विश्वं मातीत्यत आह—महदिति । ननु विरोधो महत्त्वानुपलम्भात् । अत एव केचिच्छून्यं तत्त्वं प्रतिपन्नाः । अपरे ज्ञानस्यैवाऽऽन्तरत्वात्साकारं ज्ञानम् । अनिर्वचनीयं विश्वमित्याचार्याः । वटबीजन्यायमपरे । वस्तुतत्त्वं त्वेको देव एव ज्ञातुमर्हति । अनुभवस्तु हृद्येव वस्तुमात्रस्यास्ति बहिःस्थमप्यन्तरेव भाति । अन्तःशून्यानां न किंचिद्भाति । अतोऽनुभावानुगृहीतया श्रुत्या हृदयस्य महत्त्वं सिद्धम् ।

अवस्थाविशेषे पुंसः स्थानभेदमाह—

नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत्[1] ।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥

**नेत्रस्थमिति** । स्वप्नं स्वप्नवन्तम् । **हृदयस्थमिति** । पुरीततिस्थितम् । **तुरीयमिति** । तदुक्तम्—"मनसा सह वागीश्या भित्त्वा ब्रह्मार्गलं क्षणात् ।
परामृतमहाम्भोधौ विश्रान्तिं तत्र कारयेत् " ॥ इति ।

तद्ध्यानमेव संध्येत्याह—

यदात्मा प्रज्ञयाऽऽत्मानं संधत्ते परमात्मनि ।
तेन संध्या ध्यानमेव तस्मात्संध्याभिवन्दनम् ॥
निरोदका ध्यानसंध्या वाक्कायक्लेशवर्जिता ।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दमेतज्जीवस्य यं ज्ञात्वा मुच्यते बुधः ॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवा[3]र्पितम् ।

**यदिति** । निरोदका निर्गतमा समन्तादुदकं यस्याः सा । तथा संधिन्येकत्वबोधिका ।

१ क. समाविशेत् । २ क. ग. °स्य यज्ज्ञात्वा । ३ क. ख. घ. °वाचित° ।

आनन्दमानन्दः । एतदेषः । यं परमानन्दं ज्ञात्वा मुच्यते । यमित्यस्य विशेषणद्वयं सर्वेति ।

इदानीमेतद्ग्रन्थस्य नाम निर्वक्ति—

**आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्पेरम्**
**सर्वात्मैकत्वरूपेण तद्ब्रह्मोपनिषत्परमिति ॥ ४ ॥**
**इत्यथर्ववेदे ब्रह्मोपनिषत्समाप्ता ॥ २२ ॥**

**आत्मेति** । ब्रह्माऽऽत्मा तस्योपनिषद्विद्या सैव तपः "तस्य ज्ञानमयं तपः" इति **श्रुतेः** । तस्य मूलं परं कारणमयं ग्रन्थ इत्युपचाराद्ग्रन्थोऽपि ब्रह्मोपनिषदित्यर्थः । तत्तस्मात् । निरुक्त्यन्तरमाह—**सर्वेति** । सर्वं ब्रह्मेत्युपनिषद्रहस्यज्ञानं यस्याः सा ब्रह्मोपनिषदित्यर्थः । द्विरुक्तिः समाप्त्यर्था । इतिशब्दश्च तद्द्योतकः ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां ब्रह्मोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचिता ब्रह्मोपनिषद्दीपिका समाप्ता ॥ २८ ॥

---

**ॐ तत्सद्ब्रह्मणे नमः ।**

# ब्रह्मोपनिषत् ।

## शंकरानन्दविरचितदीपिकासमेता ।

---

ब्रह्मोपनिषदं नाम ब्रह्मात्मैक्यावबोधिनीम् ।
व्याकरिष्यामि तेनेदं ब्रह्म तुष्यतु सर्वगम् ॥ १ ॥

**[ * ॐ शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादमपृच्छत् । दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवन्ति कथं सृजन्ति कस्यैष**

---

* चतुष्कोणाकृतिचिह्नान्तर्गतखण्डोपरि शंकरानन्दकृतव्याख्या न दृश्यतेऽतः शंकरानन्दमतेनास्मात्खण्डादनन्तरमुपनिषदारम्भ इति प्रतिभाति । नारायणेन त्वस्य व्याख्या कृताऽस्ति ।

---

१ ख. °मात्मान° । २ क. ख. ग. °त्परं त° ।

महिमा बभूव यो ह्येष महिमा बभूव क एषः। तस्मै स होवाच ब्रह्मविद्यां वरिष्ठाम्। प्राणो ह्येष आत्मा। आत्मनो महिमा बभूव देवानामायुः स देवानां निधनमनिधनं दिव्ये ब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभाति स नियच्छति मधुकरराजानं माक्षिकवद्यथा माक्षीकैकेन तन्तुना जालं विक्षिपति तेनापकर्षति तथैवैष प्राणो यदा याति संसृष्टमाकृष्य प्राणदेवतास्ताः सर्वा नाड्यः सुष्वपे श्येनाकाशवद्यथा खं श्येनमाश्रित्य याति स्वमालयमेवं सुषुप्तो ब्रूते यथैवैष देवदत्तो यष्ट्याऽपि ताड्यमानो न यत्येवमिष्टापूर्तैः शुभाशुभैर्न लिप्यते यथा कुमारो निष्काम आनन्दमुपयाति तथैवैष देवदत्तः स्वप्न आनन्दमभियाति वेद एव परं ज्योतिर्ज्योतिष्कामो ज्योतिरानन्दयते भूयस्तेनैव स्वप्नाय गच्छति जलौकावद्यथा जलौकाऽग्रमग्रं नयत्यात्मानं नयति परं संधय यत्परं नापरं त्यजति स जाग्रदभिधीयते यथैवैष कपालाष्टकं संनयति तमेव स्तन इव लम्बते वेददेवयोनिः। यत्र जाग्रति शुभाशुभं निरुक्तमस्य देवस्य ससंप्रसारोऽन्तर्यामी खगः कर्कटकः पुष्करः पुरुषः प्राणो हिंसा परापरं ब्रह्म। आत्मा देवता वेदयाति य एवं वेद स परं ब्रह्म धाम क्षेत्रज्ञमुपैति]॥१॥

त्वं ब्रह्मासीत्युक्तेऽनधिकारिणः कर्तृत्वादिविपरीतज्ञानवतोऽयोग्यत्वेन बोधो न जायते ततोऽस्य बोधोत्पादनार्थं नाभ्यादीनि स्थानान्युररीकृत्य विविधोपायमाह—

* अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति

**अथ,** उपनिषदारम्भे मङ्गलप्रयोजनोऽथशब्दोऽधिकारिणमाह। अधिकारिसंपत्त्यनन्तरं ब्रह्मविद्यां सोपायां कथयिष्यामीति शेषः। **अस्य** बुद्धेर्द्रष्टुः स्वयंप्रकाशस्य। **पुरुषस्य** परिपूर्णस्य। उपलब्ध्यर्थानि **चत्वारि स्थानानि भवन्ति**। स्पष्टम्।

न तानि देशान्तरे किं त्वस्मिञ्शरीर इत्याह—

नाभिर्हृदयं कण्ठं मूर्धा[१] च तत्र चतुष्पादं ब्रह्म विभाति

**नाभिर्**नाभिसरोरुहकन्दः। **हृदयं** हृदयपुण्डरीकम्। **कण्ठं** कण्ठगतं विशुद्धचक्रम्। **मूर्धा च** मस्तकस्थं चन्द्रमण्डलं दशमद्वारं वा। चकाराच्चक्षुरादीन्यपि स्थानान्युपासनान्तरेषु। **तत्र** तेषु **चतुष्पादं** चतुष्पात्स्थानचतुष्टयाश्रयत्वाद्गोवत्। **ब्रह्म** बृहद्देशकालवस्तुपरिच्छेदशून्यम्। **विभाति** विविधै रूपैः प्रतीयते।

* इत आरभ्य शंकरानन्दव्याख्यारम्भः।

१ ग. घ. मूर्धेति।

विविधानि रूपाण्याह—

**जागरितं स्वप्नं सुषुप्तं तुरीयमिति जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्ते रुद्रस्तुरीयमक्षरं स आदित्यः स पुरुषः स विष्णुश्चेश्वरश्च । स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितं यत्र लोका नलोका देवा नदेवा वेदा नवेदा यज्ञा नयज्ञा माता नमाता पिता नपिता स्नुषा नस्नुषा चाण्डालो नचाण्डालः पौल्कसो नपौल्कसः श्रमणो नश्रमणस्तापसो नतापसः ।**

**जागरितं स्वप्नं सुषुप्तं तुरीयमिति** । **जागरित** इन्द्रियैर्बाह्यविषयोपलम्भावसरे । **ब्रह्मा** नाभिदेशस्थश्चतुराननो जगतः कर्ता । स्पष्टम् । **स्वप्ने** वासनारूपविषयसेवने । **विष्णु**र्व्यापनशीलः शङ्खचक्रगदाधरो हृदयस्थः स्थितेः कर्ता । **सुषुप्ते** निद्राभिभूते करणग्रामेऽशेषविशेषबोधशून्ये । **रुद्रो** रोदयति नाशयति विश्वं कार्यमिति रुद्रः संहारस्य कर्ता कण्ठस्थः । **तुरीयं** चतुर्थम् । **अक्षरं** विनाशरहितं व्याप्तं वा मूर्धस्थम् । यद्यपि नेत्रे कण्ठे हृदये मूर्धनि जागरितादीनि वक्ष्यति तथाऽप्यत्र नाभ्यादीनामुक्तत्वादुपलब्ध्यर्थमेवं चिन्तनीयम् । अथवा नाभ्यादि यथाक्रमं परित्यज्य नाभिर्नेत्रं च समुच्चयेन विकल्पेन वा जागरितस्थानम् । कण्ठं स्वप्नस्य हृदयं सुषुप्तस्येति । **स** तुरीयोऽक्षर आत्माऽविद्ययाऽऽदित्य आदित्यमण्डलस्थः । **पुरुषो** ब्रह्मा **विष्णुश्च** व्यापनशीलः स्थितेः कर्ता । चकारादन्यदपि चेतनम् । **ईश्वरश्च** सर्वसंहारकर्ता नियन्ता । चशब्दादचेतनमपि । **स्वयं** स्वेनाविद्याव्यतिरिक्तेन रूपेण । **अमनस्कं** मनोरहितम् । **अश्रोत्रं** श्रोत्ररहितम् । उपलक्षणमिदं चक्षुरादिराहित्यस्य । **अपाणिपादं** करचरणविवर्जितम् । इदमुपलक्षणं पाय्वादिराहित्यस्य । **ज्योतिः** प्रकाशस्वभावम् । **विदितं** स्वयंप्रकाशमानम् । **यत्र** यस्मिन्नक्षरेऽमनस्कादिरूपे । **लोकाः** कर्मफलानि । **नलोकाः** । स्पष्टम् । **देवा** अग्न्यादयो वागादयश्च । **नदेवाः** । स्पष्टम् । **वेदा** ऋगाद्याः । **नवेदाः** । स्पष्टम् । **यज्ञा** दर्शपूर्णमासज्योतिष्टोमाद्याः । **नयज्ञाः** । स्पष्टम् । **माता** जननी । **नमाता** । स्पष्टम् । **पिता** जनकः । **नपिता** । स्पष्टम् । **स्नुषा** पुत्रभार्या । **नस्नुषा** । स्पष्टम् । **चाण्डालो** ब्राह्मण्यां शूद्राज्जातश्चण्डालः । चण्डाल एव चाण्डालः । **नचाण्डालः** । स्पष्टम् । **पौल्कसः** । क्षत्रियायां शूद्राज्जातः पुल्कसः । अन्यो वोत्तमयोनावधमबीजजः । पुल्कस एव पौल्कसः । **नपौल्कसः** । स्पष्टम् । **श्रमणः** संन्यासी । **नश्रमणः** । स्पष्टम् । तापसस्तपःप्रधानो वानप्रस्थः । **नतापसः** । स्पष्टम् ।

---

१ ङ. °रीयं परमाक्ष° । २ ङ. °दित्यश्च विष्णुश्चेश्वरश्च स पु° । ३ ङ. स प्राणश्चे° । ४ ङ. °ष्णुश्च स जीवः सोऽग्निः सेश्व° । ५ श्व. । जाग्रत्तेषां मध्ये यत्परं ब्रह्म विभाति । स्व° इति नारायणपाठः । ६ च. स्नग । ७ च. °ाद्यः । न° । ८ च. वनस्थः ।

ननु तत्र लोकादीनामभावः कथमित्यत आह—

**इत्येकमेव तत्परं ब्रह्म विभाति निर्वाणम् ।**

**इत्येकमेव** स्वगतसजातीयविजातीयभेदशून्यं न तु लोकादिकम् । तत्प्रसिद्धम् । **परमुत्कृष्टम्** । **ब्रह्म** देशकालवस्तुपरिच्छेदशून्यम् । **विभाति** विशेषेण प्रतीयते । **निर्वाणं** निर्गतं वाणं स्थूलं शरीरं दुर्गन्धाविनाशकर्तृत्वेनोपलक्षितमज्ञानं सकार्यं ससंस्कारं च यस्मात्तन्निर्वाणम् ।

**न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविद्येति ॥ १ ॥**

**न तत्र** तस्मिन्ब्रह्मणि निर्वाणे । **देवा** अग्नीन्द्रादयः । **ऋषयो** वसिष्ठदुर्वासःप्रभृतयः । **पितरो**ऽग्निष्वात्तादयः । **ईशते** नियन्तृनियम्यभावेन न समर्था भवन्ति । किं त्वेक एव **प्रतिबुद्धो**ऽहं ब्रह्मास्मीतिप्राप्तसाक्षात्कारः समर्थ आत्मत्वेनावगन्तुं भवतीति शेषः । **सर्वविद्या** सर्वस्य सर्वात्मनः सर्वा वा सर्वपुरुषार्थपरिसमाप्तिहेतुत्वाद्विद्या यथा—भूतार्थप्रकाशः सर्वविद्या । **इत्यनेन** प्रकारेण । उक्तेति शेषः ॥ १ ॥

उक्ता विद्या संन्यासपुरःसरं श्रवणादिकमन्तरेण न लभ्यत इति संन्यासं विधातुं पीठिकां रचयति—

**हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।**
**हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च यन्महत् ॥**

**हृदिस्था** हृदयस्थाः । हृदयकमले सर्वदेवात्मकसर्वगतानन्दात्मोपलम्भकबुद्धेर्वर्तमानत्वात् । **देवता** अग्निपृथिव्याद्याः । **सर्वा** निखिलाः । हृदिस्थत्वे देवतानां हेतुमाह—**हृदि** हृदयकमले पञ्चच्छिद्रे । **प्राणाः** प्राणापानव्यानसमानोदानाः सर्वदेवतात्मना सूत्रात्मनाऽभिन्नाः सचक्षुःश्रोत्रवागन्तःकरणत्वचः । आदित्यचन्द्रमोऽग्निपर्जन्याकाशाः प्राग्दक्षिणपश्चिमोत्तरमध्यच्छिद्रवर्तिनः । **प्रतिष्ठिताः** विधात्रा प्रकर्षेण स्थापिताः । **हृद्युक्ते** हृदयकमले । **प्राणश्च** नासापुटसंचारी वायुः । **ज्योतिश्च** स्वयंप्रकाशं परं ब्रह्मापि । चकारौ बुद्धेरबुद्धेश्च हृदयेऽवस्थानं दर्शयतः । **त्रिवृ**त्त्रीणि प्राणाः प्राणो ज्योतिरिति संचरणानि यस्मिंस्तत्त्रिवृत् । **सूत्रं च यन्महत्** । जगत्पटारम्भकत्वेन सूत्रमपि । चशब्दात्सर्वजडाजडमपि । तत्त्रिवृत्सूत्रं विदुर्जानन्ति बहिःसूत्रत्यागिनः परमहंसाः ।

**हृदि चैतन्ये तिष्ठति ।**

अपि न **हृदि** हृदयकमलस्थे **चैतन्ये** संसारमहेन्द्रजालप्रकाशे स्वयंप्रकाशे **तिष्ठति** स्पष्टम् ।

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।**
**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

किं **यज्ञोपवीतम्** । यज्ञस्य विष्णोः परमात्मन उप सामीप्येन वीतं विविधमागतं जीवस्वरूपं यज्ञोपवीतम् । **परममुत्कृष्टम्** । **पवित्रं** सर्वपवित्रभूतम् । **प्रजापतेः** प्रजानां पालयितुः । **यत्प्रसिद्धं** सर्वव्यवहारकारणम् । **सहजं** स्वभावभूतम् । अथवा देहेन्द्रियादिभिः सहोत्पन्नम् । **पुरस्तात्पूर्वम्** । **आयुष्यमायुष्करम्** । **अग्र्यं** श्रेष्ठम् । **प्रतिमुञ्च** सर्वतोऽविद्यादिभ्यो विमोक्षं कुरु । **शुभ्रमुज्ज्वलं** कर्तृत्वादिमुक्तमित्यर्थः । यद्धृदि चैतन्ये तिष्ठति यज्ञोपवीतं तत्प्रतिमुञ्चेति योज्यम् । यस्मादेवं हृदि चैतन्ये तिष्ठति यज्ञोपवीतं तस्माद्धृदयस्योपरि बहिर्विधार्यमाणं त्रैवर्णिकैरिदं **यज्ञोपवीतं** यज्ञोपवीतस्थानत्वात्त्रिवृत्कार्पासादिसूत्रं **बलं** वीर्यवत्कर्मकारणमस्तु भूयात् । **तेजो** ब्रह्मवर्चसादि । **उभयं** भूयादिति योजनीयम् । यस्माद्बाह्यमपि यज्ञोपवीतं यज्ञोपवीतसामीप्यात्तस्माज्जैवमेव रूपं कर्तृत्वादिविनिर्मुक्तं मोक्षयोग्यम् । हृदयकमलस्थे देशकालवस्तुपरिच्छेदशून्ये स्वयंप्रकाशचैतन्यैकरसे वर्तमानं मुख्यं यज्ञोपवीतमिति तात्पर्यार्थः ।

एवमुपपत्तीरभिधायेदानीमन्त्याश्रमं पारमहंस्यं विधत्ते—

**सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।**
**यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥**

**सशिखं** शिखासहितम् । केशश्मश्र्वादेर्**वपनं** मुण्डनं **कृत्वा** विधाय । **बहिःसूत्रं** कण्ठे विधार्यमाणं कार्पासं त्रिवृत्सूत्रं बहिःसूत्रं **त्यजेत्** । **बुधो** नित्यानित्यवस्तुविवेकादिमान् । **यत्**प्रसिद्धम् । **अक्षर**मविनाशि तुरीयम् । **पर**मुत्कृष्टम् । **ब्रह्म** देशकालवस्तुपरिच्छेदशून्यम् । **तदु**क्तं परं ब्रह्म । **सूत्रं** त्रिवृत्सूत्रं यज्ञोपवीतं यथाव्याख्यातम् । **इ**त्यनया बुद्ध्या **धारयेत्** ।

ननु ब्रह्मसूत्रमिति कथं विधारणीयमित्यत आह—

**सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।**

**सूचनात्**सर्वजगत्पटारम्भकत्वात् । **सूत्रं** सूत्रशब्दाभिधेयम् । **इ**त्यनेन प्रकारेणा**ऽऽहुः** कथयन्ति ब्रह्मविदो यतस्ततः **सूत्रं** सूत्रशब्दाभिधेयम् । **नाम** प्रसिद्धम् । **पर**मुत्कृष्टम् । **पदं** पद्यते गम्यतेऽहं तदस्मीति पदम् ।

इदानीमिदं ज्ञेयमित्येतदर्थमाह—

**तत्सूत्रं विदितं येन स विप्रो वेदपारगः ।**
**येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥**
**तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥**

**तदुक्तं सूत्रं** परमं पदं **विदित**महमस्मीति साक्षात्कृतम् । **येना**धिकारिणा ।

---

१ घ. 'दिविमु° । २ ङ. °द्ध्या विधा° ।

**सो**ऽधिकारी । **विप्रो** द्विजोत्तमः । **वेदपारगः** शब्दराश्युक्ताभिज्ञः सर्वज्ञ इत्यर्थः । **येन सूत्रेण** । **सर्वं** निखिलम् । **इदं** भूतभौतिकप्रपञ्चजातम् । **प्रोतं** प्रकर्षेणोतमनुविद्धं वर्तत इत्यर्थः । तत्र दृष्टान्तमाह—**सूत्रे** प्रसिद्धे । **मणिगणा** वैदूर्यमहामरकतमुक्तागोमेदादिमणिसमूहाः । **इव** यथा । **तत्सूत्रं धारयेत्** । व्याख्यातम् । **योगी** जीवब्रह्मतादात्म्यज्ञानवान् । **योगविद्यतो** योगी ततो योगस्याष्टाङ्गस्य षडङ्गस्य वा सफलस्य वेत्ता योगवित् । **तत्त्वदर्शी** वान्नित्यानित्यवस्तुविवेकवान् ।

इदानीं पूर्वोक्ते शिखायज्ञोपवीतत्याग उक्तयोगसाहित्यमाह—

**बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः ॥**

**बहिःसूत्रं त्यजेत्** । व्याख्यातम् । **विद्वान्**बुधः । **योगं** जीवब्रह्मतादात्म्यसंबन्धम् । **उत्तम**मुत्कृष्टम् । **आस्थित**स्तद्बोधेन सर्वतस्तत्र वर्तमानः ।

इदानीमस्य धारणे सर्वदा पवित्रतामाह—

**ब्रह्मभावमिदं सूत्रं धारयेद्यः सचेतनः ।**
**धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ॥**

**ब्रह्मभावं** ब्रह्मणो भावः सत्ता यस्मिंस्तद्ब्रह्मभावमिदं बुद्धेर्द्रष्टृ । **सूत्र**मुक्तम् । **धारयेत्** । व्याख्यातम् । **यो**ऽधिकारी । **सचेतनो** ज्ञानसहितः । **धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्** । उच्छिष्टः शरीरद्वाराऽन्नप्रवेशनिर्गमनाभ्याम् । अशुचिर्मनोवाक्कायपापात् । स्पष्टमन्यत् ।

इदानीं बाह्यशिखायज्ञोपवीतरहिता अपि परमहंसाः शिखिनो यज्ञोपवीतिनश्चेत्याह—

**सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।**
**ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥**

**सूत्र**मुक्तं बुद्ध्याऽ**न्तर्गतं** शरीरान्तर्वर्तमानं न **येषां** परमहंसानां **ज्ञानयज्ञोपवीतिनाम**हं ब्रह्मास्मीतिबोधयज्ञोपवीतिनां **ते वै** त एवान्तःसूत्रधारिणो ज्ञानयज्ञोपवीतिन एव न त्वन्ये । **सूत्रविद** उक्तसूत्रज्ञानवन्तः । **लोके** जने । **ते चो**क्तसूत्रविदः । **यज्ञोपवीतिनो** नित्यप्रसिद्धयज्ञोपवीतवन्तः । चशब्दाच्छिखिनश्च ।

ननु सकृच्छिखां यज्ञोपवीतं च त्यक्त्वा किं पुनरन्यद्बाह्यमादेयमित्याशङ्क्य नेत्याह—

**ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥**

**ज्ञानशिखिनः** । ज्ञानमहं ब्रह्मास्मीति बोधः शिखा येषामस्ति ते ज्ञानशिखिनः ।

---

१ छ. °राशियुक्तो भिक्षुः । स° । २ ङ. °र्शितवा° । ३ ०. च. सदा । ४ ङ. °ब्रमयं सू° ।

ज्ञाननिष्ठा ज्ञान उक्ते निष्ठा तात्पर्यं येषां ते ज्ञाननिष्ठाः । **ज्ञानयज्ञोपवीतिनो** ज्ञानमुक्तं यज्ञोपवीतं येषामस्ति ते ज्ञानयज्ञोपवीतिनः ।

ननु बाह्यमपि शिखायज्ञोपवीतादिकमस्त्वित्यत आह—

**ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥**

**ज्ञानमेवोक्तमेव** न त्वन्यद्बाह्यं शिखायज्ञोपवीतादि । **पर**मुत्कृष्टम् । **तेषां** परमहंसानाम् । **पवित्रं** पवित्रताकारणं **ज्ञान**मुक्त**मुच्यते** कथ्यते विद्वद्भिर्यतः पवित्रं ज्ञानमुच्यते ततस्तेषां ज्ञानमेव परमतं उपपन्नं ज्ञाननिष्ठा ज्ञानशिखिनो ज्ञानयज्ञोपवीतिनो न बाह्यशिखायज्ञोपवीतिन इति योज्यम् ।

ननु तथाऽपीतरेभ्यः केशधारिभ्यो न्यूनोऽयमुपचरितशिखित्वादित्यत आह—

**अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।**
**स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥ ३ ॥**

**अग्नेरिव शिखा नान्या** । यथा जातवेदसः शिखा ज्वाला जातवेदःस्वरूपादन्या न तद्वत् । **यस्य** परमहंसस्य स्वयंप्रकाशचैतन्यस्याऽऽनन्दात्मनः । **ज्ञानमय्य**हमेवंरूपोऽस्मीत्येतद्बोधमयी **शिखा** चैतन्यप्रदीप्तिश्चैतन्यादभिन्ना । **स** ज्ञानमयशिखाधारी । **शिखी** मुख्यशिखावानग्निवत् । इत्यनेन प्रकारेणो**च्यते** कथ्यते विद्वद्भिः । **विद्वान्**ब्रह्मसाक्षात्कारवान् । **नेतरे** ज्ञानमयशिखावर्जिता न मुख्यशिखिन इति शेषः । किं तु **केशधारिणः** स्त्रीशूद्रादिवत् । केशपुञ्जधारिणः केशधारित्वेन चेन्मुख्यशिखित्वं स्त्रीशूद्रादीनामिव तत्स्यादित्यर्थः ॥ ३ ॥

ननु तर्हि सर्वैः शिखायज्ञोपवीतादिकं परित्याज्यमित्यत आह—

**कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।**
**तैः संधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥**

**कर्मणि** सुखफले व्यापारे । **अधिकृता** ममेदं कर्तव्यमिति बुद्धिमन्तः । **ये तु** प्रसिद्धा अहं ममाद्यभिमानवन्त एव न त्वन्ये । **वैदिके**ऽग्निहोत्रादिलक्षणे । **ब्राह्मणादयो** ब्राह्मण आदिर्येषां ते ब्राह्मणादयस्त्रैवर्णिकास्**तैस्**त्रैवर्णिकैः **संधार्यं** धारणीयम् । **इदं** कार्पासादिप्रकृतिकं प्रत्यक्षम् । **सूत्रं** त्रिवृन्नाभिपरिमाणमित्यादिलक्षणं यज्ञोपवीतम् । तत्र हेतुमाह—**क्रियाङ्गम्** । "तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा" इति **श्रुतेः** सर्वक्रियाङ्गत्वावगमात्क्रियाङ्गम् । **तद्**बाह्यं यज्ञोपवीतम् । **हि** यस्माद्**वै** प्रसिद्धम् । त्रैवर्णिकानां **स्मृतं** चिन्तितं प्रमाणतोऽवगतमित्यर्थः ।

---

१ च. °त एवोपपन्नं । २ च. °नामेतं° ।

ननु ब्राह्मणादीनां चेदिदं ज्ञानशिखिनो ज्ञानयज्ञोपवीतिनश्च निर्ब्राह्मण्यमर्थसिद्धमित्यत आह—

**शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम्।**
**ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः॥**

**शिखा ज्ञानमयी यस्य उपवीतं च**। स्पष्टम्। **तन्मयं** ज्ञानमयम्। **ब्राह्मण्यं** ब्राह्मणानां भावः। **सकलं** समग्रमनुपचरितं निःसीमभूतमित्यर्थः। **तस्य** ज्ञानमयशिखायज्ञोपवीतवतः। इत्यनेन प्रकारेण। **ब्रह्मविदो** वेदार्थविदो **विदुर्जा**नन्ति।

इदानीमन्तर्गतसूत्रं स्वयमाह—

**इदं यज्ञोपवीतं तु परमं यत्परायणम्।**
**स विद्वान्यज्ञोपवीती स्यात्स यज्ञस्तं यज्विनं विदुः॥**

**इदं** बुद्धेर्द्रष्टृ। **यज्ञोपवीतं तु** परमात्मतादात्म्यलक्षणसामीप्यमागतं जैवमेव कर्तृत्वादिरहितं रूपं न त्वन्यत्। इदं शब्दोक्तमाह—**परम**मुत्कृष्टम्। यत्प्रसिद्धं स्वयंप्रकाशम्। **परायण**मविद्यायाः सकार्याया उत्कृष्टाश्रयभूतम्। **सः**, अनेनोक्तेनाभिन्नः। **विद्वा**निदमहमस्मीतिज्ञानवान्। **यज्ञोपवीती स्यात्**। स्पष्टम्। न केवलं यज्ञोपवीती किं तु **स** उक्तो विद्वान्। **यज्ञो** दर्शपूर्णमासज्योतिष्टोमादिलक्षणः स्यादित्यनुषङ्गः। **तं** यज्ञोपवीतिनं विद्वांसं सर्वात्मत्वेन। **यज्विनं** यागानां कर्तारं **विदुर्जा**नन्ति।

ननु तर्हि किमयमनेकरूप इत्याशङ्क्य नेत्याह—

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।**

**एको** भेदगन्धशून्यः। नन्वयं चेत्प्रतीतः कथं भेदगन्धशून्यो न चेन्नितरामित्यत आह—**देवः** स्वयंप्रकाशः। कुत्रेत्यत आह—**सर्वभूतेषु** चतुर्विधजीवभेदेषु। ननु यद्यस्ति कस्मादाबालगोपालं न प्रतीयत इत्यत आह—**गूढ** आवरणाविद्ययाऽभिमानेन च संवृतः। गूढत्वेन पारिच्छेदं प्राप्तं वारयति। **सर्वव्याप्या**काशवत्सर्वत्र व्याप्य वर्तमानः। ननु तद्वदेवानात्मा स्यादित्यत आह—**सर्वभूतान्तरात्मा** सर्वभूतानां चतुर्विधप्राणिनां बुद्धेरभ्यन्तरात्माऽस्मच्छब्दप्रत्ययव्यवहारयोग्यः। अन्तरशब्दो बुद्धिव्यावृत्त्यर्थः।

ननु तर्हि चेत्सुखदुःखयोर्भोक्ताऽयं संसार्येवेत्यत आह—

**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥**

**कर्माध्यक्षः** कर्मणां शुभाशुभफलानां धर्माधर्मरूपाणामध्यक्षो नियन्ता। तथा चेन्नैयायिकाद्यभिमतस्तटस्थ एवायमित्यत आह—**सर्वभूताधिवासः** सर्वाणि भूतान्यात्मत्वेनाधिकृत्य वसतीति सर्वभूताधिवासः सर्वात्मस्वरूप इत्यर्थः। ननु सर्वात्मा चेदयमहं

---

ङ. यज्ञः स च यज्ञवित्। ए°। २ च. °रमं प्रकृष्ट° ३ च. °वजन्तुभे। ४ छ. °था यः सुव°।

कर्ता भोक्तेत्यादिप्रत्ययैरनुभूयमानः कथं स्वयंप्रकाशः स्यादित्यत आह—**साक्षी**, अहं सुखी दुःखीत्यादिप्रत्ययानां द्रष्टा । **यथा** लोके विवदमानानां केषांचित्सुखदुःखभाजामन्यः सुखदुःखरहितस्तेषां द्रष्टा साक्षी । ननु साक्षी चेदात्मा[2] करणादिमानपि स्यादित्यत आह—**चेता केवलो** बोद्धैव न तु शरीरादिमान् । ननु बोद्धा चेज्ज्ञानगुणोऽयं स्यादित्यत आह—**निर्गुणश्च** गुणगुण्यादिभेदशून्योऽपि चेता केवल इत्यन्वयः । स्वयंप्रकाशमानबोधैकस्वभाव आनन्दात्मेत्यर्थः ।

नन्वयमेक एतादृशोऽस्तु परमेश्वरस्त्वन्यादृश इत्यत आह—

**एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।**
**तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥**

**एकः** परमेश्वराद्भेदशून्यः । स एवायमित्यर्थः । त(य)स्मादयं भेदशून्यस्तमाह । **वशी** सर्ववशीकरणवान्सर्वनियन्तेत्यर्थः । **सर्वभूतान्तरात्मा** । व्याख्यातम् । **एकं** सजातीयभेदरहितम् । **रूप**मविद्यास्वरूपमथवा स्वगतसजातीयविजातीयभेदरहितमेकं रूपमात्मनः स्वयमविद्याविलासैः । **बहुधा** बहुप्रकारम् । **यः** प्रसिद्धो मायावी **करोति** स्पष्टम् । **तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्** । स्पष्टम् ।

यदा त्वहं मुक्त ईश्वरोऽस्मीति ज्ञानं न जायते तदा तदुत्पादकमुपायमाह—

**आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।**
**ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥**

**आत्मान**मन्तःकरणम् । **अरणि**मधरारणिं **कृत्वा** विधाय । **प्रणवं चोत्तरारणिम्** । उत्तरारणिमप्योंकारं कृत्वेति चकाराल्लभ्यते । तत्रापि **ध्याननिर्मथनाभ्यासात्** । ध्यानं प्रणवाभिधेयत्वेन प्रणवालम्बनत्वेन वा ब्रह्मणश्चिन्तनं तदेव निर्मथनमुत्तरारण्याक्रान्तस्य मथन इव निरन्तरं भ्रमणमधरारणौ तस्याभ्यासो यावत्साक्षात्कारमनुवर्तनं तस्मात् । **देवं** स्वयंप्रकाशमात्मस्वरूपं **पश्ये**त्साक्षात्कुर्यात् । **निगूढव**त्काष्ठे निगूढोऽग्निः काष्ठसंघर्षणेन यथा तद्वत् । यथाऽग्नेर्मथनेन प्राकट्यमिति ।

दृष्टान्त एक एव चेन्नास्मिन्नादर इत्यत आह—

**तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः ।**
**एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥**

**तिलेषु तैलम्** । स्पष्टम् । यथोपायलभ्यमिति शेषः । **दधनीव सर्पि**र्घृतं यथा दध्न्युपायलभ्यमिति शेषः । **आपः स्रोतःसु** स्रोतःशब्दोपलक्षितासु भूनाडीषूदकानि यथोपायलभ्यानीति शेषः । **अरणीषु** चारणीष्वपि सूर्यकान्तादिष्वित्यर्थः । **अग्निर्व-**

१ च. स्वप्र॰ । २ च. चेदयमात्मा ।

द्धिः । चकारोऽनेकदृष्टान्तसमुच्चयार्थः । एवं यथा पीडनालोडनखननमन्थनाद्यैस्तैलघृताम्ब्वग्नीनामुपलम्भस्तथा प्रणवादिनाऽऽत्मा स्वयंप्रकाशचिदानन्दाद्वितियिस्वरूप **आत्मन्यन्तःकरणे** स्वस्वरूपे वा **गृह्यते** ज्ञायते । असावस्मद्बुद्धेः साक्षी । इदानीमुपायान्तरमाह—**सत्येन** सत्यवचनेन ब्रह्मज्ञानेन वा । **एनमात्मानम्** । **तपसा** कृच्छ्रचान्द्रायणादिना स्वधर्मेण ब्रह्मज्ञानेन वा । **योऽधिकारी** । **अनुपश्यति** प्रणवादिकमन्ववलोकयति तेनापि गृह्यत इति शेषः ।

ननु यद्येको जीवस्तदैवं सर्वमुक्तं स्यान्न चैकत्वमस्य शयानस्याहं जागरितादागत इतिप्रत्ययानुपलम्भादित्यतो दृष्टान्तेनैक्यमाह—

**ऊर्णनाभिर्यथा तन्तून्सृजते संहरत्यपि ।**
**जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥**

**ऊर्णनाभिर्**लूताकीटः । **यथा** येन प्रकारेण **तन्तून्**सूत्ररूपान् । **सृजत** उत्पादयति । **संहरत्यपि** न केवलं सृजते किंतूपसंहरति च । यद्यपि जालीकृतानां तन्तूनां शुष्काणामूर्णनाभिशरीर उपसंहारो न दृष्टचरस्तथाऽप्यार्द्राणां लालासमानानां सद्यःसृष्टानामुपसंहारस्य दृष्टत्वात्तावता दृष्टान्त उपपन्नः । **जाग्रत्स्वप्ने** जागरणस्वप्नौ । **तथा** तद्वत्सृजन्संहरंश्च **जीवः** प्राणानां धारयिताऽभिन्नो लूताकीटसमः । अयमर्थः । स्वप्नेऽनेकभविकैकभविकवासनानां वैचित्र्यादस्मृतिराविरुद्धोत्थितस्य तु स्वप्नसुषुप्त्योरनुभूतस्य च स्मृतेरुपलम्भादननुभूते च स्मृतेरनङ्गीकारादिति । **गच्छत्यागच्छते** । गच्छत्यागच्छत्येव स्थानात्स्थानान्तरं शिशुरिव गृहाद्गृहान्तरम् । **पुनर्**भूयः ।

पूर्वं नाभ्यादिस्थानान्युक्तानि जागरितादीनामर्थात् । इदानीं तानि कण्ठत आह—

**नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशेत् ।**
**सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम् ॥**[3]

**नेत्रस्थं** नेत्रे तिष्ठतीति नेत्रस्थस्तं विश्वं नाभिनेत्रयोर्वैकल्पितत्वं जागरितस्य **जागरितं** जागरणावस्थागतमात्मानं **विद्या**ज्जानीयात् । **कण्ठे** कण्ठप्रदेशे । **स्वप्नं** स्वप्नस्थानम् । तैजसः **समाविशेत्**सम्यगासमन्तात्प्रवेशनं कुर्यात् । **सुषुप्तं** सुषुप्तावस्थागतं प्राज्ञं **हृदयस्थं तु** हृदयकमलस्थमेव विद्यादित्यनुषङ्गः । **तुरीयं** संख्यातीतमपि चतुर्थं

---

१ ङ. नः । पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्याऽऽयतनं महत् । ने॰ । २ च ॰विकेऽनेकभ॰ ।

३ ङ. ॰म् ॥ यद्वाऽऽत्मा प्रज्ञयाऽऽत्मानं संधत्ते परमात्मनि ।
तेन संध्या ध्यानमेव तस्मात्संध्याभिवन्दनम् ॥
निरोदका ध्यानसंध्या वाक्कायक्लेशवर्जिता ।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥ य॰ ।

वक्ष्यमाणम् । मूर्धनि मस्तके दशमद्वारे चन्द्रमण्डलान्तःस्थितं स्थानं प्राप्तं विद्यादित्यनुषङ्गः ।

इदानीं तुरीयं स्वरूपं शृङ्गग्राहिकयाऽऽह—

**यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।**
**आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुधः ॥**

**यतो** यस्मात्तुरीयादानन्दात्मनः । **वाचः** श्रुतिवध्वो द्रक्ष्यामो वक्ष्यामः स्प्रक्ष्यामश्चैतमिति संकल्प्य प्रवृत्ता वाराङ्गना इव सोत्कण्ठा महाराजमदृष्टचरमवसराभावान्निवर्तन्ते यथागतं गच्छन्ति । **अप्राप्या**स्पृष्ट्वा । अदृष्ट्वाऽनुक्त्वाचेत्येतयोरुपलक्षणम् । सर्वैः प्रकारैरनुपलभ्येत्यर्थः । ननु वागप्राप्यस्यापि मनसा चम्पककेतक्यादिगन्धविशेषादेरुपलम्भात्तदुपलम्भोऽपि स्यादित्यत आह । **मनसा**ऽन्तःकरणेन वागाद्यग्राह्यग्राहकेण **सह** समम् । **आनन्दं** निरतिशयानन्दस्वरूपं तुरीयम् । **एत**द्वाङ्मनसागम्यम् । **जीवस्य** प्राणानां धारयितुः । **यत्**प्रसिद्धं स्वयंप्रकाशम् । **ज्ञात्वा** साक्षात्कृत्य । **मुच्यते**ऽविद्यातत्कार्येभ्यो विमुक्तो भवति । **बुधो** विद्वानधिकारी ।

इदानीमस्य तुरीयस्याऽऽनन्दरूपस्य वाङ्मनसातीतस्य शङ्कितं परिच्छेदं वारयन्संक्षेपेण शास्त्रार्थमुपसंहरति—

**सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।**

**सर्वव्यापिन**माकाशवत्सर्वस्य वस्तुजातस्याऽऽकाशादेरधिकव्याप्तिकम् । **आत्मा**नमस्मद्बुद्धिसाक्षिणं स्वयंप्रकाशचिदानन्दस्वरूपिणम् । एवं वर्तमानोऽपि नोपायमन्तरेण लभ्यत इति दृष्टान्तेनाऽऽह—**क्षीरे सर्पिरिवार्पितं** यथा क्षीरे घृतं वस्तुस्वभावेन समर्पितं विद्यमानमपि नोपायमन्तरेण लभ्यं तद्वज्जानीयादिति शेषः । सर्वतः सन्नप्ययमात्मा नोपायमन्तरेण लभ्यत इत्यर्थः ।

उपायं संदर्शयन्सर्वकारणतामात्मन आह—

**आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्पदं तद्ब्रह्मोपनिषत्पदमिति ॥ ४ ॥**

**आत्मविद्यातपोमूलम्** । आत्मनः स्वयंप्रकाशचिदानन्दरूपस्य विद्योपासनं श्रवणमननादि तज्जन्यसाक्षात्कारश्च तप आत्मज्ञानसाधनं स्ववर्णाश्रमोचिताचाररूपं तयोः प्रवृत्तिनिवृत्त्यात्मकयोः । विद्यातपोभ्यां निखिलस्य जगतोऽप्युपलक्षणम् । मूलमुपादानकारणम् । तत्सत्यज्ञानादिलक्षणम् । **ब्रह्म** सर्वस्मादधिकं त्रिविधपरिच्छेदशून्यमित्यर्थः । **उपनिषत्पदम्** । सदेरुपनिपूर्वस्य संसारविनाशार्थस्य ब्रह्मगत्यर्थस्याविद्यादिबन्धशिथिलीकरणार्थस्य च ब्रह्मज्ञानमन्तरेणासंभवादुपनिषद्ब्रह्मज्ञानं तस्य पदं विषयः ।

ब्रह्मज्ञानैकबोध्यमित्यर्थः । तद्ब्रह्मोपनिषत्पदम् । व्याख्यातम् । पदाभ्यास उपनिषदर्थसमाप्त्यर्थः ॥ ४ ॥

इत्यथर्ववेदे ब्रह्मोपनिषत्समाप्ता ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतिर्ब्रह्मोपनिषद्दीपिका समाप्ता ॥ २९ ॥



ॐ तत्सद्ब्रह्मणे नमः ।

# ब्रह्मबिन्दूपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ब्रह्मावबोधको बिन्दुः स्तोकोपनिषदुच्यते ।
अष्टादशी चतुष्खण्डा ब्रह्मबिन्दुरिति स्मृता ॥

ॐ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।

उक्तो योगस्तत्फलं ब्रह्मसाक्षात्कारस्तद्ब्रह्म कीदृशं कीदृशश्च साक्षात्कारः कीदृशश्च लयरूपः समाधिरेतदर्थं ब्रह्मबिन्दूपनिषदारभ्यते—**मनो हि द्विविधमित्यादि ।**

तयोर्लक्षणमाह—

अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १ ॥

**अशुद्धमिति ।** कामान्संकल्पते तत्कामसंकल्पम् ॥ १ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम् ॥ २ ॥
अतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३ ॥
निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥ ४ ॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च अतोऽन्यो ग्रन्थविस्तरः ॥ ५ ॥

मनसो मुक्तिर्लयः । हृदि हृत्कमले । उन्मनीभावो निःसंकल्पता । तदुक्तम्—'यो मनःसुस्थिरीभावः सा चावस्था मनोन्मनी' इति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

इति प्रथमः खण्डः ॥ १ ॥

नैव चिन्त्यं न वाऽचिन्त्यमचिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदा ॥ ६ ॥

**नैवेति ।** आद्यपादे विधेयद्वयम् । द्वितीयपादे क्रमेणोद्देश्यद्वयम् । ननु मनः कथं निर्विषयं

स्यात्तत्त्वस्य चिन्तनीयत्वादतत्त्वस्य विस्मरणीयत्वाच्चेत्यत आह—**अचिन्त्यमिति**। अचिन्त्यं चिन्तयितुमशक्यं यत्तत्त्वं तन्नैव चिन्त्यमस्ति। अविषयत्वात्। चिन्त्यमेव सर्वदा चिन्तयितुं योग्यमेव यद्विषयजातं तच्चिन्त्यम्। चिन्तयितुमयोग्यं विस्मरणीयं नास्त्यवस्तुत्वात्। न स्मर्तव्यं नापि विस्मर्तव्यं किंचिदस्तीत्यर्थः। पक्षपातस्तत्त्वचिन्तनमतत्त्वविस्मरणं च ताभ्यां विनिर्मुक्तं रहितं यदा भवति तदा ब्रह्म संपद्यते ॥ ६ ॥

प्रथमाधिकारिणं प्रत्याह—

**स्वरेण संधयेद्योगमस्वरं भावयेत्परम्।**
**अस्वरेण हि भावेन भावो नाभाव इष्यते ॥ ७ ॥**

**स्वरेणेति**। स्वरेण शब्देन गुरूपदेशेन प्रणवेन वा योगं चित्तनिरोधं संधयेदारभेत। अस्वरं शब्दातीतं परं वस्तु भावयेच्चिन्तयेत्। भावेन भाव्यमानेन चिन्त्यमानेन भावो वस्तु परं ब्रह्माभावः शून्यं नेष्यते किं त्वस्तीति गम्यते। इष सर्पणे। ब्रह्म साक्षाद्भवतीत्यर्थः। ये गत्यर्थास्ते ज्ञानार्थाः। अथवा स्वरेणाकारोकारोपलक्षितेन जाग्रत्स्वप्नाख्येन योगं कुर्यात्। श्रद्धातिशयेन जाग्रत्स्वप्नेऽपि तदभ्याससंभवात्। अस्वरं मकारोपलक्षितमानन्दस्थानं परमग्रेतनं भावयेत्। अस्वरेण मकाराख्येन भावेन मात्रया नाभावोऽभावो न किंतु **पूर्णो** भावस्तुरीयमिष्यते। गम्यत इति। तदुक्त**ममृतबिन्दौ**— "अस्वरेण मकारेण पदं सूक्ष्मं च गच्छति" इति ॥ ७ ॥

**तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्।**
**तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ ८ ॥**
**निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्।**
**अप्रमेयमनाद्यं च ज्ञात्वा च परमं शिवम् ॥ ९ ॥**
**न निरोधो न चोत्पत्तिर्न बन्धो न च शासनम्।**
**न मुमुक्षा न मुक्तिश्चेदित्येषा परमार्थता ॥ १० ॥**

**तदेवेति**। यत्साक्षाद्भवति तदेव ब्रह्म न तु तदेवं नैवमिति वक्तुं शक्यते। निरोधो मरणम्। शासनमुपदेशः। न मुक्तिः, च, इत्, इति एषा, इति पदच्छेदः। इदनर्थको निपातः। यद्वा, इत्येषा चेद्बुद्धिस्तर्हि परमार्थता सत्यार्थता संपन्नेत्यर्थः ॥८॥९॥१०॥

इति द्वितीयः खण्डः ॥ २ ॥

**एक एवाऽऽत्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु।**
**स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥**
**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥**

घटसंवृतमाकाशं[1] लीयमाने घटे यथा ।
घटो लीयेत नाऽऽकाशं तद्वज्जीवो नभोपमः ॥ १३ ॥
घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ १४ ॥

व्यतीतस्य निष्क्रान्तस्याधिकारिणः । नभोपम आकाशतुल्यः । छान्दसः संधिः । नभशब्दो वाऽकारान्तः । भिद्यमानं देहजालं ।नित्यशो नित्यमात्मानं स जानाति । द्वितीयान्तात्स्वार्थे शस्प्रत्ययः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

शब्दमायावृतो यावत्तावत्तिष्ठति पुष्करे ।
भिन्ने तमसि चैकत्वमेकमेवानुपश्यति ॥ १५ ॥

शब्देति । शब्दमात्रं या माया न वास्तवी वाचाऽऽरम्भणमिति श्रुतेः । तयाऽऽवृतो यावत्तावत्पुष्करे पुण्डरीके तिष्ठति । भिन्ने ज्ञानेन निवृत्ते तमस्यस्य ज्ञान एकत्वं भवति । एकमेव चानुपश्यति ।

" पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ।
ओषधीद्वीपविहगतीर्थरागोरगान्तरे ॥
पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च " इति विश्वः ॥ १५ ॥

इति तृतीयः खण्डः ॥ ३ ॥

शब्दाक्षरं परं ब्रह्म यस्मिन्क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेद्यदिच्छेच्छान्तिमाप्नुयात् ॥ १६ ॥

शब्दाक्षरमिति । शब्दश्च तदक्षरं च शब्दाक्षरं शब्दब्रह्मेत्यर्थः । तथा परं ब्रह्म चैतन्यं चैतद्द्वयं वर्तते । विद्वान्पण्डितः । एतयोर्मध्ये यस्मिन्क्षीणे सति यदक्षरमक्षीणं भवति तदक्षरं यदि ध्यायेच्चिन्तयेत्तथा यद्यदीच्छेद्वाञ्छेत्तर्हि शान्तिमाप्नुयान्नान्यथा ॥ १६ ॥

तदेव स्पष्टयति—

द्वे विद्ये वेदितव्ये हि शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥

द्वे इति । निष्णातः कुशलः । निनदीभ्यां स्नातेः कौशल इति षत्वम् । विद्यास्नात इत्यर्थः ॥ १७ ॥

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्त्वतः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८ ॥

मेधावी ग्रन्थाभ्यासेन कृतबुद्धिः । ज्ञानं शाब्दम् । विज्ञानं साक्षात्कारः । उभयोस्तत्त्वतस्तत्त्वं ज्ञात्वा । ल्यब्लोपे पञ्चमी ॥ १८ ॥

---

[1] ख. संभृत° ।

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥

**गवामिति** । गवां सौरभेयिणामनेकवर्णानामपि सतीनां यत्क्षीरं तस्यैकवर्णता भवति । विद्वान्ग्रन्थेषु क्षीरवज्ज्ञानं पश्यति परीक्ष्य गृह्णाति । यथा लिङ्गिनो वेत्रधारिण आभिरा गवां क्षीरं गृह्णते तद्वत् ॥ १९ ॥

सदृष्टान्तं ज्ञानस्य ग्रहणोपायमार्ययाऽऽह—

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ २० ॥
ज्ञाननेत्रं समादाय चरेद्वह्निमतः परम् ॥ २१ ॥

**घृतमिवेति** । **ज्ञाननेत्रमिति** । ज्ञानं शास्त्रोत्थं तदेव नेत्रं दृष्टिस्तां समादाय शास्त्रतो गुरुतश्च गृहीत्वाऽतः परं वह्निं वैश्वानरमनुभवरूपं चरेत्साधयेत् । साक्षात्कारस्य वह्निता शास्त्रे प्रसिद्धा । यथा—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति । यद्वा वह्निं प्रणवं चरेदुच्चरेत् । वक्ष्यति च—अग्निशब्दमेवाभिचिन्तयेदोमित्येकाक्षरं ब्रह्मेति । शब्दस्याग्निता मुखजत्वान्मुखादग्निरजायतेति श्रुतेः प्रकाशत्वाच्च ॥२०॥२१॥

अनुभवस्य विषयमाह—

निष्कलं निर्मलं शान्तं तद्ब्रह्माहमिति स्मृतम् ।
सर्वभूताधिवासं च यद्भूतेषु वसत्यपि ॥ २२ ॥
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेव-
स्तदस्म्यहं वासुदेव इति ॥ २३ ॥
इत्यथर्ववेदे *ब्रह्मबिन्दूपनिषत्समाप्ता ॥ २३ ॥

**निष्कलमिति** । अनुभवस्य स्वरूपमभिनीय दर्शयति—तदिति । तज्ज्ञानं ब्रह्माहमित्येवमाकारं स्मृतम् । सर्वेषां भूतानामधिवासोऽस्मिन्सर्वभूताधिवासम् । यच्च भूतेष्वधिवसति । यस्मादधिकमिति सप्तमी । सर्वानुग्रहकर्तृत्वेन वासुदेव इति प्रसिद्धं तदहमस्मि स एव वासुदेव ईश्वरोऽपि । जीवेश्वरयोर्ब्रह्मण्यैक्यमित्यर्थः । द्विरुक्तिः समाप्त्यर्था॥२३॥

इति चतुर्थः खण्डः ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका ब्रह्मबिन्दुके ॥ १ ॥

इति नारायणविरचिता ब्रह्मबिन्दूपनिषद्दीपिका समाप्ता ॥ ३० ॥

---

* उपनिषद्बिन्दुपञ्चके द्वितीयेयमुपनिषत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# ब्रह्मविद्योपनिषत् ।

## नारायणविरचितदीपिकोपेता ।

ब्रह्मविद्योपनिषदि द्विखण्डायां त्रिदेवताः ।
स्थित्युत्पत्तिलयाः प्रोक्ताः प्रणवस्याक्षरत्रयात् ॥ १ ॥

प्रश्ने प्रणवो मात्राभेदेनोपास्यतयोपलक्षितस्तस्यावयवशः शरीरस्थानवर्णलया नोक्ता इति तदर्थं ब्रह्मविद्योपनिषदारभ्यते—

**ॐ ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमम् ।**
**यत्रोत्पत्तिं लयं चैव ब्रह्मविष्णुमहेश्वरात् ॥ १ ॥**

**ब्रह्मविद्यामिति** । ब्रह्मविद्यां प्रवक्ष्यामीति श्लोकः क्वचिदेवाऽऽदौ पठ्यते । ब्रह्म प्रणवस्तस्य विद्या ज्ञानम् । तां किंभूतां सर्वेषां ज्ञानं ज्ञानोपायभूतां प्रणवेन ब्रह्मणि ज्ञाते सर्वस्य विज्ञानात् । तथा यत्र विद्यायां देवत्रयादुत्पत्तिं लयं चकारात्पालनं च वक्ष्यामीति पूर्वेणान्वयः । श्रुतेः प्रतिज्ञेयम् ॥ १ ॥

**प्रसादान्तरसमुत्थस्य विष्णोरद्भुतकर्मणः ।**
**रहस्यं ब्रह्मविद्याया ध्रुवाग्निः संप्रचक्षते ॥ २ ॥**

**प्रसादेति** । विष्णोर्ब्रह्मविद्याया रहस्यं ध्रुवाग्निः प्रणवतेज इति संप्रचक्षते बुधा इत्यन्वयः । विष्णुनेयं विद्या प्रवर्तितेत्यर्थः । कीदृशस्य प्रसादेन भक्तकृपयाऽन्तरात्स्तम्भमध्यात्समुत्थस्य नृसिंहरूपेण प्रकटीभूतस्य । यद्वा प्रासादो देवभूभुजाभितिकोशात्क्षीरोदार्णववैकुण्ठबलिगृहद्वारादेः प्रासादस्यान्तरा जगद्रक्षार्थं प्रकटीभूतस्य । यद्वा प्रसादो लिङ्गाद्यपेक्षया प्रसन्नरूपो जीवस्तस्यान्तरमावरणमविद्यादि ततः समुत्थस्य निष्क्रान्तस्याविद्याद्यावरणरहितस्येत्यर्थः । यथोक्तं छान्दोग्ये— "स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिसंपद्यते स उत्तमः पुरुषः" इति । अद्भुतकर्मणो मत्स्यादिरूपेण ॥ २ ॥

**ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।**
**शरीरं तस्य वक्ष्यामि स्थानं कालं लयं तथा ॥ ३ ॥**

ओंकारो ध्रुवोऽक्षरनिघण्टावुक्तः ।

---

तथाहि—"ओंकारो वर्तुलस्तारो बिन्दुः शक्तिस्त्रिदेवतः ।
प्रणवो मन्त्रगम्यश्च पञ्चध्रुवः शिवः [परः] (?) ॥
मन्त्राद्यः परमं बीजं मूलमाद्यश्च तारकः ।
शाबा(शब्दा)दिव्यापको व्यक्तः परं ज्योतिश्च संविदः" इति ॥

**स्थानं कालं लयं तथेति** । कालशब्दो मेचकवाचको वर्णं लक्षयति तेन वर्णं वक्ष्यामीत्यर्थः । वर्णमित्येव वक्तव्ये कालग्रहणं मात्रारूपकालस्यापि संग्रहार्थमिति द्रष्टव्यम् ॥ ३ ॥

अवयवशः शरीरं तावदाह—

**तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ।**
**तिस्रो मात्राऽर्धमात्रा च अक्षरस्य शिवस्य च ॥ ४ ॥**

**तत्र देवा इति** । **अक्षरस्य शिवस्य चेति** । शिवोऽर्धमात्रार्थः । तिस्रो मात्रा अक्षरस्यार्धमात्रा शिवस्येत्यर्थः । प्रणवस्य देवादयस्त्रयस्त्रयोऽनुपदमेव वक्ष्यन्ते । तिस्रो मात्रा अर्धमात्रा चेति वक्तव्ये छान्दसः संधिः । तदुक्तं हठप्रदीपिकायाम्—

"अकारश्च उकारश्च मकारो बिन्दुसंज्ञकः ।
त्रिधा मात्रा स्थिता यत्र तत्परं ज्योतिरोमिति" इति ॥ ४ ॥

**ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च ।**
**अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥ ५ ॥**
**यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ।**
**विष्णुश्च भगवान्देव उकारः परिकीर्तितः ॥ ६ ॥**
**सामवेदस्तथा द्यौश्चाऽऽहवनीयस्तथैव च ।**
**ईश्वरः परमो देवो मकारः परिकीर्तितः ॥ ७ ॥**

उक्तं तदेव विभजते—**ऋग्वेद इत्यादिना** । ब्रह्म एव चेत्यत्र च्छान्दसो ह्रस्वः प्रकृतिभावश्च । ब्रह्मा देव इत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

इति प्रथमः खण्डः ॥ १ ॥

खण्डान्तेन ग्रन्थेन शरीरमुक्तं संप्रति स्थानं वर्णसहितमाह—

**सूर्यमण्डलमाभाति अकारः शङ्खमध्यगः ।**
**उकारश्चन्द्रसंकाशस्तस्य मध्ये व्यवस्थितः ॥ ८ ॥**

**सूर्येति** । सूर्यमण्डलमिवाऽऽभात्यकारः । शङ्खो ललाटास्थि तन्मध्यं नेत्रं स्थानं तत्र वर्तमानः । "योऽयं दक्षिणेऽक्षन्पुरुषः" इति श्रुतेः । "शङ्खो निध्यन्तरे कम्बुललाटास्थि-

१ ङ. ग. ञ्क्षरस्य ।

नखीषु च" इति विश्वः । तस्य मध्ये शङ्खस्यैव मध्येऽर्थाद्वामनेत्रे स्थितः । मकार इत्यत्रापि तस्य मध्य इत्यपेक्ष्यते । शङ्खस्य मध्येऽर्थात्तृतीयनेत्रे व्यवस्थितः । अत एव **याज्ञवल्क्येनोक्तम्**—

"इडायां पिङ्गलायां च चरतश्चन्द्रभास्करौ ।
इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः" इति ॥
"जिह्वामूले स्थितो देवः सर्वतेजोमयोऽनलः ।
तदग्रे भास्करश्चन्द्रस्तालुमध्ये प्रतिष्ठितः ।
एवं यो वेत्ति तत्त्वेन तस्य सिद्धिः प्रजायते" इति ॥ ८ ॥

**मकारश्चाग्निसंकाशो विधूमो विद्युतोपमः ।**
**तिस्रो मात्रास्तथा ज्ञेयाः सोमसूर्याग्नितेजसः ॥ ९ ॥**
**शिखा च दीपसंकाशा यस्मिन्नुपरि वर्तते ।**
**अर्धमात्रा तु सा ज्ञेया प्रणवस्योपरि स्थिता ॥ १० ॥**

तिस्रो मात्रा अकारादयः । अनेन काल उक्तः । सोमसूर्याग्नितेजस इत्यनेन वर्णा उक्ताः । यस्मिञ्शङ्ख उपरि तृतीयनेत्रादुपर्यनेनार्धमात्रास्थानमुक्तम् । पद्मसूत्रनिभेति तस्या वर्णा उक्ताः । शिखाभा ज्वालाभोर्ध्वतावैशद्याभ्याम् । तथा मूले मूले स्थूलोपर्युपरि तन्वी च ।

" शिखा शिखायां ज्वालायां चूडायामग्रमात्रके ।
लाङ्गल्यां चापि शाखायां चूडायां च शिखण्डिनः " इति विश्वः ॥ ९ ॥ १० ॥

**पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा ।**
**सा नाडी सूर्यसंकाशा सूर्यं भित्त्वा तथाऽपरम् ॥**
**द्वासप्ततिसहस्राणि सूर्यं भित्त्वा तु मूर्धनि ॥ ११ ॥**

सा नाडी सुषुम्ना तस्या एव वा पूर्वाणि विशेषणानि । सूर्यश्चक्षुरधिष्ठानमथवा सूर्याल्लब्धरश्मित्वान्मनोधिष्ठानश्चन्द्रः सूर्यस्तं भित्त्वा तथाऽपरमधःस्कन्धे द्विसप्ततिसहस्राणि नाडीर्भित्त्वोर्ध्वं गता ।

तदुक्तं **गोरक्षेण**—" ऊर्ध्वं मेढ्रादधो नाभेः कन्दयोनिः खगाण्डवत् ।
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः " इति ॥

पुनरधिदैवतं सूर्यं भित्त्वा मूर्धनि ब्रह्मलोके द्वादशान्ते च दृश्यत इत्यनुषङ्गः । तदुक्तं **याज्ञवल्क्येन**—तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा ।

मुक्तिमार्गेति सा प्रोक्ता सुषुम्ना विश्वधारिणी ॥
कन्दस्था मध्यमे मार्गे सुषुम्ना सा प्रतिष्ठिता ।
पृष्ठमध्यस्थिता नाडी सा हि मूर्ध्नि व्यवस्थिता ॥

मुक्तिमार्गे सुषुम्ना सा ब्रह्मरन्ध्रे प्रतिष्ठिता ।
अव्यक्ता सैव विज्ञेया सूक्ष्मा सा वैष्णवी स्मृता " इति ॥

॥ ११ ॥

प्रणवो नादरूपेण सर्वव्याप्येवेत्याह—

**वरदः सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ।**
**कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ॥ १२ ॥**
**ओंकारस्तु तथा योज्यः शान्तये सर्वमिच्छता ।**
**यस्मिन्संलीयते शब्दस्तत्परं ब्रह्म गीयते ॥ १३ ॥**

**वरद इति** । अनेनोंकारोऽनाहतशब्दो विष्णुश्चैक इत्युक्तं भवति । इदानीं **लयमाह— यथा लीयतीति** । यथा लीयति लीनो भवत्युपरतव्यापारो भवत्योंकारस्तथा शान्तये योज्यः प्लुततरो जप्तव्य इत्यर्थः । सर्वं सर्वात्मभावं ब्रह्मभावमिच्छता यस्मिन्संलीयते यद्वस्त्वनुभूय शब्दो विषये नोपलभ्यते विलीयते तत्परं ब्रह्म ।

तदुक्तं **हठप्रदीपिकायाम्**—

" काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति ।
नादे प्रवर्तितं चित्तं नादेन सह लीयते ॥
विसृज्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः ।
एकीभूयाथ मनसा चिदाकाशे विलीयते " इति ॥

लयलक्षणं तु—

" लयो लय इति प्राहुः कीदृशं लयलक्षणम् ।
अपुनर्वासनोत्थानाल्लयो विषयविस्मृतिः " इति ॥

यद्वा यतो वाचो निवर्तन्त इत्यर्थः ॥ १२ ॥ १३ ॥

उपसंहरति—

**ध्रुवं हि चिन्तयेद्ब्रह्म सोऽमृतत्वाय कल्पते**
**सोऽमृतत्वाय कल्पत इति ॥ १४ ॥**
**इत्यथर्ववेदे ब्रह्मविद्योपनिषत्समाप्ता ॥ २४ ॥**

**ध्रुवमिति** । ध्रुवमोंकारं हि ब्रह्म चिन्तयेद्ध्रुवमेकरूपं वैकाग्रतया वा ब्रह्म चिन्तयेत् । **द्विरुक्तिः समाप्त्यर्था** ॥ १४ ॥

इति द्वितीयः खण्डः ॥ २ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका ब्रह्मवेदने ॥ १ ॥

इत्यथर्ववेदे नारायणविरचिता ब्रह्मविद्योपनिषद्दीपिका समाप्ता ॥ ३१ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# मैत्र्युपनिषत् ।

## रामतीर्थविरचितदीपिकासमेता ।

गणाधिपतिमस्वल्पविघ्नग्रासं महोदरम् ।
विपदुत्सारणाभ्यासलम्बीकृतकरं नुमः ॥ १ ॥
प्रणम्य रामं प्रणताभयप्रदं गुरूंस्तथा कृष्णमुखांस्तदात्मनः ।
मैत्रायणानां[1] श्रुतिमौलिमर्थतः प्रसाध्य विष्णोः परमे पदेऽर्पये ॥ २ ॥

'ब्रह्मयज्ञो वा एषः' इत्याद्या मैत्रायणानामुपनिषत्तस्याः[2] पूर्वकाण्डेन संबन्धः काण्डचतुष्टयात्मके पूर्वस्मिन्ग्रन्थेऽनेकानि कर्माण्यग्निहोत्रादीनि विहितानि तानि चोच्चावचफलार्थतया श्रुतानि यद्यपि तथाऽपि न परमपुरुषार्थपर्यवसितानि, यतः साध्यफलानि तानि, साध्यं चानित्यं "यत्कृतकं तदनित्यम्" इति नियमात्[3] । श्रुतिश्चात्र भवति 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" ( छान्दो० अ० ८ ) इति । 'यदिह वा अप्यनेवंविन्महत्पुण्यं[4] कर्म करोति तद्धास्यान्ततः क्षीयत एव' ( बृहदा० अ० १ ब्रा० ४ ) इति च । तथा " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" ( बृहदा० अ० ३ ब्रा० ८ ) इति च । तस्मात्स्वभावतो नित्यनिरतिशयपुरुषार्थार्थिनः पुंसोऽभिलषितसाधनोपायप्रदर्शनाय प्रवर्तमानो वेदोऽनादिभवपरम्परानुभूतानेकविषयवासनावासितान्तःकरणं वासनापरवशतया प्रवर्तमानं विषयासक्तमानसं प्रति सहसा विषयप्रवणतापरावर्तनेन[5] परमपुरुषार्थरूपाविद्यानिवृत्तिपरमानन्दाविर्भावसाधनप्रत्यगात्मतत्त्वब्रह्मप्रवणतामापाद्य परं[6] ब्रह्मात्मतत्त्वं बोधयितुमशक्नुवन्नादौ कर्माण्येव पुरुषार्थसाधनतयोपदिशति, पुनस्तत्रैव निष्ठां संपाद्य तन्निष्ठस्य नित्यनैमित्तिककर्मानुष्ठानप्रभावतः शनैः शुध्यमानान्तःकरणस्य पुनरीश्वरार्पणबुद्ध्यैव निष्कामकर्मानुष्ठानादतितरां शुद्धान्तःकरणस्य नित्यानित्यवस्तुविवेकवत इहामुत्रार्थभोगरागशून्यस्य[7] शमदमादिसाधनवतो मोक्षमात्राकाङ्क्षिणोऽधिकारसंपत्तिमालक्ष्य प्रत्यगात्मतत्त्वं ब्रह्माध्यारोपापवादन्यायेनावगमय्य स्वयं च तेनैवावगमेन सह तस्मिन्नेवाऽऽत्मतत्त्वे ब्रह्मणि विलीयमानो ब्रह्मात्ममर्मात्राद्वयं[8]

---

१ क. °यणीनां । २ क. °यणीनां° । ३ क. न्यायात् । ४ क. °न्महापुण्यं । ५ ग. °नेनाप° । ६ क. प.ब्र° । ७ क. °गविरागाशू° । ८ क. मात्रमद्व° ।

सत्यज्ञानानन्तानन्दैकरसमवतिष्ठत इति पूर्वापरभावेन कर्मज्ञानकाण्डयोर्हेतुहेतुमद्भावः सिद्धः । तदनेन व्याख्येयोत्तरकाण्डस्य विषयप्रयोजनाधिकारिणो दर्शिताः । विषयस्य चाऽऽत्मतत्त्वस्य वेदान्तापरमानासिद्धतया व्याख्येयग्रन्थप्रतिपाद्यताऽर्थात्सिद्धेति सिद्धानुबन्धचतुष्टयमिमं ग्रन्थं पदशो यथामति व्याख्यास्यामः । पूर्वत्र चयनादिकर्माऽऽम्नातं तच्चाग्निष्टोमातिरिक्तानां सर्वेषां यज्ञक्रतूनां साधारणं तावता सर्वाण्येव कर्माण्युपलक्षणत्वेन गृहीतानि, तथा च सर्वेषां कर्मणां परमात्मज्ञानजन्मोपकारकत्वेन परमपुरुषार्थहेतुत्वं दर्शयितुं श्रुतिः प्रववृते—

**ब्रह्मयज्ञो वा एष यत्पूर्वेषां चयनं**

**ब्रह्मयज्ञो० चयनमिति** । यदिदं पूर्वेषां कर्मप्रकरणोक्तानां कर्मणां चयनं चयनादि सर्वं कर्मैष ब्रह्मणः परमात्मनो यज्ञो यजनं पूजनं वै प्रसिद्धम् "यज्ञो वै विष्णुर्यज्ञेनैव यज्ञं संतनोति" इति **श्रुत्यन्तरात्** । अत्र चयनग्रहणमस्यां शाखायां प्रथमकाण्डे चयनस्याऽऽम्नानात् । पूर्वत्र विहितानि सर्वाणि कर्माणि परमेश्वरार्पणबुद्ध्या फलासक्तिं परित्यज्यानुष्ठेयानीति तात्पर्यार्थः । तथा च **भगवानाह**—

"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" ॥ इति ।

( गी०अ०५ श्लो० १० )

**तस्माद्यजमानश्चित्वैतानग्नीनात्मानमभिध्यायेत्**

यस्माद्ब्रह्मपूजनार्थमेव सर्वं कर्म तस्मात् ० ध्यायेदिति । यजमानः कर्मण्यधिकृत एतान्पूर्वोक्तानग्नींश्चित्वाऽग्निचयनानन्तरं सर्वं कर्म यथाधिकारं निर्वर्त्य तत्प्रभावलब्धान्तःकरणशुद्धिः सन्नात्मानं प्रत्यञ्चं वक्ष्यमाणलक्षणमभ्याभितः सर्वात्मब्रह्मभावेन ध्यायेन्निरन्तरं चिन्तयेदित्यर्थः । अत्र क्त्वाप्रत्ययनिर्देशोऽनुष्ठानात्मध्यानयोर्नैरन्तर्यपरो न भवति किं तु पूर्वकालत्वमात्रपरः । तथा चास्मिञ्जन्मनि जन्मान्तरे वा वृत्तकर्मानुष्ठानकृतशुद्ध्यतिशयफलं विविदिषां प्राप्य कर्मभ्यो व्युत्थाय प्रत्यक्तत्त्वब्रह्मविचारपरो भवेदित्यभिप्रायः ।

एवं सति किं स्यादित्येतदाह—

**स पूर्णः खलु वा अद्धाऽविकलः संपद्यते यज्ञः**

**स पूर्णः० यज्ञ इति** । स यज्ञः प्रागनुष्ठितः खलु निश्चितं वै प्रसिद्धमद्धा साक्षा-

---

१ ग °वः संबन्ध सि° । २ ग. द न्तप° । ३ क पूर्वेषां । ४ ख. ध्यायत् । ५ ग. °नान्तं स° । ६ क. फलां वि° । त्यग्भिन्नब्र° ।

न्निरुपचरितं पूर्णः पूर्णफलः संपद्यते । यद्वा स यज्ञो यजमानः 'यज्ञो वै यजमानः' इति श्रुतेः, पूर्णोऽध्यात्मपरिच्छेदाभिमानहान्याऽनवच्छिन्नः परमात्मा संपद्यते, अद्धा खलु वा इत्युक्तार्थम् ।

आत्मानमभिध्यायेदित्युक्तं ध्येयमात्मानं प्रश्नप्रतिवचनाभ्यां संक्षेपतो निर्दिशति—

**कः सोऽभिध्येयोऽयं यः प्राणाख्यः ।**

**कः ० प्राणाख्य इति ।** स आत्माऽभिध्येयः पूर्वोक्तः कः किंस्वरूपः किंप्र-माणकश्चेति प्रश्नभागार्थः । यः प्राणाख्यः प्राणेन प्राणनेन प्राणनादिव्यापारेणाऽऽख्या-यते प्रख्यायतेऽस्तीति निश्चीयत इति प्राणाख्योऽयं स ध्येय आत्मेति प्रतिवचनभागार्थः । तथा च श्रुतिः—"को ह्येवान्यात्कः प्राण्यादेष आकाश आनन्दो न स्यात्" ( तैत्ति० उ० ) इति " यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः " ( बृह-दा० अ० ३ ब्रा० ४ ) इत्याद्या च । यो देहादिसंघातसाक्ष्यात्मा सोऽभिध्येय इत्यर्थः ।

उक्तार्थसंग्रहप्रपञ्चनं प्रतिजानीते—

**तस्योपाख्यानम् ।**

**तस्योपाख्यानमिति ।** तस्य प्राणाख्यस्याऽऽत्मन उप समीप आख्यानं तत्स्वभा-वस्य स्पष्टकथनमारभ्यत इति वाक्यशेषः ॥ १ ॥

**बृहद्रथो वै नाम राजा विराज्ये पुत्रं निधापयित्वा ।**

बृहद्रथो वा इत्याद्याख्यायिका सुखावबोधार्था तपोवैराग्ययोरात्मज्ञानाङ्गत्वख्या-पनार्था च । **बृहद्रथो० निधापयित्वेति ।** विविधं राज्यमस्मिन्निति विराज्यं तस्मिन्वि-राज्ये सार्वभौम आधिपत्य इत्यर्थः । निधापयित्वा मन्त्रिभिर्निधानं स्थापनं कारयित्वे-त्यर्थः । राज्यस्थैर्ये पुत्रमभिषिच्येति यावत् ।

स्वयं जीवति सति पुत्रस्य राज्यदाने निमित्तमाह—

**इदमशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम**

**इदमिति ।** इदं शरीरमशाश्वतमनित्यं मन्यमान इति संबन्धः । वैराग्यं रागनिवृ-त्तिमुपेत ऐहिकामुष्मिकभोगरागाविनिर्मुक्त इत्यर्थः । अरण्यं ग्राम्यजनवर्जितं विविक्तम-भयं देशं प्रति निर्जगाम प्रस्थित इत्यर्थः ।

**स तत्र परमं तप आस्थायाऽऽदित्यमुदीक्षमाण ऊर्ध्वबाहुस्तिष्ठति ।**

**स तत्र० तिष्ठतीति ।** तत्रारण्ये स राजा बृहद्रथनामा परमं दुष्करं कायशोषल-

---

१ क. °पमचरितः पू° । २ क. °द्र य° । ३ ल. °स्योपख्याख्या° । ४ क. राज्ये स्वे पु° ।

क्षणं तप आस्थायोर्ध्वबाहुरूर्ध्वीकृतबाहुद्वय आदित्यं सवितारमुदीक्षमाणः सवितर्यारोपितदृष्टिः संस्तिष्ठत्यतिष्ठदित्यर्थः ।

तपसि स्थिरचित्तानामभीष्टसिद्धिरवश्यंभाविनीत्यभिप्रेत्याह—

**अन्ते सहस्रस्य मुनेरन्तिकमाजगामाग्निरिवाधूमक-**
**स्तेजसा निर्दहन्निवाऽऽत्मविद्भगवाञ्शाकायन्यः ।**

**अन्ते०** **शाकायन्य इति** । सहस्रस्य संवत्सराणामिति शेषः । एवं तपसि स्थितस्य राज्ञः संवत्सराणां सहस्रस्यान्ते भगवाञ्शाकायन्योऽन्तिकमाजगामेति संबन्धः । सहस्राहस्येति पाठे सहस्रदिवसात्मककालस्यान्त इति योज्यम् । शाकायनस्यापत्यं शाकायन्यस्तन्नामा कश्चिदृषिस्तस्याभीष्टवरदानसामर्थ्यद्योतनाय विशेषणानि । अधूमकोऽग्निरिवेति । उपशान्तविक्षेप इत्यर्थः । तेजसा स्वप्रभया ब्रह्मवर्चसेनेति यावत् । निर्दहन्निवान्यानभिभवन्निवेत्यनेनाज्ञानसंशयादिप्रतिबन्धराहितं तत्त्वज्ञानमस्यास्तीति द्योतितम् । कुत एवं प्रभावोऽयमित्यतो विशिनष्टि—**आत्मविदिति** । आत्मतत्त्ववित्त्वे लिङ्गमाह—**भगवानिति** ।

" उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति " ॥

( विष्णुपु० अं० ६ अ० ५ )

इति स्मृत्युक्तो भगवच्छब्दार्थः । सर्वज्ञ इत्यर्थः ।

आगत्य किं कृतवानिति तदाह—

**उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत्**

**उत्तिष्ठ०** **अब्रवीदिति** । स्पष्टोऽर्थः ।

ततो राजकृतमाह[1]—

**स तस्मै नमः कृत्वोवाच ।**[2]

**स तस्मै०** **उवाचेति** । तस्मै शाकायन्याय स राजा नमो नमनं नमस्कारं कृत्वा तं दण्डवत्प्रणम्योवाचोक्तवान् ।

किमुवाचेति तदाह—

**भगवन्नाहमात्मवित्त्वं[3] तत्त्वविच्छुश्रुमो वयं स त्वं नो ब्रूहीति ।**

**भगवन्०** **ब्रूहीतीति** । इत्युवाचेति संबन्धः । हे भगवन्पूजावन्नहमात्मविन्न । आत्मतत्त्वविन्न भवामीत्यर्थः । त्वं तत्त्वविदात्मतत्त्वस्य वेत्ता । इति शब्दोऽन्वाख्या-

१ क °कृत्यमा° । २ ख. नमस्कृत्योवा° । ग. नमस्कृत्वो° । ३ ख. °त्त्वं च त° ।

हार्यः । इति वयं शुश्रुम । विसर्गान्तपाठश्छान्दसः । अतः स त्वमात्मतत्त्वं नोऽस्मभ्यं ब्रूहि प्रतिपादयेत्यर्थः ।

एवं पृष्टवते शाकायन्यः किमाहेत्येतदाह—

**एतद्वृत्तं पुरस्ताद्दुःशक्यमेतत्प्रश्नमैक्ष्वा-**
**कान्यान्कामान्वृणीष्वेति शाकायन्यः**

**एतत्० शाकायन्य इति** । यत्त्वया पृष्टमात्मतत्त्वमेतद्वस्तु पुरस्तादतीते काले वृत्तं सिद्धं निर्णीतं पूर्वतैरैर्ऋषिभिरिति योज्यम् । इदानीं त्वेतत्प्रश्नं दुःशक्यम् । लिङ्गव्यत्ययेनैष प्रश्नो दुःशक्यो दुःशक इत्यर्थः । यद्वैतद्वृत्तमेतस्याऽऽत्मतत्त्वस्य वृत्तं याथात्म्यमेतत्प्रश्नं प्रश्नवचनं च पुरस्तात् प्रथमं चित्तैकाग्र्यादिति योज्यम् । दुःशक्यं दुःशकं वक्तुं श्रोतुं च दुर्लभमेतादित्यर्थः । तथा च श्रुतिस्मृती—" श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः " ( कठोप० ) इति ।

" आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् " इति ॥
( गी० अ० २ श्लो० २९ )

हे, ऐक्ष्वाकेक्ष्वाकुकुलोद्भव, अन्यान्कामान्स्वर्गभोगानप्सरःप्रभृतीनैहिकान्वा घनतरुणीप्रभृतीन्वृणीष्व प्रार्थयेथा इति शाकायन्य उवाचेत्यनुषङ्गः ।

ततो राजवृत्तान्तमाह—

**शिरसाऽस्य चरणावभिमृशमानो राजेमां गाथां जगाद ॥ २ ॥**

**शिरसा० जगादेति** । इमां बुद्धिस्थां वक्ष्यमाणां गाथां यथास्थितार्थां कथां जगादोक्तवान्राजा । सुगममन्यत् ॥ २ ॥

यदुक्तमन्यान्कामान्वृणीष्वेति तत्र भोगायतनस्य स्वभावालोचनायां न कामः कामाय कल्पत इति द्योतयन्स्थूलशरीरं तावद्बीभत्सितं वर्णयति—

**भगवन्नस्थिचर्मस्नायुमज्जमांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्र-**
**वातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः**

**भगवन्० भोगैरिति** । श्लेष्मा सिङ्घाणको नासाद्वारकमलः, दूषिका नेत्रमलः, कफो हृत्कण्ठरोधी पिच्छिलो मल इति भेदः । अस्थ्यादिसंघाते घने दुःसहगन्धे कदलीस्तम्भवन्निःसारेऽन्तःसारवर्जितेऽस्मिन्स्थूले शरीरे वर्तमानस्येति शेषः । किं

---

१ ख. °स्तादशक्यं मा पृच्छ प्रश्न° । ग. °तैर्ऋ° । ३ क. ति । ऐ° । ४ ग. राजा वृ° । ५ ख. °मज्जामां° । ६ क. °त्र्य° । ग. °त्रपि° । ७ क. °त्रम° । ८ ग. °ते दुः° । ९ क. °स्मिञ्शरी° ।

कामोपभोगैः कार्यम् । आघ्रातं नीयमानस्य वध्यस्येव भोजनाच्छादनालंकारादि न तोषमुपैष्यतीत्यभिप्रायः ।

न केवलमिदं शरीरं स्वतो बीभत्सिततत्वात्कामानर्हमपि त्वतिबलवदरिनिवहैराभिभूयमानत्वादपीत्यत आह—

**कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्शरीरे किं कामोपभोगैः ॥३॥**

**काम० भोगैरिति** । कामोऽप्राप्ताभिलाषः । क्रोधः प्रसिद्धः । लोभः प्राप्तेष्वपि विषयेष्वलंबुद्धिराहित्यम् । मोहोऽनर्थेऽर्थबुद्धिः । भयं पारित्रासः । विषादः शोकः । ईर्ष्या परप्रद्वेषः । इष्टवियोगः स्वानुकूलपुत्राद्यनुबन्धवैकल्यम्[२] । अनिष्टसंप्रयोगः स्वप्रतिकूलानुबन्धसंकलनम् । एताभ्यां दुःखं लभ्यते । एवमेतेऽन्तःकरणधर्माः । क्षुत्पिपासे प्राणधर्मौ । जरादयो देहधर्मा आगन्तुकाः । शोकः शोकनिमित्तो देहावसादः कार्श्यमिति यावत् । आदिशब्दाद्वृद्धि[३]विपरिणामौ गृह्येते । अन्यदुक्तार्थम् ॥ ३ ॥

एवंविधोऽपि संघातो यदि चिरस्थायी स्थिरः स्यात्तदा कथंचिदपि विषकीटवदभिलष्येत नैवमस्तीत्याह—

**सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवनस्पतयोद्भूतप्रध्वंसिनः ।**

**सर्वं चेदं० प्रध्वंसिन इति** । सर्वं चेदं यथावर्णितं संघातरूपं क्षयशीलं नश्वरं पश्यामो निर्धारयाम[४] इति प्रतिज्ञा तत्र हेतुरुद्भूतप्रध्वंसित्वादिति योज्यम् । कादाचित्कत्वादित्यर्थः । यथेम इत्यादि प्रध्वंसिन इत्यन्तं निदर्शनमिति विभागः । तथा चायं प्रयोगः, विमतः संघातोऽशाश्वत उत्पन्नप्रध्वंसित्वाद्य एवं स एवं यथेमे दृश्यमाना दंशमशकादयो यथा वा तृणवनस्पतय उद्भूतप्रध्वंसिनोऽशाश्वतास्तथा चायं तस्मात्तथेति । वनस्पतयोद्भूतेति संधिश्छान्दसः[५] । वोकारो वाऽत्र लुप्तो द्रष्टव्यः ।

उक्तदृष्टान्तेष्वप्रकृष्टकर्मजत्वमुपाधिमाशङ्क्य तस्याप्रयोजकतां दर्शयन्प्रकृष्टकर्मजेष्वप्यशाश्वततामाविष्करोति—

**अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित्**

**अथ० केचिदिति** । अन्यच्चेत्यस्मिन्नर्थेऽथशब्दः । एतैरुदाहृतैः क्षुद्रजन्तुस्थावरैः किम् । वाशब्दोऽनादरे । पर उत्कृष्टा अन्य उक्तेभ्यो महाधनुर्धरा महाशूराश्चक्रवर्तिनः सार्वभौमाश्च केचिदस्माल्लोकादमुं लोकं प्रयाता इत्युत्तरेणान्वयः ।

---

१ क. °प्तार्थाभि° । २ क. °वैकृव्यम् । ३ क. °द्धिर° । ४ क. निभालयाम । ५ क. °सः । उ° ।

तानेव चक्रवर्तिनः कांश्चिद्गणयति—

**सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्व[1]वध्र्यश्वाश्वपति[2]शश-**
**बिन्दु[3]हरिश्चे[4]न्द्राम्बरीष[5]न[6]क्तुसर्या[7]तियर्या[8]त्यनर[9]ण्यक्षसेनादयः ।**

**सुद्युम्न० सेनादय इति** । अत्राश्वपतिः शशाबिन्दुरित्यादिपदाविच्छेदपाठश्छान्दसः प्रामादिको वा । एते सूर्यसोमवंशजा राजान उक्ताः—

एतेष्वापि विशिष्टतरानन्यानुदाहरति—

**अथ मरुत्तभ[10]रतप्रभृतयो राजानो**

**अथ मरुत्त० राजान इति** । मरुत्तो नाम संवर्तकेन योगिना योजितो राजा यस्य यागे समागता इन्द्रादयः सायुधा एव स्तम्भिताः पुनश्चै[11] चमसाध्वर्यवे नियुक्ताः[12] सः । भरतो दौष्यन्तिर्येनाश्वमेधानां त्रिशती कृतौ[13] सः । प्रभृतिरित्यादिपदपर्यायेण प्रियव्रतादयो गृह्यन्ते[14] ।

किं तदाह—

**मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वाऽ-**
**स्माल्लोकादमुं लोकं प्रयाता इति ।**

**मिषतो बन्धुवर्गस्य० प्रयाता इतीति** । बन्धुवर्गस्ये[15] भोग्यजातस्य मिषतः पश्यतो[16] जीवत एव सतोऽक्षुण्णस्येति यावत् । महतीमपरिमितां श्रियं विभूतिं त्यक्त्वाऽनिच्छन्तोऽपि तां परित्यज्यास्मात्प्रतिपन्नाल्लोकाद्देहादमुं लोकं परोक्षं प्रयाता नष्टा बभूवुरिति निश्चितामित्यर्थः ।

एवं मनुष्यशरीराणामुत्कृष्टानामप्यनित्यतामुदाहृत्यामनुष्येष्वप्युत्कर्षनिकर्षतारतम्येन स्थितेष्वानित्यतामावेदयन्नादौ तेषु निकृष्टाननुक्रमते—

**अथ किमेतैर्वा परेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्र-**
**हादीनां निरोधं पश्यामः ।**

**अथ किं० पश्याम इति** । अर्थापी[17]त्येतैः पूर्वोक्तैः किं वेतोऽप्यन्ये परे चिरस्थायितयोत्कृष्टाः सन्ति तेषां गन्धर्वादीनां निरोधं नाशं पश्याम इति योजना । पिशाचा उन्मादापस्मारादयः । ग्रहा बालग्रहा मातृकादयः । अन्ये प्रसिद्धाः ।

**अथ किमेतैर्वा[18]ऽन्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं**
**ध्रुवस्य प्रचलनं व्रश्चनं वा[19]तरज्जूनां निमज्जनं पृथिव्याः स्थाना-**

---

१ ख. °वध्र्यश्वा° । २ ख. ग. °पतिः श° । ३ ख. ग. °न्दुर्हरि° । ४ ख ग. °श्चन्द्रोऽम्ब° । ५ ख. °रीषो न° । ६ ख. °नक्तुः शर्या° । ७ ख. ग. °तिर्यया° । ८ ख. °यातिरन° । ९ ख. ग. °रण्योऽक्ष° । १० ख. °रु भ° । ११ क. °श्चम° । १२ क. °क्ताः । भ° । १३ क. °ता । प्र° । १४ ग. °न्ते । ते किं° । १५ क. °स्य मि° । १६ क. °तो म° । १७ ग. °थापि चैतैः । १८ क. °र्वाऽन्येशां शो° । १९ ख. वा तरूणां नि° ।

**दपसरणं सुराणामित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैः ।**

**अथ किं० कामोपभोगैरिति** । अथाप्येतैरुक्तैः किं वेतोऽपि स्थिरत्वेन प्रतिपन्नानामन्यानामन्येषामित्येतत् । स्थिरतां न पश्याम इति योजना । यतः शोषणं महार्णवानां प्रलयकाले । अर्णानामिति पाठेऽर्णांस्यर्हन्तीत्यर्णा नद्यस्तासां शोषणं महार्णवानां च शोषणमिति योजनीयम् । शिखरिणां महामेरुप्रभृतीनां गिरीणां प्रपतनमुच्छेदः । ध्रुवस्य सर्वज्योतिश्चक्रावलम्बनस्य प्रचलनं स्वमण्डलात्प्रच्यवनम् । वातरज्जूनां वातमयानां रज्जूनां शिशुमारचक्रबन्धनानां व्रश्चनं छेदनम् । पृथिव्या अपि सप्तद्वीपवत्या निमज्जनमुदकान्तर्लयः । एवं स्थाननाशे तत्स्थानां सुराणां ब्रह्मादीनां तस्मात्तस्मात्स्थानादपसरणमपसर्पणं स्थानभ्रष्टतया क्षीणभोगत्वम् । इतीत्थमेतद्विध एतादृक्प्रकारे सर्वथा नश्वरेऽस्मिन्ब्रह्मादिस्तम्बपर्यन्ते संसारे किं कामोपभोगैरिति व्याख्यातम् ।

भोगस्थानानां भोग्यदेहेन्द्रियविषयाणां तद्विशिष्टभोक्तॄणां चानित्यत्वं प्रसाध्य भोगानामपि तत्प्रसाधयति—

**यैरेवाशितस्यासकृदिहाऽऽवर्तनं दृश्यते ।**

**यैरेवाशितस्या० दृश्यत इति** । यैराशितस्य भोजितस्य ब्रह्मलोकपर्यन्तेषु स्थानेषु तर्पितस्य पुंस इह मनुष्यलोकेऽसकृन्मुहुरावर्तनमावृत्तिर्दृश्यते तैरनित्यैः कामोपभोगैः किं ममेत्यर्थः । तदनेन प्रबन्धेनानात्मविषयो वरः प्रत्याख्यातोऽनेन चाऽऽत्मज्ञानयोग्यता दर्शिता ।

एवं गुरुवैराग्यं विवेकपूर्वकमुपवर्ण्य स्थितो गुरोरनुग्रहदृष्टिमालक्ष्य तत्पादोपसर्पणं विद्योपदेशग्रहणाङ्गं विदधद्गुरुं प्रार्थयते—

**इत्युद्धर्तुमर्हसि ।**

**इत्युद्धर्तुमर्हसीति** । यतोऽहं निर्विण्णोऽस्म्यतो मामुद्धर्तुमर्हसीत्युक्तवानित्यर्थः ।

कुत उद्धरणं तदाह—

**अन्धोदपानस्थो भेक इवाहमस्मिन्संसारे भगवं-**
**स्त्वं नो गतिस्त्वं नो गतिः ॥ ४ ॥**

**इति मैत्र्युपनिषदि प्रथमः प्रपाठकः ॥ १ ॥**

**अन्धोदपानस्थो० गतिरिति** । अन्धोदपानं निरुदकः कूपस्तत्र स्थितो भेको मण्डूक इवास्मिन्यथावर्णिते संसारे स्थितो दुःख्यस्मीत्यस्मादुद्धर्तुमर्हसीत्यर्थः । कोऽप्यन्यस्त्वामु-

---

१ ख. °राणां सोऽहमि । २ क. °मन्येषां स्थि° ३ क. ठेऽर्णान्त्यर्ह° । ४ क. वातरूपाणां । ५ क. भोग्यस्था° । ६ क. गुरौ वै° । ७ क. °वेकं चोप° । ८ ख. °गवस्त्वं ।

द्धरिष्यतीति मा शङ्किष्ठा इत्याह—भगवंस्त्वं नो गतिस्त्वं नो गतिरिति । अभ्यास आदरार्थोऽध्यायसमाप्तिद्योतनार्थो वा ॥ ४ ॥

इति श्रीरामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां
प्रथमः प्रपाठकः ॥ १ ॥

---

अथ द्वितीयः प्रपाठकः ।

एवं वरान्तरैः प्रलोभ्यमानोऽप्यप्रचलिततया सुपरीक्षितो जिज्ञासुरुपसन्नः शिष्यो न गुरुणोपेक्षणीय इति गुरोः प्रवृत्तिं दर्शयति श्रुतिः—

**अथ भगवाञ्शाकायन्यः सुप्रीतस्त्वब्रवीद्राजानं**[1]

**अथ भगवान्० राजानमिति** । स्पष्टोऽर्थः ।

किमब्रवीदिति तदाह—

**महाराज बृहद्रथेक्ष्वाकुवंशध्वज शीघ्रमात्मज्ञः**
**कृतकृत्यस्त्वं मरुन्नाम्नेति विश्रुतोऽसीति ।**

**महाराज० विश्रुतोऽसीतीति** । महाराजेत्यादिशिष्यप्रशंसा वक्ष्यमाणार्थग्रहणयोग्यतां तस्य सूचयितुम्[2] । प्रशस्यमानो हि गुरोः प्रसन्नतां बुद्ध्वा तदुक्तार्थे श्रद्धानतया तमवधारयति । वंशध्वजत्वं तत्ख्यातिकरत्वम् । त्वं शीघ्रमात्मज्ञः संवत्सरै[3]-वासशुश्रूषादिविलम्बं विना मत्त आत्मज्ञानं प्राप्नोषि यतोऽतः कृतकृत्यस्त्वमिति । इतिशब्दोऽग्रेतन इह ज्ञेयः । इति हेतोर्मरुन्नाम्ना मरुतो वायोर्यन्नाम पृषदश्व इति तेन नाम्ना विश्रुतोऽसीति योजना । पृषन्तो महान्तोऽश्वा यस्य रथे भवन्ति स पृषदश्वो वायुः । महाश्वयुक्तरथो हि महान्भवतीति महारथ उच्यते वायुरयमपि तत्पर्यायत्वाद्बृहद्रथ इति ख्यातिमापन्न इत्यर्थः । अथवा जगत्प्राण इति यद्वायोर्नाम तेन नाम्नेदानीं विश्रुतोऽसीति योजना । मत्प्रसादात्त्वं जगदात्मा संवृत्तोऽसीत्यभिप्रायः ।

यदर्थमयमुपसन्नो राजा गुरुं तमात्मानमुपदिशति—

**अयं वाव खल्वात्मा ते**

**अयं वाव खल्वात्मा त इति** । ते तवाहं ममेति संघातमनुभवतोऽयं वावायमेवा[4]-नुभाविताऽऽत्मा खलु नात्र संशयः कार्य इत्यर्थः ।

कोऽसावनुभवितेति पृच्छति—

**यः कतमो भगवा इति**

**यः कतमो भगवा इतीति** । यस्त्वयोक्त आत्मा स कतमो भगवा[5] हे भगवो देहे-

---

१ ख. °प्रीतोऽब्र° । २ क. °माणग्र° । ३ क. °रशु° । ४ क. °गवम्मिति । ५ क. °गवन्हे भगवन्देहे° ।

न्द्रियमनोबुद्धिप्राणानां मध्ये किमन्यतमः, किं वा तद्विलक्षणोऽन्य इति प्रश्नार्थः ।

तत्र संघातविलक्षण एवाऽऽत्मेति गुरुरुत्तरं प्रतिजज्ञ इत्याह श्रुतिः—

**तं होवाचेति ॥ १ ॥**

**तं होवाचेतीति** । इतिशब्द ऐतिह्यार्थेऽनुवाकसमाप्त्यर्थे वा ॥ १ ॥

पूर्वमयं वावाऽऽत्मेति जागरितेऽनुभाविताऽऽत्मेति प्रदर्शितं तेन च स्थूलशरीरादन्यत्वमुक्तम् । इदानीं सूक्ष्मस्य प्राणान्तःकरणसंघातस्य द्रष्टृत्वशङ्कापाकरणेन ततो विविक्तमात्मानमुपदिशति—

**अथ य एष उच्छ्वासाविष्टम्भनेनोर्ध्वमुत्क्रान्तो**
**व्ययमानोऽव्ययमानस्तमः प्रणुदत्येष आत्मा ।**

**अथ य० आत्मेति** । अथ जाग्रद्भोगहेतुकर्मोपरमानन्तरं स्वप्नभोगोद्भवकाले य एष विद्वत्प्रत्यक्ष उच्छ्वासस्योच्छ्वासनिश्वासव्यापारवतः प्राणस्याविष्टम्भनेनानिरोधेनोर्ध्वमुपरि स्थूलाश्रयं सूक्ष्ममूर्ध्वमुपरीति चोच्यते तत्प्रत्युत्क्रान्तः स्थूलशरीराभिमानं परित्यज्य सूक्ष्मशरीरमभिमन्यमान इत्यर्थः । व्ययमानो विविधमयमानो नानावासनावासितान्तःकरणविकाराननुभवंस्तत्तदात्मना विप्रसृत इव भासमानोऽपि परमार्थतोऽव्ययमानो निश्चल एव संस्तमो मोहलक्षणं प्रणुदति प्रेरयति पश्चात्क्रमेण मोहमाविशति जाग्रद्दृष्टं नानुसंधत्त इत्यर्थः । एष आत्मा यः स्वप्ने करणानामुपरमाद्बाह्यान्विषयाननुभवन्वासनामयांश्चानुभवन्प्राणेन स्थूलं च देहं परिपालयन्नास्त एष आत्मेत्यर्थः । तथा च श्रुत्यन्तरम्—"प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः" ( बृहदा० अ० ४ ब्रा० ३ ) इति ।

उक्तेऽस्मिन्नात्मनि प्रत्ययदार्ढ्याय वृद्धसंमतिमाह—

**इत्याह भगवान्मैत्रिः ।**

**इत्याह भगवान्मैत्रिरिति** । मैत्रीर्मित्राया अपत्यमृषिर्मैत्रिर्मैत्रेयः ।

वृत्तमर्थं श्रुतिः स्वमुखेनाऽऽह—

**इत्येवं ह्याह ।**

**इत्येवं ह्याहेति** । शाकायन्य इत्याह भगवान्मैत्रिरित्येवं हि राजानं प्रत्याहेत्यर्थः ।

येनाहं ममेत्यनभिमन्यमानानामिदं स्थूलं शरीरं निर्व्यापारं पतति तदनु च येन प्रकाशितं प्राणान्तःकरणरूपं लिङ्गं विषयाकारेण व्याप्रियते स आत्मा तवेत्युक्तमिदा-

---

१ क. तिजानीत इ २ क. ह्यार्थोऽनु । ३ क. °त्यर्थो वा । ४ ग. इत्यवभ° । ५ क. यः क° ६ ग. °मानमि° । ७ ग. °षयविषय्याका° ।

नीमेतस्यापि सूक्ष्मस्य यत्र तमोमात्रेण कारणात्मनि लयो लीनप्रपञ्चश्च यत्स्वभावोऽवतिष्ठते स मुख्य आत्मा साक्षादेव तमात्मेति गृहाणेत्याह—

**अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते[1] इत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ २ ॥**

**अथ य० ब्रह्मेतीति** । अथ स्वप्नदर्शनहेतुकर्मक्षये सति पुनर्जाग्रन्निमित्तकर्मानुद्भवे य एष स्वप्नविषयसाक्षी संप्रसादः सम्यक्प्रसीदत्यत्रेति संप्रसादः सुषुप्तिस्तदवस्थ आत्मेह संप्रसाद उच्यते । स्थूलसूक्ष्मोपाधिद्वयविलापनेन तत्संपर्कजनितकालुष्यविलयात्संप्रसन्नः सुषुप्तौ पुरुषो भवति । स संप्रसादोऽस्मात्पूर्वगृहीताच्छरीराद्देहद्वयात्समुत्थाय सम्यगुत्थाय तद्विस्मृत्य तदभिमानं परित्यज्येति यावत् । परं प्रविलीनप्रपञ्चकारणं ज्योतिः[3] प्रकाशमात्रस्वभावमुपसंपद्य तदेकात्मभावेन संपद्य स्वेनासाधारणेन रूपेणाभिनिष्पद्यते जीवावस्थामभिभूय स्वस्वरूपमुपगतो भवत्येवं क्रमेण येन स्वरूपेणाभिनिष्पद्यत एष आत्मेति होवाच शाकायन्य इति श्रुतेर्वचनमिदम् । एवंविधात्मस्वरूपज्ञाने[4] सति ज्ञातव्यं नावशिष्यते कर्तव्यं वा प्राप्तव्यं वा किमपीत्याह । एतदमृतमभयमेतद्ब्रह्मेति होवाचेति संबन्धः । अमृतमविनश्वरमत एवाभयमप्रकम्प्यमेतदेव ब्रह्म परिपूर्णमद्वयानन्दरूपमित्यर्थः । अतस्त्वं कृतकृत्योऽसीत्यभिप्रायः ।

**अस्यानुवाकस्यापरा व्याख्या**—पूर्वानुवाकेऽयं वाव खल्वात्मा त इति सामान्यतोऽनिर्धारितविशेष आत्मोपदिष्टस्तद्विशेषबुभुत्सया यः कतम इति पृष्टे तं विशेषतो वक्तुं प्रतिजज्ञे । तत्राऽऽत्मनो निर्विशेषस्वभावत्वाद्विशेषतो निर्वक्तुमशक्यत्वादुपाध्याकारजनितविशेषप्रविलापनेन निर्विशेषमात्मानं दर्शयितुमारभते—**अथ य एष उच्छ्वासाविष्टम्भनेनेत्यादिना** । अथ यदि विशेषमात्मनोऽवगन्तुमिच्छसीत्यर्थः । तर्हि शृणु । यस्तुभ्यं मयोक्त एष एवोच्छ्वासाविष्टम्भनेनोर्ध्वश्वासो यो मरणकाले भवति स उच्छ्वासस्तस्याऽऽ समन्ताद्विष्टम्भनं निरोधस्तेन तन्निरोधं कृत्वा देहान्तःसंचारिणं प्राणमाश्रित्येत्यर्थः । ऊर्ध्वं हृदयात्कण्ठं कण्ठाच्च शिरःपर्यन्तमुत्क्रान्तो विप्रसृतः । उपलक्षणमेतत् । अपश्वासमाविष्टभ्य हृदयादधोऽप्यपक्रान्त आपादतलमस्तकमयःपिण्डमिव संतप्तमग्निश्चेतनतामापादयन्व्याप्य व्यवस्थित इत्यर्थः । तत्रैवं स्थितस्तत्तदिन्द्रियद्वारकबुद्धिवृत्तिभिर्नीयमानो विविधं शब्दादिविषयाकारेणायमानः प्रवर्तमानस्तत्तद्विषयाकारबुद्धिवृत्त्यध्यासेन द्रष्टा श्रोता मन्तेत्याद्यनेकरूपतयाऽऽत्मव्यवहारमनुभवन्निति यावत् ।

---

१ ख. °त एष° । २ ग. °नक° । ३ ग. °ते बीजावस्थामप्यभि° । ४ क. °रूपे ज्ञाते स° । ५ क. क. ख. ग. पूर्वोक्तानु° । ६ क °तः श्वा° । ७ क. °तरामा° ।

तथाऽपि स्वरूपतस्त्वव्ययमानोऽप्रचालितस्वभावः कूटस्थ इति यावत् । तमो विषयानाभिव्यक्तिलक्षणं प्रणुदत्यपसारयति विषयेषु स्वचैतन्यकर्माऽऽपादयंस्तेषामज्ञाततामपनयतीत्यर्थः । एवं यो व्यवहरन्नेतद्देहमवष्टभ्याऽऽस्त एष आत्मेत्यादि व्याख्यातम् । तथा च मन्त्रवर्णः—"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इति । एवं सोपाधिमात्मानमुपाधिद्वारोपलक्ष्य तमेव पुनरुपाधिविलापनेन निरुपाधिकं शुद्धमात्मानमुपस्थाप्य तस्य ब्रह्मरूपत्वमुपदेष्टुं प्रवर्तते—**अथ य एष संप्रसाद इत्यादिना** । व्याख्यानं समानम् ॥ २ ॥

एवं संक्षेपत आत्मतत्त्वमुपदिश्य शाकायन्यः[2] पुनर्विस्तरेण तस्याऽऽत्मनः स्वभावमुपदेष्टुकामः स्वाचार्यद्वारा स्वस्यैतद्विद्याप्राप्तिं दर्शयति । संक्षेपविस्तराभ्यां हि निरूप्यमाणोऽर्थः सुखावबोधो दृढनिश्चयश्चाऽऽपद्यत इत्यत आह—

**अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रिणाऽऽख्याताऽहं ते कथयिष्यामीति ।**

**अथ खलु॰ कथयिष्यामीतीति** । अथशब्द उत्तरारम्भार्थः[3] । हे राजन्बृहद्रथ यदिदमात्मतत्त्वज्ञानं मया तुभ्यमुक्तमियं खलु ब्रह्मविद्या सर्वशाखोपनिषत्प्रतिपाद्या वा विद्या । वा शब्दश्चार्थे । सा चेयमेव नान्याऽस्माकं भगवता मैत्रिणा गुरुणाऽऽख्याता कथिता तामेवाहं कथयिष्यामि । तेन मह्यं येन प्रकारेणोक्तं तेनैव प्रकारेण महदाख्यानेन निरूपयिष्यामीत्यर्थः । अयमाशयः—संघातविलक्षणस्तत्साक्ष्यात्मैव ब्रह्मेति यदिदमेतच्छाखाप्रवक्तुर्मैत्रेराचार्यस्य मतं तत्सर्वशाखासंमतं सर्वब्रह्मवित्संमतं च न पुनस्तार्किकसमयवत्परस्परविगीतमतो दृढविश्वासः कर्तव्य इति ।

किं तन्महतां पूर्ववृत्तमाख्यानं मैत्रिणोक्तमित्याभिमुखीभवन्तं शिष्यं प्रत्याख्यायिकामाह—

**अथापहतपाप्मानस्तिग्मतेजस ऊर्ध्वरेतसो वालखिल्या इति श्रूयन्ते ।**

**अथापहत॰ श्रूयन्त इति** । अथेदानीमिदं[5] शृणु । किम् । अपहतपाप्मानस्तपोनिर्धूतकल्मषाः । तिग्मतेजसस्तीव्रतेजसोऽत्यूर्जितप्रभावाः । तेजसा[6] इत्येवंविध एतच्छाखासंकेतपाठश्छान्दसः सर्वत्र । ऊर्ध्वरेतसोऽस्खलितब्रह्मचर्या[7] जितेन्द्रिया इति यावत् । वालखिल्या वालखिल्यसंज्ञा इत्येवंविधा ऋषयः श्रूयन्ते श्रुतिस्मृतिपुराणेष्वित्यर्थः[8] ।

किं तत इत्यपेक्षायामाह—

---

१ क. °ह्मस्वरू°। २ ग. °दिश्य शाका°। ३ क. °रार्थः। ४ क. °णा व्याख्या°। ५ क. °दानीं शृ°। ६ क. °जस ऊर्जि°। ७ क. °सः ऊ°। ८ क. °सोऽशकालि°।

अथ क्रतुं प्रजापतिमब्रुवन् ।

**अथ क्रतुं० अब्रुवन्निति** । अथ कदाचित्ते क्रतुनामानं प्रजापतिं गत्वाऽब्रुवन्नुक्तवन्त इत्यर्थः ।

किमब्रुवन्निति तदाह—

**भगवञ्शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत्प्रतिष्ठापितं प्रचोदयिता वाऽस्य यद्भगवन्वेत्सि तदस्माकं ब्रूहीति तान्होवाचेति ॥ ३ ॥**

**भगवन्० होवाचेतीति** । हे भगवन्प्रजापत इदं शरीरं सावयवत्वाद्रूपादिमत्त्वाच्च शकटमिवान इवाचेतनं जडमेवमपि चेतनावदिव शकटविलक्षणमनुभूयतेऽतः पृच्छामो येनैताद्विधमेतच्छरीरं चेतनवत्प्रतिष्ठापितं स एष महिमा माहात्म्यं कस्य खल्वतीन्द्रियभूतस्यादृश्यस्याग्राह्यस्य सत ईदृश एतादृशः को वाऽस्य चेतयितेति प्रश्नार्थः । किंच प्रचोदयिता वाऽस्य शरीरस्य शाकटिक इव शकटस्य प्रेरयिता वा कोऽस्ति । यदत्र चेतयितृत्वेन प्रेरयितृत्वेनानुगतं वेत्सि हे भगवंस्तदस्माकं ब्रूहीत्यब्रुवन्निति पूर्वेणान्वयः । **तान्होवाचेति** श्रुतिवचनम् । तान्प्रति प्रजापतिर्होवाचोक्तवानुत्तरमित्यर्थः ॥ ३ ॥

**यो ह खलु वावोपरिस्थः श्रूयते**

**यो ह० श्रूयत इति** । ह स्फुटम् । खलुशब्दो वाक्यालंकारार्थः । वावशब्दोऽवधारणे । य एवोपरिस्थः सर्वस्य प्रपञ्चस्योपरि निष्प्रपञ्चे स्वरूपेऽवस्थितः । यद्वा वावशब्दो भिन्नक्रमः । यो ह खलूपरिस्थित एवं प्रपञ्चान्तरनुगम्यमानोऽपि न तस्मिन्स्थितः किंत्वसङ्गतया प्रपञ्चातीते स्वस्वरूपे स्थित एव सन्स्वचैतन्याभासेन प्रपञ्चमवभासयंस्तत्र स्थित इव भवति न वस्तुतस्तत्रास्ति । तस्य स्वात्मन्यध्यस्तस्य मिथ्यात्वादित्यभिप्रायः । तथा च श्रूयते— "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुत्यन्तर इत्यर्थः ।

प्रपञ्चानुगतस्यापि तद्धर्मास्पृष्टत्वेन तत उपरिस्थत्वे दृष्टान्तमाह—

**गुणेष्विवोर्ध्वरेतसः स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः ।**

**गुणेष्विवोर्ध्वरेतस इति** । यथोर्ध्वरेतसो योगिनो गुणेषु विषयेषु वर्तमाना अपि तत्रासङ्गितया तेभ्य ऊर्ध्वा एव तथाऽयमपीत्यर्थः । अथवा यो ह खलूपरिस्थोऽध्यक्षतया स्थित एव गुणेषु गुणकार्येषु देहादिष्विव श्रूयत इति योजना । तथा च श्रुतिः—"यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि

---

१ ग. °ति । भ° । २ क. °तनवदिह श° । ३ क. °ति तत्प्रश्ना° । ४ क. °व स° । ५ ख. °णेष्वेवो° । ६ ख. °श्वतः स्व° ।

भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृहदा० अ० ३ ब्रा० ७) इति । ऊर्ध्वरेतस इति संबोधनम् । यत एवमसङ्गस्वभावोऽत एव स एष वै शुद्धो रागादिकालुष्यरहित एव । पावयति पुनातीति वा पूतः कर्तरि निष्ठा न कर्मणि।आत्मान्यस्य सर्वस्यापि जडतयाऽशुचेरात्मपावयितृत्वानुपपत्तेः । शून्यो निष्प्रपञ्चः । शान्तो निर्विकारः कूटस्थ इत्यर्थः । अप्राणः प्राणनादिधर्मरहित इत्यर्थः । निरात्मा[१]ऽत्राऽऽत्मेति मन उच्यते मनोरहितः संकल्पाध्यवसायादिधर्मरहित इत्यर्थः । अन्तो विनाशस्तद्रहितोऽनन्तः । अक्षय्यः क्षेतुमशक्योऽपक्षयरहित इत्यर्थः । स्थिरो वृद्धिरहितः शाश्वतः शश्वद्भवः सर्वदैकरूपो विपरिणामशून्य इत्यर्थः । अजो जन्मरहितः । स्वतन्त्रो जन्मानन्तरभाव्यस्तित्वविकाररहितः ।

एवंविध आत्मा क्व तिष्ठतीत्यपेक्षायामाह—

**स्वे महिम्नि तिष्ठत्यजेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ।**

**स्वे महिम्नि तिष्ठतीति** । स्वस्वरूपे स्थितो नास्याऽऽधारोऽस्तीत्यर्थः । तथा च श्रुत्यन्तरम्—" स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नि " ( छा० अ० ७ ख० २४) इति । अन्यो ह्यन्यस्मिन्प्रतिष्ठितो भवति नास्यान्योऽस्ति यत्रायं प्रतिष्ठितः स्यात् । तस्मात्स्वमहिम्न्येवावस्थितो नान्याधीनतयेत्यर्थः । य एष एवंलक्षण आत्माऽनेनेदं शरीरं चेतनवच्चेतनमिव प्रतिष्ठापितं व्यवहारकालेऽबाधिततया स्थापितम् । अस्य शरीरादिसंघातस्य प्रचोदयिता प्रेरकश्च[२] यो वाऽस्ति सोऽप्येष एवेति होवाचेति संबन्धः । अचेतने देहादौ चेतयितृत्वनियन्तृत्वाभ्यां ताटस्थ्येनास्तीति प्रतिपन्नस्य जिज्ञासितस्य स्वरूपमेतत्स वा एष इत्यादि तिष्ठतीत्यन्तेनाभिहितम् ।

एतच्चोपदेशमात्रेणोक्तं युक्तितो व्यवस्थापयितुं पुनः प्रश्नमु[३]त्थापयति—

**ते होचुर्भगवन्कथमनेनेदृशेनानिष्ठे[४]नैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाच ॥ ४ ॥**

**ते होचुः० होवाचेति** । ईदृशेनोक्तलक्षणेन स्वे महिम्नि स्थितेनेत्यर्थः । अत एवानिष्ठेन निष्ठा तात्पर्यं ममानेन भाव्यमित्येवमाकारा प्रण(म)तिः सा यस्य नास्ति सोऽनिष्ठस्तेन । देहादावहंममताहेतुशून्येनेत्यर्थः । अनिष्टेनेति पाठेऽयमर्थः । इष्टमिच्छा भावे निष्ठा नास्तीष्टं यस्य सोऽनिष्ट इच्छारहितस्तेनेति । अणिष्ठेनेति पाठे तु सूक्ष्मतरेण दुर्लक्ष्येणेत्यर्थः । व्याख्यातार्थमन्यत् ॥ ४ ॥

सत्यमेवंविधस्याऽऽत्मनः परमार्थतश्चेतयितृत्वं प्रेरयितृत्वं वा न संभवति तथाऽपि

१ क. °त्मात्मे° । २ क. °कश्चासौ यो । ३ क. मुपपादय° । ४ क. °निष्ठेनै° ।

शुक्त्यादौ रजतादिवत्स्वात्मन्यध्यस्तस्यान्यत्राभावादधिष्ठानपारतन्त्र्यात्तद्धर्मकमिवाचेतनमपि चेतनमिवानधिष्ठितमप्यधिष्ठितमिवावभासते शरीरादि न वस्तुत इत्यभिसंबन्धायोक्तं स्वरूपमनूद्य तस्याविद्याकृतकार्योपाधिप्रवेशनिमित्तमिदं धर्मद्वयमित्युत्तरमाह प्रजापतिः—

**स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः ।**

**स वा एष० अदृश्य इति** । स वै पूर्वोक्त एष विद्वत्प्रत्यक्ष आत्मा सूक्ष्मोऽविषयः, यतोऽग्राह्यः कर्मेन्द्रियागोचरोऽदृश्यो ज्ञानेन्द्रियागोचरो नापि मनोगोचरः । "अप्राप्य मनसा सह" इति श्रुतेः । एतेनानुमानादिगोचरत्वमपि निरस्तमुक्तलक्षणात्मस्वरूपव्याप्तलिङ्गादिसंबन्धानिरूपणादतो निरातिशयमस्य सौक्ष्म्यं सिद्धमित्यर्थः ।

यदि सर्वप्रमाणागोचरः कथमस्य सद्भावस्तत्राऽऽह—

**पुरुषसंज्ञोऽबुद्धिपूर्वमिहैवाऽऽवर्ततेंऽशेनेति**

**पुरुषसंज्ञ इति** । पूर्षु शेत इति वा पूर्णमनेन[२] सर्वमिति वा पूर्वमास्त इति वा पुरुषः । अतः पुरुषसंज्ञया प्रसिद्धः स्वतःसिद्धसद्भाव इत्यर्थः । तथा च **श्रुतयः**—"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैतेन किंचनानावृतं नैतेन किंचनासंवृतम्" इति । "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति "पूर्वमेवाहमिहाऽऽसमिति तत्पुरुषस्य पुरुषत्वम्" इति च । स एवंविध आत्माऽसङ्गस्वभावोऽप्यबुद्धिपूर्वकसंकल्पितमेवेहैव देहादिसंघात एव आवर्तत आसमन्तादापादतलमस्तकमहमित्याभिमन्यमानो वर्ततेंऽशेनैकदेशेन संघाताविविक्तस्तदनुगतः स्वचैतन्याभासोंऽश इत्युच्यते न पुनर्निरवयवस्य विभोरात्मनः स्वाभाविकोंऽश एकदेशलक्षणः संभवत्यतस्तेनांशेनैवेहाऽऽ[३]वर्तते । इतिशब्दः प्रकारवचनः । ईदृशो वर्तत इत्यर्थः ।

स्वमायावेशवशाच्चि[४]त्सदानन्दानन्तब्रह्मरूपतां स्वाभाविकीं विस्मृत्याहं मनुष्य इत्याद्यतद्रूपमेवाऽऽत्मानमकस्मान्मन्यत इत्यस्मिन्नर्थे दृष्टान्तमाह—

**सुप्तस्येवाबुद्धिपूर्वं विबोध[५] एवमिति ।**

**सुप्तस्येव० एवमिति** । इवशब्दो यथाशब्दार्थः । यथा सुप्तस्य सुषुप्तिमुपगतस्य "सता सौम्य[६] तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" ( छा० ६) इति श्रुत्यन्तरे ब्रह्मसंपत्तिर्हि सुषुप्तावात्मनोऽधिगता । तथा सुप्तस्य यथाऽबुद्धिपूर्वकमकस्माद्विबोधो विषयविशेषदर्शनावस्थापत्तिरेवमिहाऽऽवर्तनमस्य । इतीति स्थितिरित्यर्थः ।

---

१ ख. सूक्ष्मोऽ° । २ ग. °र्णमेवाऽऽस्त । ३ क. °स्तेनैवेहानुव° । ४ क. च्चिदा° । ५ ख. ग. विबोधा । ६ क. सोम्य ।

उक्तं निमित्तविशेषमनूद्य प्रश्नस्योत्तरमाह—

**अथ यो ह खलु वावैतस्य[1] सोंऽशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानालिङ्गः प्रजापतिर्विश्वाख्यश्चेतनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ।**

अथ यो ह खलु० वैषोऽप्यस्येतीति । अथैवं स्थिते सति यो ह खलु वाव य एवैतस्याऽऽत्मनो यथा व्याख्यातोंऽशः सोऽयं विश्वाख्य इति संबन्धः । कोऽसौ यश्चेतामात्रैश्चेतनामात्रश्चित्स्वभाव इति यावत् । प्रतिपुरुषः प्रतिबिम्ब आदर्श इव मुखमप्पात्र इव सूर्यादिरन्तःकरणादौ प्रतिफलितः । अत एव क्षेत्रज्ञः क्षेत्रं शरीरं तदहमस्मीति जानातीति क्षेत्रज्ञः । तथाचोक्तं भगवता—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" इति ॥
(गी० अ० १३)

तस्य क्षेत्रज्ञत्वे लिङ्गमाह—संकल्पेति । सामान्यत इदमिति विषयस्वरूपमात्रकल्पनं संकल्पः । अध्यवसायस्तत्र निश्चयरूपा वृत्तिः । अभिमानोऽहं ममेदमिति स्वस्वामिभावोल्लेखः । तथा च संकल्पाध्यवसायाभिमानैर्देहविषयैरस्त्यास्मिन्क्षेत्रज्ञोऽन्य इति गम्यत इत्यर्थः । एवं भूतो यः समष्टिदेहं विराडाख्यमभिमन्यते स प्रजापतिर्ब्रह्मा वैश्वानर इति चाऽऽख्यायते वेदान्तेषु । यः पुनः स एव व्यष्टिशरीरमण्डजादिचतुर्विधमभिमन्यते स विश्व इत्याख्यायते । तेनैवंविधेन चेतनेन स्वानुप्रवेशमात्रेणेदं शरीरं चेतनायुक्तमिव प्रतिष्ठापितं प्रचोदयिता वाऽप्यन्तर्यामिरूपेणैष एवास्येति[3] सर्वमुक्तमित्यर्थः । नन्वसङ्गस्याऽऽत्मनः कूटस्थस्य कथं शरीरसंबन्धनिबन्धनं क्षेत्रज्ञत्वं कथं वाऽस्य शरीरे चेतयितृत्वेन प्रेरयितृत्वेन चावस्थितिरिति विस्मयमापन्ना इव पुनः पृच्छन्ति—

**ते होचुर्भगवन्यद्यनेनेदृशेनाँनिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाचेति ॥ ५ ॥**

ते हो० वाचेतीति । व्याख्यातार्थोऽयं ग्रन्थः ॥ ५ ॥

नात्र विस्मयः कार्यो यतः स्वयमेव स्वमायाशक्तिमधिष्ठाय निर्माय चराचरं तत्रानुप्रविष्ट इति सर्वोपनिषत्सूद्घुष्यमाणत्वादित्यभिप्रेत्य सर्वशाखाप्रत्ययन्यायेन देहसृष्टिप्रकारं तावदाह—

---

१ ख. °स्य२ सोंऽ° । २ क. °श्चि° । ३ क. °ति पूर्वं° । ४ ख. °नाणिष्ठे° ।

**प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्स नारमतैकः**
**सोत्मानमभिध्यात्वा बह्वीः प्रजा असृजत**

**प्रजापति० असृजतेति** । प्रजापतिर्हिरण्यगर्भः । वैशब्दस्तस्य शाखान्तरोक्तविशेषस्मारकः । तथा हि—“ सदेव सोम्येदमग्र आसीत् ” “ तद्धेदं तर्ह्यव्याकृतमासीत् ” “ आत्मा वा इदमेक एवाग्र आसीत् ” इत्यादिश्रुतिषु जगतः प्रागवस्थां सदात्मादिशब्दनिर्दिष्टपरमात्माभेदेनाऽऽम्नाय ततो नामरूपाभ्यां भूतसूक्ष्मक्रमेण जगद्व्याकरणं श्रूयते—“ तस्माद्वा एतस्मादात्मन आकाशः संभूतः ” “ तत्तेजोऽसृजत ” “ तन्नामरूपाभ्यामेव व्याक्रियत ” इत्यादि । तथा चाऽऽकाशादिक्रमेण तन्मात्राणि भूतसूक्ष्माणि सृष्ट्वा तेभ्यश्च तदवस्थेभ्यः प्राणान्तःकरणकर्मज्ञानेन्द्रियप्रकारं लिङ्गमुत्पाद्य तदनुप्रविश्य हिरण्यगर्भसंज्ञां प्राप्य जीवरूपतामापन्नोऽनन्तरं स्वोपाधिभूतैर्भूतसूक्ष्माण्यपञ्चीकृतानि पञ्चीकृतानि संपाद्य तेभ्यो ब्रह्माण्डान्तं समष्टिव्यष्टिरूपं जगत्सृष्ट्वा तेष्वनुप्रविश्य पश्यञ्शृण्वन्मन्वानो विहरन्नचेतनं चेतयमानः सुकृतदुष्कृतकर्माऽऽचरंस्तत्फले सुखदुःखे भुञ्जानः प्रेर्यप्रेरकभावमापद्यमानः क्षेत्रज्ञः संसारी विज्ञानात्मा पुरुष इति च तत्र तत्र व्यपदिश्यते । एवं शाखान्तरोक्तविशेषं वैशब्देन स्मारयित्वा शरीरसृष्टिं प्राजापत्यां प्राह प्रजापतिर्वै सच्छब्दवाच्यादज्ञानशबलात्प्रथममुत्पन्न एकोऽसहायोऽग्रे चराचरसृष्टेः पूर्वमतिष्ठदासीत् । तथा च श्रुत्यन्तरम्—“ आत्मैवेदमग्र आसीत्पुरुषविधः ” इति । स एकोऽसहायत्वान्नारमत रमणं प्रीतिविशेषं न प्राप । सोत्मानं स प्रजापतिरात्मानं स्वमेवाभिध्यात्वाऽहं बहु स्यां प्रजायेयेत्याभिमुख्येनाऽऽलोच्य बह्वीर्नाना प्रजा देवतिर्यङ्मनुष्यलक्षणा असृजत सृष्टवान्संकल्पमात्रेणैवानेकरूपोऽभवदित्यर्थः ।

एवं सृष्टिमुक्त्वा सृष्टेषु कार्येष्वनुप्रवेशप्रसङ्गमाह—

**ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्**

**ता अश्मेव० अपश्यदिति** । एवं सृष्टास्ताः प्रजा अपश्यद्दृष्टवान् । कीदृशीः । अश्मेव पाषाणवदचेतनाः । अप्रबुद्धा बुद्धिरहिता अन्तःकरणशून्या इति यावत् । अप्राणाः प्राणवर्जिताः । अत एव स्थाणुरिव काष्ठमिव तिष्ठमाना अवतिष्ठमाना इति । एतेन संघातचेतनतावादशङ्का परिहृता ।

ततः किं कृतवानिति तदाह—

**स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विविशानि ।**

---

१ क. °तिर्वैकोऽ° । २ क. °भिः । वाश° । ३ क. तसृ° । ४ क मापत् । ५ क. °श्रेणाने° । ६ ख. °मतै° । ७ ख. °शामीति । स ।

**स नारमत० विविशामीति ।** स प्रजापतिरेवंविधाः स्वसृष्टाः प्रजा दृष्ट्वा पुनरपि नारमत नाप्रीयत तदा सोऽरमणनिवृत्त्यर्थममन्यत विचारितवान् । एतासां प्रतिबोधनाय प्रबुद्धतामापादयितुं चेतनतामापादयितुमभ्यन्तरमभितोऽन्तरं सर्वं देहमापादतलमस्तकं विविशामि विशेषेण विशामि प्रवेक्ष्यामीत्यमन्यतेत्यर्थः । अत्र ह्यात्माऽग्निरिवायःपिण्डादिसमारूढो विशेषतः परिस्फुरति नान्यत्रेति देहेषु प्रवेश उच्यते न पुनस्तक्षेव गृहं कृत्वा ततोऽन्यः संस्तत्र प्रविष्टः किंतु स्वात्मानमेव प्रसिद्धमायाविवद्बहुधा व्यू(व्यु)ह्य तत्तद्देहाद्यभेदेन विशेषतो द्रष्टृश्रोतृमन्तृविज्ञात्रादिभावेन विभाव्यत इति भावः ।

प्रवेशप्रकारमाह—

**स वायुरिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत् ।**

**स वायुः० प्राविशदिति ।** स प्रजापतिरीश्वर आत्मानं स्वरूपं वायुरिव कृत्वा वायुः प्राणः प्राणवायुमुपाधिं कुर्वंस्तद्भावमापन्नो वायुरिवेत्युच्यत इत्थमभ्यन्तरं प्राविशदित्यर्थः । तथा च श्रुत्यन्तरे—“ तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् ” इति प्राणरूपं ब्रह्मोपक्रम्याऽऽम्नायते ।

एवमपि भस्त्रेव वायुना पूर्णं न व्यचेष्टत यदा शरीरजातं तदा किं कृतवानीश्वरस्तदाह—

**स एको नाशकत्स पञ्चधाऽऽत्मानं विभज्योच्यते**

**स एकः० उच्यत इति ।** एकरूपः सन्नाशकद्देहं विचालयितुं नाशक्नोत् । स पुनरात्मानं पञ्चधा विभज्य क्रमाक्रमाभ्यां क्रियाभेदं कुर्वन्देहादिकं चालयन्नास्त इति प्राणादिशब्दैः स एवोच्यत इत्यर्थः ।

के ते प्राणादयो विभागाः किंलक्षणाः किंकर्माणश्चेत्यपेक्षायामाह—

**यः प्राणोऽपानः समान उदानो व्यान इति ।**

**यः प्राणः० व्यान इतीति ।** इत्येते पञ्च निर्दिष्टाः ।

अथैषां लक्षणं क्रियाश्च दर्शयति—

**अथायं य ऊर्ध्वमुत्क्रामत्येष वाव स प्राणोऽथ योऽयमवाङ्संक्रामत्येष वाव सोऽपानोऽथ येन वैताऽनुगृहीतेत्येष वाव स व्यानोऽथ योऽयं स्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाऽङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञा उत्तरं व्यानस्य रूपं**

---

१ क. °त त° । २ ग. °न् । किम् । ए° । ३ क. °यितुमाभ° । ४ क. सर्वदे° । ५ क. °नं सं रू° । ६ क. °स्तत्तद्वा° । ७ ग. पूर्णा । ८ ख. °थायमूर्ध्व° ।

**चैतेषामन्तरा प्रसूतिरेवोदानस्याथ योऽयं पीता-शितमुद्गिरति निगिरतीति वैष वाव स उदानः ।**

**अथायं० उदान इति** । अथैषां मध्ये योऽयं वायुरूर्ध्वमुत्क्रामति नाभेरूर्ध्वं शिरः-पर्यन्तमुच्चैः क्रामति संचरति मुखनासिकयोरुपलभ्यमान एष वाव स स एष एव प्राणः प्राणसंज्ञो वायुभेद इत्यर्थः । एवंविधक्रियावत्त्वमेवास्य लक्षणमुक्तं वेदितव्यम् । एवमुत्तरत्रापि योजना । अथ योऽयं वायुविशेषोऽवाङ्नाभेरधः पायुपर्यन्तं संक्रामति संचरत्येष वाव सोऽपान इति पूर्ववद्योजना । उद्देशक्रमं परित्यज्य[१] मध्ये व्यानं लक्षयति तस्य प्राणापानसंधित्वेन तयोरन्तरा नियतत्वात् । तथा च श्रुत्यन्तरम्—"अथ यः प्राणापानयोः संधिः स व्यानः" इति । चरमतोऽस्योद्देशस्तु सर्वशरीरचेष्टादिहेतुत्वेन सर्वप्राणव्यापकत्वादिति द्रष्टव्यम् । अथ येन वायुविशेषेणैतौ प्राणापानावनुगृहीताऽनुगृहीतावित्येवं वर्तमान एष वाव स व्यानसंज्ञः । "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" इत्यादिश्रुत्यन्तरप्रसिद्धिमादायाशितस्य[२] जाठराग्निपक्वस्य स्थूलसूक्ष्मविभागविनियोजनकर्ता समान इति व्युत्पादयति । अथ योऽयं प्रसिद्धो वायुविशेषोऽन्नस्य भुक्तस्य स्थविष्ठः स्थूलतमो धातुरसारभागः पुरीषाख्यो योऽस्ति तमपाने प्रापयत्यपानवायुसंचारस्थानं गमयति । तथाऽन्नस्य यो वाऽस्त्यणिष्ठोऽणुतरो मध्यमश्चेति भागद्वयमेकीकृत्योच्यते । तं च देहमनःस्थितिहेतुमङ्गेऽङ्गे प्रत्यङ्गं शरीरस्य समानयति सम्यगा समन्तान्नयति प्रापयत्येष वाव स समानसंज्ञा[३] समानसंज्ञ इत्यर्थः । समानव्यानयोर्मध्य उदानस्योद्देशे कारणं सूचयन्नुदानस्याभिव्यक्तिस्थानमाह—**उत्तरमिति** । एतेषां प्राणापानसमानानामुक्तेषां सम्यग्व्यापारानन्तरं व्यानस्य रूपं च व्यानव्यापारं चान्तरा मध्ये प्रसूतिः प्रसवोऽभिव्यक्तिरेवोदानस्य । अन्तरैवेत्येवकारो भिन्नक्रमः । उक्त एव[४] चान्वयः । अयमर्थः—प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां धम्यमानो[५] हि जाठरोऽग्निरन्नं भुक्तं पचति तत्पाकनिर्वृत्तं च समानो विभज्य समं नयति । एवमशितपीतयोः समं नीतयोः सतोः क्षुदुत्पद्यते पिपासा च तदोदान उद्भूतवृत्तिरास्यगतं यत्किंचिन्निगिरति पित्तोद्रेकवशाद्वोद्गिरति हृदयादिगतं कफादिकं ततो देहे बलपुष्ट्याधानं व्यानवायोः कृतं भवति । एवमुक्तप्रकारेण पूर्वेषां चतुर्णां वायुव्यापाराणां यथावदनिर्वृत्तौ[६] व्यानस्य[७] संचारसौष्ठवाभावाद्देहे बलपुष्ट्यादयो न जायन्त इत्येतदनुभवसिद्धं शास्त्रसिद्धं चातो युक्तोऽयं क्रमनिर्देश इति । अथ योऽयं पीताशितं पीतं चाशितं च पीताशितं तदुद्गिरत्यूर्ध्वं निःसारयति निगिरति वा नीचैर्गिरति तिरो दधातीति वैष वाव स उदान इति पूर्ववत् ।

१ क. °ज्य व्या° । २ °स्य जठ° । ३ क. °संज्ञ । ४ क. एवान्व° । ५ क. मध्यमानो । ६ °निवृत्तौ । ७ क. °नसं° ।

एवमात्मनः प्राणोपाधिकस्य शरीरप्रवेशमुक्त्वा तद्व्यापारेण व्याप्रियमाणः शरीरं नियमयतीत्युक्तमिदानीं जाठराग्न्युपाधिकस्य शरीरे चेतयितृत्वं दर्शयितुं तदभिव्यक्तिं तावदाह—

**अथोपांशुरन्तर्याममभिभवत्यन्तर्याम उपांशुं चैतयोरन्तरा देवौ-ष्ण्यं प्रासुवद्यदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरः ।**

**अथोपांशुः०** वैश्वानर इति । अथैतदुच्यत इति, अथशब्दोऽर्थान्तरोपक्रमार्थः । अस्ति कर्मकाण्ड उपांशुग्रहोऽन्तर्यामग्रहश्चेति द्वौ ग्रहौ परस्परोपकार्योपकारकभावेन संसृष्टावित्याम्नातम् । यतः श्रूयते—"प्राणापानौ वा उपांश्वन्तर्यामौ व्यान उपांशुसवनो यदेते पात्रे एतं ग्रावाणमातृतीयसवनान्न जहीतः" इति । तथाऽन्यत्रापि—"अग्निर्देवता गायत्री छन्द उपांशोः पात्रमसि, सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसि" इति मन्त्रयोरनयोरग्नीषोमदेवत्यताऽधिगम्यते । तौ च प्राणापानात्मकत्वेनाध्यात्मशास्त्रे प्रसिद्धौ । अत इहोपांश्वन्तर्यामशब्दाभ्यां प्राणापानौ गृह्येते । तथा चायमर्थः—यथोपांशुग्रहोऽन्तर्याममभिलक्ष्य भवत्यन्तर्यामग्रहश्चोपांशुं तयोश्चान्तरा सोमः सूयते तथाऽत्रापि शरीरे प्राणोऽपानमभिभवत्यपानश्च प्राणमित्यन्योन्याभिकाङ्क्षया प्रवर्तमानयोरुपांश्वन्तर्यामोपमितयोश्चैतयोः प्राणापानयोरन्तराऽन्तराले देवो द्योतनस्वभावश्चैतन्यात्मौष्ण्यमुष्णस्वभावमात्मानं प्रासुवत्प्रसूतवानुष्णरूपेणाभिव्यक्त इत्यर्थः । देवौष्ण्यमिति संधिश्छान्दसः । यद्वैतयोरन्तरं मध्यं मूलाधारदेशस्तस्मात्प्राणापानाभ्यां पार्श्वगताभ्यां धम्यमानादेव न स्थानान्तरादिति यावत् । औष्ण्यं प्रासुवदिति पूर्ववत् । यदिदमौष्ण्यं स पुरुषो जीवो देहस्याग्निरूपेण धारयिता । ऊष्मरूपात्मावस्थाने हि जीवतीति प्रसिद्धिस्तदपगमे च मरणप्रसिद्धिः । तथा च श्रुत्यन्तरम्—"उष्णो जीविष्यञ्शीतो मरिष्यन्" इति । अथैवं सति यः पुरुष आत्मा सोऽग्निरग्रं नयतीत्यग्रणीरग्निरुच्यते । अयं हि सर्वधातुजातं पचन्नग्रं नयत्यतोऽग्निर्वैश्वानर इति । चायमुच्यते । विश्वं सर्वं नरशब्दोपलक्षितं देहादिकं नयत्युत्तम्भयतीति विश्वानरो विश्वानर एव वैश्वानर इति ।

एतदेव पुरुषाग्न्योरेकत्वमिहोक्तं सिद्धवत्कृत्य शाखान्तरे जाठरस्याग्नेरुपासनमुक्तं तदिह प्रसङ्गादुपदिशति—

**अन्यत्राप्युक्तमयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति**

---

१ क. °पांश्वन्त° । २ क. °पांशु चै° । ३ ख. °षो यः । ४ क. एवं । ५ क. °वताऽधि° । ६ क. °स्त्रेषु प्र° । ७ ख °रोऽय° ।

**अन्यत्रा० शृणोतीति** । अन्यत्र बृहदारण्यकेऽपीत्यर्थः । अयमग्निर्वैश्वानरः पुरुषाख्यो योऽयं प्रसिद्धोऽन्तःपुरुषे पुरुषः शरीरं शरीरमध्ये । तत्सद्भावे कार्यलिङ्गकं प्रमाणमाह—येन पुरुषान्तःस्थेनेदं वक्ष्यमाणमन्नं पच्यते पानस्याप्युपलक्षणमेतत् । किं तदन्नं तदाह—यदिदमद्यतेऽविशेषेण सर्वैः प्राणिभिर्यदिदमोदनाद्यद्यते यद्वा पीयते तदन्नं पानं चेदं येन पच्यते परिपाकं नीयतेऽयमग्निर्वैश्वानर इत्यन्वयः । तत्सद्भावेऽनुमानमुक्त्वा प्रत्यक्षमप्याह—**तस्येति** । तस्याग्नेरेष प्रसिद्धो घोषः शब्दो भवति । कोऽसौ । यं घोषम् । एतदिति क्रियाविशेषणमेवं श्रवणं यथा स्यात्तथेत्येतत् । कर्णावपिधायाऽऽच्छाद्य शृणोति सर्वो लोकः । एवमेष घोषोपलम्भो जाठराग्नौ प्रत्यक्षमित्यर्थः । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति ( छान्दो० अ० ३ ख० १३ ) इति छान्दोग्ये तस्याग्नेरेवैतच्छ्रवणमिति **भाष्यकारैर्व्याख्यातत्वात्** । जाठराग्नेर्वैश्वानरात्मनो घोषरूपेण श्रवणनिर्देशप्रसङ्गेनेदमपरमुच्यते[1] पुरुषाणां पारलौकिकहितसाधनप्रवृत्तौ सावधानत्वाय । स पुरुषो घोषश्रवणवान्यदा यस्मिन्काल उत्क्रमिष्यन्भरिष्यन्भवति तदैनं घोषं न शृणोति । तदश्रवण आसन्नमरणतां ज्ञात्वा यत्करणीयं मन्येत तत्कुर्यादित्यभिप्रायः ।

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुवर्तयितुमुक्तार्थमनुवदति—

**स वा एष पञ्चधाऽऽत्मानं विभज्य निहितो गुहायाम् ।**

**स वा० गुहायामिति** । स वा एष यो वैश्वानरः पुरुष इति चोक्तः प्राणाद्यात्मना पञ्चधाऽऽत्मानं विभज्य गुहायां गूहति संवृणोति ज्ञानानन्दाद्यतिशयमिति गुहा बुद्धिस्तस्यां निहितः स्वयमेव स्वात्मना निषक्त इत्यर्थः । विशेषव्यवहारायान्तःकरणोपाधिं प्राप्त इति तात्पर्यार्थः ।

तदेवमौष्ण्येन स्वरूपेण प्राणान्तःकरणभावमापन्नो विज्ञानात्मा यां यामवस्थामनुभवति तां तां क्रमेण वक्तुमारभमाणो बुद्धितत्स्थाभासाविवेकात्[2]प्राधान्यव्यपदेशभेदांस्तावदाह—

**मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मेति ।**

**मनोमयः० आकाशात्मेतीति** । मनोमयो मनःप्रायो मनोवृत्तिभेदेष्वशेषेषु विशेषत उपलभ्यमानत्वात् । प्राणः शरीरमस्येति प्राणशरीरः प्राणभेदैरेव व्याप्रियमाणत्वात् । अन्यथा चिन्मात्रस्य कूटस्थस्य स्वतो विशे[3]षभानव्यापारयोरनुपपत्तेः । भाश्चित्प्रकाशो रूपं स्वरूपमस्येति भारूपः । सत्याः संकल्पा अवश्यंभाविनः पूर्वकृतज्ञानकर्मसंस्कारभाविताः संकल्पा अस्येति सत्यसंकल्पः । आकाशवदसङ्गोऽग्राह्य आत्मा स्वरू-

१ क. °निदर्शनप्र° । २ क. °वेकेन प्राप्ता° । ३ ग. °षमान° ।

पमस्येत्याकाशात्मा । एवमुपाधिधर्मैः स्वधर्मैश्चाविविक्त आत्मा जीवभावमुपगत इत्यर्थः । तच्चोक्तं श्वेताश्वतरोपनिषदि—" बुद्धेर्गुणेनाऽऽत्मगुणेन चैव आराग्रमात्रोऽप्यवरोऽपि दृष्टः " इति ।

य एवमविद्याकृतोपाधिमात्मत्वेनोपगतो विस्मृतपरमानन्दनिजस्वभावः सोऽकृतकृत्यमात्मानं मेन इति तद्वृत्तान्तमाह—

**स वा एषोऽस्माद्धृदन्तरादकृतार्थोऽमन्यतार्थानश्नानीति ।**

**स वा० अश्नानीतीति** । स वा एष पूर्वोक्तोऽकृतार्थोऽकृतप्रयोजनः सन्नस्मादेतच्छरीरगताद्धृदन्तराद्धृदयस्थानस्थादन्तःकरणाद्धेतुभूतादर्थान्विषयानश्नानि भुञ्जे व्याप्नवानीति वाऽमन्यत संकल्पितवानित्यर्थः ।

ततः किं वृत्तं तदाह—

**अतः खानीमानि भित्त्वोदितः पञ्चभी रश्मिभिर्विषयानत्ति ।**

**अतः० विषयानत्तीति** । यत एवमत इमानि शीर्षण्यानि खानि छिद्राणि चर्म भित्त्वा विदार्योदित उद्गतो गवाक्षेभ्य इवाऽऽलोकः प्राणान्तःकरणोपाधिः सन्वक्ष्यमाणैः पञ्चभी रश्मिभिर्विषयाञ्शब्दस्पर्शादीनत्ति भुङ्क्ते व्याप्नोतीत्यर्थः ।

इदानीमस्य लोकसिद्धं विषयानुभवप्रकारमनुवदञ्शरीरादे रथादिकल्पनां विदधानोऽस्य विषयमोक्षप्राप्तिमार्गयोः स्वातन्त्र्यं दर्शयति—

**इति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोऽस्य प्रतोदोऽनेन खल्वीरितः परिभ्रमतीदं शरीरं चक्रमिव मृत्पचेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ॥ ६ ॥**

**इति बुद्धी० वैषोऽप्यस्येतीति** । इत्येवं विषयान्भुञ्जानस्य यानीमानि प्रसिद्धानि बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि तान्यस्य रथिनो हयरश्मयः प्रग्रहाः । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यान्यस्य हया रथवाहाः । शरीरमिदं स्थूलमेव रथः । मनः संकल्पाद्यात्मकं नियन्ता नितरां यन्ता सारथिरित्यर्थः । प्रकृतिः स्वभावः कर्मज्ञानवासना तन्मयस्तद्रूपोऽस्य प्रतोदः कशादिर्वाहननोदनसाधनम् । कथमयं प्रतोद इति तदुपपादयति । **अनेनेति** । अनेन प्रकृतिमयेन खलु निश्चितमीरितः प्रेरितः परिभ्रमति । किमिदं शरीरं रथः । तत्र दृष्टान्तमाह । **चक्रमिवेति** । मृत्पचः कुलालस्तेनेरितं चक्रमिवेत्यर्थः । इदं शरीरमित्याद्युक्तार्थम् ॥ ६ ॥

---

१ क. °मुक्तोप° । २ क. °त्रो ह्यप° । ३ क. °वः कृत° । ४ ख. एष्षोऽ° । ५ क. भित्त्वोदि° । ६ ख. °रितं प° । ७ ग. मृत्यवेने° । ८ क. °स्थान्य° । ९ ग. मृत्यवः कु° ।

यदिदं स्वसृष्टदेहाद्यनुप्रवेशेनास्य संसारित्वमुक्तं तन्नायं स्वतः संसारधर्मवान्किंतूपाधिवशात्तथा भाति, तत उपाधेर्विविच्य तत्स्वरूपमन्वेषणीयमात्मनः संसारित्वभ्रमनिवृत्तय इति दर्शयितुमुक्तं हेयस्वरूपानवगमे तद्धानासंभवादित्यभिप्रेत्यायमेवाऽऽत्मा मुञ्जादिषीकावद्देहादिसंघाताद्विविच्यावधारणीय इत्याह—

**स वा एष आत्मेहोशन्ति कवयः**

**स वा एषेति**। यमित्यध्याहारः। यमुशन्ति कमनीयतया जानन्ति कवयो मेधाविनः परमप्रेमास्पदतया प्रत्यग्रूपेण जानन्ति स वै स एवैष आत्मा न तु संसार्येवेत्यर्थः।

ननु संसारिताया अस्योक्तत्वात्कथं न संसारीति तत्राऽऽह—

**सितासितैः कर्मफलैरनभिभूत इव प्रतिशरीरेषु चरति**

**सितासितैरिति**। सितशब्देनोज्ज्वलवाचिना स्पृहणीयतोच्यते। असितशब्देन मलिनवाचिना प्रतिकूलवेदनीयतोच्यते। तथा च सितासितैः सुखदुःखैः कर्मफलैरनभिभूतोऽसंस्पृष्टः। इवशब्दोऽवधारणार्थः। प्रतिशब्दो व्यवहितक्रियया संबध्यते कर्मफलैरनभिभूत एव शरीरेषु प्रतिचरतीत्यन्वयः। प्रतिशरीरेषु शरीरेषु शरीरेष्विति वा। यद्वा प्रति प्रातिलोम्येनाविषयत्वेन शरीरेषु चरतीत्यर्थः। अतो नायं स्वरूपतः संसारी किंत्वलक्तकादिसंनिहितो लोहितात्मनेव स्फटिकः संघातोपाधिसंनिहितः संसार्यात्मना भासत इति भावः।

**अव्यक्तत्वात्सौक्ष्म्याददृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽसति कर्ताऽकर्तैवावस्थः**

उक्तेऽर्थे हेतुमाह—**अव्यक्तत्वादित्यादिना**। व्यक्तं विषयरूपं दृश्यं देहाद्यज्ञानपर्यन्तं तद्विपरीतत्वमव्यक्तत्वं तस्मात्। न हि संसार्यव्यक्तो भवति व्यक्तविकारानुबन्धित्वात्तस्य। अतोऽव्यक्तत्वान्न संसारीत्यर्थः। कुतोऽव्यक्तत्वं चिदात्मनोऽहमिति व्यक्ततयोपलभ्यमानत्वादित्यत आह—**सौक्ष्म्यादिति**। अनाधेयातिशयत्वं सौक्ष्म्यमुच्यते, न हि चैतन्यस्वरूपेऽमूर्तेऽनवयवे कश्चिदतिशय आधीयेत आकाश इव कारकैः। यत्र पुनः कारकव्यापारापन्नोऽतिशयस्तद्व्यक्तमिति प्रसिद्धं यथा घटादि निष्पाद्यं प्रकाश्यं चेति तस्मादस्य तद्वैलक्षण्यात्सौक्ष्म्यादव्यक्तत्वमिति भावः। तदेवोक्तलक्षणं सौक्ष्म्यं साधयति—**अदृश्यत्वादग्राह्यत्वाच्चेति** ज्ञानकर्मेन्द्रियाविषयत्वादित्यर्थः। चतुर्विधक्रियाफलविलक्षणत्वादिति भावः। हेत्वन्तरमाह—**निर्ममत्वाच्चेति**। चकारान्निरहंकारत्वमपि समुच्चीयते। यत्राहंता भवति तत्संसृष्टे ममता भवति, अस्य तु सुखाद्युपलब्ध्यायतने शरीरेऽनुगतस्यापि तत्राहंकारममत्वयोरभावान्न संसारितेत्यर्थः।

---

क ॰न तस्य। क. इतीदमु॰। ३ क. ॰रितयाऽस्यो॰। ४ ग. ॰लत्वभावि॰। ५ ग. सर्वेषु। ६ क. ॰द्रा प्रा॰। ७ क ॰मकारयो॰।

नन्ववस्थात्रयसंबन्धिनः कथमहंकारममकारयोरभावस्तत्राऽऽह—**अनवस्थ इति** । अवस्थात्रयरहितोऽवस्थासाक्षित्वात् । न हि दृश्यधर्मो द्रष्टर्युपरज्यत इत्यर्थः । अथवा ननु शरीरेषु चरतः कथं तत्राहंममताभाव इति तत्राऽऽह—**अनवस्थ इति** । न विद्यतेऽवस्थाऽवस्थानं यस्य सोऽनवस्थः । निरवयवस्यामूर्तादिलक्षणस्याव्यावृत्ताननुगतस्य न क्वाप्यवस्थितिरुपपद्यत इति भावः । ननु धर्माधर्माभ्यां शरीरादिकर्तुः कथमित्थमसंसारित्वं वर्ण्यत इत्यत आह—**असतीति** । अव्याकृतशब्दितमज्ञानमसदित्युच्यते । अकर्तैवासत्यवस्थोऽवस्थितः कर्तेत्यन्वयः । वस्तुतोऽकर्तैव सन्नज्ञानावेशात्कर्तेवावभासत इत्यर्थः ।

एवमध्यारोपापवादाभ्यां विचार्य निर्णीतमात्मनः स्वरूपं व्यपदिशति—

**स वा एष शुद्धः स्थिरोऽचलश्चालेप्योऽ-**
**व्यग्रो निस्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च ।**

**स वा इत्यादिना** । सवितरि दिवान्धपरिकल्पितान्धकारवदज्ञानस्यापि वस्तुत्वाभावादयमात्मा शुद्धो मिथ्याज्ञानाद्यशुद्धिसंसर्गरहितः सर्वस्याऽऽगमापायसाक्षित्वात्स्थिर आगमापायशून्यो व्यापकत्वादचलः स्वतः क्रियाशून्यः । चकारादनन्यप्रेर्योऽपीत्यर्थः । अत एवालेप्यो धर्माधर्मतत्फललेपानर्हः । न ह्यक्रियोऽकर्ता कर्मतत्फलभाग्भवतीत्यर्थः । अव्यग्रोऽसंभ्रमो यतो निस्पृहः परिपूर्णपरमानन्दरूपत्वात् । स्पृहणीयाभावात्स्पृहाभावे सत्यव्यग्र इत्यर्थः । अत एव प्रेक्षकवदुदासीन इवावस्थितः । कुत्रावस्थित इति तदाह । स्वस्थः स्वे स्वरूपेऽवस्थितो नान्याधार इत्यर्थः । "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्" ( छान्दो० अ० ७ ) इति श्रुत्यन्तरात् । चकारः सर्वविशेषणसमुच्चयार्थः ।

उपसंहरति—

**ऋतभुग्गुणमयेन पटेनाऽऽत्मानमन्तर्धा-**
**यावस्थितो इत्यवस्थिता इति ॥ ७ ॥**

**इति मैत्र्युपानिषदि द्वितीयः प्रपाठकः ॥ २ ॥**

**ऋतभुगिति** । एवंविध एवाऽऽत्मा गुणमयेन पटेन त्रिगुणाविद्यामयेनाऽऽवरणेनाऽऽत्मानं नित्यशुद्धत्वादिरूपमन्तर्धायर्तभुगवस्थित इत्यन्वयः । कर्मफलभोक्ता संसारीव भासमानो वर्तत इत्यर्थः । इतिशब्दः प्रतिवचनसमाप्तिद्योतनार्थः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ७ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां
द्वितीयः प्रपाठकः ॥ २ ॥

---

१ द्रष्टारमुप° । २ क. 'स्थितं इ° । ३ ख. मैत्रायणीयोप° । ४ क. नाऽऽत्मा° ।

अथ तृतीयः प्रपाठकः ।

नित्यशुद्ध एवाऽऽत्मा त्रिगुणोपाधिप्रविष्ट ऋतभुक्संसारीत्युक्तमुपश्रुत्यैतदसंभावयन्तो वालखिल्याः पप्रच्छुरित्याह—

**ते होचुर्भगवन्यद्येवमस्याऽऽत्मनो**
**महि[1]मानं सूचयसीत्यन्यो वा परः ।**

**ते होचुः० पर इति** । ते वालखिल्या ह किल ऊचुः[2] । किम् । हे भगवन्यद्येवमस्याऽऽत्मनो महिमानं त्वं सूचयसि नित्यशुद्ध इत्यादिकं तर्ह्येवंविधस्यर्तभुक्त्वासंभवादन्यो वाऽस्मात्परो विलक्षणः । वाशब्दः संभावनायाम् ।

तमेव प्रश्नपूर्वकं विशदयति—

**कोऽयमात्माख्यो योऽयं[3] सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता[4] इत्यवाञ्च्[5]योर्ध्वा वा गतिर्द्वं[6]द्वैरभिभूयमानः परिभ्रमति[7] ॥ १ ॥**

**कोऽयमात्माख्य इति** । जीवाख्य इत्यर्थः । योऽयं प्रसिद्धो[8]ऽहमस्मीति सितादिकर्मफलैरभिभूयमानो लिप्यमानः सद्योनिर्ब्राह्मणादियोनिरसद्योनिः श्वशूकरादियोनिस्तामापद्यत आत्मत्वेनाभिपद्यत इत्येवंप्रकारेणावाञ्च्याऽवा[9]च्यूर्ध्वा वा तत्तज्जन्मकर्मानुरूपा गतिः फलप्राप्तिर्यतोऽतो द्वंद्वैः शीतोष्णमाना[10]पमानसुखदुःखादिभिरभिभूयमानः परिभ्रमतीति प्रसिद्धं शास्त्रानुभवसारिणामित्यर्थः । अत एकस्य विरुद्धधर्मसंसर्गविरोधादन्यो वा कस्मात्संसार्यात्मा न भवेदिति मन्यामह इत्यभिप्रायः ॥ १ ॥

यद्येकस्य विरुद्धधर्मसंसर्गविरोधादृतभुगन्यः स्यादिति मन्यध्वे तर्ह्यस्त्यन्य ऋतभुक्संसारी यो द्वंद्वैरभिभूयत इति तावद्गृह्णीतेत्युत्तरमाह प्रजापतिः—

**अस्ति खल्वन्योऽपरो भूतात्माख्यो यो[11]ऽयं सितासितैः**
**कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाञ्च्योर्ध्वा**
**वा गति[12]र्द्वंद्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानम् ।**

**अस्ति० उपव्याख्यानमिति** । योऽयं सितासितैरित्यादिपरिभ्रमतीत्यन्तेनोक्तः स नित्यशुद्धत्वादिलक्षणादात्मनोऽपरोऽन्योऽस्ति कोऽसौ भूतात्मा भूताभेदेनोपलभ्यमान इत्यर्थः । कोऽयं भूतात्मेति तत्राऽऽह—तस्योपव्याख्यानम् । तस्य भूतात्मनः स्पष्टव्याख्या[13]नं प्रपञ्चनं शृणुतेति शेषः ।

---

१ ख. मानश्सू° । २ क. °श्चुः । हे । ३ ख. °यश्सि° । ४ ख. °तामित्य° । ५ क. °वाच्योर्ध्वा । ६ ख. गतीर्द्वं° । ७ ख. °ति कतम एष इति तान्होवाचेति । १ । अ° । ८ क. द्धोऽयमह° । ९ क. °वाच्याऽवा° । १० क. °नात्रमा° । ११ ख. योऽयश्सि° । १२ ख. गतीर्द्वं° । १३ क. °नं शृ° ।

**पञ्चतन्मात्रा भूतशब्देनोच्यन्तेऽथ पञ्चमहाभूतानि भूतशब्देनोच्यन्तेऽथ तेषां यत्समुदयं तच्छरीरमित्युक्तमथ यो ह खलु वाव शरीर इत्युक्तं स भूतात्मेत्युक्तम् ।**

**पञ्चतन्मात्रा० भूतात्मेत्युक्तमिति ।** शब्दस्पर्शरूपरसगन्धाः सूक्ष्माः पञ्चतन्मात्राख्या अव्याकृताख्यादविद्याशबलितादात्मनः सकाशात्क्रमेण जाता भूतशब्देनापञ्चीकृतपञ्चमहाभूतशब्देनोच्यन्ते वेदान्तेषु । अथानन्तरमेतान्येव परस्परानुप्रवेशेन पञ्चीकृतानि गुणगुणिभावेन परिणम्य स्थितानि पञ्चमहाभूतानि भूतशब्देनोच्यन्त इत्यर्थः । अथैवं सति तेषामुभयविधभूतानां यत्समुदयं यः समुदायः परिणामविशेषस्तच्छरीरमित्युक्तं वेदान्तेष्विति योज्यम् । प्राणेन्द्रियान्तःकरणसहितसूक्ष्मभूतसमुदायो लिङ्गशरीरं पञ्चीकृतपञ्चमहाभूतसमुदायः स्थूलं शरीरमित्युक्तमिति विभागः । एवं भूतशब्दार्थं सकार्यमुक्त्वाऽऽत्मशब्दार्थमाह—**अथेति ।** अथैवं संपन्ने शरीरद्वयात्मना भूतजाते तस्मिञ्शरीरे यो ह खलु वाव य एव ह स्फुटं खलु निश्चये वावाहं ममेति रथित्वेन व्यवहर्तेत्युक्तं पूर्वं स भूतात्मेत्युक्तं वेदान्तेष्वित्यर्थः । तथाच वेदान्ताः—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना सृष्टिमुक्त्वा "तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् " ( तैत्ति० उ० ) इत्यादिकाः । तथा "तत्तेजोऽसृजत " इत्यादिना भूतसूक्ष्मसृष्टिं प्रक्रम्य " सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि " ( छान्दो० अ० ६ ) इति । तथा " आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" इत्युपक्रम्य शेषे "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" ( ऐत० उ० ) इति । एवं तत्र तत्र "स एष इह प्रविष्ट आ नखाग्रेभ्यः" इत्यादिश्रुतयः सन्ति शतशः । इहापि पुरस्तादेतदुक्तम् "प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् " इत्यारभ्य "स वायुरिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत्" इति । एतदेव पुनः स्पष्टी करिष्यते । तथाच चिदात्मैव भूतसंघातमनुप्रविष्टो भूताभेदेन गृह्यमाण उपाधिप्रधानत्वाद्भूतात्मेति चिदात्मनो भेदेन व्यपदिश्यते चिदात्मा चोपाधिभ्यो विविच्य वेदान्तेष्वात्मा ब्रह्म चिन्मात्रं प्रज्ञानघन इत्यादिशब्दैर्भूतात्मनो भेदेन व्यपदिश्यते तदेवमस्त्यस्यैवाऽऽत्मन औपाधिको भेद इति संसार्यसंसारिभेदव्यवहारोऽनाद्यविद्यानिबन्धन उपपद्यत इति प्रकरणार्थः ।

इदानीं चिदात्मन एव भूतात्मत्वं चिदात्मस्वभावानुपमर्देनेति व्युत्पादयति—

---

१ ख. °त्युक्तश्स° । २ क. °ख्यावि° । ३ क. °त्मभू° । ४ क. °वहृतमित्यु° । ५ क. त्याद्या "स ।

**अथामृतोऽस्याऽऽत्मा बिन्दुरिव पुष्करे**
**इति स वा एषोऽभिभूतः प्राकृतैर्गुणैरिति ।**

**अथामृतोऽस्याऽऽत्मा० गुणैरितीति** । अथैवमप्यस्य भूतात्मनोऽप्यमृतोऽविकारः कूटस्थ आत्मा स्वरूपं पुष्करे पद्मपत्रे बिन्दुरिव नीरबिन्दुरिव तत्संश्लेषरहितोऽपि स वा एष आत्मा प्राकृतैर्गुणैः प्रकृतिविकारैः साभासमायाविकाररूपैर्देहद्वयलक्षणैरभिमानगृहीतैरभिभूतस्तिरस्कृतस्वभावावभासै इत्यर्थः ।

**अथोऽभिभूतत्वात्संमूढत्वं प्रयातः संमूढत्वात् ।**

यत एवम्—**अथोऽभि० संमूढत्वादिति** । अथो अतः कारणात् । संधिश्छान्दसः । तदेवाऽऽह—अभिभूतत्वात्प्राकृतैर्गुणैरेकीभूतत्वात्संमूढत्वमत्यन्ताविवेकित्वं प्रयातः प्राप्तवान् । तत्रेदं लिङ्गमुच्यते । संमूढत्वादेव हेतोर्भगवन्तं नापश्यदिति संबन्धः । न पश्यतीत्येतत् । स्वतःसिद्धालुप्तज्ञानैश्वर्यादिशक्तिसंपन्नतयोपलक्षितचिदात्मा भगवांस्तं न पश्यतीति संमूढत्वमस्यावगम्यत इत्यर्थः ।

तस्य दूरस्थत्वाददर्शनं नास्य संमूढत्वादिति शङ्कां वारयति—

**आत्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयाता इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानम् ।**

**आत्मस्थमिति** । स्वात्मनि सत्तास्फूर्तिरूपेण स्थितमित्यर्थः । कथमयं स्वात्मस्थं इत्यत आह—**प्रभुमिति** । प्रकर्षेण भवत्यस्मादिति प्रभुर्भूतात्मन उपादानमधिष्ठानं चेत्यर्थः । अत एव कारयितारं नियन्तारं कारणाधीनं हि कार्यमिति न्यायात्कारणत्वादेव नियन्तेत्यर्थः । तथा च श्रुत्यन्तरम् " एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते " ( कौषी० अ० ३ ) इति । किंच गुणौघैः प्राकृतिकैर्देहेन्द्रियविषयलक्षणैरुह्यमान इतस्ततश्चाल्यमानः कलुषीकृतश्च नानावासनाकषायरञ्जितश्चेत्यर्थः । अत एव वासनाभिः प्रेर्यमाणतयाऽस्थिरः कथंचिदुत्पद्यमानेऽपि विवेकविज्ञाने स्थैर्यहीनः । अतश्चञ्चलः शुभविषयैकप्रवृत्तिनिष्ठारहित इत्यर्थः । किंच लुप्यमानश्चाञ्चल्यवशाद्विवेकज्ञानधर्मसंचयैर्लुप्यमानोऽत एव सस्पृहोऽप्राप्तेऽशक्यसंपाद्येऽपि स्पृहावानत एव व्यग्रो हीनः सुखभोगेक्षणमलभमानश्चेति यावत् । सर्वस्यापि विशेषणजातस्य मूलमिदमुच्यते—अभिमानित्वं प्रयात इति । इति शब्द इत्थमर्थे । कथमित्येतदाह—**अहमिति** । अहं मनुष्यः कर्ता

१ ग. °त्माऽब्बिन्दु । २ क. °ष्कर इ° । ३ ग. °त्रेऽब्बिन्दुरिव नी° । ४ क. °पभेदद्व° । ५ क. °भावोऽव । ६ क. °सत इ° । ७ ख. °त्यह९ सो । ८ क. °मस्य स्वा° । ९ क. °स्थत्वमित्य । १० क. °नादिभिः । ११ क. दीनः । १२ क. सुखं मो° । १३ क. °गत्यलक्ष° ।

भोक्ता । स उ इति च्छेदः । उशब्दोऽप्यर्थे । सोऽपि परोऽप्यस्ति मादृशो मम मित्रं शत्रुरुदासीनो वा । इदमिति देहबाह्यं परिकल्प्य तच्च ममेति शोभनाध्यासपुरःसरमात्मीयतयाऽभिमन्यतेऽर्थादशोभनाध्यासान्न ममेति च । एवं मन्यमानोऽभिमन्यमान अत्मना स्वेनैवाऽऽत्मानं निबध्नाति ।

बन्धनमात्रे दृष्टान्तमाह—

**जालेनेव खचरः कृतस्यानु फलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाश्वचोर्ध्वा वा गतिर्द्वंद्वैरभिभूयमानः परिभ्रमति**

**जालेनेव खचर इति** । पक्षीवेत्यर्थः । अथवा खचरः कोशकारो वृक्षकोटराकाशे चरणात् । स यथाऽऽत्मनैव कोशं कृत्वा तेनाऽऽत्मानं निबध्नाति तद्वदित्यर्थः । एवं कुर्वन्कृतस्य कर्मणः शुभाशुभलक्षणस्यानु पश्चादवश्यंभाविफलैः सुखदुःखैरभिभूयमानः परवशीक्रियमाणः पुनः सदसद्योनिमापद्यत इत्यादि व्याख्यातम् ।

पुनरप्यस्य विशेषजिज्ञासया पृच्छन्ति—

**कतम एष इति तान्होवाचेति ॥ २ ॥**

**कमत एष इति** । उत्तरमुत्थापयति—**तान्होवाचेति** ॥ २ ॥

भूतात्मनश्चिदात्मनश्च वस्तुतो यद्यभेदस्तर्हि कथं भूतात्मनि संसरति तदभिन्नश्चिदात्मा न संसारी भवेदिति पृष्टो दृष्टान्तेन व्यवस्थामुपपादयिष्यन्नुक्तावात्मानौ परामृशति—

**अथान्यत्राप्युक्तं यः कर्ता सोऽयं वै भूतात्मा करणैः कारयिताऽन्तःपुरुषः ।**

**अथान्यत्राप्युक्तं० पुरुष इति** । अथैवमेवान्यत्रापि शाखान्तरेऽप्युक्तं किं यः कर्ताऽस्मिञ्शरीरे सोऽयं वै भूतात्मा यस्तु करणैः संनिधिसत्तामात्रेण स्वप्रेरितैः करणैः कारयिता सोऽन्तःपुरुषश्चिदात्मेति, एतदन्यत्राप्युक्तमित्यर्थः ।

अन्तःपुरुषव्याप्तस्य भूतात्मनो नानात्वापत्तिं सदृष्टान्तामाहान्तरपुरुषस्य स्वतोभेदशङ्काव्यावृत्तये—

**अथ यथाऽग्निनाऽयस्पिण्डोऽन्यो वाऽभिभूतः कर्तृभिर्हन्यमानो नानात्वमुपैत्येवं वाव खल्वसौ भूतात्माऽन्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति ।**

**अथ यथा० उपैतीति** । अथेदमुच्यते यथाऽग्निना प्रसिद्धेनाभिभूतो व्याप्तोऽयःपिण्डोऽन्यो वा काष्ठादिपिण्डः संतप्तः कर्तृभिर्लोहकारादिभिर्हन्यमानस्ताड्यमानो नानात्वं

---

१ ख. °गतीर्द्वं° । २ ख. मतीति ॥ २ ॥ ३ ख. °प्युक्त९ यः । ४ ख. ग. °ण्डो वा° । ५ ख. °त्येव९ वा° । ६ ग. °ण्ड्रो वा° ।

विस्फुलिङ्गभावेनोपैति नानादिक्ष्वनेकधा विप्रसृतो भवतीत्यर्थः। एवं वावैवमेवोक्तदृष्टान्तवत्खल्वसौ भूतात्माऽन्तःपुरुषेणाभिभूतो व्याप्तो गुणैर्देहेन्द्रियान्तःकरणैर्गुणात्मकमायाकार्यैर्हन्यमानोऽवच्छिद्यमानो नानात्वमुपैति तत्तद्भूतसंघातभेदेन भिद्यत इत्यर्थः।

नानाभावमेव वर्णयति—

**चतुर्जालं चतुर्दशविधं चतुरशीतिधा**
**परिणतं भूतगणमेतद्वै नानात्वस्य रूपम्।**

**चतुर्जालं० रूपमिति।** चत्वारि जालानि परिच्छेदकानि यस्मिंस्तत्तथा। जरायुजाण्डजस्वेदजोद्भिज्जरूपैश्चतुर्भिर्जालैरवच्छिन्नमित्यर्थः। चतुर्दशविधं भूरादिचतुर्दशभोगस्थानप्रकारमित्यर्थः। पुनर्जरायुजादीनामवान्तरजातिभेदेन चतुरशीतिधा तावल्लक्षं तावतोऽप्यधिकं वा भेदेन परिणतमुपचितमित्यर्थः। किं तत्। भूतगणं भूतानां गणो यस्मिंस्तद्भूतगणं पञ्चमहाभूतसंहननं यदेवंविधमेतद्वै नानात्वस्य भेदस्य रूपं स्वरूपमित्यर्थः।

उक्तस्य चराचरलक्षणस्य स्वतश्चेतनत्वशङ्कां व्यावर्तयंश्चिदात्मनोऽस्माद्भेदं सूचयति—

**तानि ह वा एतानि गुणानि पुरु-**
**षेणेरितानि चक्रमिव मृत्पचेनेति।**

**तानि ह वा० मृत्पचेनेतीति।** तानि जरायुजादिभेदेन चतुर्विधानि भूरादिभेदेन चतुर्दशविधानि च ह वा एतानि चतुरशीत्यादिप्रकाराणि गुण्यन्ते पुनः पुनरावर्तन्त इति गुणानि पुरुषेणान्तःस्थेनेरितानि मृत्पचेन कुलालेनेरितं चक्रमिव भ्रमन्तीति शेषः।

इदानीं भूता मानुगतस्यापि चिदात्मनो भूतात्मगतावस्थादोषसंस्पर्शाभावं दृष्टान्तेनोपपादयन्संसारित्वासंसारित्वव्यवस्थामाह—

**अथ यथाऽयस्पिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ**
**पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति॥ ३॥**

**अथ यथाऽयस्पिण्डे० संश्लिष्टत्वादितीति।** अभिभूयत्यभिभूयते न हन्यत इत्यर्थः। न ह्यौष्ण्यप्रकाशस्वभावस्याग्नेः स्वतोऽवस्थाभेदो वक्रवर्तुलस्थूलसूक्ष्मत्वादिलक्षणोऽयः पिण्डाद्युपाधिपरामर्शमन्तरेण निरूपणपथमवतरति। एवमेवासौ पुरुष आन्तरश्चिदात्मा नाभिभूयति नाभिभूयते भूतात्मगतावस्थाभिर्भेदविपर्यासलक्षणैर्न संस्पृश्यते, अत्राप्युपाधिपरामर्शमन्तरेण भेदविपर्यासयोरनिरूपणात्, अयं तु भूतात्माऽयःपिण्डादिभेदेनाऽऽकारवत्तया गृह्यमाणाग्न्याभासवद्भूतसंघातोपसंश्लिष्टत्वात्तदात्माभिमानितयाऽनुगतत्वादभिभूयत्यभिभूयते तदवस्थाभिरवस्थावान्भवतीत्यर्थः॥ ३॥

---

१ म. मृत्यवेने°। २ ग. मृत्यवेन। ३ ख. °त्यसौ भू°। ४ क. °ते ह°। ५ क. °यं भू°। ६ ग. °ण्डाभे°। ७ क. °दात्मताभि°।

यस्मादेवं देहाभिमाननिबन्धनमात्मनः संसारित्वं तस्माद्देहस्वभावालोचनया देहाभिमानत्यागः कार्योऽसंसारित्वायेति विवक्षन्देहस्य बीभत्सागोचरतामाह—

**अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चाऽऽमयैर्बहुभिः परिपूर्णं कोश इव वसुना ॥ ४ ॥**

**अथान्यत्राप्युक्तं॰ इव वसुनेति ।** प्रथमं मैथुनादेवोद्भूतं शुक्रशोणितबिन्दुरूपं क्रमेण निरये निरयतुल्ये मातुरुदरे संवृद्ध्युपेतमङ्गप्रत्यङ्गकेशनखलोमप्रका(क)रैः परिव्यूढम् । नवमे दशमे वा ततोऽप्यधिके वा मासे सति मूत्रद्वारेण योनिरन्ध्रेण निष्क्रान्तमेवंविधमिदं शरीरं प्रसिद्धमित्यर्थः । अवनद्धं पिहितम् । अन्यैश्चाऽऽमयैरुदरशूलापस्मारादिभिर्बहुभिरसंख्यातैः । कोशो भाण्डागारम् । वसु धनम् । प्रसिद्धार्थमन्यत् । निरयरूपेऽस्मिञ्शरीरे विवेकिनाऽभिमानो न कार्य इत्यभिप्रायः ॥ ४ ॥

एवं स्थूलशरीरे वैराग्याय तत्स्वभावमुक्त्वा सूक्ष्मेऽपि शरीरे वैराग्याय तत्स्वभावमुपन्यस्यति—

**अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तन्द्री प्रमादो जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्यं मूढत्वं निर्व्रीडत्वं निराकृतित्वमुद्धतत्वमसमत्वमिति तामसानि ।**

**अथान्यत्राप्युक्तं संमोहो॰ तामसानीति ।** संमोहो विपर्ययः । तन्द्र्यालस्यम् । प्रमादोऽवश्यकर्तव्येष्ववधानशून्यता । जरा देहधर्मोऽप्यन्तःकरणेन जीर्णोऽहमित्यभिमानात्तद्धर्मोन्तरानुक्रान्ता । कार्पण्यं कृपणत्वं सत्यां संपत्तौ कदर्यता ।

"आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ।
देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः" ॥

इति स्मृतौ कदर्यलक्षणमुक्तं स एवेह कृपणस्तस्य भावः कार्पण्यमित्यर्थः । नास्तिक्यमामुष्मिके श्रेयसि निरये वा नास्तीति बुद्धिर्वेदाद्यनादरश्च । अज्ञानमपेक्षितार्थास्फूर्तिः। परर्द्ध्यसहिष्णुत्वं मात्सर्यम् । नैष्कारुण्यं नैष्ठुर्यम् । मूढत्वमविवेकित्वं विवेकराहित्यमिति यावत् । अतो न मोहेन पौनरुक्त्यम् । निर्व्रीडत्वमकार्यकरणेऽनपत्रपत्वम् । निराकृतित्वमनवस्थितस्वभावत्वम् । उद्धतत्वं साहसेषु निःशङ्कत्वम् । असमत्वं विषमबुद्धित्वम् । एतानि तामसानि तमोगुणोद्रेककृतानीत्यर्थः । अन्यत्प्रसिद्धार्थम् ।

१ क. °रित्वभावाये° । २ ख. °प्युक्त९ श° । ३ ख. °वसुनेति । ४ ख. प्युक्त९ सं° । ५ ख. भय९ वि । ६ क. तन्द्रा । ७ क. °र्मोपान्त° । ८ ग. °न्तरनु° । ९ क. पीडयेत् ।

राजसान्याह—

**अन्तस्तृष्णा[1] स्नेहो रागो लोभो हिंसा[2] रतिर्द्वेष्टिर्व्यावृतत्वमीर्ष्याऽकाममस्थिरत्वं चलत्वं व्यग्रत्वं जिगीषाऽर्थोपार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्गः शुक्तस्वरोऽन्नतमस्त्विति राजसान्येतैः परिपूर्ण एतैरभिभूता इत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति[3] ॥ ५ ॥**

**इति मैत्र्युपनिषदि तृतीयः प्रपाठकः ॥ ३ ॥**

अन्तस्तृष्णा० आप्नोतीति । अप्राप्येऽप्यर्थेऽभिलाषोऽन्तस्तृष्णा । अतस्तृष्णेति पाठेऽतः परं राजसान्युच्यन्त इति योज्यम् । स्नेहः पुत्रदारादिषु ममत्वाभिनिवेशः । रागस्तेष्वासक्तिरात्मत्वाभिमानः । लोभो लब्धेषु विषयेष्वलंबुद्ध्यभावः । हिंसा परपीडा । द्विष्टिर्द्वेषः । व्यावृतत्वं व्यावृताभिप्रायत्वं गूढाभिसंधितेत्यर्थः । ईर्ष्या निरर्थकस्पर्धा । काम्यत इति कामः फलं तद्रहितं यथा स्यात्तथाऽस्थिरत्वं चाञ्चल्यं निरर्थकप्रवृत्तिमत्त्वमित्यर्थः । यद्वाऽऽकाममाकामत्वमा समन्तात्कामवत्त्वमसंपूर्णकामत्वमित्यर्थः । अत एवास्थिरत्वमेकस्मिन्विषये स्थैर्यराहितत्वम् । चलत्वं चलचित्तत्वमगाम्भीर्यमिति यावत् । व्यग्रत्वं व्यसनिता[4] । धनविद्यादिभिः[5] पराञ्जेतुमिच्छा जिगीषा । अर्थस्य पशुधनक्षेत्रादेरुपार्जनं येन केनचनोपायेन संपादनम्[6] । तदर्थं मित्राणामुपकारिणामनुग्रहणं दानमानसत्कारैरनुसरणम् । परिग्रहावलम्बो गृहाश्रमोत्साहः । उत्तरं वाक्यद्वयं स्पष्टार्थम् । अभिष्वङ्गः प्रीत्यतिशयः । शुक्तस्वरोऽव्यक्तस्वरस्तद्वत्त्वमिति यावत् । अन्नतमो बह्वन्नः ख्यात्याद्युद्देशेनान्नदानपरत्वमित्यर्थः । तुशब्दः पूर्वोक्तात्तामसाद्व्यवच्छेदार्थः । इत्येवंविधानि राजसानीत्यर्थः । एतैरित्यादिः स्पष्टार्थः । यस्मादेवं तामसै राजसैश्च धर्मैरभिव्याप्तोऽयं भूतात्मा तस्माद्वासनावासिततया[7] पुनः पुनर्नानारूपाण्याप्नोतीति । अभ्यासः प्रपाठकसमाप्तिद्योतनार्थः ॥ ५ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां
तृतीयः प्रपाठकः ॥ ३ ॥

---

१ ख. अतस्तृ° । २ हिंसा । ३ ख. °मोति । ४ क. °व्यसनित्वम् । ५ क. °दिभिर्जेतु° । ६ क. °म् । मि° । ७ ग. °स्मात्तद्वा° ।

अथ चतुर्थः प्रपाठकः ।

पूर्वस्मिन्प्रपाठक एकस्यैव चिदात्मनो भूतात्मोपाध्यविवेकेन संसारित्वं तद्गतावस्थाभिरवस्थावत्त्वं नानात्वं चेत्येवमादिदोषसंसर्गो न स्वतः स्वतस्तु निर्धर्मको नित्यशुद्ध एवेति प्रतिपादितम् । तदेतदवधार्य भूतात्मभावोपमर्देन शुद्धात्मस्वभावावाप्त्युपायं जिज्ञासवो वालखिल्याः पृच्छन्तीत्याख्यायिकामेवानुसरन्ती श्रुतिर्मोक्षसाधनं तत्त्वज्ञानमन्तरङ्गबहिरङ्गसाधनोपेतमुपदेष्टुं प्रवर्तते । ज्ञातव्ये हि विषये निर्धारिते तज्ज्ञानोपायजिज्ञासावसर इति संगतिमभिप्रेत्य तदर्थं गुरूपसत्तिं विदधाति—

**ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिता अभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि त्वमस्माकं गतिरन्या न विद्यता इति ।**

**ते ह खलु० न विद्यता इतीति** । हशब्द ऐतिह्यार्थः । खलुशब्दो वाक्यालंकारार्थः । वावशब्दोऽवधारणार्थः । ऊर्ध्वरेतसः पूर्वोक्ता वालखिल्या ऋषयः । ते ह विस्मिता अवधारणस्यात्रान्वयः । किमिदमद्भुतमिव नित्यशुद्धश्चिदात्माऽस्मत्प्रत्यगात्मा सन्नपि परोक्ष इव शुद्धोऽप्यशुद्ध इवाक्रियोऽपि सक्रिय इवेति विस्मिता एव सन्तः प्रजापतिं गुरुमित्यध्याहारः । अभिसमेत्याऽऽभिमुख्येन सम्यग्विधिपूर्वकमेत्योचुरुक्तवन्तः । हे भगवंस्ते तुभ्यं नमो नमनमिदमस्तु त्वमनुशाधि शनैः शिक्षयास्माकमस्मानित्यर्थः । अथवाऽस्मानिति पदमध्याहर्तव्यम् । अन्यान्प्रार्थयध्वमिति चेन्नैवं वाच्यमित्यभिप्रेत्योचुरस्माकं त्वच्छिष्याणां गतिर्गन्तव्यं स्थानमन्या त्वदन्या न विद्यतेऽतस्त्वामेव पृच्छाम इत्यर्थः ।

यदर्थमुपसन्नास्तमर्थं पृच्छन्तीत्याह—

**अस्य को विधिर्भूतात्मनो येनेदं हित्वाऽऽत्मन्येव सायुज्यमुपैति तान्होवाचेति ॥ १ ॥**

**अस्य को विधिः० होवाचेतीति** । अस्य प्रत्यक्षानुभवसिद्धस्य भूतात्मनो भूतसंघातमात्मत्वेनोपगतस्य को विधिर्विधानं कः प्रकारो येन विधिनोपायभूतेनेदं भूतात्मत्वं हित्वा विहायाऽऽत्मन्नात्मनि चिदानन्दसत्स्वरूप एव पूर्णात्मनि सायुज्यं सयुग्भावं भूतात्मत्वविलापनेनोपैति निरस्तोपाधितया स्वस्वरूपेऽवतिष्ठते स को विधिस्तं विधिं नो ब्रूहीत्युक्तवन्त इत्यर्थः । तान्होवाचेत्युक्तार्थः ॥ १ ॥

एवं पृष्टः प्रजापतिः प्रथमं वैराग्यदार्ढ्याय भूतात्मनः स्वरूपमुपन्यस्यति यस्मिन्नासक्तः संश्चिदात्मा स्वं रूपं परमं पदं न जानाति तदिदं विचिन्त्यतां तावदिति—

---

१ क. °द्यत । २ क. °द्धचिदा° । ३ क. °न्नास्तं पू° । ४ ग. सायोज्य° । ५ ग. °नि सायोज्यं सा° । ६ ग °तिष्ठेत स ।

**अथान्यत्राप्युक्तं महानदीषूर्मय इवानिवर्तकमस्य यत्पुराकृतं**

**अथान्यत्रापीति** । अस्य भूतात्मनो यत्पुराकृतं तदनिवर्तकमित्यन्वयः । नास्ति निवर्तकमस्येत्यनिवर्तकम् । पुराकृतं पुण्यापुण्यरूपं कर्म महानदीषूर्मय इव पुनः पुनरविच्छेदेन जायमानं यतो भोगेन क्षीयमाणमपि पुनः पुनः पुंसां क्रियमाणत्वान्नोद्वर्तेतातो ब्रह्मज्ञानादन्यैर्निवर्तकमस्य नास्तीत्यर्थः । तथा च श्रुती—" स हीदमन्नं पुनः पुनर्जनयते " " स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह " इति । " भिद्यते हृदयग्रन्थिः " " नान्यः पन्था विद्यतेऽयनाय " इति च ।

सत्कर्म वाऽऽत्मज्ञानं वा संपाद्योत्तरे वयसि कर्मक्षयं करिष्यामीत्याशा न कार्येत्याह—

**समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं**

**समुद्रेति** । अस्य भूतात्मनो मृत्योरागमनं मरणप्राप्तिः समुद्रस्योत्सर्पतो वेलेव वेलाधावनमिवानिच्छतोऽपि दुर्निवार्यमस्य मृत्योरागमनमित्यर्थः ।

यावज्जीवति तावत्यपि काले नेच्छया पुरुषार्थसाधनक्षममित्याह—

**सदसत्फलमयैः पाशैः पङ्गुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्येव बहुभयावस्थं**

**सदसदिति** । तत्तत्कर्मोपदर्शितानेकसुखदुःखभोगवासनामयैः पाशैर्बद्धं निगडितं सत्पङ्गुरिव गमने सत्साधनप्रवृत्तावक्षममित्यर्थः । तत्र हेतुमाह—यतो बन्धनस्थस्य बध्यतेऽस्मिन्निति बन्धनं बन्धनागारं तत्स्थस्येवास्वातन्त्र्यमस्य भवत्यतः पङ्गुरिवाकिंचित्करं भूतात्मस्वरूपमित्यर्थः । अतोऽत्र विश्वासो न कार्य इत्यर्थः । इतोऽपि न विश्वासः कार्यो यतो यमस्य दण्डयितुर्विषये गोचरेऽवस्थितस्य यथा बहुविधं भयं तथा बहुभयाविष्टाऽवस्था यस्य तत्तथोक्तं सर्वस्मादपि शङ्कितभयमित्यर्थः ।

भूतसंघातमभिमन्यमानस्य विवेकोद्गमोऽपि दुर्लभ इत्याह—

**मदिरोन्मत्त इव मोहमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्यमाणं महोरगदष्ट इव विषयदष्टं महान्धकारमिव रागान्धम् ,**

**मदिरेति** । मोहोऽविवेकः स्तब्धता । पाप्मना पापग्रहेण गृहीत इव भ्राम्यमाणं सदैवावशमित्यर्थः । यद्वा ग्रहगृहीत इव पाप्मना पापेन भ्राम्यमाणमिति योजना । विषयदष्टं वासनारूपेण विषयैराविष्टमित्यर्थः । महानन्धकारो यस्मिंस्तन्महान्धकारं निशीथं तद्वद्रागो विषयासक्तिः सोऽन्धकार इव हिताहितप्राप्तिपरिहारोपायावरणं तेनान्धमावृतमित्यर्थः ।

---

१ क. °न्नो निवर्तते । ब्र° । २ ग. ब्रह्मात्मज्ञा° । ३ ग. न्यतो निव° । ४ ख. °मनश्च स° । ५ ख. °तन्त्र्यश्च य° । ६ क. °षयावस्थ° । ७ ख. °गान्धकारमि° ।

इदानीमस्मिन्सत्त्वबुद्धिरपि न कार्येत्याह—

**इन्द्रजालमिव मायामयं**

**इन्द्रजालमिवेति** । मायाविनिर्मितहस्त्यादिवद्दृष्टनष्टस्वरूपत्वान्मायामयमित्यर्थः ।

तत्त्वज्ञानबाध्यत्वादपि नास्मिन्सत्त्वमवधेयमित्याह—

**स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं**

**स्वप्न इवेति** । मिथ्यादर्शनं बाध्यदर्शनमित्यर्थः । विमतं बाध्यज्ञानप्रतिभासं कादाचित्कत्वात्स्वप्नदृष्टवदित्यनुमानमुक्तं भवति । कदलीगर्भस्तदन्तःशलाका तद्वदिदमसारमल्पोपघातमप्यसहमानमित्यर्थः ।

प्रतिक्षणपरिणामादप्यविश्वास्यमित्याह—

**नट इव क्षणवेषं**

**नट इवेति** । यद्वा नानाजात्यभिव्यञ्जककर्मभाव्यनेकाकारपरिग्रहान्नट इव दुर्लक्ष्यमित्यर्थः ।

अस्मिन्सौकुमार्यसौन्दर्यादिबुद्धिरपि न कार्येत्याह—

**चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तम् ।**

**चित्रेति** । मांसशोणितादिभिर्बीभत्सितत्वान्न मनोरममित्यर्थः ।

तदुक्तं **मनुना**—

" अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमसन्निष्ठं भूतावासमिमं त्यजेत् " ॥ इति ।

( अ० ६ श्लो० ७६—७७ )

इत्यथैवमुक्तेऽर्थे । उक्तं श्लोकरूपं वचनमिति शेषः ।

**शब्दस्पर्शादयो ह्यर्था मर्त्येऽनर्था इवाऽऽस्थिताः ।**

शब्दस्पर्शादयो हि विषया अनर्था अपि मर्त्ये मरणधर्मिणि भूतात्मन्यर्था इव स्पृहणीया इवाऽऽस्थिता[3] अङ्गीकृता न त्वेते स्पृहणीया इति योजना ।

कुत इत्यत आह—

**[4]येषां सक्तस्तु भूतात्मा न स्मरेत्[5]परमं पदम् ॥ २ ॥**

भूतात्मा येषां सक्तो येष्वासक्तस्तु परमं पदं[6] वैष्णवं धाम न स्मरेन्नानुसंदधीतेत्यर्थः ।

---

१ क. °न्सद्बुद्धि° । २ ख. इव स्थि° । ३ क. इव स्थि° । ४ ख. येषा॰स° । ५ ग. °रेत परं प° । ६ क. °दं स्वं वै° ।

एवंविधं भूतात्मनः स्वरूपं ब्रह्मादिस्तम्बपर्यन्तं समालोच्य तस्मिन्नभिमानस्त्याज्यः श्रेयोर्थिनेत्यभिप्रायः ॥ २ ॥

तदेवं वैराग्याय भूतात्मनः स्वरूपमुपवर्ण्येदानीमस्य त्यागोपायं पृष्टमुपदिशति—

**अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः ।**

**अयं वाव खल्वस्येत्यादिना ।** अस्य भूतात्मनोऽयं वावायमेव खलु प्रतिविधिः प्रतिविधानं प्रतिक्रिया भूतात्मत्वप्रहाणोपायः । कोऽयम् । यद्योऽयं वेदविद्याधिगमः । वेदद्वारा विद्याया आत्मतत्त्वविषयाया अधिगमः । सम्यक्प्राप्तिरित्यर्थः ।

कथं विद्याधिगमो वेदादित्यपेक्षायां विविदिषन्ति यज्ञेनेत्यादिश्रुत्यन्तरविनियोगानुरोधेन स्ववर्णाश्रमविहितधर्मानुष्ठानप्रभावकृतस्वान्तशुद्धिं विना न ज्ञानाधिगम इत्यभिप्रायेणाऽऽदौ बहिरङ्गाणि कर्माणि विदधाति—

**स्वधर्मस्यानुचरणं**[1]

**स्वधर्मस्येत्यादिना ।** स्वो धर्मः स्वधर्म आवश्यकं कर्म तस्यानुचरणमनुक्रमेणानुष्ठानम् ।

एतदेव स्पष्टयति—

**स्वाश्रमेष्वेवानुक्रमणं**[2] **स्वधर्मस्य वा एतद्व्रतं स्तम्बशाखैवापराण्यनेनोर्ध्वभाग्भवत्यन्यथाऽवाङित्येष स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमेणाऽऽश्रमी भवति ।**[3][4]

**स्वाश्रमेष्वेवेति ।** यस्य वर्णस्य यावन्त आश्रमा विहितास्तेष्वाश्रमेष्वेव विहितानां कर्मणां तेन तेन वर्णेनानुक्रमणमनुष्ठानमिति यदेतद्धि प्रसिद्धं स्वधर्मस्य व्रतं निष्ठा । अपराणि[5] काम्यादीनि कर्माणि स्तम्बशाखेव तृणशलाकेव दृढानीत्यर्थः । एतदुक्तं भवति येन यच्छक्यं कर्तुं तन्न तस्य हितसाधनं किं तु यस्य वर्णस्य यस्मिन्नाश्रमे यो धर्मो विहितः स तस्य हितसाधनं तेन सोऽनुष्ठेयः काम्यादि तु मुमुक्षुणा हेयमिति । अनेनोक्तप्रकारस्वधर्मानुष्ठानेन । ऊर्ध्वभाक्, संसारमण्डलादुपरि यदसंसारि ब्रह्म तदूर्ध्वमुच्यते "ऊर्ध्वमूलो अवाङ्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" ( कठो० ६ ) इति श्रुत्यन्तरात् । तदूर्ध्वं ब्रह्म भजत इत्यूर्ध्वभाक् । ब्रह्मज्ञानवान्भवतीत्यर्थः । अन्यथा स्वधर्मातिक्रमणे काम्यकर्मनिष्ठायां वाऽवाङित्यधो नरकादिस्थानमर्वाचीनानेकानित्यपुरुषार्थं वा भजेतेत्यर्थः। संसारमण्डलान्न व्यावर्तत इत्यभिप्रायः । उपसंहरति— एष स्वधर्मो यो वेदेष्वभिहितो वर्णाश्रमनिबन्धनो न काम्यादि स्वधर्म इत्यर्थः । यद्यपि काम्याद्यपि कर्म कामिनः

१ ख. °रणश्स्वा° । २ ख. °मण९स्१° । ३ ख. °खेवेतरा° । ४ ख. °वाङ्पतत्ये° । ५ क. °ति यद्यस्याविहितं त° ।

स्वाभिलषितसाधनत्वात्स्वो धर्मो भवति तथाऽपि न तत्स्वरूपाविर्भावहेतुरिति न मुख्यं तस्य स्वधर्मत्वम् । स्ववर्णाश्रममात्राधिकारकस्तु धर्मश्चित्तशुद्ध्यादिपरम्परया स्वस्वरूपाविर्भावहेतुरिति मुख्य इति भावः । उक्तमेवार्थं व्यतिरेकमुखेण द्रढयति—न स्वधर्मातिक्रमेणाऽऽश्रमी भवति । कश्चन तत्तदाश्रमलिङ्गधारणमात्रादाश्रमी न भवति, तस्य स्वरूपतोऽपुरुषार्थत्वात्पुरुषार्थाहेतुत्वाच्चेति भावः ।

ननु किमित्येवमाश्रमधर्मेष्वातियत्नः क्रियते तपसैव ब्रह्मविद्योदयसंभवात् । 'तपसा विन्दते महत्' इति वचनादिति चेत्सत्यम् । तदप्याश्रमधर्माविरोध्येव साधनं न तद्विरुद्धमपीत्याशयेनाऽऽह—

**आश्रमेष्वेवानवस्थस्तपस्वी वेत्युच्यत इत्येतदयुक्तं**

**आश्रमेष्वेवेति** । आश्रमेष्वनवस्थ एवानाश्रमस्थ एव तपस्वी वा धार्मिको वेत्याद्युच्यते यत्तदेतदयुक्तमिति योजना ।

ननु तर्हि तत्र तत्राऽऽत्मज्ञानसाधनेषु 'तपसा ब्रह्म विजिज्ञासस्व' इत्यादि तपोविधानमनर्थकं स्वधर्मानुष्ठानादेवाऽऽत्मज्ञानसिद्धेरित्याशङ्कायामाह—

**नातपस्कस्याऽऽत्मज्ञानेऽधिगमः कर्मसिद्धिर्वेति ।**

**नातपस्कस्येति** । अतपस्कस्य वैधकायशोषणरहितस्याऽऽत्मज्ञाने नाधिगमो नाधिगमनमात्मज्ञानं न प्राप्नोतीत्यर्थः । न केवलमेतावत्किं तु कर्मसिद्धिर्वा कर्मफललाभो वा तस्य न स्यादित्यर्थः ।

अस्मिन्नर्थे संमतिमिव श्लोकमुदाहरति—

**एवं ह्याह—तपसा प्राप्यते सत्त्वं सत्त्वात्संप्राप्यते मनः ।**

**मनसः प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तत इति ॥ ३ ॥**

**एवं ह्याहेति** । तपसा स्वधर्माचरणेन तदविरोधिवैष्णवादिनिष्कामव्रतविशेषाचरणलक्षणेन च सत्त्वं सत्त्वगुणप्रधानं चित्तं प्राप्यते, विशुद्धसत्त्वता लभ्यत इत्यर्थः । तस्मात्सत्त्वान्मनः संप्राप्यते । मनुतेऽनेनेति मनो विवेकविज्ञानम् । तस्मान्मनसो मननादात्मा पूर्णं तत्त्वं परं ब्रह्म हि निश्चितं प्राप्यते । आत्मतत्त्वसाक्षात्कार एवाऽऽत्मप्राप्तिर्नान्या तस्याऽऽप्तिर्नित्याप्तस्वरूपत्वात् । अत आत्मसाक्षात्कारो भवतीत्यर्थः । कोऽयमात्मेत्यत आह—यमाप्त्वा प्राप्य साक्षात्कृत्य न निवर्तते पुनः संसारमण्डले भूतात्मभावाय नाऽऽवर्तते मुच्यत इत्यर्थः ॥ ३ ॥

इदानीमुक्तं साधनजातं राशित्रयमिव संपाद्योपायोपेयभावेनाऽऽत्मसाक्षात्कारे समुच्चयेन विधत्ते—

---

१ क. °तसिद्धिसा° । २ ग. वेवलं । ३ क. °त्वादपु° । ४ क. °षार्थहे° । ५ ख. °वानवस्थितस्त° । ६ ग. °च्यता इ° । ७ ख. °दप्युक्र° । ८ क. न भवती° । ९ क. °मतमेव । १० ख. र्तता इ ।

**अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीद्ब्रह्मद्वारमिद-
मित्येवैतदाह यस्तपसाऽपहतपाप्मा ॐ ब्रह्मणो
महिमेत्येवैतदाह यः सुयुक्तोऽजस्रं चिन्तयति**

**अस्ति ब्रह्मेत्यादिना** । यो ब्रह्मविद्याविद्ब्रह्मविषयां विद्यां श्रवणमननलक्षणां वेत्ति सोऽस्ति ब्रह्माखण्डसच्चिदानन्दात्मकं ब्रह्मास्तीत्यब्रवीत् । प्रमाणयुक्तिजन्यं ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनमित्युक्तवानित्यर्थः । तथाच श्रुत्यन्तरम्—'अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते । अस्तीत्येवोपलब्धव्यः' ( कठो० ६ ) इति । यस्तपसा पूर्वोक्तलक्षेणनापहतपाप्मा विशुद्धसत्त्वः, स त्वेतादिदं तपो यथाव्याख्यातरूपं ब्रह्मद्वारमेव ब्रह्मप्राप्तिद्वारमारादुपकारकं भवतीत्याहेति मध्यग्रन्थयोजना । यः पुनः सुयुक्तः सुतरामध्यात्मयोगनिरत ओमित्यजस्रं चिन्तयति स एतच्चिन्तनालम्बनमोंकाररूपं ब्रह्मणो महिमा माहात्म्यमाविर्भूतं ब्रह्मैवैतादित्याहेति योजना । सर्वमर्थजातं वाचकशब्दसंभिन्नत्वात्तस्मिन्नवगम्यमानं ततो न पृथगस्ति । वाचकशब्दभेदाश्च 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णा ओंकार एवेदं सर्वम्' ( छान्दो० अ० २) इति श्रुतेरोंकारान्नातिरिच्यन्ते । स चोंकारोऽपि स्फुरणावगुण्ठितत्वान्न ततोऽन्योऽस्ति । स्फुरणं च सर्वस्य नामरूपात्मकस्य ब्रह्मैव 'आत्मैवास्य ज्योतिः' इति श्रुतेरात्मा च ब्रह्म 'अयमात्मा ब्रह्म' इति श्रुतेः । तथाच प्रणवेन ब्रह्मात्मानुसंधानं ब्रह्मणः साक्षात्साक्षात्कारहेतुरिति प्रणवार्थानुसंधाननिष्ठोऽब्रवीदित्युक्तं भवति ।

एवं त्रिधा विभक्तं साधनमिदानीं समुच्चित्य विधत्ते—

**तस्माद्विद्यया[1] तपसा चिन्तया चोपलभ्यते ब्रह्म ।**

**तस्मादिति** । अत्र त्रयाणामेषामेकस्मिन्पुरुषे यौगपद्यासंभवादवश्यंभाविनि क्रमेऽग्निहोत्रयवागूपाकवदर्थक्रमो द्रष्टव्यः । तथाच प्रथमं तपस्ततो ब्रह्मविद्या श्रवणादिलक्षणा ततः प्रणवैकनिष्ठतेति क्रमेण साधनत्रयवान्ब्रह्मोपलभेतेत्यर्थः ।

इदानीमुक्तसाधनत्रयातिशयवतः परमफलकथनपूर्वकं साधनत्रयविधेः प्राशस्त्याय ब्रह्मविदं स्तौति—

**स[2] ब्रह्मणः पर एता भवत्यधिदैवत्वं[3] देवेभ्यश्चेत्यक्षय्यमपरिमितमनामयं सुखमश्नुते य एवं विद्वाननेन त्रिकेण ब्रह्मोपास्ते ।**

**स ब्रह्मणः० ब्रह्मोपास्त इति** । स एवं ध्यायन्विद्वान्ब्रह्मणोऽपरस्य हिरण्यगर्भाख्यस्य शब्दब्रह्मणो वा परः परस्तात्परं ब्रह्मैता गन्ता भवति परं ब्रह्मैव भवतीत्यर्थः । इदं मुख्यफलकथनम् । 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि च श्रुत्यन्तरम् । तत्कि

१ क. °द्ययोपासनया चि° । २ ख. सद्ब्रह्म° । ३ क. °वतत्वं ।

हिरण्यगर्भोऽन्योऽस्ति यस्मात्परमयमेतीत्याशङ्क्य न हि न हि सोऽप्ययमेवेत्याह— अधिदैवत्वमिति । देवेभ्यश्च देवेभ्योऽप्यध्युपारि यद्दैवत्वं सर्वदेवाधिपतित्वं तदप्ययमेता भवतीति योजना । अश्नुत इति वक्ष्यमाणेन वाऽन्वयः । इतिशब्दः प्रदर्शनार्थः । देवाश्चायमेव भवतीत्येवंविधमस्य माहात्म्यमित्यर्थः । किंचाक्षय्यमविनाशि । अपरिमितमिति विशेषणमविनाशित्वसाधनम् । यत्परिमितं देशतः कालतः स्वरूपतो वा परिच्छिन्नं तद्विनाशि दृष्टं यथा घटादि । इदं तु तद्विपरीतत्वादक्षयमित्यर्थः । सांसारिकसुखवदस्य सातिशयत्वपारतन्त्र्यदुःखसंभेदशङ्काव्यावृत्तये विशेषणमनामयमिति । एवंभूतं यत्सुखं तदश्नुते प्राप्नोति भुङ्क्त इति वा । क इत्यपेक्षायामाह—य एवं विद्वाननेन त्रिकेण ब्रह्मोपास्ते स इत्यर्थः ।

पुनरपि फलान्तरमिव ब्रह्मसाक्षात्कारनान्तरीयकामुपाधिनिवृत्तिमुपन्यस्यति—

**अथ यैः परिपूर्णोऽभिभूतोऽयं रथितश्च तैर्वैव मुक्तस्त्वात्मन्नेव सायुज्यमुपैति ॥ ४ ॥**

**अथ यैः० सायुज्यमुपैतीति ।** अथास्यामवस्थायामयं परिपूर्णः पूर्णात्मा सन्नात्मन्नेवाऽऽत्मभूते ब्रह्मण्येव सायुज्यमुपैतीति संबन्धः । सायुज्योपगमनप्रकारमाहावाशिष्टैः पदैः । यैर्भूतपरिणामैर्देहेन्द्रियादिलक्षणैरयं विद्वान्पूर्वं परिभूत आत्मसात्कृतो रथितश्च रथं प्रापितो रथित्वं च प्रापित इति यावत् । तैर्वैव तैर्भूतपरिणामैः । वा एवेति च्छेदः । वाशब्दोऽप्यर्थे तैरपि मुक्त एवेत्यन्वयः । तुशब्दः पुनर्बन्धशङ्काव्यावृत्त्यर्थः । आत्मन्नेवेत्यादि व्याख्यातम् ॥ ४ ॥

एवमात्मानात्मनोस्तत्त्वमात्मतत्त्वब्रह्मज्ञानं च ससाधनमुपश्रुत्य किं कृतवन्तो वालखिल्या इत्यपेक्षायां तद्वृत्तमनुवदन्ती श्रुतिर्लब्धविद्यैः शिष्यैर्गुरौ कर्तव्यमुपदिशति—

**ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति ।**

**ते होचुः० अभिवाद्यसीतीति ।** पुनर्वचनमादरार्थम् । अभिवाद्यभिवदनशील आभिमुख्येन श्रोतॄणामनुभवपर्यन्तं तत्त्ववदनस्वभावोऽसि कृपयैव सर्वोपदेष्टाऽसि नास्मद्गुणापेक्षयेत्यर्थः ।

एवं गुरुमभिपूज्य किं कृतवन्त इत्यपेक्षायां गुरूपदिष्टसर्वार्थावधारणोक्त्या तं प्रसादयन्तः पुनः किंचिन्मनोगतं पृच्छन्ति ध्येयस्वरूपविप्रतिपत्तिनिरासेन मनःसमाधानार्थमित्याह—

**निहितमस्माभिरेतद्यथावदुक्तं मनसीत्यथोत्तरं प्रश्नमनुब्रूहीति ।**

**निहितं० ब्रूहीतीति ।** हे भगवन्यदुक्तं भवतैतदस्माभिर्मनसि स्वचित्ते यथावदा-

---

१ क. °ङ्क्य सोऽ° । २ ख. °त्मनैव । ३ ग. सायोज्य° ।

नुपूर्व्येण निहितं धृतम्। अत्रास्माकं नास्ति संशय इत्यर्थः। अथेदानीमुत्तरमितः परमस्माभिः करिष्यमाणं प्रश्नमनुब्रूह्यनुसृत्योत्तरं ब्रूहि कथयेत्यूचुरिति पूर्वेणान्वयः।

कः प्रश्नः स पृच्छ्यतामित्युक्ता आहुः—

**अग्निर्वायुरादित्यः कालो यः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्येकेऽन्यं श्रेयः कतमो यः सोऽस्माकं ब्रूहीति तान्होवाचेति ॥ ५ ॥**

**अग्निः०** होवाचेतीति। एके ध्यायिनोऽन्यमभिध्यायन्ति। अन्यमन्यमिति वीप्सा द्रष्टव्या। एकेऽग्न्यादीनामेकैकमभिध्यायन्तीत्यर्थः। एकेऽन्यं परं ब्रह्म परमात्मेत्युच्यमानमर्थं ध्यायन्तीत्यर्थः। अत्र कतमः पक्षः श्रेयः श्रेष्ठः श्रेयस्कर इति वा। यः पक्षस्तवाभिमतः श्रेयस्त्वेन स एवास्माकं श्रेयान्। तमस्माकं त्वं ब्रूहीत्यपृच्छन्निति योजना। यद्वा स त्वं विजानन्यः श्रेष्ठः पक्षस्तमस्माकं ब्रूहीति योजना। तान्होवाचेति श्रुतिवचनमुक्तार्थम् ॥ ५ ॥

श्रेयोर्थिभिरग्न्यादयो वा प्रत्येकं पृथग्ध्येयाः परिपूर्णं ब्रह्म वा ध्येयमिति पृष्टः प्रजापतिः सर्वत्र ब्रह्मैव पररूपेण स्वरूपेण चोपास्यं श्रेयोर्थिभिरग्न्यादिस्वरूपमेवोपास्यं तदुपासनाया अल्पफलत्वादित्यभिप्रेत्याग्न्यादीनामपि न ब्रह्मणोऽर्थान्तरत्वमस्तीति प्रतिपादयन्नुपासनाव्यवस्थामुपदिशतीत्याह—

**ब्रह्मणो वावैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त इत्येवं ह्याह।**

**ब्रह्मणो०** ह्याहेति। एता अग्न्यादिलक्षणा ब्रह्मणो वाव ब्रह्मण एवाग्र्याः श्रेष्ठास्तनवो मूर्तयः। ब्रह्मैवाग्न्यादिरूपेण विभाव्यतेऽतस्तेषु ब्रह्मबुद्ध्योपासनं युक्तमिति भावः। किंलक्षणस्य ब्रह्मण इत्युच्यते परस्य सर्वकारणस्य सर्वाधिष्ठानभूतस्येति यावत्। अत एवामृतस्य नित्यस्य। अशरीरस्याऽऽविर्भावतिरोभावधर्मवर्जितस्य ब्रह्मण एतास्तनव इति पूर्वेण संबन्धः। एवं चेद्ब्रह्मस्यैतास्तनवस्तदेव ब्रह्मोपास्यतामलं तद्दृष्ट्याऽन्योपासनयेत्यत आह—तस्यैवेति। योऽर्थो देवो वाऽन्यो वा यस्य पुंसोऽनुषक्तोऽनुरागविषयीकृतस्तस्यैवेह लोके प्रतिमोदति प्रतिमोदते प्रतिमोदनं करोति सर्व इत्येवं लोकप्रसिद्धं ह्याहेत्यक्षरयोजना। यो यस्यानुरागयोग्योऽनुरज्यमानो वा तमेव लोकाः प्रीणयन्त्यनुसरन्तीति च प्रसिद्धं लोके। तथा च परस्य ब्रह्मणोऽगोचरत्वान्निराकारत्वाच्चास्मिन्साक्षान्मनोनिरोधं कर्तुमशक्नुवतां प्रथममग्न्यादिदेवतास्वेव यथारुचि ब्रह्मदृष्ट्योपासनं श्रुतिषूपदिश्यत इत्यभिप्रायः। यद्वा तस्यैव ब्रह्मण इह लोके प्रतिमा मूर्तिरुदत्यु-

१ क. °हीति पृच्छन्तीति। २ क. °ह्मैवेति प°। ३ क. °त्वाच्च°।

देत्यग्न्यादिरूपेण । तथाच योऽग्न्यादिर्यस्योपासकस्यानुषक्तः स[1] तदेव ब्रह्म प्रतिमारूपमुपासीतेत्येवं ह्याहेति योजना ।

अग्न्यादीनां देवानां ब्रह्माग्र्यतनुत्वमुक्तं साधयति—

**ब्रह्म खल्विदं वाव सर्वम् ।**

**ब्रह्म० सर्वमिति** । इदं सर्वं ब्रह्म वाव ब्रह्मैव खल्वित्यन्वयः । तथाच श्रुत्यन्तरम्—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छान्दो० अ० ३) इति । अस्यार्थः—सर्वमिदमध्यात्ममधिदैवमधिभूतं वाऽशेषं जगद्ब्रह्मैव खलु नात्र संशयः कार्यः । कुत इत्यपेक्षायां हेतुमाह—तज्जलानितीति । तस्माज्जायत इति तज्जं तस्मिँल्लीयत इति तल्लं तेनानिति चेष्टत इति तदनम् । अम्लोपश्छान्दसः । इतिशब्दो हेत्वर्थः । तस्माद्ब्रह्मणो जातत्वात्तस्मिन्नेव लीयमानत्वात्तदाश्रयजीवनत्वाच्च तदेवेदं ब्रह्म यथा मृत्सुवर्णाद्युत्पत्तिस्थितिलया घटकुण्डलादयो मृत्सुवर्णाद्यात्मकास्तथेदं तस्मात्तथेति ।

यद्यप्येवं सर्वमेव ब्रह्मणः शरीरं तथाऽपि यत्स्वस्मादुत्कृष्टत्वेनाभिमतं तदुपास्यम् । देवा हि मनुष्याणामुत्कृष्टत्वेनाभिमता अन्नादयश्च जीवनहेतुत्वात्तथाभिमानयोग्या इत्यतस्ते ब्रह्मणोऽग्र्यास्तनव इति ब्रह्मदृष्ट्योपास्या इत्याह—

**या वास्या अग्र्यास्तनवस्ता अभिध्यायेदर्चयेन्निह्नुयाच्चातस्ताभिः सहैवोपर्युपरि लोकेषु चरत्यथ कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य ॥ ६ ॥**

**इति मैत्र्युपनिषदि चतुर्थः प्रपाठकः ॥ ४ ॥**

**या वास्या० पुरुषस्येति** । याः काश्चिद्वास्या वासयोग्या आश्रयार्हा ब्रह्मणोऽग्र्यास्तनवोऽग्र्याः श्रेष्ठा अभिध्यायेत् । यद्वाऽस्य ब्रह्मणो या वा याः काश्चिदग्र्यास्तनव इति योजना । अस्मिन्पक्षे दैर्घ्यविसंधी छान्दसौ । ता ब्रह्मबुद्ध्याऽभिध्यायेत् । अर्चयेत्पुष्पोपहारादिना पूजयेत्प्रतिमासु वा हृदये वा । निह्नुयाच्च तत्तदुपास्यदेवतात्माभिमानेनाध्यात्मपरिच्छेदाभिमानं स्वाभाविकं देवताया आत्मभावापादनेन हित्वा पृथगग्न्यादिदेवतात्वं च निह्नुयात्परित्यजेत् । चशब्दो ध्यानार्चननिह्नवानां समुच्चयार्थः । तथाच श्रुत्यन्तरम्—"तं यथा यथोपासते तदेव भवति" इति "देवो भूत्वा देवानप्येति" इति च । यत एवं देवतात्मभावनया ब्रह्मतनुभूता देवता उपास्तेऽतस्ताभिर्ब्रह्मतनुरूपदेवताभिः सहैव तदैकात्म्यं प्राप्येति यावत् । उपर्युपरि लोकेषु जनतपःसत्यलोकेषु चरति । उपासनातारतम्याल्लोकफलविकल्पः । तत्र तत्रोपासनाफलानि तत्तद्देवतात्मना भुङ्क्त इत्यर्थः । यद्ययं देवतात्ममात्रदृष्टिस्तदा भोगान्ते पुनरिहाऽऽवर्तते "अप्रतीकालम्बनान्नयतीति बादरायणः" इति न्यायात् । अथ यदि ब्रह्मण्यहंग्रहोपासकस्तदा

१ क. स तं देवं ब्रह्मप° २ ख. °ति पञ्चमकाण्ड उप° ।

कृत्स्नक्षये कृत्स्नस्य सर्वदेवतात्मनः सत्यलोकस्थस्य हिरण्यगर्भस्य क्षयेऽवसाने संपूर्णब्रह्मरूपः सन्पुरुषस्य पूर्णस्य परब्रह्मण एकत्वं सायुज्यमेति गच्छति क्रममुक्तिमुपैतीत्यर्थः । अभ्यासः प्रपाठकसमाप्त्यर्थः । अत्रेयं व्यवस्था । कार्यकारणोपाधिद्वयविलापनेन प्रत्यगेकरसतया ब्रह्म ध्यायत इहैव साक्षान्मुक्तिः । प्रारब्धफलशेषभोगाय देहस्थितावपि स मुक्त एव । यः पुनः कार्यकारणब्रह्मोपासकः स ब्रह्मण्यहंग्रहाद्ब्रह्मलोकेऽर्चिरादिमार्गेण गत्वा तत्रोपासनफलभोगावसाने तत्रोत्पन्नसम्यक्तत्त्वज्ञानान्मुक्तिमुपैष्यतीत्यस्य क्रममुक्तिः। ये पुनः प्रतीकोपासका अन्नं ब्रह्म प्राणो ब्रह्माऽऽदित्यो ब्रह्म मनो ब्रह्मेत्येवंदृष्टयस्तेषां 'न प्रतीके न हि सः' इति न्यायेन ब्रह्मक्रतोरभावात्ते यथोपासनं ब्रह्मलोकादर्वाक्तनेषु लोकेषु फलमनुभूय पुनरावर्तन्ते ब्रह्मलोकं गता अपि केचित्पञ्चाग्निदर्शनादिनिष्ठा इति ॥ ६ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां चतुर्थः प्रपाठकः ॥ ४ ॥

---

अथ पञ्चमः प्रपाठकः ।

तदेवं ससाधनां ब्रह्मविद्यामुपदिश्येदानीमुक्तवक्ष्यमाणसर्वोपासनाङ्गभूतान्नमस्कारमन्त्रानाह—

**अथ यथेयं कौत्सायनी स्तुतिः—**

**अथ० स्तुतिरिति** । कुत्सायनेन दृष्टा कौत्सायनीयं वक्ष्यमाणा स्तुतिः स्तुतिरूपो मन्त्रगण आरभ्यते । अथशब्द आरम्भार्थः । यथोपलब्धा तथाऽऽरभ्यत इत्यर्थः ।

**त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।**
**त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥**

**त्वं ब्रह्मेति** । ब्रह्मा हिरण्यगर्भः । प्रजापतिर्विराट् ।

**त्वमन्नस्त्वं यमस्त्वं पृथिवी त्वं विश्वं त्वमथाच्युतः ।**
**स्वार्थे स्वाभाविकेऽर्थे च बहुधा संस्थितिस्त्वयि ॥**

अद्यत उपजीव्यते सर्वैरिति वाऽत्ति सर्वं स्वात्मन्युपसंहरतीति वाऽन्नमन्नवदाचरतीत्यन्नः । तथाच श्रुत्यन्तरम्—“अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते” ( तैत्ति० उ० ) इति । विश्वं चराचरम् । अथ च सर्वात्मकत्वेऽपि त्वमच्युतोऽप्रच्युतनिजस्वभावः कूटस्थ एवेत्यर्थः । स्वार्थः पुरुषार्थो धर्मादिचतुष्टयरूपः स्वाभाविकः प्राकृतिकः स्वस्वप्रकृत्यनुसार्यर्थस्तयोरुभयोर्निमित्तं लोकस्य त्वयि ब्रह्मणीश्वरे बहुधा संस्थितिर्नानामार्गेण

---

१ क. °पास्ते स । २ क. त्वं मनुस्त्वं । ३ क. °मश्च त्वं पृ° । ४ क. °वी त्वम° । ५ ग. °श्वं त्वम° । ६ ख. °धा सश्स्थि° ।

त्वन्निष्ठता भवतीत्यर्थः । अथवा स्वार्थे स्वाभाविकेऽर्थे च लोकस्य या संस्थितिः प्रवृत्त्यादिनिष्ठा सा त्वय्यायत्तेत्यर्थः ।

**विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।**
**विश्वभुग्विश्वमायुस्त्वं विश्वक्रीडारतिप्रभुः ॥**

विश्वस्येष्ट इति विश्वेश्वरस्तस्य संबुद्धिः । तर्हि विश्वमन्यदिति शङ्कायामाह—**विश्वात्मेति** । त्वमेव विश्वमित्यर्थः । यतो विश्वकर्मकृत्क्रियते तत्कर्म विश्वाख्यं कर्म कार्यं करोतीति विश्वकर्मकृत् । विश्वोपादानत्वाद्विश्वात्मेत्यर्थः । यद्वा विश्वेश्वरत्वे हेतुर्विश्वात्मेति । विश्वस्याऽऽत्मा स्वरूपं तत्रापि हेतुर्विश्वकर्मकृदिति । अतः कारणत्वात्स्वकार्यं विश्वं व्याप्य तन्नियमयन्नवस्थितो विश्वेश्वर इत्यर्थः । भोक्तारो जीवा अन्ये भविष्यन्तीति शङ्कां वारयति—**विश्वभुगिति** । यो विश्वस्य भोक्ता प्रसिद्धः सोऽपि त्वमेवेत्यर्थः । किंच त्वमेव विश्वमायुः सर्वस्य सर्वमायुर्जीवनं प्राणरूपेण वा सर्वायुः । तथाच **श्रुत्यन्तरम्**—" यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः " ( कौषी० अ० ३ ) इति । किं बहुना त्वमेव विश्वक्रीडारत्योः प्रभुः । बाह्योपकरणा प्रीतिः क्रीडा तन्निरपेक्षाऽऽन्तरप्रीती रतिस्तयोस्त्वमेव स्वतन्त्रः समर्थ इत्यर्थः ।

**नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ।**
**अचिन्त्यायाप्रमेयाय अनादिनिधनाय चेति ॥ १ ॥**

शान्तात्मने कूटस्थस्वरूपाय गुह्यतमाय वाचामगोचरायाचिन्त्यायान्तरिन्द्रियाविषयायाप्रमेयाय बाह्येन्द्रियाविषयानादिनिधनाय नित्यसद्रूपायेत्यर्थः । चकारात्स्वयंप्रकाशाय चेत्यर्थः । इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ १ ॥

मन्त्राणामारम्भे त्वं ब्रह्मा त्वं च वै विष्णुरित्यादिना ब्रह्मादिदेवतात्मत्वं प्रत्यग्ब्रह्मणे उक्तं तत्र ब्रह्मादीनां तत्त्वान्तरत्वात्कथमित्थं स्तुतिरिति शङ्कानिरासायोत्तरा श्रुतिः प्रवृत्ते । तत्रैक एव यथोक्तश्चिदात्मा स्वमायागुणैस्तदवस्थाभेदैश्चानेकोऽनेकविशेषोऽनेकविधक्रियाप्रवर्तको न तत्त्वभेदः क्वाप्यस्तीति दर्शयन्ती श्रुतिर्ब्रह्मादित्रिमूर्तिभावेनास्याऽऽत्मन उपासनं विधातुं प्रथमं मूर्तित्रयव्यपदेशनिमित्तमाह—

**तमो वा इदमग्र आसीदेकं**

**तमो वा इत्यादिना** । इदं ब्रह्मविष्णुरुद्रादिकमग्रे सृष्ट्युपक्रमात्प्राक्तमो वै तम एव तमोगुणप्रधानमायामात्रमेवाऽऽसीदेकमेकीभूतमनभिव्यक्तनामरूपमखण्डतमोमात्रमासीदित्यर्थः । एतेनासत्कारणवादोऽसत्कार्यवादश्च व्युदस्तः । इदं तम इति सामानाधिकरण्योक्तेरग्र आसीदिति सत्त्वोक्तेश्च ।

---

१ ख. °रतिः प्र° । २ क. °ण इत्युक्तं । ३ क. प्रवर्तते ।

तत्किं सांख्याभिमतं प्रधानं नेत्याह—

**तत्परे स्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं**

**तत्परे स्यादिति** । तत्तमः परे कार्यकारणत्वातीते तत्कल्पनाधिष्ठाने चिदात्मनि स्याद्भवतीति यावत् । अचेतनस्य तस्य स्वातन्त्र्यानुपपत्तेरित्यर्थः । एवं जगतः प्रागवस्थां चेतनपराधीनामुक्त्वा तत्प्रवृत्तेरपि तदधीनतामाह—**तत्परेणेति** । तत्कारणं प्रविलीनकार्यावस्थं तमः परेण चिदात्मनाऽधिष्ठानभूतेनेरितं प्रेरितं तच्चैतन्याभासव्याप्त्योपचितं बीजमिव सलिलादिव्याप्त्येत्यर्थः । विषमत्वं पूर्वावस्थाप्रच्युतिरूपमुच्छूनमिव बीजं साम्यावस्थात्यागेन तद्विलक्षणत्वं प्रयाति कार्योन्मुखं भवतीत्यर्थः । यद्यपि मायाव्याकृताविद्यादिशब्दवाच्यस्य कारणस्य नित्यैव चैतन्यव्याप्तिर्नित्यमेव तत्राध्यस्तत्वात्तथाऽपि सुषुप्तस्य स्वप्नादिवृत्त्युद्भववद्बुद्धिपूर्विकैव कादाचित्की विद्याकर्मपूर्वप्रज्ञानुसारिणी चिदाभासव्याप्तिर्भवतीति न सृष्ट्यादिसांतत्यशङ्कावकाश इति गमयितव्यम् । यदिदं परेरितस्य तमसो विषमत्वगमनमेतद्रूपं वै प्रसिद्धं रजो रजोगुणाख्यं कारणमित्यर्थः । तत्खलु रजः पूर्ववत्परेणेरितं सद्विषमत्वं प्रयाति । यदिदं रजसो विषमत्वगमनमेतद्वै सत्त्वस्य सत्त्वगुणप्रधानकारणस्य रूपं प्रकारभेद इत्यर्थः ।

एवं गुणवैषम्यं सनिमित्तं कारणव्यापारमुक्त्वा तस्य कार्याकारपरिणामप्रकारमाह—

**तत्सत्त्वमेवेरितं रसः संप्रास्रवत्,**

**तत्सत्त्वमेवेति** । तत्परेणाऽऽत्मना पूर्ववदीरितं सत्त्वमेव न तमोरजसी तयोर्वक्ष्यमाणार्थाभिव्यञ्जकत्वासामर्थ्यात् । रसः सारश्चिदानन्दप्रकाशः "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तैत्ति० उ०) इति श्रुत्यन्तरात् । स संप्रास्रवत्सम्यक्प्राकट्येनास्रवत् । सत्त्वमेव चिदात्मनो विशेषाकाराभिव्यक्तियोग्याकारतया प्रसृतं सच्चिदात्माकारमेव विप्रसृतमित्यर्थः ।

अयमेव हि तत्र तत्र बुद्धिरिति च महानिति चाहमवभास्य इति च द्रष्टेति चाऽऽख्यायते नान्य इत्यभिप्रेत्याऽऽह—

**सोंऽशोऽयं यश्चेतामात्रः प्रतिपुरुषः**

**सोंऽश इति** । सोऽयमंशोऽश इवांशश्चिदात्मनो विशेषावस्थाऽऽकाशस्येव दारुसुषिराद्यवस्था न तु निरवयवस्य परमार्थतोंऽशोऽस्ति । कोऽसौ यश्चेतामात्रश्चेता चेतना साक्षि-

---

१ °मत्त्वं प्र° । २ ख. मत्वं प्र° । ३ क. °तं तं° । ४ क. °दिसात° । ५ क. कार्यकारणप° । ६ क. °तू । सं° । ७ ख. °सोऽंशोऽ° । ८ ख. °श्चेतनमा° ९ ख. रुषं क्षे° ।

चैतन्यं तया मीयतेऽवभास्यत इति चेतामात्रः स्वप्रकाशसाक्षिमात्रेणानुभाव्य इत्यर्थः। यतः प्रतिपुरुषः प्रतिबिम्बो नानोदपात्रेष्विव सूर्यादिर्नानाविधार्थाकारबुद्धिवृत्तिषु विभाव्यमानत्वात्प्रतिपुरुष इत्यर्थः।

लौकिकप्रतिबिम्बवदचैतन्यं वारयति—

**क्षेत्रज्ञः**

**क्षेत्रज्ञ** इति। क्षेत्रं शरीरं धर्माधर्मबीजप्ररोहभूमित्वात्तदापादतलमस्तकमहमिति जानातीति क्षेत्रज्ञो जीव इत्यर्थः। तदुक्तं भगवता **श्रीकृष्णेन**—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" ॥ इति।

तत्सद्भावं साधयति—

**संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वेत्यस्य प्रागुक्ता एतास्तनवः।**

**संकल्पेति**। संकल्प इदं मया कर्तव्यमित्येवमाकारो मनसो विकारः। अध्यवसायः कर्तव्यविषयस्वरूपसाधनफलानां यथावदवधारणरूपा बुद्धिवृत्तिः। अभिमानोऽहमस्मिन्समर्थ इत्याद्यहंकारः। एतेषामचेतने मृतशरीरेऽदर्शनाज्जीवच्छरीरे च दर्शनादेतानि लिङ्गानि शरीरातिरिक्ततया सद्भावप्रमापकाणि यस्य स संकल्पाध्यवसायाभिमानलिङ्गः। एतैर्लिङ्गैर्देहादिविलक्षणोऽस्तीति संभाव्यमान इत्यर्थः। प्रजापतिः समष्टिवैराजपिण्डाभिमानी देवः। विश्वा व्यष्टिपिण्डाभिमानिनी देवता। इत्येवमाद्या एताः प्रागुक्ता अस्यैव क्षेत्रज्ञस्य सत्त्वपरिणामप्रतिबिम्बितस्य चिदात्मनस्तनवः। चिदात्मैव तत्तन्मूर्तिभेदेषु तत्तदात्मना विभाव्यमानोऽवतिष्ठते, नास्मात्तत्त्वान्तरभूतं किंचिदित्यर्थः। तथाच **श्रुत्यन्तरम्**—"नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतः" (बृहदा० अ० ९) इति। एतदुक्तं भवति किं कारणं ब्रह्मेति। ब्रह्मवादिनां ब्रह्मणः सहकारिभूतजगत्कारणविमर्शे "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति त्रिगुणात्मिका मायाख्या शक्तिरवधृता श्वेताश्वतराणां **मन्त्रोपनिषदि**। सा च ब्रह्मणः सर्वकारणत्वनिर्वोढ्री शक्तिस्तेनाधिष्ठीयमाना गुणत्रयविभागेन यदा विकृता भवति तदा तदधिष्ठाताऽपि तत्सत्तास्फूर्तिप्रदत्वेन तदनुगतो विकृत इव भवति। तत्र च यथाविकारव्यपदेशं सोऽपि व्यपदिश्यते। तत्रापि त्रिगुणात्मकेन कारणेनेश्वरान्तर्याम्यादिशब्दैर्व्यपदिश्यमानः सत्त्वादीनामेकैकप्राधान्येन ब्रह्मादिसंज्ञाभाग्भवति। तदा तत्राऽऽविर्भूतगुणविशेषवत्तया स उपास्यो व्यपदिश्यते गुणकार्यस्थूलसूक्ष्मशरीरोपाध्यविशेषेण तदभिमानेन वा व्यवह्रियमाणो जीवः क्षेत्रज्ञः

१ क. °णत्वानि°। २ क. °पास्य उ:°।

संसारी देवो मनुष्यस्तिर्यक्स्थावर इति च व्यपदेशभाग्भवति । अत्र सर्वत्र सत्त्वगुणपरिणाम एव चिदात्मनो विशेषाभिव्यक्तिर्नान्यत्र । सत्त्वस्य च रजस्तमःसंपर्कविशेषाविशेषाभ्यां चिदात्माविर्भावविशेषतारतम्याज्ज्ञानक्रियाशक्त्यैश्वर्यतारतम्येन सर्वज्ञमूढामूढत्वादितारतम्यावभास इति ।

एतमेवाभिप्रायं विशदयति—

**अथ यो ह खलु वावास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः स वा एष एकस्त्रिधा भूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा वोद्भूत उद्भूतत्वाद्भूतं भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूवेत्यसौ आत्माऽन्तर्बहिश्चान्तर्बहिश्च ॥ २ ॥**

इति मैत्र्युपनिषदि पञ्चमः प्रपाठकः ॥ ५ ॥

**अथ यो ह खलु॰ अन्तर्बहिश्चेति ।** अथैवंप्रकारे व्यवस्थिते सत्यस्याऽऽत्मनो यो ह खल्वित्थं वावैव य एवेति संबन्धः । तामसस्तमःप्रधानोंऽशस्तमउपाधिको विशेषोऽसौ स हे ब्रह्मचारिणः । कोऽसौ योऽयं रुद्रः प्रसिद्ध इत्यर्थः । एवमुत्तरयोरपि पर्याययोर्व्याख्या । स वा एष एकः स वै पूर्वमुपपादित एष इदानीमुपाध्यधिष्ठातृत्वेनोक्त एक एव रुद्रब्रह्मविष्ण्वात्मना त्रिधाभूतः कारणोपाधिमधिष्ठाय त्रिधाभूत इत्यर्थः । अष्टधा पञ्चविधप्राणादित्यौ सनक्षत्रश्चन्द्रश्चेति त्रयः पञ्च भूतानि चेत्यष्टधेत्यर्थः । एकादशेन्द्रियभेद एकादशधा । तत्रैव मनोबुद्ध्योर्भेदे सति द्वादशधा । तत्तदिन्द्रियवृत्तीनामनन्तत्वात्तद्भेदेनापरिमितधा । वाशब्दो विकल्पार्थः । अध्यात्मं वाऽधिदैवं वाऽधिभूतं वा यद्यत्किंचिदस्ति तत्सर्वमवभासयंस्तत्तदात्मना नानाविध उद्भूतोऽभिव्यक्त उद्भूतत्वादेव भूतं भूतसंज्ञ आत्मा भवतीत्यर्थः । "महद्भूतमनन्तमपारम्" (बृहदा॰ आ॰ २) इति श्रुतेः "एको विष्णुर्महद्भूतम्" इति **स्मृतेश्च** । यतो भूतेषु प्रविष्टो भूतावभासकतया भूतनियन्तृतया चानुगतश्चरति गच्छति भूतानि व्याप्नोत्यत उद्भूतत्वाद्भूतमिति योजना । अत एव भूतवशितया भूतानामधिपतिर्बभूवाधिष्ठाय पालयिताऽभवद्व्यवहारदृष्ट्येत्यर्थः । उपसंहारार्थ उत्तरो भागः । इत्येवमुक्तप्रकारेणासावात्मा यथाव्याख्यातोऽन्तः साक्षिप्रमातृ-

१ क. °ति व्र° । २ क. °सौ ब्र° । ३ ख. °णो३योऽ° । ४ ख. योऽयं५ ब्र° । ५ क. °सौ ब्र° ६ म. °भूवा इ° । ७ क. °सावात्मा । ८ ग. °श्च चर° । ९ ग. °सा असावा° ।

कर्त्रादिरूपेण बहिश्चेश्वरकालदेवतादिरूपेण विभाव्यते नान्य इत्यर्थः । अभ्यास आदरार्थः प्रपाठकसमाप्त्यर्थो वा ॥ २ ॥

इति श्रीरामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां पञ्चमः प्रपाठकः ॥ ५ ॥

---

अथ षष्ठः प्रपाठकः ।

योऽन्तर्बहिः सर्वजनेषु नित्यं चरत्यशान्तेषु सुशान्तरूपः ।
प्राणात्मनाऽन्तर्बहिरंशुमालिरूपेण तस्मै सततं नमोऽस्तु ॥ १ ॥
नमो गुरुभ्यः सर्वेभ्यो येषां चरणसंस्मृतिः ।
सदौपनिषदे शुद्धे तत्त्वेऽर्पयति मे धियम् ॥ २ ॥

एवमियता ग्रन्थसंदर्भेण चिदात्मैक एव प्रत्यग्ब्रह्मरूपेण विज्ञेयः स एव ब्रह्मादिरूपेणानेकविशेषावस्थो ध्येयश्चेति मुमुक्ष्वपेक्षितोऽर्थः सर्वो दर्शितो मुक्तिश्च चिदात्मसायुज्यप्राप्तिरभिहिता । इदानीमस्यैव चिदात्मनोऽनेकधोपास्यत्वायानेकमहिमानमाविष्कुर्वती श्रुतिर्मन्दमध्यमाधिकारिविषयास्तदुपासनाः सालम्बना अनेकप्रकारा विधातुं प्रववृत उत्तरेण प्रपाठकेन तत्त्वज्ञाननिष्ठापेक्षितानि साधनान्यपि कानिचिद्विधातुम् । अस्य च खिलत्वान्नातीवात्र संगतयोऽपेक्ष्यन्ते तथाऽपि यथामति संगतिमूहमाना अक्षराणि व्याख्यास्यामः । तत्राध्यात्माधिभूतदेहब्रह्माण्डोपाधिभ्यां चिदात्मनः क्रियाशक्तिप्रधानलिङ्गानुगताचिदाभासाभेदेन प्राण आदित्यश्चेति द्विधा भेदं प्रकल्प्य तेनाऽऽत्मनोपासनं विधातुमाह—

**द्विधा वा एष आत्मानं बिभर्त्ययं यः प्राणो यश्चासा आदित्यः ।**

**द्विधा वा एष** इत्यादिना । एष पूर्वप्रकृत आत्मा वै प्रसिद्धः सर्वश्रुतिषु द्विधा द्विप्रकारेणाऽऽत्मानं[३] स्वं रूपं बिभर्ति धत्ते पालयति वा । प्रकारभेदमेव विशदयति—यः प्राणो देहे पञ्चधाऽऽत्मानं विभज्य स्थितोऽस्तीयमेका विधा यश्चासौ ब्रह्माण्डकरण्डमध्ये जगदवभासकतयाऽवस्थितोऽस्त्यादित्यः सोऽयमपरा विधेत्यर्थः ।

अध्यात्मं प्राणात्मनाऽधिदैवमादित्यात्मना च ब्रह्मरूपश्चिदात्मा ध्येय इत्युपासनोत्पत्तिविधिं सूचयन्नाह—

**अथ द्वौ वा एता अस्य पन्थाना अन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेते ।**

**अथेति** । अथेदमुच्यतेऽस्याऽऽत्मन एतौ द्वौ पन्थानौ विशेषाभिव्यक्तिमार्गौ । कौ । अन्तर्देहाभ्यन्तरं बहिश्च देहादध्यात्मरूपाद्बाह्यो देशश्चेति द्वौ पन्थानावित्यर्थः । एतौ प्राणादित्यावहोरात्रेणाह्ना रात्र्या च व्यावर्तेते विपरिवर्तनं कुर्वाते इत्यर्थः ।

---

१ क. °मादित्रि° । २ क. °शावादि° । ३ क. °नं स्वरू° । ४ ग. °श्वासा असौ ।

अन्तः किंरूपो बहिश्च किंरूपो व्यावर्तते कथं च तद्व्यावर्तनमित्येतद्विशदयति—

**असौ वा आदित्यो बहिरात्माऽन्तरात्मा प्राणोऽतो बहिरात्मक्या गत्याऽन्तरात्मनोऽनुमीयते गतिरित्येवं ह्याह ।**

**असौ वा आदित्यो बहिरित्यादिना** । असौ प्रसिद्धो वा आदित्यः सूर्यो बहिरात्मा प्राणोऽन्तरात्मा यत एवमतो बहिरात्मन इयं बहिरात्मकी तत्प्रयुक्तेति यावत् । तया बहिरात्मक्या गत्या परिवर्तनेनान्तरात्मनः प्राणस्य गतिरनुमीयत इत्येवमेवंप्रकारं हि यत आहाऽऽगमज्ञोऽतोऽनयोर्न वास्तवो भेद इति शेषः । अयमाशयः । सूर्यो हि मेरुं प्रदक्षिणीकुर्वन्नहोरात्राभ्यां ब्रह्माण्डान्तः परिवर्तते प्राणोऽपि श्वासरूपेण देहान्तः परिभ्रमति तत्रैकाहोरात्रसूर्यगत्योः प्राणस्यैकविंशतिसहस्रसंख्याः[1] श्वासा भवन्तीत्यागमशास्त्रसिद्धं प्राणपरिवर्तनमनुमीयते । यद्वा शतसंवत्सरपरिमितं हि पुरुषायुः "शतायुर्वै पुरुषः शतेन्द्रियः" इति[2] श्रुतिसिद्धेः । तावत्कालं च प्राणः शरीरान्तः संचरति । तत्रैकद्वित्र्यादिवर्षप्राणसंचरणपरिच्छेद आदित्यपरिवर्तनप्रचयाधीन इति तद्गत्या प्राणगतिरनुमीयत इति ।

इदानीमन्तरात्मगत्या बहिरात्मगत्यनुमानप्रकारमाह—

**अथ यः कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठ[3] आवृत्तचक्षुः सो अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते गतिरित्येवं ह्याह ।**

**अथ य इति** । अथशब्दः पर्यायान्तरारम्भार्थः । यः कश्चिद्विद्वान्प्राणादित्यात्मदर्शीत एवापहतपाप्माऽध्यात्मापरिच्छेदाभिमानासङ्गरूपपाप्मना रहितोऽत एवाक्षाध्यक्ष इन्द्रियाध्यक्षस्तेषु स्वतन्त्रो नेन्द्रियपरवश इत्यर्थः । अत एवावदातमना निर्मलचित्तः[4] । तन्निष्ठस्तास्मिन्नुपास्ये निष्ठा तात्पर्यं यस्य स तन्निष्ठः सन्नावृत्तचक्षुर्बाह्यविषयव्यावृत्तेन्द्रियः[5] । स उ इति च्छेदः स एव तेनेति विपरिणेयम् । य एवंविधो विद्वांस्तेनैवान्तरात्मक्या गत्या प्राणगत्या बहिरात्मन आदित्यस्य गतिरनुमीयत इत्येवं ह्याहेति व्याख्यातम् । एतदुक्तं भवति । अध्यात्माधिभूतयोः पिण्डब्रह्माण्डयोः स्वस्वमानेन शतं वर्षाण्यायुष्प्रमाणमित्यस्य समत्वादध्यात्मगतप्राणात्मगत्या शतवर्षान्ते पिण्डपरित्यागलक्षणया बहिरात्मनोऽप्यादित्यस्य ब्रह्माण्डपिण्डपरित्यागरूपा गतिस्तन्मानेन शतवर्षान्ते भवेदित्यनुमीयत इति । अथवा या प्राणात्मनो गतिर्देहधारणलक्षणा प्राणापानव्यापारैः क्रियमाणा तथा बाह्यात्मन आदित्यस्य ब्रह्माण्डविधारणरूपोदयास्तमयनिर्वर्त्याहोरात्रव्यापारैः क्रियमाणा गतिरनुमीयते । एतच्च प्राकृतजनबुद्ध्यगोचरत्वाद्विद्वद्दृष्टिगम्यत्वम-

१ क. °स्रषट्संख्याः । २ क. °ति प्रसि° । ३ ग. °न्निष्ठा आ° । ४ क. °मानस° । ५ ग. °त्तः । तन्निष्ठा त° ।

भिप्रेत्य विद्वान्मध्ये निर्दिष्ट इति द्रष्टव्यम् । एतयोरन्यतरस्य गत्याऽन्यतरस्य गत्यनुमानोपदेशस्तयोरेकगतित्वचिन्तनार्थ इति ।

इदानीमनयोः स्थानभेदं गुणभेदं च सिद्धवदनूद्य व्यतिहारं तच्चिन्तनार्थं विधत्ते—

**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां**

**अथ य एषोऽन्तरादित्य** इत्यादिना । गुणान्तरविधानारम्भार्थोऽथशब्दः । य एष प्रसिद्धोऽन्तरादित्य आदित्याख्यस्य मण्डलस्य मध्ये हिरण्मयो हिरण्मय इव हिरण्मयो ज्योतिर्मयोऽन्तर्यामी पुरुषः पुरुषाकारादित्यदेवतान्तरनुप्रवेशेन लब्धपुरुषाकार इति यावत् । कोऽसौ हिरण्मयः पुरुषो य इमां पृथिवीं पश्यति । इमामित्युपलक्षणं त्रैलोक्यमवभासयतीत्यर्थः ।

अस्य पुरुषस्य हिरण्मयत्वे निमित्तं स्वयमेवाऽऽह—

**हिरण्यवस्थात् ,**

**हिरण्यवस्थादिति** । हिरण्ये हिरण्मये तेजःसंघातात्मके मण्डलेऽवस्थादवस्थानात् । तदभेदेनावस्थितत्वादित्यर्थः । " वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः " इत्यवोपसर्गेऽवर्णलोपः । पश्यत्यमी हिरण्यवस्थादितिपाठः प्रामादिकः । यदि सत्यस्तदा द्वितीयार्थे प्रथमा विपरिणेया । इमाँल्लोकान्पश्यतीत्यर्थः ।

इदानीमस्याध्यात्ममवस्थानमाह—

**स एषोऽन्तरे हृत्पुष्कर एवाऽऽश्रितोऽन्नमत्ति ॥ १ ॥**

**स एष इति** । यो हिरण्मयाण्डस्थतया हिरण्मयः पुरुष उक्तः स एषोऽन्तरे देहाभ्यन्तरे यद्धृत्पुष्करं हृदयकमलं तस्मिन्हृत्पुष्कर एवाऽऽश्रितस्तत्रैव प्राकट्यमुपगतः प्राणात्मा सन्नन्नमदनीयमत्ति भुङ्क्ते विषयान्वा शब्दादीनुपभुङ्क्त इत्यर्थः ॥ १ ॥

एवमादित्यमण्डलान्तराभिव्यक्तं हिरण्मयत्वादिगुणकं पुरुषमनूद्य तस्य हृदयान्तर्वर्तिप्राणात्मभावं विधायेदानीमुक्तप्राणात्मानमनूद्य तस्याऽऽदित्यात्मभावं विदधाति—

**अथ य एषोऽन्तरे हृत्पुष्कर एवाऽऽश्रितोऽन्नमत्ति स एषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति ।**

**अथ य एषोऽन्तरे० अन्नमत्तीतीति** । अन्नमत्तीत्यन्तोऽनुवादभागो व्याख्यातः । स एष एवाग्निरत्ता दिवि द्युलोके श्रित आश्रितः स्थित इत्यर्थः । कोऽयमग्निरित्यत आह—सौरः सूर्यतेजोरूपः । स एव प्राणिनां कलनात्कालाख्यः कालसंज्ञितः । अदृश्यः प्रत्यक्षागोचर एव सन्सर्वभूतान्येवान्नं तान्यत्ति सर्वभूतानि संहरति । इतिशब्दो व्यतिहारोपदेशसमाप्त्यर्थः ।

---

१ क. °धात्म° । २ क. °वस्थानादि° । ३ ग. हृन्त° । ४ क. श्रितः स्थि° । ५ क. एवं स सर्व° ।

यत्र पुष्करे स्थितोऽन्नमत्तीत्यध्यात्ममुक्तं दिवि श्रितोऽन्नमत्तीति चाधिदैवं तदुभयस्वरूपजिज्ञासया वालखिल्याः पृच्छन्ति—

**कः पुष्करः किंमयो वेति ।**

**कः पुष्करः० वेतीति** । स्पष्टार्थः ।

उत्तरमाह प्रजापतिः—

**इदं वाव तत्पुष्करं योऽयमाकाशोऽस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसंस्था आसम् ।**

**इदं वाव० आसमिति** । योऽयं प्रसिद्ध आकाश इदं वावेदमेव तत्पुष्करम् । यदध्यात्महृत्पुष्करमुक्तं तदिदमेवाधिदैवं प्रसिद्धमाकाशं नानयोः स्वरूपभेदोऽस्तीत्यर्थः । तथा चाऽऽकाशमेव हृदये ब्रह्माण्डान्तरे च पुष्करमिति स्वरूपप्रश्नस्योत्तरमुक्तम् । किंमय इति प्रश्नस्योत्तरं वदन्हृदयपुष्करस्याष्टदलमयत्वं प्रसिद्धमिति मत्वाऽधिदैवपुष्करदलान्याह—**अस्येति** । अस्याऽऽकाशपुष्करस्येमाः प्रसिद्धाः प्राच्याद्या आग्नेय्याद्याश्चतस्रश्चतस्रो दिशो दलसंस्था दलत्वेन स्थिता आसमासन्नित्यर्थः । तथा च हृदयाकाशबाह्याकाशयोर्हृदयकमलगताष्टदलानामष्टदिशां चाभेदो ध्येय इति तात्पर्यार्थः ।

एवमध्यात्माधिदैवयोः प्राणादित्यपुरुषयोर्भेदेन प्रतीयमानस्थानगुणक्रियाणामभेददर्शनं विधाय पुनस्तावनूद्य सगायत्रीव्याहृतिप्रणवालम्बनं तयोरुपासनं विदधाति—

**अर्वाग्विचरत एतौ प्राणादित्या एता उपासीतो[1]मित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥**

**अर्वाग्विचरत० सावित्र्या चेतीति** । एतौ प्राणादित्यौ यथाव्याख्यातावर्वागदूरे संनिहितौ विचरतः परिवर्तेते हृदये बाह्याकाशे चेत्यर्थः । एतावुपासीत ध्यायेत् । कथम् । ओमित्येतदक्षरेण । एतेनाक्षरेणेत्येतत् । व्याहृतिभिर्भूर्भुवः स्वरित्येताभिस्तिसृभिः । सावित्र्या सवितृदेवत्ययर्चा गायत्र्याख्यया चेति । इतिशब्द ओंकाराद्यालम्बनविध्युपसंहारार्थः ॥ २ ॥

इदानीमुपासनालम्बनत्वेनोक्तस्योंकारस्य तत्त्वं प्रतिपादयिष्यंस्तत्स्तुतये तदुत्पत्तिप्रकारमाह—

**द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स आदित्यः स वा एष ओमित्येतदात्माऽभवत्स त्रेधाऽऽत्मानं[3] व्यकुरुतोमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं प्रोतं चैवास्मीत्येवं ह्याहैतद्वा आदित्य ओमित्येवं ध्यायताऽऽत्मानं युञ्जीतेति ॥ ३ ॥**

---

१ क. °सीतेत्योमि° । २ क. °स्तत्त्वा(प्र)ये । ३ क. °नं व्याकु° ।

**द्वे वाव० युञ्जीतेतीति ।** ब्रह्मणः परमात्मनो द्वे वाव द्वे एव रूपे रूप्यतेऽधिष्ठानतया ब्रह्माऽऽभ्यामिति रूपे निरूपके इत्यर्थः । के ते इत्यत आह—मूर्तं चामूर्तं च मूर्तं सावयवं कार्यममूर्तं तद्विपरीतं च कारणम् । अथानयोर्मध्ये यन्मूर्तं तदसत्यम् "वाचाऽऽरम्भणं विकारो नामधेयम् " इति **श्रुतेः** । यदमूर्तं तत्सत्यम् " मृत्तिकेत्येव सत्यम् " इति (छान्दो० अ० ६) **श्रुतेः** । यत्सत्यं परमार्थसत्यं सर्वाधिष्ठानं तद्ब्रह्म पारिवृढम् । ' सदेव सोम्येदमग्र आसीत् ' ' तत्सत्यं स आत्मा ' इति **श्रुतेः** । ब्रह्मशब्दार्थमाह—यद्ब्रह्म तज्ज्योतिः प्रकाशस्वभावं यत्तज्ज्योतिर्ब्रह्माख्यं स आदित्यः सूर्यः ' येन सूर्यस्तपति तेजसेद्धः ' इति **श्रुतेः** । स आदित्यो वा एष ब्रह्मप्रकाशात्मक ओमित्येतदात्मोंकारस्वरूपोऽभवत्प्रणवात्मनोदित इत्यर्थः । ओंकारो ह्यनुज्ञाक्षरं प्रसिद्धम् "तद्वा एतदनुज्ञाक्षरं यद्धि किंचानुजानात्योमित्येव तदाह" इति (छान्दो० अ० १) **श्रुतेः** । आदित्यश्चानुज्ञां कुर्वन्निव जगतामुदेति ' य एवासौ तपति तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ' इति **श्रुतेः** । एवं प्रणवीभूतः स आदित्य आत्मानं प्रणवं त्रेधा त्रिप्रकारमकुरुत कृतवान् । ओमिति अ उ म् इति तिस्रो मात्रा अवयवा एताभिः सर्वमिदमोतं प्रोतं चैव । यथा दीर्घतन्तुषु तिर्यक्तन्तवः प्रोतास्तिर्यक्तन्तुषु दीर्घतन्तव ओता वैपरीत्येन वा परस्परं संयोगविशेषेणैकीभूताः सन्तः पटशब्दवाच्या भवन्त्येवं प्रणवात्मके मय्येवाशेषस्योतप्रोततयाऽवस्थानादहमेव प्रणवात्मोतं च प्रोतं चास्मि न मत्तोऽन्यत्किंचिदित्येवं ह्याह—स आदित्यो यतस्तस्मादेतद्वा एष वा आदित्य ओमित्योंकार एवेत्येवं ध्यायत चिन्तयत हे वालखिल्याः । ध्यानशब्दार्थमाह—आत्मानं प्राणप्रधानं प्रत्यञ्चमादित्य आदित्यं चाऽऽत्मनि युञ्जीत व्यत्ययो बहुलमिति लकारवचनव्यत्ययेन योजयतैकात्मतां भावयतेत्यर्थः । इतीत्यनुवाकसमाप्त्यर्थः ॥ ३ ॥

ओंकारेणाऽऽत्माभिध्यानविधिं महीकुर्वंस्तत्रैव विशेषान्तरं विधित्सन्नाह—

**अथान्यत्राप्युक्तमथ खलु य उद्गीथः**
**स प्रणवो यः प्रणवः स उद्गीथः ।**

**अथान्यत्राप्युक्तमित्यादिना ।** अथैतदन्यत्र च्छान्दोग्येऽप्युक्तं प्रणवस्योपासनम् । यद्यपि तत्राङ्गावबद्धमुपासनमिह तु स्वतन्त्रं तथाऽपि स्तुत्यर्थमुदाहरणं न गुणोपसंहारार्थमिति द्रष्टव्यम् । प्रणवोद्गीथयोरेकत्वकथनारम्भार्थोऽथशब्दः । खलुशब्दः कर्मप्रकरणोक्तोद्गीथस्मारणार्थः । य उद्गीथः सामगानामुद्गीथभक्त्यवयव ओंकारः स बह्वृचानां शस्त्राङ्गभूतः प्रणवः, यश्च बह्वृचानां प्रणवः स उद्गातॄणामुद्गीथः ।

एवं शस्त्रस्तोत्राङ्गतया भिन्नस्थाननिवेशिन्योरोंकारव्यक्त्योरभेददृष्टिं विधाय तस्योद्गीथात्मकस्य प्रणवस्याऽऽदित्यात्मना द्रष्टव्यतामाह—

---

१ ग. °र्तं मूर्छितव° । २ क. °थस्मर° ।

**इत्यसौ वा आदित्य उद्गीथ एष प्रणवा इत्येवं ह्याहोद्गीथं प्रणवाख्यं प्रणेतारं भारूपं विगतनिन्द्रं विजरं विमृत्युं त्रिपदं त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवं ह्याह ।**

इत्यसौ वा आदित्य उद्गीथ उद्गीथावयव ओंकार इत्यर्थः। एष आदित्य एव प्रणवः शस्त्राङ्गभूत ओंकार इत्येवं ह्याह च्छान्दोग्यश्रुतिरित्यर्थः । एवं स्तुत्या महीकृतमादित्यं पुनर्विशिनष्टि गुणान्तरविशिष्टतया ध्यानार्थमुद्गीथमित्यादिना । छन्दोगानामुद्गीथभक्त्यवयवत्वेनोद्गीथं बह्वृचानां शस्त्रान्तर्गतप्रणवाख्यं प्रणेतारं प्रकर्षेण तत्तत्कर्मणां प्रवर्तयितारमत एव प्रणवाख्यमित्यर्थः । भाः प्रकाशो रूपं स्वरूपं यस्य स भारूपस्तम् । विगता[1] नित्यनिवृत्ता निद्राऽविद्या तमोरूपा यस्मात्तं विगतनिद्रम् । विजरं जराराहितं सदैकरूपमिति यावत् । विमृत्युं विगतमृत्युमविनाशिनम्। त्रीणि पदानि यस्य जाग्रत्स्वप्नसुषुप्ताख्यानि प्राणरूपस्य भुर्भुवः स्वरिति त्रैलोक्याख्यान्यादित्यरूपस्य स त्रिपदस्तं त्रिपदम् । त्रीण्यक्षराणि यस्याकारोकारमकाराख्यानि प्रणवरूपस्य स त्र्यक्षरस्तं त्र्यक्षरम्। पुनः पञ्चधा ज्ञेयं[2] विचिन्त्यं यतो गुहायां देहकुहररूपायां निहितमाश्रितं देहान्तश्चरन्तं प्राणापानादिरूपेण पञ्चधा ज्ञेयमित्यर्थः । इत्येवं ह्याह गुणविधायिनी श्रुतिरिति शेषः । एवं विशेषितमोमित्यनेनैतदुपासीतेति वक्ष्यमाणेनान्वयः ।

उक्तविशेषणस्याऽऽदित्यात्मनो भारूपत्वं विशेषतो ध्येयामित्यभिप्रेत्य वाच्यवाचकयोः परब्रह्मप्रणवयोः सारभूतोऽयं सवितेति तन्महिमानमाविष्करोति—

**ऊर्ध्वमूलं**

**ऊर्ध्वमूलमिति** । ऊर्ध्वं विकारातीतं परं ब्रह्म मूलमुपादानम् ।

तदेव मूलं स्वरूपतो निर्दिशति—

**त्रिपाद्ब्रह्म शाखा आकाशवाय्वग्न्युदकभूम्यादय एकोऽश्वत्थनामैतद्ब्रह्मैतस्यैतत्तेजो यदसौ[3] आदित्यः ।**

**त्रिपाद्ब्रह्मेति** । त्रिपादस्यामृतं दिवीति मन्त्रभागप्रकाशितं विकारातीतं ब्रह्मास्य वाच्यप्रपञ्चस्याश्वत्थनाम्न ऊर्ध्वं मूलमित्यर्थः। अस्य शाखा आकाशादयो विकाराः। भूम्यादय इत्यादिपदेन चराचरग्रहः । शिष्टं प्रसिद्धार्थम् । एवंलक्षण एको ब्रह्माण्डलक्षणः समष्टिपिण्डोऽश्वत्थनामा श्वःपर्यन्तं स्थास्यतीतिविश्वासानर्हत्वादश्वत्थसंज्ञ इत्यर्थः। यदेतदश्वत्थसंज्ञितं जगदेतद्ब्रह्म ब्रह्मोपादानत्वान्न ततोऽन्यदित्यर्थः । तथाच **काठकश्रुतिः**—'ऊर्ध्वमूलो अवाङ्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इति। एतस्य सर्ववाच्याश्रयतया सर्वात्मकस्य ब्रह्मण एतत्तेजः प्रकाशः सार इत्यर्थः । किमित्युच्यते यदसा आदित्यो योऽसावादित्यः प्रसिद्ध एतद्ब्रह्मणस्तेज इति योजना ।

---

१ ग. °ता नित्यानि° । २ ग. °यं चि° । ३ क. °सावादि° । ४ क. °स्याधोऽश्व° ।

सर्ववाच्याधिष्ठानब्रह्मसारत्वमुक्त्वा सर्ववाचकाधिष्ठानप्रणवसारतां चास्योपदिशति—

**ओमित्येतदक्षरस्य चैतत् ।**

**ओमित्येतदक्षरस्य चैतादिति** । एतत्तेजो यदसा आदित्य इति पूर्वेण योजना । ओंकारादित्ययोरुक्तं महिमानमनूद्योपास्यत्वं सिद्धमुपसंहरति—

**तस्मादोमित्यनेनैतदुपासीताजस्रमिति ।**

**तस्मादिति** । एतत्प्राणादित्यात्मकं तत्त्वमजस्रमुपासीतेति संबन्धः । इतिशब्द उपासनविध्यनुवादसमाप्त्यर्थः ।

प्रणवेनोपासनाविधिस्तुतये प्रणवमाहात्म्यवादिवाक्यमुदाहरति—

**एकोऽस्य संबोधयितेत्येवं ह्याह ।**[1]

**एकोऽस्येति** । अस्य प्रणवस्य एकः श्लोकरूपो मन्त्रः संबोधयिता[2] माहात्म्यप्रकाशको विद्यत इत्येवं ह्याह कठश्रुतिरित्यर्थः ।

तमेव श्लोकं किंचिदक्षरभेदेन पठति—

**एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् ।**
**एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥**

**एतदिति** । एतदेवाक्षरं प्रणवाख्यं पुण्यं पुण्यप्रदं पुण्यकर्मसु प्रयुज्यमानमित्यर्थः । एतदेवाक्षरं परं परब्रह्मप्रकाशकं मोक्षदमित्यर्थः । किं बहुनैतदेवाक्षरं ज्ञात्वा ममेष्टदमेतदेव नान्यादिति निश्चित्य तत्परः सन्यो यदिच्छत्यभ्युदयं वा मोक्षं वा फलं तस्य तद्भवत्येवेत्यर्थः ॥ ४ ॥

**अथान्यत्राप्युक्तं स्वनवत्येषाऽस्य तनूः ।**

पुनरप्युपास्यस्याऽऽत्मनो गुणान्तरविधानायोऽनुवाकः । **अथान्यत्राप्युक्तमिति** । अस्य प्राणादित्यात्मन एषा तनूस्तनुः स्वनवती शब्दवती ।

सा केत्यत आह—

**योमिति स्त्रीपुंनपुंसकेति लिङ्गवत्येषाऽथाग्निर्वायुरादित्य[3] इति भास्वत्येषाऽथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषाऽथ गार्हपत्यो दक्षिणाग्निराहवनीय[4] इति मुखवत्येषाऽथ ऋग्यजुः सामेति विज्ञानवत्येषा भूर्भुवः स्वरिति लोकवत्येषाऽथ भूतं भव्यं भविष्यदिति[5] कालवत्येषाऽथ प्राणोऽग्निः सूर्य[6] इति प्रतापवत्येषाऽथान्नमापश्चन्द्रमा इत्याप्याय-**

---

१ क. संबन्धयि° । २ क. संबन्धयि । ३ ग. °दित्या इ° । ४ ग. °नीया इ° । ५ क. °ष्यच्चेति । ६ ग. सूर्या ।

**नवत्त्येषाऽथ बुद्धिर्मनोऽहंकार इति चेतनवत्त्येषाऽथ प्राणोऽपानो व्यान इति प्राणवत्त्येषेत्यत ओमित्युक्तेनैताः प्रस्तुता अर्चिता अर्पिता भवन्तीत्येवं ह्याहैतद्वै सत्यकाम परं चापरं च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५ ॥**

**योमितीति**। ओंकाररूपा तनुरुदात्तानुदात्तस्वरितरूपत्रैस्वर्येणोच्चार्यमाणा स्वनवतीत्यर्थः। प्रणवावयवेष्वकारादिष्वेकैकं त्रिकं त्रिकमवयवशो विभज्य प्रणवावयविनः स्वनवत्याद्यात्मतामापाद्य तादृक्प्रणवतनुत्वेन प्राणादित्यात्मनस्तत्तद्गुणवैशिष्ट्यं ध्येयमिति प्रकरणार्थः। येषां ये स्वभावसिद्धा धर्मास्तैस्तद्वत्त्येषेति सुबोधोऽक्षरार्थः। इति यतोऽत ओमित्युक्तेनाक्षरेणैताः प्रस्तुताः स्वनवत्याद्यास्तनवोऽर्चिताः पूजिताः स्तुता अर्पिताः प्राणादित्यात्मनि विशेषणत्वेन समर्पिताः समारोपिता भवन्तीत्येवं ह्याहैतमर्थं प्रश्नश्रुतिरित्यर्थः। तामेव पठति—**एतद्वा इति**। पिप्पलाद आचार्यः सत्यकामं शिष्यं प्रत्याह हे सत्यकामोमित्येतदक्षरमिति यदस्त्येतद्वा एतदेव परं च ब्रह्मापरं च ब्रह्मेति विद्धीति। परापरब्रह्मज्ञानोपासनयोरालम्बनमेतदेवाक्षरमित्यर्थः ॥ ५ ॥

एतौ प्राणादित्या एता उपासीतोमित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति यत्सूत्रमुपन्यस्तं तत्र प्रणवापेक्षितो विशेषः सर्व उक्त इदानीं व्याहृत्यपेक्षितो विशेषस्तदुत्पत्त्यादिप्रशंसनेनोपपादनीय इत्युत्तरोऽनुवाक आरभ्यते—

**अथाव्याहृतं वा इदमासीत्स सत्यं प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद्भूर्भुवः स्वरित्येषैवास्य प्रजापतेः स्थविष्ठा तनूर्या लोकवतीति स्वरित्यस्याः शिरो नाभिर्भुवो भूः पादा आदित्यश्चक्षुः।**

**अथाव्याहृतं० चक्षुरिति**। अथेति व्याहृतिव्याख्यानारम्भार्थः। इदं त्रैलोक्यं पूर्वमव्याहृतमशब्दनिर्दिष्टं वा आसीत्। सत्यं स प्रजापतिरिति संबन्धः। सच्च त्यच्चेति सत्यं पञ्चभूतपरिणामात्मकमव्याहृतमासीत्। तदा स प्रजापतिस्त्रैलोक्यशरीरो ब्रह्मा तपस्तप्त्वा प्रागाहितसंस्कारोद्बोधकमालोचनं कृत्वा भूर्भुवः स्वरित्येवमनुव्याहरदनुक्रमेणोच्चारितवान्। पादनाभिशिरःप्रदेशानालभ्य भूर्भुवः स्वरिति क्रमेणोच्चारितवानित्यर्थः। एवं स्पष्टोच्चारणे हेतुमाह—**एषैव** लोकत्रयात्मिकाऽस्य प्रजापतेः स्थविष्ठा स्थूलतमा तनूः शरीरं या लोकवतीति पूर्वानुवाकेऽवोचामित्यध्याहारः। तत्र का व्याहृतिः किमङ्गवाचिकेत्येतद्विभजते स्वरित्यादिना। अस्यास्तन्वाः। एवं व्याहृत्युत्पत्तिं तदर्थं चोपदिश्य प्रकृतस्याऽऽदित्यात्मन उपास्यस्य तत्संबन्धं वक्तुं व्याहृतिशरीरप्रजापत्यवयवतां तस्योपदिशति—**आदित्यश्चक्षुरिति**।

---

१ ग. °कारा इ°। २ ग. व्याना। ३ क. °दिशं°। ४ क. तनुर्या। ५ क. °त्मकं व्या°। ६ क. तनुः। ७ क. °भज्यते।

सर्वाङ्गेषु चक्षुषः प्राधान्यमुपपादयन्नादित्यं मही करोति—

**चक्षुरायत्ता हि पुरुषस्य महती मात्रा चक्षुषा ह्ययं मात्राश्चरति**

**चक्षुरायत्ता हीत्यादिना** । पुरुषस्य व्यवहर्तुर्महत्यपारिमिता मात्रा मीयते ज्ञायत इति मात्रा विषयो मितिरेव वा मात्रा विषयसिद्धिर्हि निश्चितं चक्षुरायत्ता चक्षुरधीना । उक्तमर्थं लोकप्रसिद्ध्योपपादयति । हि यस्मादयं पुरुषश्चक्षुषा मात्रा विषयांश्चरति दूरस्थानपि निम्नोन्नतसमविषमदेशानपि प्रतिपद्यतेऽतश्चक्षुरायत्ता पुरुषस्य महती मात्रेत्यर्थः ।

प्रजापतेर्मुख्याङ्गत्वेनाऽऽदित्यं महीकृत्येदानीं साक्षादेव प्रजापत्यात्मतां संपादयति—

**सत्यं वै चक्षुरक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरति।**

**सत्यमिति** । वै प्रसिद्धं चक्षुः सत्यं चक्षुर्दृष्टस्य सत्यत्वप्रसिद्धेः प्रजापतिरपि सत्यं सत्पदात्मकत्रैलोक्यशरीरत्वादतश्चक्षुरादित्यः सत्यमित्युक्ते सत्यात्मा प्रजापतिरादित्य इत्युक्तं भवतीति भावः । चक्षुषः सत्यत्वमुपपादयति—**अक्षिणीति** । चरत्यविसंवादितया हि प्रसिद्धमेतदित्यर्थः ।

उपसंहरति—

**एतस्माद्भूर्भुवः स्वरित्युपासीतानेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीत्येवं ह्याह ।**

**एतस्मादिति** । उक्ताद्धेतोरित्यर्थः । अनेन हि व्याहृत्यात्मतयाऽऽदित्यात्मोपासनेन विश्वचक्षुः सूर्य इव विश्वात्मा प्रजापतिरुपासितो भवतीत्येवं ह्याह क्वचिच्छ्रुत्यन्तरमिति शेषः ।

किमाहेति तदाह—

**एषा वै प्रजापतेर्विश्वभृत्तनूः ।**

**एषेति** । एषा वै पूर्वोक्ता सूर्यरूपा प्रजापतेर्ब्रह्मणो विश्वं बिभर्तीति विश्वभृत्तनूः शरीरम् ।

कथमस्या विश्वभृत्त्वमिति तदाह—

**एतस्यामिदं सर्वमन्तर्हितमस्मिंश्च सर्वस्मिन्नेषाऽन्तर्हितेति ।**

**एतस्यामिति** । एतस्यां तनाविदं सर्वं दृश्यमन्तर्हितं गूढम् । आदित्यप्रकाशाच्छादितमेव सर्वमित्यर्थः । तथाऽस्मिंश्च सर्वस्मिन्दृश्ये विषय एषा तनूरन्तर्हिता तत्तदर्थप्रकाशकत्वेन तत्तदात्मतामापन्ना सती प्राकृतैर्जनैः परिपूर्णा न दृश्यत इत्यर्थः । यद्वा प्राणरूपेण सर्वस्मिन्नेषाऽन्तर्हितेत्यर्थः ।

व्याहृतिगुणविधिमुपसंहरति—

**तस्मादेषोपासीत ॥ ६ ॥**

**तस्मादिति** । एषा व्याहृत्यात्मिका तनूरुक्ता तस्मादेतां तथैवोपासीतेति योजना ॥ ६ ॥

इदानीं पूर्वं प्रतिज्ञातां सावित्रीशरीरतां चास्योपपादयितुमुत्तरानुवाक आरभ्यते—

**तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिनः ।**

**तत्सवितु० ब्रह्मवादिन इति** । आदौ मन्त्रप्रतीकान्यादाय व्याचष्टे । तत्सवितुर्वरेण्यमिति प्रथमः पादस्तस्यार्थोऽसौ वा इत्यादिनोच्यते । तत्र सवितुस्तत्स्वरूपं वरेण्यमित्यन्वये सवितुरिति षष्ठी । पुरुषस्य चैतन्यमितिवदविवक्षितस्वार्थेति मत्वा सवितृपदार्थमाह—**असौ वा इति** । असौ वै प्रसिद्धो जगदवभासकत्वेन विभाव्यमानः सविता सवितुरिति मन्त्रपदेनोक्त इत्यर्थः । वरेण्यशब्दार्थमाह—**स वा इति** । स वै स एव सवितैवं यथोक्तात्मस्वरूपेण प्रवरणीयः प्रकर्षेण तदेकनिष्ठतया प्रार्थनीयस्तदात्मभावना कार्येति यावत् । केनाऽऽत्मकामेन काम्यत इति काम आत्मैव कामः प्राप्यो यस्य स आत्मकामस्तेनाऽऽत्मनः स्वाभाविकस्वरूपाविर्भावकामेनेति यावत् । इत्याहुर्ब्रह्मवादिनो ब्रह्मवदनशीला वेदार्थविद इत्यर्थः । द्वितीयपादप्रतीकारम्भार्थोऽथशब्दः । भर्गो देवस्य धीमहीति प्रतीकग्रहणम् । तत्र देवपदस्यार्थमाह—सविता वै देवः सवितैव देवशब्दार्थः स एव द्योतनाद्देव उच्यते । अत्रापि षष्ठ्यर्थो न विवक्षितः । ततस्तस्माद्द्योतनस्वभावत्वाद्योऽस्य सवितुर्भर्गाख्यो व्याख्यास्यमानभर्गशब्द[2]वाच्य आत्मा तं[1] चिन्तयामीति धीमहीत्यस्यार्थमाहुर्ब्रह्मवादिन इति पूर्ववत् । चिन्तयामीत्येकवचनमर्थतः पर्यायनिर्देशनपरं न तु धीमहीत्युक्तबहुवचनस्यैकवचनान्तत्वे[3]नोहप्रदर्शनार्थम् । 'वयं स्याम पतयो रयीणाम्' इतिवत्कर्त्रैक्येऽपि मन्त्रेषु बहुवचनप्रयोगस्य साधुत्वाच्चक्षुरादिकरणोपाधिभेदेनैकस्मिन्नपि बहुत्वसंभवाद्वेति द्रष्टव्यम् । अथ तृतीयपादग्रहो धियो यो नः प्रचोदयादिति । धीशब्दार्थः प्रसिद्ध एवेत्याह—**बुद्धयो वै धिय इति** । अन्तःकरणवृत्तय इत्यर्थः । ता बुद्धीरस्माकमस्मदीया यः प्रचोदयात्प्रकृष्टं प्रेरयात्वित्याशीषि लिङ् । इत्याहुरित्युक्तार्थम् । तथा चेत्थं मन्त्रयोजना, यो देवः सविता तस्य सवितुर्देवस्य तद्वरेण्यं भर्गाख्यं वयं धीमहि स नो धियो धीः प्रचोदयादिति ।

---

१ क. °ख्य आत्मा तं चि° । २ क. °ब्दभाग्य आ° । ३ क. °त्वेनेह ।

यदुक्तं मन्त्रव्याख्यानेऽसौ वा आदित्यः सविता सविता वै देवो योऽस्य भर्गाख्य इति च तत्राऽऽदित्यसवितृभर्गशब्दा न स्पष्टार्था इति तान्व्याख्यातुमारभमाणोऽतिगहनार्थत्वाद्भर्गशब्दार्थं तावदाह—

**अथ भर्ग[1] इति यो ह वा अमुष्मिन्नादित्ये**
**निहितस्तारकोऽक्षिणि वैष भर्गाख्यः ।**

**अथ भर्ग इत्यादिना** । अथ पदविशेषार्थ उच्यते भर्ग इति कोऽर्थोऽयमेव यो ह य एव वै 'य आदित्ये तिष्ठन्' 'यश्चक्षुषि तिष्ठन्' इति च श्रुत्यन्तरप्रसिद्धोऽमुष्मिन्नादित्ये मण्डलात्मनि निहितः संनिहितस्तथाऽक्षिणि चक्षुर्मण्डले वा यस्तारकः कृष्णतारकोपलक्षितोऽन्तर्यामी देव एष भर्गाख्य इति ।

भर्गत्वमस्य कथमित्यपेक्षायां तन्नाम निर्वक्ति—

**भाभिर्गतिरस्य हीति भर्गः ।**

**भाभिरित्यादिना** । भाभिः किरणैरधिष्ठानधर्मैरस्य गतिर्गमनं विषयव्याप्तिरेस्यति व्युत्पत्तेर्भर्ग इत्येकं निर्वचनमित्यर्थः ।

निर्वचनान्तरमाह—

**भर्जयतीति वैष भर्ग[2] इति रुद्रो ब्रह्मवादिनः ।**

**भर्जयतीति** । वाऽथवा भर्जयति जगत्संहरतीति रुद्रो भर्ग इति ब्रह्मवादिन आहुरिति योजना ।

इदानीं भकाररेफगकाराणां प्रत्येकनिर्वचनं ब्रुवन्नस्य भर्गाख्यां महीं करोति—

**अथ भ इति भासयतीमाँल्लोकान्र इति रञ्जयतीमानि भूतानि ग इति गच्छन्त्यस्मि[3]न्नागच्छन्त्यस्मादि[4]माः प्रजास्तस्माद्भरगत्वाद्भर्गः ।**

**अथ भ इत्यादिना** । भासयति तेजोमण्डलान्तर्गतचित्प्रकाशेनेमान्सर्वानेव लोकानिति भ इत्युच्यत इत्यर्थः । इमानि भूतानि स्थावरजङ्गमात्मकानि प्राणानुगतचिदानन्दात्मना रञ्जयति प्रीणयति सुखासक्तं करोतीति र उच्यत इत्यर्थः । अस्मिन्सर्वकारणात्मनि सुषुप्तिप्रलययोः सर्वा इमाः प्रजा गच्छन्ति लयं प्राप्नुवन्ति तथा प्रबोधसृष्ट्योरस्मादेवाऽऽगच्छन्त्याविर्भवन्तीति ग इत्युच्यत इत्यर्थः । तस्माद्भासनाद्रञ्जनाद्गमनाच्च भरगत्वाद्भर्ग इति सर्वात्मोच्यत इत्यर्थः ।

इदानीमादित्यादिनामनिर्वचनं कुर्वंस्तत्पर्यायशब्दानपि कांश्चिन्निर्वक्ति—

**शश्वत्सूयमा[5]नात्सूर्यः सवनात्सविताऽऽदानादादित्यः**
**पवनात्पावनोऽर्था[6]ऽऽपोऽप्यायनादित्येवं ह्याह ।**

---

१ ग. भर्गो । २ ग. भर्गो । ३ क °स्मिन्नित्याग° । ४ क. °दिति वेमाः । ५ क. °मानत्वात्सू° । ६ ग. °थापो प्या° ।

**शश्वत्०** ह्याहेति । शश्वत्पुनः पुनः सूयमानात्सवनकरणात्सूर्यः सूर्यो हि प्रातरादिसवनकर्ता प्रसिद्ध इत्यर्थः । सवनादन्नादिनिष्पादनेन प्राणिनां प्रसवनात्सविता । आदानाद्भौमरसानां प्राण्यायुषां वाऽऽदित्यः । पवनात्पवित्रीकरणात्पावनो वाय्वात्माऽप्येष इत्यर्थः । अथाप्यापो जलमप्ययमित्यर्थः । कुतोऽप्यायनाज्जगदाप्यायनादित्यर्थः । इत्येवं हि नामनिर्वचनान्यभिप्रेत्याऽऽहाऽऽचार्य इत्यर्थः ।

एवं मन्त्रपादद्वयोक्तमाधिदैविकं तत्त्वं निरुच्य तृतीयपादोक्तमाध्यात्मिकं तत्त्वं निर्वक्ति—

**खल्वात्मनोऽऽत्मा नेताऽमृताख्यश्चेता मन्ता गन्तोत्स्रष्टाऽऽनन्दयिता कर्ता वक्ता रसयिता घ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे संनिविष्ट इत्येवं ह्याह ।**

**खल्वात्मनो०** ह्याहेति । अमृताख्यः प्राणरूपः । 'प्राणो वा अमृतम्' इति श्रुत्यन्तरात् । अमृताख्यः खलु प्राणरूपः । आत्मनः कार्यकारणसंघातस्य नेता प्राणोपाधिक आत्मा मर्त्यसंघातनेतृत्वेन ततो विलक्षणत्वादमृताख्य इत्यर्थः । चित्तवृत्त्युपाधिकश्चेता । मनोवृत्त्युपाधिना मन्ता । पादोपाधिप्रधानो गन्ता । पायूपाधिनोत्स्रष्टा । उपस्थोपाधिनाऽऽनन्दयिता । हस्तोपाधिकः कर्ता । वागिन्द्रियोपाधिको वक्ता । रसोपाधिको रसयिता । घ्राणोपाधिर्घ्राता । चक्षुरुपाधिको द्रष्टा । श्रोत्रोपाधिः श्रोता । त्वगिन्द्रियोपाधिः स्पृशति स्प्रष्टा भवतीत्यर्थः । चकाराद्बुद्ध्याऽध्यवसिताहंकारेणाभिमन्ता चोच्यते । कोऽयमेवं व्यपदिश्यत इत्यत आह—विभुर्व्यापको विग्रहे देहे संनिविष्टः सम्यगभिमानितया निविष्टः । स्वैवेश्वरो देहमनुप्रविष्टः प्राणान्तःकरणेन्द्रियोपाधिभिर्नानाव्यपदेशभाग्भवति स एकः सर्वबुद्धिप्रेरक आत्मोपास्य इत्यभिप्रायः । इत्येवं ह्याहेति पूर्ववत् ।

नन्वेकस्याऽऽत्मनोऽनेकोपाधिकृतः संज्ञाभेद इत्ययुक्तं प्रतीयमानप्रातिस्विककार्यभेदेनाऽऽत्मभेदस्य प्रामाणिकत्वादिति प्रासङ्गिकं चोद्यं परिहर्तुमात्मानात्मतत्त्वं निरूपयति—

**अथ यत्र द्वैतीभूतं विज्ञानं तत्र हि शृणोति पश्यति जिघ्रति रसयति चैव स्पर्शयति**

**अथ यत्रेत्यादिना ।** अथैवं सत्यात्मभेदशङ्का न कार्येति शेषः । यत्र द्वैतीभूतं भेदमापन्नं विज्ञानं चित्प्रकाशस्तत्र हि तस्यामवस्थायां जाग्रदादौ शृणोति पश्यतीत्यादिव्यपदेशभागात्मा भवति न स्वभावत इत्यर्थः ।

---

१ क. °कुन आप्या° । ग. कुनः प्या° । २ ग. °विष्टा इ° । ३ क. °रणोपा° । ४ क. °त्यर्थः । इ° । ५ क. °यते चै° । ६ क. °त्मा न ।

कथमेतदवगम्यत इति तत्राऽऽह—

**सर्वमात्मा जानीतेति**

**सर्वमात्मा जानीतेतीति** । सर्वं सर्वेन्द्रियद्वारं व्यवहारजातमात्मैक एव जानीते स्वात्मैकनिष्ठत्वेन प्रत्यभिजानाति । इति हेतोर्न परमार्थो भेद इत्यर्थः । तथाच **श्रुत्यन्तरम्**—'आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति' इत्युपाध्युपरागपरित्यागेन सर्वोपाध्युपलक्षितमेकमात्मानं निरुपपदेनाऽऽत्मशब्देन निर्दिशति । लोके च यश्चक्षुषा रूपमद्राक्षं सोऽहमिदानीं रसनेन रसमनुभवामीति प्रत्यभिज्ञानुभवः प्रसिद्धोऽतो नाऽऽत्मभेदशङ्केति भावः ।

उपाध्यन्वये भेददर्शनं व्यपदेशभेदं चोपपाद्य तद्व्यतिरेके तद्व्यतिरेकमुपपादयति—

**यत्राद्वैतीभूतं विज्ञानं कार्यकारणकर्मनिर्मुक्तं निर्वचनमनौपम्यं निरुपाख्यं किं तदवाच्यम् ॥ ७ ॥**

**यत्राद्वैतीभूतमिति** । यत्र यस्यामवस्थायां सुषुप्त्यादौ सर्वोपाध्युपरमादद्वैतीभूतं विज्ञानं तत्रेत्यध्याहारस्तदा कार्यकारणकर्मभिर्विषयकरणक्रियाभिरवच्छेदकैर्निर्मुक्तमसंस्पृष्टमत एव निर्वचनं विशेषसंज्ञावचनशून्यमनुपममेवानौपम्यमुपमारहितं स्वतो निर्विशेषमित्यर्थः । अत एव निरुपाख्यमप्रमेयमिदं तदित्युल्लेखायोग्यमित्यर्थः । किमेवं निषेधमुखेनोच्यत इदं तदिति कस्मान्नोच्यत इति शङ्कते—**किं तदिति** । अशक्यं तथा वक्तुमित्युत्तरमाह—**अवाच्यमिति** । सर्ववाग्व्यापारोपरमे यदवशिष्यते सर्वोपरमसाक्षित्वेन तदद्वैतं विज्ञानं स्वाभाविकमात्मरूपमिति भावः । तथा च बृहदारण्यके—**'यत्र** हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिना द्वैतदर्शनस्याऽऽभासतामुक्त्वा 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिनाऽद्वैतमात्मतत्त्वमुपपादयति श्रुतिः । तस्मादनामरूपक्रियस्याऽऽत्मनो नामरूपक्रिया अविद्याकल्पितप्रपञ्चोपाधिनिबन्धना एवेति परमार्थ इति ॥ ७ ॥

यद्यप्येवं शारीरस्याऽऽत्मनो न भेदः पारमार्थिकस्तथाऽप्यधिदैवादादित्यात्मन ईश्वरादयं भिन्न इति शङ्कां वारयन्नस्यैव ब्रह्मादयोऽपि विभूतय इत्येतमेव मही करोति—

**एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्र इन्दुरिति ।**

**एष हि खल्वात्मेशानः० इन्दुरितीति** । य ईशानादिभिः शब्दैर्व्यपदिश्यते

---

१ क. °मार्थतो भे° । २ क. °महमद्रा° । ३ क. °भवसिद्धाऽतो । ४ क. °वभेद° । ५ क. °नोऽभे° ।

श्रुतिस्मृतिपुराणेषु स एष हि खलु यः पूर्वानुवाकान्ते निर्दिष्ट एष एव नान्य इत्यर्थः। तत्र रुद्रान्तस्तमःप्रधानमायोपाधिकः । हंसान्तो रजःप्रधानमायोपाधिकः । शास्ता विष्णुर्नारायण इति शुद्धसत्त्वप्रधानमायोपाधिकः । जगत्संहारसृष्टिस्थितिहेतुतयाऽभिव्यक्तविशेषास्तत्तत्संज्ञाभाजो ये जायन्ते ते सर्वेऽप्ययमात्मेत्यभिप्रायः । अयमेवार्कोऽर्च्यः पूज्यः सर्वकर्मतत्फलाश्रयत्वात् । तथाच श्रुतिः—'एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कः' (बृहदा० अ० ३) इति । सवितृशब्दो व्याख्यातः । अयमेवाऽऽत्मा पृथिव्यादिरूपेण धार्ता सर्वस्य धारयिता । विधाता पित्रादिरूपेण पुत्रादीनां निर्माता । सम्राट् सार्वभौमो राजा । इन्द्रः स्वराट् स्वर्गाधिपतिः । इन्दुश्चन्द्रमाः प्रसिद्धः । एते सर्वेऽप्येष एवाऽऽत्मेति ।

किं च न केवलमेतावत्—

**य एष तपत्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन ।**

**य एष० हिरण्मयेनाण्डेनेति** । यस्तपति जगदभितपति सविता सोऽप्येष एवेति योजना । कथं तर्हि स आत्मरूपेण न विभाव्यत इत्यत आह—**अग्निरिवेति** । यथा महता ज्वालाजटिलेनाग्निनाऽग्निर्दीपो मन्दः पिहित आच्छन्नो भवत्येवं सहस्राक्षेणानेकच्छिद्रवता हिरण्मयेन तेजोमयेनाण्डेन मण्डलात्मकेन ब्रह्माण्डेन वा पिहित आच्छादितोऽतो नाऽऽत्मरूपेण दृश्यत इत्यर्थः । तथाच **मन्त्रवर्णः**—'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्' इति ।

यस्मादयमात्मैकोऽप्येकरूपोऽप्युपाधिभिरनेकोऽनेकरूप इव च विभाव्यमान उपाध्यावृतनिजस्वरूपस्तस्मान्मुमुक्षुभिरावरणनिराकरणेन तद्दर्शने यत्न आस्थेय इत्युपदिशति—

**एष वाव जिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्त्वाऽरण्यं गत्वाऽथ बहिः कृत्वेन्द्रियार्थान्स्वाच्छरीरादुपलभेतैनमिति ।**

**एष वा० उपलभेतैनमितीति** । एष एवाध्यात्माधिदैवरूपेण विभाव्यमान आत्मा किंस्वरूप इति जिज्ञासितव्यो ज्ञातुमेष्टव्यः, तैत्तत्त्वज्ञानं संपादयितुं गुरूपसत्तिः कार्येत्यर्थः । विज्ञानसंपादनप्रकारमाह—अन्वेष्टव्यो गुरूपदिष्टवाक्यमर्यादामाश्रित्यान्वेषणेन मननेनावधारणीय इत्यर्थः । तत्र 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इति श्रुतिमाश्रित्य संन्यासमात्मज्ञानाङ्गमुपदिशति—**सर्वभूतेभ्य इति** । सर्वभूताभयदानं संन्यासः स च कर्मपरित्यागलक्षणस्तं कृत्वेत्यर्थः । संन्यस्य गुरुभ्यः सब्रह्मचारिभ्यश्च श्रवणमनने संपाद्यानन्तरमरण्यं विजनं देशं मनःप्रसादकरं गत्वाऽथ तदेन्द्रियार्थान्बाह्यान्दूरतः कृत्वाऽन्तःशरीर एवाऽऽत्मानमन्विष्य निदिध्यासनं कुर्वन्स्वाच्छरीरा-

१ ग. °वैत° । २ क. °ता धा° । ३ क. तत्त्व° ।

त्स्थूलसूक्ष्मलक्षणादेनमात्मानमुपलभेत साक्षात्कारवान्भवेदित्यर्थः । इतिशब्दः प्रासङ्गिकोपदेशसमाप्त्यर्थः ।

इदानीं प्रकृते प्राणादित्ययोरेकत्वे प्रश्नोपनिषद्गतं मन्त्रमुदाहरति—

**विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्। सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥**

**विश्वरूपमित्यादिना** । पूर्वार्धे द्वितीयान्तानि पदानि प्रथमान्तत्वेन विपरिणेयान्युदयतीति क्रियायोगार्थम् । विश्वानि नीलपीतादीनि रूपाणि यस्य स विश्वरूपः 'असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः' इति श्रुतेः । हरति सर्वेषां प्राणिनामायूंषि भौमान्वा रसानिति हरिणः । जातं जातं वेत्ति सर्वप्रवृत्तिसाक्षितयेति वा जाते जाते विद्यते सर्वदेहगतोष्मरूपेण सर्वचक्षुरधिष्ठातृत्वेनेति वा जातवेदाः । परमयनं परायणं सर्वभासामाश्रय इति यावत् । ज्योतिरेकं ज्योतिरात्मनैक इत्यर्थः । यद्वा ज्योतिः प्रकाशस्वभाव एकोऽद्वितीयः 'सूर्य एकाकी चरति' इति श्रुतेः । तपति सर्वं संतापयतीति शोषयतीति तपन् । सहस्ररश्मिरपरिमितकिरणः । शतधाऽनेकधा प्रति प्राणिनां प्रतिमां प्रतीत्यभिमुखतया वर्तमान एष संदृश्यमानमण्डलस्थः सूर्यः सविता प्रजानां प्राणोऽन्तरात्मोदयत्युद्गच्छत्युदयाचलादिति मन्त्रपदानामर्थः । तथाच मन्त्रवर्णः " सूर्य आत्मा जगतस्तस्थुषश्च " इति ॥ ८ ॥

तदेवं प्राणादित्यात्मनोऽन्तर्बहिश्च विचरतः प्रजापतेः कार्यब्रह्मणोऽनेकगुणविशिष्टस्याहंग्रहेण प्रत्यगात्मतयोपासनं प्रणवव्याहृतिसावित्र्यनुबन्धमुपादिश्य तन्निष्ठस्योपासकस्योपस्थितान्नभोजने कर्तव्यविशेषमुपदिशति—

**तस्माद्वा एष उभयात्मैवंविदात्मन्नेवाभिध्यायत्यात्मन्नेव यजतीति ध्यानं प्रयोगस्थं मनो विद्वद्भिः ष्टुतं मनःपूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत् ।**

**तस्माद्वा० तत्पावयेदिति** । एष पूर्वोक्तः प्रत्यगात्मा यस्मादुभयात्मा प्राणादित्यरूपस्तस्माद्वै तस्मादेवैवंवित्पूर्वोक्तप्रकारेण प्राणादित्यात्मविदात्मन्नेवाऽऽत्मनि स्वस्वरूपाभेदेनैवाभिध्यायत्याभिमुख्येन प्रत्यक्तया प्राणादित्यौ ध्यायतीत्यर्थः । ततो यद्यजति पूजयति तन्महिमानमाविष्करोति तदप्यात्मन्नेवेत्यर्थः । इत्येवंप्रकारेण ध्यानं विद्वद्भिः ष्टुतं स्तुतं प्रशस्तमित्यर्थः । किं तद्ध्यानं प्रयोगस्थमुपासनाप्रयोगे स्थितं व्यापृतं मनस्तैलधाराघण्टानादादिवदविच्छेदेन दीर्घकालादरनैरन्तर्यमुपास्ये तत्त्वे निविष्टं मनोरूपं

१ क. °यती । २ ग. °त्यनेनः । किं ।

ध्यानमित्यर्थः । एवं ध्यायतः पुंसो यो मनःपूतिर्मनसो दुर्गन्धो दुर्वासनेत्येतत् । तं मनःपूतिमुच्छिष्टोपहतमित्यनेन वक्ष्यमाणेन मन्त्रेण तत्तस्मिन्काले पावयेत्पवित्रयेत् । एतन्मन्त्राभिमन्त्रितान्नप्राशनेन प्राणाग्निहोत्रविधिना च शोधयेदित्यर्थः ।

**मन्त्रं पठति—उच्छिष्टोच्छिष्टोपहतं यच्च पापेन**
**दत्तं मृतसूतकाद्वा वसोः पवित्रमग्निः सवितुश्च**
**रश्मयः पुनन्त्वन्नं मम दुष्कृतं च यदन्यत् ।**

**मन्त्रं पठति० यदन्यदिति** । अन्योच्छिष्टं स्वोच्छिष्टं चोच्छिष्टोच्छिष्टमुच्यते तेनोपहतं यद्वोच्छिष्टं चोच्छिष्टोपहतं चेत्युच्छिष्टोच्छिष्टोपहतमन्नं भोज्यम् । पापेन पापात्मना पतितेन दत्तं यच्चान्नं मृतसूतकाद्वोपहतं मृतसूतकिस्पृष्टं तत्स्वामिकं वा यदन्नमित्यर्थः । वसोर्वसुनाम्नो देवस्य पवित्रं पावयितृ । अग्निर्वैश्वानरः सवितुश्च रश्मयो मम मद्भोज्यं तदन्नं पुनन्तु पवित्रयन्तु यदन्यच्च मम दुष्कृतं पापाचरणं तच्च पुनन्त्वित्यर्थः ।

अनेन मन्त्रेण स्वभोज्यमन्नमभिमन्त्र्य पश्चात्—

**अद्भिः पुरस्तात्परिदधाति ।**

**अद्भिः० दधातीति** । पुरस्तात्प्राणाहुत्यारम्भात्पूर्वं याः स्मृतिप्राप्ता आपोशनाङ्ग-[1]भूता आपस्ताभिः परिदधाति प्राणादित्यरूपस्य स्वात्मनः परिधानं वस्त्राच्छादनमिदं क्रियत इति ताश्चिन्तयेदित्यर्थः ।

अनन्तरकर्तव्यं प्राणाग्निहोत्रं मन्त्रविनियोगेन विधत्ते—

**प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समा-**
**नाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोति ।**

**प्राणाय० अभिजुहोतीति** । प्राणाय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैर्यथापाठक्रमं भोज्यान्नरूपं सिद्धं द्रव्यमादायाऽऽभिमुख्येनाऽऽस्याग्नौ जुहोति जुहुयादित्यर्थः ।

**अथावशिष्टं यतवागश्नात्यतोऽद्भिर्भूय एवोपरि-**
**ष्टात्परिदधात्याचान्तो भूत्वाऽऽत्मेज्यानः प्राणोऽ-**
**ग्निर्विश्वोऽसीति च द्वाभ्यामात्मानमभिध्यायेत् ।**

**अथावशिष्टं० अभिध्यायेदिति** । अथ पञ्चप्राणाहुत्यनन्तरमवशिष्टं तृप्तिपर्यन्तमन्नं यतवाङ्मौनी सन्नश्नाति । यदवशिष्टमश्नाति तन्मौनी सन्निति मौनमत्र विधीयते नाशनं तस्य निमित्तान्तरत एव प्राप्तत्वादित्यर्थः । अतोऽवशिष्टसर्वान्नभोजनानन्तरमद्भिरुत्तरापोशनाङ्ग[2]भूताभिर्भूय एव पुनरपि पूर्ववदुपरिष्टादुपरिभागे परि[3]दधाति तास्व-

---

१ ग. °पोशाना° । २ ग. पोशाना° । ३ क. °रि द° ।

प्सूपरि परिधानदृष्टिं कुर्यादित्यर्थः। तथा च श्रुत्यन्तरम्—"तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति" (छान्दो० अ० ९) इति। पश्चादुत्थायाऽऽचान्तो भूत्वा करमुखपादशुद्धिं विधाय विधिवदाचम्य शुद्धो भूत्वाऽऽत्मेज्यान आत्मानमीजान आत्मयजनं कुर्वन्नुपासक इति यावत्। प्राणोऽग्निरित्यादिवक्ष्यमाणाभ्यां मन्त्राभ्यामात्मानमभिध्यायेत्।

मन्त्रद्वयं पठति—

**प्राणोऽग्निः परमात्मा वै पञ्चवायुः समा-**
**श्रितः। स प्रीतः प्रीणातु विश्वं विश्वभुक्।**

**प्राणोऽग्निः परमात्मेत्यादिना।** पञ्चवायुः प्राणापानादिपञ्चवायुरूपः प्राणः प्रणेता शरीरेन्द्रियव्यापारयिता यः स परमात्मा वै परमात्मैवाग्निरन्नस्यात्ता जाठरो देहं समाश्रित इति पूर्वार्धयोजना। यद्वा परमात्मैव देहं समाश्रितः सन्पञ्चवायुः प्राणोऽग्निश्च नान्य इति योजना।

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्"॥

इति भगवत्स्मरणात्। स परमात्माऽत्ता प्रीतस्तृप्तः सन्विश्वं सर्वमेव भोक्तृवर्गं प्रीणातु प्रीणयतु[1] यतः स विश्वभुग्विश्वं भुनक्ति पालयतीति विश्वभुगिति प्रथममन्त्रार्थः।

**विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया धार्यते जायमानम्।**
**विशन्तु त्वामाहुतयश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसीति।**

हे प्राणाग्न्यात्मंस्त्वं विश्वोऽसि सर्वोऽसि वैश्वानरो विश्वनरनयनादीश्वरस्त्वमसीत्यर्थः। कुतो विश्वात्मत्वं विश्वनियन्तृत्वं चेत्यत आह—विश्वं जायमानं त्वया धार्यते त्वमेव स्वात्मनो विश्वमुत्पाद्य पालयसीत्यर्थः। सर्वा आहुतय आ समन्ताद्धूयन्त इत्याहुतयो हवींषि सर्वाणि त्वां विशन्तु त्वय्याहिता भवन्तु। किंच तत्र सर्वाः प्रजा यत्र त्वं विश्वामृतोऽसि विश्वममृतयसि जीवयसीति विश्वामृतस्त्वं यत्र तत्रैव सर्वाः प्रजास्त्वज्जीवना इत्यर्थः। इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः।

इदानीमेवंविधं विद्वद्भोजनं फलवचनेन प्रशंसति—

**एवं न विधिना खल्वनेनात्ताऽन्नत्वं पुनरुपैति॥ ९॥**

**एवं न विधिना० पुनरुपैतीति।** एवमुक्तप्रकारेणानेन विधिनाऽत्ता विद्वान्पुनरन्नत्वं न खलूपैतीत्यन्वयः। स्वयं सर्वस्यात्ता भवति नान्येनाद्यत इत्यर्थः॥ ९॥

पुनरस्यैव विदुषश्चिन्तनीयान्तरं विशेषमाख्यातुमारभते—

---

[1] क. 'तु तर्पयतु य°।

**अथापरं वेदितव्यमुत्तरो विकारोऽस्याऽऽत्मयज्ञस्य यथाऽन्नमन्नादश्चेत्यस्योपव्याख्यानम् ।**

**अथापरं० व्याख्यानमिति ।** अथेत्यर्थान्तरोपक्रमार्थः । अपरं पूर्वोक्तात्कर्ममन्त्ररूपादन्यद्वेदितव्यं चिन्तयितव्यमस्तीत्यर्थः[1] । किं तदित्युच्यते । अस्याऽऽत्मयज्ञस्याऽऽत्मयजनरूपस्य भोजनस्य संबन्ध्युत्तरो विकारो विकरणं श्रेष्ठं विभजनम् । कोऽसौ यथाऽन्नमन्नादश्चादनीयमत्ता चेति । विभजनं कथमित्यत आह—**तस्योपव्याख्यानमिति ।** तस्योत्तरविकारस्य स्पष्टव्याख्यानं क्रियत इति शेषः । वक्ष्यमाणविभागेनान्नमन्नादं चाऽऽत्मानं चिन्तयेदिति तात्पर्यार्थः ।

तत्र किमन्नं किमन्नादमित्येतत्तावत्स्वरूपतो निर्दिशति—

**पुरुषश्चेता प्रधानान्तःस्थः स एव भोक्ता प्राकृतमन्नं भुङ्क्ते इति ।**

**पुरुषश्चेता० भुङ्क्ते इतीति ।** प्रधानं प्रकृतिर्जगद्बीजमव्याकृतादिशब्दवाच्यं तस्यान्तर्मध्ये तत्सत्ताप्रदत्वेन स्थितो यश्चेता चेतनः पुरुषः स एव भोक्ता प्राकृतं प्रकृतिकार्यमन्नं भुङ्क्त[2] इत्यर्थात्प्रकृतितद्विकारावन्नमित्यन्नान्नादस्वरूपमुक्तमित्यर्थः ।

अर्थादुक्तमन्नस्वरूपं विभजते—

**तस्यायं भूतात्मा ह्यन्नमस्य कर्ता प्रधानः ।**

**तस्यायं भूतात्मा० कर्ता प्रधान इति ।** तस्य पूर्वोक्तस्य भोक्तुरयं भूतात्मा साभासः कार्यकारणसंघातरूपोऽन्नं[3] भोज्यं हि प्रसिद्धमस्य भूतात्मनः कर्ता प्रधानः पूर्वोक्तः सोऽपि भोज्य इत्यर्थः ।

उक्तार्थसारमुपसंहारव्याजेनाऽऽह—

**तस्मात्त्रिगुणं भोज्यं भोक्ता पुरुषोऽन्तःस्थः ।**

**तस्मात्त्रिगुणं० पुरुषोऽन्तःस्थ इति ।** त्रिगुणं प्रधानतत्कार्यरूपं भोज्यं भोक्ता पुरुषः प्रधानान्तःस्थः सर्वत्रेत्यर्थः ।

उक्तव्यवस्थायां प्रमाणमाह—

**अत्र दृष्टं नाम प्रत्ययम् ।**

**अत्र दृष्टं० प्रत्ययमिति ।** दृष्टं दर्शनं प्रत्यक्षं नाम प्रसिद्धं प्रत्ययं प्रमाणमत्र विद्यत इति शेषः ।

उक्तमर्थमुदाहरणेन बुद्धिमारोहयति—

**यस्माद्बीजसंभवा हि पशवस्तस्माद्बीजं भोज्यमनेनैव प्रधानस्य भोज्यत्वं व्याख्यातम् ।**

---

१ क. °न्तनीयमस्थेत्य° । २ ग. भुङ्क्ता । ३ ग. °र्यकर° ।

**यस्माद्बीजसंभवा० भोज्यत्वं व्याख्यातामिति** । पशवो हि गवाश्वमाहिषपुरुषादयः कुटुम्बिकस्य भोज्यत्वेन प्रसिद्धा यस्माद्बीजसंभवाः स्वबीजभूतान्नरसपरिणामादिसंभवास्तस्माद्बीजं भोज्योपादानत्वाद्भोज्यं प्रसिद्धमित्यर्थः । बीजस्य भोज्यत्वप्रदर्शनफलमाह—**अनेनेति** । कार्येषु भोज्यत्वस्य सिद्धत्वात्कारणस्यापि तत्सिद्धं कार्यकारणयोरभेदादित्यर्थः ।

प्रमाणेनोपपादितमर्थमुपसंहरति—

**तस्माद्भोक्ता पुरुषो भोज्या प्रकृतिस्तत्स्थो भुङ्क्ते इति ।**

**तस्माद्भोक्ता० प्रकृतिस्तत्स्थो भुङ्क्ते इतीति** । व्याख्यातार्थोऽयं ग्रन्थः ।

एवं प्रकृतेर्भोज्यत्वं प्रसाध्य तत्कार्यस्य भोज्यत्वं प्रपञ्चयति—

**प्राकृतमन्नं त्रिगुणभेदपरिणामत्वान्महदाद्यं विशेषान्तं लिङ्गम् ।**

**प्राकृतमन्नं० विशेषान्तं लिङ्गमिति** । यत्प्राकृतं प्रकृतिप्रभवं कार्यरूपमन्नं तत्त्रिगुणभेदपरिणामत्वात्सत्त्वादिगुणविशेषपरिणामत्वान्महदाद्यं महान्प्रकृतेराद्यो विकारो ज्ञानक्रियाशक्तिसंमूर्छितः स आद्यो यस्य तन्महदाद्यम् । विशेषा विकारशब्दवाच्याः पृथिव्यादिमहाभूतलक्षणा अस्मदादिप्रत्यक्षयोग्या अन्तो यस्य तद्विशेषान्तम् । तत्कीदृशं लिङ्गं लिङ्ग्यते ज्ञायते चेतनसद्भावोऽनेनेति व्युत्पत्तेरचेतनं भोज्यमित्यर्थः । विषयाणां विशेषाविशेषरूपो विभागः सांख्यैरुक्तः—

“ तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ” ॥ ( सांख्यका० ) इति ।

विशेषाविशेषरूपाणां विषयाणां भोज्यत्वं सामान्येनोक्तं प्रत्येकमिन्द्रियार्थेषु योजयति—

**अनेनैव चतुर्दशविधस्य मार्गस्य व्याख्या कृता भवति ।**

**अनेनैव चतुर्दश० व्याख्या कृता भवतीति** । बाह्येन्द्रियप्रवृत्तिमार्गो दशविधोऽन्तःकरणवृत्तेश्चातुर्विध्यात्तस्याश्चतुर्विधो मार्ग इति चतुर्दशविधो मार्गस्तस्यापि भोज्यत्वेन व्याख्या कृता भवतीत्यर्थः ।

प्रतिपादितार्थं श्लोकेन संगृह्णाति—

**सुखदुःखमोहसंज्ञं ह्यन्नभूतमिदं जगत् । न हि**
**बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूतिः ।**

**सुखदुःखमोहसंज्ञं० यावन्न प्रसूतिरिति** । सुखदुःखमोहकरत्वात्त्रिगुणात्मकमिदं जगत्सुखादिसंज्ञितमन्नभूतं हि प्रसिद्धमित्यर्थः । बीजस्य यत्स्वादु स्वादनं तस्य परिग्र-

१ ग. भुङ्क्ता । २ ग. भुङ्क्ता । ३ क. °तिभ° । ४ क. °त्ययो° । ५ क. °ष विशेषेषु यो° । ६ क. °पि व्या° । ७ क. °दितमर्थं ।

हस्तावन्न भवति यावत्कार्याकारेण न प्रसूतिः प्रसवः । तस्मात्कार्यं त्रिगुणात्मकं भोज्यं दृष्ट्वा कारणं प्रधानमपि त्रिगुणात्मकं भोज्यमनुमेयमित्यभिप्रायः ।

यदुक्तं पूर्वं प्रकृतिकार्यस्य भूतात्मनोऽन्नत्वं तस्याप्यवस्थावत्त्वात्परिणामित्वमस्तीति त्रिगुणात्मकत्वमन्नत्वं च सिद्धमित्याह—

**तस्याप्येवं तिसृष्ववस्थास्वन्नत्वं भवति**
**कौमारं यौवनं जरा परिणामत्वात्तदन्नत्वम् ।**

**तस्याप्येवं०जरा परिणामत्वात्तदन्नत्वमिति** । अवस्थात्रयमेव विभजते—**कौमारमित्यादिना** । अवस्थात्रयस्य कार्यत्वं साधयति—**परिणामत्वादिति** । तदन्नत्वं तस्य भूतात्मनोऽन्नत्वं सिद्धमित्यर्थः ।

कार्यद्वारोक्तं प्रधानभोज्यत्वं प्रपञ्चयति—

**एवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति तत्र बुद्ध्यादीनि स्वादुनि भवन्ति ।**

**एवं प्रधानस्येत्यादिना** । एवं वक्ष्यमाणेन प्रकारेण प्रधानस्य व्यक्ततां गतस्य कार्यतामापन्नस्योपलब्धिर्भवति । कथं तदाह—तत्र व्यक्तेषु प्रधानकार्येषु यत्स्वादु स्वादनमास्वादनं ग्रहणमिति यावत्तस्मिन्स्वादुनि तन्निमित्तं बुद्ध्यादीनि करणानि भवन्ति प्रवर्तन्ते, बुद्ध्यादिभिः प्रधानकार्यं गृह्यत इत्यर्थः ।

बुद्ध्यादिस्वरूपं मध्ये व्यपदिशति—

**अध्यवसायसंकल्पाभिमाना इत्यर्थेन्द्रियार्थान्पञ्च स्वादुनि भवन्ति ।**

**अध्यवसायेति** । निश्चयात्मिका बुद्धिरध्यवसायः संकल्पनव्यापारवदन्तःकरणं मनः संकल्पोऽहंकारात्मिकाऽन्तःकरणवृत्तिरभिमान इत्येते बुद्ध्यादिशब्दार्था इत्यर्थः । अथ बुद्ध्याद्युद्भवे जाग्रद्दशायामिति यावत् । इन्द्रियार्थाञ्शब्दस्पर्शरूपरसगन्धाख्यान्विषयान्प्रति पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पूर्ववत्स्वादुनि भवन्त्युक्तान्विषयान्स्वादयितुं करणानि भवन्तीत्यर्थः ।

उक्तमर्थं कर्मेन्द्रियेषु मुख्यप्राणे चातिदिशति—

**एवं सर्वाणीन्द्रियकर्माणि प्राणकर्माणि ।**

**एवमिति** । सर्वाणि वाक्पाणिपादपायूपस्थाख्यानामिन्द्रियाणां कर्माणि प्राणस्य मुख्यस्य कर्माणि प्राणनापाननादीनि वचनादानगमनविसर्गानन्दाञ्शरीरचालनादीन्प्रति स्वादुनि भवन्तीति योजना ।

---

१ क. °त्मत्व° । २ क. °णामित्वा° । ३ क. °णामित्वा° । ४ क. °स्वादूनि । ५ क. °दनं । ६ क. स्वादूनि । ७ क. °त्स्वादूनि । ८ ग. °णे वाऽति° । ९ क. स्वादूनि ।

प्रपञ्चितमर्थमुपसंहरति—

**एवं व्यक्तमन्नमव्यक्तमन्नमस्य निर्गुणो**
**भोक्ता भोक्तृत्वाच्चैतन्यं प्रसिद्धं तस्य।**

**एवमिति** । एवमुक्तप्रकारेण व्यक्तमन्नं सिद्धं व्यक्तरूपान्नकारणत्वादव्यक्तस्य व्यक्तवदेवाव्यक्तमप्यन्नमनुमेयमित्यर्थः । अस्य व्यक्ताव्यक्तरूपस्यान्नस्य निर्गुणो भोक्ता निर्विकार आत्मा भोक्तेत्यर्थः । अन्तःकरणगतचिदाभासाविवेकाद्भोक्तेव प्रतीयमानोऽपि न स्वभावतो भोक्ता कूटस्थ एव सदेति भावः । तस्याऽऽत्मनो भोक्तृत्वादचेतनस्य सर्वस्य कार्यकारणात्मकस्य व्यक्ताव्यक्तवाच्यस्य संनिधिसत्तामात्रेण स्वचैतन्याभासेन व्याप्तत्वाच्चैतन्यं चेतनत्वं प्रसिद्धं प्रकर्षेण सिद्धं ज्ञातं भवतीत्यर्थः ।

इदानीमन्नान्नत्रोरुक्तयोः प्रकृतिपुरुषयोः सोमत्वमाग्नित्वं च ध्यायेदिति गुणान्तरमुपदिशति—

**यथाऽग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्नमित्येवंवित् ।**

**यथाऽग्निर्वै देवानामित्यादिना।** देवानां मध्येऽग्निरन्नादोऽन्नस्यात्ता वै प्रसिद्धो यथा तथा सोमोऽन्नमदनीयं प्रसिद्धं इति योजना । तथाच श्रुत्यन्तरम्—"अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः" (बृहदा० अ० ३)इति । तथा चैवंविद्यदा यद्येनाद्यते सोऽग्निर्यदद्यते स सोम एवेत्यन्नान्नादरूपमग्नीषोमात्मकं जगदित्येवंविदग्निनैवाग्न्यात्मनैव सोमरूपमन्नमत्ति । अतोऽन्नदोषैरग्निवन्न लिप्यत इत्यभिप्रायः । अन्नमित्येवमिति पाठः प्रामादिकः । यद्ययं पाठः सत्यस्तदेत्थं योजना । अग्निरन्नादः सोमोऽन्नमिति यथा प्रसिद्धं श्रुत्यन्तरे तथैवाग्निनैव सोमरूपमन्नमद्यते न मयेत्येवंविदन्नदोषैर्न लिप्यत इति ।

आधिभौतिकान्नान्नादयोरुक्तं विशेषमाध्यात्मिकयोरपि तयोर्दर्शयति—

**सोमसंज्ञोऽयं भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुखा इति ।**

**सोमेति** । अयं भूतात्मा प्राकृतः केवलः सोमसंज्ञोऽन्नमित्यर्थः । अव्यक्तं प्रधानं मुखं भोक्तृत्वादिप्रवृत्तिद्वारं यस्य स चिदात्माऽव्यक्तमुखस्तेन व्याप्तत्वाद्भूतात्माऽप्यव्यक्तमुखः सन्नग्निसंज्ञोऽपि भवति । तथा चायमर्थः । चिदाभासव्याप्ततया चिदात्माभेदेनाव्यक्तमुखतया बाह्यविषयभोक्तृत्वेनाग्निसंज्ञोऽप्ययं भूतात्मा चिदात्मापेक्षया सोमसंज्ञोऽन्नमेवेति प्रकृत्यनुगतश्चिदात्माऽत्ताऽग्निः प्राकृतो भूतसंघातोऽन्नमिति चिन्तयेदिति ।

एवमुक्तविभागे प्रमाणमाह—

**वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्ता इति ।**

---

१ क. °कशब्दवा° । २ क. °न्नान्नादत्वोक° । ३ क. °द्धमिति । ४ ग. °त्यन्नान्नरू° । ५ क. °कृत° ।

**वचनात्पुरुष इति** । भुङ्क्त इति वचनादित्यन्वयः ।

एवमन्नान्नादविदं प्रशंसन्नस्मिन्दर्शने पुंसः प्रवृत्तिमुपनयति—

**यो हैवं वेद संन्यासी योगी चाऽऽत्मयाजी चेति ।**

**यो हैवमिति** । यो ह कश्चिदेवमुक्तप्रकारेणान्नान्नादविभागं वेद स इत्यध्याहार्यम् । स संन्यास्यकर्त्रात्मदर्शी न केवलं कर्मत्यागी संन्यासी किंत्वयमेवेति विद्या स्तूयते । योगी चाष्टाङ्गयोगनिरतोऽप्ययमेव न केवलं गुहासु निविष्टः । आत्मयाज्यात्मसंस्कारार्थं यो यजते स आत्मयाजी । तथा च शातपथी श्रुतिः—" स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते " इति । आत्मयाजी चायमेव न यज्ञमात्रनिरत इत्यर्थः ।

[1]को वा संन्यासी योगी चाऽऽत्मयाजी चेति [2]प्रसिद्धो यदात्मनाऽयं विद्वान्स्तूयत इत्यपेक्षायां तत्स्वरूपमाह—

**अथ यद्वन्न कश्चिच्छून्यागारे कामिन्यः प्रविष्टाः स्पृशतीन्द्रियार्थांस्तद्वद्यो न स्पृशति प्रविष्टान्संन्यासी योगी चाऽऽत्मयाजी चेति ॥ १० ॥**

**अथ यद्वदिति** । अथेदं निदर्शनमुच्यते । शून्यागारे जनशून्यान्तर्भवने प्रविष्टाः कामिन्यः कामिनीः कामातुराः स्त्रीः कश्चिदतिधीरो न स्पृशति यद्वत्किंतु ताः परिहरत्येव तद्वद्यो विद्वानिन्द्रियार्थान्प्रविष्टान्[3]दैवादागत्योपास्थितान्न स्पृशत्यनुरागेण न स्वी करोति स एव संन्यासी योगी चाऽऽत्मयाजी चेति [4]व्याख्यातम् । इतिशब्दः प्रदर्शनार्थः । विषयनिस्पृहाः संन्यास्यादिशब्दवाच्या इत्यर्थः ॥ १० ॥

तदेवं दशभिरनुवाकैरध्यात्ममधिदैवं च प्राणादित्योपाधिद्वाराऽऽत्मोपासनं सेतिकर्तव्यतांक्रममुक्तिफलमुपदिश्य तत्परिसमाप्येदानीं पूर्वप्रकृतस्यैव प्रत्यग्ब्रह्मणश्चिदात्मनोऽभ्युदयफलकमनेकविधमुपासनभेदं वक्तुं प्रकरणान्तरं प्रवर्तते । तत्रान्नाधीनत्वात्सर्वप्राणिस्थितेर्ब्रह्मदृष्ट्याऽन्नोपासनं विधातुं तन्महिमानमाह—

**परं वा एतदात्मनो रूपं यदन्नमन्नमयो ह्ययं प्राणः ।**

**परं वा एतदित्यादिना** । परमुत्कृष्टं वै प्रसिद्धमेतद्वक्ष्यमाणमात्मनः परमात्मनो रूपं मूर्तिविशेषः । किं तद्यदन्नं सर्वप्राणिजीवनं प्रसिद्धमोदनादिरूपम् । कथमस्य परत्वं हि यस्मादयं प्राणो मुख्यप्राणप्रधानोऽयं संघातोऽन्नमयोऽ[5]न्नजीवन इति यावत् ।

एतदेवान्वयव्यतिरेकाभ्यामुपपादयति—

---

१ ग. के । २ ग. प्रसिद्धा । ३ क. व्याख्यानम् । ४ क. °तां क्र° । ५ क. °चविकारोऽन्नजी° ।

**अथ न यद्यश्नात्यमन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽ-**
**घ्राताऽरसयिता भवति प्राणांश्चोत्सृजतीत्येवं[1] ह्याह ।**

**अथेति** । अथैतत्प्रपञ्च्यते, यद्ययं नाश्नाति नान्नमुपजीवति तदाऽमन्ता मननासमर्थो भवतीत्यन्वयः । एवमश्रोता भवतीत्यादि योज्यम् । न केवलं मननाद्यशक्तिमात्रमेवानश्नतः किंतु जीवनमपि दुर्लभमित्याह—प्राणांश्चोत्सृजति परित्यजति म्रियत इत्येवं ह्याह श्रुतिः । तथा च च्छान्दोग्ये 'अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोता' ( अ० ७ ) इत्यादि ।

अन्नाभावे शक्तिजीवनयोरभाव इति व्यतिरेकमुक्त्वा तत्रैवान्वयमाह—

**अथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता**
**भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति**
**रसयिता भवति घ्राता भवति द्रष्टा भवतीति ।**

**अथेति** । यद्यश्नाति तदा खलु प्राणसमृद्धः प्राणेन बलेन समृद्ध उपचितो भूत्वा मन्ता भवतीत्यादि स्पष्टम् ।

अत्रैव श्रुत्यन्तरमुदाहरति—

**एवं ह्याह—अन्नाद्वै प्रजाः प्रजायन्ते याः काश्चित्पृथिवी-**
**श्रिताः । अतोऽन्नेनैव जीवन्त्यथैतदपियन्त्यन्ततः ॥ ११ ॥**

**एवं ह्याहेति** । अन्नाद्रेतोबीजरूपपरिणताद्वै प्रजाः स्थावरजङ्गमात्मिकाः प्रजायन्त उत्पद्यन्ते याः काश्चिदविशेषिताः पृथिवीश्रिताः पृथिवीमाश्रिता अत उत्पत्त्यनन्तरमप्यन्नेनैव स्वस्वजात्युचितेनादनीयेनैव जीवन्ति प्राणान्धारयन्ति[3] । अथ जीवितक्षयेऽन्ततोऽन्ते शरीरावसानेऽप्येतदन्नमेवापियन्त्यन्नात्मिकायां पृथिव्यां लीयन्त इत्यर्थः ॥ ११ ॥

पुनरप्यन्नस्तुतिं करोति तस्य वक्ष्यमाणात्मदृष्टचर्हत्वाय—

**अथान्यत्राप्युक्तं सर्वाणि ह वा इमानि भूतान्यहरहः प्रप-**
**तन्त्यन्नमभिजिघृक्षमाणानि सूर्यो रश्मिभिराददात्यन्नं**
**तेनासौ तपत्यन्नेनाभिषिक्ताः[4] पचन्तीमे प्राणा अग्निर्वा**
**अन्नेनाभिज्वलत्यन्नकामेनेदं[6] प्रकल्पितं ब्रह्मणा ।**

**अथान्यत्राप्युक्तं० ब्रह्मणेति** । ह वा इति प्रसिद्धार्थौ निपातौ । सर्वाणीमानि भूतानि पशुपक्ष्यादिपिपीलिकान्तान्यन्नमभिजिघृक्षमाणान्यहरहर्नित्यं प्रपतन्तीतस्ततः[5] परिभ्रमन्तीति प्रसिद्धमेतादित्यर्थः । किंच सूर्योऽपि[7] रश्मिभिः किरणैरन्नं भौमं रसरूपमाद-

---

१ क. °वं प्राह । २ क. °जप° । ३ क. प्राणं धार° । ४ क. °त्यनेना° । ५ क. पतन्ती° । ६ ग. °न्नेनोज्ज्वल° । ७ क. °र्यो र° ।

दाति स्वीकरोति तेनान्नादानेनासौ सूर्यस्तपति समिद्धो भवतीत्यर्थः । तथा च श्रुत्यन्तरम्—' सूर्यो मरीचिमादत्ते सर्वस्माद्भुवनादधि ' इति । मरीचिं मरीचिग्रस्तमुदकमित्यर्थः । इमे प्राणा मुख्यप्राणसहिता वागादयः प्राणा अन्नेनाभिषिक्ताः संक्लिन्नाः संतर्पिताः सन्तः पचन्ति वर्णव्यत्ययेन पतन्ति स्वस्वव्यापारं कुर्वन्तीत्यर्थः । यद्वा पचन्ति भोक्तुर्विष ानुपनयन्तीत्यर्थः । तथाऽग्निर्वा अन्नेन समिदाज्यादिनाऽभिज्वलति दीप्यते । एवं देवतानामप्युपजीव्यमिदमन्नमन्नकामेन ब्रह्मणा प्रजापतिना प्रकल्पितमुत्पादितमित्यर्थः ।

यदर्थमेवमन्नं स्तुतं तदिदानीमुपासनं विदधाति—

**अतोऽन्नमात्मेत्युपासीतेत्येवं ह्याह ।**

**अतोऽन्नं० ह्याहेति** । यत एवंमहिमेदमन्नमतोऽन्नमात्मेत्युपासीत ध्यायेदित्यर्थः । अत्र ब्रह्मदृष्टिरुत्कर्षादिति न्यायेनान्न आत्मदृष्टिर्विधीयते न चात्राहंग्रहोऽस्ति ' न प्रतीके न हि सः ' ( ब्रह्मसू० अ० ४ पा० १ सू० ४ ) इति सूत्रे प्रतीकेष्वहंग्रहस्यापोदितत्वादिति द्रष्टव्यम् ।

एवं ह्याहेत्युदाहरति शाखान्तरीयं मन्त्रमन्नस्याऽऽत्म साम्यद्योतनेन तत्प्रतीकत्वं द्रढयितुम्—

**अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते ।**
**अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥ १२ ॥**

**अन्नाद्भूतानि० तदुच्यत इति** । भूतोत्पत्त्यादिनिमित्तत्वमात्मसाम्यमत्रोक्तम् । अक्षरार्थः स्पष्टः ॥ १२ ॥

**अथान्यत्राप्युक्तं विश्वभृद्वै नामैषा**
**तनूर्भगवतो विष्णोर्यदिदमन्नम् ।**

इदानीमन्ने पूर्वोक्ते विश्वभृत्त्वं गुणं प्रक्षिप्य विष्णुशरीरदृष्ट्योपासनान्तरमुपदिशति—**अथान्यत्राप्युक्तमित्यादिना** ।

विश्वभृत्त्वमन्नस्य साधयति—

**प्राणो वा अन्नस्य रसो मनः प्राणस्य विज्ञानं**
**मनस आनन्दं विज्ञानस्येत्यन्नवान्प्राणवान्मनस्वा-**
**न्विज्ञानवानानन्दवांश्च भवति यो हैवं वेद ।**

**प्राणो वा इत्यादिना** । रसः सारः कार्यमित्यर्थः । प्राणे स्थिरे सति मनस उपचयान्मनः प्राणस्य रसो मनसो विवेकसामर्थ्ये सति विज्ञानोत्पत्तेर्विज्ञानं मनसोरसो

१ क. °मिति यावत् । इ° । २ क. स्वव्या । ३ क. °सीतैवं । ४ क. °पहि°ति° । ५ क °भत्त्वगु° । ६ क. स्थिते । ७ ग. °स्य च र° ।

विषयाध्यवसाये सत्यानन्दोदयाद्विज्ञानस्याऽऽनन्दो रस इति यो हैवं वेदेति संबन्धः। सोऽन्नवान्प्राणवानित्यादिफलवचनम्।

दृष्टं फलमुक्त्वाऽदृष्टं च फलमाह—

**यावन्तीह वै भूतान्यन्नमदन्ति ताव-**
**त्स्वन्तःस्थोऽन्नमत्ति यो हैवं वेद।**

**यावन्तीहेति।** यावन्तीह लोके भूतान्यन्नमदन्ति भक्षयन्ति तावत्सु सर्वेषु तेषु भूतात्मा सन्नन्तःस्थो भूतान्तःस्थोऽन्नमत्त्युपासकः। तावत्स्वन्तरस्थ इति पाठे तेषु भूतेष्ववस्थितस्तेष्वभिमानशून्यः सन्नन्नमत्तीत्यर्थः। कः। यो हैवं विश्वभृद्गुणं विष्णुतनुमन्नं वेदोपास्त इत्यर्थः।

उक्तमुपास्यमन्नं विष्णुतनुत्वदृष्टयर्हत्वाय स्तुत्यर्थं श्लोकमुदाहरति—

**अन्नमेव विजरन्नमन्नं संवननं स्मृतम्।**
**अन्नं पशूनां प्राणोऽन्नं ज्येष्ठमन्नं भिषक्स्मृतम् ॥ १३ ॥**

**अन्नमेवेति।** अन्नमेव विजरद्विजरत्वं नयतीति विजरन्नं विजरमेव वा विजरन्नम्। तथा च श्रुत्यन्तरम्—'अन्नं ब्रह्मणोऽजरं वदन्ति' इति। तथाऽन्नं संवननं संभजनीयं स्मृतं ज्ञातम् 'अन्नं बहु कुर्वीत तद्व्रतम्' इति श्रुत्यन्तरात्। अन्नं पशूनां प्राणिनां प्राणः 'अन्नात्प्राणा भवन्ति' इति श्रुतेः। अन्नं ज्येष्ठं प्रथमजं रसाद्यपेक्षया पूर्वसिद्धत्वात् 'अन्नं हि भूतानां ज्येष्ठम्' इति श्रुत्यन्तरात्। अन्नं भिषग्भेषजं क्षुद्व्याधिनिवर्तकं स्मृतं तस्मात्सर्वौषधमुच्यत इत्यन्नं प्रकृत्य श्रवणादिति श्लोकार्थः ॥ १३ ॥

पुनरस्यैवाऽऽत्मनः कालात्मकादित्ये दृष्टिं विधातुमुत्तरमनुवाकत्रयं प्रवर्तते। तत्रान्नस्य कालाधीनत्वात्कालस्य चाऽऽदित्याधीनत्वादन्नोपासनानन्तरं कालादित्योपासनविधानमिति संगतिं विवक्षन्कालात्मानं स्तौति—

**अथान्यत्राप्युक्तमन्नं वा अस्य सर्वस्य योनिः**
**कालश्चान्नस्य सूर्यो योनिः कालस्य।**

**अथान्यत्राप्युक्तमन्नमित्यादिना।** अथेत्युपासनान्तरोपक्रमार्थः। अन्यत्रापि कौलविषय इदमुक्तमन्यत्राप्युक्तमिति वा। अन्नं वै प्रसिद्धमस्य प्राणिजातस्य सर्वस्याशेषस्य योनिः कारणम्। कालश्चान्नस्य योनिरित्यनुवर्तते कालेन ह्यन्नं प्रसूयते। सूर्यः सविता कालस्य योनिः। तस्य हि कालनिर्मातृत्वं प्रसिद्धम्।

तत्र कालस्वरूपतत्प्रमाणयोरभावात्कथं कालोऽन्नस्य योनिरित्यत आह—

**तस्यैतद्रूपं यन्निमेषादिकालात्संभृतं द्वादशा-**
**त्मकं वत्सरमेतस्याऽऽग्नेयमर्धमर्धं वारुणम्।**

---

१ क. °स्थोऽन्न°। २ क. °त्स्ववस्थ। ३ क. °ष्ववस्थि°। ४ क. °तत्त्वम°। ५ कार्यवि°।

**तस्यैतदित्यादिना** । तस्य कालस्यैतद्रूपं रूप्यत इति रूपं स्वरूपं किं तद्यन्निमेषादेर्निमेषकलाकाष्ठाद्यवयवप्रचयात्संभृतं घटितं द्वादशमासात्मकत्वाद्द्वादशात्मकं वत्सरं संवत्सररूपमस्त्येतत्तस्य रूपमिति संबन्धः । तथा चोक्तं **श्रीभागवते**—

"योऽयं कालस्तस्य तेऽव्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये" ॥ इति ।

निमेषादि[1]संवत्सरान्तव्यवहाराश्रयः काल इति कालस्वरूपमुक्तं भवति । इदानीमुक्तलक्षणः संवत्सरा[2]ख्यः कालस्तदवयवैरेव प्रमेय इति विवक्षंस्तावत्कालावयवान्स्थूलतमादिक्रमेण व्युत्पादयति—**एतस्येत्यादिना** । एतस्य संवत्सरात्मनः कालस्य 'द्वादश मासाः संवत्सरः' इति श्रुतेर्द्वादशमासात्मकस्यार्धमुत्तरायणषण्मासरूपमाग्नेयमग्निदेवत्यमौष्ण्यप्रधानत्वादस्य षण्मासस्य । अर्धं वारुणं वरुणदेवत्यं दक्षिणायनषण्मासरूपं जलप्रधानत्वादस्य षण्मासस्येत्यर्थः । तथा च तापोदकयोः[3] कार्ययोः पर्यायेण नियतप्रवृत्त्यन्यथानुपपत्त्या यस्तद्धेतुभूतोऽर्थः कल्प्यते स काल उभयायनानुगतः संवत्सरात्मा सिद्ध इत्यर्थः ।

इदानीमयनावयवभूतान्मासान्व्युत्पादयिष्यंस्तदुपोद्घाततया नाक्षत्रमयनद्वयं प्रकल्प्य तद्द्वारा कालसद्भावकल्पनामाह—

**मघाद्यं श्रविष्ठार्धमाग्नेयं क्रमेणोत्क्रमेण सार्पाद्यं श्रविष्ठार्धान्तं सौम्यम् ।**

**मघाद्यमिति** । मघानक्षत्रमारभ्य श्रविष्ठाख्यनक्षत्रस्यार्धमर्धावसानं यावत्सविता क्रमेण नीचैः क्रमणेन स्वै[4]चारगत्या भुङ्क्ते तावदाग्नेयमग्निदेवत्यं तत्र हि कालेऽग्निर्देव इव शीतार्तैर्मनुष्यैरुपास्यते । तथा सार्पाद्यं सर्पदेवत्यम[5]श्लेषानक्षत्रं सार्पं तत्प्रभृतिश्रविष्ठोत्तरार्धान्तं यावत्सवितोत्क्रमेणोर्ध्वमार्गक्रमणेन स्वचारगत्या भुङ्क्ते तावत्सौम्यं सोमदेवत्यं तस्मिन्हि काले चन्द्रस्तापार्तैर्मनुष्यैर्देव इवोपास्यत इति । अत्र श्रविष्ठार्धाद्यं सार्पान्तमिति यद्यपि वक्तुमुचितं तथाऽपि यथाविभक्तयोः समययोः स्वभाववैलक्षण्यस्य स्पष्टीकरणार्थं सार्पाद्यमित्युक्तं श्रविष्ठायां सवितारि वर्तमाने शीतानुवृत्तेस्तदाद्यग्रहणे हि न स्पष्टः स्वभावभेदो निर्दिष्टः स्यादितरत्र तु स्पष्टस्तत्र तापप्राचुर्ये विवादाभावात् । तथा च स्वभावभेदप्रकटीकरणायाऽऽर्थ एव क्रमो विवक्षितो न नक्षत्रपाठक्रम इति भावः । अत्रापि शीतोष्णयोर्नियतप्रवृत्तिहेतुकालकल्पना पूर्ववद्द्रष्टव्या ।

इदानीमुक्तैः सप्तविंशतिनक्षत्रैर्द्वादशराश्यवच्छेदेन मासक्लृप्तिमाह—

---

१ क. दिव । २ ग. °राख्यका° । ३ क. °योः प° । ४ क. स्वचरणग° । ५ क. °त्यम श्ले° ।

**तत्रैकैकमात्मनो नवांशकं सचारकविधं**

**तत्रेति** । तत्र तेषु नक्षत्रेषु नवांशा यस्मिंस्तन्नवांशकं यदेकैकं नवांशकं तदात्मनः संवत्सरात्मन एकैकोऽवयव इति योज्यम् । अंशः पादो नवांशा नव पादाः सपादनक्षत्रद्वयावच्छिन्न एको राशिः सूर्यगत्यनुसारेणैको मासः संवत्सरात्मनः कालस्यैकोऽवयव इत्युक्तं भवति । तथा च तत्तन्मासस्वभावभेदनियमेनापि कालकल्पनमुन्नेयम् । एतत्सर्वं सचारकविधं चारश्चङ्क्रमणं नक्षत्रादिषु परिभ्रमणं तत्र विधा प्रकारस्तया विधया सहितं सचारकविधम् । एतच्च ज्योतिःशास्त्रात्कलादिकालावयवगणनया सूर्यचारमालोच्य सर्वमवधेयमिति तात्पर्यार्थः ।

उक्तैरेवावयवैः कालोऽनुमेय इत्यत्र हेतुमाह—

**सौक्ष्म्यत्वादेतत्प्रमाणमनेनैव प्रमीयते हि कालः ।**

**सौक्ष्म्यत्वादिति** । सूक्ष्मत्वादित्यर्थः । इन्द्रियागोचरत्वात्कालस्यैतत्पूर्वोक्तमयनादिरूपं प्रमाणं कालास्तित्वे । तत्रानुभवं संवादयति—अनेनैव हि पूर्वोक्तप्रकारेण कालः प्रमीयते सम्यगवधार्यते न प्रत्यक्षादिनेत्यर्थः ।

किमेवं प्रमाणोपन्यासेनास्ति चेत्कालः स्वयमेव दृश्येतेति मन्दाशङ्कायामाह—

**न विना प्रमाणेन प्रमेयस्योपलब्धिः ।**

**नेति** । अनादिमायावच्छिन्नचिद्विलासरूपस्य कालस्य जडत्वात्प्रमेयान्तरवन्मानाधीनसिद्धिकत्वमित्यर्थः ।

यदि कालस्य[1] प्रमेयत्वं तर्हि निमेषादीनामपि कालावयवानां कालत्वाविशेषादभेदे सति कथं कालेन कालप्रमेत्यत आह—

**प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैत्यात्मसंबोधनार्थमित्येवं ह्याह ।**

**प्रमेयोऽपीति** । पृथक्त्वादवयवावयविभावेन भेदात्प्रमेयोऽपि प्रमाणत्वमुपैति प्राप्नोति । किमर्थम् । आत्मनः स्वस्य सम्यग्बोधनार्थमवधारणार्थं दीपप्रकाशेन दीपानुमानवदित्यर्थः । एवं ह्याहैवंविधः कालः सूर्याधीन इत्यत्रोदाहरणमाहेत्यर्थः ।

**यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ यः कालं ब्रह्मेत्युपासीत कालस्तस्यातिदूरमपसरतीत्येवं ह्याह ।**

**यावत्यो वै० एवं ह्याहेतीति** । यावत्यो वै प्रसिद्धाः कालस्य कला अंशास्तावतीष्वसौ सविता चरति तत्प्रवर्तकत्वेन विचरति ताः संपादयतीत्यर्थः । अतो यः कालं कलयितारं कालरूपमादित्यं[2] ब्रह्मेत्युपासीत तस्योपासकस्यातिदूरं कालोऽपसरति सक्रन्मृत्वा पुनर्मरणाय न जायते कालव्याप्यो न भवतीत्यर्थः ।

---

१ क. °लस्यापि प्र° । २ क. °लस्य रू° ।

तत्र कालस्य ब्रह्मदृष्ट्यर्हत्वाय पुनरुदाहरणमेवं ह्याह—

**कालात्स्रवन्ति भूतानि कालाद्वृद्धिं प्रयान्ति च ।**
**काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥ १४ ॥**

कालात्स्रवन्तीत्यादि पादत्रयं स्पष्टार्थम् । कालो मूर्तिर्मूर्तिमानादित्यरूपेणामूर्तिमांश्च निमेषादिसंवत्सरान्तेन रूपेणेति चतुर्थपादार्थः ॥ १४ ॥

कालनिर्वर्तकत्वादादित्यः कालात्मको ब्रह्मदृष्ट्योपास्य इत्युक्तं तत्र किं ब्रह्म निमेषादिकालेषु किमात्मकश्चाऽऽदित्यो ब्रह्मदृष्ट्योपास्य इत्याकाङ्क्षायामाह—

**द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्या- त्सोऽकालोऽकलोऽथ य आदित्याद्यः स कालः सकलः**

**द्वे वावेत्यादिना** । प्रायः स्पष्टार्थोऽयमनुवाकः । **प्रागादित्यादिति** । आदित्योत्पत्तेः प्राग्यद्ब्रह्मणो रूपं सोऽकालः स न कस्यापि कलयिता यतोऽकलः कलारहित इत्यर्थः । अथ य आदित्याद्य आदित्य आद्यः प्रवर्तको यस्य स तथा स कालः सकलः कालाभिः सहित इत्यर्थः ।

**सकलस्य वा एतद्रूपं यत्संवत्सरः**

**सकलस्य वा इति** । संवत्सरः सकलस्य कालस्य स्वरूपम् ।

तस्योपास्यत्वाय ब्रह्मसाम्यमाह—

**संवत्सरात्खल्वेमाः प्रजाः प्रजायन्ते संवत्सरेणेह वै जाता विवर्धन्ते संवत्सरे प्रत्यस्तं यन्ति तस्मात्संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा चेत्येवं ह्याह ।**

**संवत्सरादिति** । यस्मादेवं संवत्सरः सर्वकारणं तस्मात्संवत्सरो वै प्रसिद्धः प्रजापतिर्हिरण्यगर्भः सूर्यात्मा स कालः । सोऽन्नमन्नहेतुत्वात् । ब्रह्मणो नीडमालम्बनं ब्रह्मदृष्टियोग्यं प्रतीकमित्यर्थः । आत्मा च प्राणिनाम् 'सूर्य आत्मा' इति मन्त्रवर्णात् । एवं ह्याह ।

**कालः पचति भूतानि सर्वाण्येव महात्मनि ।**
**यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित् ॥ १५ ॥**

महांश्चासावात्मेति महात्माऽकालात्मक ईश्वरस्तस्मिन्महात्मनि सर्वाण्येव भूतानि कालः पचति जरयति परमात्मन्यधिष्ठाने तदायत्तः कालो भूतानि पचन्परिवर्तत इत्यर्थः । तथा च श्रुत्यन्तरम्— 'एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति' ( बृहदा० अ० ५

---

१ ग. इति वीक्षा° । २ क. °त्खल्विमाः । ३ क. प्रजा जा° ।

ब्रा० ८) इति । यस्मिंस्तु कालात्मा सविता पच्यते लीयते तं यो वेद स वेदरहस्यविदित्यर्थः ॥ १९ ॥

पुनरपि सकलं कालं स्तौति—

**विग्रहवानेष कालः सिन्धुराजः प्रजानाम् । एष तत्स्थः सविताख्यो यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादयः सूयन्तेऽथैभ्यः सर्वमिदमत्र वा यत्किंचिच्छुभाशुभं दृश्येतेह लोके तदेतेभ्यस्तस्मादादित्यात्मा ब्रह्माथ कालसंज्ञमादित्यमुपासीताऽऽदित्यो ब्रह्मेत्येकेऽथैवं ह्याह ।**

**विग्रहवानेष इति ।** विग्रहवान्मूर्तिमानेष कालः पूर्वोक्तः प्रजानां सिन्धुराजः समुद्रः समुद्रवद्दुस्तर इति यावत् । एष सविताख्यो यस्मात्तत्स्थस्तस्मिन्काले निमित्ततया स्थितः । कोऽसौ सविताख्यः । यस्मादेव सवितुरिमे चन्द्रादयः सूयन्तेऽभिषूयन्त आप्यायन्ते स्वतेजःप्रवेशनेनेत्यर्थः । अथ प्रसिद्धमेभ्यश्चन्द्रादिभ्यः सर्वमिदम् । किम् । यत्किंचिच्छुभाशुभमिह लोके दृश्यते सुखदुःखादीत्यर्थः । तदेतेभ्य आदित्यादिग्रहेभ्यो निमित्तभूतेभ्य इत्यर्थः । यस्मादेवमादित्यनिमित्ता जगत्स्थितिस्तस्मादादित्यात्मा ब्रह्म । यत एवंप्रभाव आदित्योऽथ तस्मात्कालसंज्ञमादित्यमुपासीतेत्येतद्विधिवाक्यम् । कालसंज्ञमादित्यं ब्रह्मेत्युपासीतेत्यर्थः । एके शाखिनः कालसंज्ञालक्षणं गुणमनादृत्याऽऽदित्यो ब्रह्मेत्यादित्योपासनं ब्रह्मदृष्ट्या विदधत्यादित्यो ब्रह्मेत्यादेश इत्यत्रेत्यर्थः । सर्वथाऽप्यादित्यो ब्रह्मेत्येवं ह्याह मन्त्रः ।

**होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः ।**
**सर्वः कश्चित्प्रभुः साक्षी योऽमुष्मिन्भाति मण्डले ॥ १६ ॥**

होता हविषः प्रक्षेप्ता यजमान ऋत्विग्वा भोक्ता हविषः स्वीकर्ता देवताविशेषो हविश्चर्वादिद्रव्यं मन्त्रस्तत्प्रक्षेपसाधनत्वेन विहित एतैः सर्वैः साध्यो यो यज्ञः स को विष्णुः । यज्ञो वै विष्णुरिति श्रुतेः । प्रजापतिः प्रजानां पालयितेश्वरः कर्मफलदातैवंविधो यो जगद्धेतुकलापः स सर्व एष एवेत्यध्याहारः । कः । योऽमुष्मिन्दूरस्थे मण्डले भाति प्रकाशते । किंलक्षणः । कश्चिदेको यः कश्चिदिति वा संबन्धः । प्रभुः स्वतन्त्र ईश्वरः । साक्षी साक्षात्सर्वद्रष्टेत्यर्थः ॥ १६ ॥

इदानीमादित्यप्रतीकोपासनप्रसङ्गेनाऽऽदित्यान्तर्यामिणो ब्रह्मण उपासनाविशेषं विधित्सन्नाह—

---

१ ग. दृश्यन्तेह । २ क. °मानो भो° । ३ क. स एको । ४ क. °नाविधिवि° । ५ क. °षं प्रशंसन्ना° ।

**ब्रह्म ह वा इदमग्र आसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्तः**
**प्रतीच्यनन्त उदीच्यनन्त ऊर्ध्वं चावाङ्च[1] सर्वतो[2]ऽनन्तः ।**

**ब्रह्म ह वेत्यादिना** । ब्रह्म ह परमात्मा वा एवेदं कालसूर्याग्न्यादिकं जगदग्रे सृष्टेः पूर्वमासीत् । ब्रह्मणोऽविभक्तमेव सर्वं वटबीज इव महान्वट आसीदित्यर्थः । अत एव स परमात्मैकः सजातीयविजातीयवस्त्वन्तरशून्यः । तर्हि किं वटबीजवत्सूक्ष्मो नेत्याह—अनन्तोऽपरिच्छिन्नो देशतः कालतो वस्तुतश्चासंकुचित इत्यर्थः । उक्तमानन्त्यमुपपादयति—**प्रागनन्त इत्यादिना** । प्राच्यादिषु दशास्वपि दिक्षु परिच्छेदराहित्यात्सर्वतोऽनन्त इत्यर्थः ।

तर्हि यासु दिक्ष्वस्यापरिच्छेदस्ता दिशोऽन्याः सन्तीति तत एव वस्तुपरिच्छेदोऽस्य स्यादिति कुतो निरङ्कुशमानन्त्यमित्यत आह—

**न ह्यस्य प्राच्यादिदिशः कल्पन्ते[3]ऽथ तिर्यग्वाऽवा-**
**ङ्[4]वोर्ध्वं वाऽनूह्य एष परमात्माऽपरिमितोऽजः ।**

**न ह्यस्येति** । अस्याऽऽश्रयतया प्राच्यादिदिशो न हि कल्पन्ते[5] न वस्तुतः सन्तीत्यर्थः । अथ[6] तथा तिर्यग्वाऽवाङ्[7]वोर्ध्वं वा दिग्भेदोऽस्य न कल्पत[8] इत्यर्थः । देशो वा देशसंबन्धि वा वस्तु किमप्यस्य परिच्छेदकं नास्तीत्यभिप्रायः । यतोऽनूह्य एष परमात्मा न केनाप्यूह्यते धार्यत इत्यनूह्यो न क्वचिदाश्रित इत्यर्थः । तथा च श्रुत्यन्तरम्—'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' (छा० उ०) इति 'अन्यो ह्यन्यस्मिन्प्रतिष्ठितः' इति च । अनूह्यत्वे हेत्वर्थं विशेषणमपरिमित इति । यद्वस्तूह्यते तत्परिमितं दृष्टमयं परमात्मा न परिमितः पूर्णं पुरुषेण सर्वमिति सर्वातिशायित्वश्रवणात् । अतोऽनूह्य इत्यर्थः । अज इत्यपरिमितत्वे हेतुः । यज्जन्मवत्तत्परिमितं तद्धि क्वचित्कदाचित्किंचिदित्युल्लिख्यतेऽयं तु 'न जायते म्रियते वा' इति श्रुतेरजोऽतो न परिमित इत्यर्थः ।

परमात्माऽपि जन्मवान्कारणत्वान्मृदादिवदित्यत आह—

**अतर्क्योऽचिन्त्यः ।**

**अतर्क्य इति** । न तर्कगम्य इत्यर्थः । न सामान्यतो दृष्टानुमानादिरूपेण तर्केणायमीदृग्धर्मक इति व्यवस्थापयितुं शक्यते 'नावेदविन्मनुते तं बृहन्तम्' 'नैषा तर्केण मतिरापनेया' इत्यादिश्रुतिभिस्तर्कागोचरत्वप्रतिपादनात् । श्रुत्येकगम्येऽर्थे श्रुतिविरुद्धस्यानुमानस्यानुदयाच्चेति भावः । अतर्क्यत्वे हेतुरचिन्त्य इति । यत्तर्क्यते तन्मनसो

१ क. चावाङ् । २ क. °तो ह्यन° । ३ क. कल्प्यन्तेऽ° । ४ °ङ्चोर्ध्वं । ५ क. कल्प्यन्ते ।
६ क. °थ ति° । ७ ग. °ङ्चोर्ध्वं । ८ क. कल्प्यत ।

गोचरे वर्तते स्वयं च मनोगोचरो नायम्। तथा 'न तस्य कार्यं करणं च विद्यते न चास्य कश्चिज्जनिता न चाधिपः' (श्वे०उ०) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरित्यर्थः।

तत्रासङ्गत्वं हेतुमाह—

**एष आकाशात्मा।**

**एष आकाशात्मेति।** आकाशवदसङ्ग आत्मा स्वरूपं यस्य स तथा। न हि मनसाऽसंबद्धं मनोवेद्यं भवेदतिप्रसङ्गात् 'असङ्गो ह्ययं पुरुषः' (बृहदा०) इति श्रुतेर्नास्य मनःसंसर्ग इत्यर्थः। तत एवंविधस्याऽऽनन्त्ये न कोऽपि विघ्न इति सिद्धम्।

इतोऽप्ययमनन्त एष्टव्य इत्याभिप्रेत्याऽऽह—

**एवैष कृत्स्नक्षय एको जागर्ति।**

**एवैष इति।** एष एवेत्यन्वयः। कृत्स्नक्षये सर्वजगत्प्रलय एक एवैष परमात्मा जागर्त्यप्रच्युतस्वभावो वर्तते। अन्यत्किमपि तदा नाभूदित्यर्थः। तथा च श्रुत्यन्तरम्—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' (ऐतरेयोप०) इति।

एतदेव सर्वविकारकारणत्वेन सर्वाधिष्ठानतया स्पष्टी करोति—

**इत्येतस्मादाकाशादेष खल्विदं चेतामात्रं बोधयत्यनेनैव चेदं ध्यायते[1]ऽस्मिंश्च प्रत्यस्तं याति।**

**इत्येतस्मादिति।** इतिशब्द उक्तविशेषणसमाप्त्यर्थत्वेन पूर्वेण वाऽन्वेति। एतस्मादित्येव प्रतीकमिदम्। एष एव कृत्स्नक्षय एको जागर्तीति यतोऽत एतस्मादित्याद्ये प्रतीके योजना। एतस्मादाकाशात्प्रसिद्धाद्भूताकाशादारभ्य यदिदं जगच्चेतामात्रं[2] चेत्यमात्रमिति यावत्। चैतन्याभासव्याप्तत्वेनोपलभ्यमानत्वाच्चेत्यमपि चेतामात्रमुच्यत इति द्रष्टव्यम्। आकाशादि सर्वं जगदेष खलु परमात्मा बोधयति बोधव्यासं करोति पालयतीत्यर्थः। किंचानेनैव परमात्मनेदं ध्यायते ध्यानमात्रेणोत्पाद्यते 'सोऽकामयत बहु स्यां प्रजायेय' इति 'इदं सर्वमसृजत' इति च श्रुतेः। अस्मिंश्चास्मिन्नेव प्रत्यस्तं प्रलयं यात्येकात्मतां गच्छतीत्यर्थः। तस्मादेक एवैष कृत्स्नक्षये जागर्तीत्युपपन्नमस्य सर्वदैवानन्तत्वमिति भावः।

एवमुपास्यस्य परमात्मनः स्वाभाविकं स्वरूपमुपवर्ण्य तस्योपासनाधिष्ठानं निर्दिशन्नाह—

**अस्यैतद्भास्वरं रूपं यदमुष्मिन्नादित्ये तपत्यग्नौ[4] चाधूमके यज्ज्योतिश्चित्रतरमुदरस्थोऽथ वा यः पचत्यन्नमित्येवं ह्याह।**

---

१ क. °ते तस्मिं°। २ क. °त्रं चैतन्यमा°। ३ क. °लभ्यमानत्वा°। ४ क. °ग्नौ वाऽधू°।

**अस्येति** । अस्य परमात्मन एतद्यथोक्तं भास्वरं स्वप्रकाशं जगदवभासकं रूपं स्वरूपं यद्रूपममुष्मिन्नादित्ये प्रसिद्धे तपत्यादित्ये स्थितं सज्जगत्तापयति प्रकाशयति चैतदस्य रूपमिति । किंचाधूमकेऽग्नौ यज्ज्योतिस्तदप्यस्यैव रूपमिति संबन्धः । कीदृशं ज्योतिश्चित्रतरमतिविचित्रं तत्तदिन्धनभेदवशात्कृशस्थूलवक्रत्वाद्याकारेणावभासमानमित्यर्थः । अथ वा योऽन्योऽप्युदरस्थो जाठरसंज्ञोऽग्निरन्नं भुक्तं पचति सोऽप्यस्यैव रूपमिति संबन्धः । इत्येतदेव प्रशंसन्नेवं ह्याहात्रापेक्षितं विशेषमिति शेषः ।

**यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एष एक इत्येकस्य हैकत्वमेति य एवं वेद ॥ १७ ॥**

यश्चैषोऽग्नौ ज्योतीरूपो यश्चायं हृदये साक्षिरूपो यश्चासावादित्ये तपनप्रकाशनस्वभाव एष परमात्मैव स एको नान्य इत्येवंप्रकारेणाऽऽत्मन्यादित्यादौ च परमात्मैव ज्योतीरीति य एवं वेदोपास्ते स एकस्य परमात्मनो हि स्फुटमेकत्वमेति प्राप्नोति परमात्मसायुज्यं गच्छति तस्मात्सर्वत्र प्रकाशस्वरूपं परमात्मैवाहमित्युपासीतेति वाक्यार्थः ॥ १७ ॥

पूर्वानुवाके ध्येयं रूपं ध्यानविधिं च दर्शयित्वेदानीं ध्येये चित्तस्थिरीकरणलक्षणस्य ध्यानस्य सिद्धये चित्तवशीकारोपायं योगं साङ्गमुपदिशति—

**तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्ग[३] इत्युच्यते योगः ।**

**तथा तत्प्रयोगकल्पः** ० इत्युच्यते योग इति । यथा प्रागुक्तोपासनासाधनचित्तैकाग्र्यसिद्धिस्तथा तत्प्रयोगकल्पस्तस्य चित्तैकाग्र्यसाधनस्य प्रयोगकल्पोऽनुष्ठानविधिरयमुच्यत इति वाक्यशेषः । तमेवाऽऽह— प्राणायामः पूरककुम्भकरेचकभेदेन प्राणवायोरायमनं वशीकरणं प्राणायामः । इन्द्रियाणां विषयेभ्यः प्रत्याहरणं प्रतिनिवर्तनं प्रत्याहारः । पराक्स्रोतःपरावर्तनेनेन्द्रियाणां प्रत्यक्स्रोतःप्रवर्तनं प्रत्याहार इत्यर्थः । ध्येये वस्तुन्यन्तःकरणस्य प्रयत्नेन तदाकारतया निवेशनं ध्यानम् । तस्मिन्नेव तस्य तैलधारादिवदविच्छेदेन स्थिरीकरणं धारणं धारणा । मनो ध्येये वस्तुनि तदाकारतया सम्यक्संपन्नं न वेति परीक्षणं तर्कः[६] । ध्यानधारणासामर्थ्यादुपस्थितक्षुद्रसिद्धीनां योगान्तरायत्वोहनं वा तर्कः । सविकल्पकसमाधिर्वा तर्कः । चित्तस्य ज्ञेयवस्त्वाकारतामापन्नस्य निर्वातदेशस्थप्रदीपशिखावदचलतयाऽवस्थानं समाधिः । इत्येवं षड्विधैरङ्गैरुपेतो योगः षडङ्ग उच्यत इत्यर्थः ।

---

१ क. °त्येतावदे° । २ ग. °हा आदि° । ३ ग. षडङ्गा । ४ क. °सनप्रा° । ५ क. °राव° ६ क. °र्कः । स° ।

उक्तस्यास्य योगस्य सर्वार्थध्यानोपकारकतां विवक्षन्नाह—

**अनेन यदा पश्यन्पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम् । तदा विद्वान्पुण्यपापे विहाय परेऽव्यये सर्वमेकी करोत्येवं ह्याह ।**

**यथा पर्वतमादीप्तं नाऽऽश्रयन्ति मृगाद्विजाः ।**
**तद्वद्ब्रह्मविदो दोषा नाऽऽश्रयन्ति कदाचन ॥ १८ ॥**

**अनेन यदा० कदाचनेति** । अनेन योगेन सम्यगभ्यस्तेन पश्यन्स्वध्येयं वस्तु समालोचयन्सन्यदा यस्मिन्समये रुक्मवर्णं पुरुषं पश्यति साक्षादनुभवति तदा तस्मिन्नेव समये विद्वान्परिपूर्णं तत्त्वं जानानः पुण्यपापे अनारब्धफले विहाय त्यक्त्वा प्रारब्धस्यापि कर्मण उभयविधस्य भोगेन विनाशे सति सर्वं प्राणेन्द्रियदेहादिरूपमुपाधिं परे परमात्मन्यव्यये कूटस्थे प्रत्यगात्मनि ब्रह्मण्येकी करोति। तप्तायःपी(पति)तोदकबिन्दुवत्प्रकाशमान आत्मन्युपसंहरतीत्यर्थः । रुक्मवर्णमित्यादिपुरुषविशेषणजातस्यायमर्थः । रुक्मवर्णमिति स्वतःसिद्धप्रकाशात्म[3]ताद्योतनादविषयत्वं पुरुषस्य विवक्ष्यते[4] । कर्तारमिति पुरुषविशेषणं भूतपूर्वगत्योच्यते । ईशं योनिमिति च ब्रह्मविशेषणे निमित्तोपादानपरे ते अपि भूतपूर्वगत्याऽनूद्येते । पुरुषब्रह्मशब्दौ त्वंतत्पदलक्ष्यविषयौ । तथा च कर्तारं पुरुषमीशं योनिं ब्रह्म रुक्मवर्णं यदा पश्यतीति योजनीयो ग्रन्थ इति । एवं ह्याहेत्यादिर्विद्यामाहात्म्यख्यापनपरो ग्रन्थः स्पष्टार्थः ॥ १८ ॥

इदानीं[6] पूर्वोक्तयोगे परिनिष्ठितस्य श्रेष्ठं पदं स्वे हृदि धारणायाः प्रवर्तते वक्तुमनन्तरेण खण्डेन वेदोऽतिरहस्यवादी—

**अथान्यत्राप्युक्तं यदा वै बहिर्विद्वान्मनो नियम्येन्द्रियार्थांश्च प्राणो निवेशयित्वा निःसंकल्पस्ततस्तिष्ठेत् ।**

**अथान्यत्राप्युक्तमित्यादिना** । यदा वै यस्मिन्नेव काले विद्वान्योगी प्राणः प्राणोपाधिं प्रविष्टो मनो नियम्यैकत्र स्थिरं कृत्वेन्द्रियार्थांश्च शब्दादीन्विषयान्बहिर्निवेशयित्वा दूरतस्त्यक्त्वा ततस्तदनन्तरं निःसंकल्पो निर्विकारमनास्तिष्ठेदिति पदान्वयानुरूपा व्याख्या ।

कथं विद्वान्प्राणः कथं वा तिष्ठेदित्याकाङ्क्षायामाह—

**अप्राणादिह यस्मात्संभूतः प्राणसंज्ञको जीवस्तस्मात्प्राणो वै तुर्याख्ये धारयेत्प्राणमित्येवं ह्याह ।**

१ क. °क्तस्य साङ्गस्य । २ क. °था प्रदीप्तं पर्वतं नाऽऽ° । ३ क. °त्मना द्यो° । ४ क. विवक्षितम् । ५ क. °लक्षणावि° । ६ क. °नीं योगप° ।

**अप्राणादिति** । अप्राणात्प्राणादिविशेषरहिताच्चिदात्मन एवेह देहे यस्मात्प्राणसंज्ञको जीवः संभूतः प्राणधारिणोपाधिना प्राणसंज्ञां प्राप्य जीवो जात इति यावत् । तस्मात्प्राणो वै स्वभावतोऽप्राणोऽपि प्राण इति प्रसिद्धः स तुर्याख्ये[1]ऽवस्थात्रयातीते[2]ऽप्राणे प्राणमात्मानं धारयेत्प्राणात्मभावनां हित्वाऽप्राणचिदात्मभावनां कुर्यादित्यर्थः । एवं ह्याहात्र कश्चिन्मन्त्रः ।

**अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमम् ।**
**तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयम् ॥ १९ ॥**

अचित्तं चित्तरहितं चित्तमध्यस्थमन्तर्मनस्याभिव्यक्तं चित्त[3]मध्यास्थितमपि तेनाचिन्त्यं चिन्तनानर्हमत एवोत्तमं गुह्यमतिगुह्यं सर्वेन्द्रियाविषय इत्यर्थः । तत्राचिन्त्ये गुह्ये तत्त्वे चित्तं निधायेत तदाकारीकरणेन तन्मयं चित्तं कुर्यात् । तच्च प्राणाख्यं लिङ्गं लिङ्गोपाधिकं जीवरूपं निराश्रयमभिमन्तुराश्रयस्याभावात्तदा न पृथगवभासत इत्यर्थः । यद्वाऽऽश्रयशब्दो विषयपरः । तथा च तच्च चित्ताख्यं लिङ्गं निराश्रयं निर्विषयं संपद्यते तदेति शेषः ॥ १९ ॥

एवं ज्ञानमार्गेणा[4]ऽऽत्मनोऽवस्थात्रयातीतस्वरूपे धारणाप्रकारमभिधाय योगमार्गेणापि धारणाविशेषं कैवल्यं संमतमुपदिशति—

**अथान्यत्राप्युक्तमतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनःप्राणनिरोधनाद्ब्रह्म तर्केण पश्यति यदाऽऽत्मनाऽऽत्मानमणोरणीयांसं द्योतमानं मनःक्षयात्पश्यति तदाऽऽत्मनाऽऽत्मानं दृष्ट्वा निरात्मा भवति निरात्मकत्वादसंख्योऽयोनिश्चिन्त्यो मोक्षलक्षणमित्येतत्परं रहस्यमित्येवं ह्याह ।**

**अथान्यत्राप्युक्तं०** मित्येवं ह्याहेति । अतोऽनन्तरमस्य तुर्यात्मनि स्थितस्याऽऽत्मनः परोत्कृष्टा धारणा पराऽन्येति वा कथ्यत इति वाक्यशेषः । यदाऽयं योगाभ्या[5]सवशीकृतचित्तः सन्नुन्मनीभावं जिगमिषति तदाऽयमुपायः कार्यः । कथम् । तालुकण्ठदेशे जिह्वोद्गमनस्थानं तस्मिंस्तालुनि रसनाग्रस्य निपीडनमन्तःप्रवेशनं तस्मात्तालुरसनाग्रनिपीडनाल्लम्बिकायोगकरणादिति यावत् । तत्र च वाङ्मनःप्राणानां निरोधनात्संकल्पोच्चारणस्पन्दनानां परिवर्जनाद्ब्रह्म पारमेश्वरं तत्त्वं तर्केण धारणानन्तरभाविना निश्चितरूपेण ज्ञानेन पश्यति । यदैवंप्रकारेण मनःक्षयान्म[6]नसो मनस्त्वनाशादणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्ममिन्द्रियागोचरं द्योतमानं स्वयमेव प्रकाशमानमात्मानं प्रत्यञ्चमात्म[7]ना

१ क. °र्याख्योऽव । २ क. °तीतोऽप्राणः प्रा° । ३ म. °त्तस्थि । ४ क. °णाव° । ५ क. °वश्यसं° । ६ क. °न्मनसत्व° । ७ क. °त्मनेहयं° ।

परमात्मना 'इत्थंभावे तृतीया' परमात्मरूपेण पश्यति साक्षादनुभवति । तदाऽऽत्मनाऽऽत्मानं दृष्ट्वा निरात्मा भवति निर्मनस्को भवति जीवभावान्निवर्तते । एषाऽवस्था योगिभिरुन्मनीत्युच्यते । निरात्मकत्वादुक्तरूपेणोन्मनीभावात्परिच्छेदकविरहादसंख्योऽपरिच्छिन्नोऽयोनिराश्रयरहित आत्मा चिन्त्यः । चिन्तनं नामात्र तदात्मनाऽवस्थानमात्रम् । एवंविध आत्मा तदा स्फुरतीत्युक्तं भवति । न पुनरत्र विधिरसंभवात्तस्येहेति भावः । इत्येतन्मोक्षलक्षणं मोक्षस्वरूपं परं रहस्यमतिशयेन गोप्यमित्यस्मिन्नर्थ एवं ह्याह ।

मन्त्रमुदाहरति—

**चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।**
**प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुता इति ॥ २० ॥**

**चित्तस्य हीति** । प्रसादो निर्वासनतापत्तिः । आत्मनि स्थितिस्तस्मिन्नेकीभावः । स्पष्टमन्यत् ॥ २० ॥

इदानीमुपासकस्योपासनपरमफलप्राप्त्यर्थं देहादुत्क्रमणमार्गमुपदिशति—

**अथान्यत्राप्युक्तमूर्ध्वगा नाडी सुषुम्नाख्या प्राणसंचारिणी तालवन्तर्विच्छिन्ना तया प्राणोंकारमनोयुक्तयोर्ध्वमुत्क्रमेत् ।**

**अथान्यत्राप्युक्तं० मुत्क्रमेदिति** । या सुषुम्नाख्या नाडी हृदयान्मूर्ध्नि ब्रह्मरन्ध्रपर्यन्तमूर्ध्वगा प्राणसंचारिणी प्राणस्य ब्रह्मलोकपर्यन्तं सूर्यरश्मिद्वारा संचारयित्री प्रसिद्धा । तथा च श्रुत्यन्तरम्—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति' ( छा० ) इति । सा पुनरूर्ध्वं गच्छन्ती तालवन्तरमध्ये विच्छिन्ना कुण्ठिता भवति । तथा च तत्र यत्नतस्तया प्राणोंकारमनोयुक्तयाऽभ्यासवशीकृतेन प्राणेन ध्येयब्रह्माकाराकारितेन मनसोंकारध्वनिना च युक्तया, ऋज्वीकृतयोर्ध्वं तालूपरि स्तनाकारेण लम्बमानमांसान्तःप्रवेशनेनोत्क्रमेदुपरि गच्छेदित्यर्थः । तथा च श्रुत्यन्तरम्—'अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिर्यत्रासौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले' ( तैत्तिरीयोप० ) इति ।

तत्रोर्ध्वं नाडीनयनप्रकारमाह—

**तालवध्यग्रं परिवर्त्य चेन्द्रियाण्यसंयोज्य महिमा महिमानं निरीक्षेत ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं लभता इत्येवं ह्याह ।**

**तालवध्यग्रं परिवर्त्येति** । तालवध्युपरि रसनाया अग्रं परिवर्त्य संचार्य यद्वा तालु-

---

१ क. °त्मस्वरू° । २ क. °श्नुत इ° । ३ क. °नाफल° । ४ क. °वाऽऽत्ल° । ५ क. निस्त्रा° । ६ क. कोशान्तो । ७ क. तत ऊर्ध्वं । ८ क. याणि सं° । ९ क. °भत इ° ।

नोऽग्रादुपरि ताल्वन्तो रसनाग्रं निवेश्योपरिस्तनाकारमभिभूयेति यावत् । इन्द्रियाणि संयोज्य प्राणमनोभ्यामेकीकृत्योत्क्रमेदिति पूर्वेणान्वयः । एवमुत्क्रमणे यो महिमा पारिच्छेद्यनिवृत्त्या पूर्णतारूपस्तं महिमानं निरीक्षेतानुभवेत् । ततस्तस्मान्निरीक्षणान्निरात्मकत्वं निरिन्द्रियमनस्कत्वं निर्लिङ्गत्वमेति प्राप्नोति निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं कैवल्यं मोक्षं लभत इत्येवमर्थं ह्याह मन्त्र इत्यर्थः । इन्द्रियाण्यसंयोज्येति पाठ इन्द्रियायतनानां शरीरावयवानां मनःप्राणाभ्यामसंबन्धनमुपादिश्यत इति व्याख्या । एतदुक्तं भवति प्रागुक्तप्रकारेण योगधारणया युक्तो ब्रह्मोपासीनो यदा योगसामर्थ्या[३]त्ताल्वन्तःसंचारितसुषुम्नानाडीकस्तत्रैव कथंचित्परमात्मतत्त्वमवगच्छति तदोन्मनीभावेन परममुक्तेरयत्नलभ्यत्वं जानंस्तत्रैव यावज्जीवं ब्रह्ममयोऽवतिष्ठेत । ततः प्रारब्धक्षये देहविगमे परमं महिमानं परममुक्तिलक्षणं गच्छति । यदा पुनः प्रागुक्तं स्थानं योगमहिम्ना प्राप्नोति ब्राह्मलौकिकैश्वर्यविहाराभिलाषस्तदोर्ध्वमुक्तप्रकारेणाक्रम्य महिमानं ब्राह्मलौकिकं निरीक्षेत ततः क्रमेण केवलत्वं कालेन लभत इति ।

**परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः ।**
**तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्धनि[४] ॥ २१ ॥**

**परः पूर्वमिति** । पूर्वमभ्यासदशायां निगृहीतानिलं वशीकृतप्राणं परः परस्तात्तालुदेशे प्रतिष्ठाप्य स्थिरीकृत्य ततः पश्चात्पारं पारिच्छिन्नं जीवभावं तीर्त्वोल्लङ्घ्य पश्चादपारेणापारिच्छिन्नेन ब्रह्मणा तद्रूपेणाऽऽत्मानं मूर्धनि ब्रह्मरन्ध्रे युञ्जीत योजयेत् । मूर्धद्वारा ब्रह्मभावं नयेदित्यर्थः ॥ २१ ॥

इदानीं प्रकारान्तरेण ब्रह्मप्राप्त्युपायमुपदेष्टुमुपक्रमते—

**अथान्यत्राप्युक्तं द्वे वाव ब्रह्मणी अभिध्येये शब्दश्चाशब्दश्चाथ शब्देनैवाशब्दमाविष्क्रियतेऽथ तत्रोमिति शब्दोऽनेनोर्ध्वमुत्क्रान्तोऽशब्दे निधनमेत्यथा( थ ) हैषा गतिरेतदमृतमेतत्सायुज्यत्वं[५] निर्वृतत्वं तथा चेति ।**

**अथान्यत्राप्युक्तं द्वे वावेत्यादिना** । द्वे वावैव ब्रह्मणी अभिध्येये । के ते । शब्दश्चैकं ब्रह्माशब्दश्च द्वितीयम् । किं ते द्वे अपि स्वतन्त्रे न किं तूपायोपेयरूपे इत्याह—अथानयोर्ब्रह्मणोर्यः शब्दस्तेन शब्देन ब्रह्मणाऽशब्दं ब्रह्माऽऽविष्क्रियते प्रकटी क्रियतेऽनभिव्यक्तितिरोधानमात्रेणेत्यर्थः । किं शब्दब्रह्म कथं वा तेनाशब्दं ब्रह्माऽऽविष्क्रियत इति तदाह—अथैवं सति तत्र तयोर्द्वयोर्मध्य ओमिति शब्द

१ क. °दनानि° । २ क. मन्त्रः । इन्द्रि° । ३ क. °र्थ्यात्तत्त्वतः सं° । ४ क. °नि । द्वे । ५ क. °त्सायोज्य° ।

ओंकारः शब्दाख्यं ब्रह्म । अनेन सर्वार्थवाचकसर्वशब्दव्यापकतया पूर्णत्वेनोद्धृत्याभ्यस्तेन साधनेनानेन शब्दब्रह्मणोर्ध्वं प्रपञ्चादुपर्युत्क्रान्त उद्गतो वाच्यवाचकरूपं सर्वं वेद्यजातमतिक्रान्तः सन्नशब्दे परे ब्रह्मणि निधनं नद्य इव समुद्रे लयमेति प्राप्नोति । यैवमशब्दे वाचामगोचरे ब्रह्मण्येकतापत्तिरथ तदैषां हि(ह) गतिः परमं फलम् । एतदेवामृतममृतत्वं मोक्षः । एतत्सायुज्यत्वं सायुज्यं सयुग्भावस्तादात्म्यमिति यावत् । निर्वृतत्वं परमानन्दाविर्भावः कृतकृत्यत्वमित्यर्थः । इतिशब्दः शब्दाशब्दब्रह्मोपदेशसमाप्त्यर्थः ।

उक्तेऽर्थे दृष्टान्तमाह—

**अथ यथोर्णनाभिस्तन्तुनोर्ध्वमुत्क्रान्तोऽवकाशं लभतीत्येवं वाव खल्वसावभिध्यातोमित्यनेनोर्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभते ।**

**अथेति** । अथास्मिन्नर्थे दृष्टान्तो यथोर्णनाभिर्लूताकीटस्तन्तुना स्वमुखाल्लालानिर्मितेनाविच्छिन्नेन सूत्रेणोर्ध्वमुपरिदेशं प्रत्युत्क्रान्तोऽवकाशं निरङ्कुशविहारस्थानं लभति लभत इति प्रसिद्धं जन्त्वन्तरसाधारणदेशशाबल्यं परित्यज्यासाधारणं निर्भयमवकाशं प्राप्नोतीत्यर्थः । एवं वावैवमेव खलु यथाऽयं दृष्टान्तस्तथाऽसावभिध्यातोमित्यनेन शब्दब्रह्मणा साधनेनोर्ध्वमुत्क्रान्तोऽहंममतास्पदशाबल्याद्विमुक्तः स्वातन्त्र्यं कैवल्याख्यं लभत इत्यर्थः ।

एवं प्रणवाख्यशब्दब्रह्माभ्यासोऽशब्दपरब्रह्माविर्भावसाधनमिति स्वमतमुक्त्वा मतान्तरमाह—

**अन्यथा[3] परे शब्दवादिनः ।**

**अन्यथेति** । परे शब्दवादिनः शब्दब्रह्मवादिनः शब्दमाकर्णयन्तीत्यन्वयः । कथमिति तदाह—

**श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्द-**
**माकर्णयन्ति सप्तविधेयं तस्योपमा ।**

**श्रवणेति** । कर्णयोरङ्गुष्ठं ( ष्ठौ ) योजयित्वा कर्णयोरङ्गुष्ठाभ्यां पिधानेनान्तर्हृदये य आकाशोऽवकाशस्तत्रत्यं शब्दमाकर्णयन्ति तं शब्दं शब्दब्रह्मेति मन्यन्त इत्यर्थः । तस्य श्रूयमाणस्यान्तर्हृदयाकाशस्थघोषस्येयं वक्ष्यमाणा सप्तविधोपमोपमानं भवति ।

तामेवाऽऽह—

**यथा नद्यः किङ्किणी कांस्यचक्रकभेकविःकुन्धिका**

---

१ क. °षा ग° । २ क. °युज्यं । ३ क. °था श° । ४ क. कांस्यं च° । ५ क. °क्रकं भे° । ६ क. °कविवृकन्धि° ।

**वृष्टिर्निवाते वदतीति तं पृथग्लक्षणमतीत्य परेऽशब्देऽव्यक्ते ब्रह्मण्यस्तं गतास्तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा संपन्ना मधुत्वं नाना रसा इत्येवं ह्याह ।**

**यथेति** । नद्यो नदीनां घोषः । किङ्किणी घण्टाघोषः । कांस्यं तत्पात्रघोषः । चक्रकं रथचक्रध्वनिः । भेकैवि:क्रन्धिका मण्डूकरवः । वृष्टिर्वर्षणशब्दः । निवाते गुहायां कूपे वा वदति वदनमुपारिस्थितेन श्रूयमाणं सोऽप्येकः प्रकारः । एतैर्ध्वनिभिः सदृशो योऽन्तराकाशशब्दस्तं शब्दब्रह्मापरे वदन्तीत्यर्थः । इतिशब्द उपमेत्यनेन पूर्वेण संबध्यते । तमेवमन्तर्हृदये श्रूयमाणं पृथग्लक्षणमनेकोपमानैरनेकधा विभाव्यमानं शब्दमतीत्य परेऽशब्देऽव्यक्ते वाचामगोचरे ब्रह्मणि शुद्धेऽस्तं गता अदर्शनं प्राप्तास्ते शब्दब्रह्मवादिन इत्यर्थः । तत्र परे ब्रह्मणि तेऽपृथग्धर्मिणो ब्रह्मैकस्वभावा अत एवापृथग्विवेक्याः पृथग्विवेक्तुमशक्याः पूर्ववद्भेदोल्लेखायोग्या इत्यर्थः । तत्रायं दृष्टान्तो यथा नानारसाः पृथक्स्वभावकुसुमरसा यथा मधुत्वं मध्वात्मत्वं संपन्नाः सन्तो न पृथग्विवेक्यास्तद्वदित्यर्थः । एवं ह्यत्रोदाहरणमाह श्रुतिः ।

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २२ ॥**

द्वे ब्रह्मणी इति श्लोकः स्पष्टार्थः ॥ २२ ॥

उक्तमेव शब्दाशब्दब्रह्मरूपं विभज्याशब्दब्रह्मस्वरूपं विशदयति—

**अथान्यत्राप्युक्तं यः शब्दस्तदोमित्येतदक्षरं यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरत्वाय तदेता उपासीतेत्येवं ह्याह ।**

**अथान्यत्राप्युक्तं य इत्यादिना** । यदोमित्येतदक्षरं तच्छब्दः शब्दाख्यं ब्रह्मेति योजना । यदस्य प्रणवाख्याक्षरस्याग्रं नादावसानस्थानं तच्छान्तं निर्विशेषमशब्दमशब्दाख्यं परं ब्रह्म । अभयमित्यादीनि तस्य स्वरूपलक्षणार्थानि विशेषणानि स्पष्टार्थानि । सर्वापरत्वाय सर्वस्मादपरत्वाय मोक्षाय तदेता एते उक्तलक्षणे ब्रह्मणी उपासीतेत्येवमस्मिन्नर्थे ह्याह ।

**योऽसौ परापरो देवा ओंकारो नाम नामतः ।**
**निःशब्दः शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥ २३ ॥**

योऽसौ प्रसिद्धः परश्चापरश्च परापरब्रह्मदृष्ट्यर्हत्वाद्देवः परं ब्रह्म । कः । ओंकारो नाम नामतो योऽयं प्रसिद्धः स शब्दब्रह्मेत्यर्थः । यस्तु निःशब्दः परं ब्रह्माशब्दाख्यं

१ क. °कविक्र° । २ क. ख. °सा म° । ३ क. °मध्यय° । ४ क. अन्यय° ।

शून्यभूतो निराकारत्वान्निर्विशेषः । तत एवंविधमात्मानं ब्रह्म मूर्ध्नि स्थाने सर्वोत्कृष्टे हृदयस्थानेऽथवा भ्रुवोर्घ्राणस्य च यः संधिः सोऽविमुक्ताख्यः श्रुत्यन्तरे प्रसिद्धस्तस्मिन्मूर्ध्नि स्थानेऽभ्यसे*द्ध्यायीतेत्यर्थः ॥ २३ ॥

पूर्वोक्तप्रकारेण यथानिर्दिष्टं ब्रह्मोपासितवतो मतिं साधनविशेषोपदेशपूर्वकमाह । यद्वा ' द्वे वाव ब्रह्मणी अभिध्येये ' इत्यस्मिन्ननुवाके स्वमतेन शब्दब्रह्म प्रणवाख्यमुक्तं तन्निष्ठायां प्रकारविशेषमुपदिशन्नुपासनाफल[1]प्रकारमाह—

**अथान्यत्राप्युक्तं धनुः शरीरमोमित्येतच्छरः शिखाऽस्य मनस्तमोलक्षणं भित्त्वा तमोऽतमाविष्टमागच्छत्यथाऽऽविष्टं भित्त्वा**

**अथान्यत्राप्युक्तं धनुरित्यादिना** । धनुः कोदण्डः प्रसिद्धं शरीरम् । ओमित्येतदक्षरं शरः, अस्य शरस्य शिखाऽग्रं शल्यस्थानीयं मनः, तमो भ्रान्तिज्ञानं लक्षणं सद्भावज्ञापकं यस्य तत्तमोलक्षणं[2] तमो मूलाज्ञानं भित्त्वा शरप्रयोगेण लक्ष्यतमोभेदनं कृत्वा अतमाविष्टं संधिश्छान्दसः । अतमआविष्टं तमआवेशनरहितं संघाताद्विविक्तमात्मानमागच्छति मनोरूपं शराग्रं तस्मिन्निवेशयतीत्यर्थः । एतदुक्तं भवति सम आसन आसीनः सममूर्ध्वं धृतं शरीरं धनुरिव किंचिद्वक्षसि चिबुकारोपणेनाऽऽयम्य तस्मिन्प्रणवं घोषवन्तं शरमिवाऽऽविष्कृत्य तस्य नादलयस्थाने मनः शरशल्यमिव बद्ध्वा तेन प्रणवशराग्रेण मनसाऽऽवरणं सविक्षेपमज्ञानं विदार्य तदाश्रयविषयतयोपलक्षितमात्मानं प्रवेशयेत्तन्मन इति । अथान्तरमाविष्टं पूर्वमज्ञानाविष्टमात्मानमहंकारास्पदं भित्वा द्रष्टृरूपं दृश्यसापेक्षं विदार्य ब्रह्मापश्यदिति संबन्धः ।

तस्य ब्रह्मण आत्माभेदत्वख्यापनाय पुंलिङ्गैर्विशेषणैस्तद्विशिनष्टि—

**अलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म**

**अलातेत्यादिना** । अखण्डाकारस्फुरणेऽलातचक्रदृष्टान्तः । आदित्यवर्णमिति सर्वदृश्याभिभावकप्रकाशात्मत्वमादित्यरूपसादृश्यमुच्यते । ऊर्जस्वन्तमूर्जो रसस्तद्वन्तमानन्दरसमिति यावत् । तथा च श्रुतिः 'रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' ( तैत्तिरीयो० ) इति ।

**तमसः प[3]र्यमपश्यत् ।**

**तमसः प[4]र्यमिति** । परत्रेतं पर्यं पारं तमसः परस्तादतमस्कमित्यर्थः । एवंभूतमा[5]त्मानं ब्रह्मापश्यत्पश्यतीत्यर्थः ।

---

* आत्मनेपदं चिन्त्यम् ।

---

१ क. °लप्राप्तिप° । २ क. °णं तादृशं त° । ३ क. परम° । ४ क. परामि° । ५ क. °ति । अतमस्क° ।

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' ॥ ( गी० )

इति स्मृतेर्मूलभूतेन वाक्येन प्रकाशमात्रमस्य स्वाभाविकं स्वरूपं सर्वत्रोपलक्षणीयमित्यभिप्रेत्याऽऽह—

**यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ विद्युति विभात्यथ खल्वेनं दृष्ट्वाऽमृतत्वं गच्छतीत्येवं ह्याह ।**

**यदमुष्मिन्निति** । अथैवं ब्रह्मात्मदर्शनसमये खल्वेनमात्मानं दृष्ट्वा ब्रह्माभेदेन साक्षात्कृत्यामृतत्वं गच्छति मुक्तो भवतीत्येवं ह्याहेति पूर्ववत् ।

**ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निधीयते ।**
**अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥**

अन्तः प्रतीचि सर्वान्तरे परे तत्त्वे परे[1] ब्रह्मणि ध्यानं निधीयते[2] लक्ष्येषु च प्रथमं शरीर[3]प्रणवमनस्तल्लयस्थानेषु[4] च ध्यानं[5] निधीयते क्रियते कुर्यादित्यर्थः । अतो ध्यानादविशेषविज्ञानमस्फुटोऽनुभवो विशेषं स्फुटत्वमुपगच्छति ।

स्फुटतरसाक्षात्कारोदये[6] सति यदात्मनाऽवस्थानं सा मुक्तिरित्येतदाह—

**मानसे च विलीने तु यत्सुखं चाऽऽत्मसाक्षिकम् ।**
**तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव सः ॥ २४ ॥**

**मानस इति** । मानसे मनःपरिणामरूपेऽहंकारग्रन्थौ विलीने प्रलयं गते चकारात्तद्वासनायां च विलीनायाम् । तुशब्दः सुषुप्तेर्विशेषणार्थः[7] । यत्सुखं चकाराद्धेतुमत्त्वशङ्का व्यावर्त्यते । नित्यं यत्सुखमात्मसाक्षिकं स्वयमेव स्फुरन्न वेद्यमिति यावत् । तदेव ब्रह्म चकारादात्मा च । कीदृशममृतमविनश्वरं[8] शुक्रं दीप्तिमज्ज्ञानस्वभावम् । यदेवंविधं ब्रह्मात्मतत्त्वं सा गतिः पुरुषार्थः । स एव लोकः फलं सर्वसाधनानामित्यर्थः ॥ २४ ॥

इदानीमुक्तां विद्यामनूद्य तद्वन्तं प्रशंसन्विद्यामेव मही करोति—

**अथान्यत्राप्युक्तं निद्रेवान्तर्हितेन्द्रियः शुद्धितमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवशः[9] प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकं च सोऽपि प्रणवाख्यः प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवतीत्येवं ह्याह ।**

**अथान्यत्राप्युक्तमित्यादिना** । निद्रेव निद्रित इव सुषुप्त इवान्तर्हितेन्द्रियः[10] प्रविलीनेन्द्रियवृत्तिर्न निद्रावानित्यर्थः । तथा स्वप्न इव स्वप्नदृगिवेन्द्रियबिल इन्द्रियाणां निवासस्थाने

१ क. °रे च ब्र° । २ ग. धीयते । ३ क. °रीरं प्र° । ४ क. °षु ध्या° । ५ ग. नं धी° । ६ क. °ये यदा° । ७ क. °शेषार्थः । ८ क. °विधब्रह्मत° । ९ क. विनाशः । १० ग. इव चान्त° ।

देहेऽविवशः[1] स्थूलदेहाभिमानशून्य इति यावन्न त्वयं स्वप्नदृगेवेत्यर्थः। अनेनैव[2] देहाभिमानराहित्येन जाग्रदप्ययं नेत्युक्तप्रायं द्रष्टव्यम्। तथा चैवमवस्थात्रयातीतो लयविक्षेपरहितया शुद्धितमयाऽतिशयेन शुद्धिमत्या धिया प्रसन्नबुद्ध्या यः प्रणवाख्यं प्रणवैकात्मतामापन्नं प्रणेतारं पश्यति सोऽपि तदात्मा भवतीति योजना—'तं यथा यथोपासते तदेव भवति इति श्रुतेः। प्रणेताऽन्तर्यामीश्वरस्तं प्रणेतारमन्तर्यामित्वेनोपलक्षितमित्यर्थः। भारूपं ज्ञानप्रकाशस्वरूपमित्यनेन स्वरूपलक्षणमुक्तम्। विगतनिद्रमित्यविद्यातत्कार्यरूपावरणविक्षेपाज्ञानरहिततया कूटस्थत्वमुच्यते। विजरं विमृत्युमिति स्थूलसंघातधर्मतत्त्वनिरासेन ततो विविक्तत्वमुच्यते। विशोकमित्यन्तःकरणधर्मराहित्यम्। चकारात्प्राणधर्मक्षुत्पिपासाराहित्यं गृह्यते। एतेन सूक्ष्मसंघातादपि विविक्ततोक्ता। तथा च कार्यकारणप्रपञ्चातीतं यथोक्तविशेषणं लयविक्षेपरहिततयाऽवस्थात्रयातीतया बुद्ध्या योऽनुभवति सोऽपि प्रणवाख्य इत्याद्युक्तात्मको भवतीत्येवं ह्याह।

**एवं प्राणमथोंकारं यस्मात्सर्वमनेकधा।**
**युनक्ति युञ्जते वाऽपि तस्माद्योग इति स्मृतः॥**

किम्। एवं यथोक्तप्रकारेण प्राणं प्रणेतारमात्मानम्। अथ तथोंकारमोंकारात्मनैकीकृतं तत्त्वं प्रति यस्मादनेकधाऽनेकप्रकारं स्थूलसूक्ष्मकारणात्मकं सर्वं जगद्युनक्ति योजयति प्रविलापयति कश्चित्। युञ्जते वाऽपि स्वयमिव वा विलीयमानं युञ्जते योजयन्ति[3] वा केचित्। तस्मादियं निष्ठा योग इति स्मृतः[4] कथितो योगज्ञैरित्यर्थः।

सिद्धनिष्ठाफलरूपं[5] योगमुपलक्ष्य तत्साधकनिष्ठासाधनरूपं[6] योगं लक्षयति—

**एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च।**
**सर्वभावपरित्यागो योग इत्यभिधीयते॥ २५॥**

**एकत्वमिति**। प्राणादीनामेकत्वमेकविषयप्रवणतया प्रत्यक्प्रवाहकरणम्। सर्वभावपरित्यागः सर्वेषु क्रियाकारकफलेषु भावपरित्यागः सत्त्वबुद्धित्यागः। अथवा सर्वविषयको यो भावो भावनासंस्कारस्तस्य परित्यागः। अविषयात्मतत्त्वज्ञानाभ्यासेन बाह्यविषयवासनाभिभव इत्यर्थः॥ २६॥

पुनः प्रकारान्तरेण प्रणवनिष्ठायां भावनाविशेषं योगान्तरमाह—

**अथान्यत्राप्युक्तं यथा[7] वाऽप्सुचारिणः शाकुनिकः**
**सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ[8] जुहोत्येवं वाव खल्वि-**
**मान्प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोति।**

---

१ क. °विनाशः। २ क. अनेन। ३ क. °यति वा केनचि°। ४ क. °तः। सि°। ५ ग. °निष्ठां फ°। ६ ग. °निष्ठां सा°। ७ क. °था चाप्सु°। ८ क. °रे जु°।

**अथान्यत्राप्युक्तं यथेत्यादिना** । यथा वा लोके कश्चिच्छाकुनिकः शकुनोपजीवी किरातकैवर्तादिरप्सुचारिणो मत्स्यादीन्सूत्रयन्त्रेण जालसूत्रेणोद्धृत्योदर उदरस्थेऽग्नौ जुहोति[१] जाठराग्निसात्करोत्येवं वावैवमेव खल्विमान्प्राणाञ्जलचरस्थानीयान्देहान्तर्विचरतः सर्वानेव मुख्यामुख्यरूपानोमित्यनेनाक्षरेण जालसूत्रस्थानीयेन सर्वार्थसंग्रहसमर्थेनोद्धृत्य पृथक्कृत्यानामये निर्दोषे ब्रह्मात्माग्नौ जुहोति तदात्मसात्करोतीत्यर्थः ।

उद्धृत्य होमे दृष्टान्तमुक्त्वा हुतस्याग्निग्रस्ततयाऽग्निमयत्वे दृष्टान्तमाह—

**अतस्तप्तोर्वीव सः ।**

**अतस्तप्तोर्वीव स इति** । अतो होमानन्तरं स आत्मरूपोऽनामयोऽग्निस्तप्तोर्वीवो-र्वीशब्देनोर्वीजं[२] भाण्डमुच्यते यथा घर्मे महावीराख्यं भाण्डं तप्तं तादृशः स इत्यर्थः ।

दृष्टान्तं विवृणोति—

**अथ यथा तप्तोर्विसर्पिस्तृणकाष्ठसंस्पर्शेनोज्ज्वलतीत्येवं वाव खल्वसावप्राणाख्यः प्राणसंस्पर्शेनोज्ज्वलति ।**

**अथ यथेति** । तप्ता, उर्वी, आधारो यस्य तत्तप्तोर्वि तच्च तत्सर्पिश्चेति विग्रहः । तद्यथा तृणादिसंस्पर्शेनोज्ज्वलत्यूर्ध्वज्वालं जायत एवमित्यादिदार्ष्टान्तिकोक्तिः । एवं वावैवमेव खल्वसावप्राणाख्यः प्राणादिसंघाताद्विविक्ततया प्राणाख्यामलभमान आत्माग्निः प्राणसंस्पर्शेनोज्ज्वलति प्रकटी भवतीत्यर्थः । एतदुक्तं भवति यथा संतप्ते भाण्डे विद्यमानोऽप्यग्निर्न स्वरूपेण संदृश्यते घृतेनोद्दीपितः संस्तदुक्ततृणादिसंबन्धे[३] यथावद्दृश्यत एवमसावात्मा देहसंस्थो न यथावदवभासते प्राणादिप्रपञ्चप्रविलापने सति विलीयमानप्रपञ्चानुगतचिदाभासद्वारा यथावदवभासत इति । अथवा पूर्वोक्तस्याऽऽत्मनो यदग्निरूपकत्वमुक्तं तद्दृष्टान्तेन प्रपञ्चयति—**तप्तोर्वीव स इत्यादिना** । तप्तोर्विशब्देन तत्स्थं घृतं लक्ष्यते, तद्यथा स्वोर्व्या सह तप्यमानं स्वसंसर्गि सर्वं तृणादिकं संतपदभिज्वलत्येवमयमप्राणाख्य आत्मा चिदाभासव्याप्तं देहद्वयं संतपंस्तत्संसृष्टं सर्वमेव जगदभिज्वलयति प्रकाशयतीत्यग्नित्वेन रूपकमुक्तमिति ।

अस्यैव सर्वोत्पत्तिस्थितिलयकारणत्वेन सर्वात्मत्वमाविष्करोति—

**अथ यदुज्ज्वलत्येतद्ब्रह्मणो रूपं चैतद्विष्णोः परमं पदं चैतद्रुद्रस्य रुद्रत्वमेतत्तदपरिमितधा चाऽऽ[४]त्मानं विभज्य पूरयतीमाँल्लोकानित्येवं ह्याह ।**

**अथ यदुज्ज्वलतीति** । एतद्ब्रह्मणो हिरण्यगर्भस्य स्रष्टू रूपं स्वरूपं विष्णोः पालकस्य परमं पदं स्वरूपमेतदेव च रुद्रस्य संहर्तू रुद्रत्वं स्वरूपमेतदेव[५] तदात्मरूपं

१ क. °ति जठ°। २ क. °र्वीबीजं। ३ क. °स्तद्युक्त°। ४ क. वाऽऽत्मानं। ५ क. °तदा°।

ब्रह्मापरिमितधा चाऽऽत्मानं विभज्य देवातिर्यङ्मनुष्यादिभेदेनाविद्ययाऽऽत्मानमनेकधा विभज्येमाँल्लोकान्पूरयतीत्येवं ह्याह ।

**वह्नेश्च यद्वत्खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य ।**
**प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ २६ ॥**

**वह्नेश्च यद्वदिति** । पूर्वार्धं स्पष्टार्थम् । प्राणादयो वै प्रसिद्धाः पुनरेवेति सुषुप्तिप्रलययोः प्रलीनाः पुनः पुनस्तस्मादभ्युच्चरन्तीह प्रबोधसृष्ट्योर्यथाक्रमेण पूर्वसृष्टिक्रमेणेत्यर्थः । तथा च श्रुत्यन्तरे—'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' ( बृहदा० अ० ४ ) इति ॥ २६ ॥

इदानीं प्रकारान्तरेण ह्यन्तर्ज्योतिषमात्मानमुपलम्भयन्सफलामात्मनिष्ठामुपदिशति—

**अथान्यत्राप्युक्तं ब्रह्मणो वावैतत्तेजः परस्यामृतस्य ।**

**अथान्यत्राप्युक्तमित्यादिना** । ब्रह्मणो वाव परमात्मन एवैतद्वक्ष्यमाणं तेजः । किंलक्षणस्य परस्य सर्वदृश्यस्वभावातीतस्यात एवामृतस्य जन्मादिमरणान्तविक्रियारहितस्येति यावत् ।

स्वतः परममृतमपि ब्रह्मतेजः शरीरसंबन्धाद्विपरीतं स्यादित्यतो विशिनष्टि—

**अशरीरस्यौष्ण्यमस्यैतद्घृतम् ।**

**अशरीरस्येति** । शरीरसंबन्धरहितस्य । न हि निरवयवस्यासङ्गस्य जतुकाष्ठवच्छरीरसंश्लेषोऽस्तीति भावः । एवंविधस्य ब्रह्मणो वावैतत्तेज इति संबन्धः । किं तदित्याह—यच्छरीरस्यौष्ण्यं शरीरसंबन्ध्याग्नेयं यदौष्ण्यमुपलभ्यते स्पर्शनेन प्रत्यक्षेण तद्ब्रह्मणस्तेज इत्यर्थः । तथा च च्छान्दोग्ये—'यदतः परो दिवो ज्योतिर्दीप्यते' इत्युपक्रम्य ' इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्शरीरे संस्पर्शेनोष्णिमानं विजानाति ' इति । अस्य तेजस एतत्प्रसिद्धं शरीरं घृतम् । अनेन हि तद्ब्रह्मतेजोऽन्यत्राप्रकाशमानमग्निरिव घृतेन दीप्यते ।

एवं सामान्येन देहगतौष्ण्यात्मना ब्रह्मतेजः संभावनापदं नीतमिदानीं तस्य साक्षात्कारपदवीमुपदिशति—

**अथाऽऽविः सन्नभसि निहितं वैतदेकाग्रेणैवमन्तर्हृदयाकाशं**
**विनुदन्ति यत्तस्य ज्योतिरिव संपद्यतीत्यतस्तद्भावमचिरेणैति**

**अथाऽऽविः सन्निति** । अथैवं संभावितं तत्तेज आविः प्रकटं सन्नभसि हृदयाकाशे निहितं स्थितं वै निश्चितं सर्वश्रुतिष्वेतादित्यर्थः । तथा च मुण्डके—'आविः सन्निहितं

१ क. °ह्मविद्याम°ु ।

गुहाचरं नाम महत्पदम्' इति । तत्तेज एवमुक्तप्रकारमुद्दिश्यान्तर्हृदये हृदयपुण्डरीके यदाकाशं तदेकाग्रेण चित्तसमाधानेन विनुदन्ति विशेषेण नुदन्ति हृदयपुण्डरीकविकासनेन तत्स्थमाकाशमाविष्कुर्वन्तीत्यर्थः । एवं क्रियमाणे तस्याऽऽकाशस्य संबन्धि यज्ज्योतिरिव प्रकाश इव नित्यासिद्धमप्यावरणतिरोधानमात्रापेक्षयोद्भूतप्रकाश इव संपद्याति संपद्यतेऽभिव्यक्तं जायत इत्यर्थः । इति यतः स्वतः सिद्धं तेजोऽभिव्यज्यतेऽतस्तद्भावं तस्य तेजसो भावं स्वभावमचिरेणाल्पकालेन सद्य एवैति प्राप्नोत्युपासकः । तस्य प्रत्यग्रूपत्वेन नित्यप्राप्तत्वात्तदावरणतिरोधानमात्रमपेक्ष्य प्राप्तिरुपचर्यत इति भावः ।

तत्रोपाध्याकारप्रति[1]बन्धनिवृत्त्याऽचिरेण स्वस्वरूपापत्तौ दृष्टान्तमाह—

**भूमावयस्पिण्डं निहितं यथाऽचिरेणैति भूमित्वम् ।**

**भूमाविति** । भूमौ निहितमन्तर्भूमौ निक्षिप्तमयस्पिण्डं पिण्डीभूतमयो यथाऽचिरेण भूमित्वं मृद्भावमुपैति गच्छति मृदेव भवतीत्यर्थः ।

तथा सम्यक्स्वरूपापन्नस्य पुनरनुत्थानमेवेत्यत्रापि दृष्टान्तमाह—

**मृद्वत्संस्थमयस्पिण्डं यथाऽग्न्ययस्कारादयो नाभिभवन्ति ।**

**मृद्वत्संस्थमिति** । मृद्वत्साक्षान्मृत्तिकेव संस्था स्थितिर्यस्य तन्मृद्वत्संस्थम् । अत्र वातिप्रयोग उक्तिभङ्गीमात्र[2]परो मृदात्मना स्थितमित्यर्थः । यथा मृदात्मतां गतमयस्पिण्डमग्न्ययस्कारादयो नाभिभवन्त्यग्निना प्रागयस्पिण्ड इव तस्मिन्नभिव्यक्तप्रकाशेन न दह्यते न वाऽयस्कारैर्लोहकारैर्विकारी क्रियत इत्यर्थः ।

दार्ष्टान्तिकमाह—

**प्रणश्यति चित्तं तथाऽऽश्रयेण सहैवमित्येवं ह्याह ।**

**प्रणश्यतीति** । य[3]थेमौ दृष्टान्तौ तथा चित्तं चित्तस्थश्चिदाभासो जीवाख्य आश्रयेणोपाधिना चित्तेन सह प्रणश्यति निराभासज्योतीरूपमापद्यत इत्यर्थः । यद्वा चित्तं साभासमन्तःकरणमाश्रयेण वासनात्मकलिङ्गेन सह प्रणश्यति प्रकर्षेण नश्यत्युच्छिन्नसंस्कारं भवति पुनर्नोत्पत्त्यर्हं भवतीत्यर्थः । एवमे[4]वैतन्नान्यथेत्येवमर्थमाह श्लोक इत्यर्थः ।

**हृ[5]द्याकाशमयं कोशमानन्दं परमालयम् ।**
**स्वं योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥ २७ ॥**

हृद्याकाशमयमाकाशवदसङ्गं यद्वा हृदये यदाकाशं तत्स्वरूपं हृद्याकाशमयम् । कोशो भाण्डागारस्तद्वत्सर्ववस्त्वाश्रयत्वात् । कोशमिव कोशं लिङ्गव्यत्ययश्छान्दसः । तथा च[6] हार्दाकाशं प्रकृत्य श्रुत्यन्तरम्—'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते

---

१ क. °तिबिम्बनि° । २ ग. °मात्रो मृ° । ३ कं. यथोभौ । ४ क. °मेत° । ५ क. हृद्याका° । ६ क. च हृदाका° ।

उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्' । ( छा० अ० ८ ) इति । आनन्दयतीत्यानन्दम् । 'एष ह्येवाऽऽनन्दयाति' इति श्रुतेः । परमालयमासमन्ताल्लीयतेऽस्मिन्सर्वमित्यालयं परमं च तदालयं च परमालयं मुक्तिरूपमित्यर्थः । एवंभूतं यद्ब्रह्मरूपं तेजस्तदस्माकं स्वं स्वरूपं योगश्च युज्यत इति योगः फलं पुरुषार्थः सोऽप्येतदेवेति योजना । यत एवमतोऽस्य सर्वात्मकत्वादग्निसूर्ययोश्च तेज एतदेवेत्यर्थः । तथा च **भगवद्वचनम्**—

" अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते " इति ॥ २७ ॥

इदानीमुक्तस्य ब्रह्मतेजस उपलम्भे योगविशेषमुपदिशति—

**अथान्यत्राप्युक्तं भूतेन्द्रियार्थानतिक्रम्य ततः प्रव्रज्याज्यं धृतिदण्डं धनुर्गृहीत्वाऽनभिमानमयेन चैवेषुणा तं ब्रह्मद्वारपारं निहत्याऽऽद्यं**

**अन्यत्राप्युक्तं भूतेत्यादिना** । भूतपदेन तत्संघातो देहो गृह्यते । इन्द्रियाणि प्रसिद्धानि । अर्थाः शब्दादयो विषयाः । देहेन्द्रियविषयानतिक्रम्य तेष्वहंममाभिमानं त्यक्त्वा ततोऽनन्तरं प्रव्रज्या संन्यास एव ज्या यस्य तत्प्रव्रज्याज्यं धृतिर्धैर्यं दण्डः काण्डं यस्य तद्धृतिदण्डमेवंविधं धनुर्गृहीत्वा धैर्यमास्थाय तस्मिंन्नसङ्गतालक्षणां ज्यामारोप्येत्यर्थः । तस्मिन्धनुषि संहितेनानभिमानमयेन चकाराद्विवेकशितेन चेषुणैव विद्याचारकुलादिनिमित्ताभिमानपरित्यागात्मकेन दृग्दृश्यविवेकोपकृतेन च यथोक्तानभिमानमयेन यथोक्तविवेकतीक्ष्णेनेषुणेति यावत् । तमाद्यमिति संबन्धः । तं प्रसिद्धमाद्यं सर्वानर्थकारणमहंकाराख्यं ब्रह्मद्वारपारं हार्दस्य ब्रह्मणः प्राप्तिद्वारस्य पारं पालं रलयोरभेदाद्द्वारनिरोधकरमित्यर्थः । एवंभूतं निहत्य हत्वा ब्रह्मशालां विशेदित्युत्तरत्र संबन्धः ।

संग्रहेणोक्तं विवृण्वती श्रुतिरहंकारस्य हन्तव्यत्वे हेतुं सूचयति—

**संमोहमौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेत्र्यभिमानाध्यक्षः क्रोधज्यं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति तं हत्वोंकारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाऽऽविर्भूतेऽन्तराकाशे शनकैः,**

**संमोहेत्यादिना** । संमोहो मिथ्याज्ञानं मौलिरुष्णीषमस्यास्तीति संमोहमौली । तृष्णा विषयचापलमीर्ष्या परोत्कर्षासहनं च कुण्डले यस्य विद्येते स तृष्णेर्ष्याकुण्डली ।

---

१ क. °स्मिन्संन्यासल° । २ क. संनिहि° ।

तन्द्री सत्कर्मस्वालस्यमिरा निद्राऽघं पापं चेत्येतानि वेत्रं यष्टिविशेषो यस्य स तन्द्रीराघवेत्री । अभिमानः स्वोत्कर्षाभिनिवेशस्तस्याध्यक्षोऽधिष्ठाय प्रवर्तयिता प्रागुक्तोऽहंकारः साभासः स क्रोधज्याकं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन स्वच्छन्दापरपर्यायवाच्यरूपेण चकारादविवेकनिशितेन चैवेषुणेमानि प्रसिद्धानि खलु भूतानि स्थावरजङ्गमात्मकानि हन्ति पीडयति तमेनं सर्वपीडाकरत्वाद्धन्तव्यं हत्वोन्मूल्योंकारप्लवेन तरणसाधनेनान्तर्हृदयाकाशस्य सर्वजगदाश्रयतयाऽव्याकृताख्यस्य पारं परतीरं तदधिष्ठानं सर्वसाक्षिभूतं तीर्त्वा प्राप्याऽऽविर्भूतेऽन्तराकाशे ब्रह्माकारेऽभिव्यक्ते सति शनकैः शनैरसंभ्रमेण ब्रह्मशालां विशेदिति संबन्धः ।

शनैस्तदनुप्रवेशे दृष्टान्तमाह—

**अवटैवावटकृद्धातुकामः संविशत्येवं ब्रह्मशालां विशेत्ततश्चतुर्जालं ब्रह्मकोशं प्रणुदेद्गुर्वागमेनेत्यतः शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यतः स्वे महिम्नि तिष्ठमानं दृष्ट्वाऽऽवृत्तचक्रमिव संसारचक्रमालोकयतीत्येवं ह्याह ।**

**अवटैवेति** । संधिवृद्धी छान्दसे । अवट इवेत्येतत् । यथा कश्चिद्धातुकामः सुवर्णादिधातूनन्तरभूमौ निहितान्कामयमानोऽवटकृद्गर्तकर्ताऽवटे तस्मिञ्शनैः संविशति प्रकटीभूतं धातुं पश्यन्नेवं प्रादुर्भूतब्रह्मशालां ब्रह्मप्रकाशस्थानं साक्षित्वेनावशेषितं प्रत्यगेकरसमात्मानं विशेत् । ततस्तत्प्रवेशानन्तरं चत्वारि जालान्युपर्युपरि वेष्टनानि यस्मिंस्तच्चतुर्जालं ब्रह्मकोशं ब्रह्मणः कोशवदाच्छादकमन्नमयप्राणमयमनोमयविज्ञानमयाख्यैश्चतुर्भिः कोशैः परिवेष्टितमानन्दमयकोशं प्रणुदेत्प्रेरयेद्भिन्द्यादिति यावत् । केन साधनेन गुर्वागमेन गुरूपदिष्टेनाऽऽगमेन वेदान्तवाक्येनाऽऽनन्दमयकोशाश्रयं ब्रह्मैव प्रत्यगात्मेत्यागमाचार्याभ्यां निश्चित्य कोशेष्वात्माभिमानं त्यजेदित्येष क्रम इत्यर्थः । अतोऽनन्तरमतः कारणात्सर्वप्रतिबन्धनिवृत्तेरिति वा शुद्धः पूत इत्यादिविशेषणः स्वे महिम्नि तिष्ठति । अतोऽनन्तरं स्वे महिम्नि स्वस्वरूपे तिष्ठमानमवतिष्ठमानमात्मानं दृष्ट्वाऽऽवृत्तचक्रमिव परावृत्तचक्रमिव संसारचक्रमालोकयति यथा रथादुत्तीर्णो रथचक्रं परावृत्तव्यापारं दूरत एवावेक्षते कश्चित्तथा विद्वान्ब्रह्मसंपन्नः संसारचक्रं दूरादेवावलोकयति न पूर्ववत्स्वसंबन्धितयेत्यर्थः । इत्येवं ह्याह श्लोकाभ्यामुक्तमर्थजातमित्यर्थः ।

**षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः ।**
**अनन्तः परमो गुह्यः सम्यग्योगः प्रवर्तते ।**

---

१ क. हत्वा निर्मूल्यों° । २ क. °त्मा मनसोऽध्यक्षः स्थि° । ३ क. °मयादिभिश्च° । ४ क. °त्ययुक° ।

नित्यमुक्तस्य जितेन्द्रियस्याभिमानशून्यस्य षड्भिर्मासैस्तु युक्तस्य योगनिरतस्य प्रागुक्तवर्त्मना प्रणवाभ्यासं कुर्वतो देहिनोऽनन्तः परमो गुह्यः सम्यग्योगः परमात्मसंपत्तिलक्षणः प्रवर्तते सिध्यतीत्यर्थः ।

**रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः ।**
**पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ॥ २८ ॥**

सुमिद्धस्य विद्याविनयाचारैः सुदीप्तस्यापि देहिनो रजस्तमोभ्यां गुणाभ्यां विद्धस्य परवशस्य तावमुञ्चतः पुत्रादिष्वत एव सक्तस्य न कदाचन संस्यग्योगः प्रवर्तत इत्यर्थः ॥ २८ ॥

इदानीं वालखिल्याख्यायिकामुपसंहरन्नुक्तयोः सगुणनिर्गुणविद्ययोः संप्रदानविशेषमुपदिशति शाकायन्य इत्याह—

**एवमुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन्ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेरिति संतोषं द्वंद्वतितिक्षां शान्तत्वं योगाभ्यासादवाप्नोतीत्येतद्गुह्यतमं नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेदित्यनन्यभक्ताय सर्वगुणसंपन्नाय दद्यात् ॥ २९ ॥**

**एवमुक्त्वाऽन्तर्हृदय इत्यादिना** । एवममुना प्रकारेण ब्रह्मविद्यामनेकप्रकारां बृहद्रथायोक्त्वाऽन्तरेव प्रत्यक्तत्त्वे हृदयं बुद्धिर्यस्य सोऽन्तर्हृदयः शाकायन्य ऋषिस्तस्मै ब्रह्मणे स्वगुरवे वा नमस्कृत्वाऽनया मया तुभ्यमुक्तया ब्रह्मविद्यया परापरब्रह्मविषयया हे राजन्ब्रह्मणो यथोक्तस्य पन्थानं ब्रह्मप्राप्तिमार्गमारूढाः प्रजापतेः क्रत्वाख्यस्य पुत्रा वालखिल्यसंज्ञिता मुनय इत्युवाचेति योज्यम् । योगाभ्यासात्संतोषाद्यवाप्नोतीत्येवं चोवाचेत्यध्याहारः । एतदुक्तं ब्रह्मज्ञानं गुह्यतममतिगोप्यं[2] रहस्यतममपुत्राय न कीर्तयेन्नोपदिशेत् । तथाऽशिष्याय शिष्यवृत्तिरहिताय न कीर्तयेत् । शिष्यत्वे पुत्रत्वे च यद्यशान्तः साभिमानस्तस्मै, अशान्ताय न कीर्तयेत् । तस्माच्छान्ताय शिष्याय पुत्राय वा कीर्तयेन्नान्यस्मै कस्मैचनेत्यर्थः[3] । तथा चोक्तं श्रुत्यन्तरे—"वेदान्तं परमं गुह्यं पुराकल्पप्रचोदितम् । नाप्रशान्ताय दातव्यं नापुत्राशिष्याय वा पुनः" (श्वे०) इति । फलितमाह—अनन्यभक्तायाऽऽचार्यैकभजनपराय सर्वगुणसंपन्नाय दद्यादिदं ज्ञानमित्यर्थः । शिष्यगुणाश्च श्रुतिस्मृतिपुराणासिद्धाः संगृह्य भगवत्पादैराचार्यैरुक्ताः—

"प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे" ॥ इति ॥ २९ ॥

---

१ क. त्ययुक्त° । २ क. °तिगुह्यं र° । ३ क. कदाच° ।

इदानीमध्यायशेषेण प्रकीर्णानि कानिचित्साधनानि साधारणानि कचिदसाधारणानि चोपदेष्टुं प्रवर्तते श्रुतिः—

**ॐ शुचौ देशे शुचिः सत्त्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादित्यतः सद्ब्रह्मणि सत्यभिलाषिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति ।**

**ॐ शुचौ देशे शुचिरित्यादिना ।** शुचौ गिरिनदीपुलिनगुहादिशुद्धस्थान उपविश्येति योज्यम् । शुचिर्बाह्याभ्यन्तरशुद्धिसंपन्नः । सत्त्वस्थः सत्त्वगुणस्थः प्रसन्नचित्त इति यावत् । सदधीयानः सदध्यात्मशास्त्राद्यभ्यैसन् । सद्वादी सद्ब्रह्म तद्वदनशीलः । सद्ध्यायी ब्रह्मध्यानपरायणः । सद्याजी ब्रह्मयजनशीलः । यजनं तस्येश्वररूपस्य मानसैरुपचारैरभ्यर्चनम् । एवं कुर्वन्स्याद्भवेत् । मुमुक्षुरिति शेषः । इति यतोऽतः सद्ब्रह्मणि निर्वृत्तोऽपरिमितं सुखमाक्रम्य तिष्ठतीति संबन्धः । सदेव सोम्येदमिति ब्रह्मणि सच्छब्दश्रवणात्सदाख्यं ब्रह्म, तस्मिन्सदाख्ये ब्रह्मणि । किंलक्षणे सत्याभिलाषिणि सति सद्धर्मनिरते पुंस्यभिलाषवति सदनुग्रहेच्छावतीति यावत् । निर्वृत्तो निष्पन्नो ब्रह्मणि संपन्नो ब्रह्मात्मभावमुपगतोऽत एवान्यः संघाताभिमानिनो जीवरूपादन्योऽपरिच्छिन्नः । तत्फलच्छिन्नपाशस्तस्य ब्रह्मणो यत्फलं स्फूर्तिः प्रतिभासस्तेन च्छिन्नसंसारवासनापाशोऽत एव निराशः प्राप्तव्यविषयाशाशून्यः सर्वात्मब्रह्मरूपत्वात्परेषु जीवान्तरेष्वात्मवदात्मनीव विगतभयो निरातङ्को न चास्य द्वितीयदर्शननिमित्तं भयं भवतीत्यर्थः । आत्मा ह्येषां स भवतीति श्रुत्यन्तरात् । यतो निष्कामः कामवतो हि तदुपघातनिमित्तं भयं भवति कामश्च देहाद्यभिमानपुरःसरस्तद्रहितोऽयं निष्कामत्वान्निर्भय इत्यर्थः । अतोऽक्षय्यं क्षेतुमशक्यमविनाशीति यावत् । अपरिमितमपरिच्छिन्नं वैषयिकसुखविलक्षणमित्येतत् । एवंविधं सुखमाक्रम्याऽऽत्मसात्कृत्वा तिष्ठति परमानन्दमश्नुत इत्यर्थः ।

निष्कामैत्वमुक्तं स्तौति तस्य सर्वसाधनेभ्यः श्रैष्ठ्यं द्योतयितुम्—

**परमं वै शेवधेरिव परस्योद्धरणं यन्निष्कामत्वम् ।**

**परमं वा इति ।** यन्निष्कामत्वं तच्छेवधेर्निधेरिव परैस्य परमात्मनः परमं सर्वोत्तममुद्धरणं प्रकटीकरणं वै प्रसिद्धं विद्वज्जनेष्वित्यर्थः ।

एतच्च दुर्घटमिति द्योतयन्पुंसः स्वभावं संकीर्तयति—

**स हि सर्वकाममयः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः ।**

---

१ क. °भ्यस्यन् । २ क. °मत्वं स्तौ । ३ क. °रस्याऽऽत्म° ।

**स हीत्यादिना ।** हि यस्मात्स पुरुषः स्वभावतः सर्वकाममयः सर्वविषयकामाकुलो यतोऽध्यवसायसंकल्पादिलिङ्गस्तद्वत्तया काममयत्वमवगम्यत इत्यर्थः । अत एवायं बद्धो यतः काममयो बद्धोऽतस्तद्विपरीतोऽकाममयो मुक्त एवेत्यकामात्मता संपाद्या मुमुक्षुणेति भावः ।

इदानीमत्र मतान्तरं सांख्यदृष्टिविषयमुत्थापयति स्वमतपरिशुद्धये—

**अत्रैक[1] आहुर्गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतो[2]ऽध्यवसायस्य दोषक्षयाद्विमोक्षः[3] ।**

**अत्रैक आहुरिति ।** गुणो गुणकार्यं महदाख्यं बुद्धितत्त्वं प्रकृतिभेदवशात्पूर्ववासनात्मकस्वभावविशेषवशादध्यवसायात्मबन्धं विषयाध्यवसायादिरूपं बन्धनमुपागतो न चिदात्मेत्यर्थः । अध्यवसायस्य यो दोषो बहिर्विषयप्रवणता तस्य क्षयान्नाशाद्विषयवासनाविच्छेदाद्विमोक्षः[4] पूर्वोक्तस्य गुणस्यैवेत्यर्थः । अत्रेतिशब्दोऽध्याहार्यो मोक्ष इत्येक आहुरिति संबन्धः ।

उत्थापितं मतं व्युत्थापयति—

**मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धा[5]ऽश्रद्धा धृतिरधृतिर्ह्री[6]र्धीर्भीरित्येतत्सर्वं मन एव ।**

**मनसा हीति ।** अन्तःकरणाभिमतस्य बुद्धितत्त्वस्य करणविभक्त्या परामर्शात्सर्वश्रुतिषु न तस्य कर्तृत्वमवगन्तुं शक्यं यतो मनसैव हि पश्यति लोकश्चक्षुषा यद्रूपं पश्यति तन्मनसैव पश्यति मनोऽव्यासङ्गे सति चक्षुःसंबन्धस्याप्यप्रतिभासात् "अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति" (बृहदा०) इत्यन्वयव्यतिरेकाभ्यां श्रुत्यन्तरे मनोबुद्ध्यहंकारशब्दवाच्यस्यान्तरात्मनः करणत्वावधारणान्न तस्य कर्तृत्वमिति तात्पर्यार्थः । विचिकित्सा संशयः । प्रसिद्धार्थमन्यत् । एतत्सर्वं मन एव मनोविकारत्वात् । सुवर्णं कुण्डलमितिवन्मनोभेदेन तद्धर्मत्वं कामादीनामवधार्यते कर्तृधर्मत्वभ्रान्तिर्व्यावृत्तय[7] इत्यर्थः ।

ननु यद्येते कामादयो न कर्तृधर्माः कथं तर्हि कर्त्राश्रयतयाऽहं कामीत्यादिरूपेण प्रतिभास इति चेन्नायं[8] दोषोऽन्तःकरणोपाधिनिबन्धनत्वात्कर्तृत्वस्य चाऽऽत्मना तादात्म्याध्यासाधीनत्वादेव[9] प्रतिभासोपपत्तिः स्फटिकमणेरिवौपाधिको लौहित्यप्रतिभास इत्यभिप्रेत्याऽऽह—

**गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयात[10] इत्यहं सो ममेदमित्येवं मन्यमानो**

१ ग. °त्रैका आ° । २ क. °मुपग° । ३ क. °याद्वि मो° । ४ क. °दाद्वि मो° । ५ क. °द्धा धृ° । ६ क. °तिर्ह्री° । ७ क. °न्तिनिवृत्त° । ८ क. °ति नायं । ९ क. °त्मनस्तादा° । १० ग. प्रयाता ।

**निर्बध्नात्यात्मनाऽऽत्मानं जालेनेव खचरोऽतः पुरुषोऽध्य-
वसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः ।**

**गुणौघैरुह्यमान इति ।** गुणानां सत्त्वादीनां मायागुणानामोघाः प्रवाहा देहद्वयतद्ध-र्मरूपास्तैरुह्यमानः परवशीक्रियमाणोऽभिमानित्वं प्रयात इत्यन्वयः । जालेनेव खचर इत्यन्तं तृतीयप्रपाठके द्वितीयानुवाके व्याख्यातम् । यस्मादेवमचेतनस्य बुद्धितत्त्वस्य स्वसत्तास्फूर्त्योरस्वतन्त्रस्य कर्तृत्वबन्धमोक्षभाक्त्वमनुपपन्नं कूटस्थस्यापि चिदात्मनः परो-पाधिवशात्प्रातिभासिकं तत्सर्वमुपपन्नमतोऽस्माद्धेतोः पुरुषोऽध्यवसायेत्यादिप्रासङ्गिका-र्थोपसंहारः स्पष्टार्थः ।

प्रकृतमुपसंहरति—

**तस्मान्निरध्यवसायो निःसंकल्पो निरभिमानस्तिष्ठेदेतन्मोक्षलक्षणमे-
षाऽत्र ब्रह्मपदव्येषोऽत्र द्वारविवरोऽनेनास्य तमसः पारं गमिष्यति ।**

**तस्मान्निरध्यवसाय इति ।** मुमुक्षुश्चेदकामः सन्विषयाध्यवसायादिरहितः स्यादि-त्यर्थः । एतद्यदकामादिलक्षणमवस्थानमेतन्मोक्षलक्षणं मोक्षसाधनं यत एषाऽत्र श्रेयो-मार्गेषु मध्ये ब्रह्मपदवी साक्षाद्ब्रह्मप्राप्तिमार्गः । एषोऽत्र द्वारविवरो मोक्षद्वारस्योद्घाटन-मित्यर्थः । विधेयाविष्टलिङ्गभेदैर्निरध्यवसायाद्यात्मनाऽकामात्मत्वावस्थानं निर्दिश्यते । किं बहुनाऽनेनाकामात्मत्वावस्थानेनास्य संसाररूपस्य तमसः पारं परतीरं विष्णोः परमं पदं गमिष्यति । अचिरेणैवाऽऽत्मतत्त्वज्ञानेनोपैष्यतीत्यर्थः ।

एतां पदवीमधिगतस्य न पुनः प्राप्तव्यमवशिष्यत इत्याह—

**अत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ।**

**अत्र हीति ।** तथा च श्रुतिस्मृती—' यो वेद निहितं गुहायां परमे व्योमन्सोऽश्नुते सर्वान्कामान्सह ' ( तैत्तिरीयो० ) इति,

' यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ' ॥ ( गी० ) इति ।

अत्रोक्तेऽर्थे निरभिमानस्य ब्रह्मपदप्राप्तिरित्यत्रोदाहरन्ति कठाः ( कठोप० ६ ) इति शेषः ।

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥**

यदा यस्मिन्काले पञ्च ज्ञानानि ज्ञानेन्द्रियाणि श्रोत्रादीनि मनसा सह मनःसहि-तानि सर्वेन्द्रियाणीति यावत् । अवतिष्ठन्ते निश्चलानि भवन्ति बुद्धिश्चाध्यवसायलक्षणा

---

१ क. °बध्याऽऽत्मा° । २ क. °कामत्वा° । ३ क. °कामत्वा° ।

न विचेष्टते नेङ्गते किंतु निर्वातदेशस्थप्रदीपवन्निश्चला भवतीत्यर्थः । येयमिन्द्रियमनोबुद्धीनां निश्चलावस्था तां परमां गतिं परमं ब्रह्मप्राप्तिसाधनमाहुर्ब्रह्मविद इत्यर्थः ।

इदानीं शाकायन्यस्य वृत्तान्तं कथयन्ती श्रुतिः सगुणब्रह्मोपासकानां ब्रह्मप्राप्तिद्वारमुपदिशति तच्चिन्तनार्थम्—

**एतदुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी कृतकृत्यो मरुदुत्तरायणं गतो न ह्यत्रोद्वर्त्मना गतिरेषोऽत्र ब्रह्मपथः सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गता इत्यत्रोदाहरन्ति ।**

**एतदुक्त्वाऽन्तर्हृदय** इत्यादिना । एतदुक्तं दर्शनं ससाधनमुक्त्वाऽन्तर्हृदयोऽन्तरात्मनि हृदयं बुद्धिर्यस्य सोऽन्तर्हृदयः शाकायन्य उपरराभेत्यध्याहारः । मरुन्मरुन्नामा बृहद्रथस्तस्मै शाकायन्याय नमस्कृत्वा यथावदुपचारी यथाशास्त्रं शुश्रूषापूजाद्युपचारपरः कृतकृत्योऽवाप्तकाम उत्तरायणं ब्रह्मपथं गतः सगुणनिर्गुणब्रह्मज्ञानमुपगत इत्यर्थः । न ह्यत्रोक्ततत्त्वनिष्ठायामुद्वर्त्मनोन्मार्गेण तिर्यगादिमार्गेण गतिर्गमनमस्तीति शेषः । यत एष उक्तविद्यारूपोऽर्थोऽत्र श्रेयोमार्गेषु ब्रह्मपथो ब्रह्मप्राप्तिमार्ग इत्यर्थः । अत्र " न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति " ( शतप० ब्रा० का० १४ अ० ७ ) इति श्रुतेर्निर्गुणब्रह्मात्मतत्त्वविदो नोत्क्रमणमस्तीत्येतत्सिद्धवत्कृत्य सगुणब्रह्मविदो ब्रह्मलोकमार्गे क्रममुक्तेर्द्वारं विस्पष्टमाह श्रुतिः—**सौरमिति** । सौरं द्वारं सूर्यमण्डलमध्यगतमविदुषामभेद्यं द्वारं भित्त्वा विद्यायोर्ध्वेनोपारितनेन विद्युदादिना विनिर्गता उपासका इत्यत्रास्मिन्नर्थे रश्मिविशेषनिर्धारणार्थमुदाहरन्ति श्लोकानिति शेषः । अथवा मरुदुत्तरायणं गत इति मरुन्नाम्नो राज्ञ एव वृत्तान्तः कथ्यते । तथा चायमर्थः । उत्तरायणं देवयानं पन्थानं गतः कालेनाऽऽरूढो न साक्षात्कैवल्यमत्रैव गत इत्यर्थः । यदि साक्षान्मुक्तिं न प्राप तर्हि भोगान्ते संसारः स्यादित्यत आह—**न ह्यत्रेति** । अत्रोपासनायां सत्यामुद्वर्त्मना संसारमार्गेण पुनर्गतिर्गमनं न ह्यस्ति " न हि कल्याणकृत्कश्चिद्गतिं तात गच्छति " इति भगवत्स्मरणात् । यत एष देवयानोऽत्रोपासनायां ब्रह्मपथो ब्रह्मणः परस्यापि क्रमेण प्रापकत्वाद्ब्रह्मपथ इत्यर्थः । **सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गतो** मरुन्नामा राजर्षिः । अत्रोदाहरन्तीति पूर्ववत् ।

**अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।**
**सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः ॥**

तस्य रश्मयो निर्गमननाड्यश्चिदाभासव्याप्ता अनन्ताः । कस्य यो हृदि ध्यानकाले दीपवत्प्रकाशमान आत्मा स्थितस्तस्येत्यर्थः । आत्मनिर्गमननाड्यन्तर्गतानां रसानां वात-

१ क. °श्चली भ° । २ क. °गैत इ° । ३ क. °ब्रह्मत° । ४ क. इत्यादिभ° ।

पित्तकफानां समन्यूनाधिकभाववशात्सितादिवर्णास्तासु भवन्ति तद्व्युत्पादनं तु वैद्यके सिद्धं तदेतदाह—**सितेति** । सिताश्चासिताश्च सितासिताः कफबाहुल्ये सिता वायुबाहुल्ये त्वसिता इत्यर्थः । कद्रवश्च नीलाश्च कद्रुनीला वायुकफयोः कुपितयोः संकरे कद्रवः कद्रुवर्णा ईषच्छ्यामा इत्यर्थः । पित्तवाय्वोः संकरे नीलवर्णाः । पित्ताधिक्ये कापिलाः । मृदवश्च ते लोहिताश्च मृदुलोहिताः । उद्रिक्तेन पित्तेनांशतो वायुकफयोर्योगान्मृदुलोहिता रश्मयो नाड्यन्तर्गता भवन्तीत्यर्थः । तथा च श्रुत्यन्तरम्—'तस्मिञ्शुक्लमुत नीलमाहुः पिङ्गलं हारितं लोहितं च' ( बृहदा० अ० ६ ) इति । तथा नाडीः प्रकृत्य 'ताः पिङ्गलस्याणिम्नस्तिष्ठान्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य पूर्णाः' ( छान्दो० अ० ८ ) इति च ।

**ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।**
**ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥**

तेषां रश्मीनां मध्य एको रश्मिः सुषुम्नाख्य ऊर्ध्वं ब्रह्मरन्ध्रपर्यन्तं स्थितः । कोऽसौ यः सुषुम्नाख्येन सूर्यरश्मिविशेषेणैकीभूतत्वात्सूर्यमण्डलं भित्त्वा स्थितः स इत्यर्थः । तेन रश्मिमार्गेण कार्यब्रह्मलोकं गत्वा तत्र भोगान्ते तमतिक्रम्य परां गतिं तद्विष्णोः परमं पदं शाश्वतं परं ब्रह्म यान्त्युपासका इत्यर्थः ।

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" ( कठो० ६ ) इत्यस्मिन्मन्त्रे तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेतीति पादद्वयस्यार्थमुक्त्वा प्रथमपादोपात्तशतरश्म्युपयोगमाह—

**यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।**
**तेन देवनिकायानां स्वधामानि प्रपद्यते ॥**

**यदस्येति** । अस्य हृदयस्य संबन्धि यद्रश्मिशतमस्ति तदप्यूर्ध्वमेवोर्ध्वगतिहेतुभूतमेव व्यवस्थितम् । तेन रश्मिशतेन निर्गतो देवनिकायानां देववृन्दानां स्वधामानि तत्तद्देवस्थानानि प्रपद्यते देवनिकायमध्ये यं देवविशेषं यः कर्मणा विद्यया[1] चोपास्ते स रश्मिशतस्यैकेन[2] केनचिद्रश्मिना तस्य देवस्य पदं यातीत्यर्थः ।

विष्वङ्ङन्या उत्क्रमणे भवन्तीतिचतुर्थपादार्थमाह—

**ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ।**
**इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥**

**ये नैकरूपा इति** । ये त्वस्य हृदयस्य रश्मयोऽनेकरूपा अधस्तादधोमुखा मृदुप्रभा अत्यल्पप्रकाशास्तमोबहुला रश्मयस्तैर्निर्गतः स विहितज्ञानकर्मसाधनरहितः पुमान्[3]

१ क. °या वोपा° । २ क. °न रश्मि° । ३ क. °मान्दुष्कर्मो° ।

न्दुःखकर्मोपभोगायेहैव भूमावेवावशः सन्संसरति दुःखमनुभवतीत्यर्थः। तथा च श्रुत्यन्तरम्—'य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' ( बृहदा० अ० ८ ) इति।

सूर्यमण्डलान्तर्गतब्रह्मोपासनमुपसंहारव्याजेन प्रशंसति—

**तस्मात्सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य इति ॥ ३० ॥**

**तस्मादिति**। असावादित्यो भगवानादित्यात्मनाऽभिव्यक्त ईश्वरोऽनुपासितः सन्सर्गहेतुरुपासितस्तु स्वर्गापवर्गयोर्हेतुः। देवताबुद्ध्योपासितः स्वर्गहेतुर्ब्रह्मात्मनोपासितोऽपवर्गहेतुरिति विभागः॥ ३० ॥

समाप्ता शाकायन्यबृहद्रथाख्यायिका। इदानीं श्रुतिरेव प्रश्नप्रतिवचनरूपेण स्वरूपेण चेन्द्रियादितत्त्वं नामरूपात्मककार्यतत्त्वमित्याद्यनेकानर्थान्प्रागनुक्तानुपदेष्टुं प्रवर्तते—

**किमात्मकानि वा एतानीन्द्रियाणि प्रचरन्त्युद्गन्ता चैतेषामिह को नियन्ता[3] वेत्याह प्रत्याहाऽऽत्मात्मकानीत्यात्मा ह्येषामुद्गन्ता नियन्ता वाऽप्सरसो भानवीयाश्च मरीचयो नामाथ पञ्चभी रश्मिभिर्विषयानत्ति।**

**किमात्मकानि० रश्मिभिर्विषयानत्तीति**। एतानि ज्ञानकर्मार्थानीन्द्रियाणि किमात्मकानि वै किमुपादानकानीत्यर्थः। प्रचरन्ति स्वस्वविषयेष्विति शेषः। एषामिन्द्रियाणामुद्गन्तोद्गमनकर्ता च निमित्तभूतोऽधिष्ठाता च क इत्यर्थः। इह व्यवहारसमये को वैतेषामिन्द्रियाणां नियन्ता तैर्व्यवहर्ता वा को भवतीत्याह कश्चित्प्रष्टेत्यध्याहारः। कश्चिदन्यः प्रत्याह प्रत्युत्तरमाह प्रश्नक्रमेणेत्यर्थः। आत्मात्मकान्यात्मा वक्ष्यमाणलक्षणस्तदात्मकानि तदुपादानकानीत्यर्थः। इतीत्थमात्मा ह्येवैषामिन्द्रियाणामुद्गन्ता नियन्ता च नान्यश्च घटादेरिवेत्यर्थः। अप्सरस इति विषया उच्यन्ते, शब्दादयो हि विषयाः कामिनामप्सरस इव विषयिणामभिलाषगोचरा भवन्ति तेऽपीन्द्रियाणां नियन्तारः। तथा च **बृहदारण्यके** ग्रहातिग्रहशब्दाभ्यामिन्द्रियाणि विषयांश्चोक्त्वा—'श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः' इत्यादिनाऽतिग्रहशब्दवाच्यविषयानियम्यत्वं ग्रहशब्दवाच्यानामिन्द्रियाणां समाम्नायते। तथा च विषयाश्चेन्द्रियाणां नियन्तार इत्यर्थः। भानवीयाश्च मरीचयः सूर्यकिरणाश्चेन्द्रियाणां नियन्तार इति नाम प्रसिद्धमेतदित्यर्थः। भानुशब्द उपलक्षणं सर्वेन्द्रियदेवतानां दिगाद्यानाम्। तैस्तैर्देवताविशेषैः केनाचिद्द्वारेणानुगृहीतानीन्द्रियाणि स्वं स्वं विषयं ग्राहयन्तीति देवा अपि नियन्तार इत्यर्थः। अथैवं सति पञ्चभिः श्रोत्रादिभिर्ज्ञानेन्द्रियै रश्मिभी रश्मिशब्दनिर्दिष्टैर्विषयाञ्शब्दादीनात्ति भुङ्क्तेऽयमात्मेति

१ क. °त्मका°। २ क. °कार्था°। ३ क. °न्ता चेत्या°। ४ क. °न्तारः। भा°

सिद्धमित्यर्थः । कर्मेन्द्रियैर्हयशब्दनिर्दिष्टैर्विषयान्प्राप्नोतीत्यपि द्रष्टव्यम् । तथा चोक्तं प्राग्द्वितीये प्रपाठके—'बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हयाः' इति । एतदुक्तं भवति । इन्द्रियाणामचेतनानां भौतिकत्वेऽपि चेतनैकायत्तत्वं परमार्थत इत्यात्मात्मकानीत्याद्युच्यते व्यवहारतस्तु विषयालोकाद्यहीनत्वेन तन्नियम्यता चेति ।

यदधीनत्वमित्थमिन्द्रियाणामुक्तं स आत्मा कतम इति पृच्छति—

**कतम आत्मेति ।**

**कतम आत्मेतीति** । देहेन्द्रियमनोबुद्धिप्राणेष्वहमहमित्युल्लिख्यमानेषु कतमः किं तेष्वन्यतमः किं वाऽन्य एव तेभ्य इति प्रश्नार्थः ।

उत्तरमाह—

**योऽयं शुद्धः पूतः शून्यः शान्तादिलक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्यः ।**

**योऽयं शुद्धः० स्वकैर्लिङ्गैरुपगृह्य इति** । योऽयमात्मा शुद्धः पूतः शून्यः शान्त इत्यादिना द्वितीयप्रपाठके शुद्धत्वादिलक्षण उक्तः स्वकैरसाधारणैर्लिङ्गैः स्वरूपसद्भावसाधकैरुपगृह्यो देहादिप्राणान्तेषु संघातात्मकेषूप समीपे तत्संनिहितरूपतया ग्राह्य इत्यर्थः । संघातादन्योऽचेतनसंघातं चेतयमानोऽतस्तत्साक्षितया भासमान आत्मेत्युत्तरमुक्तं भवति ।

स्वकैर्लिङ्गैरुपगृह्य इत्युक्तं तत्र कानि स्वकानि लिङ्गानीति जिज्ञासायां तानि मतभेदेनानेकधोपदिशति—

**तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौष्ण्यमाविष्टं[3] चापां यः**
**शिवतमो रस इत्येकेऽथ वाक्श्रोत्रं चक्षुर्मनः प्राण**
**इत्येकेऽथ बुद्धिर्धृतिः स्मृतिः प्रज्ञानमित्येके ।**

**तस्यैतल्लिङ्गं० प्रज्ञानमित्येक इति** । तस्याऽऽत्मनोऽलिङ्गस्य परमार्थतो निर्धर्मकत्वेन लिङ्गरहितस्यैतद्वक्ष्यमाणं लिङ्गं लिङ्ग्यते ज्ञाप्यतेऽनेनेति लिङ्गं ज्ञापकमित्यर्थः । किं तदित्यपेक्षायां दृष्टान्तोक्त्यैव तदाह—**अग्नेरिति** । यद्यद्वदौष्ण्यमग्नेर्लिङ्गं तप्तोदकादिगतेनौष्ण्येन यथा तत्राग्निर्लिङ्ग्यत आविष्टं चेन्धनावेशादिनिमित्तं धूमादि च लिङ्गमग्नेर्यथा चापां लिङ्गं यः शिवतमो निरुपाधिमधुरो रसः क्षीरादिष्वप्युपलभ्यमानः । रसस्य हि स्वाभाविकं स्वरूपं माधुर्यमेवान्यथात्वं तु तस्य पार्थिवेषु परिणामविशेषोपाधिकृतमिति मधुररसो यत्र क्वाप्युपलभ्यमानोऽपां सद्भावज्ञापक इत्यर्थः । तथाऽऽत्मनोऽचेतनेषु देहादिषूपलभ्यमानं चैतन्यं देहद्वयावेशकृतं प्राणादिकं च लिङ्ग-

१ क. °गृह्यते त° । २ क. °ह्यत इ° । ३ क. °ष्टमपां । ४ क. °ज्ञा तदित्ये° । ५ क. °न्तोक्त्या त° । ६ क. प्राणनादि° ।

मिति दार्ष्टान्तिकं योज्यम् । इत्येके शाखिनो वदन्तीत्यर्थः । तथा च श्वेताश्वतराणां मन्त्रोपनिषत्—' नित्यो नित्यानां चेतनश्चेतनानाम् ' इति । वागादिकमात्मनो लिङ्ग-मित्येके ' श्रोत्रस्य श्रोत्रं मनसो मनो[1] यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षु-रतिमुच्य धीराः ' इति तलवकारादयः श्रोत्रादिप्रकाशकतयाऽऽत्मानं साधयन्तीत्यर्थः । अथैके बुद्ध्यादि यत्तल्लिङ्गमात्मन इति वर्णयन्तीत्यर्थः । ' न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरः' इति बृहदारण्यके ( अ० ९ ) 'तदेतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिः स्मृतिः' इत्यादि ' प्रज्ञानस्य नामधेयानि भवन्ति ' इत्यन्तम् । 'प्रज्ञानेत्रो लोकः' इति चैतरेयकोपनिषत्सु ।

उक्तानां धर्माणामात्मविशेषणत्वाभावेऽपि तत्कार्यतया स्वनिमित्तभूतात्मलिङ्गत्वं संभ-वतीत्येतद्दृष्टान्तेनोपपादयति—

**अथ ते वा एतस्यैवं यथैवेह बीजस्याङ्कुरा वाऽथ**
**धूमार्चिर्विष्फुलिङ्गा इवाग्नेश्चेत्यत्रोदाहरन्ति ।**

**अथ ते वा एतस्यैवं० एवाग्नेश्चेत्यत्रोदाहरन्तीति ।** अथायमपेक्षितार्थविशेषः कथ्यते ते वा उक्ता लिङ्गविशेषा एतस्याऽऽत्मन एवं ज्ञापका इति शेषः । कथं यथै-वेह व्यवहारभूमौ बीजस्य भूम्यन्तर्गततयाऽदृश्यस्य[2] सद्भावज्ञापका अङ्कुरा वाऽथवाऽग्नेश्च सद्भावसाधका धूमादय इवेति । अत्र[3] चैतन्याभासाश्चैतन्यस्यावस्थाविशेषा अङ्कुरा इव चिदात्मानं ज्ञापयन्ति । वाक्चक्षुर्बुद्धिधृत्यादयस्तु धूमादय इवाग्नेः स्वप्रवृत्त्यादिनाऽऽ-त्मानं[4] तद्धेतुभूतं कल्पयन्तीति विभागः । अत्रास्मिन्नुक्तेऽर्थे श्लोकमुदाहरन्ति ।

तमेवाऽऽह—

**वह्नेश्च यद्वत्खलु विष्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य ।**
**प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ ३१ ॥**

**वह्नेश्च यद्वत्० यथाक्रमेणेति ।** स्पष्टार्थः ॥ ३१ ॥

प्राणादयोऽस्मादात्मनः कथं क्रमेणाभ्युच्चरन्तीत्यपेक्षायां तदुपपादयति—

**तस्माद्वा एतस्मादात्मनि सर्वे प्राणाः सर्वे**
**लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि[5] च**
**भूतान्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यामिति ।**

**तस्माद्वा० सत्यमितीति ।** तस्माच्छुद्धः पूत इत्याद्युक्तलक्षणाद्वा एवैतस्मादुक्ता-नेकलिङ्गानुमितसद्भावादात्मनि स्वस्वरूपे स्थितादविकृतादिति यावत् । सर्वे प्राणा

---

१ क. °नो वाचो । २ क भूमावन्त° । ३ क. अथ । ४ क. °नं ज्ञापयन्ति त° । ५ क. °णि भू° ।

वागादयः सर्वे लोकास्तेषां विषयाः सर्वे वेदा वेदनानि तत्तद्विषया बुद्धिवृत्तयः सर्वे देवा इन्द्रियाधिष्ठातारोऽग्न्यादयः सर्वाणि च भूतानि भूतसंघातोपाधिकानि भोक्तृरूपाणि स्थावरजङ्गमात्मकानि चोच्चरन्ति व्युच्चरन्ति विविधमुत्तिष्ठन्ति पूर्वकृतप्रज्ञाकर्मवासनानुसारेणोद्भवन्तीत्यर्थः । यस्मादेते व्युच्चरन्ति तस्याऽऽत्मन उपनिषदुपनिगमयितृत्वात्साक्षाद्रहस्यं नाम । किम् । सत्यस्य सत्यमिति । यदेतत्तस्योपनिषदिति योजना । सदिति पृथिव्यप्तेजांसि त्रीणि भूतानि त्यदिति वाय्वाकाशौ द्वे भूते सच्च त्यच्च सत्यमिति व्युत्पत्त्या पञ्च भूतानि स्वविकारैः सह सत्यमुच्यन्ते । तस्य सत्यं परमार्थरूपमधिष्ठानम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' ( छान्दो० ) इति श्रुत्यन्तरादनृतस्य पञ्चभूतात्मकप्रपञ्चस्याधिष्ठानमात्मा सत्यस्य सत्यमित्युच्यत इत्यर्थः ।

तदेवं वाच्यस्य जगत आत्मविवर्ततामुक्त्वा वाचकस्य तस्योत्पत्तिं वेदोत्पत्तिकथनेनाऽऽह—

**अथ यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येवं वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्योपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि विश्वा भूतानि ॥ ३२ ॥**

**अथ यथा० विश्वाभूतानीति ।** अथ नामसृष्टिकथनोपक्रमे दृष्टान्तो यथा लोक आर्द्रैधाग्नेरार्द्रमेधो यस्य स आर्द्रैधाः स चासावग्निश्चेत्यार्द्रैधाग्निस्तस्याऽऽर्द्रैधोग्नेरित्येतत् । अभ्याहितस्य संधुक्षितस्य पृथगनेकप्रकारा धूमा धूमज्वाला विष्फुलिङ्गा विनिश्चरन्त्यनन्यात्मान एव सन्त उपाधिकृताकारभेदेन प्रभवन्तीत्यर्थः । एवं वा एवमेवैतस्य प्रकृतस्याऽऽत्मनो महतोऽपरिच्छिन्नस्य भूतस्य सिद्धस्य यथाभूतस्य परमार्थस्य निश्वसितं निश्वसितमिव निश्वसितमबुद्धिपूर्वकमप्रयत्नकृतमेतत् । किम् । यदृग्वेद ऋग्वेदादिरूपं यदस्त्येतदिति योजना । अथर्वणा चाङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । अत्रर्ग्वेदादिशब्दैर्मन्त्रभागश्चतुर्णां वेदानां गृह्यते । इतिहासादिशब्दैस्तेषामेवाष्टविधं ब्राह्मणमभिधीयते । तत्रेतिहासः पुरावृत्तकथनम् । 'हरिश्चन्द्रो ह वै नाम राजाऽऽसीत्' इत्यादि । यथाऽत्रैव 'वालखिल्या इति श्रूयन्तेऽथ क्रतुं प्रजापतिमब्रुवन्' इति । तथा 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' इत्यादि । 'ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' इत्यादि । पुराणं सृष्ट्यादिवाक्यसं॰

१ क. °षयज्ञु° । २ क °द्रैधोग्ने° । ३ क. °तदृ° । ४ क. °रसा इ° । ५ क. °ख्यातानि । ६ क. °स्य प° । ७ क. °न्द्रो ना° ।

दर्भः ' तस्माद्वा एतस्मादात्मनि ' इत्यादि । विद्योपासनविद्यावाक्यसंदर्भः । उपनिषदः ' तस्योपनिषत्सत्यस्य सत्यमित्याद्या रहस्योपदेशवाक्यरूपाः । श्लोकाः ' अत्रोदाहरन्त्येवं ह्याहाचित्तं चित्तमध्यस्थम्' इत्येवमाद्यः । सूत्राणि वस्तुसंग्रहवाक्याणि 'अयं वाव खल्वात्मा ते ' इत्येवंविधानि । अनुव्याख्यानानि[1] तत्सूत्रमनु तस्य विस्पष्टार्थ-[2]कल्पनानि यथाऽनन्तरमेव ' अथ य एषोच्छ्वासाविष्टम्भनेन ' इत्येवमादीनि । व्याख्यानानि तस्य सूत्रार्थस्योपपादनपराणि वाक्यान्यत्रैव वालखिल्यक्रतुसंवादप्रबन्धेन प्रवृत्तानीति । अथवा ऋग्वेदादिशब्दैर्मन्त्रब्राह्मणात्मको वेदशब्दवाच्यः सर्व एव गृह्यते । इतिहासादिशब्दैश्च महाभारतादिः प्रसिद्ध एव ग्रन्थसंदर्भोऽभिधीयते । ब्रह्मण एव प्रत्यगात्मनस्तत्तद्दृष्ट्याद्यात्मनाऽभिव्यज्य व्यवस्थितस्येतिहासादिकर्तृत्वोपगमात् ।

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्" ॥

इति भगवद्वचनात् । सर्वज्ञेश्वरतन्त्र एव सर्वो व्यवहार इति तात्पर्यार्थः । एतदेवोपसंहारव्याजेनाऽऽहास्यैवैतानि विश्वा[3] विश्वानि भूतानि सवाचकानीत्यर्थः ॥ ३२ ॥

ब्रह्मविद्यायां वक्तव्यं विशेषमुक्त्वा पुनः संवत्सरात्मकालावयवानग्न्यवयवेषु संपाद्योपासनविशेषं पूर्वत्रानुक्तमनुक्रामति खिलरूपत्वादस्य नात्रातीव संगत्यादर इति—

**पञ्चेष्टको वा एषोऽग्निः संवत्सरस्तस्येमा इष्टका यो वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविदः सेयं प्रजापतेः प्रथमा चितिः ।**

**पञ्चेष्टको० मोदी भवतीति ।** अग्निहोत्र्यधिकारकमिदमुपासनमुपदिश्यते सोऽग्निहोत्रहोमकाले गार्हपत्यादिष्वग्निषु क्रमेणैताश्चिन्तयेत् । तद्यथा । पञ्चेष्टको वक्ष्यमाणाभिः पञ्चभिरिष्टकाभिश्चीयमान एषोऽग्निर्गार्हपत्याख्यो वै संवत्सरः संवत्सरात्मत्वेन ध्येय इत्यर्थः । तस्य संवत्सरात्मनोऽग्नेरिमा अनन्तरमेव वक्ष्यमाणा इष्टका वसन्तादयः । तत्र वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षा उत्तरः पक्षः शरत्पृष्ठं हेमन्तशिशिरावृतू एकीकृत्य पुच्छमित्येवं विभागमभिप्रेत्याऽऽह—**शिरःपक्षसीत्यादि** । शिरः पूर्वभागः पक्षसी पक्षौ दक्षिणोत्तरभागौ पुच्छं पश्चाद्भागः पृष्ठं मध्यमाग एतदङ्गवानेषोऽग्निः । पुरुषविदः पुरुषं विराजमात्मानं वेत्त्युपास्त इति पुरुषवित्तस्य पुरुषविदः प्रजापतेः संवत्सरात्मनो विराजो वा प्रथमा चितिः सेयं पृथिवीति योजना । अयं गार्हपत्योऽग्निः पृथिवी संवत्सरात्मा विराड्वसन्तादीष्टकाभिश्चितः शिरःपक्षपुच्छपृष्ठवानहमस्मीति ध्यायेदिति तात्पर्यार्थः । पुरुषविध इति पाठे पुरुषाकार एषोऽग्निरित्यर्थः ।

---

१ क. °ख्यातानि । २ क. °ष्टार्थं कथना° । ३ क. °श्वानि ।

एवं ध्यायतो यजमानस्यैतदग्निकृतमुपकारमाह—

**करैर्यजमानमन्तरिक्षमुत्क्षिप्त्वा वायवे प्रायच्छत् ।**

**करैरिति** । यजमानस्य परलोकगमनावसरे तं यजमानमग्निहोत्रिणमुपासकं करैर्हस्तैरन्तरिक्षं प्रत्युत्क्षिप्त्वोत्क्षिप्य वायवे हिरण्यगर्भाय सूत्रात्मने प्रायच्छत्प्रयच्छतीत्येतत् ।

स्थूलवायुशङ्कां वारयति—

**प्राणो वै वायुः ।**

**प्राणो वै वायुरिति** । प्राणश्च हिरण्यगर्भः सर्वश्रुतिषु प्रसिद्धः । इति गार्हपत्याग्निविषयं ध्यानं फलं चोक्तम् ।

इदानीं हिरण्यगर्भप्राणदृष्ट्या दक्षिणाग्निध्यानप्रकारमाह—

**प्राणोऽग्निस्तस्येमा इष्टका यः प्राणो[1] व्यानोऽपानः समान उदानः स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविदस्तादिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः करैर्यजमानं दिवमुत्क्षिप्त्वेन्द्राय प्रायच्छदसौ वा आदित्य इन्द्रः सैषोऽग्निस्तस्येमा इष्टका यदृग्यजुःसामाथर्वाङ्गिरसा इतिहासः पुराणं स शिरःपक्षसीपुच्छपृष्ठवानेषोऽग्निः पुरुषविदः सैषा द्यौः प्रजापतेस्तृतीया चितिः करैर्यजमानस्याऽऽत्मविदेऽवदानं करोत्यथाऽऽत्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत्तत्राऽऽनन्दी मोदी भवति ॥ ३३ ॥**

**प्राणोऽग्निरिति** । तस्य प्राणरूपस्य दक्षिणाग्नेरिमा इष्टकास्ताः का इति ता आह—प्राणादयः पञ्च वायवः शरीराभ्यन्तरचारिणो यथाक्रमं शिरआद्यवयवतया चितेष्टकारूपा इत्ययमप्यग्निः शिरःपक्षपुच्छपृष्ठवानित्यादि सर्वं पूर्ववद्योज्यम् । तदिदमन्तरिक्षमन्तारिक्षात्मको दक्षिणाग्निः प्रजापतेर्द्वितीया चितिः । करैरित्याद्यपि पूर्ववत् । कोऽसाविन्द्र इत्येतदाह—असौ वै प्रसिद्ध आदित्य इन्द्रः परमेश्वरः । सैषोऽग्निः स एष इन्द्रोऽग्निराहवनीयस्तस्येमा इष्टकाः सेतिहासपुराणाश्चत्वारो वेदाः पूर्ववत्क्रमेण शिरःप्रभृत्यवयवात्मना चितेष्टकारूपा ध्येयाः । इहापीतिहासपुराणयोरेकत्वं द्रष्टव्यम् । सैषा द्यौर्दि*वात्मकोऽयमाहवनीयोऽग्निः प्रजापतेस्तृतीया चितिः । अयं पुनरिन्द्रः सविता दिवाहवनीयाग्निरूपो यजमानस्याऽऽत्मविदे त्रैलोक्यात्मकः प्रजापतिर्यजमानस्याऽऽत्मविद्यजमानेन त्रिष्वग्निष्वात्मत्वेन भावितस्तस्मा अवदानमवदानवत्तत्प्री-

* अदन्तो दिवशब्दोऽप्यस्ति तेनोत्वशङ्का न ।

[1] क. °णोऽपानो व्यानः ।

तिकरं यजमानं करोति तदात्मसात्करोतीत्यर्थः । अथवाऽऽत्मविदे पूर्वोपासकः फलावस्थ आत्मवित्तस्मा आत्मविदे यजमानस्यावदानं करोतीति संबन्धः । यजमानं तस्मै समर्पयतीत्यर्थः । अथानन्तरमात्मविद्यजमानमुत्क्षिप्य ब्रह्मणे समष्टिसूत्रात्मने कार्यावस्थाय प्रायच्छत्प्रदत्तवान् । तत्र ब्रह्मणि स्थितो यजमान आनन्दी मोदी सामान्यतो विशेषतश्च यथासंकल्पमानन्दवान्भवतीत्यर्थः । अस्या ब्रह्मप्राप्तेर्गत्यायत्तत्वान्नात्र ब्रह्मशब्दः परब्रह्मविषयः 'कार्यं बादरिरस्य गत्युपपत्तेः' ( ब्र० सू० अ० ४ पा० ३ सू० ७ ) इति न्यायात् ॥ ३३ ॥

पुनः प्रकारान्तरेण गार्हपत्याद्यग्निविषये संपाद्यविशेषमुपदिशन्नुपासनान्तरमाह—

**पृथिवी गार्हपत्योऽन्तरिक्षं दक्षिणाग्निर्द्यौराहवनीयस्तत एव पवमानपावकशुचय आविष्कृतमेतेनास्य यज्ञम् ।**

**पृथिवी० विचिनोतीति** । गार्हपत्यादिष्वग्निषु यथानिर्देशं पृथिव्यादिदृष्टिर्विधीयते, तत एवेति त एवेत्येतत् । पवमानपावकशुचयोऽग्निविशेषा ये प्रसिद्धास्त एत एव गार्हपत्यः पवमानो दक्षिणाग्निः पावक आहवनीयः शुचिरिति भेदः । अस्य गार्हपत्यादिसंघातस्य संबन्धि यज्ञं यजमानमेतेन पवमानादिदेवतासंघातेनाऽऽविष्कृतं प्रवर्तितमित्यर्थः । आधानेनाग्निषु संस्कृतेषु प्रथमं पवमानादयो हीष्टाः सन्तोऽग्नीनामुत्तरक्रत्वङ्गतां संपादयन्ति तस्मात्पवमानादिरूपा एते ध्येया इत्यभिप्रायः ।

तथा जाठरोऽपि योऽग्निः सोऽपि पवमानादिसंघात एवेति ध्येयत्वमभिप्रेत्याऽऽह—

**यतः पवमानपावकशुचिसंघातो हि जाठरस्तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः ।**

**[यतः] पवमानपावकेति** । यस्मादेवमध्यात्ममधिभूतमधिदैवमधियज्ञं चाग्निराहवनीयादिरूपस्तस्मादग्निर्यष्टव्यः पयआदिभिर्हविर्भिः । चेतव्य इष्टकाभिरधियज्ञमध्यात्मं च यथाशास्त्रम् । स्तोतव्य उपस्थानादिमन्त्रैः । अभिध्यातव्य आभिमुख्येन प्रत्यगात्मतया ध्यातव्य इत्यग्निप्रशंसया तन्निष्ठताकर्तव्यतोपादिष्टा ।

इदानीं होमकालेऽग्नौ चिन्तनीयं मन्त्रेणोपदेष्टुं तत्प्रसञ्जयति—

**यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति ।**

**यजमानो हविर्गृहीत्वेति** । इच्छतीच्छेत्कुर्वीतेत्यर्थः ।

**हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः ।**
**मद्गुर्हंसस्तेजोवृषः सोऽस्मिन्नग्नौ यजामहे ॥**

हिरण्यवर्ण इति मन्त्रः । हिरण्यवत्प्रकाशमानः शकुनः पक्षी पक्षीव नीडस्थो नीडा-

१ क. °साक्षात्क° । २ ग. °थ चाऽऽत्म° । ३ क. °त् । ३३ । गार्हपत्यादिष्व° । ४ क. °तेष्वप्र° ।

दन्यो देहसंघाताद्विलक्षणो ह्यन्तर्हृदय आदित्ये सवितृमण्डले च प्रतिष्ठितो वर्तते । केन केन रूपेणेत्यपेक्षायामाह—मद्गुर्जलचरः पक्षी स यथा जले निमग्न इव गच्छति तथा ह्ययात्मा जीवरूपः संपूर्णोऽपि यथावदनवभासनान्मद्गुसदृशः । हंसो मानससरो-म्भोरुहवनविहारी पक्षिविशेषः । स यथा शुद्धस्तथाऽऽदित्ये पुरुषो ब्रह्मरूपो यतः स तेजोवृषस्तेजसा श्रेष्ठस्तेजोबहुल इत्यर्थः । तमेव पुरुषमुभयत्र वर्तमानमित्यध्याहारः । अस्मिन्नग्नौ यथोपदिष्टस्वरूपे यजामहे वयं पूजयाम इति मन्त्रस्यार्थः ।

**इति चापि मन्त्रार्थं विचिनोति ।**

इतिशब्दो मन्त्रसमाप्त्यर्थः । इति च मन्त्रमुच्चार्यापि मन्त्रार्थमपीति योजना । विचि-नोति विचारयति चिन्तयतीत्यर्थो धातूनामनेकार्थत्वात् । यद्वा विचिनोति विशेषेण मन्त्रतात्पर्यसंबद्धतया चिनोति संघट्टयतीत्यर्थः ।

तदेव तात्पर्यमुपन्यस्यति—

**तत्सवितुर्वरेण्यं भर्गोऽस्याभिध्येयं यो बुद्ध्यन्तःस्थो ध्यायीह मनःशान्तिपदमनुसरत्यात्मन्येव धत्तेऽत्रेमे श्लोका भवन्ति ।**

**तत्सवितुः० भवन्तीति** । सवितुरादित्यस्य संबन्धि तत्स्वरूपं वरेण्यं वरणीयं संभजनीयं[4] कीदृशं तद्भर्गः ‘ भाभिर्गतिरस्य हि ’ इत्यादिना ( खं० ७ ) पूर्वत्र व्याख्यातरूपम् । अस्य यजमानस्याभिध्येयम् । यो बुद्ध्यन्तःस्थो ध्यायी ध्याता हृदि प्रतिष्ठितो ध्यातेति चिन्तयेदित्यर्थः । एवं कुर्वन्निह मनःशान्तिपदं मनसो विक्षेपपरि-त्यागेन शान्तिपदमालम्बनमनुसरति प्राप्नोति यत आत्मन्येव प्रतीचि ध्येयं रूपं धत्तेऽनुसंधत्त इत्यर्थः । अत्रोक्तेऽस्मिन्नर्थे इमे वक्ष्यमाणाः श्लोका भवन्ति ।

**यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यते[5] ।**
**तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यते ॥**

**यथा निरिन्धन इति** । स्वयोनौ भूतसूक्ष्मलक्षणे स्वकारणे । तथा चित्तं स्वयोनौ स्वाधिष्ठाने साभासाज्ञानोपलक्षित उपशाम्यते शाम्यतीत्यर्थः ।

**स्वयोनावुपशान्तस्य मनसः सत्यकामतः ।**
**इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥**

**स्वयोनाविति** । इन्द्रियार्थविमूढस्य मनसः कर्मवशानुगा अनृता मिथ्याप्रवृत्तयो यास्ताः सत्यकामतो यथार्थात्मवस्तुन्युपरागात्स्वयोनावुपशान्तस्य पुनर्न प्रभवन्तीत्यध्या-हारेण योजना ।

यस्मादेवं तस्मात्—

१ क °रोम्द्गुरु° । २ क. °रूपं य° । ३ क. °बन्धत° । ४ क. भजनीयं । ५ क. °म्यति । त° ।

**चित्तमेव हि संसारं तत्प्रयत्नेन शोधयेत् ।**
**यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥**

**चित्तमेवेति** । संसरत्यनेन पुमानिति वा संसरति पुरुषमभिभूय प्रवर्तत इति वा चित्तमेवं संसारं तत्संसर्गं विना पुरुषस्य संसारादर्शनादित्यर्थः । तत्प्रयत्नेन शास्त्रोक्तशुभविषयनिवेशनं कृत्वा शोधयेन्निवृत्ताशुभवासनं संपादयेत् । यतो यच्चित्तो यस्मिन्निवेशितचित्तः पुरुषः स तन्मयस्तत्स्वभावो भवतीत्येतद्गुह्यं प्राकृतबुद्ध्यगम्यं सनातनमव्यभिचारीत्यर्थः ।

**चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।**
**प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥**

**चित्तस्य हीति** । प्रसन्नात्मा प्रसन्नचित्तः । आत्मनि प्रत्यक्स्वरूपे । सुगममन्यत् ।

**समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ।**
**यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥**

**समासक्तमिति** । स्पष्टार्थः ।

**मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।**
**अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥**

**मनो हीति** । तस्मात्कामस्त्याज्य इत्यर्थः ।

**लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।**
**यदा यात्यमनीभावं तदा तत्परमं पदम् ॥**

**लयविक्षेपरहितमिति** । लयो निद्रा विक्षेपो बहिर्विषयस्मृत्यादिः । अमनीभाव आत्मनो मनउपाधिप्रवेशाकृतविशेषपरित्यागस्तं यदा याति तदा तदे(दै)व निरुपाधिकस्वैस्वरूपं परमं पदं याति । न पुनरप्राप्तप्राप्तिरस्येत्यर्थः ।

**तावन्मनो निरोद्धव्यं हृदि यावद्गतक्षयम् ।**
**एतज्ज्ञानं च मोक्षं च शेषान्ये ग्रन्थविस्तराः ॥**

**तावन्मनो निरोद्धव्यमिति** । हृदि हृदयसाक्षिणि । गतः प्राप्तः क्षयो विनाशो येन तत्तथा । उत्तरार्धं स्पष्टार्थम् ।

**समाधिनिर्धौतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।**
**न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥**

**समाधीति** । आत्मनि निवेशितस्य सत इत्यर्थः । अन्तःकरणेनान्तःकरणावस्थासाक्षिणा गृह्यते स्वानुभवमात्रसिद्धं तन्नान्यस्मै वक्तुं शक्यमित्यर्थः ।

---

१ क. °व हि सं° । २ क. यन्नि° । ३ क. °स्वरू° । ४ ग. °वत्क्षयं गतम् । ५ क. °वासि° । ६ क. °न्यस्य व° ।

**अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् ।**
**एवमन्तर्गतं यस्य मनः स परिमुच्यते ॥**

**अपामापोऽग्निरिति ।** यथेत्यध्याहारः । अपामिति षष्ठी सप्तमीत्वेन विपरीणेया प्रथमाश्च द्वितीयात्वेन । तथा चाप्सु यथा निक्षिप्ता अपः पृथङ्न लक्षयेत्कश्चिदग्नौ वाऽग्निं व्योम्नि वा प्रविष्टं घटाकाशाद्येवं यस्य मनोऽन्तर्गतमात्मैकतां गतं स परिमुच्यते सर्वसंसारबन्धनादित्यर्थः ।

किं बहुना मनःकृतः संसारस्तद्विलयनाच्च मोक्ष इति निश्चित्य तन्निरोधे यत्नः कार्य इत्यभिप्रेत्योपसंहरति—

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।**
**बन्धाय विषयासङ्गि मोक्षे निर्विषयं स्मृतम् ॥ इति ॥**

**मन एवेति ।** स्पष्टार्थः ।

मनोनिरोधस्य चोपायं व्यतिरेकोक्तिपूर्वकं विदधती प्रकृतमुपसंहरति—

**अतोऽनग्निहोत्र्यनग्निचिदज्ञानभिध्यायिनां ब्रह्मणः पदव्योमानुस्मरणं विरुद्धं तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः ॥ ३४ ॥**

**अतोऽनग्निहोत्रि० अभिध्यातव्य इति ।** अतो यस्मादनग्निहोत्रिणां यथोक्तविधाग्निहोत्रहीनानामनग्निचितां पञ्चेष्टक इत्याद्युक्तप्रकाराग्निचयनमकुर्वतामज्ञानां चित्तवृत्तान्तं संसारमोक्षहेतुमजानतामनभिध्यायिनां पूर्वोक्तसवितृमण्डलस्थात्माभिध्यानरहितानां पुंसां ब्रह्मणः पदमात्मतत्त्वं तदेव व्योम व्योमवन्निराकारत्वात्तस्यानुस्मरणमनुसंधानं विरुद्धं विशेषेण रुद्धं चित्ताशुद्धिक्षयाभावाद्ब्रह्मानुसंधानमशक्यमित्यर्थः । तस्मादित्यादि व्याख्यातम् ॥ ३४ ॥

इदानीं पूर्वोक्ताग्निहोत्रमग्निचयनं[2] चानुतिष्ठतो ध्यायिनः स्तोतव्य इत्युक्तमग्न्यादित्योपस्थानं कैर्मन्त्रैः कार्यमित्यपेक्षायां तान्मन्त्रान्पठति—

**नमोऽग्नये पृथिवीक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नम आदित्याय[3] दिविक्षिते लोकस्मृते[4] लोकमस्मै यजमानाय धेहि नमो ब्रह्मणे सर्वक्षिते सर्वस्मृते सर्वमस्मै यजमानाय धेहि ।**

**नमोऽग्नये० सर्वमस्मै यजमानाय धेहीति ।** एतेऽग्न्युपस्थानमन्त्रा गार्हपत्यादिक्रमेण त्रयो योज्याश्चतुर्थस्तु सर्वाग्निसाधारणोऽन्ते सकृत्प्रयोज्यः । पृथिवीक्षिते पृथिवी-

१ ग. मोक्षो । २ क. °नं वाऽनु° । ३ क. °त्यायाग्निक्षि° । ४ क. °ते लोकम° ।

लोकनिवासाय लोकस्मृते पृथिवीलोकस्य स्मर्त्रे यजमानार्थं चिन्तयतेऽग्नये गार्हपत्यात्मने नमः प्रह्वीभावोऽस्तु । अस्मै यजमानाय मह्यं लोकं पृथिवीलोकं धेहि मदर्थं धारयाहमुत्तरकाले त्वदात्मा सन्निमं लोकं प्राप्स्यामीत्यर्थः । एवमेवोत्तरे मन्त्रा योज्याः ।

आदित्योपस्थानमन्त्रान्पठति—

**हिरण्मयेन पात्रेण सत्यस्याभिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ।**
**योऽसा आदित्ये पुरुषः सोऽसा अहमिति ॥**

**हिरण्मयेन० असा अहमितीति ।** हिरण्मयेन ज्योतिर्मयेन पात्रेण मण्डलरूपेणामत्रेण सत्यस्य सत्यात्मनो ब्रह्मणो मुखं प्राप्तिद्वारमभिहितमपिहितमाच्छादितं वर्तते । हे पूषन्हे सूर्य त्वं तदपावृणु तद्द्वारमुद्घाटय । किमर्थं सत्यधर्माय । किंलक्षणाय विष्णवे व्यापनशीलाय व्याख्यास्यमानसत्यधर्मविष्णुस्वरूपप्राप्तय इत्यर्थः । योऽसौ परोक्ष आदित्ये मण्डलोपलक्षिते देवतात्मनि पुरुषः पूर्णोऽन्तर्यामी सोऽसौ स एवाहं नाहं तस्मादन्य इत्यर्थः । यद्वेत्थं योजना । य आत्मनि पुरुषोऽसावादित्ये पुरुष आत्मा यश्चासावादित्ये पुरुषः सोऽहमात्मनि पुरुषः । अतोऽन्तःकरणोपलक्षितस्याऽऽदित्यदेवतोपलक्षितस्य चाऽऽवयोर्न भेदोऽस्तीत्यर्थः । इतिशब्द उपस्थानमन्त्रसमाप्त्यर्थः ।

सत्यधर्मपदस्यार्थमाह—

**एष ह वै सत्यधर्मो यदादित्यस्याऽऽदित्यत्वं तच्छुक्लं पुरुषमलिङ्गं**

**एष ह वै० अलिङ्गमिति ।** एष हैव वै प्रसिद्धः सत्यधर्मः । कः । आदित्यस्याऽऽदित्यत्वमिति यदेष हीति योजना । आदाय यातीत्यादित्यः । तथा च श्रुत्यन्तरे निर्वचनम्—'यदिदं सर्वमाददाना यन्ति तस्मादादित्याः' (बृहदा० अ० ९) इति । तथा च भौमानां रसानामुत्तरायण आदानं ग्रहणं कुर्वन्दक्षिणायने वृष्टिरूपेण तान्रसानासमन्ताद्दच्च परिभ्रमन्यदादित्यशब्देन निरुच्यत एतदेव सत्यधर्मत्वमेष आदित्य एव सत्यधर्म इत्यर्थः । तदादित्यात्मत्वं शुक्लं शुद्धं भास्वरमिति वा । पुरुषं पुरुषाकारम्—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' (छान्दो० अ० १) इति श्रुतेः । अलिङ्गं स्वतो लिङ्गवर्जितं स्त्रीपुंनपुंसकादिभेदरहितम् 'नैव स्त्री न पुमानेष न चैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते' ( श्वे० अ० ९ ) इति श्रुतेः ।

इदानीं विष्णुत्वमस्योपपादयति—

**नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य**
**मध्य इवेत्यक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गः ।**

---

१ क. स्यापिहि° । २ क. योऽस्मिन्नादि° । ३ क. °मपि° । ४ क. °षन्श्रीसू° । ५ क. °ष वै ।

**नभस इत्यादिना ।** नभसोऽन्तर्गतस्य दिङ्मण्डलव्यापिनस्तेजसः प्रकाशस्यांशमात्रं लेशमात्रमेतद्यदादित्यस्य मध्य इवाऽऽदित्यमण्डलस्थमिव न तु तत्त्रैव वर्तते किंतु सर्वव्यापीत्यर्थः । इत्येवंप्रकारेणाक्षिणि सर्वप्राणिचक्षुर्देशेऽग्नौ च प्रसिद्धेऽस्यैव तेजसोंऽशमात्रमित्यर्थः । किं तत्तेजः । एतद्ब्रह्म परिपूर्णमत एवैतदमृतमनागमापायि नित्यमिति यावत् । एतदेव भर्गः सर्वकारणत्वादिरूपं पूर्वं व्याख्यातम् । तेजस्तेजस्विनामहमिति भगवद्वचनात्सर्वत्रव्यापि तेजोरूपं ब्रह्मामृतं विष्णुरित्युक्तं भवति ।

**एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतत् ।**

इदानीमुक्तमेव स्वरूपमनूद्य तस्य सर्वात्मत्वमाविष्कुर्वती ध्येयविशेषमर्थादुपदिशति—**एतत्सत्यधर्म इत्यादिना ।**

**यदादित्यस्य मध्येऽमृतं**

किं तत्सत्यधर्मपदाभिधेयं[2] तदाह—**यदादित्यस्य मध्येऽमृतमिति ।**

किं तदमृतं तदाह—

**यस्य हि सोमः प्राणा वाऽप्ययङ्कुरा एतद्ब्रह्मैतदमृतमेतद्भर्गः ।**

**यस्येति ।** सोमश्चन्द्रमाः । प्राणाः प्राणिनां जीवनाख्याः प्राणादिवृत्तयः । वाशब्दात्प्राणस्थित्यर्थमन्नं गृह्यते । एते सर्वेऽप्यमृतरूपाः पदार्था यस्याङ्कुराः कार्याण्यमृताङ्कुरकारणत्वादमृतामित्यर्थः । अप्ययङ्कुरा इति यकारः प्रमादपतितः । एतद्ब्रह्मेत्याद्युक्तार्थम् ।

अमृतात्मत्वमुपपाद्यास्यं पुनरपि यजुरात्मत्वमाह—

**एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽ-**
**शमात्रमेतद्यदादित्यस्य मध्ये यजुर्दीप्यति ।**

**एतत्सत्यधर्म इति ।** यदादित्यस्य मध्ये यजुर्दीप्यति दीप्यते ।

किं तद्यजुरिति तदाह—

**ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्[3] ।**

**ओमाप इति ।** ओंकारोऽनुज्ञापनात् । आप्यायनादापः । प्रकाशनाज्ज्योतिः । रसः सर्वकर्मपरिपाकनिर्वृत्तत्वादादित्यस्य रसत्वं सर्वकर्मफलाश्रय इत्यर्थः । अमृतं देवानां मोदनहेतुत्वात् । **ब्रह्म भूर्भुवः स्वरोमिति ।** त्रैलोक्यमोंकारार्थभूतमोंकारश्च सर्वमेतदेवेत्यर्थः । एतत्सर्वं छान्दोग्ये—‘ असौ वा आदित्यो देवमधु ’ इत्यत्र मधुविद्यायां स्पष्टमाम्नातम्—

अत्रैष श्लोकः—

---

१ क. तत्रै° । २ क. °भिध्येयं । ३ क. °रोमिति । अ° ।

अष्टपादं शुचिं[1] हंसं त्रिसूत्रमणुमव्ययम् ।
द्विधर्मोन्धं[2] तेजसेन्धं सर्वं पश्यन्[3]पश्यति ॥

**अष्टपादमिति** । अष्टौ दिशः पादा यस्य सोऽष्टपादस्तम् । सविता ह्यन्तारिक्षस्थः पादैरिव दिग्भिः प्रतितिष्ठतीव विभाव्यते । यद्वा ‘ आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान्विभासः कश्यपोऽष्टमः स महामेरुं न जहाति ’ इति तैत्तिरीयारण्यकोक्ता आरोगादयोऽष्टौ पादा ज्ञेयाः । शुचिं[4] शुद्धमलेपकमित्येतत् । हंसं हन्ति गच्छतीति हंसस्तं परिभ्रमन्तमिति यावत् । अथ वा हंस इति सूर्यनाम ‘ हंसः शुचिषत् ’ इति ‘ असौ वा आदित्यो हंसः शुचिषत् ’ इति ब्राह्मणदर्शनात् । त्रिसूत्रं त्रीणि सूत्राणि सूचकानि बन्धनानि वा यस्य स त्रिसूत्रस्तम् । ऋग्यजुःसामाभिर्हि प्रतिपाद्यते सविता त्रय्यात्मकमण्डलनिबद्धश्च । तथा च श्रुतिः—‘ सैषा त्रय्येव विद्या तपति ’ इति । अणुं सूक्ष्ममिन्द्रियागोचरम् । अव्ययं शाश्वतम् । द्विधर्मोन्धं द्वाभ्यां धर्माभ्यां पुण्यपापाभ्यामन्धमनवभासमानं पुण्यपापरहितमित्यर्थः । धर्मोन्धमिति च्छान्दसः । तेजसेन्धं[5] तेजसेद्धं दीप्तमतितेजास्विनामित्यर्थः । एवंविधमीश्वरं सवितारं पश्यन्सर्वं पश्यति तदात्मभावनां कुर्वन्सर्वज्ञो भवतीत्यर्थः ।

किं बहुनाऽयमेव सर्वात्मको नातःपरमस्तीति तं महीकर्तुं पुनरुपादत्ते—

नभसोऽन्तर्गस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य[6] मध्ये उदित्वा[7] मयूखे भवत एतत्सवित्सत्यधर्म[8] एतद्यजुरेतत्तप एतदग्निरेतद्वायुरेतत्प्राण एतदापं[9] एतच्चन्द्रमा एतच्छुक्रमेतदमृतम् ।

**नभसोऽन्तर्गतस्येति** । किं तद्यदादित्यस्य मध्य उदित्वोद्गम्य मयूखे अंशू भवतः प्रभवतः समर्थौ भवतो जगत्प्रकाशयितुमित्यर्थः । द्विवचनं प्राधान्याभिप्रायम् । उदुत्वा मयूखे इति पाठ उदूर्ध्वमुत्वोद्गम्य मयूखे उत्प्रभवत इत्यन्वयः । उदयाचलमारूढे सवितारि ततः प्रथमं निर्गते मयूखे मण्डलमतिक्रम्य ब्रह्माण्डमण्डलमाखिलमवभासयन्ती उच्चैः प्रसर्पत इत्यर्थः । यदेतन्मयूखद्वयं प्राधान्येनोक्तमेतत्सवित्[10]सवितृरूपम् । सत्यधर्मो मयूखोपलक्षितं सवितृ[11]स्वरूपं सत्यधर्म इत्यर्थः । एतद्यजुरित्याद्यस्य महिमोपयासः स्पष्टार्थः ।

एतद्ब्रह्मविषयमेतद्भानुरर्णवस्तस्मिन्नेव यजमानाः सैन्धव इव व्लीयन्त[12] एषा वै ब्रह्मैकताऽत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ।

---

१ ग. शुचि । २ क. तेजसोन्धमेनं प° । ३ क. °श्यच्च प° । ४ ग. शुचि । ५ क. तेजसोऽन्धं । ६ क. °त्यम° । ७ क. उदुत्वा । ८ क. °त्सत्य° । ९ क. °पश्चन्द्र° । १० क. °वितृ° । ११ क. °तृरू° । १२ क. लीयन्त ।

**एतद्ब्रह्मविषयमिति** । ब्रह्म विषयो यस्मिंस्तत्तथा ब्रह्मप्राप्तिद्वारमित्यर्थः । एतद्भानुरर्णव इत्येकं पदं तेजोराशिरित्यर्थः । यद्वा भानुः प्रकाशस्वभावोऽर्ण उदकं वहति प्रापयति वृष्टिद्वारेणेत्यर्णव इत्यर्थः । तस्मिन्नर्णव एव यजमानाः कर्मिणस्तदविरोधेनोपासकाश्च सैन्धवं इव सैन्धवखिल्य इवोदके निक्षिप्तो व्लीयन्ते विलीयन्ते तदात्मतां गच्छन्तीत्यर्थः । यदेवमस्मिन्यजमानानां विलयनमेषा वा एषैव ब्रह्मैकता कार्यब्रह्मसायुज्यप्राप्तिरेवोपासनाफलं न परब्रह्मसायुज्यमित्यभिप्रायः । तत्र हेतुरत्र हि यस्मात्सर्वे कामाः काम्यमाना विषयाः समाहिताः स्थिताः सन्तीत्यर्थः । कार्यब्रह्मलोके हि संकल्पमात्रसिद्धाः पित्रादिलक्षणाः कामाः श्रूयन्ते ' स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ' ( छान्दो० अ० ८ ) इत्यादौ । इतिशब्दो महिमोपवर्णनसमाप्त्यर्थः । अत्रोक्तफल उदाहरन्ति ऋषय इत्यर्थः ।

**अंशुधारय इवाणुवातेरितः संस्फुरत्यसावन्तर्गः सुराणाम् ।**
**यो हैवंवित्स सवित्स द्वैतवित्सैकधामेतः स्याच्चदात्मकश्च ।**

**अंशुधारय० तदात्मकश्चेति** । असौ सवितारमीशं प्रविष्टो मुक्तो यजमानः सुराणां सर्वेषां देवानामन्तर्गोऽन्तर्गतः संस्फुरति सर्वदेवतात्मा भवति । क इवेत्युच्यते। अणुवातेरितोऽल्पवायुना प्रेरितोंऽशुधारय इवांशून्धारयतीत्यंशुधारोंऽशुधार एवांशुधारयः प्रदीपः । धर्ता च विधर्ता च विधारय इतिवत्प्रयोगः। यो हैवंवित्स सवित्। विदा ज्ञानेन सह वर्तत इति सविद्विद्वानित्यर्थः । स द्वैतवित् । द्वैतं परापरब्रह्मभेदं वेत्तीति द्वैतवित् । यद्वा जीवानां द्वैतं भेदतत्त्वं वेत्तीति द्वैतवित् । स विद्वानेकधामैकं मुख्यं धामेतः प्राप्तः स्याद्भवेत् । यस्य धाम प्राप्नोति तदात्मकश्च तत्स्वरूपश्च भवेत् । ब्रह्मैव क्रमेण स भवतीत्यर्थः ।

द्वैतवित्त्वं प्रपञ्चयति—

**ये बिन्दव इवाभ्युच्चरन्त्यजस्रं**

**ये बिन्दव इवेति** । ये महासमुद्राद्बिन्दव इव वायूद्धूताः परमात्मनः सकाशादविद्याकार्योद्धूता अजस्रं पुनः पुनर्जागरितादावभ्युच्चरन्ति पृथगुत्तिष्ठन्ति तेऽर्चिषो वा इत्युत्तरेणान्वयः ।

पृथग्भावावभासमात्रांशे दृष्टान्तमुक्त्वा पृथग्भूतस्यैव सतः पृथक्परिच्छेदप्रतिभासे दृष्टान्तमाह—

**विद्युदिवाभ्राचिषः परमे व्योमन् । तेऽर्चिषो वै यशस**
**आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मनः ॥ २५ ॥**

---

१ क. °वशिलेव । २ क. °प्तो विली° । ३ क. °देतदृस्मि° । ४ क. अत्र । ५ क. °न्तर्गतः सु° । ६ क. देवलाना° ७ क. वै यवश° ।

**विद्युदिवाभ्रार्चिषः परमे व्योमन्निति** । परमे व्योम्नि महाकाशे यथाऽभ्रार्चिषोऽभ्रान्तर्गतस्याखण्डस्यार्चिषो विद्युद्विद्युदाकाराव भासस्तथा ते जीवात्मानो यशसः परमात्मनः, 'तस्य नाम महद्यशः' इति श्रुतेर्यशः परमात्मा तस्य यदर्चिश्चैतन्यप्रकाशस्तस्य वा आश्रयवशाच्चैतन्याभासखचितत्वात्तत्प्रतिबिम्बाधारत्वाद्वाऽविद्याकार्यदेहद्वयरूपा विविक्ता जीवा इति व्यपदिश्यन्त इति योज्यम् । यथा कृष्णवर्त्मनोऽग्नेरभिरूपा जटा ज्वालाः स्फुलिङ्गाः प्रकाशाश्रयत्वादनेकाग्नित्वमापद्यन्ते स्फुलिङ्गादिव्यपदेशभेदं च तथेत्यर्थः ॥ ३९ ॥

जीवद्वैततत्त्वमेवमाविष्कृत्य जीवेश्वरद्वैतमाविष्करोति—

**द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके शान्तमेकं समृद्धं चैकमथ यच्छान्तं तस्याऽऽधारं खमथ यत्समृद्धमिदं तस्यान्नं**

**द्वे वाव० तस्यान्नमिति** । ब्रह्मज्योतिषो ब्रह्मात्मकस्य चित्प्रकाशस्य द्वे वाव खलु रूपके ज्ञापके । एकं शान्तं समृद्धं चैकम् । ते एवाऽऽश्रयभेदनिर्देशेन विभजते । अथ तयोर्मध्ये यच्छान्तं तस्य खमाकाशमाधारमाश्रयः । क्लैब्यं छान्दसम् । खे व्याप्य व्यवस्थितोऽखण्डप्रकाशः । शान्तं रूपकमीश्वरस्याभोक्तुः स्वरूपज्ञापकमित्यर्थः । अथ यत्समृद्धं तस्येदमन्नमाधार इत्यनुवर्तते । अन्ने भोक्तृत्वेन व्यवस्थितं ब्रह्मज्योतिस्तस्य जीवत्वज्ञापकं भोक्ता जीव इत्यर्थः । तथा च मन्त्रः— "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" ( ऋ० सं० मं० १ सू० १६४ ) इति ।

विभागनिर्देशप्रयोजनमाह—

**तस्मान्मन्त्रौषधाज्यामिषपुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्तर्वेद्याम् ।**

**तस्मादिति** । यस्मादेवं ब्रह्मैव जीवेश्वररूपेण विभक्तं वर्तते तस्मान्मन्त्रौषधाज्यादिभिर्मन्त्रोपबृंहितैरौषधादिभिर्हविर्भिरन्तर्वेद्यां त्रेताविहितायां गृह्योक्तायामपि स्थण्डिलादिरूपायां यष्टव्यमीश्वरात्मकब्रह्मयजनं कर्तव्यमित्यर्थः । औषधं चरुधानादि । आमिषं पश्वङ्गावदानम् । पुरोडाशो मन्त्रसंस्तुतः पिष्टपाकविशेषः । स्थालीपाकः स्मार्तश्चरुः । आदिशब्दात्पयःसोमादि गृह्यते ।

तथा जीवरूपब्रह्मयजनमपि कार्यमित्यभिप्रेत्याऽऽह—

**आस्न्यवशिष्टैरन्नपानैश्चाऽऽस्यमाहवनीयमिति मत्वा**

**आस्न्यवशिष्टैरिति** । अवशिष्टैरन्नपानैश्च महायज्ञाद्यवशिष्टैः स्वभोजनत्वेन पश्चाद्विहितैरिति वाऽन्नपानैरास्न्यास्ये यष्टव्यमिति पूर्वेणान्वयः । यस्मिन्नास्येऽन्नपानाभ्यां

१ क. °भासा ख° । २ क. °त्वात्प्र° । ३ क. °ग्निरूपस्य° । ४ क. °लिङ्गव्य° । ५ क. तथैवेत्य° ।

जीवरूपब्रह्मयजनं क्रियते तदास्यमाहवनीयं मत्वाऽऽस्यात्मकेऽस्मिन्नाहवनीयेऽग्नौ प्रत्यग्रूपाय वैश्वानरात्मने हविरिदं हूयते मयेति चिन्तयन्भुञ्जीतेत्यर्थः ।

किमर्थमेवं कार्यमिति तत्राऽऽह—

**तेजसः समृद्ध्यै पुण्यलोकविजित्यर्थाय,**

**तेजस इति** । तेजो ज्ञानबलादिनिमित्तं प्रागल्भ्यं तद्वृद्ध्यर्थमास्याहवनीये यजनं पुण्यलोकस्य स्वर्गादेर्विजितिर्विजयस्तदर्थाय तत्प्रयोजनाय श्रौतस्मार्तयजनं कार्यमित्यर्थः ।

**अमृतत्वाय च ।**

एतदेव श्रौतादिकर्म सकामस्य पुण्यलोकजयहेतुरपि निष्कामस्य मोक्षहेतुर्भवत्यतो मुमुक्षुभिरपि यष्टव्यमित्यभिप्रेत्याऽऽह—**अमृतत्वाय चेति** ।

कुतः प्रमाणात्पुण्यलोकसाधनं कर्मेत्यवगतमित्यत आह—

**अत्रोदाहरन्ति ।**

**अत्रोदाहरन्तीति** । विधिवाक्यानि श्रूयन्त इत्यर्थः ।

तान्येव वाक्यानि पठति—

**अग्निहोत्रं जुहुयात्स्वर्गकामो यमराज्यमग्निष्टोमेनाभियजति सोमराज्यमुक्थेन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेण प्राजापत्यमासहस्रसंवत्सरान्तक्रतुनेति ।**

**अग्निहोत्रं० क्रतुनेतीति** । अत्राग्निहोत्रादिशब्दाः कर्मनामधेयानि । अग्निहोत्रग्रहणं च सर्वहविर्यज्ञानामुपलक्षणम् । अग्निष्टोमः सर्वसोमयागानां प्रथमो यज्ञः ' एष वै प्रथमो यज्ञो यज्ञानां यदग्निष्टोमः ' इति श्रुतेः । यमराज्यं यमाधिष्ठितः स्वर्गविशेषः । एवमेव सोमराज्यमित्यादि योज्यम् । स्वाराज्यमिन्द्राधिष्ठितो लोकविशेषः । एतच्चात्यग्निष्टोमवाजपेयाप्तोर्यामाणां बृहस्पतिसवादीनामेकाहानामुपलक्षणम् । प्राजापत्यं प्रजापतिनाऽधिष्ठितं स्थानं तद्द्वादशरात्रप्रभृतिसहस्रसंवत्सरसंज्ञान्तो यः क्रतुसमुदायः सत्रात्मकस्तेन यजतीत्यर्थः । एतेनाहीना अप्युक्ता वेदितव्याः ।

**वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ।**
**अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥ ३६ ॥**

**वर्त्याधार०आत्मशुची तथेति** । पूर्वार्धः स्पष्टार्थः । अन्तरे भवमन्तर्यमन्तरीयं ब्रह्माण्डान्तर्वर्ति व्यष्टिशरीरमण्डं ब्रह्माण्डं चान्तरीयाण्डे तयोरुपयोगात्स्वीकारादिमावात्मा च शुचिश्चाऽऽत्मशुची पुरुषादित्यौ तथा स्थितौ । वर्त्याधारस्थस्नेहसमाप्तिपर्यन्तं दीप-

१ झ. °दाह° । २ घ. °भिनयति । ३ क. यज्ञा° । ४ क. °रयज्ञा° । ५ क. °न यती° । ६ क. °था च दी° । ७ क. °पास्थि° ।

स्थितिवत्पिण्डब्रह्माण्डगतवासनाक्षयपर्यन्तं पुरुषादित्यरूपेण ब्रह्मज्योतिषो भेदेनावस्थानं भवतीत्यर्थः ॥ ३६ ॥

इदानीं यथोक्तानि कर्माणि प्रणवोपबृंहितान्यनुष्ठेयानि कर्मसाद्गुण्यायेति विधानपूर्वकं तादृगनुष्ठितकर्ममाहात्म्यं प्रपञ्चयति—

**तस्मादोमित्यनेनैतदुपासीतापरिमितं**
**तेजस्तत्त्रेधाऽभिहितमग्नावादित्ये प्राणे ।**

**तस्मादो० प्राण** इति । यस्मादुक्तानि कर्माण्यभीष्टफलदानि तस्मात्तेषां वीर्यवत्तरत्वायोमित्यनेन मन्त्रेणाऽऽदावुच्चारितेनैतत्कर्मजातमुपासीत तात्पर्येणानुतिष्ठेदित्यर्थः । तथा चाऽऽह **भगवान्**—

"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" ॥ इति ।

यतोऽपरिमितं तेजोऽस्येति शेषः । अस्योंकारस्य तेजः प्रभावोऽनवधीत्यर्थः । ब्रह्मरूपत्वात्तस्येति भावः । तत्तेजस्त्रेधाऽभिहितमभितो हितं निहितं कथितमिति वा । अग्नौ होमाद्याधारतया कर्मनिर्वर्तक आदित्ये देवतात्मनि प्राणे च कर्मफलभोक्तरि यजमाने चेति त्रेधा विहितामित्यर्थः ।

एतत्कथनोपयोगमाह[4]—

**अथैषा नाड्यन्नबहुमित्येषाऽग्नौ हुतमादित्यं गमयत्यतो यो रसोऽस्रवत्स उद्गीथं वर्षति तेनेमे प्राणाः प्राणेभ्यः प्रजा इत्यत्रोदाहरन्ति यद्धविरग्नौ हूयते तदादित्यं गमयति तत्सूर्यो रश्मिभिर्वर्षति तेनान्नं भवत्यन्नाद्भूतानामुत्पत्तिरित्येवं ह्याह ।**

**अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ३७ ॥**

**अथैषेति** । अथैवं सत्येषा शास्त्रसिद्धा नाडी द्वाररूपाऽन्नं बहुलयतीत्यन्नबहुः प्रथमार्थे द्वितीया । इत्येवंविधैषाऽग्नौ हुतं हविरादित्यं गमयत्यतो हविष आदित्यप्रविष्टाद्यो रसो रश्मिपरिपाकतोऽस्रवत्स रस उद्गीथं यथा स्यात्तथा वर्षति । उच्चैः शब्दं कुर्वन्वर्षतीत्यर्थः । तेन वर्षणेन वर्षणनिष्पन्नेनान्नेनेत्येतत् । इमे प्रसिद्धाः प्राणाः स्थिरा भवन्तीत्यर्थः । प्राणेभ्यः प्रजा जीवद्भ्यो हि बलवद्भ्यः प्रजा भवन्ति । इत्यत्रोक्तेऽर्थ उदाहरन्त्युदाहरणवाक्यं निगदव्याख्यानम् । एवं ह्याह मनुरपीति शेषः । 'यद्धै किंच

१ क. °जस्त्रिधाऽ° । २ क. °थाऽऽह । ३ क. °ह्मस्वरू° । ४ क. °योगानाह । ५ क. °बद्धद्गी° । ६ क. यद्वाऽग्नौ । ७ क. °प्रतिष्ठायो ।

मनुरवदत्तद्भेषजम्' इति श्रुत्यैव मनोः प्रशंसनात्प्रायः श्रुतिरेव मनुवचनमिति गम्यते । यद्वाऽग्नौ प्रास्ताऽऽहुतिः सम्यगिति वचनं क्वचिच्छाखान्तरगतमेवेदं मनुना निबद्धमिति न मनुप्रणीतमतोऽनादिसिद्धया श्रुत्या कथमर्वाग्भाविस्मृतिवचनमुदाह्रियत इति न शङ्कास्पदम् । श्लोक उक्तार्थः ॥ ३७ ॥

इदानीं पृथिवी गार्हपत्य इत्यादिनोक्तप्रकारेणाग्निहोत्रं जुह्वतः फलप्राप्तिं सोपस्कारामाह[1]—

**अग्निहोत्रं जुह्वानो लोभजालं भिनत्त्यतः संमोहं छित्त्वा न क्रोधान्स्तुन्वानः काममभिध्यायमानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्दद्[2]तः परमाकाशमत्र हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यत्यत्रोदाहरन्ति ।**

**अग्निहोत्रं०अत्रोदाहरन्तीति** । यथोक्तप्रकारमग्निहोत्रं जुह्वानः कालेन शुद्ध्युपेतान्तःकरणः सल्लोभमयं जालं श्रेयोमार्गनिरोधकं भिनत्ति विदारयति । अतोऽनन्तरं लोभमूलं मोहमविवेकलक्षणं छित्त्वा विवेकेनोत्कृत्य क्रोधान्क्रोधमयान्भावान्न स्तुन्वानोऽस्तुन्वानो न प्रशंसंस्तान्परित्यजन्निति यावत् । कामं मोक्षलक्षणमभिध्यायमानो मोक्ष एव मे फलमस्त्विति मनसोल्लिखन्नित्यर्थः । तत[3] एवं सम्यग्विशुद्धेऽन्तःकरणे सति चतुर्जालं ब्रह्मकोशं चतुर्भिरन्नमयप्राणमयमनोमयविज्ञानमयाख्यैर्जालैः परिवेष्टितं ब्रह्मकोशं ब्रह्मणः परस्याऽऽच्छादकं मायामयमानन्दमयाख्यं तस्मिन्हि ब्रह्म निहितं श्रूयते (तै०उ०) 'यो वेद निहितं गुहायां परमे व्योमन्' 'ब्रह्म पुच्छं प्रतिष्ठा' इति च । तं कोशं भिन्दं[4]त्साक्षिसाक्ष्यविवेकलक्षणेन तत्त्वज्ञानेन भिन्दं[5]न्नुन्मूलयन्प्रत्यगर्थमुद्धरन्नित्यर्थः । अतः परमाकाशं सच्छब्दवाच्यं कारणोपाधिकम् । 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छान्दो०अ०८) इत्युक्तलक्षणं प्रविशेदिति[6] शेषः । अत्र ह्याकाशे ब्रह्मण्युपासनार्थं यानि सूर्यसोमाग्नीनां मण्डलानि सात्त्विकानि सत्त्वगुणात्मनि कल्पितानि तानि भित्त्वा सूर्यादिदेवतादिकमखिलं प्रपञ्चं परे कारणे ब्रह्मणि प्रविलाप्येत्युक्तं भवति । तत उपास्योपासकभेदप्रतिभासहेत्वभावाच्छुद्धः प्रत्यगात्ममात्रतया स्थितो विद्वान्सत्त्वान्तरस्थं शुद्धसत्त्वमयान्तःकरणवृ[7]त्तावभिव्यक्तिं गतमचलमित्याद्यनेकविशेषणैरुपलक्षितं ब्रह्म पश्यति साक्षादुपलभते मुच्यत इत्यर्थः ।

---

१ क. 'पस्कारमा° । २ क. °न्दनतः । ३ क. ततः स° । ४ क. °न्दन्साक्षि° । ५ ग. °न्दन्नुन्मू° । ६ क. °ति वाक्यशे° । ७ क. °णप्रवृ° ।

अत्र सत्यकामसर्वज्ञत्वसंयुक्तमिति ब्रह्मविशेषणेन कारणे ब्रह्मणि प्रथमं प्रविश्य ततः कालेन शुद्धं ब्रह्म प्रविशतीति गम्यत उपासनाप्रकरणात् । अत एव सर्वापरं धामेति विशेषणम् । सर्वमपरं निकृष्टं यस्मात्तत्सर्वापरं धाम स्थानं कारणमित्यर्थः । न चैवं सति चतुर्जालं ब्रह्मकोशं भिन्द्यादित्यनुपपन्नमिति शङ्क्यं तस्य क्रमप्राप्य-परममुक्त्यपेक्षत्वात् । प्राक्कृतो हि विवेकः प्रारब्धप्रतिबन्धक्षये स्वफलं करिष्यतीति सर्वमनवद्यम् । अत्रोक्तेऽर्थे उदाहरन्ति ऋषय इत्यर्थः ।

उदाहरणं पठति—

**रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।**
**तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥**

**रविमध्ये० स्थितोऽच्युत इति** । तेजोऽग्निः । स्पष्टार्थमन्यत् ।

मण्डलभेदक्रमेण ब्रह्मप्रवेशनमुदाहृत्य कोशभेदनेन ब्रह्मदर्शनमुक्तमनूद्य तत्राप्युदा-हरणमाह—

**शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणुं ध्यात्वाऽतः परमतां गच्छत्यत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ।**

**शरीर० उदाहरन्तीति** । शरीरे प्रादेशमात्रपरिमितं हृदयं तत्राङ्गुष्ठमात्रं कमलं तदिदं शरीरप्रादेशाङ्गुष्ठमात्रमित्युच्यते । तादृगङ्गुष्ठमात्रकमलान्तरभिव्यक्तत्वा-दात्माऽप्यङ्गुष्ठमात्रस्तम् । अणोरप्यणुमतिसूक्ष्मादपि सूक्ष्मतरं दुर्लक्ष्यम् । एवंविधमा-त्मानं ध्यात्वाऽतोऽनन्तरं चतुर्जालं ब्रह्मकोशं भिन्दन्परमतां परमात्मभावं गच्छति यथोपासितं परमात्मानमनुभवतीत्यर्थः । अत्र हि परमात्मनि सर्वे कामाः स्वम-नोमात्रसंकल्पसाधनाः समाहिताः स्थिताः 'सर्वं तदत्र गत्वा विन्दते' हि श्रुत्यन्त-रात् । इत्यत्रास्मिन्नुक्तेऽर्थे उदाहरन्ति ।

**अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवद्द्विस्त्रिधा हि । तद्ब्र-ह्माभिष्टूयमानं महो देवो भुवनान्याविवेश । ॐ नमो ब्रह्मणे नमः ॥ ३८ ॥**

**इति मैत्र्युपनिषदि षष्ठः प्रपाठकः ॥ ६ ॥**

अङ्गुष्ठपरिमितकमलयुक्तं प्रादेशशरीरमात्रं प्रादेशपरिमितहृदयान्तःशरीराभिव्यक्त-मिति यावत् । प्रदीपप्रतापवत्प्रदीपशिखावद्द्विस्त्रिधा द्विस्त्रिप्रकारं मन्दमध्यमोत्तमप्रकारं तैलवर्त्यादितारतम्यवशात्प्रदीपप्रकाश इवाभिव्यञ्जकान्तःकरणशुद्धितारतम्यादभिव्य-

---

१ क. °सनप° । २ क. °नं कर° । ३ क. °न्द्यचिन्य° । ४ क. प्रकृतो । ५ क. °भेदेन ६ ग. °प्यणव्यं ध्या° । ७ ग. °प्यणव्यम° । ८ क. °तुर्द्दलं ।

क्तितारतम्यवत् । तद्ब्रह्मान्तर्यामित्वलक्षणमभिष्टूयमानमभितः स्तूयमानं प्रशस्ततयोपलभ्यमानं महो देवो महान्देवोऽखण्डचिदात्मको भुवनान्याविवेश यदेवंविधमात्मतत्त्वं तदेव ब्रह्म यच्चेदं ब्रह्म ब्रह्मैवाऽऽत्मेत्यभेदेन ध्यानं प्रशस्तं तत्कर्तव्यमिति भावः । ॐ ब्रह्मणे नम इति शान्तिपाठो मङ्गलार्थः ॥ ३८ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां

षष्ठः प्रपाठकः समाप्तः ॥ ६ ॥

---

अथ सप्तमः प्रपाठकः ।

सप्तमोऽप्ययं प्रपाठकः प्रकीर्णानेकोपदेशपरः । तत्राऽऽदितः सप्तभिरनुवाकैः सवित्राश्रयमुपासनं स्वतन्त्रं सविस्तरं सफलमात्मपर्यवसितमुपादिशति—

**अग्निर्गायत्रं त्रिवृद्रथंतरं वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति।**

**अग्निर्गायत्रमित्यादिना** । अग्निर्गायत्रं० अन्तरान्तर इति । अग्निर्देवता । गायत्रं छन्दः । त्रिवृत्स्तोमः। रथंतरं साम । वसन्त ऋतुः । प्राणः प्राणनवृत्तिरनः । नक्षत्राण्यश्विन्यादीनि । वसवो देवगणविशेषः । एते सर्वे मूर्तिमन्तः सवितुः पुरस्तात्पुरोभाग उद्यन्ति । एतैः पुरोभागे परिवृतः सविता ध्येय इति विवक्षितम् । तापकाल एते तपन्ति वर्षासु वर्षन्ति तत्तदवसरे सवितारं स्तुवन्ति पुनरस्तं गच्छन्ति सवितर्यन्तर्विशन्ति । अथवा भोगकाले सवित्राश्रितममृतं भोक्तुमन्तर्विशन्ति सवितृमण्डलमनुप्रविशन्ति । विवरेण द्वारेण किरणप्रवृत्तिमार्गेणेक्षन्ति भोज्यममृतमीक्षन्ते पश्यन्ति । अथवा विवरेण समयविशेषेण भोगप्रतीक्षां कुर्वन्तीत्यर्थः । एतदप्यग्न्यादीनां वृत्तान्तं ध्येयं वेदितव्यम् ।

एवंविधैः पुरोवर्तिभिः स्तूयमानं सावित्रं स्वरूपं ध्येयं निर्दिशति—

**अचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः शुद्धो भास्वरो[3] गुणभुग्भयोऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञो मघोऽप्रमेयोऽनाद्यन्तः श्रीमानजो धीमाननिर्देश्यः सर्वसृक्सर्वस्याऽऽत्मा[4] सर्वभुक्सर्वस्येशानः[5] सर्वस्याऽऽन्तरान्तरः ॥ १ ॥**

**अचिन्त्य इत्यादिना** । अमूर्त इति च्छेदः । अचिन्त्यो मनसोऽगोचरः । अमूर्तोऽपरिच्छिन्नः । गभीरो दुरवगाहः कर्मेन्द्रियागोचर इत्यर्थः । गुप्तो ज्ञानेन्द्रियाविषयः ।

---

१ क. ॰नस्तं । २ क. ॰नवो घ॰ । ३ क. ॰यो भात्यन्तः । ४ क. ॰र्वमस्याऽऽ॰ । ५ क. ॰र्वभूतसर्व॰ ।

अनवद्यः पुण्यपापरहितः । घनोऽभेद्यः । गहनो दुर्विवेकः । निर्गुणो रूपादिगुणरहितः । शुद्धो निर्लेपः । भास्वरः सर्वावभासकभारूपः । गुणभुक्त्रिगुणविकारसाक्षी । बिभेत्यस्मात्सर्वमिति भयः कालरूपः । अनिर्वृत्तिरकार्यरूपः । यद्वा निर्वृत्तिः सर्वसिद्धिरूपः । प्रसिद्धार्थमन्यत् । मघो मघवानिन्द्रः पूज्य इत्यर्थः । सर्वस्याऽऽन्तरो भोक्ता जीवस्तस्याप्यान्तर आन्तरान्तरोऽन्तर्यामीत्यर्थः ॥ १ ॥

इन्द्रस्त्रिष्टुप्पञ्चदशो बृहद्ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करः ॥ २ ॥

इन्द्रस्त्रिष्टुबित्यादि समानम् । इन्द्रस्त्रिष्टु० भास्कर इति । अनाद्यन्त इत्यादिविशेषणानि सवितुः पूर्ववद्व्याख्यानार्थानि यथाशब्दं विज्ञेयानि ॥ २ ॥

मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम ॥ ३ ॥

मरुतो जगतीत्यादि समानम् । मरुतो जगती० परं धामेति ॥ ३ ॥

विश्वे देवा अनुष्टुबेकविंशो वैराजः शरत्समानो वरुणः साध्या उत्तरत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यन्तःशुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तः ॥ ४ ॥

विश्वे देवा इत्यादि समानम् । विश्वे देवा० निरात्माऽनन्त इति ॥ ४ ॥

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिंशौ शाक्वररैवते हेमन्तशिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्ध्वा उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकम् ॥ ५ ॥

मित्रावरुणौ पङ्क्तिरित्यादि समानम् । मित्रावरुणौ० विशोकमिति ॥ ५ ॥

एवं पञ्चसु दिक्षु क्रमेण ध्येयविशेषानुपदिश्याधोभागे च ध्येयविशेषमुपदिशति—

शनिराहुकेतूरगरक्षोयक्षनरविहगशरभेभादयोऽधस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतो भान्तः क्षान्तः शान्तः॥६॥

---

१ क. अनघः । २ क. °रयो° । ३ क. °न्त्यतःशु° । ४ क. °तः श° । ५ क. विमृ° । ६ क. विधार° ।

**शनिराहुकेतू०** क्षान्तः शान्त इति । विधरणो विधारको वर्णाश्रममर्यादाया इत्यर्थः । भान्तो भासा युक्तः । क्षान्तः क्षमावांस्तथा शान्तः ॥ ६ ॥

एवमधिदैवं ध्येयं सविस्तरमुपदिश्य तदनूद्य तस्याध्यात्मं ध्येयं स्वरूपमुपदिशति—

**एष हि खल्वात्माऽन्तर्हृदयेऽणीयानिद्धोऽग्निरिव विश्वरूपोऽस्यैवान्नमिदं सर्वमस्मिन्नोता इमाः प्रजाः ।**

**एष हि०** हिताय नम इति । योऽधिदैवतमादित्यमण्डल उपास्य उक्त एष ह्येव खल्वात्माऽन्तर्हृदये हृदयस्यास्य स्थानस्याणीयस्त्वादणीयानतिसूक्ष्मः । अग्निरिव दीपशिखेवेद्धो दीप्यमान इत्येतत् । विश्वरूपः सर्वरूपो वैश्वानरो भोक्तेति यावत् । अतोऽस्यैवान्नमिदं सर्वमविशेषेण सर्वप्राणिभिरद्यमानमिदमन्नमस्यैव वैश्वानरात्मनोऽन्नमिति दृष्टिर्विधीयते । अस्मिन्वैश्वानरात्मनीमाः प्रसिद्धाः प्रजाः स्थावराद्या ओता आश्रिताः पटा इव तन्तूनेनमाश्रित्य स्थिता इत्यर्थः ।

सर्वात्मको वैश्वानरो भोक्ता तस्यैवेदं सर्वैरद्यमानं सर्वप्रकारमन्नमिति ध्यात्वा प्राप्तमन्नं भुञ्जानोऽन्नदोषैर्न लिप्यत इत्येवमर्थं सूचयन्त्यात्मानं विशिनष्टि—

**एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसंकल्पः सत्यकाम एष परमेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हंसः शास्ताऽच्युतो विष्णुर्नारायणः ।**

**एष इति** । अपहतपाप्मा पुण्यपापलेपरहित इत्यर्थः । पुण्यमप्यत्र पापशब्देन गृह्यते तस्यापि पापवत्संसारबन्धहेतुत्वात् 'उभे ह्येवैष एते तरति न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति च श्रुतेः । विजरो विमृत्युरिति जरामृत्युधर्मकात्स्थूलदेहाद्विविच्यते । विशोक इति शोकादिधर्मकादन्तःकरणात् । विविधा चिकित्सा विचिकित्सा सहजस्य क्षुद्व्याधेर्निवर्तनं सा यस्यास्ति स विचिकित्सोऽन्नोपष्टब्धजीवनः प्राणस्तस्मादन्योऽयमात्माऽविचिकित्सः । अत एवात्र शाखान्तरेऽविजिघत्स इति पठ्यते । खादितुमिच्छा जिघत्सा तया रहितोऽविजिघत्स इत्यर्थः । अविपाश इति वर्णव्यत्ययेनापिपासः पिपासारहितः पिपासाधर्मकात्प्राणादन्य इत्यर्थः । स्थूलसूक्ष्मदेहोपाधिनिषेधे तद्दोषानास्कन्दितत्वात्सत्यसंकल्पः सत्या अवितथाः संकल्पा यस्य सः । अत एव सत्यकामः काम्यन्त इति कामाः सत्या यथासंकल्पमवश्यंभा-

---

१ क. विधार° । २ ग. शान्त इत्यर्थः ॥ ६ ॥ ३ ग. पट । ४ ग. तन्तुजातमा° । ५ ग. °त्येतम° ।

विनो यस्य स सत्यकामः । यत एवमयमुपाधेरुद्धृतोऽत एष एव परमेश्वर एष भूताधिपतिर्भूतानां स्वाम्येष भूतपालः पालयिता यत एष सेतुर्जगन्मर्यादोत्तम्भको यतो विधरणो विधारको वर्णाश्रमादिधर्माणां तद्धेतूनां चेति शेषः । इदानीमुक्तगुणमात्मानं स्तौति—एष हि खल्वात्मेशानो य उक्तः स एव शंभ्वादिशब्दवाच्यो नान्य इत्यर्थः ।

उक्तयोरध्यात्माधिदैवोपाधिकयोरात्मनोरुपाधिद्वयापोहेनैकत्वं वास्तवं रूपमुपदिशत्यहंग्रहत्वाय—

**यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एष एकः ।**

**यश्चैषोऽग्नावित्यादिना** । अग्निग्रहणमधिदैवस्याऽऽदित्यस्य प्रकाशोपजीविसर्वविभूतिग्रहणोपलक्षणार्थम् । यश्चायं हृदये प्रत्यङ्पुरुषो यश्चासावादित्ये परोक्षः स आदित्यस्थ एष हृदयस्थश्चैक एव नानयोर्वस्तुतत्त्वे भेदोऽस्तीत्यर्थः ।

एवमनुसंधायोपास्यस्वरूपं मन्त्रमिममुदीरयेदित्यभिप्रेत्याऽऽह—

**तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नमः ॥ ७ ॥**

**तस्मै त इति** । सत्ये नभसि ब्रह्माकाशे हिताय निहिताय स्वस्वरूपे स्थितायेत्यर्थः ॥ ७ ॥

तदेवं श्रेयोर्थिनामुपादेयं साधनजातं सोपस्करं सफलमनेकधोपदिश्येदानीं श्रेयोमार्गविघातकं परिहरणीयं सम्यग्व्युत्पादयति—

**अथेदानीं ज्ञानोपसर्गा राजन्मोहजाल-**
**स्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैष**

**अथेदानीं०तरन्तु यदिति** । अथोपादेयविध्यर्थनिरूपणानन्तरमिदानीं हेयनिषेधार्थकथनावसरे प्राप्ते ज्ञानोपसर्गा ज्ञानोत्पत्तिविघातका हेतवः प्रस्तूयन्त इति शेषः । राजन्निति संबोधनं प्रदर्शनार्थमयमुपदेशप्रकार एवाऽऽख्यायिकायाः पुरा समापनात् । के ते ज्ञानोपसर्गा इत्याकाङ्क्षायां यन्मोहजालं वस्तुतत्त्वाविवेकनिबन्धनमित्युत्तरं पूरणीयम् । पुनः कुतो मोहजालप्रसर इत्याकाङ्क्षायामाह—मोहजालस्यैष वक्ष्यमाणो वै प्रसिद्धो योनिः प्रसरणस्थानम् । कोऽसौ यदस्वर्ग्यैः स्वर्गानर्हैर्नास्तिकादिभिः सह स्वर्ग्यस्य स्वर्गार्हस्य वैदिकस्य संसर्ग इत्यध्याहारः । पुनरेष इति पूर्वोक्तस्यैवाऽऽकर्षणमन्वयस्पष्टीकरणार्थम् ।

तत्र निदर्शनं लुप्तोपमाव्यञ्जकमाह—

**वाऽऽये पुरस्तादुक्ते[४]ऽप्यधःस्तम्भेनाऽऽश्लिष्यन्त्यथ ये चान्ये ह**
**नित्यमप्रमुदिता नित्यप्रवसिता नित्ययाचनका नित्यं शिल्पोपजी-**

१ क. °त्यक्षः पुर° । २ क. °य स्व° । ३ क. °वानुक° । ४ क. °क्तेनाप्य° ।

**विनोऽथ ये चान्ये ह पुरयाचका अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसोऽथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयः ।**

**वैाट्य इति**[1] । वाटीमर्हतीति[2] वाटचो महाशाख्यात्रपनसादिस्तस्मिन्पुरस्तात्पुरःस्थितत्वेन केनचिदाप्तेनोक्तेऽपि[3] तमनादृत्याधःस्तम्बेन क्षुद्रेण तृणशलाकया सहाऽऽश्लिष्यन्ति स्तम्बप्रभवं छायाफलादिकं बहु मन्यन्त इत्यर्थः । एष दृष्टान्तो मोहस्येत्येषपदस्येहैव वाऽन्वयः । अथ पुनर्ये च येऽप्यन्य इह लोके नित्यप्रमुदिता ऐहिकैरेव लाभैः सदा संतुष्टाः । ये च नित्यप्रवसिताः सदा परप्रेष्याः । नित्ययाचनकाः सदा दीनाः । नित्यं शिल्पोपजीविनः कारुकर्मकौशलेन जीवननिरता इत्यर्थः । अथ ये चान्ये ह पुरयाचका नगरभिक्षवः । ये चायाज्यान्याजनानर्हान्याजयन्ति तेऽयाज्ययाजकाः । ये चान्ये शूद्रशिष्याः शूद्राद्यां कामपि विद्यां गृहीतवन्तो ब्राह्मणादयस्ते शूद्रशिष्याः । ये च शूद्राः शास्त्रं श्रुतिस्मृतिपुराणलक्षणं विदन्ति पठन्ति पाठयन्ति वा ते शास्त्रविद्वांसः । अथ ये चान्ये ह चाटाः[4] पिशुनाः, जटा अपरिच्छिन्नासभ्यवदनपराः, नटा नर्तनोपजीवनाः[5], भटा योधास्तस्करा[6] वा, प्रव्रजिताः कार्पटिका अभिक्षवो भिक्षुवेषधारकाः, रङ्गावतारिणोऽनेकवेषभाषाविशेषैर्नाटकनाट्यजीविनः । राजकर्मणि राज्ये ये नियुक्ता इत्यध्याहारः । राष्ट्रसंरक्षणे[7] चोरशासनादावधिकृता इत्यर्थः । ये च पतिता महापातककृतो राष्ट्रान्निःसारिताः स्थिता वा । आदिपदादभिशस्ता गृह्यन्ते ।

**अथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणा अथ ये चान्ये ह वृथा कर्षायकुण्डलिनः[8] कापालिनो[9]ऽथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत्प्रकाशभूता[10] वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह ।**

**अथ ये चान्ये ह यक्षेति** । ग्रहादीनामिति कर्मणि षष्ठी । अर्थं पुरस्कृत्य धनादिकं स्वजीवनमुद्दिश्य ये यक्षादीन्प्राणिपीडकाञ्शमयाम उच्चाटनादिभिर्निवारयाम इत्येवं ब्रुवाणा मन्त्रयन्त्रपरा इत्यर्थः । अथ ये चान्ये वृथा मिथ्या कषायवाससः कुण्डलिनः शङ्खादिशकलकृतकुण्डलधारिणः[11] कापालिनः कपालभिक्षवः । अथ ये चान्ये वृथातर्कोऽनुग्राह्यप्रबलप्रमाणशून्यः स्वबुद्धिकल्पितः । दृष्टान्तः प्रायोदृष्टस्योदाहरणं क्वचिददृष्टस्य वोदाहरणं दृष्टान्तः ।

---

१ क. ह वाट° । २ क. षाटी° । ३ क. क्तेनापि । ४ क. वाटाः । ५ क. °जीविनः । भ° । ६ क. यौद्धारस्त° । ७ क. °णे चौर° । ८ क. °षायाः कु° । ९ क. °नः कपा° । १० क. °सेत्प्राकाश्यभू° । ११ क. °णः कपा° ।

कुहकं छलग्रहः प्रतारणं वा । इन्द्रजालं प्रत्यक्षतो मिथ्यार्थप्रदर्शनम् । एतैर्द्वारैर्ये वैदिकेषु वेदोक्तमार्गैकानिरतेषु पारिस्थातुं परिपन्थितया स्थातुमिच्छन्ति तैः सह न संवसेद्ये च पूर्वोक्तास्तैश्च न सह संवसेदित्यर्थः । तत्र हेतुमाह—ते वै निश्चितं प्राकाश्यभूता अपरोक्षा एव तस्कराश्चोराः परवित्तापहारिणः प्रसिद्धा यावन्त उक्तास्तेऽस्वर्ग्या यतोऽतो वैदिकानभिभूय ज्ञानमार्गमवरुन्धत इति वैदिकैर्वेदोक्तपुरुषार्थार्थिभिस्तत्सङ्गस्त्याज्य इत्यर्थः । इत्येवं ह्याह ।

**नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।**
**भ्राम्यल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥ ८ ॥**

नैरात्म्यवादः शून्यक्षणिकाविज्ञानाद्यात्मवादः । **वेदविद्यान्तरमिति** । वेदं विद्यान्तरं चेत्यर्थः ॥ ८ ॥

इदानीं वेदविरोधिनां मार्गस्य प्रवृत्तिमूलमितिहासमाह—

**बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेमाम-**
**विद्यामसृजँत्तया शिवमशिवमित्युद्दिशन्त्यशिवं शिवमिति।**

**बृहस्पतिर्वै० इत्येवं ह्याहेति** । बृहस्पतिर्वै प्रसिद्धो देवपुरोहितः कदाचिच्छुक्रो भूत्वा शुक्ररूपमास्थायेमामविद्यामसृजँदिति संबन्धः । किमर्थम् । इन्द्रस्याभयाय क्षेमायासुरेभ्योऽसुराणां क्षयाय नाशाय । असुरान्मोहयित्वेन्द्रं रक्षितुमित्यर्थः । याऽविद्या बृहस्पतिना सृष्टा तया शिवं परिणामे सुखकरमशिवमकल्याणं दुःखमित्युद्दिशन्ति कथयन्ति नास्तिका इति शेषः । अशिवमकल्याणं शिवमिति चोद्दिशन्तीत्यनुवर्तते ।

तेषामभिप्रायमाह—

**वेदादिशास्त्रहिंसकधर्माभिध्यानमस्त्विति वदन्त्यतो**
**नैनामभिधीयेतान्यथैषा वन्ध्यैवैषा रतिमात्रं फल-**
**मस्या वृत्तच्युतस्येव नाऽऽरम्भणीयेत्येवं ह्याह ।**

**वेदेति** । वेदस्मृतिपुराणादिरूपशास्त्रस्य हिंसको यो धर्मः पाषण्डादिरूपस्तस्याभिध्यानं पुनः पुनरनुसंधानमस्तु लोकस्येति शेषः । इति वदन्ति मूर्खा उपदिशन्ति । अतो नैनां विद्यां धर्मकञ्चुकैरवैदिकैर्नास्तिकैश्च प्रसार्यमाणामभिधीयेत न पठेन्न शृणुयाच्चेत्यर्थः । अतोऽन्यथा विपरीतैषा विद्या महतः श्रेयसो विघातिनी स्वरूपतोऽपि वन्ध्यैवैषा निष्फला । यतो रतिमात्रं तात्कालिकं फलमस्या न भाविशुभफलमस्तीत्यर्थः । वृत्तं

---

१ क. प्रकाशभूता । २ क. °राश्चौराः । ३ क. °जत तया । ४ क. जतेति । ५ क. °षाम° । ६ क. स्या भा° । ७ क. °फलं नास्ती° ।

पारम्पर्यक्रमागत आचारस्तस्माच्च्युतस्य भ्रष्टस्य यथेह परत्र वा न सुखं स्वजात्यपरिग्रहाद्यमयातनागोचरत्वाच्च तद्वद्वेदविरुद्धागमाचारानिरतस्यापीह शिष्टैः परित्यागात्परत्र च नरकगातित्वाच्च नाऽऽरम्भणीयैषा बार्हस्पत्याऽविद्येत्येवमस्मिन्नर्थे ह्याह विद्याविद्ययोर्विरोधं कठश्रुतिरित्यर्थः ।

**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।**
**विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते ॥**

**दूरमेते० लोलुपन्त इति** । या चाविद्या या च विद्येति ज्ञाता निश्चिता पण्डितैरेते विद्याविद्ये दूरमत्यन्तं विपरीते विरुद्धस्वभावे विरुद्धविषयत्वात्स्थितिगतिप्रत्ययाविवेत्यर्थः । न केवलं स्वरूपतो विषयभेदादेव विरुद्धे अपि तु फलभेदादपीत्याह—विषूची विषूच्यौ विष्वगञ्चनाद्विषूच्यौ नानागती विरुद्धफले इत्यर्थः । एवं विद्याविद्ययोः स्वभावमभिधार्य यमो नचिकेतसं प्रत्याह—**विद्याभीप्सितमिति** । विद्यैवाभीप्सिता यस्य स विद्याभीप्सितस्तं नचिकेतसं नचिकेतोनामानं त्वामहं मृत्युर्मन्ये जानामि यतस्त्वा त्वां बहवोऽपि मया दत्ताः कामा विषया न लोलुपन्ते त्वां न लोपितवन्तः । आत्मोपभोगवाञ्छापादनेन श्रेयोमार्गाद्विच्छेदं न कृतवन्त इत्यर्थः ।

विद्याविद्ययोर्भिन्नफलत्वमात्र ईशावास्याध्यायस्थं मन्त्रमुदाहरति—

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥**

**विद्यां चाविद्यां च० विद्ययाऽमृतमश्नुत इति** । विद्यां वेदेश्वरात्मविषयां भावनामविद्यां तद्विपरीतां कर्मनिष्ठालक्षणां च यस्तदुभयं सह समुच्चित्य वेद व्यवधानाव्यवधानाभ्यामविद्याविद्ये एकत्र पर्यवसिते अतः क्रमेणैकपुरुषेणानुष्ठेये इति यो वेदोपास्ते तत्परो भवति सोऽविद्यया कर्मनिष्ठया मृत्युं विद्योत्पत्तिप्रतिबन्धकं पापं तीर्त्वाऽतिक्रम्य विद्ययौपनिषदयाऽमृतत्वं मोक्षमश्नुते प्राप्नोतीति मन्त्राक्षरयोजना ।

तथा चाविद्याऽपि वेदविहिता विद्योपयोगिनी चेत्तदोपादेयाऽपीत्यत्रोदाहरणमुक्त्वा तद्विपरीता तु हेयैव ताममुञ्चतोऽनर्थपरम्पराया अविच्छेद एव स्यादित्यस्मिन्नर्थ उदाहरणमाह—

**अविद्यायामन्तरे वेष्टयमानाः स्वयंधीराः पण्डितंमन्यमानाः ।**
**दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ९ ॥**

**अविद्यायामन्तरे० यथाऽन्धा इति** । अविद्याऽऽत्मतत्त्वस्फुरणप्रतिबन्धात्मिका तद्विपरीतार्थसामीचीन्यावभासिनी च तस्यामन्तरेऽभ्यन्तरे तमसीव भुजंगतत्त्वावरणे रज्जु-

---

१ क. °य न° ।

त्वावभासनिमित्ते वर्तमाना ये ते मूढा इति योजना । मोहव्याप्ताः सदसद्विवेकशून्यास्ते परियन्ति संसारमण्डले परिभ्रमन्ति नैषां श्रेयःप्राप्त्याशाऽस्तीत्यर्थः । किंलक्षणास्त इति तान्विशिनष्टि—वेष्टयमानाः पुत्रपशुधनक्षेत्रादितृष्णापाशशतैः संवेष्टयमानाः । अनेन तेषां संसारपरिभ्रमणाविच्छेदे कारणमुक्तम् । तथा च श्रुत्यन्तरम्—"कामान्यः कामयते मन्यमानः स कामभिर्जायते[२] तत्र तत्र" इति । स्वयंधीराः पण्डितंमन्यमाना इति विशेषणान्तरम् । वयमेव धीरा धीमन्तो विवेकिनः शास्त्रकुशला[३] इत्यात्मानं पण्डितं मन्यमाना न तु सम्यक्पण्डितास्ते । अनेन तेषां सत्सङ्गदौर्लभ्यं दर्शितम् । पुनस्तान्विशिनष्टि—दन्द्रम्यमाणाः कुटिलामनेकरूपां गतिं गच्छन्तः । जरामरणरोगादिदुःखशतैरुपद्रूयमाणा इति वा । अनेन तेषां पुण्यमार्गप्रवृत्त्यभावः सूचितः । तेषां मार्गप्रदर्शका अपि तादृशा एवेत्यभिप्रेत्य दृष्टान्तमाह—अन्धेनैवेति । एकेनाग्रयायिनाऽन्धेन नीयमाना देशाद्देशान्तरं प्रत्याकृष्यमाणा यथा बहवोऽन्येऽन्धाः पुरोन्धेन सह कूपकण्टकादिषु पतन्तो महान्तमनर्थं प्राप्नुवन्त्येवं वेदविरुद्धविद्वन्मन्यप्रदर्शितमार्गगा अपि तेनैव सह निरयप्राये संसारे पतन्तीत्यर्थः ॥ ९ ॥

इदानीं वेदैकविषये सर्वशिष्टमतोपरोधनायेतिहासमवतारयति—

**देवासुरा ह वै य आत्मकामा ब्रह्मणोऽन्तिकं प्रयाता-**
**स्तस्मै नमस्कृत्वोचुर्भगवन्वयमात्मकामाः स त्वं नो ब्रूही-**
**त्यताश्चिरं ध्यात्वाऽमन्यतान्यतात्मानो वै तेऽसुरा अतोऽ-**
**न्यतममेतेषामुक्तं तदिमे मूढा उपजीवन्त्यभिष्वङ्गिणस्त-**
**र्याभिघातिनोऽनृताभिशंसिनः सत्यमिवानृतं पश्यन्ति ।**

**देवासुरा ह वै० स्यादितीति** । देवाश्चासुराश्च देवासुराः । ह वै, इत्यैतिह्यार्थौ निपातौ । ये बभूवुः पूर्वं देवाश्चासुराश्च त आत्मकामा आत्मज्ञानकामाः सन्तो ब्रह्मणः स्वपितुः प्रजापतेरन्तिकं समीपं प्रयाताः । तस्मै ब्रह्मणे नमस्कृत्वोचुर्हे भगवन्वयं ह्यात्मकामास्त्वामुपसन्नाः स त्वमस्मद्गुरुर्नोऽस्मभ्यं ब्रूह्यात्मतत्त्वमिति शेषः । इत्यूचुरिति संबन्धः । अतो यत आत्मतत्त्वं न सहसा वक्तुमुचितमतश्चिरं ध्यात्वा विचार्यामन्यत तत्कालोचितं वक्तव्यं विजज्ञौ । किम् । अन्यतात्मानो वै तेऽसुराः प्रसिद्धा असुरा अन्यतात्मानोऽन्यतायामन्यत्वे भेदवति देहादावात्ममतय इत्यर्थः । अयतात्मान इति क्वचित्पाठः सुगमः । तथा च देहात्मवादं प्रकृत्य च्छान्दोग्ये श्रूयते—'असुराणां ह्येषोपनिषत्' इति । अतः परं श्रुतिवचनम् । यतो दृढं भेददृष्टयोऽसुरा अतोऽन्यतमं देवेभ्य उत्कादत्यन्तमन्यदेतेषामसुराणामात्मतत्त्वं प्रजापतिनोक्तमित्यर्थः । यद्यपि प्रजापतिना देवा-

---

१ ग. °स्ते किं प° । २ क. °भिर्जाय° । ३ क. शास्त्रेषु कु° ।

नामसुराणां च साधारणमेवाऽऽत्मतत्त्वमुक्तं तथाऽपि स्वचित्तदोषवशादसुरैरन्यथावगतमिदमेवाऽऽत्मतत्त्वमस्माकं प्रजापतिनोक्तमिति मन्यमानैरिति भावः । तदासुरमात्मतत्त्वमिमे प्रत्यक्षा इदानींतना अपि मूढा अविवेकिन उपजीवन्त्यादरेण गृहीत्वा तिष्ठन्ति । अभिष्वङ्गिणोऽत्यासक्तास्तत्पराः सन्त इत्यर्थः । ते किंलक्षणास्तर्याभिघातिनः । तीर्यतेऽनयेति तारिः संसारसागरातिक्रमणसाधनमात्मतत्त्वज्ञानं तस्यां साधनत्वेन भवतीति वेदशास्त्रं तर्यं तस्याभिहननशीला वेदमार्गविदूषका इत्यर्थः । अनृताभिशंसिनो ज्ञानादज्ञानाद्वाऽपि मृषावदनशीलाः । यतस्तेऽनृतमेव सत्यमिव पश्यन्ति सत्यमेव पश्यन्तीत्यर्थः ।

अनृतस्य सत्यत्वेन दर्शने दृष्टान्तमाह—

**इन्द्रजालवदित्यतो यद्वेदेष्वभिहितं तत्सत्यं**
**यद्वेदेषूक्तं तद्विद्वांस उपजीवन्ति ।**

**इन्द्रजालवदिति** । यत एवं वेदविरुद्धः संप्रदाय आसुर एवासत्यमूलश्चातो यद्वेदेष्वभिहितमुक्तं तत्सत्यं यथार्थं तदुपादेयमित्यर्थः । यद्वेदेषूक्तं तदेव विद्वांसः सम्यक्पण्डिता उपजीवन्त्यादरेण गृह्णन्ति न हेतुवादपटुभिरभिहितमित्यर्थः ।

अनयाऽऽख्यायिकयोपादेयमर्थमुपदिशति—

**तस्माद्ब्राह्मणो नावैदिकमधीयीतायमर्थः स्यादिति ॥ १० ॥**

**तस्मादिति** । ब्राह्मणग्रहणमुपलक्षणं त्रैवर्णिको न कदाऽप्यवैदिकं वेदविरुद्धं वेदार्थज्ञानानुपायरूपं च शास्त्रान्तरमधीयीतेत्यर्थः । तादृक्शास्त्रान्तराध्ययने दोषं सूचयति । अयमर्थः स्यात् । अयमासुरदृष्टयोपात्तोऽधःपातरूपोऽर्थः फलं स्यादिति भयादिति वाक्यशेषः ॥ १० ॥

यद्वेदेषूक्तं तत्सत्यमिति यदुक्तं तत्र वेद एव कथमिति जिज्ञासायां तस्य तत्त्वं वक्तुमुत्तरोऽनुवाकः प्रवर्तते—

**एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत्परं तेजस्तत्त्रेधाऽभिहितमग्नौ आदित्ये प्राण एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यदोमित्येतदक्षरम् ।**

**एतद्वाव० अपरिमितं तेज इति** । एतद्वावैतदेव तस्य वेदस्य स्वरूपं यन्नभसो ब्रह्माकाशस्य खे हृदयसुषिरेऽन्तर्भूतस्य मध्ये सिद्धस्य यत्परमलुप्यमानं तेजः सर्वावभासकं चैतन्यस्वरूपं तत्तेजस्त्रेधा प्राधान्यमाश्रित्याभिहितमुक्तं पूर्वमग्नावादित्ये प्राणे च विभाव्यमानमित्यर्थः । तथा च यदग्न्याद्यात्मना बाहिरवभासकं तेजस्तदेव खेऽन्तर्भूतस्य नभसः

१ क. °नादपि वा मृ° । २ क. °थार्थत्वादु° ।

परं तेजस्तदेवं च वेदस्य स्वरूपमित्युक्तं भवति । तदेवैवंलक्षणं तेजः प्रथममोंकारात्मकमासीदित्याह—**एतद्वावेति** । यदोमित्येतदक्षरं प्रसिद्धमस्ति तदेतद्वाव खेऽन्तर्भूतस्य नभसो रूपमभिव्यक्तं रूपान्तरमित्यर्थः ।

कुत एतदित्यत आह—

**अनेनैव तदुद्बुध्यत्युदयत्युच्छ्वस(सि)त्यजस्रं ब्रह्मधीयालम्बं वाऽत्रैव ।**

**अनेनेति** । एतत्तेजोऽनेनैवोमित्येवमात्मकेनाक्षरेण रूपेण तदुद्बुध्यत्युन्नतबुध्नं भवति बीजमिवोच्छूनमिति * वेदस्याऽऽद्यावस्थारूपं जायत इत्यर्थः । तत उदयत्युद्गच्छत्यङ्कुर इवान्तर्नादरूपप्रणवाकारं भवति । ततः क्रमेणोच्छ्वस(सि)त्युच्छ्वास इव दीर्घस्वरेणोच्चारणस्थानं प्राप्याक्षररूपमवतिष्ठत इत्यर्थः । एवमभिव्यक्तप्रणवाकारब्रह्मतेजोरूपो वेदोऽजस्रं नैरन्तर्येण ब्रह्मधीयालम्बं विश्लिष्टपाठश्छान्दसः । ब्रह्मबुद्धेरुपासनात्मिकाया आलम्बनमित्यर्थः । वाशब्दाद्ब्रह्मतत्त्वबुद्ध्यालम्बनं चेत्यर्थः । अधिकारिभेदाद्बुद्धिद्वयालम्बनत्वविकल्पार्थो वा वाशब्दः । अत्रैवास्यामेवावस्थायामेतत्तेजः प्रणवमात्राकारं सत्समीरणे कोष्ठगते प्राणे घोषवति सहकारिणि संपन्ने सतीति शेषः । प्रकाशं प्रक्षिपति त्यजतीति प्रकाशप्रक्षेपको जठरकुहरचार्यग्निस्तस्यौष्ण्यस्थाने भवं प्रकाशप्रक्षेपकौष्ण्यस्थानीयं तत्तेजोऽनुप्रसरतीत्युत्तरत्रान्वयः ।

अनुप्रसरणप्रकारं दृष्टान्तेन स्पष्टयति—

**एतत्समीरणे प्रकाशप्रक्षेपकौष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभसि प्रशाखयैवोत्क्रम्य स्कन्धात्स्कन्धमनुसरति ।**

**एतदिति** । एतदनुप्रसरणं धूमस्येव द्रष्टव्यम् । यथा धूमो नभसि समीरणे वायौ वाति सति प्रशाखयैव प्रकृष्टया शाखया शाखाकारया लेखयोत्क्रम्योर्ध्वदेशं गत्वा वृक्षस्य स्कन्धात्स्कन्धमनुसरति तत्तत्स्कन्धैरभिहन्यमानस्तत्तदाकारतामश्नुते तथैतद्ब्रह्मतेजो मूलाधारोपर्यग्निमण्डले तत्रस्थेनाग्निना संतप्तेऽभिव्यक्तं घोषवत्प्राणवायुनाऽग्नौ धम्यमाने तमेव वायुमग्निं चोपाधिमवष्टभ्य प्रथमं नादमात्रप्रणवात्मनाऽऽविर्भूय क्रमेण हृत्कण्ठताल्वादिस्थानैः प्रसरणावच्छेदैरभिहन्यमानं नानावर्णात्मनोद्भूय नानावेदशाखात्मकं भवतीति दार्ष्टान्तिकं योज्यम् ।

एवमेकरूपस्यापि चैतन्यज्योतिषोऽनेकरूपवेदात्मना प्रसरणे दृष्टान्तमुक्त्वा प्रसरणेनावस्थान्तरं गतस्यापि न स्वभावान्यत्वं स्वरूपविनाशो वेत्यत्र दृष्टान्तद्वयमाह—

* आचारक्विबन्तम् ।

१ क. °व वे° । २ क. तदेव वेदल° । ३ क. °दित्याह । ४ क. °द्बुध्यत्यु° । ५ क. °द्बुध्यत्यु° । ६ क. °जस्येवो° । ७ क. °नता वे° । ८ क. °त्रत्येना° । ९ ग. °पस्य चै° ।

**अप्सु प्रक्षेपको लवणस्येव घृतस्य चौष्ण्यमिव ।**

**अप्सु प्रक्षेपक इति** । प्रक्षेप एव प्रक्षेपको यथा लवणस्य पिण्डीभूतस्याप्सु प्रक्षेपो न लवणस्वभावहानिकरस्तदवस्थस्यापि लवणरसानपायाद्यथा वा घृतस्यौष्ण्यमुष्णसंस्पर्शो न घृतमन्यथयत्येवमिदमपीत्यर्थः । आभ्यां दृष्टान्ताभ्यामयमप्यर्थः सूचितः । यथा जलाग्न्युपाधिविगमे लवणघृतयोः पूर्वावस्थापत्तिः पिण्डाकारेण तथा ब्रह्मतेजसोऽपि कायाग्निप्राणमनआद्युपाध्यपगमे स्वरूपेण चिद्घनावस्थापत्तिरि[१]ति न वेदस्या[२]नित्यत्वमिति ।

इदानीं सुप्तप्रबोधवज्झटिति वेदात्मना चिदाविर्भावे दृष्टान्तमाह—

**अभिध्यातुर्विस्तृतिरि[३]वैतदित्यत्रोदाहरन्ति ।**

**अभिध्यातुर्विस्तृतिरिवैतदिति** । एतद्वेदरूपेण चैतन्यप्रसरणमभिध्यातुरभिध्यानकर्तुः संकल्पमात्रेण प्रासादादिकार्यनिर्मातुर्योगीश्वरस्य विस्तृतिर्विस्तार इव । अयमीश्वरचिद्विस्तारो वेद इत्यर्थः । अत्रास्मिन्नर्थ उदाहरन्ति पृच्छन्ति शिष्या इत्यर्थः ।

**अथ कस्मादुच्यते वैद्युतः ।**

किं तदाह—**अथ कस्मादिति** ।

उत्तरमाह—

**यस्मादुच्चारितमात्र एव सर्वं शरीरं विद्योतयति तस्माद्दोमित्यनेनैतदुपासीतापरिमितं तेजः ।**

**यस्मादिति** । यस्मादुच्चारितमात्र एवायं वेदः प्रणवात्मा सर्वं शरीरं जगदित्येतत् । विद्योतयति प्रकाशयति तस्माद्वैद्युत इति वेद उच्यत इति योजना । यस्माद्घृतपिण्डवद्घनीभूतवेदावस्था प्रणवात्मकमिदं ब्रह्माऽऽसीत्तस्मादोमित्यनेनैतदपरिमितं ब्रह्म तेज उपासीत प्रणवमालम्ब्य ब्रह्म ध्यायीतेत्यर्थः । एतदुक्तं भवति सर्ववेदार्थावलम्बननिबन्धना हि सर्वे कामाः पुरुषार्थभूताः प्रसिद्धास्ते सर्वे प्रणवालम्बनं ब्रह्म ध्यायतो भवन्ति प्रणवस्य सर्ववेदात्मकत्वाद्ब्रह्मणश्च सर्वार्थात्मकत्वात्सर्वपुरुषार्थरूपत्वाच्चेति । वेदोद्गमस्यानन्तरं निरूपणात्तदर्थप्रकाशकाः श्लोका मनः कायाग्निमाहन्तीत्यादय एवात्र यद्यपि निवेशयितुं युक्तास्तथाऽप्योमित्यनेनैतदुपासीतेति परस्य तेजस उपासनविधानादुपास्[४]यस्य तेजसो विशेषावस्थावस्थानं वक्तुं मध्ये पुरुष इत्यादयः श्लोका उपात्ताः । तेषां च चाक्षुषः स्वप्नचारी चेति परत्र वर्तिष्यमाणैः श्लोकैरेकवाक्यता बोद्धव्या । तथा च यथापाठक्रममिह व्याख्यानेऽप्यर्थक्रमेणैवार्थसंगतिर्द्रष्टव्या ।

**पुरुषश्चाक्षुषो योऽयं दक्षिणेऽक्षिण्यवस्थितः ।**
**इन्द्रोऽयमस्य जायेयं सव्ये चाक्षिण्यवस्थिता ॥**

१ क. °ति वे° । २ क. °स्यापि नि° । ३ क. °रिव त° । ४ क. °स्यते° ।

**पुरुषश्चाक्षुषो० द्विधा सतीति ।** योऽयं दक्षिणेऽक्षिण्यवस्थितश्चाक्षुषः पुरुषः प्रसिद्धो द्रष्टाऽयमिन्द्रः परमेश्वरः । या देवता सव्ये वामेऽक्षिण्यवस्थितेयमस्येन्द्रस्य जाया पत्नीति योजना । उक्तं च बृहदारण्यके—'इन्धो ह वै नाम योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेण' ( अ० ६ ) इति । 'अथ यद्वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नी विराट्' ( अ० ६ ) इति च । इयमनयोर्जाग्रदवस्थोक्ता ।

स्वप्नमाह—

**समागमस्तयोरेव हृदयान्तर्गते सुषौ ।**
**तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयोः ॥**

**समागम इति ।** हृदयान्तर्गते सुषौ छिद्रे नाडीजालसमावृते तयोरिन्द्रेन्द्राण्योः समागम एकस्थानेऽवस्थानं मिथुनीभाव इत्यर्थः । तयोरन्तर्हृदयाकाशे सुप्तयोस्तेजस्तेजनं जीवनमन्नमिति यावत् । तद्यल्लोहितस्य पिण्डः परिणामस्तदुभयोस्तयोरन्नमित्यर्थः । तथा च बृहदारण्यके—'तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिव' इति । यदन्नं पानं चोपयुज्यते प्राणिभिस्तदौदर्येणाग्निना पच्यमानं स्थूलमध्यमाणिष्ठभागतामापद्यते तत्र स्थूलो भागः पुरीषमूत्रादिरूपो बहिर्गच्छति मध्यमस्तु नाडीद्वारा सर्वं शरीरं रसलोहितमांसादिरूपेण परिणम्यानुप्रविशत्यणिष्ठस्तु मनआदीनुपचिनोति । तत्र यो मध्यमो रसभागः स लोहितपिण्ड इत्युच्यते तस्य शरीरस्थितिहेतुत्वात् । तयोस्तदन्नमिति तात्पर्यार्थः ।

इदानीं तयोः संचरणमार्गमाह—

**हृदयादायता[१] तावच्चक्षुष्यस्मिन्प्रतिष्ठिता ।**
**सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती ॥**

**हृदयादिति ।** या नाडी हृदयान्निर्गता तावदायता[२] दीर्घा यावच्चक्षुरतोऽस्मिंश्चक्षुषि प्रतिष्ठिता । सरतोऽस्यामिन्द्रेन्द्राण्याविति वा सारयत्येताविति वा सारणी नाम नाडी संचरणमार्गभूतैकाऽपि सती तयोर्द्वयोः सव्यदक्षिणाक्षिप्रापकत्वाद्द्विधोच्यत इत्यर्थः । 'अथैनयोरेषा सृतिः संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति' ( बृहदा० ) इति श्रुत्यन्तरम् ।

एवमनयोर्जाग्रत्स्वप्नावस्थातत्संचरणमार्गा उक्ता इदानीं सुप्ति[३]प्राप्तिक्रमेणावस्थात्रयातीतं तुरीयं पदमेकरसं तत्त्वमनयोर्वक्तव्यं तदिहार्थादुक्तमेवेति सिद्धवत्कृत्य प्रकृतं वेदाविर्भावविषयं श्लोकजातमुदाहरति—

---

१ ग. °यती ता° । २ ग. °यती दी° । ३ क. सुषुप्ति° ।

**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।**
**मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥**

**मनः० एवमाहुरिति ।** उद्बुद्धार्थवासनतयाऽऽत्मविवक्षानुगृहीतया बुद्ध्या नियुक्तं मनः कायाग्निं शरीरस्थितमूष्मरूपमग्निमाहन्ति प्रबोधयति । स कायाग्निर्मारुतं वायुं प्राणाख्यं प्रेरयति व्यापारयति घोषवन्तमापादयतीत्यर्थः । मारुतस्तूरसि चरन्संचरन्मन्द्रं स्वरं घोषं जनयति ।

**खजाग्नियोगाद्धृदि संप्रयुक्तमणोर्ह्यणुर्द्विरणुः कण्ठदेशे ।**
**जिह्वाग्रदेशे त्र्यणुकं च विद्धि विनिर्गतं मातृकमेवमाहुः ॥**

ततः खजाग्नियोगान्निर्मन्थनकाष्ठं खज इत्युच्यते खजस्थानीयेनाग्निना योगाद्धृदुरः-प्रदेशे संप्रयुक्तं सम्यगालोडितं तन्मारुतस्वरूपं मनोवृत्त्युपरक्तं प्रथममणोः सूक्ष्मात्केवलान्मारुताद्धि यस्मादणुरेव मन्द्रस्वरात्मको जातः सः । पुनः कण्ठदेशे प्राप्तं द्विरणुर्द्विगुणितं पुनर्जिह्वाग्रदेशे गतं त्र्यणुकं त्रिगुणितं विद्धि । एवं विनिर्गतं क्रमेणाभिव्यक्तं वर्णजातं मातृकं सर्वपदवाक्यानां योनिभूतमाहुरध्यात्मविद इत्यर्थः । हृदि संप्रयुक्तमणु ह्यणुर्द्विरणुरिति यदि पाठस्तदा हृदि संप्रयुक्तमणु ततो ह्यणोर्द्विरणुरित्यादि योज्यम् ।

इदानीं सर्वं शास्त्रार्थं विद्वत्प्रशंसामिषेणोपसंहरति—

**न पश्यन्मृत्युं पश्यति न रोगं नोत दुःखताम् ।**
**सर्वं हि पश्यन्पश्यति सर्वमाप्नोति सर्वशः ।**

**न पश्यन्०सर्वश इति ।** एतस्मिञ्शास्त्रे यत्तत्त्वं शब्दब्रह्मणः परस्य च ब्रह्मणोऽनेकविधमुपपादितं तद्यथोक्तविधिनोपायोपेयभावेन पश्यन्स्वानुभवमापादयन्यो भवति स मृत्युं संसारं पुनर्न पश्यति न रोगं पश्यति व्याधिं न पश्यतीत्यर्थः । उतापि दुःखतां दुःखमित्येतत् । आधिमपि न पश्यतीत्यर्थः । देहद्वयसंबन्धाभावान्नाऽऽधिव्याधिप्रसङ्गो जन्ममृत्युजरादिप्रसङ्गो वाऽस्य संभवेदित्यर्थः । हि यस्मात्पश्यञ्ज्ञानी सर्वं पश्यति सर्वमाधिव्याध्यास्पदं विषयत्वेनानुभवति न स्वधर्मत्वेनेत्यर्थः । यद्वा पश्यन्हि ज्ञानी सर्वं सर्वात्मकं ब्रह्म पश्यति । अतः सर्वशः सर्वात्मना सर्वं ब्रह्माऽऽप्नोति ब्रह्मैव भवतीत्यर्थः । तस्माद्यथोक्तविधिना परापरब्रह्मतत्त्वावधारणमेव परमपुरुषार्थसाधनं परमानन्दाद्वयं ब्रह्मैवाऽऽत्माभेदेनाऽऽविर्भूतं पुरुषार्थ इति सिद्धमित्युपसंहारार्थो योज्यः ।

यत्पुनरिन्द्रेन्द्राण्योः सुषुप्तं तुरीयं च पदं वक्तव्यं सिद्धवत्कृतमित्युक्तं तदिदानीं प्रपञ्चयन्ती वेद्यतत्त्वमुपसंहरति—

**चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः ।**
**भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥**

१ क. °रण्वित्या° । २ ग °त्त्वं शाब्द° । ३ क. °ध्यादि परावि° ।

**चाक्षुषः०** **महात्मन इतीति** । यः पूर्वं पुरुषश्चाक्षुष इत्यादौ दक्षिणसव्याक्ष्णोरिन्द्रेन्द्राणीरूपमिथुनात्मना जाग्रदवस्थाभोक्ताऽऽत्मा निर्दिष्टः स इह चाक्षुष उच्यते । स एव हृदयनाडीसुषिरेषु संचरन्वासनामयविषयद्रष्टा स्वप्नचारी भवति । उभयविधदर्शनवृत्त्युपरमे च सुप्तः सुषुप्तिं गतः स भवति । एवमेते त्रयस्तिसृणामवस्थानां भोक्तारो विश्वतैजसप्राज्ञसंज्ञका उक्ताः । यश्च सुप्तात्परः शुद्ध आत्मा स उक्तविश्वाद्यात्मत्रयापेक्षया तुरीय उच्यते । एवमुक्तप्रकारेणास्य चिदात्मनो भेदाश्चत्वारः प्रसिद्धास्तेभ्यस्तेषु मध्ये तेभ्यो वा विश्वादिभ्यो विश्वाद्यपेक्षया तुर्यं तुरीयं चतुर्थं पदं महत्तरमातिशयेन महदत्यन्तमपरिच्छिन्नमित्यर्थः ।

तुरीयस्य महत्तरत्वमुपपादयति—

**त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ।**

**त्रिष्विति** । त्रिषु जाग्रदादिषु स्थानेष्वेकपात्तुरीयाख्यं ब्रह्म चरेत्सर्वकल्पनाधिष्ठानत्वेनानुगतं वर्तत इत्यर्थः । त्रिपाद्ब्रह्म विश्वतैजसप्राज्ञाख्यमुत्तर उत्तरस्मिंस्तुरीये चरति तदाश्रितं सद्वर्तत इत्यर्थः । एतदुक्तं भवति । कार्यं कारणमिति जगतोऽवस्थाद्वयं प्रसिद्धम् । तत्र कार्यं स्थूलं सूक्ष्मं चेति द्विविधम् । तयोः स्थूलकार्योपाधिर्विश्वः सूक्ष्मकार्योपाधिस्तैजसः । एतयोः स्वस्वोपाधिपारतन्त्र्यात्तावन्मात्रपरिच्छिन्नाविति नैतौ महत्तरौ । कारणावस्थजगद्बीजोपाधिस्तु प्राज्ञः स कारणस्य स्वोपाधेः कार्यव्यापित्वादवस्थान्तरमपि व्याप्नुवन्पूर्वापेक्षया व्यापक इति महान्भवति । एतत्त्रितयं येनानवच्छिन्नप्रकाशात्मना साक्षिणा भास्यते यत्सत्तया च सदिति व्यवह्रियते तत्तुरीयं कार्यकारणोपाधिद्वयरहितं परिच्छेदकाभावादपरिच्छिन्नं महत्तरमिति ।

**तदुक्तम्**—"कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।

प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः" ॥ इति ।

तर्हि किं परिच्छिन्नापरिच्छिन्नरूपेणाऽऽत्मभेदोऽङ्गीकृतो नेत्याह—

**सत्यानृतोपभोगार्थो द्वैतीभावो महात्मन इति**
**द्वैतीभावो महात्मन इति ॥ ११ ॥**

**इति मैत्र्युपनिषदि सप्तमः प्रपाठकः ॥ ७ ॥**

**सत्येति** । सत्यमबाधितं चिदात्मरूपमनृतं पराग्रूपमवस्थात्रयतदभिमानिलक्षणं ताभ्यां परस्पराध्यस्ताभ्यामुपभोगो व्यवहारः सत्यानृतोपभोगः स एवार्थ*स्तस्मात्तन्निमित्तं महा-

---

* उपभोगार्था इति पाठानुरोधेनेदम् ।

---

१ क. तुर्येण सि° । २ ग. °गार्थाद्वै° ।

त्मनः पूर्णस्य ब्रह्मात्मनो द्वैतीभावो नानात्वं मायिकं न परमार्थमित्यर्थः । अभ्यास उपनिषत्समाप्त्यर्थः ॥ ११ ॥

नमस्तस्मै भगवते रामायाकुण्ठमेधसे ।
येनान्तर्हृदयस्थेन नुद्यमानो विचेष्टये ॥ १ ॥
विचारयाम्यहं नित्यं वेदतत्त्वार्थमादरात् ।
येषामनुग्रहात्तेभ्यो गुरुभ्योऽस्तु नमःशतम् ॥ २ ॥
मैत्रीशाखोपनिषदां दीपिकेयं महात्मनाम् ।
अन्तर्वस्त्ववभासाय भूयादार्केन्दुतारकम् ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥ ३२ ॥

संपूर्णेयं मैत्र्युपनिषत् ॥ २५ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# योगतत्त्वोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

योगतत्त्वं त्रयोविंशं द्विखण्डं ग्रन्थविस्तरे ।
योगसिद्धिफलं चात्र योगतत्त्वं निरूप्यते ॥ १ ॥

**ॐ योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।**
**तच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥**

ग्रन्थस्य तावत्फलमाह—**योगेति** ॥ १ ॥

मङ्गलार्थं योगसिद्ध्ये च परमदेवतां स्तौति—

**विष्णुर्नाम महायोगी महाकायो महातपाः ।**
**तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥ २ ॥**

**विष्णुरिति** । तत्त्वमार्गे परमार्थदृष्टिमार्गे । यथा दीपः प्रकाशकस्तथा विष्णुर्दृश्यत इत्यन्वयः । महायोगी "कृष्णो योगेश्वरः" इति स्मृतिः । महाकायो यद्देहे ब्रह्माण्डकोट्यो वसन्ति । महातपा महाज्ञानः " यस्य ज्ञानमयं तपः " इति श्रुतेः । पुरुषोत्तमः पुरुषेषु क्षराक्षरतदतीतेषु मध्य उत्तमश्चरमः पुरुषोत्तमः ।

तदुक्तम्—"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " ॥ इति ॥ २ ॥

योगप्रवृत्त्यङ्गं वैराग्यं तावदाह—

**यः स्तन्यं पूर्वं पीत्वाऽपि निष्पीड्य च पयोधरान् ।**
**यस्मिञ्जातो भगे पूर्वं तस्मिन्नेव भगे रमेत् ॥ ३ ॥**

**यः स्तन्यमिति** । योऽविवेकी । स्तनेषु भवं स्तन्यं दुग्धम् । शरीरावयवाद्यत् । पूर्वं बालदशायां पीत्वाऽपि पयोधरान्निष्पीड्य रमेत् । बाला हि धयन्तो मातुः पयोधरौ मर्दयन्ति पश्चाद्यश्च यस्मिन्नेवाऽऽत्मना पूर्वं भगे बाल्ये जातस्तस्मिन्नेव तज्जातीय एव भगे रमेद्यौवने । अत्रापि निष्पीड्य च पयोधरानिति संबध्यते । स कथं परं पश्येदिति शेषः । योषिदासक्तचित्तानां मातृगामिणां ज्ञानलेशोऽपि दुर्लभ इति भावः ॥ ३ ॥

सांसारिकधर्मव्यवहारोऽपि सिकतासेतुप्राय इत्याह—

**या माता सा पुनर्भार्या या भार्या जननी हि सा ।**
**यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता ॥ ४ ॥**

**येति** । जन्मान्तरेणेति भावः ॥ ४ ॥

**एवं संसारचक्रेण कूपचक्रघटा इव ।**
**भ्रमन्तो यानि जन्मानि श्रुत्वा लोकान्समश्नुते ॥ ५ ॥**

**एवमिति** । एवमुक्तेन प्रकारेण । संसारस्य जन्मनश्चक्रेणाऽऽवृत्तिलक्षणेन । कूपचक्रं यन्त्रमारघट्टाख्यं तस्य घटा घट्य इव । ते यथोपरिस्था अधो यान्त्यधस्थाश्चोपरि तद्वद्भ्रमन्तो जीवा यानि जन्मानि पूर्वोक्तानि तानि यान्तीति शेषः । तथा हि । जन्ममरणप्रबन्धध्यानं भवति । तच्च इत्थं विदुरित्यादिना लोकप्राप्तेरुक्तत्वात् ॥ ५ ॥

इदानीमेतत्संसारतरणोपायं प्रणवाक्षरोपासनमाह—

**त्रयो लोकास्त्रयो वेदास्त्रयः संध्यास्त्रयः सुराः ।**
**त्रयोऽग्नयो गुणास्त्रीणि स्थिताः सर्वे त्रयाक्षरे ॥ ६ ॥**

**त्रय इति** । अकारादीनां क्रमेण पृथिव्यन्तरिक्षं द्यौश्चेति त्रयो लोकाः । वेदा ऋग्यजुःसामानि । त्रयः संध्यास्तिस्रः संध्या इत्यर्थः । यद्वाऽत्र संधिभवाः कालाः । त्रयः सुरा ब्रह्मविष्णुरुद्रा ब्रह्मरुद्रविष्णवश्च । त्रयोऽग्नयो गार्हपत्यदक्षिणाग्न्याहवनीयाः । त्रीणि गुणास्त्रय इत्यर्थः । सत्त्वरजस्तमांसि । त्रयाक्षरे त्रयात्मकमक्षरमकारादि यत्र प्रणवे ॥ ६ ॥

**त्रयाणामक्षरे चान्ते योऽधीतेऽप्यर्धमक्षरम् ।**
**तेन सर्वमिदं प्राप्तं लब्धं तत्परमं पदम् ॥ ७ ॥**

**त्रयाणामिति** । त्रयाणामक्षराणां मध्येऽन्तेऽक्षरे मकारेऽधीते सति योऽर्धमक्षरमधीतेऽपि । अपिरल्पभावे । तेनाधिकारिणा सर्वमिदं प्राप्तं प्राप्तव्यमिह लोके । यच्च परमं पदं मोक्षाख्यं तदपि लब्धं प्राप्तम् ॥ ७ ॥

ननु परमपदं क वर्तते सर्वत्रास्ति चेत्कथं नोपलभ्यते सदाकारेणोपलभ्यत एवानुस्यूतम् । को दृष्टान्तः । उच्यते—

**पुष्पमध्ये यथा गन्धः पयोमध्येऽस्ति सर्पिवत् ।**
**तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम् ॥ ८ ॥**

**पुष्पेति** । सर्पिवत् । छान्दसो वर्णलोपः । यथैते दृष्टान्तास्तथा तदनुस्यूतमस्तीत्यर्थः ॥ ८ ॥

इदानीं हृत्पद्मं ध्यानस्थानमादर्शयति—

हृदि स्थाने स्थितं पद्मं तच्च पद्ममधोमुखम् ।
ऊर्ध्वनालमधोबिन्दु तस्य मध्ये स्थितं मनः ॥ ९ ॥

इति प्रथमः खण्डः ॥ १ ॥

**हृदीति** । पद्मं स्थितं च वर्तते तच्च पद्ममधोमुखं वर्तते । अधोबिन्दु । अधोमुखा बिन्दवो यस्य । तदुक्तम्—संतते शीकराभिश्चेति । तस्य मध्ये मनः स्थितं पक्षिवत्कुलाये ॥ ९ ॥

इति प्रथमः खण्डः ॥ १ ॥

---

उद्घाटनोपायमाह—

अकारे शोचितं पद्ममुकारेणैव भिद्यते ।
मकारे लभते नादमर्धमात्रा तु निश्चला ॥ १ ॥

**अकार इति** । अकार उच्चारिते सति शोचितं तद्द्रवीभूतं चलनोचितं जातमुकारेणोच्चारितेनैव भिद्यते विकसति । मकार उच्चारिते सति नादं खमव्यक्तशब्दं लभते तद्ग्रहणोचितं भवति । छान्दसत्वाद्विभक्तिप्रक्रमभङ्गो न दोषः । अर्धमात्रा तु निश्चलाऽर्धमात्रायामुच्चारितायां निश्चली भवतीत्यर्थः ॥ १ ॥

ध्येयस्वरूपमाह—

शुद्धस्फटिकसंकाशं किंचित्सूर्यमरीचिवत् ।
लभते योगयुक्तात्मा पुरुषोत्तमतत्परः ॥ २ ॥

**शुद्धेति** । योगयुक्तात्मा योगेनाष्टाङ्गेन युक्तो नियन्त्रित आत्मा मनो यस्य । पुरुषोत्तमो वासुदेवस्तत्र तत्परस्तत्परायणः । किंचित्सूर्यमरीचिवदुज्ज्वलं निर्मलं ध्येयं स्वरूपं लभत इत्यन्वयः । सगुणध्यानान्निर्गुणरूपं भातीति भावः ॥ २ ॥

इदानीं प्रत्याहारधारणे आह—

कूर्मवत्पाणिपादाभ्यां शिरस्यात्मनि धारयेत् ।
एवं सर्वेषु द्वारेषु वायुं पूरत पूरत ॥ ३ ॥
निषिद्धे तु नवद्वार उच्छ्वसन्निःश्वसंस्तथा ।
घटमध्ये यथा दीपं निर्वाणं कुम्भकं विदुः ॥ ४ ॥

**कूर्मवदिति** । पाणिपादव्यापाराभ्यां सह सर्वेन्द्रियवृत्तीः शिरसि सहस्रदले स्थित आत्मनि मनसि धारयेत् । एवं सेन्द्रिये मनसि शिरसि नीते सति सर्वेषु द्वारेषु नवसु वायुं पूरयतो योगिनो यूयं पूरयतेति प्रेरणा । ततो वायुपूर्णे देहे सति नवद्वाररोधः

---

१ क. ख. ग. ङ. °बिन्दुं त° ।

कर्तव्यः। नवद्वारे निरुद्धे सत्यन्तरेव श्वसन्निःश्वसंस्तिष्ठेत्। इमं कुम्भकं निर्वाणं मोक्षदं विदुः। घटनिक्षिप्तदीपोपमोऽयं केवलकुम्भकः।

तदुक्तम्—"रेचकं पूरकं मुक्त्वा सुखं यद्वायुधारणम्।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः" ॥

तदुक्तम्—"केवले कुम्भके सिद्धे रेचपूरकवर्जिते।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते" ॥ इति।

अयमष्टविधकुम्भकानामन्त्यो मुख्यः।

तदुक्तम्—"सूर्यभेदनमुज्जायी शीत्कारी शीतली तथा।
भस्त्रिका भ्रमरी मूर्छा केवलाश्चाष्ट कुम्भकाः" ॥ इति।

गोरक्षः—"द्वाराणां नवकं निरुध्य मरुतं पीत्वा दृढं धारितं
नीत्वाऽऽकाशमपानवह्निसहितं शक्त्या समुच्चालितम्।
आत्मध्यानयुतस्त्वनेन विधिना मूर्ध्नि ध्रुवं विन्यसे-
द्यावत्तिष्ठति तावदेव मरुतां संघेन संस्तूयते" ॥ इति।

यद्वा कूर्मवदित्युत्तानकूर्मासनेन शिरस्यारोपिताभ्यां पाणिपादाभ्यामात्मनि मनसि धारयेद्धारणां कुर्यात्। एवं कृत्वा पवनाभ्यासे कृते निर्वाणकुम्भकसिद्धिरित्यर्थः। उत्तानकूर्मासनं यथा—

"पद्मासनं तु संस्थाप्य जानूर्वोरन्तरे करौ।
निवेश्य भूमौ संस्थाप्य व्योमस्थः कुक्कुटासनम् ॥
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कंधराम्।
शेते कूर्मवदुत्तानमेतदुत्तानकूर्मकम्" ॥ इति ॥ ३ ॥ ४ ॥

इदानीं ब्रह्मरन्ध्रेण गमनोपायमाह—

**पद्मपत्रमिव च्छिन्नमूर्ध्ववायुविमोक्षणे।**
**भ्रुवोर्मध्ये[1] ललाटस्थं तज्ज्ञेयं ब्रह्म निरञ्जनम् ॥ ५ ॥**

**पद्मेति**। ऊर्ध्ववायुविमोक्षणे सति पद्मपत्रमिव तनीयो ब्रह्मरन्ध्रार्गलं छिन्नं भवति तत्तास्मिन्भ्रुवोर्मध्ये कूर्चस्थाने निरञ्जनं शुद्धं ब्रह्म ज्ञेयं ध्येयं च। वायूर्ध्वगमनप्रकारस्त्वमृतबिन्दावुक्तः। भ्रूमध्ये देवस्य ध्यानमुक्तं गोरक्षेण—

"आकाशं यत्परं स्थानं यत्राऽऽज्ञाचक्रमुच्यते।
तत्राऽऽत्मानं शिवं ध्यात्वा योगी मुक्तिमवाप्नुयात्" इति ॥ ५ ॥

---

१ ख ग. °वोर्ललाटमध्यस्थं।

योगसाधनस्थानं किमित्यत आह—

**निषिद्धे तु न निर्वाते निर्जने निरुपद्रवे ।**
**निश्चितं चाऽऽत्मभूतानामरिष्टं योगसेवयाऽरिष्टं योगसेवयेति ॥ ६ ॥**

**इति द्वितीयः खण्डः ॥ २ ॥**

**इत्यथर्ववेदान्तर्गता योगतत्त्वोपनिषत्समाप्ता ॥ २६ ॥**

**निषिद्धे त्विति** । निषिद्धे तु स्थले न कर्तव्यम् । क्व तर्हि । निर्वातदेश उपविश्य । आत्मभूतानां सर्वात्मभावमापन्नानाम् । निश्चितं निर्धारितम् । योगसेवया योगाभ्यासेन । न रिष्टं हतमरिष्टं वस्तु ज्ञेयमित्यन्वयः । द्विरुक्तिः समाप्त्यर्था । निषिद्धस्थानानि तु स्कान्दे—

“ न तोयवह्निसामीप्ये न जीर्णारण्यगोष्ठयोः ।
न दंशमशकाकीर्णे न चैत्ये न च चत्वरे ॥
केशभस्मतुषाङ्गारकीकसादिप्रदूषिते ।
नाभ्यसेत्पूतिगन्धादौ न स्थाने जनसंकुले ” ॥ इति ।

विहितानि च तत्रैव— ष्टं च

“ सर्वबाधाविर[illegible] यसुखावहे ।
मनःप्रसादजननं प्रा[illegible]मोदिते ॥
नातितृप्तः क्षुधाबद्ध[illegible] विण्मूत्रादिबाधितः ।
नाध्वखिन्नो न [illegible]र्तो योगं युञ्जीत योगवित् ” ॥ इति ।

अपि च—“ सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे ।
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना ” ॥ इत्याद्युक्तानि ॥ ६ ॥

इति द्वितीयः खण्डः ॥ २ ॥

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां योगतत्त्वस्य दीपिका ॥ १ ॥

इति श्रीनारायणविरचिता योगतत्त्वोपनिषद्दीपिका समाप्ता ॥ ३३ ॥

---

ॐ तत्सद्ब्रह्मणे नमः ।

# योगशिखोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

योगमूर्धप्रतिष्ठेयमुक्ता योगशिखा ततः ।
त्रिखण्डा ग्रन्थसंदोहे द्वाविंशतितमा मता ॥ १ ॥
यद्वा वह्निशिखाध्यानयोगाद्योगशिखा मता ।
साङ्गोपाङ्गो योग उक्तस्तथा तत्साधनानि च ॥ २ ॥

संप्रति देहान्ते योगिनो गमनप्रकारो वक्तव्य एतदर्थं योगशिखाऽऽरभ्यते—

**ॐ योगशिखां प्रवक्ष्यामि सर्वज्ञानेषु चोत्तमाम् ।**
**यदा तु ध्यायते मन्त्रं गात्रकम्पोऽभिजायते ॥ १ ॥**
**आसनं पद्मकं बद्ध्वा यच्चान्यद्वाऽपि रोचते ।**
**कुर्यान्नासाग्रदृष्टिं च हस्तौ पादौ च संयतौ[1] ॥ २ ॥**
**मनः सर्वत्र संयम्य ओंकारं तत्र चिन्तयेत् ।**
**ध्यायेत सततं प्राज्ञो हृत्कृत्वा परमेष्ठिनम् ॥ ३ ॥**
**एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ।**
**ईदृशे तु शरीरे वा मतिमानुपलक्षयेत् ॥ ४ ॥**

ॐ **योगशिखामिति** । मन्त्रं प्रणवम् । गात्रकम्पः श्रद्धातिशयसूचकः । यद्वा कम्पो भवति मध्यम इतिवचनाद्यदा मध्यमः प्राणविजयो भवति तदाऽऽसनं बद्ध्वा । अन्यत्सिद्धादि । संयतौ कुर्यान्महाबन्धाभ्यासेन । सर्वत्र वर्तमानं सदिति शेषः । हृद्धृदि । परमेष्ठिनं कमलासनम् “ परमेष्ठी पितामहः ” इति **कोशात्** । एकमूर्तित्वाद्धरिहरवत्परमेष्ठिध्यानमपि मुक्तिहेतुः । अग्निर्वा परमेष्ठी । एकस्तम्भः एकः स्तम्भः सुषुम्नाश्रयो मुण्डाधारदण्डः क्रोडाख्यो यस्य तत्तस्मिन् । इडापिङ्गलासुषुम्नास्तिस्रः स्थूणा यस्मिंस्तस्मिंस्त्रिस्थूणे त्रिगुणात्मके वा । पञ्च चेन्द्रियाधिष्ठात्र्यो देवता एव दैवतानि प्राणादयो वा यत्र तस्मिन्पञ्चदैवते । **शरीरे** वेति । हृदपेक्षो विकल्पः ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥

---

१ क. ङ. संयुतौ ।

हृदि ध्यानप्रकारमाह—

**आदित्यमण्डलं दिव्यं रश्मिज्वालासमाकुलम् ।**

**आदित्येति ।** दिव्यमादित्यमण्डलम् । रश्मीनां किरणानां ज्वालाभिः समाकुलम् । अनेन चन्द्रोऽप्युक्तो द्रष्टव्यः । तस्मिन्सूर्येन्दुपावकानित्युक्तत्वात् ।

वह्निमेव ध्येयतया निर्दिशति—

**तस्य मध्ये गतो वह्निः प्रज्वलेद्दीपवर्तिवत् ॥ ५ ॥**

**इति प्रथमः खण्डः ॥ १ ॥**

---

**तस्येति ।** तस्याऽऽदित्यस्य मध्ये गतः प्रविष्टो वह्निर्दीपवर्तिवत्प्रज्वलेत्प्रज्वलति॥५॥

इति प्रथमः खण्डः ॥ १ ॥

---

**दीपशिखायां या मात्रा सा मात्रा परमेष्ठिनः ॥ १ ॥**

मात्रा परिमाणम् । सा परमेष्ठिनो ब्रह्मणो वह्नेर्वा देहाधिष्ठातुर्मात्रा । इदं वह्नेर्ध्यानं याज्ञवल्क्येनोक्तम्—

तद्यथा—" हृत्सरोरुहमध्येऽस्मिन्प्रकृत्यात्मककर्णिके ।
अष्टैश्वर्यदलोपते विकारकेसरैर्युते ॥
ज्ञाननाले बृहत्कन्दे प्राणायामप्रबोधिते ।
विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखम् ॥
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ।
तापयन्तं स्वकं देहमापादतलमस्तकम् ॥
निर्वाते दीपवत्तस्मिन्दीपितं हव्यवाहनम् ।
दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ॥
नीलतोयदमध्यस्थविद्युल्लेखेव भासते ।
नीवारशूकवद्रूपं पीताभं सर्वकारणम् ॥
ज्ञात्वा वैश्वानरं देवं सोऽहमात्मेति या मतिः ।
सगुणेषूत्तमेष्वे (मं ह्ये) तद्ध्यानं योगविदो विदुः ॥
वैश्वानरत्वं संप्राप्य मुक्तिं तेनैव गच्छति " ॥ इति ॥ १ ॥

इदानीमेतद्ध्यानविशुद्धात्मनः सुषुम्नापश्चिममार्गेण षट्चक्रभेदनद्वारोर्ध्वां गतिमाह—

**भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः ॥ २ ॥**

**भिन्दन्तीति ।** सूर्यं सहस्रदलस्थमधिदैवतमादित्यं च भिन्दन्ति योगाभ्यासेनोपायेन ॥ २ ॥

---

१ क. °र्वातदी° ।

भेदन उपायमाह—

द्वितीयं सुषुम्नाद्वारं परिशुद्धं विसर्पति ।
कपालसंपुटं भित्त्वा ततः पश्यन्ति तत्परम् ॥ ३ ॥

इति द्वितीयः खण्डः ॥ २ ॥

---

**द्वितीयमिति** । सुषुम्नाया द्वितीयं पश्चिमं परिशुद्धं निर्गुणं विसर्पति प्रविशति मनः । प्रवेशोपायोऽमृतबिन्दावुक्तः । द्वितीयमितिवचनात्सुषुम्नाया द्वौ मार्गाविति लक्ष्यते पूर्वमार्गः पश्चिममार्गश्च । तत्र पूर्वमार्गः प्रवृत्तिविषयः पश्चिमो निवृत्तिविषयोऽत एव परिशुद्धः । उक्तं च स्वात्मारामेण—'पूरयेन्मारुतं दिव्यं सुषुम्नापश्चिमे मुखे' इति । पश्चिममुखस्य योगिमार्गत्वात्पूर्वमुखं कर्ममार्गः । कपालसंपुटं भित्त्वा विदार्याध्यात्मं शिरोऽस्थ्यधिदैवतं ब्रह्माण्डोदरशकलम् । ततस्तदनन्तरं परं पश्यन्ति साक्षात्कुर्वन्ति । तदुक्तं खेचर्याम्—

"मनसा सह वागीश्या भित्त्वा ब्रह्मार्गलं क्षणात् ।
परामृतमहाम्भोधौ विश्रान्तिं तत्र कारयेत्" ॥ इति ॥ २ ॥

इति द्वितीयः खण्डः ॥ २ ॥

---

उक्तयोगासमर्थं प्रति सुगमोपायमाह—

**अथ न ध्याययेज्जन्तुरालस्याच्च प्रमादतः ।**
**यदि त्रिकालमावर्तेत्स गच्छेत्परमं पदम् ॥ १ ॥**

**अथेति** । अथशब्दः पक्षान्तरे । न ध्याययेद्ध्यानं ध्यायो ध्यायं कुर्याद्ध्याययेत् । जन्तुर्देही । आलस्यादलसत्वात्प्रमादतो वा यदि ध्यानं न कुर्यात्तर्हि यद्येतद्ग्रन्थरूपं त्रिकालं त्रिसंध्यमावर्तेदावर्तयेत्पठेत्स परमं पदं गच्छेत् ॥ १ ॥

**पुण्यमेतत्समासाद्य[1] संक्षेपात्कथितं मया ।**
**लब्धयोगेन बोद्धव्यं प्रसन्नं परमेष्ठिनम् ॥ २ ॥**

**कथितं मयेति** । आचार्यो जातसाक्षात्कारः शिष्यान्प्रति वदति । एतत्पुण्यं पवित्रं योगतत्त्वं मया संक्षेपादविस्तरेण कथितं भवद्भिर्बोद्धव्यम् । कथंभूतेन मया प्रसन्नं परमेष्ठिनं ब्रह्माणं समासाद्य प्राप्य लब्धयोगेन ब्रह्मणः सकाशान्मया योगो लब्ध इत्यृषेर्वाक्यम् ॥ २ ॥

अस्य योगस्य दुष्प्रापतां श्रद्धाजननायाऽऽह—

---

१ क. °द्य समासात्क° ।

**जन्मान्तरसहस्रेषु यदा नाश्नाति किल्बिषम् ।**
**तदा पश्यन्ति योगेन संसारच्छेदनं परं**
**संसारच्छेदनं परमिति ॥ ३ ॥**

**इति तृतीयः खण्डः ॥ ३ ॥**

**इत्यथर्ववेदान्तर्गता योगशिखोपनिषत्समाप्ता ॥ २७ ॥**

**जन्मेति ।** जन्मान्तरसहस्रेषु तपांसि चरतः पुंसो यदा किल्बिषं नाश्नाति न भक्षयति न ग्रसति तदा योगेन परं संसारच्छेदनं ब्रह्म पश्यन्ति ।

तदुक्तम्—" बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः " ॥ इति ।

द्विरुक्तिः समाप्त्यर्थेतिशब्दश्च ॥ ३ ॥

इति तृतीयः खण्डः ॥ ३ ॥

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका योगशैखिके ॥ १ ॥

इति श्रीनारायणविरचिताऽथर्वशिखोपनिषद्दीपिका समाप्ता ॥ ३४ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# श्रीरामपूर्वतापनीयोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

श्रीरामतापनीयेऽस्मिन्पञ्चत्रिंशत्तमे ततौ (?) ।
आथर्वणे तथा खण्डा दश पूर्वाभिधे मताः ॥ १ ॥
"यस्याम्भासि शयानस्य योगनिद्रां वितन्वतः ।
नाभिहृदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥
एतन्नानावताराणां निधानं बीजमव्ययम् " ॥

इतिस्मृतेर्नारायणकथनानन्तरं तदवतारकथनावसरे प्राप्ते मुख्यत्वाद्रामावतारमादौ निरूपयति । महानारायणस्यैव कार्यार्थमवतीर्णस्य रामाभिधस्य चारितवर्णनार्थमारभ्यते–

**ॐ चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ ।**
**रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ १ ॥**

ॐ **चिन्मयेऽस्मिन्निति** । आदावोंकारोऽर्थाप्रच्युतये । श्रीरामस्वरूपं तु नारसिंहे निर्णीतं पूर्णावतार इति । दशरथेऽधिकरणे रघोर्दिलीपात्मजस्य सूर्यवंशस्य कुले चिन्मये ज्ञानस्वरूपे महाविष्णौ क्षराक्षरातीते पुरुषोत्तमे ।

तदुक्तं **योगतत्त्वे**—" विष्णुर्नाम महायोगी महाकायो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः " ॥ इति ।

नानावतारमूलकारणे हरौ जाते सत्यस्य हरे रामाख्या रामाभिधा स्यात्प्रवृत्तेति पञ्चमेनान्वयः । तस्यापत्यमित्यन्तरङ्गसंबन्धं हित्वा तत्र जात इति बहिरङ्गसंबन्धविवक्षा दाशरथशब्दसूचनार्था । तदपि— " दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात् " इति गायत्रीसूचनार्थम् । प्रथमं गायत्रीसूचनं प्रथमतः संध्योपासनसूचनार्थम् ।

---

१ च. °कथान° । २ ख. महीस्थितिः । ३ ङ. °च्युतये ।

तद्यथा—"सायं प्रातश्च मध्याह्ने रामसंध्यां समाचरेत् ।
आदायाञ्जलिना सम्यग्जपेन्मालामनुं सकृत् ॥
जलं दक्षिणहस्तस्थं सव्यहस्ते विनिक्षिपेत् ।
तन्निसृताम्बुना मूर्ध्नि सिञ्चेन्मालामनुं स्मरन् ॥
दशाक्षरेण तच्छेषमभिमन्त्र्य जलं पिबेत् ।
पुनरञ्जलिनाऽऽदाय जलमूर्ध्वं त्रिरुत्क्षिपेत् ॥
मण्डलस्थाय रामाय नमोर्ध्वं कल्पयाम्यहम् ।
ततो रामोऽहमस्मीति गायत्रीं नियतो जपेत् ॥
जन्मप्रभृति यत्पापं दशभिर्याति संचितम् ।
पुरश्चरणमस्याश्च चतुर्लक्षजपावधि ॥
ओमादिर्मुक्तिदा प्रोक्ता ह्रीमादिर्वाक्पदा स्मृता ।
श्रीमादिः श्रीपदा ज्ञेया क्लीमादिर्हि वशंकरी ।
अनयाऽऽराधितो रामः सर्वाभीष्टं प्रयच्छति" ॥

ततोऽष्टाविंशतिस्तर्पणम् । इति रामसंध्या । अपत्यापत्यवत्संबन्धविवक्षायां तु दाशरथिरिति स्यात् । जातसंबन्धे तु दाशरथ इति । तथा च प्रयोगः—'प्रदीयतां दाशरथाय मैथिली' इति । दशरथे जात इति विग्रहे हि तत्र जात इत्यौत्सर्गिकः स्यात् । किंच बहिरङ्गसंबन्धोक्त्या ब्रह्मणो वास्तवसंबन्धाभावोऽपि सूचितस्तेन यथा नृसिंहस्य स्तम्भाज्जन्म मत्स्यस्य मनोरञ्जलितो वैराहस्य ब्रह्मणो नासिकातस्तथा रामस्यापि दशरथे लीलया जन्म न तु कर्मवासनादिप्रयुक्तमपत्यापत्यवत्संबन्धनिबन्धनामिति । दशाक्षरमन्त्रमालामन्त्रौ वक्ष्येते । रामाख्यानिर्वचनमखिलं रातीत्यादि ॥ १ ॥

स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ॥
राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥
रामनाम भुवि ख्यातमभिरामेण वा पुनः ।
राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम् ।
धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः ॥ ४ ॥
यथा ध्यानेन वैराग्यमैश्वर्यं स्वस्य पूजनात् ।
तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥

---

१ ङ. वाराहस्य । २ क. यस्य । ३ क. घ. रामस्य ।

स हारिर्विद्वद्भिर्लोकेषु राम इति प्रकटीकृतः । महीस्थितो भूमौ नित्यं वसन्राति ददाति साधुभ्योऽखिलं वाञ्छितं राजते शोभते चेत्यन्वर्थताश्रयणेन राम इति लोकेषु विद्वद्भिः स्मृतः । रातेः प्रकृतिमात्रशेषः । महीस्थितशब्दस्याऽऽद्याक्षरशेषः । राक्षसमरणशब्दयोर्वाऽऽद्याक्षरशेष इति व्युत्पत्त्यन्तरमाह—**राक्षसा इति** । रामो राक्षसमर्दन इति [1]प्रसिद्धेः । आद्याक्षरशेषः । अथवा डित्थादिशब्दवद्यदृच्छाशब्द एवायं न क्रियाशब्दः । गुणातिशयात्तु प्रसिद्धिं गत इत्याह—स्वोद्रेकतोऽथवा रामनाम भुवि ख्यातं निमित्तनिरपेक्षमेव यादृच्छिकपृथुहरिश्चन्द्रालर्कादिनामवत्स्वोत्कर्षादेव विख्यातम् । निमित्तान्तरमभिरामेण वेति । रामनाम भुवि ख्यातमित्यनुवर्तते । रमयतीति रामः । ज्वलितिकसन्तेभ्यो णः । विग्रहान्तरं राक्षसानिति । राक्षसान्मर्त्यरूपेण प्रभाहीनान्कृत्वा रामनाम भुवि ख्यातमित्यन्वयः । राक्षसमर्त्यशब्दयोराद्याक्षरशेषः । मनसिजं चन्द्रम् 'चन्द्रमा मनसो जातः' इति **मन्त्रवर्णात्** । यथा राहुः प्रभाहीनं करोति तथा राक्षसान्प्रभाहीनान्करोति स राम इत्यर्थः । अराज्यार्हान्राक्षसान्प्रभाहीनान्कृत्वा राज्यार्हान्साधूंश्च तद्धीप्रभायुक्तान्करोति तेनास्य रामाख्येत्याह—**राज्यार्हाणामिति** । यश्चरित्रेण श्रुतेन धर्ममार्गं राति नामत उच्चारिताज्ज्ञानमार्गं राति यो ध्यानेन वैराग्यं राति स्वस्य पूजनान्नमस्कारस्तुत्यादिकादैश्वर्यं राति ददाति राज्यार्हाणां महीभृतां संबन्धसामान्ये षष्ठी । तथेत्यङ्गीकृत्यैतच्चतुष्टयं रात्ययमतोऽस्य रामाख्या भुवि स्यात् । अथ तत्त्वतो वस्तुतः । अर्थ उच्यत इति शेषः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

**रमन्ते योगिनो[2]ऽनन्ते नित्यानन्दे चिदात्मनि ।**
**इति रामपदेनासौ [3]परं ब्रह्माभिधीयते ॥ ६ ॥**

**रमन्त इति** । रमन्ते योगिनोऽत्रेत्यधिकरणे घञ् । एवं तात्पर्यवृत्त्या वाङ्मयसारत्वाद्रामपदं व्युत्पादितम् । तस्य सारत्वं **महादेवेन** प्रकाशितम् । तद्यथा—शतकोटिप्रविस्तरे रामायण ईश्वरेण त्रिषु लोकेषु विभज्य दत्ते सत्यक्षरद्वयमवशिष्टं तत्स्वहृदि स्थापितं तत्किं राम इति । अयमकारत्याग एकाक्षरो मन्त्रः साकारो द्व्यक्षरस्तयोर्ऋष्यादिकं गायत्रं रामः [4]षड्दीर्घभाजाद्यवराजेन षडङ्गानि ।

ध्यानम्—" शरयूतीरमन्दारवेदिकापङ्कजासने ।
श्यामं वीरासनासीनं ज्ञानमुद्रोपशोभितम् ॥
वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसेवितम् ।
अवेक्ष्यमाणमात्मानमात्मन्यमिततेजसम् ॥
शुद्धस्फटिकसंकाशं केवलं मोक्षकाङ्क्षया ।
चिन्तयन्परमात्मानं भानुलक्षं जपेन्मनुम् ॥

१ घ. ङ. प्रसिद्धः । २ क. °नो यत्र नि° । ३ ग. च. परत्र° । ४ ङ. षड्वीर्यभा° ।

तारमायारमानङ्गवाक्स्वबीजैस्तु षड्विधः ।
द्व्यक्षरैस्त्र्यक्षरश्चन्द्रभद्रान्तश्चतुरक्षरः ॥
द्विधा मुन्यादिकं त्वेषां पूर्ववत्सपुरश्चरम् ।

अनन्ते देशकालकृतपरिच्छेदशून्ये नित्ये नियतेऽवयवविकारशून्ये चाऽऽनन्दे च सुखैकरूपे चिदात्मनि चिद्घने मूर्तब्रह्मणि योगिनो निरुद्धेन्द्रियग्रामा रमन्ते ध्यानेन तृप्यन्तीति हेतो रामपदेनासावेव दशरथात्मजो मुख्यं ब्रह्माभिधीयते । ननु मूर्तस्य कथमानन्त्यादि नन्वमूर्तस्यापि कथमानन्त्यादि वचनादिति चेत्समः समाधिरपरिदृष्टार्थ-स्वीकारस्तूभयत्रापि समः । तस्मात् " द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च " इतिश्रुते-रसंकोच एव न्याय्यस्तेन वचनानि त्वपूर्वत्वादितिन्यायात् । अलौकिकार्थबोधनं श्रुतेरलंकार एव ॥ ६ ॥

रामशब्दार्थं निरूप्य ब्रह्मणः कथं शरीरित्वमित्याशङ्क्योत्तरमाह—

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।**
**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥**

**चिन्मयस्येति** । जाड्यद्वैताविद्यातत्कार्याभावः क्रमेण विशेषणचतुष्टयस्यार्थः । चिन्मयस्य ब्रह्मणो रूपकल्पना मायिकं रूपमित्यर्थः । स्वरूपानतिरिक्तया मायाशक्त्या नटस्येवैकस्यापि विरुद्धनानाधर्माविरोध इति भावः । माया ह्यादिपुरुषस्य मनस्तेन संक-ल्पितं मायिकम् ॥ ७ ॥

तदायुधादिकमपि कल्पितमेवेत्याह—

**रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पना[2] ।**
**द्वि चत्वारि षडष्टाऽऽसां दश द्वादश षोडश ॥ ८ ॥**
**अष्टादशामी कथिता हस्ताः शङ्खादिभिर्युताः ।**
**सहस्रान्तास्तथा तासां वर्णवाहनकल्पना ॥ ९ ॥**

**रूपस्थानामिति** । रूपे तिष्ठन्ति रूपस्थास्तासां देवतानाम् । पुंस्त्वकल्पना यथा रामः पुमान् । स्त्रीत्वकल्पना यथा सीता स्त्री "त्वं कुमार उत वा कुमारी" इति **मन्त्र-वर्णः** । अङ्गकल्पना यथा त्रिनयनचतुर्भुजत्वादि रुद्रविष्ण्वादीनाम् । अस्त्रकल्पना यथा शार्ङ्गं धनुर्नन्दकः खड्गः । यद्वा षडङ्गान्यारभ्य[3] वज्राद्यस्त्रपर्यन्तानामावरणानां कल्पना । आदिशब्दाद्भूषणादिकल्पना । उक्तमर्थमुदाहरति—**द्वि चत्वारीति** । आसां देवतानां द्वि द्वौ हस्तौ कथिताविति[4] विपरिणामोऽविभक्तिकश्च निर्देशः । तथा चत्वारि चत्वारो हस्ताः कथिता यथा हरेः । लिङ्गव्यत्ययः । तथाऽऽसां षड्भुजाः कथिताः । यथा मूर्ति-

---

१ घ. ङ. °र अक्ष° । २ क. पुंस्त्रीलिङ्गादि° । ३ घ. ङ. °ङ्गाद्यार° । ४ घ. ङ. °ति प° ।

भेदानामम्बिकाया अष्ट हस्ताः पुरुषोत्तमस्य दश शंकरस्य द्वादश षोडशाष्टादश चण्डिकामूर्तिभेदानाम् । शङ्खादिभिरायुधैः । सहस्रं हस्ता विश्वरूपस्य । वर्णाः श्यामश्वेतादयो वाहनानि पक्षीन्द्रवृषेन्द्रादीनि तेषां कल्पना न तु वस्तुवृत्तिः ॥ ८ ॥ ९ ॥

**शक्तिसेनाकल्पना च ब्रह्मण्येवं हि पञ्चधा ।**
**कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ॥ १० ॥**

शक्तेरपि कल्पना स्वरूपातिरिक्तायाः पृथक्शक्तेरभावात्तस्याः पार्थक्यं कल्प्यते । अथवा प्रभुमन्त्रोत्साहलक्षणास्तिस्रः शक्तयस्तासां कल्पना । सेना सैन्यं तस्य कल्पना । एवं ब्रह्मणि पञ्चधा कल्पना रूपकल्पना पुंस्त्र्यङ्गास्त्रादिकल्पना वर्णवाहनकल्पना शक्तिकल्पना सेनाकल्पना चेति । यद्वा ब्रह्मणि रामचन्द्र एव युद्धावसरे राक्षसविमोहनाय नानारूपादिपञ्चककल्पना । अथवा ब्रह्मण्येवं हि पञ्चधेति परेणान्वेति । ब्रह्मणि पञ्चायतनभेदेन कल्पितस्य देहस्य सतस्तस्य सेनादिकल्पना ॥ १० ॥

**ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः ।**
**जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥ ११ ॥**

ब्रह्मादीनां स्थावरान्तानां वाचकोऽयं मन्त्रो राममन्त्रः । वक्ष्यति हि—"तथैव रामबीजस्थं जगदेतच्चराचरम्" इति । यद्वा—"इति रामपदेनासौ परं ब्रह्म" इत्यादीनां पूर्वोक्तानामर्थानां वाचको रामनामात्मको मन्त्रः । आदिशब्दः प्रकारार्थः पूर्वोक्तसंनिवेशापेक्षः । यद्वा—ब्रह्माद्वैतपरमानन्दात्मा तदादीनां वक्ष्यमाणसप्तचत्वारिंशद्व्यूहानाम् 'रमन्ते योगिनो यत्र' इत्याद्युक्तस्य मूलव्यूहस्य च वाचकः । अन्वर्थं सर्वार्थानुगतं ब्रह्म तदादि प्रपञ्चजातं तस्य संज्ञा ज्ञानं यस्मात्सोऽन्वर्थादिसंज्ञः । स्वार्थे कः । सर्ववाचक इत्यर्थः । यद्वा द्वंद्वगर्भो बहुव्रीहिः । अन्वर्थसंज्ञक आदिसंज्ञकश्च । अन्वर्थता 'मननात्त्राणनान्मन्त्रः' इति । 'राक्षसा मरणं यान्ति' इत्यादिपूर्वोक्तैश्चार्थैरनुगतार्थः । आदिसंज्ञक आदिमन्त्रत्वाज्जगदादित्वाच्च । स च मन्त्रिणा गुरुतो लब्धमन्त्रेण जप्तव्यः । विपक्षे बाधकं नैवमिति । एवं विनाऽर्थस्मरणपूर्वकमन्त्रजपं विना देवः परमेश्वरो न प्रसीदति ॥ ११ ॥

**क्रिया कर्मेति कर्तॄणामर्थं मन्त्रो वदत्यथ ।**
**मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः ॥ १२ ॥**

**क्रियेति** । क्रिया ह्लादनादिरूपा कर्म रक्षोमरणादि । इत्येवमात्मकैककर्मकर्तॄणां गुणानां मायिकत्वेन परमार्थकर्तृत्वरहितानां सतां देवानामर्थं मन्त्रो वदति । मन्त्रत्वं कस्मादत आह—**अथेति** । अथेत्युपक्रमे । मननाद्बोधनात्त्राणनान्मन्त्रः । त्राणस्य

---

१ च. °या ध्यानादि° । २ च. क्षोमार° । ३ घ. ङ. °कमक° ।

करणं त्राणनम् । मननेन त्रायते मन्त्र इति विग्रहः । आद्यः संपदादिक्किबन्तः । अन्त्यः 'सुपि स्थः' इति कान्तः । सर्वस्य वाच्यस्य वक्तव्यस्य वाचकः प्रणववद्ब्रह्माभिधायकत्वाद्ब्रह्माणि च सर्वान्तर्भावात् ॥ १२ ॥

**सोभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना ।**
**विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥ १३ ॥**
**इति रामपूर्वतापनीयोपनिषदि प्रथमः खण्डः ॥ १ ॥**

सेति । सा पञ्चधा कल्पना । अस्य रामस्य यन्त्रकल्पना यन्त्रस्वरूपम् । उभयस्य पुंस्प्रकृत्यात्मकस्य मूर्तामूर्तात्मकस्य मूलस्थूलव्यूहात्मकस्य वा । उभाभ्यां ज्ञानक्रियाशक्तिभ्यां सहितस्य वा । देवस्य विग्रहः शरीरं यन्त्रस्थदेवानां सेनारूपत्वात् । 'तस्य सेनादिकल्पना' इति श्रुतेश्च । सर्वदेवमयमेकमेव देवस्य विग्रहः शरीरं यन्त्रमित्यर्थः । अथवा स मन्त्रोऽभयस्य निर्भयस्यास्य देवस्य रामस्य विग्रहः शरीरं 'मूर्तिं मूलेन कल्पयेत्' इति स्मृतेः । ततो यन्त्रकल्पना कर्तव्या । अयं यन्त्रविधिरकरणे बाधकं विनेति ॥ १३ ॥

इति श्रीरामपूर्वतापनीयोपनिषद्दीपिकायां प्रथमः खण्डः ॥ १ ॥

---

देवस्वरूपमाह—

**स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते ।**
**जीवत्वेनेदमो यस्य सृष्टिस्थितिलयस्य च ॥ १ ॥**
**कारणत्वेन चिच्छक्त्या रजःसत्त्वतमोगुणैः ।**
**यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥ २ ॥**
**तथैव रामबीजस्थं जगदेतच्चराचरम् ।**
**रेफारूढा मूर्तयः स्युः शक्तयस्तिस्र एव चेति ॥ ३ ॥**

**स्वभूरिति** । स्वयमन्यनिरपेक्षो भवति विद्यते स्वभूः । ज्योतिर्मयः प्रकाशात्मा । अनन्तो देशतः कालतश्च परिसमाप्तिरहितः । अनन्त इत्येव वक्तव्ये रूपीतिपदं रूपवत्त्वेऽप्यनन्तताव्याहतिसूचनार्थम् । स्वेनैव भासते न त्वन्येन स्वप्रकाशकत्वात् । अथ च स्वभूर्बिन्दुर्ज्योतिर्मयो रेफमिलितोऽनन्तरूप्याकारेण निरूपितो मध्य आलिङ्गितो रामिति मन्त्रः स्वेनैव स्वात्मनैव भासते शब्दस्य हि स्वरूपमर्थो बाह्यश्चेति । यद्वा स्फोटस्य ब्रह्मस्वरूपत्वात्तस्य च स्वप्रकाशत्वात् । **जीवत्वेनेति** । यस्य जीवत्वेन स्थित्युत्पत्तिलयस्य च कारणत्वेन चिच्छक्त्या रजःसत्त्वतमोगुणैर्य-

१ क. प्रथमोपनिषत् । २ घ. ङ. बा । तत्र यन्त्रमस्य दे° । ३ क. मूर्तिमू° । ४ क. °ह न्द्रुमः । ५ च. रामेति ।

थासंख्यमिदं वर्तते । यस्य चिच्छक्त्या जीवत्वेन गुणैः सृष्ट्यादिकारणत्वेन चेदं सर्वं विषयिविषयरूपं भातीत्यर्थः । कथं भूतमिदम् । ॐ परमात्मस्वरूपमेव वस्तुगत्या । यथैवोंकारस्तथैव च रामबीजमिति वटबीजदृष्टान्तेनाऽऽह—यथेति । प्राकृतः प्रकृतेर्वटबीजादुत्पन्नः । रामबीजं रामिति तत्र स्थितम् । अर्थपक्षे राम एव बीजं कारणं तत्र स्थितम् । अस्य विधानं प्रागुक्तम् । रेफारूढा इति । रेफोपरिस्थाः । आ ब्रह्मा । अः कृष्णः । मो महेश्वरस्तिस्रो मूर्तयः । यथा प्रणवस्याऽऽकारोकारमकारार्था ब्रह्मविष्णुरुद्रास्तद्वत् । तिस्रः शक्तय उत्पत्तिस्थितिसंहारशक्तयः । यद्वा बिन्दुनादबीजजा रौद्री ज्येष्ठा वामा च रुद्रब्रह्मविष्णुनिष्ठा ज्ञानेच्छाक्रियाशक्तयो वा ।

तदुक्तम्—"रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत ।
वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ॥
ते ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः" इति ॥१॥२॥३॥

**सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त ।**
**स्थितानि च प्रहृतान्येव तेषु ततो रामो मानवो माययाऽध्यात् ।**
**जगत्प्राणायाऽऽत्मनेऽस्मै नमः स्यान्नमस्त्वैक्यं प्रवदेत्प्राग्गुणेनेति॥४॥(१७)**

**इति श्रीरामपूर्वतापनीयोपनिषदि द्वितीयः खण्डः ॥ २ ॥**

सीतारामौ तन्मयौ प्रकृतिपुरुषमयौ । अत्र बीजे "पूज्यौ बीजस्य मूर्तित्वान्मूर्तिं मूलेन कल्पयेत्" इत्युक्तेः । आभ्यां सीतारामाभ्यां द्विसप्त द्विरावृत्तानि सप्त चतुर्दशेत्यर्थः । जातान्युत्पन्नानि स्थितानि च तयोरेव स्थितिं प्राप्तानि । प्रहृतानि लीनानि तेष्वकाराकारमकारेषु ब्रह्मविष्णुमहेश्वरेषु । ततः कारणाद्रामो मायया मानवोऽध्यात् । मायया कपटेन मानवोऽहमिति दध्यौ । श्रीं शीतायै स्वाहेतिमन्त्रेण सीता पूज्या । अयं स्वतन्त्रोऽपि । अस्य जनकगायत्रीसीता ऋष्याद्याः । श्रीं बीजं स्वाहा शक्तिः दीर्घस्वरबीजाद्येन षडङ्गम् । वैष्णवे पीठे पूजा । राघवयुतां स्वर्णाभां पद्महस्तां रामालोकनतत्परां ध्यायेत् । पुरश्चरणे वर्णलक्षं जपः । कमलैः पायसेन वा दशांशहोमः । एवमिष्टार्थसिद्धिः । जगत्प्राणाय जगतां प्राणात्मनेऽस्मै रामाय नमो नमस्कारः स्यात्कर्तव्य इत्यर्थः । नमस्तु कृत्वेति शेषः । नमस्कारं तु कृत्वा प्राग्गुणेन गुणेभ्यः प्राग्रूपेण ब्रह्मणा नमस्यदेवतया सहैक्यमात्मनो रामोऽहमिति प्रवदेत् । नमस्यैक्यमिति पाठे स्पष्टोऽर्थः । इतिशब्दः खण्डसमाप्तौ ॥ ४ ॥

इति श्रीरामपूर्वतापनीयोपनिषद्दीपिकायां द्वितीयः खण्डः ॥ २ ॥

---

१ क. ख. ग. घ. °याऽधात् । २ घ. ङ. °न्मूर्तिमू° । ३ च. °कारोका° । ४ घ. सीताया । ५ घ. °त्रसीता° । ६ घ. °रनुजा° ।

मन्त्रपदार्थान्वदन्नुपास्योपासकैक्यकरणप्रकारमाह—

**जीववाचि नमोनाम चाऽऽत्मा रामेति गीयते ।**
**तदात्मिका या चतुर्थी तथा चाऽऽयेति कथ्यते ॥ १ ॥**

**जीववाचीति** । नमोनाम नम इति नाम प्रातिपदिकं जीववाचि जीवमात्रं वक्ति तस्य नम्रत्वान्मर्त्याभिधानम् । रामेति नाम्ना चाऽऽत्मा गीयते । तदात्मिका तेन रामेणाऽऽत्मनैक्यमापन्नैकपदतां गता या चतुर्थी विभक्तिरायेति तया च तथा कथ्यते रामात्मत्वं कथ्यतेऽर्थाज्जीवस्य । तथोच्यते जीवात्मनोरैक्यमेवोच्यत इति तेन यस्तत्त्वमस्यादिवाक्यार्थः स एवास्य मन्त्रस्यार्थ इत्यर्थः ॥ १ ॥

वाक्यार्थमाह—

**मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः ।**
**फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २ ॥**

**मन्त्रोऽयमिति** । अयं मन्त्रो वाचको रामस्य रामोऽस्य मन्त्रस्य वाच्यः स्यात् । एतयोर्वाच्यवाचकयोर्योगो योजनमात्मना सहैक्यापादनमस्यायमर्थ इति निश्चय ऐक्यभावनं वा सर्वेषां साधकानां फलप्रदो निश्चितमेव । अर्थानुसंधानपूर्वकं मन्त्रजप ऐक्यभावेन च फलविशेष इत्यर्थः ॥ २ ॥

इममेवार्थं दृष्टान्तेन स्पष्टयति—

**यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् ।**
**तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ३ ॥**

**यथेति** । यथा यो नामी नामवान्स वाचकेन नाम्नाऽऽकारितः सन्नभिमुखो भवेदाकारयितुरिति शेषः । यद्वाऽऽययत्याकारयतीत्यायुः । अय गतौ, आङ्पूर्वः क्विप् । तस्याऽऽय आकारयितुरित्यर्थः । तथा बीजात्मको मन्त्रो नामवज्ज्ञातव्यः । येनाऽऽकारितो देवो मन्त्रिणोऽभिमुखः संमुखो भवेदित्यध्याहारेण योज्यम् । यद्वा तथा तद्वद्बीजात्मको मन्त्रो रामिति मन्त्रः । यद्वा बीजं जगत्कारणं रामस्तदात्मकस्तेन सहैक्यमापन्नो मन्त्र एकाक्षरादिः साध्यसाधकमन्त्रैक्यज्ञाने सति पूर्वोक्तपदार्थवाक्यार्थज्ञाने वा सति मन्त्रिणो जपुरभिमुखः शीघ्रफलदो भवेदिति पदार्थवाक्यार्थज्ञान ऐक्यज्ञाने च फलमुक्तम् । उक्तं च—" देवतागुरुमन्त्राणां भावयेदैक्यमात्मना " इति ॥ ३ ॥

न्यासमाह—

**बीजशक्ती न्यसेद्दक्षवामयोः स्तनयोरपि ।**
**कीलो मध्येऽविनाभाव्यः स्ववाञ्छाविनियोगवान् ॥ ४ ॥**

---

१ क. ख. ग. तादात्मिका । २ क गीयते । ३ च. °लप्रदश्च स° । ४ ग. घ. रामिति ।

**बीजेति** । बीजमाद्यपदं शक्तिरुत्तमपदम् । तदुक्तं **शौनककल्पे**—"जानीयात्प्रथमं वर्णं बीजं शक्तिं नतिं तथा" इति । बीजं दक्षिणस्तने शक्तिं वामस्तने न्यसेत् । केचनाऽऽस्येति शक्तिमाहुः । बीजशक्तिन्यासो दक्षवामकोशयोरित्येके । गुह्यपादयोरित्यन्ये । रामेतिविशेषोक्तेः स्तनयोरेव । कीलो य इति वर्णो मध्ये स्तनयोर्मध्येऽविनाभाव्यो नियमेन न्यसनीयः । न केवलं कीलो हृदि न्यस्यः किंतु स्वस्य वाञ्छाऽभिलाषो विनियोगश्च तावपि न्यस्यावित्याह—**स्वेति** । प्रयोगस्तु श्रीरामप्रीतये लक्ष्म्यादिप्राप्तये वा जपे पूजायां वा विनियोग इति हृदि स्मर्तव्यमिति । यद्वा ननु हृदये कीलन्यासस्य किं प्रयोजनमत आह—**स्वेति** । स्वस्य या वाञ्छा साधकस्य योऽभिलाषस्तस्या यो विनियोगो विशेषेण नियोगो भवैवेति प्रेरणं तद्वान्हृदि न्यस्तः सन्साधकेच्छापूरक इत्यर्थः ॥ ४ ॥

**सर्वेषामेव मन्त्राणामेष साधारणः क्रमः ।**
**अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ ५ ॥**

**सर्वेषामिति** । बीजं शक्तिः कीलकमिति त्रयं स्ववाञ्छाविनियोगाभ्यां सहितमुक्तस्थानेषु संन्यसनीयमिति सर्वराममन्त्रसाधारणो विधिरित्यर्थः । अनेनोक्ता वक्ष्यमाणाश्च सर्वे मन्त्राः सामान्यत उद्दिष्टा ज्ञेयाः । उद्धारः शिष्टन्यासा ऋष्यादयः, षडङ्गानि चापिशब्दचशब्दसूचितानि ।

यथा—"अनन्तोऽग्न्यासनः सेन्दुर्बीजं रामाय हृन्मनुः ।
षडक्षरोऽयमादिष्टो भजतां कामदो मणिः ॥
ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः ।
देशिकेन्द्रैः समाख्यातो रामो राक्षसमर्दनः ॥
दीर्घभाजा स्वबीजेन कुर्यादङ्गानि षट् क्रमात् ।
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये त्हन्नाभ्यंन्धुषु[1] पादयोः ॥
षडक्षराणि विन्यस्येन्मन्त्रस्य मनुवित्तमः" ॥

इति पञ्चाक्षर उद्धृतो बीजं चोद्धृतं तयोर्योगे षडक्षरः सिद्धः स च मन्त्रराजस्तदुद्धारेण सर्वे राममन्त्राः सूचिताः । ते यथावच्चतुरक्षरान्ता उक्ताः पञ्चाक्षरादयः सविधाना उच्यन्ते—

"सप्रतिष्ठौ रंखौ[2] वायुर्हृत्पञ्चार्णो[3] मनुः स्मृतः ।
विश्वामित्रो मुनिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ॥
रामभद्रो बीजशक्ती प्रथमानानती क्रमात् ।
भ्रूमध्ये हृदि नाभ्यन्ध्वोः पादयोर्विन्यसेन्मनुम् ॥

१ घ. °भ्यधुषु । २ घ. स्वरौ । ३ ङ °युर्हृत्प° ।

षडङ्गं पूर्ववद्यद्वा पञ्चार्णैर्मनुनाऽस्त्रकम् ।
मध्येवनं कल्पतरोर्मूले पुष्पलतासने ॥
लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् ।
अवेक्षमाणं जानक्या कृतव्यजनमीश्वरम् ॥
जटाभारलसच्छीर्षं श्यामं मुनिगणावृतम् ।
लक्ष्मणेन धृतच्छत्रमथवा पुष्पकोपरि ॥
दशास्यमथनं प्राग्वत्ससुग्रीवविभीषणम् ।
विजयार्थे विशेषेण वर्णलक्षं जपेन्मनुम् ॥
स्वकामशक्तिवाग्लक्ष्मीताराद्यः पञ्चवर्णकः ।
षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥
पञ्चाशन्मातृकामन्त्रवर्णप्रत्येकपूर्वतः ।
लक्ष्मीवाङ्मन्मथादिश्च तारादिः स्यादनेकधा ॥
श्रीमायामन्मथैकैकबीजाद्यन्तगतो मनुः ।
चतुर्वर्णः स एव स्यात्षड्वर्णो वाञ्छितप्रदः ॥
स्वाहान्तो हुंफडन्तो वा नत्यन्तो वा भवेदयम्
ब्रह्मा संमोहनः शक्तिर्दक्षिणामूर्तिरेव च ॥
अगस्त्यः श्रीशिवः प्रोक्ता मुनयोऽत्र क्रमादिमे ।
छन्दो गायत्रसंज्ञं च रामभद्रोऽस्य देवता ॥
अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः ।
छन्दो दैव्यादिगायत्री रामभद्रोऽस्य देवता ॥
बीजशक्ती यथापूर्वं षड्वर्णान्विन्यसेत्ततः ।
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः ॥
बीजैः षड्दीर्घयुक्तैर्वा मन्त्रार्णैर्वा षडङ्गकम् ।
ध्यायेत्कल्पतरोर्मूले सुवर्णमयमण्डपे ॥
पुष्पकाख्यविमानान्तः सिंहासनपरिच्छदे ।
पद्मे वसुदले देवमिन्द्रनीलमणिप्रभम् ॥
वीरासनसमारूढं व्याख्यामुद्रोपशोभितम् ।
वामोरुन्यस्तहस्तं तं[1] शीतालक्ष्मणसेवितम् ॥
सर्वाभरणसंपन्नमृतुलक्षं जपेन्मनुम् ।
यद्वा स्मरादिमन्त्राणां जपाल्लं वा हरिं स्मरेत् ॥

---

१ घ. तं सीता° ।

रामश्च भद्रचन्द्रान्तो ज्ञेयो नतियुतो द्विधा ।
तारादिसहितः सोऽपि मन्त्रस्त्वष्टाक्षरः स्मृतः ॥
ताराद्याद्यन्तगः सोऽपि नवार्णः स्यादनेकधा ।
तारं रामश्चतुर्थ्यन्तः क्रोधास्त्रं वह्नितल्पगः ॥
अष्टार्णोऽयं परो मन्त्र ऋष्यादि स्यात्षडर्णवत् ।
जानकीवल्लभं ङेन्तं वह्नेर्जाया हुमादिकाः ॥
दशाक्षरोऽयं मन्त्रः स्याद्वसिष्ठः स्यादृषिः स्वराट् ।
छन्दस्तु देवता रामः शीतापाणिपरिग्रही ।
आद्यो बीजं द्विठः[२] शक्तिः कामेनाङ्गक्रिया मता ॥
शिरोललाटभ्रूमध्यतालुकण्ठेषु हृद्यपि ।
नाभ्यन्धुजानुपादेषु दशार्णान्विन्यसेन्मनोः ॥
अयोध्यानगरे रत्नचित्रसौवर्णमण्डपे ।
मन्दारपुष्पैराबद्धविताने तोरणाञ्चिते ॥
सिंहासनसमारूढं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्दिव्यवरयानगतैः शुभैः ॥
संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम्[३] ।
शीतालक्षितवामाङ्कं लक्ष्मणेनोपशोभितम् ॥
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ।
ध्यायन्नेव जपेन्मन्त्रं वर्णलक्षं विचक्षणः ॥
दशांशं जुहुयाद्बिल्वैः फलैर्मधुरसंयुतैः ।
रामं ङेन्तं धनुष्पाणये ते स्याद्वह्निसुन्दरी ॥
दशाक्षरोऽयं मन्त्रः स्यान्मुनिर्ब्रह्मा विराट्स्मृतम् ।
छन्दस्तु देवता प्रोक्ता रामो राक्षसमर्दनः ॥
आद्यो बीजं द्विठः शक्तिस्तेनैवाङ्गानि पूर्ववत् ।
वर्णन्यासं तथा ध्यानं पौरश्चरणिकं विधिम् ॥
दशाक्षरोक्तवत्कुर्याच्चापबाणधरं स्मरेत् ।
ॐ हृद्भगवते रामचन्द्रभद्रौ च ङेयुतौ ॥
अर्कार्णो[५] द्विविधोपास्य ऋषिध्यानादि पूर्ववत् ।
श्रीपूर्वं जयमध्यस्थं तद्द्विधा रामनाम च ॥

१ घ. °मः सीता° । २ घ. द्विढः । ३ घ. °म् । सीता° । ४ घ. °णशोभित° । ५ घ. °कार्णे द्विविधाऽथास्य ।

त्रयोदशार्ण ऋष्यादि पूर्ववत्सर्वकामदः ।
पदत्रयैर्द्विरावृत्तैरगध्यानं दशार्णवत् ॥
सतारं हृद्भगवते रामं ङेन्तं महा ततः ।
पुरुषायपदं पश्चाद्धृदन्तोऽष्टादशाक्षरः ॥
विश्वामित्रो मुनिश्छन्दो गायत्रं देवता मनोः ।
दशास्यदर्पदलनो रामभद्रः समीरितः ॥
तारं बीजं नतिः शक्तिः षडङ्गं कल्पयेत्ततः ।
मूलमन्त्रं कोशलेन्द्रं सत्यसंधमनन्तरम् ॥
रावणान्तकनामानं सर्वलोकहितं तथा ।
स्वादुप्रसन्नवदनं चतुर्थ्या मनसा वदेत् ॥
नन्दिग्रामस्योपवने भरतायत्तकौतुके ।
रम्ये सुगन्धिपुष्पाद्यैर्वृक्षखण्डैश्च मण्डिते ॥
निशानभेरीपटहशङ्खतूर्यादिनिःस्वने ।
प्रवृत्तनृत्ये परितो जयमङ्गलभाविते ।
पटीरघुसृणोशीरकर्पूरागरुगन्धिते ॥
नानाकुसुमसौरभ्यवाहिगन्धवहान्विते ॥
देवगन्धर्वनारीभिर्गायन्तीभिरलंकृते ।
सिंहासनसमारूढं पुष्पकोपरि राघवम् ॥
सौमित्रिशीतासहितं जटामुकुटशोभितम् ।
चापबाणधरं श्यामं ससुग्रीवविभीषणम् ॥
हत्वा रावणमायातं कृतत्रैलोक्यरक्षणम् ।
रामभद्रं हृदि ध्यायन्दशलक्षं जपेन्मनुम् ॥
रामभद्रमहे पूर्वं ष्टा(ष्वा)साग्न्युत(ग्निघु) ततः परम् ।
वीरं नृपोत्तमपदं दशास्यान्तक मां ततः ॥
ततो रक्ष ततो देहि पश्चाद्दापय मे श्रियम् ।
अग्नी रेर्फः । द्युः(घुः) स्वरूपम् ।
द्वात्रिंशदक्षरो मन्त्रो विश्वामित्रो मुनिर्मनोः ॥
छन्दोऽनुष्टुब्देवता च रामचन्द्रः प्रकीर्तितः ॥
चतुष्करणवेदाब्धिवस्वत्यैरङ्गकल्पना ।
मूर्ध्नि भाले दृशोः श्रोत्रे गण्डयुग्मे सनासिके ॥

---

१ ङ. नमहा । २ घ. ङ. रम्यः । ३ घ. °त्रिसीता° । ४ घ. °ताराहि° । ५ घ. °ग्न्युजत° । ६ ङ. °फः । घुः स्व° ।

आस्ये दोःसंधिषु गले स्तनहृन्नाभिमण्डले ।
कट्योर्मेढ्रे पायुपादसंधिष्वर्णान्न्यसेन्मनोः ॥
पूर्वोक्तं ध्यानमत्रापि त्रिलक्षं नियतं जपेत् ।
पीतं वा चिन्तयेद्रामं धनार्तो वा मनुं जपेत् " ॥

एतेऽनुष्टुबन्ता मन्त्रास्तत्र तत्र चशब्दापिशब्दमन्त्रैकदेशोच्चारणादिभिः सूचिता इत्थं संकल्प्य सुखावबोधार्थं तन्त्रान्तरदृष्टाः सविधाना दर्शिताः । मूले च सर्वेषामेव मन्त्राणामेष साधारणः क्रम इत्यनेन सामान्यतः प्रतिज्ञाताः । मालामन्त्रस्त्वग्रे साक्षादुद्धारिष्यते । आद्यं बीजं समुद्धरंस्तस्य ध्यानमाह—अत्रेति । रामो दाशरथिरनन्तरूपो ब्रह्मरूपस्तेजसा बलेन वह्नितुल्यः । अथ च रामो राममन्त्रोऽनन्तोऽनन्ताकारस्तद्रूपस्तेजसा वह्निना तेजोवर्णेन रेफेण समः सहोच्चारितस्तेन रा इति सिद्धम् ॥ ५ ॥

**स त्वनुष्णगुविश्वश्चेदग्नीषोमात्मकं जगत् ।**
**उत्पन्नं शीतया भाति चन्द्रश्चन्द्रिकया यथा ॥ ६ ॥**

स रामोऽनुष्णगुना चन्द्रेण सीतया विश्वो व्याप्तो वेष्टितश्चेत्तदा पुंस्प्रकृत्यात्मकं जगत्सिद्धम् । अथ चन्द्रेण विश्वो बिन्दुनाऽऽविष्टश्चेत्तदाऽग्नीषोमात्मकं जगज्जगद्वाचकं रामिति सिद्धम् । उत्पन्नमिति पूर्वेण संबध्यते । स रामः । शीतया 'शीता लाङ्गलपद्धतिः' 'शीङ् स्वप्ने' शेते शीता । औणादिकः क्तप्रत्ययः । तज्जत्वाज्जनकात्मजाऽपि शीता तयाऽऽभाति । दृष्टान्तश्चन्द्र इति ॥ ६ ॥

इदानीं ध्यानार्थं देवस्वरूपमाह—

**प्रकृत्या सहितः श्यामः पीतवासा जटाधरः ।**
**द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥ ७ ॥**
**प्रसन्नवदनो जेता धृष्टचष्टकविभूषितः ।**
**प्रकृत्या परमेश्वर्या जगद्योन्याऽङ्किताङ्कभृत् ॥ ८ ॥**
**हेमाभया द्विभुजया सर्वालंकृतयाचिता ।**
**श्लिष्टः कमलधारिण्या पुष्टः कोसलजात्मजः ॥ ९ ॥ (२६)**

**इति श्रीरामपूर्वतापनीयोपनिषदि तृतीयः खण्डः ॥ ३ ॥**

**प्रकृत्येति** । श्यामो वर्णेन । जटाधरो जटानां धरो धर्ता गुहग्रामे वटदुग्धेन जटानां बन्धनात् । धीरो निर्भयो धीमत्त्वात् । धृष्टिः प्रागल्भ्यं तदष्टकमणिमाद्यष्टकं तेन विभूषितः शोभितः । अथवा धृष्ट्याद्यष्टकावरणेन वक्ष्यमाणेन । प्रकृत्या मूलप्रकृतिरूपया परमेश्वर्या परमयेश्वर्या जगतां योन्योत्पत्तिहेतुभूतयाऽङ्कितश्चिह्नितो योऽङ्को वाम उत्सङ्गस्तं बिभर्ति ।

---

१ ङ. वक्ष्यां मेढ्रे । २ क. ख. ग. घ. च. सीतया । ३ क. धृत्यष्ट° ।

सर्वालंकृतयाचिता सर्वेणालंकृतेनालंकारेणाऽऽचितया व्याप्तया । सर्वालंकृताचितयेति वक्तव्ये छान्दसो विभक्तेर्मध्यप्रयोगः । यथा शुनश्चिच्छेपामित्यत्र संज्ञामध्ये चिच्छब्दः । यद्वा सर्वैरलंकारैरलंकृतया । तथा चिता चिच्छक्तिरूपया । अस्या मन्त्रः प्रागुक्तः । सर्वालंकृतयोत्तरे । श्लिष्ट इति तु युक्तः पाठः । उत्तरे वामे । पुष्टो विपुलाङ्गः । यद्वा दृष्टसामग्र्यभावेऽपि तत्फलभाक् । कोशलजायाः कौशल्याया आत्मजः पुत्रः ॥ ७ ॥ ॥ ८ ॥ ९ ॥

इति दीपिकायां तृतीयः खण्डः ॥ ३ ॥

---

**दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः ।**
**हेमाभेनानुजेनैव तदा कोणत्रयं भवेत् ॥ १ ॥**

**दक्षिण इति ।** लक्ष्मणादयोऽपि स्वस्वमन्त्रैरेव परिवारतया पूज्याः । तत्र लक्ष्मण-मन्त्रो यथा—लक्ष्मणाय नमः । अगस्तिगायत्रलक्ष्मणा ऋष्याद्याः । लं बीजम् । नमः शक्तिः । पुरुषार्थचतुष्टये विनियोगः । दीर्घभाजा स्वबीजेन षडङ्गानि ॥

"द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम् ।
धनुर्बाणकरं रामसेवासंसक्तमानसम्" ॥

(इति) ध्यायेत् । वैष्णवे पीठपूजा । नात्राऽऽवरणानि । सप्तलक्षं पुरश्चर्या ॥

"भरतस्यैवमेव स्याच्छत्रुघ्नस्याप्ययं विधिः ।
अङ्गत्वेनोदिता ह्येते प्राधान्येनापि सत्तमाः ॥
आदौ वाऽप्यन्ततो वाऽपि पूजायां राघवस्य तु ।
एतेषामपि कर्तव्या भुक्तिमुक्तिफलेप्सुभिः ॥
अष्टोत्तरसहस्रं वा शतं वा सुसमाहितः ।
लक्ष्मणस्य मनुर्जप्यो मुमुक्षुभिरतन्द्रितैः ॥
अजप्त्वा लक्ष्मणमनुं राममन्त्राञ्जपन्ति ये ।
तज्जपस्य फलं नैव प्रयान्ति कुशला अपि ॥
अरिमित्रविवेकोऽपि नैव कार्यो भवेदिह ।
यो जपेल्लक्ष्मणमनुं नित्यमेकान्तमास्थितः ॥
मुच्यते सर्वपापेभ्यः स कामानश्नुतेऽखिलान् ।
प्रयोगायैव मन्त्रोऽयमुपदिष्टो हि शार्ङ्गिणा " ॥

तथा—" सकामो वाञ्छिताँल्लब्ध्वा भुक्त्वा भोगान्मनोहरान् ।
जातिस्मरश्चिरं भूत्वा याति विष्णोः परं पदम्"॥

यथा श्रीराममन्त्राणां प्रयोक्तुः पापसंभवः ।
तथा नो लक्ष्मणमनोः किंतु याति परां गतिम् ॥
केचिन्मुक्त्यर्थमेव स्युः केचिदैहिकसाधनाः ।
भुक्तिमुक्तिप्रदश्चायमेको विज्ञायते परम् " ॥ इति ।

दक्षिणे भागे लक्ष्मणेनान्यत्र शीताश्लेषानन्तरं श्लिष्टः । अर्थाद्वामे शीतया श्लिष्टः । तदुक्तम्—"वामभागे समासीनां शीतां काञ्चनसंनिभाम् " ॥ इति ।

तदा देवतात्रय उपविष्टे सति कोणत्रयं भवेदेकं त्रिकोणं भवेदित्यर्थः । **अनुजेनैवेति** । एवकारेणास्मिंस्त्रिकोणे देवतान्तरपूजा वार्यते । तत्र त्रिकोणादीनां समत्वे प्रकार उच्यते—

"कृत्वा वृत्तं प्राग्गुणं तत्तिर्यगन्यत्तु पार्श्वयोः ।
आराः षड्दलतोऽप्येवं द्वादशारमुदीच्य(र्य)ते " ॥

अस्यार्थः—समं प्राच्यं सूत्रं कृत्वा तन्मध्यमालम्ब्य यथेप्सितं वृत्तं कृत्वा तत्र प्राचीसूत्रं चतुर्धा विभजेत् । एकस्मादन्त्यं तुर्यांशं संत्यज्यैकं तिर्यक्सूत्रं पातयेत् । पार्श्वयोः सूत्रद्वयदानात्त्र्यस्रम् । एवमन्यतोऽपि कृते षडस्रम् । एवमुदग्दक्षिणतः कृते द्वादशास्रमिति ॥ १ ॥

**तथैव तस्य मन्त्रस्य शेषोऽणुश्च स्वङेन्तया ।**
**एवं त्रिकोणरूपं स्यात्तं देवा ये समाययुः ॥ २ ॥**
**स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम् ।**
**कामरूपाय रामाय नमो मायामयाय च ॥ ३ ॥**

**तथैवेति** । तथैव यथा बीजमुक्तमेवं तस्य मन्त्रस्य शेषोंऽश उच्यत इति शेषः । तस्य कस्य । यस्य स्वङेन्तया सहाणुः स्वरूपं स्वं रामशब्दस्तस्य ङेन्ता विभक्तिश्चतुर्थ्येकवचनं तेन सहाणुः सूक्ष्मो भागो नम्रांशो नतिर्नमःशब्द इत्यर्थः । ङेन्तो रामो नमःशब्दश्च मन्त्रशेषोंऽश इत्यर्थः । एवं सति षडक्षरे मन्त्रे सिद्धे सति द्वितीयं त्रिकोणरूपं स्यात् । त्रिकोणद्वये षडक्षरषडङ्गसमावेशार्थं कोणषट्कं स्यादित्यर्थः । एवं षट्कोणे सिद्धे आवरणस्थदेवर्षीणामुपसत्तिमाह—**तं देवा य इति** । ये देवास्तं समाययुर्द्रष्टुं लब्धावसरास्ते तं स्तुतिं स्तूयतेऽसौ स्तुतिस्तं स्तुतिविषयं चक्रुः । स्तुतिमाह—**कामेति** । कामेन स्वेच्छया रूपं यस्य तस्मै । अथ च कामबीजरूपाय रामाय रामशब्दाय । तेन क्लीं राम इति मन्त्रः सूचितः । मायामयायेति ह्रीं राम इति ॥ २ ॥ ३ ॥

**नमो वेदादिरूपाय ओंकाराय नमो नमः ।**
**रोमाधराय रामाय श्रीरामायाऽऽत्ममूर्तये ॥ ४ ॥**

---

१ क. ख. ग. घ. रमाधाराय ।

क्लीं रामाय नमो ह्रीं रामाय नम ॐ रामाय नम इत्यादयोऽप्योंकारायेत्यादिना सूचिताः । रामा स्त्री शीता तस्या धराच धर्त्रे । रामोऽभिरामोऽधरो यस्य तस्मै । बिम्बाधरायेति युक्तः पाठः ॥ ४ ॥

जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने ।
भद्राय रघुवीराय दशास्यान्तकरूपिणे ॥ ५ ॥

कैकेय्या वनयात्रायां सर्वाभरणापहारे कृते जात्या देहमात्रमाभरणरहितं लक्ष्मीशरीरं भूषा यस्य तस्मै । शुभाङ्गिने शुभमङ्गं यस्यास्ति शुभाङ्गी । छान्दसत्वात्कर्मधारयादपि मत्वर्थीयः साधुस्तस्मै । शुभश्चासावङ्गी चेति वा । अङ्गी प्रधानपुरुषः ॥ ५ ॥

रामभद्र महेष्वास रघुवीर नृपोत्तम ॥ ६ ॥ ( ३२ )

इति श्रीरामपूर्वतापनीयोपनिषदि चतुर्थः खण्डः ॥ ४ ॥

रामभद्रेत्यादि संबोधनचतुष्टयं तत्राऽऽद्यो मन्त्रः स पूर्वमुक्तः ॥ ६ ॥

इति दीपिकायां चतुर्थः खण्डः ॥ ४ ॥

---

भो दशास्यान्तकास्माकं रक्ष[2] देहि श्रियं च ते ।
त्वमैश्वर्यं दापयाथ संप्रत्या[3]खरमारणम् ।
कुर्वन्ति स्तुत्य देवाद्यास्तेन सार्धं सुखं स्थिताः ॥ १ ॥

भो भवन्दशास्यान्तक दशाऽऽस्यानि यस्य दशास्यो रावणस्तस्यान्तक । अस्माकं रक्ष रक्षणं कुरु । ते तव श्रियं चास्मभ्यं देहि । यद्वा तेऽस्माकं त्वदीयेभ्योऽस्मभ्यं श्रियं[4] देहीत्यन्वयः । संबन्धसामान्ये कर्मणि षष्ठी । त्वमैश्वर्यमीश्वरभावं दापय देहि राक्षसैर्गृहीतं प्रत्यर्पय । अनेन रामभद्र महेष्वास रघुवीर नृपोत्तमेत्यादिरनुष्टुम्मन्त्रोऽर्थत उक्तः । अथ संप्रतीदानीमाखरमारणम् खरो नाम राक्षसस्तस्य मारणादामारणमभिव्याप्य यावता कालेन खरो हतस्तावद्देवा ऋषयश्च रामं स्तुवन्तः सुखं स्थिता इति संबन्धः । कुर्वन्ति स्तुत्येति व्यत्ययेन प्रयोगः । स्तुतिं कृत्वेत्यर्थः । देवाद्यास्तेन रामेण सार्धं सुखं यथा स्यात्तथा स्थिताः ॥ १ ॥

स्तुवन्त्येवं हि ऋषयस्तदा रावण आसुरः ।
रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ।
स रावण इति ख्यातो यद्वा रावाच्च रावणः ॥ २ ॥

स्तुवन्तीति । यथा च देवाः स्तुवन्त्येवमृषयोऽपीत्यर्थः । एवमाखरमारणं देवा ऋषयश्च रामेण सार्धं रामेण स्तुवन्तः सुखं स्थिताः । रामोत्कर्षाद्राक्षसपराभवाच्च तद-

---

१ घ. च. सीता . २ क. ख, छ. रक्षां । ३ छ. °त्यासुर° । ४ त्वदीयानस्मानिति पाठः ।

नन्तरं तु विप्रया शूर्पणखया रावणभगिन्या राक्षस्या रावणं प्रति खरादिवधवृत्तान्ते निवेदिते रावणेन कपटमृगेण वीरौ वञ्चयित्वा शीताहरणे कृते देवा ऋषयश्च सुखं न स्थिताः । शीताहरणाद्रामदुःखेन दुःखिता जाता इति भावः । तदेव कथानकं रावणवधाख्यं श्रोतृवक्तृपापक्षयार्थं करुणयर्चो वर्णयन्ति—तदेति । तदा खरादिषु हतेषु रावणनामाऽऽसुरः । असुर एवाऽऽसुरः प्रज्ञादिभ्यश्चेति प्रसिद्धः स्वार्थेऽण् । यो रामपत्नीं वनस्थां स्वनिवृत्त्यर्थं स्वविनाशार्थमाददे स रावण इति ख्यातः । आदानकर्मणा रामपत्नीं वनस्थामाददे रावण इति रावणपदव्युत्पत्तिः । पूर्वपदस्यान्तलोप उत्तरपदे नस्य णत्वं पृषोदरादित्वात्साधुः । अर्थान्तरं यद्वेति । अथवा रावाच्छब्दात्कैलासतोलनावसर ईश्वरेण भारे दत्ते रौति स्म तेन रावणः । ततः पूर्वं तु दशाननामाऽभूत् । सीताहरणे कारणं पञ्चवट्यां गोदातटे रामलक्ष्णौ चिरमुषितौ तौ कदाचिद्रावणानुजया शूर्पणखया दृष्टौ सा च तयो रूपेण मोहिताऽन्यतरं वरीतुं कुमारीरूपं धृत्वा रामसंनिधावागत्य वरत्वेन रामं बव्रे तेन सपत्नीकत्वादेकपत्नीव्रतित्वाच्च निषिद्धा लक्ष्मणमागता तेनापि व्रतितया निषिद्धा पुना राममागता तदा तां वृषस्यन्तीं दृष्ट्वा शीता[3] जहास तस्या हासं दृष्ट्वा राक्षसी कुपिता निजरूपं विकृतं दर्शितवती ततो लक्ष्मणेन तस्या नासाकर्णं खड्गेन च्छिन्नं ततो जनस्थानं गता खरादीनाहूय योधयित्वा रामेण मारितवती । तत एकाऽवशिष्टा लङ्कां गत्वा रावणाय शीतारूपातिरेकमुक्तवती स्त्रीलोभेन स समारीचः शीतां हर्तुमागत इति ॥ २ ॥

**तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥ ३ ॥**
**विचेरतुस्तदा भूमौ देवीं संदृश्य चाऽऽसुरम् ।**
**हत्वा कबन्धं शबरीं गत्वा तस्याऽऽज्ञया तया ॥ ४ ॥**
**पूजिता[6]वीरपुत्रेण भक्तेन च कपीश्वरम् ।**
**आहूय शंसतां सर्वमाद्यन्तं रामलक्ष्मणौ ॥ ५ ॥**

तदिति । तत्तस्माद्यतो रामपत्नीमाददे तस्मात्कारणाच्छीतामीक्षितुं यद्व्याजं तेन विचेरतुर्न तु शीतेक्षणमुद्देश्यं किंतु दशास्यवध एवोद्देश्यो यदर्थं देवप्रार्थनयाऽवतीर्णौ शीता तु देवेच्छामात्रेणाप्यागच्छेन्नापहर्तुं शक्येत । भूमावुपानदाद्यनन्तर्हितायां विचेरतुः । देवीं राजपत्नीं शीतां संदृश्येतस्ततो विलोक्याऽऽसुरं कबन्धं हत्वा शबरीं तापसीं गत्वा प्राप्य तत्कृतं स्वागतं गृहीत्वा तस्य रामस्याऽऽज्ञया तया शबर्या पूजितौ सन्तौ । ईरो वायुस्तस्य पुत्रेण भक्तेन भजनपरेण हनूमता करणेन प्रयोज्यकर्त्रा वा कपीश्वरं सुग्रीवमाहूय शंसतां कथितवन्तौ । सर्वमाद्यन्तमादिश्चान्तश्चाद्यन्तावाहिताग्न्या-

१ घ. °त्वा सीता° । २ घ. °ताः सीता° । ३ घ. सीता । ४ घ. °णात्सीता° । ५ ख. ग. घ. च. छ. तथा । ६ क. °जितौ वायुपु° । ७ घ. सीता । ८ घ. सीतां ।

दिषु ताभ्यामाऽऽद्यन्तमादित आरभ्यान्तं यावत् । राज्याभिषेकसंभारादारभ्य शीताहरणान्तम् । भक्तेनेत्यनेन रामपरत्वाद्धनूमतोऽपि रामभक्तं प्रति पूज्यतोक्ता । तन्मन्त्रो यथा—“ नमो भगवत आञ्जनेयाय महाबलाय स्वाहा ” । अयं मन्त्रः प्रधानमङ्गं चाष्टादशाक्षरो भूतादिनाशनो मन्त्रराजः । ईश्वरानुष्टुब्हनूमन्त ऋष्याद्याः । हं बीजं स्वाहा शक्तिः । हनुमत्प्रीत्यर्थे जपे विनियोगः । नमो भगवत आञ्जनेयायाङ्गुष्ठाभ्यां नमः । रुद्रमूर्तये तर्जनीभ्यां नमः । वायुपुत्राय मध्यमाभ्यां नमः । अग्निगर्भायानामिकाभ्यां नमः । रामहिताय कनिष्ठिकाभ्यां नमः । ब्रह्मास्त्रनिवारणाय करतलकरपृष्ठाभ्यां नमः । एभिरेव षडङ्गम् ।

ततो ध्यानम्—“ स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ।
कुण्डलद्वयसंशोभिमुखाम्भोजं मुहुर्मुहुः ॥
अयुतं तु पुरश्चर्या रामस्याग्रे शिवस्य च ।
पूजां तु वैष्णवे पीठे शैवे वा विदधीत वै ॥
आवृत्तीभिर्विना नित्यं नक्ताशी विजितेन्द्रियः ”॥ इति ॥ ३ ॥ ४ ॥ ५ ॥

**स तु रामे शङ्कितः सन्प्रत्ययार्थं च दुन्दुभेः ।**
**विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ ६ ॥**

ततो रामेण सुग्रीवस्य राज्ये प्रतिज्ञाते सति स तु रामे शङ्कितो वालिवधे रामस्य सामर्थ्यमस्ति न वेति संदिग्धः सन्प्रत्ययार्थं स्वविश्वासार्थम् । तत्प्रत्ययार्थमितिपाठे तस्मिन्रामे पौरुषस्य विश्वासार्थम् । दुन्दुभेर्दैत्यस्य वालिहतस्य विग्रहमास्थिपुञ्जं रामाय दर्शयामास । अयं दैत्यो वालिना हत इति ततो यो रामो दुन्दुभेर्द्रष्टा स तं दुन्दुभिमचिक्षिपत् । अनतिप्रयत्नेनैव क्षिप्तवान् । अथवा यस्तु मातरिश्वनीतिनिघण्टोर्यो मातरिश्वेव वायुरिव शीघ्रकारी रामस्तं विग्रहमचिक्षिपत् ॥ ६ ॥

**सप्त तालान्विभिद्याऽऽशु मोदते राघवस्तदा ॥ ७ ॥**
**तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ।**
**जगामागर्जदनुजो वालिनो वेगतो गृहात् ॥ ८ ॥**
**वाली तदा निर्जगाम तं वालिनमथाऽऽहवे ।**
**निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः ॥ ९ ॥(४१)**

**इति श्रीरामपूर्वतापनीयोपनिषदि पञ्चमः खण्डः ॥ ५ ॥**

ततो बलनिश्चये सत्यपि धानुष्कतासंदेहनिरासार्थं सप्ततालानेकेन बाणेनाऽऽशु शीघ्रं विभिद्य निर्भिद्य मोदते रघोरपत्यं तदा शीघ्रकारी रामः । सन्मित्रलाभः स्वपौरुषसाफल्यं च मोदे हेतुः । वर्तमानकालनिर्देशस्तु कल्पे कल्प एवं भवतीतिद्योतनार्थः । तेन रामपौरुषनिश्चयेन सुग्रीवो हृष्टः सन्सरामो रामसहित-

स्तस्य वालिनः पत्तनं नगरं किष्किन्धां जगाम गतवान् । ततोऽगर्जत्सिंहनादं कृतवाननुजः कनिष्ठो वालिन इत्युभाभ्यां संबध्यते । वेगतो वेगेन गृहाद्वाली तदा गर्जनानन्तरं निर्जगाम गृहान्निर्गतः । गृहानित्यपपाठः । वेगत इत्यनेनावान्तरकथा सूचिता । विपरीतनिमित्तान्यवमत्य ताराकृतनिषेधमविगणय्य निर्गत एव। ततो वालिसुग्रीवयोः सरूपत्वाद्भेदानवबोधाद्राम उदासीने सति वालिना सुग्रीवो निर्जितो हन्तुमारब्धः पलाय्य वालिदुर्गमम्‌ऋष्यमूकमागत आगत्य राममुपालब्धवान् । श्रीरामेणाविवेकाज्ञानं कारणमुक्त्वा स्वर्णपद्ममयीं मालां कण्ठे बद्ध्वा परदिने पुनः प्रेषितो द्वारे गत्वा पुनरगर्जत्ततो वालिना निर्गन्तुमारब्धे तारया विचार्योक्तं पूर्वदिने भग्नो निवृत्तोऽप्यद्य पुनरागतोऽत्रास्ति किंचिदाकूतं दशरथात्मजौ वने पितुराज्ञयाऽऽगताविति मया पान्थेभ्यः श्रुतं नूनं तौ बलिनावनेन सहायौ प्राप्तावितरथा न पुनस्त्वत्संमुखमागच्छेत्त्वं विचार्य योद्धुं गच्छ सहसा मा गा इति निषिद्धोऽपि तद्वाक्यं तौ च वीरौ श्रुतावप्यवमत्य वेगतो मुमूर्षुर्निर्जगामैवेति । अथ संग्रामोपक्रम एव बहुकालं युद्धे पुनः सुग्रीवो मा खिददिति युद्धारम्भ एव, आहवे भ्रात्रोरेव संग्राम एकेषुणा वालिनमज्ञातो निहत्य राघवः सुग्रीवं राज्ये स्थापयेत्स्थापयति । रामस्य वालिनोऽज्ञानहननमनाहूय हननमन्यासक्तहननं चानुचितमिति चेन्न । ईश्वरत्वेनोचितत्वाद्यथा जामदग्न्यस्य मातृहननं हरस्य विषपानं कृष्णस्य गोपीसङ्गः । तथा चोक्तम्—"ईश्वराणां वचस्तथ्यं क्वचिदाचरितं तथा" इति । अनेन ताटकावधः शूर्पणखाविरूपकरणं च समाहितम् । वालिना हि रावणाय मैत्री दत्ता तेन दोषेण रामकोपपात्रं बभूव तस्य हि ज्ञातेन वधो नेति ब्रह्मणो वरः । यद्यत्रैवं राघवो न हन्यात्तर्हि रावणस्य युद्धकाले सहायत्वेनोपेयात्ततश्च तत्राप्युपायेन वध्यः स्याद्वरमत्रैव हननमित्यभिप्रेत्य सर्वविदेश्वरेण निर्लेपेनात्रैव हतः । श्रीराम इममधर्माभासमालोक्य तारया शापो दत्तो लब्धाऽपि शीता तव पुनर्यास्यतीति । एतत्कर्मफलमनुकुर्वञ्श्रीकृष्णो व्याधकृतशरघातं चरणगतमनुमेने व्याधो हि वसुदेवाद्दास्यां जातो भगवतो भ्राता तेन लोकस्य कर्मविश्वासार्थं जगदीशेन कर्मानुकारो दर्शितो वस्तुतस्त्वस्यासङ्गस्य कृताकृते न स्तः । तेन वेदाज्ञाऽतत्त्वविद्विषया नेश्वरविषया ॥ ७ ॥ ॥ ८ ॥ ९ ॥

इति दीपिकायां पञ्चमः खण्डः ॥ ५ ॥

---

**हरीनाहूय सुग्रीवस्त्वाह चाऽऽशाविदोऽधुना ॥ १ ॥**
**आदाय मैथिलीमद्य ददत श्वाशु गच्छत* ।**
**ततस्ततार हनुमानब्धिं लङ्कां समाययौ ॥ २ ॥**

* एतस्यानन्तरम् 'दक्षिणाशां विचिन्वन्तः संपातिना प्रबोधिताः' इत्यर्धमधिकं क. पुस्तके दृश्यते ।

ततः पश्चाद्वर्षापगमे शरदि प्राप्तायां हरीन्वानरान्दिगन्तेभ्य आहूयाऽऽदरेणाऽऽकार्य सर्वेषु शृण्वत्सु त्वाह तुशब्देन मासादर्वाक्शुद्धचनानयने राजदण्डः सूचितः । ह आशाविदो दिक्कुशलाः । अद्याधुना शु शीघ्रं गच्छत । आशु मासादर्वाङ्मैथिलीमादाय गृहीत्वा रामाय ददत । श्वाशु । स्वरूपतो वा संदेशतो वाऽऽश्वादायाऽऽशु ददतेत्यर्थः । शुशब्द आश्चर्ये । ददत 'शु' 'आशु' इति पदच्छेदः । यथा शुनाशीरः श्वशुर इति । ततोऽनन्तरं हनुमानीरपुत्रोऽब्धिं समुद्रं ततार तीर्णवांस्तीर्त्वा लङ्कां समाययौ । कथाविस्तरस्तु वाल्मीकीयाद्बोद्धव्यः ॥ १ ॥ २ ॥

**सीतां दृष्ट्वाऽसुरान्हत्वा पुरं दग्ध्वा तथा स्वयम् ।**
**स्वयमागत्य रामाय न्यवेदयत तत्त्वतः ॥ ३ ॥**

अशोकवनिकायां वाटिकायां दृष्ट्वाऽसुरानक्षकुमारादीन्हत्वा पुरं लङ्कां पुच्छाग्निना दग्ध्वा तथा स्वयं रामं प्रत्यागत्य रामाय स्वयं स्वमुखेन तत्त्वतो न न्यूनं नाप्यधिकं न्यवेदयत नितरां बोधितवान् । द्विः स्वयंपदमसत्यताशङ्कानिवृत्त्यर्थम् । स्वयं कृतं दृष्टं वाऽसंदिग्धं भवति ॥ ३ ॥

**तदा रामः क्रोधरूपी तानाहूयाथ वानरान् ।**
**तैः सार्धमादायास्त्रांश्च पुरीं लङ्कां समाययौ ॥ ४ ॥**

तदा तत्क्षणमेव मध्याह्नेऽभिजिन्मुहूर्ते क्रोधरूपी क्रोधं रूपयति निरूपयत्यन्यान्दर्शयति तद्धर्मा वस्तुतस्त्वक्रोध एव 'नित्यः स्वच्छाशयः' इत्युक्तेः । तैः सार्धं लङ्कां समाययौ । समाङ्भ्यां समुद्रोपदेशेन सेतुबन्धः सूचितः । किं कृत्वाऽस्त्रानेकोनपञ्चाशतः प्रयोगमन्त्रानेकोनपञ्चाशतः संहारमन्त्रान्विश्वामित्रोपदिष्टान्कृशाश्वसुतानादाय गृहीत्वा ॥ ४ ॥

**तां दृष्ट्वा तदधीशेन सार्धं युद्धमकारयत् ।**
**घटश्रोत्रसहस्राक्षजिद्भ्यां युक्तं तमाहवे ॥ ५ ॥**

तामिति । तां लङ्कां दृष्ट्वा तदधीशेन रावणेन सार्धं युद्धमकारयत्कृतवान्कारितवान्वानरैरिति वा । घटश्रोत्रः कुम्भकर्णः । सहस्राक्षजिदिन्द्रजिन्मेघनादः ॥ ५ ॥

**हत्वा बिभीषणं तत्र स्थाप्याथ जनकात्मजाम् ।**
**आदायाङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥ ६ ॥**

तत्र लङ्कायामाधिपत्येन स्थाप्य स्थिरीकृत्य कीर्तिस्तम्भमिव तत्राऽऽरोप्याथ स्थापनानन्तरं तेनैवाऽऽनायितां जनकस्याऽऽत्मतृतस्याऽऽत्मजामादाय सर्वदेवादिसमक्षं वह्निपूतां गृहीत्वाऽङ्कस्थितां न तु लक्ष्मणादिसमीपस्थां कृत्वा । तदुक्तं पाद्मे—'ब्रह्मसूर्येन्द्ररुद्रा-

१ क. ग. घ. छ. °यास्त्राणिं पु° ।

द्विवन्द्यार्पितसतीप्रियः' इति । स्वपुरमयोध्यां तद्धि स्वपुरं न भरतस्य तेन न्यासतया पालितत्वात्तदेव जगाम न तु पूर्वां दिशं हनुमद्द्वारा भरतस्य भक्त्यातिशयदर्शनात् । तैर्वानरविभीषणादिभिः सह ॥ ६ ॥

अभिषिक्तदशां वर्णयति—

**ततः सिंहासनस्थः सन्द्विभुजो रघुनन्दनः ।**
**धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः ॥ ७ ॥**

तत इति । सिंहासनस्थो माहाराज्येऽभिषिक्तः । द्विभुजो मनुष्याकारविडम्बनः ॥७॥

**मुद्रां ज्ञानमयीं यामे वामे तेजःप्रकाशनम् ।**
**धृत्वा व्याख्यानिरताश्चिन्मयः परमेश्वरः ॥ ८ ॥**

यामे दक्षिणे बाहौ ज्ञानमुद्राम् । तल्लक्षणं तु—

"तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ।
वामं हस्ताम्बुजं वामे जानुमूर्धनि विन्यसेत् ।
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य वल्लभा" ॥ इति ।

वामे तेजःप्रकाशनं धनुर्धृत्वा । यद्वा प्रकाशनं तेजः पुस्तकाख्यां मुद्रां धृत्वा वाममुष्टिं स्वाभिमुखीं कृत्वा पुस्तकमुद्रिकाव्याख्याने निरतः स्थितः । व्याख्यानमुद्रा तु—

"दक्षिणाङ्गुष्ठतर्जन्यावग्रलग्ने पराङ्गुलीः ।
प्रसार्य संहतोत्ताना एषा व्याख्यानमुद्रिका ॥
रामस्य च सरस्वत्या अत्यन्तं प्रेयसी मता ।
ज्ञानव्याख्यापुस्तकानां युगपत्संभवः स्मृतः" ॥

धनुर्मुद्रा तु—"वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ।
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ॥
दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता" ॥ इति ॥ ८ ॥

एवं देवस्तुतिमारभ्याभिषेकान्तं श्रीरामचरितं निरूप्य पुनः पूर्वोक्तं षट्कोणमनुसृत्य यन्त्रस्थदेवता आवरणपूजार्थमाह—

**उदग्दाक्षिणयोः स्वस्य शत्रुघ्नभरतौ धृतः ।**
**हनुमन्तं च श्रोतारमग्रतः स्यात्त्रिकोणगम् ॥ ९ ॥**

उदग्दक्षिणयोरिति । स्वस्य रामस्य न तु पूजकस्य । धृत इत्यत्र धृतचामराविति पदलोपो द्रष्टव्यः । तदुक्तम्—"उभौ भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ" इति । यद्वा धृङ् स्थैर्ये व्यत्ययेन परस्मैपदं छान्दसः शब्लुक् । धृतः स्थिरीभूय तिष्ठतः । हनुमन्तं

१ क. °नस्थस्तु द्विभु° । २ क. °काशिनीम् ।

श्रोतारं रामे व्याख्यातरि शिष्यमग्रतो गुरोरग्रे त्रिकोणगं पूजयेदिति प्रकारः स्यात् । अथवा भरतशत्रुघ्नौ धृतो धृतवान्रामः स्यादग्रतो हनुमन्तं च धृतः स्यात् । कर्तरि क्तः । न लोकाव्ययेति षष्ठीनिषेधः ॥ ९ ॥

**भरताधस्तु सुग्रीवं शत्रुघ्नाधो विभीषणम् ।**
**पश्चिमे लक्ष्मणं धृत्वा धृतच्छत्रं सचामरम् ॥ १० ॥**

भरताधो रामाद्भरतव्यवधानेन । धृत्वाऽऽस्थाप्यैष रामः कर्ता संयुतः स्यात् । प्रथमं 'दक्षिणे लक्ष्मणेन' इत्युक्तमत्र 'पश्चिमे लक्ष्मणं धृत्वा' इत्युच्यत इति विरोध इति चेन्न । तत्र वनवासावस्थायां भरताद्यसांनिध्ये ध्यानविशेष उक्तः । अत्र तु राज्याभिषेकानन्तरं भरतादिसांनिध्ये पश्चादवस्थानमुच्यत इत्यविरोधः ॥ १० ॥

**तदधस्तौ तालवृन्तकरौ त्र्यस्रं पुनर्भवेत् ।**
**एवं षट्कोणमादौ स्वदीर्घाङ्गैरेष संयुतः ॥ ११ ॥**

तदधो लक्ष्मणाधः । तौ भरतशत्रुघ्नौ व्यजनहस्तौ धृत्वा व्याख्यानानिरतः स्थित इत्यनुषङ्गः । पुनस्त्र्यस्रं भवेत्तेनैवं षडस्रं जातं तद्रचनाप्रकारं वक्ष्यति । इदानीमावरणान्याह—**आदाविति** । एष देव आदौ प्रथमावरणे स्वदीर्घाङ्गैः स्वस्य दीर्घाङ्गैः रां रीं रूं रैं रौं रः इत्येतैः संयुतः स्यात् ॥ ११ ॥

**द्वितीयं वासुदेवाद्यैराग्नेय्यादिषु संयुतः ।**
**तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा ॥ १२ ॥**
**बिभीषणं लक्ष्मणं चाङ्गदं चारिविमर्दनम् ।**
**जाम्बवन्तं च तैर्युक्तस्ततो धृष्टिर्जयन्तकः ॥ १३ ॥**
**विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च ।**
**अंकोपो धर्मपालश्च सुमन्त्रैरेभिरावृतः ॥ १४ ॥**

द्वितीयमावरणं वासुदेवाद्यैः स्यात् । द्वितीये दिङ्नियम उच्यते । आग्नेयादिषु संयुतो देवः स्यात्तदा भवति । आग्नेये वासुदेवो दक्षिणे शान्तिः । एवं क्रमेण संकर्षणः श्रीः प्रद्युम्नः सरस्वत्यनिरुद्धो रतिरिति । इदं दलमूले । **तृतीयमिति** । वायुपुत्रादीन्प्राप्य तैर्युक्तो देवो यदा भवति तदा तृतीयं भवेदित्यर्थः । एते षोडश सुमन्त्रान्ताः पूर्वादिद्व्यष्टपत्रेषु क्रमेण पूज्याः । इदं दलमध्ये । एषां षोडश बीजानि वक्ष्यन्ते । ततोऽनन्तरं सुमन्त्रैः सुमन्त्रसहितैरेभिरावृतश्चेत्तदा तृतीयं भवति । धृष्टिस्थाने सृष्टिरिति केचित्पठन्ति । सर्वेषां तृतीयायोगसिद्ध्यर्थमेभिरित्युक्तम् । षट्कोणे पूजितानां वायुपुत्रादीनां पुन-

---

१ क. °क्षपणस्तस्य धृ° । २ क. °च्छत्रः स° । ३ क. °भरः । त° । ४ क. °रेव सं । ५ क. °युतम् । द्वि° । ६ ङ. रं । ७ क. संयुनम् । ८ क. °णं तु चा° । ख. °णं तु च चा° । ग. घ. छ. °णं च अङ्ग° । ९ क. ग. घ. छ °रिम° । १० क. अशोको । ११ ख. ग. घ. छ. °तः । ततः स° ।

स्तृतीयेऽपि पूजनमयुक्तमिति विरोध इति चेत्सत्यं भक्त्युद्रेकेण रूपद्वयेन सेवनाददोषः ॥ १२ ॥ १३ ॥ १४ ॥

चतुर्थमाह—

**सहस्रदृग्वह्निधर्मरक्षोवरुणानिलाः ।**
**इन्द्वीशधात्रनन्ताश्च दशभिस्त्वेभिरावृतः ॥ १५ ॥**
**बहिस्तदायुधैः पूज्यो नलादिभिरलंकृतः ।**
**वसिष्ठवामदेवादिमुनिभिः समुपासितः ॥ १६ ॥ (६६)**

**इति श्रीरामपूर्वतापनीयोपनिषदि षष्ठः खण्डः ॥ ६ ॥**

**सहस्रदृगिति** । सहस्रदृगिन्द्रः । धर्मो यमः । धर्मरक्षोवरुणवायव इति युक्तः पाठः । इन्दुश्चन्द्रः । ईश ईशानः । धाता ब्रह्मा स पूर्वेशानयोर्मध्ये पूज्यः । अनन्तः शेषः स निर्ऋतिवरुणयोर्मध्ये लं रं मं क्षं वं यं सं हं आं नैम्, इति लोकपालबीजानि । ततो बहिस्तदायुधैरावृतः पूज्यः । तदायुधान्युक्तानि—

वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।
शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः" ॥ इति ।

नलो नाम वानरोऽनलावतारो येन बद्धः सेतुर्नलसेतुरुच्यते । आदिशब्दवाच्यान्नीलाद्यान्षोडशदलावरणे वक्ष्यामः । एत इन्द्रादिभ्यः प्राग्द्रष्टव्याः । वसिष्ठादीभिश्च द्वादशभिः सेवितस्तेऽप्यावरणे पूज्या इति भावः । तानपि वक्ष्यति । एतेन दशावरणपक्षः सूचितः ॥ १५ ॥ १६ ॥

इति दीपिकायां षष्ठः खण्डः ॥ ६ ॥

---

**एवमुद्देशतः प्रोक्तं निर्देशस्तस्य चाधुना ।**
**त्रिरेखापुटमालिख्य मध्ये तारद्वयं लिखेत् ॥ १ ॥**
**तन्मध्ये बीजमालिख्य तदधः साध्यमालिखेत् ।**
**द्वितीयान्तं च तस्योर्ध्वे षष्ठ्यन्तं साधकं तथा ॥ २ ॥**
**कुरुद्वयं च तत्पार्श्वे लिखेद्बीजान्तरे रमाम् ।**
**तत्सर्वं प्रणवाभ्यां च वेष्टितं बुद्धिवृद्धिमान् ॥ ३ ॥**

एवमुद्देशतः संक्षेपतः । 'एवं कोणद्वयं भवेत् ' इत्यादिना पूजायन्त्रमुक्तं तस्याधुना निर्देशो निःशेषतो देश उपदेशः क्रियते । स्पष्टतरं रेषाक्रमयुक्तं वर्णक्रमयुक्तं च पूजायन्त्रमुपदिश्यते—"विना यन्त्रेण चेत्पूजा देवता न प्रसीदति" इत्युपक्रम्योक्तत्वादिदं

---

१ घ. तम् । २ ख. ध. छ. ङ. तस्योर्ध्वे ।

पूजायन्त्रम् । अगस्त्यसंहितायामष्टौ धारणयन्त्राण्युक्तानि तेष्वपि पूजाया उक्तत्वादस्यापि च धारणयोग्यत्वात्सर्वेषामुभयात्मकत्वमुचितं तथाऽप्येकैकप्रधानत्वात्पूजायन्त्रधारणयन्त्रयोर्भेदेनाऽऽगमे व्यवहारः । इदं पूजायन्त्रं तानि धारणयन्त्राणीति । **त्रिरेखेति**। त्रिधा रेखा त्रिकोणं तस्याः पुटद्वयं षट्कोणमालिख्य सम्यक्समरेखतया लिखित्वा मध्ये षट्कोणमध्ये तारद्वयं प्रणवद्वयं सव्यवधानं परस्पर म]संलग्नाग्रं लिखेत्तयोर्मध्ये आद्यबीजमालिख्य तस्याधः साध्यं षड्वत्यैया(?)न्यतराविषयमालिखेत् । कीदृशं द्वितीयाविभक्त्यन्तं तस्योर्ध्वे बीजस्योर्ध्वभागे षष्ठीविभक्त्यन्तं साधकं वश्यादिकारकं लिखेत् । कुर्वीतिवर्णद्वयं तत्पार्श्वे बीजस्य वामदक्षिणयोर्लिखेत् । बीजान्तरे बीजमध्ये साध्यस्योर्ध्वभागे रमां श्रीबीजं लिखेत् । तत्सर्वं बीजादि प्रणवाभ्यां पूर्वोक्ताभ्यां यथा वेष्टितं स्यात्तथा लिखेत्। बुद्धेर्वृद्धिस्तद्वाँल्लिपिविचक्षणः । तत्र समषट्कोणरचनाप्रकारो यथोक्तपरिमाणं वृत्तं कृत्वा प्राक्प्रत्यक्सूत्रमास्फाल्य तदग्रयोः सूत्रमवष्टभ्य वृत्तार्धपरिमाणेन सूत्रेण मत्स्यद्वयं कुर्यादेवं कृते मत्स्यचतुष्कं निष्पद्यते । पूर्वमत्स्यद्वये पश्चिममत्स्यद्वये च दक्षिणोत्तरगं सूत्रद्वयमास्फाल्य प्राक्सूत्रस्य प्रागग्रे सूत्रादिं निधाय पश्चिममत्स्ययोर्द्वयोस्तिर्यक्सूत्रद्वयमास्फालयेत्पुनः प्राक्सूत्रपश्चिमाग्रे सूत्रादिं निधाय पूर्वमत्स्यद्वयोस्तिर्यक्सूत्रद्वयमास्फालयेत् । प्राक्सूत्रं प्रत्यक्सूत्रं च वृत्तं च मार्जयेत् । एवं कृते पुटिते वह्निपुरद्वयं जायते ॥ १ ॥ २ ॥ ३ ॥

**दीर्घभाजि षडस्रेषु लिखेद्बीजं हृदादिभिः ।**
**कोणपार्श्वे रमामाये तदग्रेऽनङ्गमालिखेत् ॥ ४ ॥**

**दीर्घेति** । षडस्रेषु षट्कोणेषु हृदादिभिः सह हृदयाय नम इत्यादिजातिसहितं मूलस्य बीजं लिखेत्कीदृशं बीजं दीर्घभाजि दीर्घं भजति तच्छीलं दीर्घभाजि । आ ई ऊ ऐ औ अ इतिदीर्घयुक्तमित्यर्थः । कोणपार्श्वे त्रिकोणगण्डेषु रमाबीजमायाबीजे लिखेत् । तदग्रे कोणाग्रेऽनङ्गं कामबीजं लिखेत् । तेषामुद्धारो यथा—

" वातं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् ।
बीजमेतच्छ्रियः प्रोक्तं चिन्तारत्नमिवापरम् ॥
लकुलीशोऽग्निमारूढो वामनेत्रार्धचन्द्रवान् ।
बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥
ब्रह्मा भूम्यासनासीनः शान्तिबिन्दुसमन्वितः ।
बीजं मनोभुवः प्रोक्तं जगत्त्रयविमोहनम् " इति ॥ ४ ॥

**क्रोधं कोणाग्रान्तरेषु लिख्य मन्त्र्यभितो गिरम् ।**
**वृत्तत्रयं साष्टपत्रं सरोजं विलिखेत्स्वरान् ॥ ५ ॥**

१ ब. षड्वत्य° । २ क. षडग्रेषु । ३ ङ. °मोहितम् । ४ ख. °मन्त्रमजो गि° ।

केसरेष्वष्टपत्रे[1] च वर्गाष्टकमथाऽऽलिखेत् ।
तेषु मालामनोर्वर्णान्विलिखेदूर्मिसंख्यया ॥ ६ ॥

**क्रोधमिति** । क्रोधो हुंकारं चेति वक्ष्यमाणो 'हुंकारः । हुंक्रोधबीजं कवचम्' इति **लक्ष्मीकुलार्णवे** । तं क्रोधं कोणाग्रेषु कोणान्तरेषु च लिख्य लिखित्वा । अभितः पारितः क्रोधोभयपार्श्वेषु गिरं सारस्वतबीजमैमिति लिखेत् । वृत्तत्रयं षट्कोणस्योपर्येकं वृत्तं मध्ये केसरोपारि चैकं पत्राग्रे चैकमष्टपत्रसहितं सरोजं कमलं विलिखेत्स्वरान्केसरेषु च द्विशो विलिखेत् । अष्टपत्रे च स्वरोपरि वर्गाष्टकं कचटतपयशल्ला(ळा)ख्यं लिखेत्तेषु पत्रेषु वक्ष्यमाणमालामन्त्रवर्णानूर्मिसंख्यया षट्संख्यया विलिखेत् ।

" प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमोहने ।
जरामृत्यू च देहस्य षडूर्मिरहितः शिवः " ॥ इत्यूर्मयः ।

षट्संख्ययेति वक्तव्य ऊर्मिग्रहणं प्रत्येकं वर्णानामेकैकोर्मिनाशकत्वसूचनाय । कमललेखनप्रकारो यथा—**शारदातिलके**—

" पद्मक्षेत्रस्य संत्यज्य द्वादशांशं ततः सुधीः ।
तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः ॥
आद्यं स्यात्कर्णिकास्थानं केसराणां द्वितीयकम् ।
तृतीयं तत्र पत्राणां मुक्तांशेन दलाग्रकम् ॥
बाह्यवृत्तान्तरालस्य मानं यद्विधिना सुधीः ।
निधाय केसराग्रेषु पारितोऽर्धनिशाकरान् ॥
लिखित्वा संधिसंस्थानि तत्र सूत्राणि पातयेत् ।
दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत् ॥
तदन्तराले तन्मध्यसूत्रस्योभयतः सुधीः ।
आलिखेद्बाह्यहस्तेन दलाग्राणि समन्ततः ॥
दलमूलेषु युगशः केसराणि प्रकल्पयेत् ।
एतत्साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः " ॥

अस्यार्थः । पद्मकरणमाह—**पद्मेति** । तत्र षट्त्रिंशत्पदात्मकं पद्मक्षेत्रं तद्दिक्सूत्रद्वयेन कर्णसूत्रद्वयेन चाष्टधा भेदितं वर्तते तान्येव सूत्राणि पत्रमध्यसूत्राणि । तत्र प्रकारः । पद्मक्षेत्रायामं द्वादशधा विभज्यैकांशं सर्वतो बहिस्त्यजेत्ततो दश भागान्षोढा विभज्य मध्ये सूत्राणि संस्थाप्यांशद्वयेनैकं वृत्तं तदुपर्यंशद्वयेनापरं तदुपर्यंशद्वयेनान्यदिति वृत्तत्रयं कुर्यात् । आद्यमित्याद्युक्तिस्तु वक्ष्यमाणानामङ्गावरणादीनां[2] स्थानसूचनायेत्यवधे-

१ क. °रे चाष्ट° । २ ख. °णाङ्गा° ।

यम् । **मुक्तांशेनेति** । द्वादशांशेन तत्र वृत्तमग्रे वक्ष्यति । **बाह्येति** । बाह्यं यत्पत्रवृत्तं तस्य यदन्तरालं तस्य मानेन सुधीः केसराग्रेषु केसरवृत्ताग्रे निधाय सूत्रादिमिति शेषः । विधिना पारित उभयतः पत्रमध्यसूत्राणामिति शेषः । अर्धनिशाकराँल्लिखित्वा संधिसंस्थान्यर्धनिशाकरसंधिसंस्थानि चत्वारि सूत्राणि तत्र पातयेदिति संबन्धः । मानं यद्विधिनेतिपाठे बाह्यवृत्तान्तरालस्य यन्मानं तेन विधिना तेन मानेनेत्यर्थः । तत्रायं विधिः । पत्रवृत्तान्तरालमितसूत्रं[1] केसरवृत्तदिक्सूत्रसंपाते संस्थाप्य तद्दिक्सूत्रोभयतः पत्रवृत्तस्पर्शिकेसरवृत्तलग्नान्तद्वयमर्धचन्द्रं लिखेदेवं चतुर्षु दिक्सूत्रेषु चतुर्षु कोणसूत्रेषु च कृतेऽष्टार्धचन्द्रा जायन्ते । एतच्च केसराग्रेष्विति बहुवचनादेव लभ्यते । यतोऽष्टपत्रमध्येऽष्टौ केसरस्थानानि ततोऽष्टदलसिद्धिरिति । तेनार्धचन्द्रयोः परस्परसंपातरूपाष्टसंधिषु संमुखीनयोर्द्वयोरेकैकं सूत्रं दद्यात् । एवमष्टपत्राणामप्यष्टौ सीमारेखा उत्पद्यन्ते संध्यधोवृत्तिसीमारेखोभयतः स्थितोऽर्धनिशाकरांशो मार्जनीयस्तदुक्तम्—

"दलप्रसिद्ध्यै दलमध्यसंधौ निधाय सूत्रं तु दलान्तराले ।
दलान्तरालोभयसङ्क्रमोत्थैः शशाङ्कखण्डैस्तु दलं प्रसिध्येत्" ॥ इति ।

अन्यत्रापि—

"उक्तक्षेत्रस्य दिक्सूत्रं संस्थाप्यान्याद्विमृश्य तु ।
प्रसार्य कोणसूत्रे द्वे वृत्तदिङ्मत्स्यमानतः ॥
निधाय केसराग्रेषु दलसंधींस्तु लाञ्छयेत् ।
पातयित्वा तु सूत्राणि तत्र पत्राष्टकं लिखेत्" ॥

चतुर्थं वृत्तमाह—**दलेति** । दलाग्राणां यन्मानं बहिस्त्यक्तद्वादशांशरूपं तन्मानं चतुर्थं वृत्तं कुर्यात् । दलाग्रकरणप्रकारमाह— **तदिति** । तदन्तराले कृतदलाग्रवृत्तान्तराले तन्मध्यसूत्रस्य पत्रमध्यसूत्रस्योभयतो बाह्यहस्तेन समन्ततो दिक्षु विदिक्ष्वपि दलाग्राणि सुधीरालिखेदिति संबन्धः । तत्र प्रकारः । चतुर्थवृत्तान्तराले पत्रमध्यसूत्रस्योभयतः संधिसूत्रस्याग्रे सूत्रादिं निधाय[2] पत्रस्पृष्टपत्रमध्यवृत्ततो दलाग्रवृत्तपत्रसूत्रसंपातपर्यन्तं सूत्रद्वयं दद्यात्तत्सूत्रप्रान्त एकः पत्रसीमासूत्रान्तस्पर्शी द्वितीयो दलाग्रमध्यसूत्रसंपातस्पर्शी सूत्रद्वयाग्रभागश्च परस्पराभिमुखो यथा स्यादित्येतदर्थं बाह्यहस्तेनेत्युक्तम् । ततः कर्णिकावृत्तं त्यक्त्वा बाह्यसूत्राणि वृत्तानि पद्मपत्रमध्यरेखाश्च सर्वं सम्यङ्मार्जयेत् । यथाऽष्टदलं पद्मं दृष्टिमनोहरं दृश्यते । केसरप्रकारमाह—**दलेति** । कर्णिकावृत्तस्पर्शिसंधिगतपत्रसीमासूत्रान्तराले पत्रमध्यसूत्रस्योभयत एकैकस्मिन्पत्रे द्वौ द्वौ केसरौ कर्णिकावृत्तलग्नमूलौ केसरवृत्तलग्नाग्रावग्रे किंचित्स्थूलौ परस्परसंमुखौ कुर्यात् । उपसंहरति—**एतदिति** । यत्र कुत्रापि पङ्कजं कुर्यादिति वक्ष्यति तत्रायं प्रकारो ज्ञेयः[3] पीठं

१ ङ. °मितिसू° । २ व. ङ. °य म° । ३ व. ङ. ज्ञेय इति ।

कुर्यादिति । दिक्षु कोणेषु च रेखाचतुष्टयेऽष्टदलं भवति । कोणेषु रेखाद्वयदानेन रेखाषट्के दत्ते द्वादशदलं भवति । अष्टदलस्य रेखाचतुष्टयान्तराल एकैकरेखादानेन रेखाष्टके दत्ते षोडशदलं भवति । षोडशरेखान्तराले पुनरेकैकरेखादाने द्वात्रिंशद्दलं भवति । एवमग्रेऽप्यूह्यम् ॥ ५ ॥ ६ ॥

**अन्ते पञ्चाक्षरानेवं पुनरष्टदलं लिखेत् ।**
**तेषु नारायणाष्टार्णं लिखेत्तत्केसरे रमाम् ॥ ७ ॥**
**तद्बहिर्द्वादशदलं विलिखेद्द्वादशाक्षरम् ।**
**तथों नमो भगवते वासुदेवाय इत्ययम् ॥ ८ ॥ ( ७४ )**

**इति श्रीरामपूर्वतापनीयोपनिषदि सप्तमः खण्डः ॥ ७ ॥**

अन्ते चरमपत्रे । पञ्चाक्षरांस्तावतामेवावशिष्टत्वात् । एवं पूर्वोक्तवृत्तत्रयं साष्टपत्रमित्यादिमार्गेण पुनरष्टदलं लिखेत् । तेषु दलेषु लिखेत् । रमां श्रीबीजं तदुपारि द्वादशदलं पद्मम् । द्वादशाक्षरं पत्रेष्विति शेषः । तथा नारायणाष्टाक्षरमों नमो नारायणायेति प्रत्येकमेकैकाक्षरं लिखेत्केसरेषु विलिखेदित्यर्थः । द्वादशाक्षरमाह—ॐ **नम इति ।** अयं द्वादशार्णो ज्ञेय इत्यर्थः ॥ ७ ॥ ८ ॥

इति दीपिकायां सप्तमः खण्डः ॥ ७ ॥

---

**आदिक्षान्तान्केसरेषु वृत्ताकारेण संलिखेत् ।**
**तद्बहिः षोडशदलं लिखेत्तत्केसरे ह्रियम् ॥ १ ॥**

आदिक्षान्तानकारादिक्षकारान्तान्वृत्ताकारेण न तु वैषम्येण प्रतिकेसरं चतुरश्चतुरो लिखित्वाऽन्तिमे सप्तेति संभवः । ह्रियं मायाम् ॥ १ ॥

**वर्मास्त्रनतिसंयुक्तं दलेषु द्वादशाक्षरम् ॥ २ ॥**
**तत्संधिष्वीरजादीनां मन्त्रान्मन्त्री समालिखेत् ।**
**हूँ स्रँ भ्रूँ व्रूँ लूँ शूँ जूँ च लिखेत्सम्यक्ततो बहिः ॥ ३ ॥**
**द्वात्रिंशारं महापद्मं नादबिन्दुसमायुतम् ।**
**विलिखेन्मन्त्रराजार्णांस्तेषु पत्रेषु यत्नतः ॥ ४ ॥**
**ध्यायेदष्ट वसूनेकादश रुद्रांश्च तत्र वै ।**
**द्वादशेनांश्च धातारं वषट्कारं ततो बहिः ॥ ५ ॥**
**भूगृहं वज्रशूलाढ्यं रेखात्रयसमन्वितम् ।**
**द्वारोपेतं च राश्यादिभूषितं फणिसंयुतम् ॥ ६ ॥**

**इति श्रीरामपूर्वतापनीयोपनिषद्यष्टमः खण्डः ॥ ८ ॥**

---

१ क. °द्वार्णाल्लिखे° । २ क. अथों । ३ घ. ङ. °तुश्च° । ४ क. छ. °रं च तद्बहिः ।

वर्म हुमस्त्रं फण्नतिर्नमःशब्दः । दलेषु षोडशसु प्रत्येकं पूर्वादिषु द्वादश वर्णांश्चतुर्ष्वे- वशिष्टेषु ' हुं ' ' फट् ' ' न ' ' मः ' इत्येवम् । तत्संधिषु षोडशपत्रसंधिषु । **ईरजादीनामिति** । ईरो वायुस्तज्जो हनूमांस्तदादीनामावरणोक्तानां षोडशानां स्वाद्यक्षरादीनि ऋकारबिन्दुसहितानि षोडश बीजानि । अङ्गदस्य त्वमित्यकोपस्याप्यमिति धृष्टेर्धर्मपालस्य च धृमिति राष्ट्रवर्धनस्य ऋमिति बीजानि चकारसमुच्चितानि । हनुमतो हृमिति सुग्रीवसुराष्ट्रसुमन्त्राणां सृमिति भरतस्य भृमिति विभीषणविजययोर्वृमिति लक्ष्मणस्य लृमिति शत्रुमर्दनस्य शृमिति जाम्बवन्तजयन्तयोर्जृमिति सप्त पठितानि पृथक्षोडशसंधिस्थानेषु लिखेत् । **नादेति** । नादोऽर्धचन्द्रो बिन्दुश्चन्द्रस्ताभ्यां प्रान्तेऽङ्कितम् । यद्वा नादबिन्दुसमायुतं यथा स्यात्तथा मन्त्रराजार्णान्नारसिंहान्सबिन्दुकाँल्लिखेत् । नारसिंहस्यैवाऽऽनुष्टुभस्य मन्त्रराजत्वात् । ' नारसिंहं लिखेन्मन्त्रम् ' इति तद्बीजसाहचर्याच्च । रघोरप्यानुष्टुभमाम्नायतो लिखेत् ।

तदुक्तम्— " तत्र त्वानुष्टुभं रघोः ।
श्रुत्यनुक्तमपि ग्राह्यं यदेतत्सांप्रदायिकम् " ॥ इति ।

**ध्यायेदष्टवसूनिति** । ते यथा—

" ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः " ॥ इति ।

तदस्त्राणि—" शूलं खड्गं तथा चक्रं पट्टिशं कवचं क्षुरम् ।
कोदण्डं मुद्गरं चैव वसूनामायुधक्रमः " ॥ इति ।

**रुद्रानिति** । ते यथा—

"वीरभद्रश्च शंभुश्च गिरीश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भवश्च भगवान्रुद्राश्चैकादश स्मृताः" ॥ इति ।

महायशा विशांपतिरिति विशेषणे । इत्येकादश रुद्राः । आयुधानि यथा—

"सङ्गं डमरुं शूलं शिखरं यमदंष्ट्रकम् ।
कृष्णादिकं पिनाकं च अघोरास्त्रं तथांऽशुकम् ।
खट्वाङ्गं स्थाणुपरशुं शक्तिहेतिधरास्तथा " ॥ इति ।

इनान्सूर्यांश्च । ते यथा—

"धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः" ॥

इति द्वादशाऽऽदित्याः आयुधानि तु—

"पाशं तु मुद्गरं शङ्खं खङ्गं शृङ्गं कृपाणकम्।
गदा दण्डो वज्रमब्जं तथा सर्पः सुदर्शनम्।
आदित्यानां द्वादशानामायुधानि विदुः क्रमात्"॥ इति।

**धातारमिति**। धाता प्रथमादित्यः। अयं तु वषट्कारस्य विशेषणं पुनरुक्तः। वषट्कारो हि दानार्थो दानेन च लोका धीयन्त इति वषट्कारो धाता भवति। ध्रुवादिवषट्कारान्तान्द्वात्रिंशत्पत्रेषु न्यसेत्। तदुक्तम्—"ध्रुवाद्यैरष्टमावृत्तिर्द्वात्रिंशद्दलपङ्कजे" इति। अथवा धाता विधाता तद्विशेषणं वषट्कारः स हि सर्वोपरितनत्वाच्छिखास्थानीयः शिखायै वषट् क्रियते। ततो बहिर्भागे भूगृहं भूपुरम्। तल्लक्षणं तु—"भूमेश्चतुरस्रं सवज्रकं पीतं च" इति। चतुरस्रप्रकारो यथा। प्राचीं प्रसाध्य—

"पूर्वापरायतं सूत्रं विन्यसेदुक्तमानतः।
तन्मध्यं किंचिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत्॥
तयोर्मध्ये स्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम्।
द्वाभ्यां द्वाभ्यां तथाऽग्राभ्यां कोणेषु मकराँल्लिखेत्॥
मत्स्यमध्यस्थिताग्राणि तत्र सूत्राणि पातयेत्।
चतुरस्रं भवेत्तत्र चतुष्कोष्ठसमन्वितम्"॥

तत्र कोष्ठचतुष्टये मार्जिते भूपुरं तत्र वज्रमन्योन्याभिमुखतया त्रिचक्रं रेखाद्वयं परस्परसंबद्धं वज्रमिति लक्षितं दिक्षु कुर्यात्। परस्परं संबद्धं मध्यरेखाद्वयमिति केचन। तच्च पीतवर्णरजोभिः पूरणीयं तेन पीतं भवति। दिक्षु वज्राढ्यं कोणेषु शूलाढ्यम्। **रेखेति**। सात्त्विकराजसतामसभेदेन। द्वारोपेतं मण्डपवद्राश्यादिभूषितं ज्योतिश्चक्रविराजितम्। परितो राश्यादि स्थाप्यमित्यर्थः। भूपुरमेव शूलाढ्यं सद्राशिचक्रं भवति। फणिभिरष्टकुलनायकैरष्टदिक्षु संयुतम्।

ते यथा—"अनन्तो वासुकिश्चैव तक्षककर्कोटपद्मकाः।
महापद्मस्तथा शङ्खः कुलिकोऽष्टौ कुलानि च॥
अनन्तकुलिकौ विप्रौ वह्निवर्णावुदाहृतौ।
प्रत्येकं तु सहस्रेण फणानां समलंकृतौ॥
वासुकिः शङ्खपालश्च क्षत्रियौ पीतवर्णकौ।
प्रत्येकं तु फणासप्तशतसंख्याविराजितौ॥
तक्षकश्च महापद्मो वैश्यावेताविह स्मृतौ।
नीलवर्णौ फणापञ्चशततुङ्गोत्तमाङ्गकौ॥
पद्मकर्कोटकौ शूद्रौ फणात्रिशतकान्वितौ"॥

इति तेषां ध्यानम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

इति दीपिकायामष्टमः खण्डः ॥ ८ ॥

---

**एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥**
**नारसिंहं च वाराहं लिखेन्मन्त्रद्वयं तथा ॥ १ ॥**

दिक्षु नारसिंहं विदिक्षु वाराहं लिखेत् ॥ १ ॥

नारसिंहमुद्धरति—

**कषरेफानुग्रहेन्दुनादशक्त्यादिभिर्युतः ।**
**यो नृसिंहः समाख्यातो ग्रहमारणकर्मणि ॥ २ ॥**

**कषेति** । कषयोगे क्षः । ततो रेफस्ततोऽनुग्रह औकारः । इन्दुरनुस्वारः । नादोऽनुस्वारानन्तरो रवविशेषः कांस्यचरमध्वनिनिभस्ततः शक्तिर्माया । आदिशब्दाद्ब्रह्म शान्ताख्यं क्षौं(क्ष्रौं)मिति रूपम् । अस्य स्वातन्त्र्यमाह—**य इति** । ग्रहकर्मणि भूतादिविमोक्षणे मारणकर्मणि शत्रुक्षयादौ । अस्यष्यादिकं यथा—

"ऋषिरत्रिश्च गायत्री छन्दः श्रीनृहरिः प्रभुः ॥
देवता दीर्घयुग्बीजेनैवाङ्गं कल्पयेत्सुधीः ।
ध्यानं पूर्ववदेवास्यैकलक्षं प्रजपेन्मनुम् ॥
तद्दशांशं हुनेत्सम्यग्घृताक्तैः पायसैः शुभैः ।
अर्चाहोमादिकं सर्वमस्य पूर्ववदाचरेत् ॥
मन्त्रराजवदेवास्य प्रयोगानपि साधयेत् ।
ह्रल्लेखासंपुटे केचित्संगिरन्ते मनुं त्विमम्" ॥ इति ॥ २ ॥

वराहबीजमुद्धरति—

**अन्त्योऽर्धीशयुतो बिन्दुनादबीजं च सौकरम् ।**
**हुंकारं चात्र रामस्य मालामन्त्रोऽधुनेरिता ॥ ३ ॥**

**अन्त्य इति** । अन्त्यो[3] मातृकाकेवलवर्णान्त्यो[4] हकारः । अर्धीश[5] ऊकारस्तेन युतो बिन्दुनादैर्बिन्दुनादशक्त्यादिभिरपि युतः । सौकरं सूकरस्येदम् । क्रोधं कोणाग्रान्तरेष्वित्यत्रोक्तं क्रोधबीजमुद्धरति—**हुंकारं चात्रेति** । अत्र यन्त्र उक्तस्थाने हुंकारं च लिखेत् । यद्वा वर्णात्मकं दशाक्षररामन्त्रबीजमाह —**हुंकारं चात्र रामस्येति** । रामस्य दशाक्षरस्य हुंकारं ह्रस्वोकारबिन्दुसहितं हकारं बीजं जानीयात् । दशाक्षरो यथा—

---

१ घ. क्ष्रौमिति । २ क. ख. च. °न्त्योऽर्वीश° । ३ च. अन्त्यः केवलमातृवर्णा° । ४ घ. °केनव° । ५ च. अर्वीश° ।

"जानकीवल्लभायाथ भवेत्पावकवल्लभः ।
हुमादिरेष कथितो राममन्त्रो दशाक्षरः" ॥ इति ।

मालामन्त्रमाह— **रामस्य मालामन्त्रोऽधुनेरितोति** । अधुना रामस्य मालामन्त्र ईरिता । लुट् । अद्यतनेऽपि च्छान्दसः । ईरिष्यिते कथयिष्यते ॥ ३ ॥

**तारो नतिश्च निद्रायाः स्मृतिर्मेदश्च कामिका ।**
**रुद्रेण संयुता वह्निर्मेधाऽमरविभूषिता ॥ ४ ॥**

तारः प्रणवः । नतिर्नमःशब्दः । निद्राया भकारात्परा स्मृतिर्गकारः प्रणवकलासु प्रायेणैतानि नामानि । अत्र स्वरानुक्तौ प्रथमत्वादकारो बोद्धव्यः । मेदो धातुर्वकारः कामिका तकारः सा रुद्रेणैकारेणैकादशत्वात्संयुता सहिता तेनो नमो भगवत इति सिद्धम् । वह्नी रेफः । मेधा घकारः साऽमरविभूषिता । अमर उकारस्तेन विभूषिता शोभमाना तेन रघुरिति सिद्धम् ॥ ४ ॥

**दीर्घाऽक्रूरयुता ह्लादिन्यथो दीर्घा समानदा ।**
**क्षुधा क्रोधिन्यमोघा च विश्वमप्यथ मेघया ॥ ५ ॥**
**युक्ता दीर्घा ज्वालिनी च ससूक्ष्मा मृत्युरूपिणी ।**
**सप्रतिष्ठा ह्लादिनी त्वक्क्ष्वेलः प्रीतिश्च सामरा ॥ ६ ॥**
**ज्योतिस्तीक्ष्णाऽग्निसंयुक्ता श्वेतानुस्वारसंयुता ।**
**कामिकापञ्चमो लान्तस्तान्तान्तो धान्त इत्यथ ॥ ७ ॥**
**स सानन्तो दीर्घयुतो वायुः सूक्ष्मयुतो विषः ।**
**कामिका कामिका रुद्रयुक्ताऽथो अथ स्थिरा स ए ॥ ८ ॥**
**तापिनी दीर्घयुक्ता भूरनिलोऽनन्तगोऽनलः ।**
**नारायणात्मकः कालः प्राणोऽम्भो विद्यया युतम् ॥**
**पीता रतिस्तथा लान्तो योन्या युक्तोऽन्ततो नतिः ॥ ९ ॥**

दीर्घा कला नकारः साऽक्रूरेण रुद्रेणानुस्वारेण संयुता । ह्लादिनी दकारः । अथो अनन्तरं दीर्घा नकारः सा समानदा मानदया कलयाऽऽकारेण सह वर्तमाना क्षुधा यकारस्तेन नन्दनायेति सिद्धम् । क्रोधिनी रेफः । अमोघा क्षकारः । अनन्ता चेति तु युक्तः पाठः । प्रणवकलास्वनन्तायाः क्षकारकलात्वात्कीर्त्यादिष्वमोघायास्तत्पूर्वाक्षरत्वा-ळकारकलात्वाच्च । विश्वमोकारोऽप्यथ मेघया घकारेण युक्ता दीर्घा नकारः । ज्वालिनी वाह्निकला वकारः सा ससूक्ष्मा सूक्ष्मेण श्रीकण्ठादितृतीयरूपेण रुद्रेणेकारेण सहिता । मृत्युरूपिणी मृत्युः प्रणवकला शकारः सप्रतिष्ठा प्रतिष्ठयाऽऽकारेण सहिता ह्लादिनी

१ घ. °ष्ठयाऽका° ।

द्कारः । त्वग्यकारस्तेन रक्षोघ्नविशादायेति सिद्धम् । क्ष्वेलो मकारः प्रीतिर्धकारश्च सामरा सोकारा ज्योती रेफस्तीक्ष्णा पकारः । अग्निसंयुता रेफसंयुता । श्वेता सकारोऽनुस्वारसंयुता सानुस्वारा कामिकापञ्चमस्तकारात्पञ्चमो नकारः । लान्तो वकारः । तान्तान्तो दकारस्तस्यान्तस्थस्तस्यान्तो दः । धान्तो नकारः । स नकारः सानन्तोऽनन्तेनाऽऽकारेण सहितः । दीर्घस्वरेणाऽऽकारेण युतो वायुर्यकारः सूक्ष्मेणेकारेण युतो विषो मकारः । कामिका तकारः । पुनः स एव रुद्रेणैकारेण युक्ता । अथो अथानन्तरं स्थिरा जकारस्ततः सः सकारात्पर एकारस्तेन मधुरप्रसन्नवदनायामिततेजस इति सिद्धम् । अत्र संधिर्न कर्तव्यः । तापिनी वकारः । दीर्घयुता भूर्लकारः । अनिलो यकारः । तेन बलायेति सिद्धम् । अनन्तग आकारगोऽनलो रेफः । नारायण आकारस्तदात्मकः कालो मकारः प्राणो यकारस्तेन रामायेति सिद्धम् । अम्भो वकारः । विद्ययेकारेण युतं सहितम् । पीता षकारो रतिर्णकारस्तेन युता संयुक्ता लान्तो वकारो योन्यैकारेण युक्तस्तेन विष्णव इति सिद्धम् । अन्ततोऽन्ते नतिनर्मःशब्दः ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ९ ॥

**सप्तचत्वारिंशदर्णो गुणान्तः सगुणः स्वयम् ।**
**राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥ १० ॥**

एवं सप्तचत्वारिंशद्वर्णो मालामन्त्रः । अर्णो वर्णः । गुणान्तः सगुणः स्वयम् । स्वयं सगुणोऽपि भक्तानां गुणान्तस्त्रैगुण्यनाशको मोक्षदत्वात् । अथवा गुणान्तो बीजत्रयान्तः सगुणो बीजत्रयादिः । तदुक्तम्—“तारवाक्कामबीजैश्च संपुटं प्रजपेदमुम्” इति । राज्याभिषिक्तस्येत्यनेनास्य स्वातन्त्र्यमपि सूचितम् ।

तद्यथा—“मुनिः पितामहश्छन्दः सत्यनुष्टुप्च देवता ।
राज्याभिषिक्तो रामोऽस्य बीजं शक्तिर्यथा पुरा ॥
तारवाक्कामबीजैश्च संपुटं प्रजपेदमुम् ।
शिरस्स्थाननवृत्ते[3] च भ्रूमध्येऽक्षिद्वयेऽपि च ॥
श्रोत्रयोर्घ्राणयोश्चैव गण्डयोरोष्ठयोरपि ।
दन्तयोरास्यदेशे च दोष्पत्संध्यग्रकेषु च ॥
कण्ठे हृदि स्तनद्वंद्वे पार्श्वयोः पृष्ठदेशतः ।
जठरे चाप्यधिष्ठाने गुह्ये वर्णान्प्रविन्यसेत् ॥
सप्तर्तुसप्तदशषड्रुद्रसंख्यैः षडङ्गकम् ।

उन्निद्रनीलकमलामलकान्तिमब्जचापासिबाणकरमम्बुजपत्रनेत्रम् ।

---

१ घ. °त्रिशदा° । २ घ. °स्यासनवृ° । ३ च. °वृत्तौ च ।

पीताम्बरं स्मितसुधामधुरं मुरारिं संचिन्तयेन्मिथिलराजसुतासहायम् ॥
जपेद्द्वादशलक्षं च ध्यात्वैव विजितेन्द्रियः ॥
बैल्वैः फलैः प्रसूनैश्च पत्रैस्त्रिमधुरप्लुतैः ।
मधुरत्रययुक्तेन पयोन्नेन सिताम्बुजैः ॥
होमं दशांशतः कुर्यात्तथा सर्वत्र तर्पणम् ।
प्राक्प्रोक्ते पूजयेत्पीठे मूर्त्यां चाऽऽवाह्य देवताम् ॥
प्रथमाऽङ्गावृतिः प्रोक्ता सप्तमी ज्यासमीरिता ।
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च हनूमता ॥
सुग्रीवः पञ्चमः प्रोक्तः षष्ठ उक्तो बिभीषणः ।
अङ्गदः सप्तमः प्रोक्तो नीलोऽष्टम उदाहृतः ॥
नारदश्च वसिष्ठश्च वामदेवस्तृतीयकः ।
जाबालो गौतमश्चापि भरद्वाजोऽथ कश्यपः ॥
वाल्मीकिश्चाष्टमः प्रोक्तो लक्ष्मीश्चाथ सरस्वती ।
रतिः प्रीतिः कीर्तिकान्ती तुष्टिः पुष्टिरिमाः क्रमात् ॥
सृष्टिर्जयन्तविजयौ सिद्धार्थः कार्यसाधकः ।
अशोकश्चैव पूर्वस्यां श्रीवत्सश्च गदा तथा ॥
पाञ्चजन्यः कौस्तुभाख्यो वनमाला च दक्षिणे ।
उत्तरे चक्रपद्मे च शार्ङ्गबाणं सखड्गकम् ॥
पश्चिमे धर्मगरुडधर्मपालसुमन्त्रकान् " ॥

इत्युक्तक्रमादेकैकस्मिन्षडन्त्ये पञ्चेति क्रमेण ।

अस्योद्धारोऽन्यत्राप्युक्तः—

" नमो भगवते ब्रूयाच्चतुर्थ्या रघुनन्दनम् ।
रक्षोघ्नविशदायेति मधुरादि समीरयेत् ॥
प्रसन्नवदनायेति पश्चादमिततेजसे ।
बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ॥
प्रणवादिनमोन्तोऽयं मालामनुरुदीरितः " ॥ इति ॥ १० ॥

**इदं सर्वात्मकं यन्त्रं प्रागुक्तमृषिसेवितम् ।**
**सेवकानां मोक्षकरमायुरारोग्यवर्धनम् ॥ ११ ॥**

सर्वात्मकं त्रैलोक्यमयम् । प्रागुक्तं पूर्वाचार्यैरुक्तम् । अथवा सर्वयन्त्राणामादावुक्तं मुख्यत्वात् । यद्वा प्रागुक्तं विना यन्त्रेण चेत्पूजेत्यत्रोद्दिष्टम् ॥ ११ ॥

अपुत्रिणां पुत्रदं च बहुना किमनेन वै ।
प्राप्नुवन्ति क्षणात्सम्यगत्र धर्मादिकानपि ॥ १२ ॥

अनेनोक्तेन धर्मादिकान्धर्मार्थकाममोक्षान् । धर्मज्ञानवैराग्यैश्वर्याणि वा । अपिशब्दादणिमादिसिद्धीरपि ॥ १२ ॥

इदं रहस्यं परममीश्वरेणापि दुर्गमम् ।
एवं यन्त्रं समाख्यातं न देयं प्राकृते जन इति ॥ १३ ॥ (९३)

इति श्रीरामपूर्वतापनीयोपनिषदि नवमः खण्डः ॥ ९ ॥

ईश्वरेण सर्वसिद्धिमताऽप्युपदेशं विना दुर्गममगम्यम् । प्राकृते विशेषानुग्रहानर्हे । इतिशब्दो यन्त्रविधानसमाप्तौ खण्डसमाप्तौ च ॥ १३ ॥

इति दीपिकायां नवमः खण्डः ॥ ९ ॥

---

भूतादिकं शोधयेद्द्वारपूजां कृत्वा पद्माद्यासनस्थः प्रसन्नः ।
अर्चाविधावस्य पीठाधरोर्ध्वे पार्श्वार्चनं मध्यपद्मार्चनं च ॥ १ ॥
कृत्वा मृदुश्लक्ष्णसतूलिकायां रत्नासने देशिकं चार्चयित्वा ।
शक्तिं चाऽऽधाराख्यकां कूर्मनागौ पृथिव्यब्जे स्वासनाधः प्रकल्प्य ॥ २ ॥
विघ्नं दुर्गां क्षेत्रपालं च वाणीं बीजादिकांश्चाग्निदेशादिकांश्च ।
पीठस्याङ्घ्रिष्वेषु धर्मादिकांश्च नञ्पूर्वांस्तांस्तस्य दिक्ष्वर्चयेच्च ॥ ३ ॥
मध्ये क्रमादर्कविध्वग्नितेजांस्युपर्युपर्युत्तमैरार्चितानि ।
रजः सत्त्वं तम एतानि वृत्तत्रयं बीजाढ्यं क्रमाद्भावयेच्च ॥ ४ ॥

भूतादिकं शोधयेदिति । भूतानि पृथिव्यादीनि पञ्च । आदिशब्दान्महदहंकारादि तच्छोधयेदात्मनि विलापयेत् । भूतशुद्धिः प्राणप्रतिष्ठाया मातृकान्यासस्य चोपलक्षणम् । भूतशुद्धिप्राणप्रतिष्ठे मातृकान्यासं च कुर्यादित्यर्थः । तत्करणप्रकारस्तु—

“ भूतशुद्धिं ततः कुर्यात्तत्प्रकारोऽधुनोच्यते ।
पादतो जानुपर्यन्तं चतुरस्रं सवज्रकम् ॥
लंयुतं पीतवर्णं च भुवः स्थानं विचिन्तयेत् ।
जान्वोरानाभिचन्द्रार्धनिभं पद्मेन लाञ्छितम् ॥
शुक्लवर्णं स्वबीजेन युतं ध्यायेदपां स्थलम् ।
नाभितः कण्ठपर्यन्तं त्रिकोणं रक्तवर्णकम् ॥
सस्वस्तिकं सबीजेन युतं वह्नेस्तु मण्डलम् ।
कण्ठाद्भ्रूमध्यपर्यन्तं कृष्णं वायोस्तु मण्डलम् ॥

१ क. घ. इदं ।

षट्कोणं बिन्दुभिः षड्भिर्युतं बीजेन चिन्तयेत् ।
भ्रूमध्याद्ब्रह्मरन्ध्रान्तं वर्तुलं ध्वजलाञ्छितम् ॥
धूम्रवर्णं स्वबीजेन युतं ध्यायेन्नभस्तलम् ।
एवं ध्यात्वा पुनस्तानि भूतानि प्रविलापयेत् ॥
पृथ्वीमप्सु च ता वह्नौ वह्निं वायौ समीरणम् ।
प्रविलाप्य तथाऽऽकाशेऽप्याकाशं प्रकृतौ ततः ॥
अपरब्रह्मरूपां तां मायाशक्तिं परात्मनि ।
इत्थं समस्तदेहादिप्रपञ्चं परमात्मनि ॥
प्रविलाप्य परब्रह्मरूपस्तिष्ठेत्कियत्क्षणम् ।
पुनरुत्पादयेद्देहं पवित्रं परमात्मनः ॥
शब्दब्रह्मात्मिका माया मातृका प्रकृतिः परा ।
अजायत जगन्मातुराकाशं नभसोऽनलः ॥
समीरणादभूद्वह्निर्वह्नेरापस्ततो मही ।
स्वीयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम् ॥
देवताराधने योग्यमुत्पन्नमिति भावयेत् ।
तस्मिन्देहे परात्मानं सर्वज्ञं सर्वशक्तिमत् ॥
समस्तदेवतारूपं सर्वमन्त्रमयं शुभम् ।
आत्मरूपेण देहे स्वे बीजभावेन तिष्ठति ॥
इत्येषा भावना मुख्या भूतशुद्धिरितीरिता ।
अथवाऽन्यप्रकारेण भूतशुद्धिर्विधीयते ॥
धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् ।
ऐश्वर्याष्टदलं चैव परं वैराग्यकर्णिकम् ॥
स्वीयत्हृत्कमलं ध्यायेत्प्रणवेन विकाशितम् ।
कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकाकृतिम् ॥
सुषुम्नावर्त्मनाऽऽत्मानं परमात्मनि योजयेत् ।
योगयुक्तेन विधिना सोऽहंमन्त्रेण साधकः ॥
तत्रैव सर्वतत्त्वानि विलीनानि विचिन्तयेत् ।
ततस्तु पुंनिभं पापमनादिभवसंचितम् ॥
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
तत्संयोगिपदद्वंद्वमङ्गप्रत्यङ्गपातकम् ॥

उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं कृष्णं कुक्षौ दक्षिणतः स्मरेत् ॥
ततः संशोषयेद्देहं पूरकादिक्रमेण वै ।
विधाय प्राणसंरोधं वायुबीजेन वायुना ॥
वह्निबीजेन तेनैव संदहेत्सकलां तनुम् ।
भस्म तद्घ्राणमार्गेण निर्गतं चिन्तयेत्सुधीः ॥
ततो वमितिबीजेन प्लावयेत्सकलां तनुम् ।
संजाते निर्मले देहे देवतोपासनक्षमे ॥
आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत्ततः ।
आत्मानं हृदयाम्भोजमानयेत्परमात्मनः ॥
हंसमन्त्रेण विधिवदेकाऽवश्यं विधीयते ।
भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत् ॥
विपरीतं फलं दद्यादभक्त्या पूजनं यथा ।
भूतशुद्धिं विधायेत्थं ततो वै स्थापयेदसून् ॥
पाशाङ्कुशेन पुटितां शक्तिमादौ समुच्चरेत् ।
यकारादिसकारान्तान्बिन्दुमस्तकलाञ्छितान् ॥
तदन्त उद्धरेत्प्राज्ञो व्योमसंत्रेन्दुसंयुतम् ।
ततो हंसपरात्मानौ ततोऽमुष्यपदं वदेत् ॥
प्राणा इति वदेत्पश्चादिह प्राणास्ततः परम् ।
अमुष्य जीव इह तु स्थितोऽमुष्यपदं ततः ॥
सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ।
श्रोत्रघ्राणपदे प्राणा इहाऽऽगत्य सुखं चिरम् ॥
तिष्ठन्त्वग्निवधूः पूर्वं प्रत्यमुष्यपदं बुधः ।
पाशाद्यानि प्रयोज्यैवं प्राणमन्त्रं समुद्धरेत् ॥
ब्रह्मर्षिरस्य छन्दस्तु विराट्प्राणस्तु देवता ।
प्रणवोऽग्निवधूर्बीजं शक्तिरुक्ता मनीषिभिः ॥
शिरोवदनहृद्गुह्यपादेष्वृष्यादि विन्यसेत् ।
अमुष्येतिपदस्थाने साध्यनाम समुच्चरेत् ॥
त्रिर्जपेत्साध्यसंस्पर्शी कृत्वा मन्त्रमुदारधीः ।
एष प्राणप्रतिष्ठायाः प्रकारः परिकीर्तितः" ॥

---

१ घ. ङ. °मुष्यंस्ते वा° ।

साध्यसंस्पर्शी हृदीति शेषः । आं पाशः । ह्रीं माया । क्रोमङ्कुशः । मातृकान्यासो ऋष्यादिपूर्वः ।

"ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री छन्द ईरितम् ।
सरस्वती समाख्याता देवता देशिकोत्तमैः ॥
अक्लीबह्रस्वदीर्घान्तर्गतैः षड्वर्गकैः क्रमात् ।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ॥
पञ्चाशल्लिपिभिर्विभक्तमुखदोर्य(हृ)न्मध्यवक्षस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापनितुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतां संश्रये ॥
ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्ये दोर्य(हृ)त्संध्यग्रकेषु च ॥
पार्श्वतः पृष्ठतो नाभौ जठरे हृदयेंऽसके ।
ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः ॥
जठराननयोर्न्यस्येन्मातृकार्णान्यथाक्रमात्" इति ।

**द्वारपूजां कृत्वेति** । सा यथा—

"देशिको विधिवत्स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः ।
यायादलंकृतो मौनी यागार्थं यागमण्डपम् ।
आचम्य विधिवत्तत्र सामान्यार्घ्यं विधाय च ॥
द्वारमन्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् ।
ऊर्ध्वोदुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम् ॥
ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्यतः ।
तयोः पार्श्वगते गङ्गायमुने पुष्पवारिभिः ॥
देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात्" ॥ इति ।

**पद्माद्यासनस्थ इति** । पद्मासनं तु—

"वामोरूपरि दक्षिणं तु चरणं संस्थाप्य वामं तथा
याम्योरूपारि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चुबुकं नासाग्रमालोकये-
देतद्व्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते" ॥ इति ।

आदिशब्दात्स्वस्तिकादि । पूजाविधौ तु तन्निर्वाहार्थमङ्गुष्ठबन्धनं हस्ताभ्यां न कर्तव्यम् । आदौ द्वारपूजां कृत्वा पद्माद्यासन उपविश्य प्रसन्नचित्तो भूतशुद्ध्यादिकं कुर्यादित्यन्वयः ।

**अर्चाविधाविति**। अस्य रामस्यार्चाविधौ पूजाविधौ पीठस्याधरदेशार्चनमूर्ध्वदेशार्चनं पार्श्वभागार्चनं मध्यवर्तिनः पद्मस्यार्चनं च कृत्वा पीठस्याङ्घ्रिषु धर्मादिकानर्चयेदिति संबन्धः। रत्नबद्ध आसने या मृदु कोमला श्लक्ष्णा मनोहरा समाना रत्नासनतुल्यपरिमाणा या तूलिका तस्यां देशिकं देश उपदेशोऽस्यास्ति देशिकः 'अत इनिठनौ'। उपदेष्टा तं चार्चयित्वा संपूज्य। पीठाधरभागादिषूक्तमर्चनं विशदयति—**शक्तिमिति**। शक्तिं चाऽऽधाराख्यकामाधारशक्तिं कूर्मः कच्छपो नागः शेषस्तौ च पृथिवीलक्षणे चाब्जे कमले। एताः स्वासनस्य देवतासनस्याधः प्रकल्प्य

तदुक्तम्—"आधारशक्तिं प्रयजेत्पङ्कजद्वयधारिणीम्।
मूर्ध्नि तस्याः समासीनं कूर्मं नीलाभमर्चयेत्॥
ऊर्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसंनिभम्।
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुंधराम्॥
तमालश्यामलां तस्मिन्नीलेन्दीवरधारिणीम्।
अभ्यर्चयेद्वसुमतीं स्फुरत्सागरमेखलाम्।
तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्"॥ इति।

एवं मण्डपान्तं पूजयित्वा मण्डपप्रवेशे द्वारे। ॐ विं विघ्नाय नमः। ॐ दुं दुर्गायै नमः। ॐ क्षं क्षेत्रपालाय नमः। ॐ वां वाण्यै नम इति बीजादिकान्यथास्थानमभ्यर्च्य। तदुक्तं डामरे—

"ओंकारबिन्दुमध्यस्थनामधेयाद्यमक्षरम्।
देवतानां स्वबीजं तत्पूजायामृद्धिसिद्धिदम्"॥ इति।

अग्निदेशादिकान्धर्मादीन्।

तदुक्तम्—"यजेत्कल्पतरूंस्तस्मिन्साधकाभीष्टसिद्धिदान्।
अधस्तात्पूजयेत्तेषां वेदिकां मण्डलोज्ज्वलाम्।
पश्चादभ्यर्चयेत्तस्यां पीठं धर्मादिभिः पुनः॥
रक्तश्यामहरिद्रेन्द्रनीलान्पादपरूपिणः।
वृषकेसरिभूतेभरूपान्धर्मादिकान्यजेत्॥
गात्रेषु पूजयेत्तांस्तु नञ्पूर्वाननुक्रमात्।
आग्नेय्यादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत्"॥ इति।

अङ्घ्रिषु पादेषु नञ्पूर्वान्धर्मादिकान्। तस्य पीठस्य दिक्षु पूर्वादिषु। **मध्य इति**। सूर्येन्द्वग्नयः क्रमेण पूज्याः। यद्वृत्तत्रयं तद्रजः सत्त्वं तम एतानि यानि गुणरूपाणि

---

घ. धौ च।

तज्ज्ञातव्यम् । बीजाढ्यं कर्णिकारूपं क्रमादनुक्रमेण भावयेत्पूजयेत् । बीजाद्यमितिपाठे स्वाद्यक्षरं बीजाद्यमों सं सत्त्वाय नम इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

**आशाव्याशास्वप्यथाऽऽत्मानमन्तरात्मानं च परमात्मानमन्तः ।**
**ज्ञानात्मानं चार्चयेत्तस्य दिक्षु मायाविद्ये ये कलापारतत्त्वे ॥ ५ ॥**

**आशाव्याशास्विति** । दिक्षु विदिक्षु चाष्टौ पद्मपत्राणि पूजयेदिति शेषः । **अथेति** । आत्मानं लिङ्गमन्तरात्मानं जीवं परमात्मानमीश्वरं ज्ञानात्मानं ब्रह्मबिन्दुनादशक्तिशान्तात्मकानेतानन्तर्मध्येऽर्चयेत् । मायाविद्ये कलापारतत्त्वे कलातत्त्वं परतत्त्वं[1] चैतानि तत्त्वानि दिक्षु चत्वारि तत्त्वानि पूज्यानि ।

तदुक्तम्—"आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम् ॥
मन्त्री प्रकृतिपत्राणि[2] विकारमयकेसरान् ।
पञ्चाशद्वर्णबीजाढ्यां कर्णिकां पूजयेत्ततः ॥
कलाभिः पूजयेत्सार्धं तस्यां सूर्येन्दुपावकान् ।
प्रणवस्य त्रिभिर्वर्णैरथ सत्त्वादिकान्गुणान् ॥
आत्मानमन्तरात्मानं परमात्मानमर्चयेत् ।
ज्ञानात्मानं च विधिवत्पीठमन्त्रावसानिकम् " ॥ इति ।

तत्त्वपूजायां[3] मायातत्त्वाय नमः[4] । विद्यातत्त्वाय नमः[5] । कलातत्त्वाय नमः[6] । परतत्त्वाय नम इति प्रयोगः । स्मृतौ तु—"मायातत्त्वं कलातत्त्वं विद्यातत्त्वं परं तथा" इति क्रमभेदः स तु रामपूजायां विशेषश्रुत्या बाध्यते ॥ ९ ॥

**संपूजयेद्विमलाद्याश्च[7] शक्तीरभ्यर्चयेद्देवमावाहयेच्च ।**
**अङ्गव्यूहानि[8] जलाद्यैश्च[9] पूज्य धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः ॥ ६ ॥**

**विमलाद्याश्चेति[10]** । "विमलोत्कर्षणी[11] ज्ञानक्रिया[12] योगेति शक्तयः ।
" प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी मता " इति ॥

तासां[13] स्थानमुक्तम्—" पीठशक्तीः केसरेषु मध्ये च सवराभयाः " इति पीठमन्त्रो नारायणीय उक्तः । यथा—" ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने[14] नमः " इति । **देवमावाहयेच्चेति** । मूलमन्त्रेणाऽऽहूतो भवेत्याद्युक्त्वाऽऽवाहनादिमुद्राः प्रदर्शयेत्ता उक्ताः ।

---

१ ङ. पारतत्त्वं , २ क. च. °कृतप° । ३ ङ. °यां मां मा° । ४ ङ. °मः । विं वि° । ५ क. °मः । कं क° । ६ क. °मः । पं प° । ७ क. ख. ग. छ. °लादीश्च । ८ ङ. °व्यूहेर निलजा्वै° । ९ क. ग. °निलजाद्यै° । १० घ. ङ. °लादीश्चे° । ११ ङ °त्कर्षिणी । १२ घ. ज्ञानाक्रि° । १३ ङ. आसां । १४ व. °म्रपिच्छात्म° ।

" आवाहनादिका मुद्रा नव साधारणा मताः ।
तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् " इति ॥

ता यथा—" हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ।
अधोमुखी त्वियं चेत्स्यात्स्थापिनी मुद्रिका मता ।
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्संनिधापनी ।
अन्तःप्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ।
उत्तानमुष्टियुगला संमुखीकरणी मता ॥
देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः ।
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ॥
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ।
अन्योन्याभिमुखाश्लिष्टकनिष्ठानामिका पुनः ॥
तथैव तर्जनीमध्या धेनुमुद्रा समीरिता ।
अमृतीकरणं कुर्यात्तया साधकसत्तमः ॥
अन्योन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुलिः ।
महामुद्रेयमाख्याता परमीकरणे बुधैः ॥
प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि " ॥

**अङ्गव्यूहानि जलाद्यैरिति** । हृदयादीन्युदकदानाद्यैः पाद्यादिभिः संपूज्येत्यर्थः । अङ्गव्यूहानिलजाद्यैरितिपाठेऽङ्गव्यूहैरनिलजाद्यैर्हनुमदाद्यैश्च साकं देवं पूजयेदित्यन्वयः । अङ्गव्यूहानि नलाद्यैरिति तु युक्तः पाठः । नलाद्यैर्नीलाद्यैः षोडशभिः सहेत्यर्थः । तेषां स्थानानि । ' आग्नेय्यादिषु कोणेषु हृदयादीनि पूजयेत् । नेत्रमग्रे दिशास्वस्त्रम् ' इति । अङ्गमुद्रा यथा—

" अङ्गन्यासस्य या मुद्रास्तासां लक्षणमुच्यते ॥
अनङ्गुष्ठा ऋजवो हस्तशाखा भवेन्मुद्रा हृदये शिरस्यपि ।
अधोङ्गुष्ठा खलु मुष्टिः शिखायां करद्वंद्वाङ्गुलयो वर्मणि स्युः ॥
नाराचमुष्ट्युद्धृतबाहुयुग्मका अङ्गुष्ठतर्जन्युदितो ध्वनिस्तु ॥
विष्वग्निषक्तः कथिताऽस्त्रमुद्रा यत्राक्षिणी तर्जनी मध्यमे स्तः ।
नेत्रत्रयं तत्र भवेदनामा षडङ्गमुद्राः कथिता यथावत् " ॥ इति ।

वर्माणि विशेष आगमान्तरे—

" तथाविधाभ्यां पाणिभ्यां वर्म स्कन्धादिनाभिगम् " ॥ इति ।

१ घ. °मीकार° । २ घ. °स्वस्त्रम्° । ३ ङ. विष्वग्नि° ।

**धृष्ट्यादिकैरिति** । सृष्ट्यादीनन्ये पठन्ति—

तथा हि—" पूजयेद्वैष्णवे पीठे मूर्तिं मूलेन कल्पयेत् ।
श्रीं सीतायै द्विठान्तेन सीतां पार्श्वगतां यजेत् ॥
अग्रे पार्श्वद्वये शार्ङ्गशरानङ्गानि तद्बहिः ।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम् ॥
लक्ष्मणाङ्गदशत्रुघ्नाञ्जाम्बवन्तं दलेष्विमान् ।
वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥
यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ ।
धृतातपत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत् ॥
सृष्टिं यजन्तं विजयं सुराष्ट्रं राष्ट्रवर्धनम् ।
अकोपं धर्मपालाख्यं सुमन्त्रं च दलाग्रतः ॥
सर्वाभरणसंपन्नाँल्लोकेशानर्चयेत्ततः ।
तदस्त्राणि ततो बाह्ये वज्रादीनि प्रपूजयेत् " ॥ इति ॥ ६ ॥

**वसिष्ठाद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघवं चन्दनाद्यैः ।**
**मुख्योपहारैर्विविधैश्च पूज्य तस्मै जपादींश्च सम्यक्समर्प्य ॥ ७ ॥**

**वासिष्ठाद्यैरिति** । वसिष्ठवामदेवजाबालगौतमभरद्वाजकौशिकवाल्मीकिनारदसनकसनन्दनसनातनसनत्कुमारा द्वादश ।

" कमण्डलुधरान्सर्वान्मन्त्रमुच्चरतो मुनीन् ।
द्वादशाब्जेऽर्चयेत्पूर्वादिक्रमेण च तत्परान् " ॥

**नीलमुख्यैरिति** । नीलनलसुषेणमैन्दसरभद्विविदधनदगवाक्षकिरीटकुण्डलश्रीवत्सकौस्तुभशङ्खचक्रगदापद्मानि षोडशाब्जेऽर्चयेत्पूर्वादिक्रमेण कृताञ्जलीन् । **चन्दनाद्यैः** सुगन्धिभिः । **जपादीनिति** । आदिशब्देनोपचाराः । जपसमर्पणे मन्त्रः—

" गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिता " ॥ इति ॥ ७ ॥

पूजान्ते नमस्कारमाह—

**एवंभूतं जगदाधारभूतं रामं वन्दे सच्चिदानन्दरूपम् ।**
**गदारिशङ्खाब्जधरं भवारिं स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥ ८ ॥**

**एवंभूतमिति** । भवारिमित्यन्ता देशिकोक्तिः । आरिश्चक्रम् । श्रुतिः फलमाह—**स इति** । सर्वतः सर्वस्माद्बन्धनात् । * सर्व इति तु युक्तः पाठः ॥ ८ ॥

---

* अयमेवाऽऽदर्शपुस्तकेषु दृश्यते ।

---

१ ङ. शीतायै । २ ङ. शीतां । ३ च. दगन्धमादनग° । ४ घ. दान्महेश्वर इ° ।

**विश्वव्यापी राघवोऽथो तदानीमन्तर्दधे शङ्खचक्रे गदाब्जे ।**
**धृत्वा रमासहितः सावृतश्च ससपत्नजः सानुजः सर्वलोकी ॥ ९ ॥**

राघवः, अथो तदानीमिति पदच्छेदः । अन्तर्दधे लोकादृश्यो बभूव न तु देहधर्मं गतः । रामायणेऽपि तेनैव रूपेण ब्रह्मलोके गमनमुक्तम् । स नैसार्गिकरूपं धृत्वा सावृत आवरणैः पारिवारैः सहितः । " स्वर्णीतगर्दभश्वादिश्चिरायोध्यावनैकक्रत् " इति पुराणात् । ससपत्नजः सपत्नजेन वैरिसंतानेन सहितः । समदर्शित्वात्सर्वलोकी सर्वदर्शी ॥ ९ ॥

**तद्भक्ता ये लब्धकामांश्च भुक्त्वा तथा पदं परमं यान्ति ते च ।**
**इमा ऋचः सर्वकामार्थदाश्च ये ते पठन्त्यमला यान्ति मोक्षं**
**ये ते पठन्त्यमला यान्ति मोक्षमिति ॥ १० ॥ ( १०३ )**

**इति दशमः खण्डः ॥ १० ॥**

**इत्यथर्ववेदे रामपूर्वतापनीयोपनिषत्समाप्ता ॥ २८ ॥**

ये ते तद्भक्तास्ते कामाँल्लभन्ते लब्धांश्च कामान्भुक्त्वा परं पदं यान्ति । उपनिषत्पाठे फलमाह—**इमा** इति । द्विरुक्तिः समाप्त्यर्था । दशावरणपूजाऽगस्त्यसंहितायामुक्ता—

" षट्कोणे प्रथमाऽऽवृतिः स्यादङ्गैरन्वितः क्रमात् ।
द्वितीयाऽऽत्मादिकैर्देवैरष्टाब्जमूलके तथा " ॥

आत्मा १ निवृत्तिः २ अन्तरात्मा ३ प्रतिष्ठा ४ परमात्मा ५ विद्या ६ ज्ञानात्मा ७ शान्तिः ८ इत्यात्मादयः ।

" तृतीया वासुदेवाद्यैरष्टपत्रे तथैव च ।
चतुर्थी वायुपुत्राद्यैः पत्राग्रे पूर्वतः क्रमात् ॥
धृष्टयाद्यैः पञ्चमाऽऽवृतिर्द्वितीयाष्टदले तथा ।
षष्ठी द्वादशपत्रेषु नारदाद्यैर्महर्षिभिः ॥
सप्तमी षोडशाब्जे स्यान्नीलाद्यैः कपिपुंगवैः ।
ध्रुवाद्यैरष्टमी ज्ञेया द्वात्रिंशद्दलपद्मके ॥
इन्द्राद्यैर्भूगृहे चाऽऽद्ये नवमावरणं भवेत् ।
तदस्त्रैर्वज्रशक्त्याद्यैर्दशमावरणं शुभम् ॥
दशावरणपूजेयं कर्तव्या साधकोत्तमैः " ॥ इति ॥

पूजायन्त्रे चैतान्यावरणानि । अस्य धारणयन्त्रादयं विशेषः । अत्र हि षट्कोणादिभूपुरान्ते देवस्वरूपाणि भवन्ति । धारणयन्त्रे तु मन्त्रर्णा[1] इति । आवरणक्रमोऽप्ययमेव

१ घ. मन्त्रवर्णा ।

श्रुतौ द्रष्टव्यः । पाठक्रमादर्थक्रमस्य बलीयस्त्वात्सर्वतन्त्रेष्विन्द्रादितदायुधानामन्ते निवेशात् । द्विरुक्तिर्निश्चयार्था । इतिशब्दो ग्रन्थसमाप्त्यर्थः ॥ १० ॥

इति दशमः खण्डः ॥ १० ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां रामपूर्वस्य दीपिका ॥ १ ॥

इति नारायणविरचिता रामपूर्वतापनीयोपनिषद्दीपिका समाप्ता ॥ ३९ ॥



ॐ तत्सद्ब्रह्मणे नमः ।

# श्रीरामोत्तरतापनीयोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

**ॐ बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छे-**

रामोत्तरतापनीयं स्वरूपमहिमोक्तये ।
रामचन्द्रस्य षट्त्रिंशं खण्डपञ्चकमण्डितम् ॥ १ ॥

पूर्वतापनीये राममन्त्रा यन्त्रपीठपूजा च सविधानेनोक्ता " मध्ये तारद्वयं लिखेत् " " तत्सर्वं प्रणवाभ्यां च वेष्टयेत् " इति रामात्मकयन्त्राङ्गतोकारस्योक्ता तथा ' ओंकाराय नमो नमः ' इति च प्रधानदेवतारूपता तस्योक्ता मूलमन्त्रनिर्णयानन्तरं चाङ्गमन्त्रनिर्णय उचित इति प्रणवनिर्णयार्थमुत्तरतापनीयमारभ्यते । क्षेत्रोत्तमे कृता सत्संप्रदायागता चोपासना महाफला तदर्थमृषिसंवादेन प्रणवं निर्णयन्रामचन्द्रस्य स्तोत्रमन्त्रतोऽर्थतश्च महिमानं स्वरूपं च प्रकाशयितुमादौ क्षेत्रोत्तमं व्यनक्ति । **बृहस्पतिरुवाच याज्ञवल्क्यमिति** । यत्क्षेत्रमनु हीनं कुरुक्षेत्रमित्यर्थः । यतो हीनं हीनेऽनुः कर्मप्रवचनीयस्तद्योगे यदिति द्वितीया । यथा हरिमनु सुरा हरेर्हीना इत्यर्थः । कुरुक्षेत्रादधिकं यत्क्षेत्रं हि कुरोर्ब्रह्मणो वरदानात्क्षेत्रोत्तमं प्रसिद्धं ततोऽप्यधिकं तथा देवानामपि देवयजनं देवपूजास्थानं तथा सर्वेषां भूतानां प्राणिनां ब्रह्मसदनं ब्रह्मप्राप्तिस्थानं तत्किमिति वाक्पतिर्याज्ञवल्क्यापत्यं प्रत्युवाच पप्रच्छेत्यर्थः । यज्ञानां वक्ता यज्ञवल्क्यो देवरातो ब्रह्मा वा । याज्ञवल्क्यस्तत्रोत्तरयंस्तन्नामतो निर्दिशति—**अविमुक्तं वा इति** । न विमुक्तमीश्वरेणापरित्यक्तमविमुक्तं पार्वत्याऽऽग्रहे कृतेऽपीश्वरेण न विमुक्तं वाराणसीक्षेत्रं कुरुक्षेत्रम् । अविमुक्तमेव क्षेत्रं कुर्वीतिरामादेशादीश्वरेण कृतत्वात् । वै प्रसिद्धम् । मुख्यं कुरुक्षेत्रम् । अत्र च लिङ्गं मत्क्षेत्र इतीश्वरोक्तिराविमुक्ते तव क्षेत्र इति रामोक्तिश्च । तथा देवानामित्यादिविशेषणद्वयं प्राग्वत् । देशान्तरं तद्दृष्ट्वोपास्यं न तु तत्कुरुक्षेत्रादिदेशान्तरदृष्ट्वोपास्यमित्याह—**तस्मादिति** । यस्मादिदमेव क्षेत्रोत्तमं

त्तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्यः ॥ १ ॥

अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं किं तरतीति स होवाच याज्ञवल्क्यस्तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घानलं पुनर्माय नमश्चन्द्राय नमो भद्राय नम

तस्मात्तदेवाविमुक्तमेव मन्येतेति जानीयात् । इतिशब्दो वाक्यसमाप्तौ । तस्य मननोल्लेखमाह—**इदं वा इति** । इदं यत्र वयं विचरामस्तदेव विशेषणत्रययुक्तमविमुक्तं मन्यामह इत्यर्थः । एवं कृते सत्यविमुक्तनिवासफलं तादात्म्योपासनया भवतीति भावः । नन्वस्यान्यक्षेत्रेभ्यः को विशेषोऽत आह—**अत्र हीति** । जन्तोः प्राणिमात्रस्य न मनुष्यस्यैव । क्रिमिकीटादयोऽप्याशु मुक्ताः सन्त्विति वरदानात् । तारकं षडक्षरं बीजं वा । तस्य किं फलमत आह—**येनेति** । अमृती भूत्वा ब्रह्मीभूय मोक्षी भवति । मोक्षोऽस्यास्तीति मोक्षी बन्धरहितो भवति । फलितं कर्तव्यमाह—**तस्मादिति** । निषेवणं चिन्तनादि देशान्तरस्थस्यापि संभवतीत्यत उक्तमविमुक्तं न विमुञ्चेदिति । **एवमेवैतद्याज्ञवल्क्य इति** । याज्ञवल्क्यो यदाहैवमेवैतदर्थजातमिति बृहस्पतेरनुमतिवचः । एवमेष भगवन्याज्ञवल्क्येतिपाठे हे भगवन्याज्ञवल्क्यैष भवदुक्तोऽर्थ एवमेव नान्यथेति बृहस्पतेरेवानुमतिवचः । अत्र बृहदारण्यक इव ब्रह्मविच्छिरोमणिर्याज्ञवल्क्यो वक्ता बृहस्पत्यादयः श्रोतारः सभा जनकस्य तस्य रामपरत्वात्तत्र निर्मत्सराणां समाजसंभवाच्च । बृहदारण्यके तु जल्पः । अत्र परं मुनीनां निर्मत्सरतया वाद इति विशेषः ॥ १ ॥

अथ बृहस्पतेः सदुत्तरदानानन्तरम् । ह प्रसिद्धम् । एनं याज्ञवल्क्यम् । पूर्ववाक्य आदिष्टत्वेनान्वादिश्यमानत्वादेनादेशः । द्वाभ्यां जातं भर पोषयेति दिव्यवाचोक्तत्वाद्भरद्वाजः स पप्रच्छ पृष्टवान्याज्ञवल्क्यं ब्रह्मविदम् । एवं बृहस्पतिपृष्टार्थवेत्तारं प्रष्टव्यस्वरूपमाह—**किं तारकमिति** । ननु तारणक्रियाकर्तृ प्रसिद्धमेवेत्याशङ्क्य प्रश्नस्य विशेषविषयतामाह—**किं तरतीति** । यत्तरति संसारं तारयति तस्य किं स्वरूपमित्यर्थः । तरतिरन्तर्भावितण्यर्थः । तन्त्रेण कारकान्तरस्यापि प्रश्नोऽयमस्य गर्भेत्याद्युत्तरं भावि । उत्तरमाहेत्याह—**स होति** । दीर्घानलं दीर्घ आकार आरूढोऽनलो रेफो यस्मिंस्तत् । तच्च बिन्दुपूर्वकं बिन्दोः पूर्वमेव पूर्वकं रा सिद्धम् । दीर्घानलं पुनस्तेन रा इति सिद्धम् । माय नम इति स्वरूपम् । चन्द्राय नमो भद्राय नम इति द्वौ मन्त्रौ पृथक् ।

१ ग. छ. झ. °वैष भगवान्निति याज्ञवल्क्यः । २ क. ग. भारद्वाजः । ३ क. तारयतीति ।

इत्योंतद्ब्रह्मात्मिकाः सच्चिदानन्दाख्या इत्युपासितव्याः[1] । अकारः प्रथमाक्षरो भवत्युकारो द्वितीयाक्षरो भवति मकारस्तृतीयाक्षरो भवत्यर्धमात्रश्चतुर्थाक्षरो भवति बिन्दुःपञ्चमाक्षरो भवति नादःषष्ठाक्षरो भवति तारकत्वात्तारको भवति ।

---

तदुक्तम्—"रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति" ॥ इति ।

एषां विधिः प्रागेवोक्तः । ओंरूपास्तद्रूपा ब्रह्मरूपास्तथा सदाख्याश्चिदाख्या आनन्दाख्याश्चेत्येवं यथासंख्यमेता रामाद्याख्या उपासितव्याः ।

तदुक्तं **गीतायाम्**—"ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा" ॥ इति ।

किं तारकमिति प्रश्ने रामषडक्षरौ च द्वौ तारकावित्युक्तम् । ओंकारादित्रिकद्वयरूपेण यथासंख्यमुपास्या इति चोक्तम् । संप्रत्योंकारस्य षडक्षरत्वेन तारकत्वमुपपादयति—**अकार इत्यादिना** । अकारादयस्त्रयो मूर्ता अर्धमात्रादयस्त्रयोऽमूर्ता अकारो ब्रह्मेन्दुरुकारो विष्णुरर्को मकारः परम ईश्वरोऽग्निश्चार्धमात्रोऽर्धबिन्दुः शैवमये शिवशक्तितत्समवायवाचको ब्रह्ममये मायाब्रह्मतत्समवायवाचको वैष्णवमये लक्ष्मीनारायणतत्संबन्धवाचको बिन्दुरर्धचन्द्रोपारि लिखितो मायाघनीभावः क्रियाप्रधानता । तस्यार्थः स्वगर्भे महत्तत्त्वमिति यावत् । यदुक्तम्—"मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्" इति । स बिन्द्वर्थो नादः षष्ठाक्षरसर (रः स र) णका (त्का) रात्मकः कांस्यघण्टावसाननादतुल्यस्तस्यर्तुस्नाता गर्भाधानकृतावधाना शक्तिर्महत्तत्त्वाभिधानार्थो यत्सांख्यानां महत्तत्त्वं वैदिकानामव्याकृतं वैष्णवानामृतुस्नाता महालक्ष्मीः । एवं षडक्षरतारकब्रह्मतासिद्धये षडक्षरात्मता प्रणवस्योक्ता । अन्यत्र तु शक्तिशान्ताख्ये द्वे अक्षरे इत्यष्टाक्षरता प्रणवस्योक्ता मायाब्रह्मणी तयोरर्थः । **तारकत्वादिति** । तारकषडक्षरवाच्यब्रह्मतासिद्धये षडक्षरात्मता प्रणवस्यापि षडक्षरत्वेन समानधर्मेण तारकत्वादयमपि तारको भवति तारकशब्दवाच्यो भवति । अष्टाक्षरतापक्षेऽष्टाक्षरतारकमन्त्रद्वयवदस्यापि तारकत्वमित्यवधेयम् । अकारादीनामुत्तरोत्तरस्य पूर्वं पूर्वं प्रति कारणता ज्ञेया सा च शब्दतोऽर्थतश्च तेन ब्रह्मणः शक्तिः शक्तेर्नादो नादाद्बिन्दुर्बिन्दोरर्धमात्रा तस्यास्त्रिधाभिन्नाया मकारादय इति ।

तदुक्तम्—"सच्चिदानन्दविभवात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः ॥

---

१ क. ख. छ. °तव्यम् । अ° ।

परशक्तिमयः साक्षात्त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः" ॥

एतौ बिन्दुनादौ प्रथमोक्तबिन्दुनादाभ्यामन्यौ तत्कार्यभूतौ ज्ञेयौ ।
दुक्तम्—"बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ॥
समवायः समाख्यातः समागमविशारदैः ।
रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत ॥
वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ।
ते ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः "॥ इति ।

अस्यार्थः—सकलात्समायातशक्तेः । शक्तेरुत्थानावस्था नादः । तदुत्तरदशा बिन्दुः क्रियाप्रधानो घनीभावः । परशक्तिमयः पर ईशः शक्तिश्च तन्मयस्तत्प्रधानः । त्रिधाऽसौ भिद्यते कार्यत्रयात्मको भवति । बिन्दोः शिवात्मकाद्रौद्री मकारार्थरुद्रजननशक्तिः । नादाच्छिवशक्तिसमवायरूपादकारार्थब्रह्मेन्दुजननशक्तिर्ज्येष्ठा । बीजाच्छक्तिरूपादुकारार्थविष्ण्वर्कजननशक्तिर्वामाऽजायतेति । अकारोकारमकारार्थानामुत्तरोत्तरस्य पूर्वं पूर्वं प्रति कारणतोक्ता ।

"सदाशिवाद्भवेदीशस्ततो रुद्रसमुद्भवः ।
ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः" ॥इति ।

प्रणवस्य शरीरस्थानकाललया ब्रह्मविद्योपनिषद्युक्ताः ।
यथा—"ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ॥
शरीरं तस्य वक्ष्यामि स्थानं कालं लयं तथा ।
तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ॥
तिस्रो मात्राऽर्धमात्रा च अक्षरस्य शिवस्य च ।
ऋग्वेदो गार्हपत्यः(त्यश्च) पृथिवी ब्रह्म एव च ॥
अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ।
यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ॥
विष्णुश्च भगवान्देव उकारः परिकीर्तितः ।
सामवेदस्तथा द्यौश्चाऽऽहवनीयस्तथैव च ॥
ईश्वरः परमो देवो मकारः परिकीर्तितः ।

अथ स्थानम्—"सूर्यमण्डलमाभाति अकारः शङ्खमध्यगः ॥
उकारश्चन्द्रसंकाशस्तस्य मध्ये व्यवस्थितः ।
मकारश्चाग्निसंकाशो विधूमो विद्युतोपमः " ॥

अथ कालः—"तिस्रो मात्रास्तथा ज्ञेयाः सोमसूर्याग्नितेजसः ।
शिखा च दीपसंकाशा यस्मिन्नुपरि वर्तते ॥

**तदेव तारकं ब्रह्म त्वं विद्धि तदेवोपास्यमिति ज्ञेयम् । गर्भजन्मजरामरणसंसारमहद्भयात्संतारयति तस्मादुच्यते तारकमिति य एतत्तारकं ब्राह्मणो नित्यमधीते स सर्वं पाप्मानं तरति स मृत्युं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वहत्यां तरति स संसारं तरति सर्वं तरति सोऽविमुक्तमाश्रितो भवति स महान्भवति सोऽमृतत्वं च गच्छतीति ॥ २ ॥**

---

अर्धमात्रा तु सा ज्ञेया प्रणवस्योपरि स्थिता ।
पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा ॥
सा नाडी सूर्यसंकाशा सूर्यं भित्त्वा तथाऽपरम् ।
द्वासप्ततिसहस्राणि सूर्यं भित्त्वा तु मूर्धनि ॥
वरदः सर्वभूतानां सर्वं व्याप्यैव तिष्ठति" ।

अथ लयः—"कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ॥
ओंकारस्तु तथा योज्यः शान्तये सर्वमिच्छता ।
यस्मिन्संलीयते शब्दस्तत्परं ब्रह्म गीयते ॥
ध्रुवं हि चिन्तयेद्ब्रह्म सोऽमृतत्वाय कल्पते ।
सोऽमृतत्वाय कल्पत इति" ॥ इति ।

**तदेवेति** । तदेवोंकारमक्षरमेव परमं प्रकृतराममन्त्रत्रयमेव च तारकं संसारोत्तारकं ब्रह्म परमार्थसत्यं त्वं भरद्वाज विद्धि जानीहि । तदेव मन्त्रवाच्यं मन्त्रप्रतीकं चोपास्यमुभयत्रैवकारेणामन्त्रकं ब्रह्म व्यावर्त्यते तस्य निर्गुणस्य दुर्बोधत्वात्तदेवोपास्यमित्येतावता सिद्धम् । इति ज्ञेयमिति वचनमयं परमोपदेश इति बोधनार्थम् । गर्भेत्यपादानोपदेशात्प्रश्नेऽपादानप्रश्नोऽपि ज्ञातव्यः । उपासनरहितपाठमात्रस्य फलमाह—**एतदिति** । ब्राह्मण इति वचनादध्ययने क्षत्रादीनामनधिकारो गम्यते । नित्यमुपदेशानन्तरं यावज्जीवम् । अधीते न तु परपठितं शृणोत्येव । मृत्युं तरति यथा मार्कण्डेयो नारायणाष्टाक्षरेण मृत्युं तीर्णवान् । "भ्रूणः स्त्रीगर्भडिम्भयोः" इति विश्वः । वीरहत्यां तरति 'वीरस्तु सुभटे श्रेष्ठे' । सर्वहत्यामगणितानन्तप्राणिवधम् । सर्वं दुस्तरम् । अविमुक्तं वाराणसीक्षेत्रं यत्र तत्र स्थितो वाराणस्यामेव स्थितो भवति यत्र तत्र मृतो वाराणस्यामेव मृतो भवतीत्यर्थः । आश्रितो भवतीत्यस्यानन्तरं स महान्भवतीति कैश्चिच्छब्ध्यते तेन भुक्तिरुक्ताऽमृतत्वं चेति मुक्तिरुक्ता ॥ २ ॥

---

१ क. 'पासितव्यमि' । २ क. 'ते षडक्षरं ता' । ३ क. स पा' । ४ झ. 'ति मृ' । ५ क. गच्छति ।

अथैते श्लोका भवन्ति—

अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः।
उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः॥
प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः।
अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः॥
श्रीरामसांनिध्यवशाज्जगदानन्ददायिनी।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम्॥
सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता।
प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः॥ इति।

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं—

---

प्रणवस्य षडक्षराणां क्रमेणार्थानाह मन्त्रैः—**अथैत इत्यादिना**। विश्वभावनो विरिञ्चिरूपो जाग्रदभिमानी सौमित्रिः संकर्षणः। तैजसात्मकः स्वप्नाभिमानी शत्रुघ्नः प्रद्युम्नः। प्राज्ञात्मकः सुषुप्ताभिमानी भरतः (तोऽनिरुद्धः)। रामस्तुरीयावस्थं ब्रह्म वासुदेवाख्यम्। बिन्द्वर्थमाह—**श्रीरामेति**। आनन्दस्य ब्रह्मांशत्वात्केवलया प्रकृत्या स दातुमशक्य इति रामसांनिध्यापेक्षकार्यकर्त्री बिन्द्वंशवाच्या कार्योन्मुखी नादांशवाच्या। सीतायाः शक्तिशान्ताख्ये अप्यवस्थे आह—**प्रणवत्वादिति**। वाच्यवाचकभावं त्यक्त्वा प्रणवेन यदाऽभेदं गता तदा प्रकृतिरिति वदन्ति। ब्रह्मवादिनो ज्ञानिनः। इतिशब्दः श्लोकसमाप्त्यर्थः। ओमित्येतदक्षरमिदं सर्वमित्यादिको ग्रन्थो **माण्डूक्ये नारसिंहेऽत्र** च समानस्तत्र माण्डूक्ये विस्तरेण व्याख्यातः संक्षेपेणात्र व्याख्यायते। तत्र हि प्रधानं प्रणवविद्याऽत्र त्वङ्गम्। प्रणवावयवान्स्वरूपतोऽर्थतश्च व्याख्याय प्रणवं तथैव व्याख्यातमाह—**ओमित्येतादिति**। ओमित्यक्षरमुद्दिश्य सर्वात्मत्वं न विधीयते किंतु सर्वमुद्दिश्योंकारत्वं प्रसिद्धस्योद्देश्यत्वात्। इतिकरणमर्थविपर्यासकृदोंकारमर्थपदार्थकत्वात्प्रच्याव्य शब्दपदार्थकत्वं नयत्यन्यथा सर्वस्य प्राणादेर्ब्रह्मात्मकत्वमेव प्रतीयेत न प्रणवात्मकत्वम्। एतद्वेदादित्वेन प्रसिद्धमक्षरं व्यङ्ग्यं पदम्। ननु साकारात्मतत्त्वप्रतिपत्तये प्रवृत्ता श्रुतिः किमर्थमोंकारस्य सर्वात्मत्वं प्रतिपादयति न ह्योंकारतत्त्वप्रतिपत्त्यासाकारब्रह्मतत्त्वप्रतिपत्तिर्भवति। उच्यते। सर्वेऽर्थाः शब्दात्मका वाचाऽऽरम्भणमित्यादिश्रुतेः। सर्वश्च शब्द (ओंकारात्मकः) ओंकारेण सर्वा वाक्संतृण्णेति श्रुतेः। तेनोंकारानतिरेकादाकारजातस्योंकारनिर्णयः साकारात्मप्रतिपत्त्युपायस्तस्मादिदं सर्वमोमित्येतदक्षरं ज्ञातव्यम्। तस्योपव्याख्यानम्। तस्य परापरब्रह्मरूपस्याक्षरस्योंकारस्योपव्याख्यानं ब्रह्मप्र-

---

१ क. अथैते।

**भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रि-
कालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा
ब्रह्म सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिष्प्रज्ञः**

---

तिपत्त्युपायत्वाद्ब्रह्मसमीपतया कथनं प्रस्तुतमिति शेषः । भूतमित्यादि कालत्रयपरिच्छेद्यं यत्तदकार एव वाच्यवाचकाभेदात्तस्य चोंकारमात्रत्वाद्यच्चान्यात्त्रिकालातीतं कालत्रयापरिच्छेद्यमव्याकृतं सूत्रं च तदपि सर्वमोंकार एव वाच्यस्य वाचकानतिरेकन्यायात् । यत्त्वत्र त्रिकालातीतं निर्गुणं ब्रह्म [ तन्न ] ग्राह्यं तस्यावाग्विषयत्वेन लक्ष्यत्वेनोंकारातिरेकात् । नन्वोमित्येतदित्यनेन वाच्यवाचकयोरैक्यासिद्धौ किमर्थं भूतमित्यादिना पुनरैक्यमुच्यते । पूर्वेण वाचकेन वाच्यस्यैक्यमुक्तं द्वितीयेन वाच्येन वाचकस्यैक्यमुच्यत इति चेन्न । एकोक्त्यैव द्वयोरभेदासिद्धेः । न हि वाचकेन वाच्यमभिन्नमित्युक्ते वाच्येन वाचकस्य भेदस्तिष्ठति । उच्यते । परस्परैक्यवचनं द्वयोरेकत्वप्रतिपत्त्यर्थम् । इतरथा ह्यभिधानतन्त्राऽभिधेयप्रतिपत्तिरित्यभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यात् । अत एवाग्रे निरस्ताविद्यातमोमोहोऽहमेवेति संभाव्योऽहमित्यनेन रामात्मनोः परस्परैक्यं वदिष्यति । उक्ते वाच्यवाचकाभिन्नत्वे प्रविलापनं प्रयोजनमाह—**सर्वं ह्येतद्ब्रह्मेति** । सर्वं यदुक्तमोंकारमात्रमिति तदेतत्कारणं कार्यं च ब्रह्म । तत्किं परोक्षं नेत्याह—**अयमात्मा ब्रह्मेति** । यद्ब्रह्म श्रुत्या सर्वात्मकमुक्तं तन्न परोक्षमिति मन्तव्यं किं त्वयमात्मेत्यन्वयः । चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मतयाऽभिनयन्निर्दिशति—**अयमात्मेति** । हस्ताग्रं त्दृदयदेशमानीयायमिति प्रदर्श्यते । ओंकाराभिधेयः परापरत्वेन व्यवस्थितश्चतुष्पात्त्वविधानार्थं निर्दिश्यते— **सोऽयमात्मेति** । चतुष्पाच्चत्वारः पादा जाग्रदादिरूपा यस्य स तथा । तत्र त्रयाणां पादानां पद्यतेऽनेनेति करणव्युत्पत्त्या तुरीयप्राप्तौ करणत्वं चतुर्थस्य तु पद्यते य इति कर्मव्युत्पत्त्या प्राप्यत्वेन फलत्वम् । विश्वादीनां हि त्रयाणां पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिष्टा । साकारपक्षे भरतादिभिस्त्रिभिः फलभूतेनाऽऽत्मना च चतुष्पात्त्वम् । नन्वात्मनो निरवयवस्य पादद्वयमपि नोपपद्यते तत्कथं चतुष्पात्त्वमत आह—**जागरितस्थान इति** । परमार्थतश्चतुष्पात्त्वाभावेऽपि काल्पनिकमुपायोपेयभूतं पादचतुष्टयमविरुद्धमिति भावः । जागरितं स्थानमभिमानस्य विषयभूतमस्य स तथा । साकारपक्षे जागरूको लक्ष्मणः । **बहिष्प्रज्ञ इति** । प्रज्ञायास्तावदान्तरत्वप्रसिद्धेरयुक्तं बहिष्प्रज्ञत्वमिति चेन्न । बहिः स्वात्मव्यतिरिक्ते विषये प्रज्ञाऽस्य स बहिष्प्रज्ञः । यद्यपि चैतन्यलक्षणा प्रज्ञा स्वरूपभूता न बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वाद्बाह्यस्य च विषयस्य वस्तुतोऽभावान्न वा स्वरूपप्रज्ञा वस्तुतो बाह्यविषयेष्यते तथाऽपि बुद्धिवृत्तिरूपाऽसावज्ञानकल्पिता तद्विषया भवति न च वस्तुतः साऽपि तद्विषयतामनुभवति । वस्तुनः स्वयमभावा-

द्वाह्यस्य विषयस्य काल्पनिकत्वादतस्तद्विषयत्वं प्रातिभासिकमवधेयम् । साकारपक्षे सर्वदेशवृत्तान्तसावधानः । सप्ताङ्गः सप्तशीर्षण्यः पञ्चेन्द्रियाणि बुद्धिमनसी वाऽङ्गान्यस्य । अथवा मूर्धा चक्षुः प्राणः संदेहो बस्तिः पादावस्य च सप्ताङ्गानि 'तस्य मूर्धैव सुतेजाः' इत्यादिच्छान्दोग्यश्रुतेः । साकारपक्षे लक्ष्मणः शत्रुघ्नः सप्ताङ्गानि प्रत्युपायाः स्वमन्त्राक्षररूपाण्यस्य स तथा ।

यद्वा—"लोकाधिनाथं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम् ।
कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये" ॥

इतिश्लोकोक्तान्यनूद्यानि सप्त नामान्यङ्गानि साधनानि यस्य लक्ष्मणस्य सः । एकोनविंशतिमुख एकोनविंशतिर्मुखानि **याज्ञवल्क्योक्तानि**--

"इन्द्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ।
धारणा प्रेरणं दुःखमिच्छाऽहंकार एव च ॥
प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भावाभावौ ।
तस्येदमात्मजं सर्वमनादेरादिमिच्छतः" ॥ इति ।

मुखानि प्रवृत्तिद्वाराणि । यद्वा प्राणेन्द्रियान्तःकरणानि मुखान्यस्य । साकारपक्षे तु "शिरो मे राघवः पातु" इत्यारभ्य "पादौ बिभीषणश्रीदः" इत्यन्तानि शिरोभालदृक्श्रुतिघ्राणमुखजिह्वाकण्ठस्कन्धभुजकरत्हृदयमध्यनाभिकटिसक्थिजानुजङ्घापादरक्षाप्रतिपादकान्येकोनविंशतिवाक्यानि मुखे यस्य सः । रामरक्षापठनपर इत्यर्थः ।

"श्रीराम राम रघुनन्दन राम राम श्रीराम राम भरताग्रज राम राम ।
श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम" ॥

इतिश्लोकोक्तान्येकोनविंशतिनामानि मुखे यस्य स लक्ष्मण एकोनविंशतिमुखः ।

यद्वा—"रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणाकरं गुणनिधिं सत्यप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसंधं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे लोकाधिनाथं रघुकुलतिलकं राघवं रावणारिम्" ॥

इतिश्लोकोक्तानि पदानि श्रीरामस्तुतिपराणि मुखे यस्य लक्ष्मणस्येति नित्यं श्रीरामस्तुतिपर इत्यर्थः ।

यद्वा—"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् ॥ साहित्यं च" ।

इत्येता एकोनविंशतिर्विद्या मुखे यस्येति व्याख्येयम् ।

**स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तः-प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो**

---

स्थूलभुक् । इन्द्रियादिद्वारा स्थूलान्विषयान्भुङ्क्ते । विषयाणां स्थूलत्वं दिगादिदेवतानुगृहीतैः श्रोत्रादिभिर्गृह्यमाणत्वात् । साकारे स्थूलभुङ्महाभोक्ता । विश्वो विश्वाकारेण स्थितो विराड्देहाभिमानी । नरः पुरुषः । साकारे सर्वाश्रयत्वाद्विश्वः । प्रथमः पादः । एतत्पूर्वकत्वादुत्तरपादाधिगमस्य प्राथम्यमस्य । साकारपक्षे रामप्राप्तौ लक्ष्मणभजनस्य प्रथमोपायत्वाल्लक्ष्मणः प्रथमः पादः । नन्वयमात्मा ब्रह्मेति प्रत्यगात्मनोऽत्र चतुष्पात्त्वे प्रकृते कथं लक्ष्मणादिमन्त्रादिभिः सप्ताङ्गता कथं च द्यव्यादित्यादिभिः पृथिव्यन्तैराधिदैविकैः सप्ताङ्गता । उच्यते । उपास्योपासकयोरध्यात्माधिदैवतयोश्चाभेदस्य विवक्षितत्वात्तद्यथोक्तविशेषणयोगः संभवति । पादानामपि परस्परैक्यस्य विवक्षितत्वात्प्रथमपादादौ तुरीयपादादिधर्मयोगः । द्वितीयं पादमाह—**स्वप्नस्थान इति** । स्वप्नः स्थानं ममाभिन्नविषयभूतमस्य स तथा । स्वप्नजागरयोः को भेदः । उच्यते । जाग्रत्प्रज्ञाऽनेकसाधना बहिर्विषया प्रातिभासिकी मनःस्पन्दमात्रा सती यथाभूतं संस्कारं मनस्याधत्ते स जागरः । तन्मनस्तथासंस्कृतं चित्रितं इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभिः प्रेर्यमाणं जाग्रद्वदवभासते स स्वप्नः “ अस्य लोकस्य सर्वावतो मात्रामपादाय स्वपिति ” इति श्रुतेः । स्वप्नरूपेण परिणतं मनः साक्षिणो विषयो भवति । तथा च घटादिवद्विषयत्वान्मनसो नाऽऽत्मग्राहकत्वशङ्का । **अन्तःप्रज्ञ इति** । ननु विश्वस्य बाह्येन्द्रियजन्यप्रज्ञायास्तैजसस्य मनोजन्यप्रज्ञायाश्चान्तःस्थत्वाविशेषादन्तःप्रज्ञत्वं विशेषणमव्यावर्तकमिति चेदुपपादितं तावद्विश्वस्य बहिष्प्रज्ञत्वं तैजसस्त्वन्तःप्रज्ञो विज्ञायते बाह्यानीन्द्रियाण्यपेक्ष्य मनसोऽन्तःस्थत्वात्तत्परिणामत्वाच्च स्वप्नप्रज्ञायास्तद्वानन्तःप्रज्ञो युज्यते । किंच मनःस्वभावरूपा या जागरितवासना तद्रूपा स्वप्नप्रज्ञेति युक्तं तैजसस्यान्तःप्रज्ञत्वम् । साकारे शत्रुघ्नः कुमारपदव्यास्थितः प्रद्युम्नः कामितया सुखे सुष्वाप मन्त्रिपदमवलम्बमानोऽन्तःप्रज्ञश्च । सप्ताङ्गत्वमेकोनविंशतिमुखत्वं च पूर्ववत् । **प्रविविक्तभुगिति** । सूक्ष्मभुक् । ननु विश्वतैजसयोरविशिष्टं प्रविविक्तभुक्त्वं प्रज्ञाया भोज्यत्वस्य तुल्यत्वात् । मैवम् । तस्या भोज्यत्वाविशेषेऽपि तस्यामवान्तरभेदात्सविषयत्वाद्विश्वभोज्या प्रज्ञा स्थूला लक्ष्यते । तैजसे तु प्रज्ञा विषयसंस्पर्शशून्या वासनामात्ररूपेति विविक्तो भोगः । साकारपक्षे मिष्टान्नभोजी शत्रुघ्नः प्रद्युम्नांशतया कामित्वात्कुमारत्वाच्च तैजसस्तेजोमयः । ननु स्वप्नाभिमानिनस्तेजोविकारत्वाभावात्कुतस्तैजसत्वम् । उच्यते । स्थूलो विषयो यस्यां वासनामय्यां प्रज्ञायां ज्ञायते तस्यां विषयसंस्पर्शमन्तरेण प्रकाशमात्रतया स्थितायामाश्रयत्वेन भवतीति स्वप्नद्रष्टा तैजसो विवक्षितः । तेजःशब्देन यथोक्तवासनामय्याः प्रज्ञाया विवक्षितत्वात् ।

द्वितीयः पादः। यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः

---

साकारपक्षे शत्रुघ्नस्तैजसः प्रद्युम्नांशत्वेन जगद्बीजत्वात् । द्वितीयः पादः। पद्यतेऽनेनेति व्युत्पत्त्या। साकारपक्षे लक्ष्मणापेक्षया द्वितीयः शत्रुघ्नो रामप्राप्तिहेतुत्वात्पादः। तृतीयं पादं व्याचष्टे—**यत्रेति**। त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां समत्वादस्य तुरीयात्पूर्वं निरूपणम्। न कंचन काममिति जागरव्यावृत्तिर्न कंचन स्वप्नं पश्यतीति स्वप्नस्य । नन्वेकेनैवोभयव्यवच्छेदासिद्धौ द्वितीयमनर्थकमिति चेदेवं तर्हि विशेषणयोर्विकल्पेन व्यवच्छेदकत्वान्नाऽऽनर्थक्यम् । कामसंस्पर्शविरहित्वमन्यथा-ग्रहणशून्यत्वं च तयोरर्थः । **सुषुप्तस्थान इति** । सुषुप्तं स्थानद्वयविशेषरहितं स्थानं भूमिरस्य स तथा। एकीभूत ऐक्यमापन्नः कार्यलये कारणेनाव्यक्तेनाभेदमापन्नो नैशत-मोग्रस्तमिवाहस्तेनैकीभूत इव भवति । प्रज्ञानघनः प्रज्ञानानि स्वप्नजाग्रन्मनःस्पन्दनानि घनीभूतानीवास्य स प्रज्ञानघनः । एवशब्दाज्जात्यन्तरनिषेधः। आनन्दमय आनन्दप्र-चुरो नाऽऽनन्दविकारः कूटस्थत्वात्किंतु स्वरूपसुखाभिव्यक्तिप्रतिबन्धकदुःखाभावादान-न्दप्रचुरः। मयटः स्वरूपार्थत्वादानन्दत्वमेव किं न स्यादिति चेन्न। न हि सुषुप्ते निरु-पाधिकानन्दत्वं प्राज्ञस्याभ्युपगन्तुं शक्यम्। तस्य कारणोपहितत्वादन्यथा मुक्तत्वात्पुन-रुत्थानायोगात्तस्मादानन्दप्राचुर्यमेवास्य स्वीकर्तुं युक्तमत आनन्दभुक्सौषुप्तपुरुषस्य तस्या-मवस्थायां स्वरूपभूतानतिशयानन्दाभिव्यक्तिरस्ति 'एषोऽस्य परमानन्दः' इति श्रुतेः। चेतोमुखः स्वप्नो जागरितं चेति प्रतिबोधशब्दितं चेतस्तत्प्रति द्वारीभूतत्वात्। न हि स्वप्नस्य जागरितस्य वा सुषुप्तं द्वारमन्तरेण संभवोऽस्ति तयोस्तत्कार्यत्वात्। नन्वेवं चेतो-मुखमिति स्यात्। एवं तर्हि बोधलक्षणं चेतो मुखं द्वारमस्य स्वप्नाद्यागमनं प्रतीति चेतो मुखः । प्राज्ञस्य सुषुप्ताभिमानिनः स्वप्नं जागरितं वा प्रति यदागमनं तत्प्रति चैतन्य-मेव द्वारं न हि तद्व्यतिरेकेण काऽपि चेष्टा सिध्यतीत्यर्थः। प्राज्ञः प्रजानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः। त्रैकालिकवस्तुज्ञातृत्वमस्यैव । ननु सुषुप्ते समस्तविशेषविज्ञानोपरमा-त्कुतो ज्ञातृत्वमिति चेन्न । सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते। यथा मथुराय-पूर्वमुषितोऽपि माथुरः । तर्हि प्राज्ञशब्दस्य मुख्यार्थत्वं न सिध्यतीति चेत्तर्हि प्रज्ञप्तिः मात्रमस्यैवासाधारणं रूपमिति प्राज्ञः । इतरयोर्विशिष्टमपि विज्ञानमस्ति सोऽयं तृतीय। पादस्तुरीयप्रतिपत्तिहेतुत्वात्पादः । प्रज्ञात्मकस्तु भरत इत्युक्तवचनाद्भरतपक्षे योज्यते। सुप्तो जितेन्द्रियः । न कंचन कामं कामयते पित्रा दत्तस्यापि राज्यस्य परित्यागात्। न कंचन स्वप्नं पश्यति कार्येषु जागरूकत्वात् । तत्सुषुप्तं तस्य स्थितप्रज्ञत्वम्। सुषु-प्तस्थाने नन्दिग्रामे गुहाशय एकीभूतो भक्त्या रामेणैक्यमापन्नो मातृपक्षत्यागाद्वा

**प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनम-**

प्रज्ञानघन एव महाप्रज्ञः । आनन्दमयो हर्षशोकाद्यनाकुलत्वादत एवाऽऽनन्दभुगनिरुद्धत्वात् । चेतोमुखः कर्तव्यपरिपाकदर्शी । प्राज्ञः कुशाग्रबुद्धिः । तृतीयः सुमित्रासुतद्वयापेक्षया । पादो रामस्यान्तरङ्गः प्रापकः । प्राज्ञस्याऽऽधिदैविकेनान्तर्यामिणाऽभेदं गृहीत्वा विशेषान्तरमाह—**एष सर्वेश्वर इति** । उपाध्यप्राधान्यमवधूय स्वरूपावस्थश्चैतन्यप्रधानः सर्वेश्वरः । अन्यथा स्वातन्त्र्यानुपपत्तेः । साकारपक्षे भरतः सर्वेश्वरः पितृभ्रातृभ्यां देशाधिपत्येऽभिकृतत्वात् । एष सर्वज्ञोऽन्ये कतिपयज्ञाः । भरतः सर्वशास्त्रतत्त्वज्ञः । एषोऽन्तर्यामी एष एवान्तरनुप्रविश्य सर्वेषां भूतानां नियन्ता । भरतः पुरीमनुप्रविश्य लोकानां नियन्तेतरयोर्वनवासित्वात् । एष योनिः सर्वस्य सर्वजगत्कारणं कारणत्वे प्रकृतविशेषणत्रयमेव हेतुः । भरतः सर्वस्य धर्मादेर्योनिर्धर्माधिकारित्वादर्थशास्त्रोक्तसर्वराजकार्यसंपादकत्वाच्च प्रभवाप्ययौ हि भूतानामेष इत्यनुषङ्गः । निमित्तकारणत्वेऽप्युक्तानि विशेषणानि निर्वहन्तीत्याशङ्क्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति न्यायान्निमित्तोपादानयोर्न जगति भिन्नत्वमित्येवं नियमतः प्रभवाप्ययावित्युक्तम् । प्रभवत्यस्मादिति प्रभवः 'ऋदोरप्' । अप्येत्यस्मिन्नित्यप्ययः 'एरच्' न त्वेतौ भूतानामेकत्रोपादानादृते संभाविताविति भावः । भरतोऽपि भूतानां सिद्धानां कार्याणां घटको विघटकश्च भवति श्रीरामसाम्राज्यसेनाधिपत्याङ्गीकारात् । एतदन्तो ग्रन्थः प्राज्ञपरः । एषपदोपादानात्तदनुवृत्तेश्च । एवं पादत्रये व्याख्याते व्याख्येयत्वेन क्रमवशात्प्राप्तं चतुर्थं पादं व्याख्यातुमुत्तरग्रन्थप्रवृत्तिर्नान्तःप्रज्ञमित्यादि । ननु पादत्रयवद्विधिमुखेनैव चतुर्थपादो व्याख्यायतां किमिति निषेधमुखेन व्याख्यायते । उच्यते । सर्वाणि यानि शब्दप्रवृत्तौ निमित्तानि षष्ठीगुणादीनि तैः शून्यत्वात्तुरीयस्य वाच्यत्वायोगान्निषेधद्वारेणैव तन्निर्देशः संभवतीति । यदि चतुर्थं न विधिमुखेन निर्देष्टुं शक्यं तर्हि शून्यमेव तदापद्येत तन्निषेधेनैव निर्दिश्यमानत्वात्तथाविधं च नास्त्यर्थवदिति चेन्न । न तुरीयस्य शून्यत्वमनुमातुं युक्तं विमतं सदधिष्ठानं कल्पितत्वात्तथाविधरजतादिवदित्यनुमानात्तुरीयस्य सत्त्वसिद्धेर्मिथ्याकल्पितस्य निर्निमित्तत्वानुपपत्तेः । नहि रजतसर्पस्थाणुपुरुषमृगतृष्णिकादिविकल्पाः शुक्तिकारज्जुस्थाणूषरादिव्यतिरेकेणावस्तुत्वास्पदाः शक्याः कल्पयितुं रजतादीनां सदनुविद्धबुद्धिबोध्यत्वादवस्तुत्वास्पदत्वायोगात्तद्वदेव प्राणादिविकल्पानामपि नावस्त्वास्पदत्वं सिध्यतीति न तुरीयस्यावस्तुत्वम् । नान्तःप्रज्ञमिति तैजसनिषेधः । न बहिष्प्रज्ञमिति विश्वनिषेधः । नोभयतःप्रज्ञमिति युगपत्सर्वविषयप्रज्ञातृत्वनिषेधः । नाप्रज्ञमित्यचैतन्यनिषेधः । न प्रज्ञानघनमिति सुषुप्तावस्थानिषेधः सुषु-

**दृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**

प्तस्य बीजभावाविवेकरूपत्वात् । विशेषविज्ञानानां सर्वेषां घनमेकं साधारणमविभक्तं सुषुप्तमिति तत्प्रतिषेधो नेत्यादिना संभवति । निषेधशास्त्रालोचनया निर्विशेषत्वं तुरीयस्योक्तं तत एव ज्ञानेन्द्रियाविषयत्वाददृष्टम् । दृष्टस्यैवार्थक्रियादर्शनाददृष्टत्वादर्थक्रियारहितत्वमित्याह—**अव्यवहार्यमिति** । अग्राह्यं कर्मेन्द्रियाद्यैरिति नादृष्टमित्यनेन पौनरुक्त्यम्—**अलक्षणमिति** । ननु सत्यं ज्ञानमनन्तमित्यादिलक्षणोपलम्भादयुक्तमेतत् । एवं तर्हि लक्ष्यतेऽनेनेति लक्षणं लिङ्गं तद्रहितमलक्षणम् । ननु को ह्येवान्यात्कः प्राण्यादित्यादिलिङ्गोपन्यासाविरुद्धमेतत् । एवं तर्हि लिङ्गमनुमापको हेतुस्तद्रहितमनुमानाविषय औपनिषदत्वात्। प्रत्यक्षानुमानाविषयत्वादचिन्त्यं मनसोऽविषयः। अत एवाव्यपदेश्यं शब्दैः । शब्दप्रवृत्तेर्मनःप्रवृत्तिपूर्वकत्वात् । तर्हि यथोक्तं वस्तु नास्त्येव प्रमाणाभावादित्याशङ्क्याऽऽह—**एकात्मप्रत्ययसारमिति** । जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयमनुगतप्रत्ययगम्यम् । एवमन्तःप्रज्ञत्वादिस्थानिधर्मनिषेधः कृतः। प्रपञ्चोपशममिति जाग्रदादिस्थानिधर्मनिषेध उच्यतेऽत एव न पौनरुक्त्यम् । शिवं परिशुद्धं परमानन्दरूपमिति यावत् । अद्वैतं भेदविकल्परहितम् । चतुर्थं संख्याविशेषविषयत्वाभावेऽपि प्रतीयमानपदत्रयरूपवैलक्षण्यात्तुरीयं मन्यन्ते वेदविदः । तस्योक्तलक्षणत्वेऽपि नः किमायातमित्याशङ्क्याऽऽह—**स आत्मेति** । आत्मनि यथोक्तविशेषणानि न प्रतिभान्तीत्याशङ्क्याऽऽह—**स विज्ञेय इति** । प्रतीयमानभूसर्पभूच्छिद्रदण्डादिव्यतिरिक्ता यथा रज्जुस्तथा तत्त्वमसीत्यादिवाक्यार्थं आत्माऽदृष्टो द्रष्टा नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इत्यादिश्रुतिभिरुक्तः स विज्ञेय इत्यर्थः । आत्मन्यव्यवहार्ये कुतो विज्ञेयत्वमिति चेद्भूतपूर्वगत्या पूर्वमविद्यावस्थायां या ज्ञेयत्वाख्या तथा व्यपदेशो ज्ञाते तु द्वैताभावो ज्ञानेन द्वैतकारणस्याज्ञानस्यापनीतत्वात् । साकारपक्षे तु तीर्थयात्रात आगतो रामोऽन्तर्निष्ठो यदाऽभूत्तद्दशा वर्ण्यते । नान्तःप्रज्ञमित्यादिषण्निषेधैस्तस्य शान्तावस्थोक्ता । अदृष्टमित्यादिषड्विशेषणैर्दान्तावस्थोक्ता । एकात्मप्रत्ययसारमित्युपरतता । प्रपञ्चोपशममित्यादिविशेषणत्रयेण निष्पन्नदशा । चतुर्थं लक्षणाद्यपेक्षया । स आत्मा बन्धुः सर्वेषां स विज्ञेयः सर्वप्रदत्वात् । इयं रामस्य दशा राजानं पितरं प्रति भृत्यैरुक्ता । तथाहि—

" भृत्या ऊचुः—रामो राजीवपत्राक्षो यतः प्रभृति चाऽऽगतः ।
स व्यग्रस्तीर्थयात्रायास्ततः प्रभृति दुर्मनाः "॥ इत्यादिना ।

१ क 'दृश्यम' । २ ज. 'णवि' ।

**सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति संभाव्योऽहमित्योंं तत्सद्यत्परं ब्रह्म रामचन्द्राश्चिदात्मकः । सोऽहमों तद्रामचन्द्रः परं ज्योतिः सोऽहमोमित्यात्मानमादाय मनसा ब्रह्मणैकीं कुर्यात् ।**

सदोज्ज्वलः । विश्वादयस्तु तमसा पिहितत्वात्कदाचित्सत्त्वपरिणामे सत्युज्ज्वला न सदा । सदोज्ज्वलत्वे हेतुरविद्येति निरुपाधित्वात्स्वरूपेण भास्वरो निरभ्र इव सूर्यः । रामः कुहकराहितत्वात्सदा यशसा भास्वरः स आत्मा न वैशेषिकेश्वर इव तटस्थोऽत एव स्वज्ञानाद्बन्धहरः " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति मन्त्रवर्णात् । राम आत्मतुल्यो दयालुतया कारागृहादिमोचकः । पुरुषत्वेन कदाचिज्जाड्यसंभवमाशङ्क्याऽऽह—**सर्वदा द्वैतरहित इति** । राम एकमनाः । स्वरूपलक्षणमाह—**आनन्दस्वरूप इति** । तर्हि कुतो द्वैतभानमत आह—**सर्वाधिष्ठान इति** । सर्वमविद्या तत्कार्यं च । सर्वाधिष्ठानत्वे प्रमाणं सन्मात्रः । सर्वसत्प्रत्यये सदालम्बनतैव हेतुः । राम आनन्दप्रचुरः सर्वलोकाश्रयः सच्चरित्रश्च । अविद्यातत्कार्यहीनः सर्वाधिष्ठानश्चेति विरुद्धमित्याशङ्क्याऽऽह—**निरस्ताविद्यातमोमोह इति** । अविद्यैव तमस्तत्कृतो मोहो मिथ्याज्ञानं स यतो नितरामस्तो दूरापास्त इत्यर्थः । वास्तवोऽविद्याद्यभाव आरोपितं सर्वाधिष्ठानत्वमिति न विरोध इति भावः । **अहमेवेति संभाव्य इति** । ईदृक्तुरीयोऽहमेवेति चिन्तनीयः । यथा तद्ब्रह्माहमेवेति तद्वत् । ब्रह्मण आत्मनैक्यमुक्त्वाऽऽत्मनो ब्रह्मणैक्यमाह—**अहमित्योमिति** । अहमित्युक्ते यत्प्रतीयते शबलं तत्तथा न किंत्वोंकारलक्ष्यं तुरीयं ब्रह्मेत्यर्थः । ओंकारवाच्यत्वं वारयति—**तत्सद्यत्परं ब्रह्मेति** । शुद्धं लक्ष्यमेवाहं न तु वाच्यं वाच्ययोर्भिन्नोपाधिकयोरैक्यासंभवात् । ब्रह्मण आत्मनैक्यवचनेनैव सिद्धेरात्मनो ब्रह्मैक्यवचनमौपचारिकैक्यनिरासार्थं परमार्थैक्यं हि सर्वश्रुतितात्पर्यसिद्धम् । ननु जीवब्रह्मणोरैक्यं सर्वश्रुतिसिद्धान्तः सर्वासूपनिषत्सु निरूपितस्तथाऽत्रापि निरूप्यते । एतावता प्रकृतदेवतायाः किमायातमत आह—**रामचन्द्रश्चिदात्मक इति** । ब्रह्मैव रामो ज्ञानैकविग्रहः । रामचन्द्रस्य ब्रह्मत्वात्तेन सह जीवस्यैक्यप्रतिपादनोपायमाह—**सोऽहमिति** । स प्रसिद्धोऽमुकपुत्रोऽमुकनप्ताऽहं मनुष्यादिरूपो न किंतु स ओंकाररूपस्तद्रूपो रामचन्द्ररूपः परज्योतीरूपोऽहम् । ओमित्येवमोंकारेणाऽऽत्मानं प्रसिद्धमादाय तत्त्वमस्यादिव्याख्यानन्यायेन मनसा करणेन ब्रह्म-

१ झ. °न्धरहितः स° । २ क. ख. छ. °मभद्रः प्° ।

सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥

इत्युपनिषद्य एवं वेद स मुक्तो भवतीति याज्ञवल्क्यः ॥ ३ ॥
अथ हैनमात्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नाश्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नाशीति[1] सर्वानिन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवतीति सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नाशी भवतीति कतमच्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लो-

णाऽविकृतेन रामेण सहैकी कुर्यात् । एकीकरणे फलमाह—**सदेति** । तत्त्वतः परमार्थतः सदाऽहं रामो न शोकभागित्येतद्ये प्रकर्षेण बुद्धिपूर्वं वदन्ति ते निश्चितं रामस्वरूपा एवेत्युपनिषत्परमार्थज्ञानं याज्ञवल्क्य ऊचे भरद्वाजं प्रतीति शेषः ॥ ३ ॥

वाच्यवाचकभेदभिन्नं जगत्प्रणवे विलीयते प्रणवश्च शब्दातीते लक्ष्ये तुरीयं च श्रीरामात्मकं श्रीरामश्च सर्वात्माऽऽत्मनो मत्तोऽभिन्नोऽहं च ततोऽभिन्न इत्युपदिष्टं तच्चाऽऽत्मज्ञानं विना न साक्षाद्भवतीति तज्जिज्ञासुः श्रोतृसभास्थोऽत्रिः सुकरोपायं पृच्छति—**अथ हैनमत्रिरिति** । अनन्तो देशकालापरिच्छिन्नोऽव्यक्तो मायागुहायां गूढ आत्मा सर्वसारः । उत्तरमाह—**स हेति** । अध्यात्ममधिलोकं च देशविशेषदेवताप्रसक्तिहेतुरित्याशयेनाऽऽह—**य इति** । पृष्टस्यैवानुवाद आदरार्थो य इत्यादिः । अविमुक्ते किमित्युपास्य इत्यत उक्तमविमुक्ते प्रतिष्ठितः । इतिशब्दो हेतौ । नन्वविमुक्तदेशो न ज्ञायतेऽतः पृच्छति—**स इति** । वरणायां वरणानामिकायां नद्यां नाश्यां नाशीनामिकायां च यो मध्यदेश ऐतिह्यप्रसिद्धस्तत्र प्रतिष्ठितोऽविमुक्तः । प्रवृत्तिनिमित्तं पृच्छति—**का वै वरणेति** । उत्तरमाह—**सर्वानिति** । यत्र स्नाताः पापदोषरहिता भवन्ति ।
तदुक्तं स्कान्दे—"अशीवरुणयोर्मध्ये पञ्चक्रोशं महत्तरम् ।
अमरा मरणमिच्छन्ति का कथा इतरे जनाः" ॥ इति ।

बाह्यस्य प्रसिद्ध्यैव ज्ञातत्वादान्तराध्यात्माभिप्रायेण पृच्छति—**कतमच्चास्येति** । अस्याविमुक्तस्य । उत्तरं भ्रुवोर्घ्राणस्य च यः संधिरिति । कूर्प(र्च) स्थानमित्यर्थः । तत्र हीडापिङ्गले संगते । संधिशब्दस्य निमित्तान्तरमाह—**स एष इति** । द्यौरिति प्रसि-

१ क. °ति जन्मान्तरकृ° ।

कस्य[1] परस्य[2] च संधिर्भवतीत्येतद्वै संधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति सोऽविमुक्तं ज्ञानमाचष्टे यो[3] वै तदेवं वेद स एषोऽक्षरोऽनन्तोऽव्यक्तः परिपूर्णानन्दैकचिदात्मा योऽयमविमुक्ते प्रतिष्ठित इति। अथ तं प्रत्युवाच—

श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः।
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः॥
ततः प्रसन्नो भगवाञ्श्रीरामः प्राह शंकरम्।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर इति॥

ततः सत्यानन्दचिदात्मा[4] श्रीराममीश्वरः पप्रच्छ—

मणिकर्ण्यां वा मत्क्षेत्रे गङ्गायां वा तटे पुनः॥

---

द्धस्य लोकस्य परस्य च 'परो दिवः' इत्युक्तस्य ज्योतिषश्च। एतद्धस्त्रसंधिरूपं ब्रह्मविदो योगिनः संध्येत्युपासते। उक्तं च **ब्रह्मोपनिषदि**—

"यदात्मा प्रज्ञयाऽऽत्मानं संधत्ते परमात्मनि।
तेन संध्याध्यानमेव तत्स्यात्संध्याभिवन्दनम्॥
निरुदका च या संध्या वाक्कायक्लेशवर्जिता।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम्"॥ इति।

गारुडे—"ब्रह्माण्डे ये गुणाः सन्ति शरीरे तेऽप्यवस्थिताः"॥

इत्यादिना शरीरे सर्वलोका उक्ताः। अस्य ग्रन्थस्य जाबालोपनिषद्यत्र च समः पाठोऽतस्तत एव व्याख्याविस्तरो विलोकनीयः। उपासनमुपसंहरति—**सोऽविमुक्त इति**। स रामः परमात्माऽविमुक्त उपास्य इति विद्धि। इतिर्वाक्यसमाप्तौ। साधिष्ठानोपासने फलमाह—**स इति**। अविमुक्तं ज्ञानमविमुक्तप्रदेशे ध्यानबलेन यत्प्राप्तं यद्वा विमुक्तं मत्त्यक्तं नित्यं ज्ञानं ब्रह्माख्यं यत्तदाचष्टे कथयति शिष्येभ्यः। यः पुमान्वै निश्चितं तदविमुक्तस्थानमेवमुक्तप्रकारं वेद जानाति। अविमुक्ताधिष्ठातृपुरुषस्वरूपमाह—**स एष इति**। अव्यक्त इन्द्रियाग्राह्यः। कथानन्तरं प्रस्तौति—**अथेति**। तमत्रिं प्रति याज्ञवल्क्यः कथान्तरमुवाच—**श्रीरामस्येति**। वृषभध्वजः काश्यां श्रीरामस्य मनुं मन्त्रं जजाप। ततः श्रीरामः प्राह। अहं परमेश्वरो यदभीष्टं तद्दास्यामि। इतिर्वाक्यसमाप्तौ। अतः परं श्रीराममीश्वरः पप्रच्छ ययाचे। सत्यानन्दचिदात्मेति द्वितीयार्थे प्रथमा। सत्यानन्दचिदात्मा श्रीराममीश्वरः पप्रच्छेत्यस्य स्थाने स होवाचेति कचित्पाठः। मणिकर्ण्यां मणिकर्णिकायां मत्क्षेत्रे मया कृते सेविते च क्षेत्रे काश्यां यो

---

१ ग. छ. °स्य च। २ क. °रय सं°। ३ क. यो वा एत°। ४ क. सच्चिदानन्दात्मानं। ५ ज. °समशाने।

म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरमिति ।

अथ होवाच श्रीरामः—

क्षेत्रे[1]ऽत्र तव देवेश यत्र कुत्राऽपि वा मृताः[2] ।
क्रिमिकीटादयोऽप्याशु मुक्ताः सन्तु न चान्यथा ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
त्वत्तो वा ब्रह्मणोवाऽपि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यासि मन्मन्त्रं स मुक्तो भविता शिवेति ॥

श्रीरामचन्द्रेणोक्तं योऽविमुक्तं पश्यति स जन्मान्तरितान्दोषान्वारयतीति स जन्मान्तरितान्पापान्नाशयतीति ॥ ४ ॥ अथ हैनं भरद्वाजो[3] याज्ञवल्क्यमुवाचाथ कैर्मन्त्रैः स्तुतः श्रीरामः प्रीतो

म्रियते तज्जन्तोर्मुक्तिं देहि । अतःपरं वरान्तरं न प्रार्थनीयम् । तव क्षेत्रे । क्षेत्रमपि तुभ्यं मया दत्तमिति भावः । 'क्रमेरिच्चोपधायाः' इतीत्वमिन् । क्रिमिः क्रमचारी पिपीलिकादिः । कीट बन्धवर्णयोः । कीटयति बध्नाति गृहं कीटो लूतादिः । यथा काष्ठादौ वज्रकीटः । न चान्यथा मद्वाक्यमिति शेषः । अनेन तारकेण षडक्षरेण । मा शुचः प्राणिदुःखेन शोकं मा कृथाः । मुक्तास्त्यक्तदेहाः । यस्य कस्यापि पशुपक्षिमृगादेरपि । जन्मान्तरितानन्यजन्मार्जितानपि दोषान्नाशयति च्छिनत्ति तेन वरेणेति क्वचित्पठ्यते । श्रीरामदत्तेन वरेण । इतिः खण्डसमाप्तौ । इदं वाराणसीशब्दस्य व्युत्पत्त्यन्तरं परेण नाशयति दोषान्वाराणशी(सी)ति । श्रीराममन्त्राणां प्रसङ्गादुत्कीलनमुच्यते—"ॐ जानकीशाय विद्महे शापनाशाय धीमहि । तन्नो रामः प्रचोदयात्" । अमुं योनिमुद्रां प्रदश्यं वारं (?)जपेच्छ्रीराममन्त्रा उत्कीलिता भवन्ति ॥ ४ ॥

पूजान्ते वैदिकैस्तान्त्रिकैर्लौकिकैश्च स्तवैः श्रीरामः स्तोतव्यस्तत्र वैदिकस्तवस्यालौकिकत्वादितरयोः स्वाधीनत्वात्तद्बुचा(ज्ञा)पनाय पृच्छतीत्याह—**अथ हैनमिति** । उवाच पप्रच्छ । सर्वैरपि प्रीतो भवतीत्यतो विशिष्टमभिप्रैति—**स्वात्मानमिति** । सप्तचत्वा-

१ क. °त्रेऽस्मिंस्तव । २ क. ग. छ. °ताः । कृमि° । ३ क. ग. झ. भारद्वाजो ।

भवति स्वात्मानं दर्शयति तान्नो ब्रूहि भगवन्निति । स होवाच याज्ञवल्क्यः[1] श्रीरामेणैवं शिक्षितो ब्रह्मा पुनरेतया गदया गाथया नमस्करोति—

[2]विश्वाधारं महाविष्णुं नारायणमनामयम् ।
[3]परिपूर्णानन्दविज्ञं [4]परज्योतिःस्वरूपिणम् ॥
मनसा संस्मरन्ब्रह्मा तुष्टाव परमेश्वरम् ।

ॐ यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा[5] यः परं ब्रह्म भूर्भुवः स्वस्तस्मै वै नमो नमः १ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चाखण्डैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः २ ॐ यो वै श्रीरामचन्द्रः स भगवान्यच्च ब्रह्मानन्दामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः ३ ॐ यो वै श्रीरामचन्द्रः स भगवा[6]न्यस्तारकं भूर्भुवः स्वस्तस्मै वै नमो नमः ४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो ब्रह्मा विष्णु[7]रीश्वरो यः सर्वदेवात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ५ ॐ यो वै श्रीरामचन्द्रः स भगवा[8]न्ये सर्वे वेदाः साङ्गाः सशा[9]खाः [10]सपुराणा भूर्भुवः स्वस्तस्मै वै नमो नमः ६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो जीवा[11]त्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ७ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः सर्वभूतान्तरात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ८ ॐ यो वै श्रीरामचन्द्रः स भग[12]वान्ये देवासुरम[13]नुष्यादिभावा भूर्भुवः स्वस्तस्मै वै नमो नमः ९ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये मत्स्यकूर्माद्यवतारा भूर्भुवः स्वस्तस्मै वै नमो नमः १० ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च प्राणो भूर्भुवः स्वस्तस्मै वै नमो नमः ११ ॐ यो वै श्रीरामचन्द्रः स भगवान्योऽन्तःकरणचतुष्टयात्मा भूर्भुवः स्वस्तस्मै

---

रिशतां(तो)वक्ष्यमाणत्वात्तानिति प्रश्ने बहुवचनम् । स्तुतेरनादित्वसूचनार्थं स्तुतिमाख्यायिकाद्वारेणाऽऽह—श्रीरामेणैवमिति । यद्यपि शंकरः प्रकृतस्तथाऽपि स मायान्तरे ब्रह्माऽप्येवं वाराणसीवृत्तान्तं रामेण शिक्षितः सन्नित्यर्थः । गदया गद्येन गाथया

---

१ क. ल्क्यः पूर्वं सत्यलोके श्रीरामचन्द्रेणै° । २ क. विश्वरूपधरं वि° । ३ क. ख. छ. पूर्णानन्दैकविज्ञानं । ४ क. परब्रह्मस्व° । ५ क. ग. °त्मा यत्परं । ६ क. °न्यत्तार° । ७ क. ष्णुर्महेश्व° । ८ क. °वान्यः स° । ९ ख. °शाखा भू° । १० क. सेतिहासपुराणा । ११ क. °वान्तरात्मा । १२ झ. °वान्यो दे° । १३ ख. °नुष्यमा° ।

वै नमो नमः १२ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च यमो भूर्भुवः स्वस्तस्मै वै नमो नमः १३ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चान्तको भूर्भुवः स्वस्तस्मै वै नमो नमः १४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च मृत्युर्भूर्भुवः स्वस्तस्मै वै नमो नमः १५ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः १६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यानि[1] पञ्च महाभूतानि भूर्भुवः स्वस्तस्मै वै नमो नमः १७ ॐ यो वै श्रीरामचन्द्रः स भगवान्[2]यः स्थावरजङ्गमात्मा[3] भूर्भुवः स्वस्तस्मै वै नमो नमः १८ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये पञ्चाग्नयो भूर्भुवः स्वस्तस्मै वै नमो नमः १९ ॐ यो वै श्रीरामचन्द्रः स भगवान्याः सप्त महाव्याहृतयो भूर्भुवः स्वस्तस्मै वै नमो नमः २० ॐ यो वै श्रीरामचन्द्रः स भगवान्या विद्या भूर्भुवः स्वस्तस्मै वै नमो नमः २१ × ॐ यो वै श्रीरामचन्द्रः स भगवान्या सरस्वती भूर्भुवः स्वस्तस्मै वै नमो नमः २२ ॐ यो वै श्रीरामचन्द्रः स भगवान्या लक्ष्मीर्भूर्भुवः स्वस्तस्मै वै नमो नमः २३ ॐ यो वै श्रीरामचन्द्रः स भगवान्या गौरी भूर्भुवः स्वस्तस्मै वै नमो नमः २४ ॐ यो वै श्रीरामचन्द्रः स भगवान्या जानकी भूर्भुवः स्वस्तस्मै वै नमो नमः २५ ॐ यो वै श्रीरामचन्द्रः स भगवा-न्[4]यच्च त्रैलोक्यं भूर्भुवः स्वस्तस्मै वै नमो नमः २६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च[5] सूर्यो भूर्भुवः स्वस्तस्मै वै नमो नमः २७ ॐ यो वै श्रीरामचन्द्रः स भगवान्[6]यश्च सोमो भूर्भुवः स्वस्तस्मै वै नमो नमः २८ ॐ यो वै श्रीरामचन्द्रः स भगवा-न्यानि[7] नक्षत्राणि भूर्भुवः स्वस्तस्मै वै नमो नमः २९ ॐ यो वै

---

व्यक्तवाचा । गद व्यक्तायां वाचि । यः प्रसिद्धो वै निश्चितं श्रिया जुष्टो रामश्चन्द्र इव स भगवान्षड्विधैश्वर्यसंपन्नः । अद्वैतपरमानन्दात्माऽद्वैतं यः परमानन्दस्तदात्मा । यः परमुत्कृष्टं ब्रह्माऽपि सन्भूर्भुवःस्वर्लोकत्रयीरूपस्तस्मा एवंरूपाय वै निश्चितं नमो नमः । एवं सप्तचत्वारिंशत्पर्यायाः पूर्वोद्धृतमालामन्त्राक्षरसंख्याका नारसिंहस्येवानुष्टुभाक्षरसं-

---

× एतदग्रे ङ. पुस्तकेऽविद्यापर्यायोऽधिको दृश्यते ।

---

१ क. °नि च प° । २ ग. छ. °वान्यत्स्थाव° । ३ ग. °मात्मकं भू° । ४ ख. ग. °न्यश्च त्रै° । ५ क. °वान्यः सू° । ६ क. °वान्यः सो° । ७ क. °नि च न° ।

श्रीरामचन्द्रः स भगवान्ये च नव ग्रहा भूर्भुवः स्वस्तस्मै वै नमो नमः ३० ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चाष्टौ लोकपाला भूर्भुवः स्वस्तस्मै वै नमो नमः ३१ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चाष्टौ वसवो भूर्भुवः स्वस्तस्मै वै नमो नमः ३२ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चैकादश रुद्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ३३ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये च द्वादशाऽऽदित्या भूर्भुवः स्वस्तस्मै वै नमो नमः ३४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यच्च भूतं भवद्भविष्यद्भूर्भुवः स्वस्तस्मै वै नमो नमः ३५ ॐ यो वै श्रीरामचन्द्रः स भगवान्ब्रह्माण्डस्यान्तर्बहिर्व्याप्नोति यो विराड्भूर्भुवः स्वस्तस्मै वै नमो नमः ३६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो हिरण्यगर्भो भूर्भुवः स्वस्तस्मै वै नमो नमः ३७ ॐ यो वै श्रीरामचन्द्रः स भगवान्या प्रकृतिर्भूर्भुवः स्वस्तस्मै वै नमो नमः ३८ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चोंकारो भूर्भुवः स्वस्तस्मै वै नमो नमः ३९ ॐ यो वै श्रीरामचन्द्रः स भगवान्याश्चतस्रोऽर्धमात्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ४० ॐ यो वै श्रीरामचन्द्रः स भगवान्यः परमपुरुषो भूर्भुवः स्वस्तस्मै वै नमो नमः ४१ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च महेश्वरो भूर्भुवः स्वस्तस्मै वै नमो नमः ४२ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च महादेवो भूर्भुवः स्वस्तस्तै वै नमो नमः ४३ ॐ यो वै श्रीरामन्द्रः स भगवान्य ॐ नमो भगवते वासुदेवाय (!) यो महाविष्णुर्भूर्भुवः स्वस्तस्मै वै नमो नमः ४४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः परमात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ४५ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो विज्ञानात्मा भूर्भुवः स्वस्तस्मै वै

---

ख्याका द्रष्टव्याः । अतः प्रतिपर्यायं क्रमेण बीजितया मालामन्त्राक्षराण्येकैकश आदावुच्चार्याणि । अथ षडक्षरवाच्यराममूलव्यूहस्य मालामन्त्रवाच्यः सप्तचत्वारिंशद्व्यूहः । तदुक्तम्—"कल्पितस्य शरीरस्य तस्य सेनादिकल्पना" इति । शरीरस्य मूलव्यूहस्य सेनादिकल्पना सप्तचत्वारिंशद्व्यूहस्य कल्पनेत्यर्थः । इतिशब्दः स्तुतिसमाप्तौ । एता-

---

१ ख. °न्यश्च भू° । २ क. ख. ग. छ. भव्यं भवि° । ३ ख. °वान्यो ब्रह्मा° । छ. °वान्यश्च ब्रह्मा° । क. °वान्यद्ब्रह्माण्डस्य बहिर्व्याप्तं भू° ।

नमो नमः ४६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः सच्चिदानन्दैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ४७ इत्येतान्ब्रह्मवित्सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुवंस्ततो देवः प्रीतो भवति[1]। तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छाति सोऽमृतत्वं च गच्छतीति* ॥ ५ ॥

इत्यथर्वणरहस्ये रामोत्तरतापनीयोपनिषत्समाप्ता ॥ २९ ॥

न्पूर्वोक्तानद्वैतपरमानन्दात्मादीन्ब्रह्मत्वेन वित्तवेत्ता एतैर्मन्त्रैर्नित्यं प्रत्यहं देवं रामं स्तुवन्भवेत्ततो देवः प्रीतोऽनुकूलो भवति । तस्माद्यतोऽयं स्तवः प्रीतिकृत्तस्माद्यः पुमानेतैर्मन्त्रैर्नित्यं त्रिसंध्यं देवं स्तौति स स्तोता देवं विष्णुं पश्यति साक्षात्करोति स जातसाक्षात्कारोऽमृतत्वं मोक्षं गच्छति। समुदितानामेव सप्तचत्वारिंशतां(तः)फलेन विनियोगात्पृथगेकैकजपो न कर्तव्यः। द्विरुक्तिः समाप्त्यर्था । उक्तमेव पुनरुच्यत उत्तरग्रन्थाभावादिति द्विरुक्त्या सूच्यते। उत्तरं च तत्तापनीयं च तपनादागतं तापनीयं वेणुकादित्वाच्छण्शैषिकः ॥ ९ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां रामोत्तरप्रदीपिका ॥ १ ॥

इति श्रीनारायणविरचिता रामोत्तरतापनीयोपनिषद्दीपिका समाप्ता ॥३६॥

* क. पुस्तक एतदुत्तरमधिको ग्रन्थो दृश्यते—

अथ हैनं भारद्वाजो याज्ञवल्क्यमुपसमेत्योवाच श्रीराममन्त्रराजस्य माहात्म्यमनुब्रूहीति।
स होवाच याज्ञवल्क्यः—
स्वप्रकाशः परं ज्योतिः स्वानुभूत्यैकचिन्मयः । तदेव रामचन्द्रस्य मनोराद्यक्षरः स्मृतः ।
अखण्डैकरसानन्दस्तारकब्रह्मवाचकः । रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ।
नमःपदं सुविज्ञेयं पूर्णानन्दैककारणम् । सदा नमन्ति हृदये सर्वे देवा मुमुक्षव इति ।

य एतं मन्त्रराजं श्रीरामचन्द्रषडक्षरं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वक्रतुभिरिष्टवान्भवति तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति श्रीरामचन्द्रमनुस्मरणेन गायत्र्याः शतसहस्राणि जप्तानि फलानि भवन्ति प्रणवानामयुतकोटिर्जप्ता भवति दश पूर्वान्दशोत्तरान्पुनाति स पङ्क्तिपावनो भवति स महान्भवति सोऽमृतत्वं च गच्छति ।

अत्रैते श्लोका भवन्ति—
गाणपत्येषु शैले(वे)षु शाक्तसौरेष्वभीष्टदः । वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ।
गाणपत्यादिमन्त्रेषु कोटिकोटिगुणाधिकः । मन्त्रस्तेष्वप्यनायासफलदोऽयं षडक्षरः ।

१ क. झ. इति ता° । २ ग. °तान्सप्त° । ३ क. ख. °ति स्वात्मानं दर्शयति । त° ।

षडक्षरोऽयं मन्त्रः स्यात्सर्वाघौघनिवारणः । मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः ।
कृतं दिने यद्दुरितं पक्षमासर्तुवर्षजम् । सर्वं दहति निःशेषं कुलाचलमिवानलः ।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ।
कोटिकोटिसहस्राणि उपपातकजान्यपि । सर्वाण्यपि प्रशाम्यन्ति राममन्त्रानुकीर्तनात् ।
भूतप्रेतपिशाचाद्याः कूष्माण्डब्रह्मराक्षसाः । दूरादेव प्रधावन्ति राममन्त्रप्रभावतः ।
ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् । कैवल्यं भगवत्त्वं च मन्त्रोऽयं साधयिष्यति ।
ग्राम्यारस(ण्य)पशुघ्नत्वं संचितं दुरितं च यत् । मद्यपापेन यत्पापं तदप्याशु विनाशयेत् ।
अभक्ष्याभक्षणोत्पन्नं मिथ्याज्ञानसमुद्भवम् । सर्वं विलीयते राममन्त्रस्यास्यैव कीर्तनात् ।
श्रोत्रियस्वर्णहरणाद्यच्च एवमुपस्थितम् । रत्नादेश्चापहारेण तदप्याशु विनाशयेत् ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं हत्वा च किल्बिषम् । संचिनोति नरो मोहाद्यद्यत्तदपि नाशयेत् ।
गत्वाऽपि मातरं मोहादगम्याश्चैव योषितः । उपास्यानेन मन्त्रेण रामस्तदपि नाशयेत् ।
महापातकपापिष्ठसंगत्या संचितं च यत् । नाशयेत्तत्कथालापशयनासनभोजनैः ।
पितृमातृवधोत्पन्नं बुद्धिपूर्वमघं च यत् । तदनुष्ठानमात्रेण सर्वमेतद्विलीयते ।
यत्प्रयागादितीर्थोक्तप्रायश्चित्तशतैरपि । नैवापनोद्यते पापं तदप्याशु विनाशयेत् ।
पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रादिषु स्वयम् । बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत् ।
कृच्छ्रैः सान्तपराकाद्यैर्वा न चान्द्रायणैरपि । पापं चानपनोद्यं यत्तदप्याशु विनाशयेत् ।
आत्मतुल्यसुवर्णादिदानैर्बहुविधैरपि । किंचिदप्यपरिक्षीणं तदप्याशु विनाशयेत् ।
अवस्थात्रितयष्वेवं बुद्धिपूर्वमघं च यत् । तन्मन्त्रस्मरणेनैव निःशेषं प्रविलीयते ।
अवस्थात्रितयेष्वेव मूलवधमघं च यत् । तत्तन्मन्त्रोपदेशेन सर्वमेतत्प्रणश्यति ।
आब्रह्म बीजदोषाश्च नियमादिक्रमोद्भवाः । स्त्रीणां च पुरुषाणां च मन्त्रेणानेन नाशिताः ।
येषु येष्वपि देशेषु रामभद्र उपास्यते । दुर्भिक्षादिभयं तेषु न भवेत्तु कदाचन ।
शान्तः प्रसन्नवदनो न क्रोधो भक्तवत्सलः । अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ।
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् । ददात्यायुष्यमैश्वर्यमन्ते विष्णुपदं च यत् ।

तदेतदृचाऽप्युक्तम्—ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासते । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् । ॐ सत्यमित्युपनिषत् ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# संन्यासोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ॐ अथाऽऽहिताग्निर्म्रियेत प्रेतस्य मन्त्रैः संस्कारोपतिष्ठते। स्वस्थो वाऽऽश्रमपारं गच्छेयमिति । एतान्पितृमेधिकानोषधिसंभारान्संभृत्यारण्ये गत्वाऽमावास्यायां प्रातरेवाग्नीनुपसमाधाय पितृभ्यः श्राद्धतर्पणं कृत्वा ब्रह्मेष्टिं निर्वपेत् । स सर्वज्ञः सर्वविद्यस्य

संन्यासोपनिषत्पञ्चखण्डा तत्त्व२९मिताऽनया ।
संनिपत्योपकार्यङ्गं संन्यासो ज्ञान ईर्यते ॥ १ ॥

योगाभ्यासेन कृतात्मसाक्षात्कारस्य विदुषः संन्यास एवोचित इति सेतिकर्तव्यताकं संन्यासं विधातुं संन्यासोपनिषदारभ्यते—**अथाऽऽहिताग्निरिति** । प्रेतस्य मृतस्य संस्कार उपतिष्ठत इति वक्तव्ये छान्दसः संधिः । स्वस्थः सन्नाश्रमपारं सर्वाश्रमाणां मतं संन्यासं गच्छेयमिति यदीच्छेत्तदाऽपि मन्त्रैः संस्कार उपतिष्ठत इति संबन्धः । एतान्वक्ष्यमाणान् । पितृमेधोऽस्त्येषां ते पितृमेधिका श्राद्धीयाः । अत इनिठनौ । तानोषधिसंभारानोषधीनां समूहान्संभृत्य समूहीकृत्यान्त्येष्टयेऽग्नीनाहवनीयादीनुपसमाधाय प्रकटीकृत्य । श्राद्धतर्पणं श्राद्धस्याल्पाच्तरत्वात्पूर्वनिपातः । तर्पणं च श्राद्धं च कृत्वेत्यर्थः । अथवा नित्यतर्पणादिदं भिन्नं श्राद्धान्ते तर्पणम् । ब्रह्मेष्टिं ब्रह्मा देवताऽस्याः सा ब्राह्मी सा चासाविष्टिश्च तां निर्वपेदुपक्रमेत । स सर्वज्ञ इत्यादिकल्पतामित्यन्तं मन्त्रं पठन्निर्वपेदित्यन्वयः । अत ऊर्ध्वं यद्ब्रह्मेति "ब्रह्मजज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः" इति च द्वाभ्यां मन्त्राभ्यां ब्रह्मणे चरुं हुत्वाऽथर्वादिभ्यश्चतुराहुतीर्हुत्वा "यज्ञ यज्ञं गच्छ" इति मन्त्राभ्यामग्नावरणी अग्निमन्थनकाष्ठे हुत्वा क्षिप्त्वा "यज्ञ यज्ञं गच्छ यज्ञपतिं

१ क. °वाऽन्तरेऽग्नी° । घ. °वाऽन्तेऽग्नी° ।

ज्ञानमयं तपस्तस्यैषाऽऽहुतिर्दिव्याऽमृतत्वाय कल्पतामित्येवमत ऊर्ध्वं यद्ब्रह्माभ्युदयाद्दिवं च लोकमिदममुं च सर्वं सर्वमभिजन्युः सर्वश्रियं दधतु सुमनस्यमाना ब्रह्मजज्ञानमिति ब्रह्मणेऽथर्वणे प्रजापतयेऽनुमतयेऽग्नये स्विष्टकृत इति हुत्वा यज्ञ यज्ञं गच्छेत्यग्रावरणी हुत्वोचित्सखायमिति चतुर्भिरनुवाकैराज्याहुतीर्जुहुयात्तैरेवोपतिष्ठते ।

गच्छ स्वां योनिं गच्छ स्वाहा" इत्यधराराणिम् । "एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा " इत्युत्तरारणिं क्षिप्त्वा, ओचिदित्याज्याहुतीर्जुहुयादित्यन्वयः । मन्त्रार्थस्तु यो ब्रह्मा सर्वज्ञः सर्वस्य ज्ञाता सर्ववित्सर्वं विन्दति लभते प्राप्तकामः । तपस्तपःफलम् । अमृतत्वाय तस्यामृतत्वात्तद्यागं समाप्य तत्त्वं दिशत्वित्यर्थः । यद्ब्रह्मेत्यस्यार्थः—यद्यत्र यस्मिन्नक्षत्रे ब्रह्मा देवोऽभ्युदयदभ्यजयात्किं दिवं लोकं चेदं दृश्यमानममुं चादृश्यमानं सर्वमाभिजन्युरभिजितवानिति पूर्वार्धमाभिजिन्नक्षत्रं ब्रह्मदेवत्यं स्तौति । नक्षत्रद्वारा तद्देवताया ब्रह्मणोऽपि स्तुतिः । उत्तरार्धेन प्रार्थना । सर्वमाभिजन्युः सर्वजननकत्रर्च्यभिजित्सुमनस्यमाना सुमना भवन्ती सर्वश्रियं सर्वां श्रियं दधतु दधातु करोतु । ब्रह्मजज्ञानमित्यस्यार्थः—स वेनः । वेञ् तन्तुसंताने । औणादिको नः । बाहुलकादात्वाभावः । जगद्वानकर्ता ब्रह्मा सुरुचः सुदीप्तेः सीमतो मर्यादातः पुरस्तात्पूर्वं प्रथमं मुख्यं ब्रह्मजज्ञानं ब्रह्म वेदस्तस्य जज्ञानं ज्ञानम् । छान्दसं द्वित्वम् । व्यावो वि(वर्वि)वृतवान्प्रकटी चकार । मुख्यो वेदार्थः सुमर्यादया प्रथमं येन प्रज्ञापित इत्यर्थः । आवरिति । वृञ् वरणे 'च्लि लुङि' मन्त्रे घसेति लेर्लुक् । 'छन्दस्यपि दृश्यते' इत्याडागमो गुणो 'लङ्' हल्ङ्याबिति तिपो लोपः । व्यवहिताश्चेति वेर्व्यवहितप्रयोगः । व्यावो व्य(वर्व्य)वरीद्विवृतवान् । पदस्य पौरुषेयत्वादवरिति पदकालेऽटमेव प्रयुञ्जते । किमुपमोऽयमत आह—बुध्न्या मुख्योपमाऽस्य ब्रह्मणो विष्ठा विस्थानं प्राप्ता विरुद्धास्थितयो नात्र प्रचरन्त्यनुपमोऽयमित्यर्थः । वेदार्थोऽनेन प्रकाशितोऽन्यच्च किं कृतमत आह— सतश्चासतश्च योनिमुत्पत्तिं विवो वि(वर्वि)वृवान्प्रकाशितवान्सर्वमुत्पादितवानित्यर्थः । वृञो लुङि'बहुलं छन्दस्यमाङ्योगेऽपि ' इत्यडभावः । विपूर्वः । शतपथे तु सूर्यपरतया व्याख्यातः । अनुवाकैराज्याहुतीरिति प्रत्यृचं होमोऽवगन्तव्यो मन्त्रभेदात् । अनुवाकानां व्याख्यानं तु गौरवात्प्रस्तुतानुपयोगाच्च नोच्यते । तैरेव चानुवाकैरुपतिष्ठते स्तौति मन्त्रप्रकाशितदेवताः । तेषु ऋक्संख्या यथाऽऽद्य एकषष्टिर्ऋचो द्वितीये षष्टिस्तृतीये सप्तत्रिंशच्चतुर्थ एकोननवतिः । एवं मिलिता ऋचो द्वे शते सप्तचत्वारिंशच२४७ ता यथा—

१ घ. °स्यैवाऽऽहु° ।

ॐ ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिद-र्णवं जगन्वान् । पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ॥ न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति । महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ॥ २ ॥ उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य । नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा विविश्याः ॥ ३ ॥ न यत्पुरा चकृमा कद्ध नूनमृतं वदन्तो अनृतं रपेम । गन्धर्वो अप्स्वप्या च योषा सा नौ नाभिः परमं जामि तन्नौ ॥ ४ ॥ गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः । नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥ ५ ॥ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ६ ॥ को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् । बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥ ७ ॥ यमस्य मा यम्यं काम आगन्त्समाने योनौ सहशे-य्याय । जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा ॥ ८ ॥ न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति । अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥ ९ ॥ रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरु-

न्निमीयात् । दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विवृहादजामि ॥ १० ॥ ( १ ) आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि । उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ ११ ॥ किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् । काममूता बह्वे३तद्रपामि तन्वा मे तन्वं १ सं पिपृग्धि ॥ १२ ॥ न ते नाथं यम्यत्राहमस्मि न ते तनूं तन्वा३ सं पपृच्याम् । अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १३ ॥ न वा उ ते तनूं तन्वा३ सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् । असंयदेतन्मनसो हृदो मे भ्राता स्वसुः शयने यच्छयीय ॥ १४ ॥ बतो बतासि यम नैव ते मनो हृदयं चाविदाम । अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ॥ १५ ॥ अन्यमू षु यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥ १६ ॥ त्रीणि च्छन्दांसि कवयो वि येतिरे पुरुरूपं दर्शतं विश्वचक्षणम् । आपो वाता ओषधयस्तान्येकस्मिन्भुवन आर्पितानि ॥ १७ ॥ वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः । विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजति यज्ञियाँ ऋतून् ॥ १८ ॥ रपद्गन्धर्वीरप्या च योषणा नदस्य

नादे परि पातु नो मनः । इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचाति ॥ १९ ॥ सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती । यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥ २० ॥ ( २ ) अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिरः श्येनो अध्वरे । यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥ २१ ॥ सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः । विप्रस्य वा यच्छशमान उक्थ्यो३ वाजं ससवाँ उपयासि भूरिभिः ॥ २२ ॥ उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति । विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥ २३ ॥ यस्ते अग्ने सुमतिं मर्तो अख्यत्सहसः सूनो अति स प्र शृण्वे । इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान्भूषति द्यून् ॥ २४ ॥ श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् । आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ २५ ॥ यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र । रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥ २६ ॥ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश ॥ २७ ॥ प्रत्यग्निरुषसा-

मग्नमह्वयन्प्रत्यहानि प्रथमो जातवेदाः । प्रति सूर्यस्य पुरुधा च रश्मीन्प्रति द्यावापृथिवी आ ततान ॥ २८ ॥ द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा । देवो यन्मर्तान्यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥ २९ ॥ देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् । धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ॥ ३० ॥ (३) अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे । अहा यद्देवा असुनीतिमायन्मध्वा नो अत्र पितरा शिशीताम् ॥ ३१ ॥ स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी । विश्वे देवा अनु तत्ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः ॥ ३२ ॥ किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद । मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥ ३३ ॥ दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति । यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥ ३४ ॥ यस्मिन्देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते । सूर्ये ज्योतिरदधुर्मास्य१क्तून्परि द्योतनिं चरतो अजस्रा ॥ ३५ ॥ यस्मिन्देवा मन्मनि संचरन्त्यपीच्ये३ न वयमस्य विद्म । मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ३६ ॥ सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे । स्तुष ऊ षु नृतमाय धृष्णवे ॥ ३७ ॥ शवसा ह्यसि

श्रुतो वृत्रहत्येन वृत्रहा । मघैर्मघोनो अति शूर दाशसि ॥ ३८ ॥ स्तेगो न क्षामत्येषि पृथिवीं मही नो वाता इह वान्तु भूमौ । मित्रो नो अत्र वरुणो युज्यमानो अग्निर्वने न व्यसृष्ट शोकम् ॥ ३९ ॥ स्तुहि श्रुतं गर्तसदं जनानां राजानं भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यमस्मत्ते नि वपन्तु सेन्यम् ॥ ४० ॥ ( ४ ) सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥ ४१ ॥ सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः । आसद्यास्मिन्बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥ ४२ ॥ सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती । सहस्रार्घमिडो अत्र भागं राय-स्पोषं यजमानाय धेहि ॥ ४३ ॥ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ४४ ॥ आऽहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ४५ ॥ इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ ४६ ॥ मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । यांश्च देवा वावृधुर्ये च देवांस्ते नोऽवन्तु पितरो हवेषु ॥ ४७ ॥

स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम् । उतो न्वस्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ ४८ ॥ परेयिवांसं प्रवतो महीरिति बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥ ४९ ॥ यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ । यत्रा नः पूर्वे पितरः परेता एना जज्ञानाः पथ्या अनु स्वाः ॥ ५० ॥ ( ५ ) बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥ ५१ ॥ आच्या जानु दक्षिणतो निषद्येदं नो हविरभि गृणन्तु विश्वे । मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ५२ ॥ त्वष्टा दुहित्रे वहतुं कृणोति तेनेदं विश्वं भुवनं समेति । यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ ५३ ॥ प्रेहि प्रेहि पथिभिः पूर्याणैर्येना ते पूर्वे पितरः परेताः । उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम् ॥ ५४ ॥ अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ५५ ॥ उशन्तस्त्वेधीमह्युशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ ५६ ॥ द्युमन्तस्त्वेधीमहि द्युमन्तः समिधीमहि । द्युमान्द्युमन्त आ वह पितॄ-

न्हविषे अत्तवे ॥ ५७ ॥ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ५८ ॥ अङ्गिरोभिर्यज्ञियैरा गहीह यमं वैरूपैरिह मादयस्व । विवस्वन्तं हुवे यः पिता तेऽस्मिन्बर्हिष्या निषद्य ॥ ५९ ॥ इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषो मादयस्व ॥ ६० ॥ इत एत उदारुहन्दिवस्पृष्ठान्यारुहन् । प्र भूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥ ६१ ॥ ( ६ ) प्रथमोऽनुवाकः ॥ १ ॥ यमाय सोमः पवते यमाय क्रियते हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥१॥ यमाय मधुमत्तमं जुहोता प्र च तिष्ठत । इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥२॥ यमाय घृतवत्पयो राज्ञे हविर्जुहोतन । स नो जीवेष्वा यमेद्दीर्घमायुः प्र जीवसे ॥३॥ मैनमग्ने वि दहो माभि शूशुचो माऽस्य त्वचं चिक्षिपो मा शरीरम् । शृतं यदा करसि जातवेदोऽथेमेनं प्र हिणुतात्पितृरुप ॥४॥ यदा शृतं कृणवो जातवेदोऽथेममेनं परि दत्तात्पितृभ्यः । यदो गच्छात्यसुनीतिमेतामथ देवानां वशनीर्भवाति ॥ ५ ॥ त्रिकद्रुकेभिः पवते षडुर्वीरेकमिद्बृहत् । त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आर्पिता॥६॥ सूर्यं चक्षुषा गच्छ वातमात्मना दिवं च गच्छ

पृथिवीं च धर्मभिः । अपो वा गच्छ यदि तत्र ते हितमोष-
धीषु प्रति तिष्ठा शरीरैः ॥ ७ ॥ अजो भागस्तपसस्तं तपस्व
तं ते शोचिस्तपतु तं ते अर्चिः । यास्ते शिवास्तन्वो जातवे-
दस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ८ ॥ यास्ते शोचयो रंह-
यो जातवेदो याभिरापृणासि दिवमन्तरिक्षम् । अजं यन्तमनु
ताः समृण्वतामथेतराभिः शिवतमाभिः शृतं कृधि ॥ ९ ॥
अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधावान् ।
आयुर्वसान उप यातु शेषः सं गच्छतां तन्वा सुवर्चाः ॥ १० ॥
(७) अति द्रव श्वानौ सारमेयौ चतुरक्षौ शबलौ साधुना पथा ।
अधा पितॄन्त्सुविदत्राँ अपीहि यमेन ये सधमादं मदन्ति ॥ ११ ॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिषदी नृचक्षसा ।
ताभ्यां राजन्परि धेह्येनं स्वस्त्यस्मा अनमीवं च धेहि ॥ १२ ॥
उरूणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १३ ॥
सोम एकेभ्यः पवते घृतमेक उपासते । येभ्यो मधु प्रधाव-
ति तांश्चिदेवापि गच्छतात् ॥ १४ ॥ ये चित्पूर्व ऋतसाता
ऋतजाता ऋतावृधः । ऋषीन्तपस्वतो यम तपोजाँ अपि
गच्छतात् ॥ १५ ॥ तपसा ये अनाधृष्यास्तपसा ये स्वर्य-
युः । तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ॥ १६ ॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः । ये वा सहस्रदक्षि-

णास्तांश्चिदेवापि गच्छतात् ॥ १७ ॥ सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् । ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ १८ ॥ स्योनास्मै भव पृथिव्यनृक्षरा निवेशनी । यच्छास्मै शर्म सप्रथाः ॥ १९ ॥ असंबाधे पृथिव्या उरौ लोके नि धीयस्व । स्वधा याश्चकृषे जीवंस्तास्ते सन्तु मधुश्चुतः ॥ २० ॥ ( ८ ) ह्वयामि ते मनसा मन इहेमान्गृहाँ उप जुजुषाण एहि । सं गच्छस्व पितृभिः सं यमेन स्योनास्त्वा वाता उप वान्तु शग्माः ॥ ११ ॥ उत्त्वा वहन्तु मरुत उदवाहा उदप्रुतः । अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति ॥ २२ ॥ उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे । स्वान्गच्छतु ते मनो अधा पितॄरुप द्रव ॥ २३ ॥ मा ते मनो मासोर्माऽङ्गानां मा रसस्य ते । मा ते हास्त तन्व१ः किं चनेह ॥२४॥ मा त्वा वृक्षः सं बाधिष्ट मा देवी पृथिवी मही । लोकं पितृषु वित्त्वैधस्व यमराजसु ॥ २५ ॥ यत्ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः । तत्ते संगत्य पितरः सनीडा घासाद्घासं पुनरा वेशयन्तु ॥ २६ ॥ अपेमं जीवा अरुधन्गृहेभ्यस्तं निर्वहत परि ग्रामादितः । मृत्युर्यमस्याऽऽसीद्दूतः प्रचेता असून्पितृभ्यो गमयां चकार ॥ २७ ॥ ये दस्यवः पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्र धमाति यज्ञात् ॥ २८ ॥ सं विश-

न्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त आयुः । तेभ्यः शकेम हविषा नक्षमाणा ज्योग्जीवन्तः शरदः पुरूचीः ॥ २९ ॥ यां ते धेनुं निपृणामि यमु ते क्षीर ओदनम् । तेना जनस्यासो भर्ता योऽत्रासदजीवनः ॥ ३० ॥ ( ९ ) अश्वावतीं प्र तर या सुशेवार्क्षाकं वा प्रतरं नवीयः । यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद्विदत भागधेयम् ॥ ॥ ३१ ॥ यमः परोऽवरो विवस्वान्ततः परं नाति पश्यामि किं चन । यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान ॥ ३२ ॥ अपागूहन्नमृतां मर्त्येभ्यः कृत्वा सवर्णामदधुर्विवस्वते । उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ ३३ ॥ ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः । सर्वांस्तानग्न आ वह पितॄन्हविषे अत्तवे ॥ ३४ ॥ ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते । त्वं तान्वेत्थ यदि ते जातवेदः स्वधया यज्ञं स्वधितिं जुषन्ताम् ॥ ३५ ॥ शं तप माति तपो अग्ने मा तन्वं तपः । वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः ॥ ३६ ॥ ददाम्यस्मा अवसानमेतद्य एष आगन्मम चेदभूदिह । यमश्चिकित्वान्प्रत्येतदाह ममैष राय उप तिष्ठतामिह ॥ ३७ ॥ इमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥ ३८ ॥ प्रेमां मात्रां०।० ॥ ३९ ॥ अपेमां मात्रां०।० ॥ ४० ॥

(१०) वीऽमां मात्रां०।० ॥ ४१ ॥ निरिमां मात्रां०।० ॥ ४२ ॥ उदिमां मात्रां०।० ॥ ४३ ॥ समिमां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा ॥ ४४ ॥ अमासि मात्रां स्वरगामायुष्मान्भूयासम् । यथापरं न मासातै शते शरत्सु नो पुरा ॥ ४५ ॥ प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय । अपरिपरेण पथा यमराज्ञः पितॄन्गच्छ ॥ ४६ ॥ ये अग्रवः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः । ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः ॥ ४७ ॥ उदन्वती द्यौरवमा पीलुमतीति मध्यमा। तृतीया ह प्रद्यौरिति यस्यां पितर आसते ॥ ४८ ॥ ये नः पितुः पितरो पितामहा य आविविशुरुर्वऽन्तरिक्षम्। य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥ ४९ ॥ इदमिद्वा उ नापरं दिवि पश्यसि सूर्यम् । माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ५० ॥ (११) इदमिद्वा उ नापरं जरस्यन्यदितोऽपरम् । जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ॥ ५१ ॥ अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया। जीवेषु भद्रं तन्मयि स्वधा पितृषु सा त्वयि ॥ ५२ ॥ अग्नीषोमा पथिकृता स्योनं देवेभ्यो रत्नं दधथुर्वि लोकम् । उप प्रेष्यंतं पूषणं यो वहात्यञ्जोयानैः पथिभिस्तत्र गच्छतम् ॥ ५३ ॥ पूषा त्वेतश्च्या-

वयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ५४ ॥ आयुर्विश्वायुः परि पातु त्वा पूषा त्वा पातु प्रपथे पुरस्तात् । यत्रासते सुकृतो यत्र त ईयुस्तत्र त्वा देवः सविता दधातु ॥ ५५ ॥ इमौ युनज्मि ते वह्नी असुनीताय वोढवे । ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात् ॥ ५६ ॥ एतत्त्वा वासः प्रथमं न्वागन्नपैतदूह यदिहाबिभः पुरा । इष्टापूर्तमनुसंक्राम विद्वान्यत्र ते दत्तं बहुधा विबन्धुषु ॥ ५७ ॥ अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च । नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विदक्षन्परीङ्खयातै ॥ ५८ ॥ दण्डं हस्तादाददानो गतासोः सह श्रोत्रेण वर्चसा बलेन । अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्जयेम ॥ ५९ ॥ धनुर्हस्तादाददानो मृतस्य सह क्षत्रेण वर्चसा बलेन । समागृभाय वसु भूरि पुष्टमर्वाङ्त्वमेह्युप जीवलोकम् ॥ ६० ॥ ( १२ ) द्वितीयोऽनुवाकः ॥ २ ॥ त्रयस्त्रिंशः प्रपाठकः ॥ ३ ॥ इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् । धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥ १ ॥ उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि । हस्तग्राभस्य दधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ २ ॥ अपश्यं युवतिं नीयमानां जीवां

मृतेभ्यः परिणीयमानाम् । अन्धेन यत्तमसा प्रावृतासीत्प्राक्तो
अपाचीमनयं तदेनाम् ॥ ३ ॥ प्रजानत्यघ्न्ये जीवलोकं देवा-
नां पन्थामनुसंचरन्ती । अयं ते गोपतिस्तं जुषस्व स्वर्ग
लोकमधि रोहयैनम् ॥ ४ ॥ उप द्यामुप वेतसमवत्तरो नदी-
नाम् । अग्ने पित्तमपामसि ॥ ५ ॥ यं त्वमग्ने समदहः
स्तमु निर्वापया पुनः । क्याम्बूरत्र रोहतु शाण्डदूर्वा व्य-
ल्कशा ॥ ६ ॥ इदं त एकं पर ऊं त एकं तृतीयेन
ज्योतिषा सं विशस्व । संवेशने तन्वा२ चारुरेधि प्रियो
देवानां परमे सधस्थे ॥ ७ ॥ उत्तिष्ठ प्रेहि प्र द्रवौकः
कृणुष्व सलिले सधस्थे । तत्र त्वं पितृभिः संविदानः
सं सोमेन मदस्व सं स्वधाभिः ॥ ८ ॥ प्र च्यवस्व तन्वं१
सं भरस्व मा ते गात्रा वि हायि मो शरीरम् । मनो
निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥ ९ ॥
वर्चसा मां पितरः सोम्यासो अञ्जन्तु देवा मधुना घृतेन ।
चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु
॥ १० ॥ (१३) वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णु-
र्न्यनक्त्वासन् । रयिं मे विश्वे नियच्छन्तु देवाः स्योना
मापः । पवनैः पुनन्तु ॥ ११ ॥ मित्रावरुणा परि माम-
धातामादित्या मा स्वरवो वर्धयन्तु । वर्चो म इन्द्रो
न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ॥ १२ ॥

यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥ १३ ॥ परा यात पितर आ च यातायं वो यज्ञो मधुना समक्तः । दत्तो अस्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं दधात ॥ १४ ॥ कण्वः कक्षीवान्पुरुमीढो अगस्त्यः श्यावाश्वः सोभर्यर्चनानाः । विश्वामित्रोऽयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेवः ॥ १५ ॥ विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतम वामदेव । शर्दिर्नो अत्रिरग्रभीन्नमोभिः सुसंशासः पितरो मृडता नः ॥ १६ ॥ कस्ये मृजाना अति यन्ति रिप्रमायुर्दधानाः प्रतरं नवीयः । आप्यायमानाः प्रजया धनेनाध स्याम सुरभयो गृहेषु ॥ १७ ॥ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते । सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृह्णते ॥ १८ ॥ यद्वो मुद्रं पितरः सोम्यं च तेनो सचध्वं स्वयशसो हि भूत । ते अर्वाणः कवय आ शृणोत सुविदत्रा विदथे हूयमानाः ॥ १९ ॥ ये अत्रयो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचो दधानाः । दक्षिणावन्तः सुकृतो य उ स्थासद्यास्मिन्बर्हिषि मादयध्वम् ॥ २० ॥ ( १४ ) अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशशानाः । शुचीदयन्दीध्यत उक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ २१ ॥ सुकर्माणः सुरुचो देवयन्तो अयो न

देवा जनिमा धमन्तः । शुचन्तो अग्निं वावृधन्त इन्द्रमुर्वी गव्यां परिषदं नो अक्रन् ॥ २२ ॥ आ यूथेव क्षुमति पश्वो अख्यद्देवानां जनिमान्त्युग्र । मर्तासश्चिदुर्वशीरक्रप्रन्वृधे चिदर्य उपरस्यायोः ॥ २३ ॥ अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः । विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ २४ ॥ इन्द्रो मा मरुत्वान्प्राच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २५ ॥ धाता मा निर्ऋत्या दक्षिणाया दिशः पातु बाहु० ॥ २६ ॥ अदितिर्मादित्यैः प्रतीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि । लोककृतः पृथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२७॥ सोमो मा विश्वैर्देवैरुदीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २८ ॥ धर्ता ह त्वा धरुणो धारयाता ऊर्ध्वं भानुं सविता द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२९॥प्राच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३०॥ (१५) दक्षिणायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि । लोककृतः पृथिकृतो यजा-

महे ये देवानां हुतभागा इह स्थ ॥ ३१ ॥ प्रतीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३२ ॥ उदीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३३ ॥ ध्रुवायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३४ ॥ ऊर्ध्वायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३५ ॥ धर्तासि धरुणोऽसि वंसगोऽसि ॥ ३६ ॥ उदपूरसि मधुपूरसि वातपूरसि ॥ ३७ ॥ इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम् । प्र वां भरन्मानुषा देवयन्तो आ सीदतां स्वमु लोकं विदाने ॥ ३८ ॥ स्वासस्थे भवतमिन्दवे नो युजे वां ब्रह्म पूर्व्यं नमोभिः । वि श्लोक एति पथ्येव सूरिः शृण्वन्तु विश्वे अमृतास एतत् ॥ ३९ ॥ त्रीणि पदानि रुपो अन्वरोहच्चतुष्पदीमन्वैतद्व्रतेन । अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनाति ॥ ४० ॥ ( १६ ) देवेभ्यः कर्मवृणीत मृत्युं प्रजायै किममृतं नावृणीत । बृहस्पतिर्यज्ञमतनुत ऋषिः

प्रियां यमस्तन्वं१मा रिरेच ॥ ४१ ॥ त्वमग्न ईडितो जात-
वेदोऽवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया
ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥ ४२ ॥ आसीनासो
अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय। पुत्रेभ्यः पितर-
स्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ४३ ॥ अग्नि-
ष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः।
अत्ता हवींषि प्रयतानि बर्हिषि रयिं च नः सर्ववीरं दधात
॥ ४४ ॥ उपहूता नः पितरः सोम्यासो बर्हिष्येषु निधिषु
प्रियेषु। त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्व-
स्मान् ॥ ४५ ॥ ये नः पितुः पितरो ये पितामहा अनूहिरे
सोमपीथं वसिष्ठाः। तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः
प्रतिकाममत्तु ॥ ४६ ॥ ये तातृषुर्देवत्रा जेहमाना होत्राविदः
स्तोमतष्टासो अर्कैः। आग्ने याहि सहस्रं देववन्दैः सत्यैः कवि-
भिर्ऋषिभिर्घर्मसद्भिः ॥ ४७ ॥ ये सत्यासो हविरदो हविष्पा
इन्द्रेण देवैः सरथं तुरेण। आग्ने याहि सुविदत्रेभिरर्वाङ् परैः
पूर्वैर्ऋषिभिर्घर्मसद्भिः ॥ ४८ ॥ उप सर्प मातरं भूमिमेतामु-
रुव्यचसं पृथिवीं सुशेवाम्। ऊर्णम्रदाः पृथिवी दक्षिणावत
एषा त्वा पातु प्रपथे पुरस्तात् ॥ ४९ ॥ उच्छ्वञ्चस्व पृथिवि
मा नि बाधथाः सूपायनास्मै भव सूपसर्पणा। माता पुत्रं
यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ५० ॥ ( १७ ) उच्छ्वञ्च

माना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् । ते गृहासो घृतश्चुतः स्योना विश्वाहास्मै शरणाः सन्त्वत्र ॥ ५१ ॥ उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोकं निदधन्मो अहं रिषम् । एतां स्थूणां पितरो धारयन्ति ते तत्र यमः सादना ते कृणोतु ॥ ५२ ॥ इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम् । अयं यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम् ॥ ५३ ॥ अथर्वा पूर्णं चमसं यमिन्द्रायाबिभर्वाजिनीवते । तस्मिन्कृणोति सुकृतस्य भक्षं तस्मिन्निन्दुः पवते विश्वदानीम् ॥ ५४ ॥ यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः । अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ ५५ ॥ पयस्वतीरोषधयः पयस्वन्मामकं पयः । अपां पयसो यत्पयस्तेन मा सह शुम्भन्तु ॥ ५६ ॥ इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं स्पृशन्ताम् । अनश्रवो अनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥ ५७ ॥ सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् । हित्वावद्यं पुनरस्तमेहि सं गच्छतां तन्वा सुवर्चाः ॥ ५८ ॥ ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व१न्तरिक्षम् । तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति ॥ ५९ ॥ शं ते नीहारो भवतु शं ते प्रुष्वाव शीयताम् । शीतिके शीतिकावति ह्लादिके ह्लादिका-

वति। मण्डूक्यं१प्सु शं भुव इमं स्व१ग्निं शमय ॥ ६० ॥
(१८) विवस्वान्नो अभयं कृणोतु यः सुत्रामा जीरदानुः सुदानुः। इहेमे वीरा बहवो भवन्तु गोमदश्ववन्मय्यस्तु पुष्टम् ॥ ६१ ॥ विवस्वान्नो अमृतत्वे दधातु परैतु मृत्युरमृतं न ऐतु। इमान्रक्षतु पुरुषाना जरिम्णो मो ष्वेषामसवो यमं गुः ॥६२॥ यो दध्रे अन्तरिक्षेण मह्ना पितृणां कविः प्रमतिर्मतीनाम्। तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥ ६३ ॥ आ रोहत दिवमुत्तमामृषयो मा बिभीतन। सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम् ॥ ६४ ॥ प्र केतुना बृहता भात्यग्निरा रोदसी वृषभो रोरवीति। दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥ ६५ ॥ नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ६६ ॥ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ ६७ ॥ अपूपापिहितान्कुम्भान्यांस्ते देवा अधारयन्। ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ ६८ ॥ यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः। तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥ ६९ ॥ पुनर्देहि वनस्पते य एष निहितस्त्वयि। यथा यमस्य सादन

आमाति विदथा वदन् ॥ ७० ॥ आ रभस्व जातवेद-
स्तेजस्वद्धरो अस्तु ते । शरीरमस्य सं दहाथैनं धेहि सुकृ-
तामु लोके ॥ ७१ ॥ ये ते पूर्वे परागता अपरे पितरश्च
ये । तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ॥ ७२ ॥
एतदा रोह वय उन्मृजानः स्वा इह बृहदु दीदयन्ते ।
अभि प्रेहि मध्यतो माप हास्थाः पितॄणां लोकं
प्रथमो यो अत्र ॥ ७३ ॥ ( १९ ) तृतीयोऽनुवाकः
॥ ३ ॥ आ रोहत जनित्रीं जातवेदसः पितृयाणैः सं व आ
रोहयामि । अवाड्ढव्येषितो हव्यवाह ईजानं युक्ताः सुकृतां
धत्त लोके ॥ १ ॥ देवा यज्ञमृतवः कल्पयन्ति हविः
पुरोडाशं स्रुचो यज्ञायुधानि । तेभिर्याहि पथिभि-
र्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम् ॥ २ ॥ ऋतस्य
पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति । तेभिर्याहि
पथिभिः स्वर्गं यत्राऽऽदित्या मधु भक्षयन्ति तृतीये नाके अधि
वि श्रयस्व ॥ ३ ॥ त्रयः सुपर्णा उपरस्य मायू नाकस्य पृष्ठे अधि
विष्टपि श्रिताः । स्वर्गा लोका अमृतेन विष्ठा इषमूर्जं यजमा-
नाय दुह्राम् ॥ ४ ॥ जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दा-
धार पृथिवीं प्रतिष्ठाम् । प्रतिमां लोका घृतपृष्ठाः स्वर्गाः
कामंकामं यजमानाय दुह्राम् ॥ ५ ॥ ध्रुव आ रोह पृथिवीं
विश्वभोजसमन्तरिक्षमुपभृदा क्रमस्व । जुहु द्यां गच्छ यजमा-

नेन साकं सुवर्णं वत्सेन दिशः प्रपीनाः सर्वा धुक्ष्वाहृणीयमानाः ॥ ६ ॥ तीर्थैस्तरन्ति प्रवतो महीरिति यज्ञकृतः सुकृतो येन यन्ति । अत्रादधुर्यजमानाय लोकं दिशो भूतानि यदकल्पयन्त ॥ ७ ॥ अङ्गिरसामयनं पूर्वो अग्निरादित्यानामयनं गार्हपत्यो दक्षिणानामयनं दक्षिणाग्निः । महिमानमग्नेर्विहितस्य ब्रह्मणा समङ्गः सर्व उप याहि शग्मः ॥ ८ ॥ पूर्वो अग्निष्ट्वा तपतु शं पुरस्ताच्छं पश्चात्तपतु गार्हपत्यः । दाक्षिणाग्निष्टे तपतु शर्म वर्मोत्तरतो मध्यतो अन्तरिक्षाद्दिशोदिशो अग्ने परि पाहि घोरात् ॥ ९ ॥ यूयमग्ने शंतमाभिस्तनूभिरीजानमभि लोकं स्वर्गम् । अश्वा भूत्वा पृष्टिवाहो वहाथ यत्र देवैः सधमादं मदन्ति ॥ १० ॥ ( २० ) शमग्ने पश्चात्तप शं पुरस्ताच्छमुत्तराच्छमधरात्तपैनम् । एकस्त्रेधा विहितो जातवेदः सम्यगेनं धेहि सुकृतामु लोके ॥ ११ ॥ शमग्नयः समिद्धा आ रभन्तां प्राजापत्यं मेध्यं जातवेदसः । शृतं कृण्वन्त इह माव चिक्षिपन् ॥ १२ ॥ यज्ञ एति विततः कल्पमान ईजानमभि लोकं स्वर्गम् । तमग्नयः सर्वहुतं जुषन्तां प्राजापत्यं मेध्यं जातवेदसः । शृतं कृण्वन्त इह माव चिक्षिपन् ॥ १३ ॥ ईजानश्चित्तमारुक्षदग्निं नाकस्य पृष्ठाद्दिवमुत्पतिष्यन् । तस्मै प्रभाति नभसो ज्योतिषीमान्स्वर्गः पन्थाः सुकृते देवयानः ॥ १४ ॥ अग्निर्होताऽध्वर्युष्टे बृहस्प-

तिरिन्द्रो ब्रह्मा दक्षिणस्ते अस्तु । हुतोऽयं संस्थितो यज्ञ एति यत्र पूर्वमयनं हुतानाम् ॥ १५ ॥ अपूपवान्क्षीरवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ १६ ॥ अपूपवान्दधिवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ १७ ॥ अपूपवान्द्रप्सवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ १८ ॥ अपूपवान्घृतवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ १९ ॥ अपूपवान्मांसवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २० ॥ ( २१ ) अपूपवानन्नवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २१ ॥ अपूपवान्मधुमांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २२ ॥ अपूपवान्रसवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २३ ॥ अपूपवानपवांश्चरुरेह सीदतु । लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २४ ॥ अपूपापिहितान्कुम्भान्यांस्ते देवा अधारयन् । ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ २५ ॥ यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः । तास्ते सन्तूद्भ्वीः

प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥ २६ ॥ अक्षितिं भूयसीम् ॥ २७ ॥ द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ २८ ॥ शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते रयिम् । ये पृणन्ति प्र च यच्छन्ति सर्वदा ते दुह्रते दक्षिणां सप्तमातरम् ॥ २९ ॥ कोशं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तये । ऊर्जं मदन्तीमदितिं जनेष्वग्ने मा हिंसीः परमे व्योमन् ॥ ३० ॥ ( २२ ) एतत्ते देवः सविता वासो ददाति भर्तवे । तत्त्वं यमस्य राज्ये वसानस्तार्प्यं चर ॥ ३१ ॥ धाना धेनुरभवद्वत्सो अस्यास्तिलोऽभवत् । तां वै यमस्य राज्ये अक्षितामुप जीवति ॥ ३२ ॥ एतास्ते असौ धेनवः कामदुघा भवन्तु । एनीः श्येनीः सरूपा विरूपास्तिलवत्सा उपतिष्ठन्तु त्वात्र ॥ ३३ ॥ एनीर्धाना हरिणीः श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ॥ ३४ ॥ वैश्वानरे हविरिदं जुहोमि साहस्रं शतधारमुत्सम् । स बिभर्ति पितरं पितामहान्प्रपितामहान्बिभर्ति पिन्वमानः ॥ ३५ ॥ सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे । ऊर्जं दुहानमनपस्फुरन्तमुपासते पितरः स्वधाभिः ॥ ३६ ॥ इदं कसाम्बु चयनेन चित्तं तत्सजाता

अव॑ पश्यतेत॑ । मर्त्यो॒ऽयम॒मृत॒त्वमे॑ति त॒स्मै॑ गृ॒हान्कृ॑णुत याव॒त्सब॑न्धु ॥ ३७ ॥ इ॒हैवैधि॑ धन॒सनि॑रि॒हचि॑त्त इ॒ह क्र॑तुः । इ॒हैधि॑ वी॒र्य॑वत्तरो व॒यो॒धा अप॑राहतः ॥ ३८ ॥ पु॒त्रं पौ॒त्रम॑भि॒त॒र्पय॑न्ती॒रापो॒ मधु॑मती॒रि॒माः । स्व॒धां पि॒तृ-भ्यो॑ अ॒मृतं॒ दुहा॑ना॒ आपो॑ दे॒वीरु॒भया॑ंस्तर्पयन्तु ॥ ३९ ॥ आपो॑ अ॒ग्निं प्र हि॑णुत पि॒तॄँरुपे॒मं य॒ज्ञं पि॒तरो॑ मे जुषन्ताम् । आसी॑ना॒मूर्ज॒मुप॒ ये सच॑न्ते॒ ते नो॑ र॒यिं सर्व॑वी॒रं नि य॑च्छान् ॥ ४० ॥ ( २३ ) समि॑न्धते॒ अम॑र्त्यं ह॒व्य॒वाहं॑ घृ॒तप्रिय॑-म् । स वे॑द नि॒हि॑ता॒न्निधी॒न्पि॒तॄन्प॑राव॒तो॑ ग॒तान् ॥ ४१ ॥ यं ते॑ म॒न्थं यमो॑द॒नं यन्मा॒सं नि॑पृ॒णामि॑ ते । ते ते॑ सन्तु स्व॒धाव॑न्तो॒ मधु॑मन्तो घृत॒श्चुतः॑ ॥ ४२ ॥ यास्ते॑ धा॒ना अ॑नु-कि॒रामि॑ ति॒लमि॑श्राः स्व॒धाव॑तीः । तास्ते॑ सन्तू॒द्भ्वीः प्र॒-भ्वीस्तास्ते॑ य॒मो राजानु॑ मन्यताम् ॥ ४३ ॥ इ॒दं पूर्व॒मप॑रं नि॒याने॑ येना॑ ते पूर्वे॑ पि॒तरः॒ परे॑ताः । पु॒रो॒ग॒वा ये अ॑भि॒षाचो॑ अ॒स्य ते त्वा॑ वहन्ति सु॒कृता॑मु लो॒कम् ॥ ४४ ॥ सर॑स्वतीं दे॒वय॑न्तो॑ हवन्ते॒ सर॑स्वतीमध्व॒रे ता॒यमा॑ने । सर॑स्वतीं सु॒कृतो॑ हवन्ते॒ सर॑स्वती दा॒शुषे॒ वार्यं॑ दात् ॥ ४५ ॥ सर॑स्वतीं पि॒तरो॑ हवन्ते दक्षि॒णा य॒ज्ञम॑भि॒नक्ष॑-माणाः । आ॒स॒द्या॒स्मिन्ब॒र्हिषि॑ मादयध्वमनमी॒वा इष॒ आ धे॑ह्य॒स्मे ॥ ४६ ॥ सर॑स्वति॒ या स॒रथं॑ य॒याऽथो॒क्थैः

स्वधाभिर्देवि पितृभिर्मदन्ती । सहस्रार्घमिडो अत्र भागं राय-स्पोषं यजमानाय धेहि ॥ ४७ ॥ पृथिवीं त्वां पृथिव्यामा वेशयामि देवो नो धाता प्र तिरायायुः । परापरैता वसुविद्वो अस्त्वधा मृताः पितृषु सं भवन्तु ॥ ४८ ॥ आ प्र च्यवेथामप तन्मृजेथां यद्वामभिभा अत्रोचुः । अस्मादेतमघ्न्यौ तद्वशीयो दातुः पितृष्विहभोजनौ मम ॥ ४९ ॥ एयमगन्दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधाः । यौवने जीवानुपपृञ्चती जरा पितृभ्य उपसंपराणयादिमान् ॥ ५० ॥ (२४) इदं पितृभ्यः प्र भरामि बर्हिर्जीवं देवेभ्य उत्तरं स्तृणामि । तदा रोह पुरुष मेध्यो भवन्प्रति त्वा जानन्तु पितरः परेतम् ॥ ५१ ॥ एदं बर्हिरसदो मेध्योऽभूः प्रति त्वा जानन्तु पितरः परेतम् । यथापरु तन्वं१ सं भरस्व गात्राणि ते ब्रह्मणा कल्पयामि ॥५२॥ पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन् । आयु-र्जीवेभ्यो विदधद्दीर्घायुत्वाय शतशारदाय ॥ ५३ ॥ ऊर्जो भागो य इमं जजानाश्मान्नानामाधिपत्यं जगाम । तमर्चत विश्वामित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥ ५४ ॥ यथा यमाय हर्म्यमवपन्पञ्च मानवाः । एवा वपामि हर्म्यं यथा मे भूरयोऽसत ॥ ५५ ॥ इदं हिरण्यं बिभृहि यत्ते पिताऽबिभः पुरा । स्वर्गं यतः पितुर्हस्तं निर्मृड्ढि दक्षिणम् ॥ ५६ ॥ ये च जीवा ये च मृता ये जाता ये च यज्ञियाः ।

तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युन्दती ॥ ५७ ॥ वृषा मतीनां पवते विचक्षणः सूरो अन्हां प्रतरीता उषसां दिवः । प्राणः सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्दिमाविशन्मनीषया ॥ ५८ ॥ त्वेषस्ते धूम ऊर्णोतु दिवि षंछुक्र आततः । सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ५९ ॥ प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा सख्युर्न प्र मिनाति संगिरः । मर्य इव योषाः समर्षसे सोमः कलशे शतयामना पथा ॥ ६० ॥ (२५) अक्षन्नमीमदन्त ह्यव प्रियाँ अधूषत । अस्तोषत स्वभानवो विप्रा यविष्ठा ईमहे ॥ ६१ ॥ आ यात पितरः सोम्यासो गम्भीरैः पथिभिः पितृयाणैः । आयुरस्मभ्यं दधतः प्रजां च रायश्च पोषैरभि नः सचध्वम् ॥ ६२ ॥ परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्याणैः । अधा मासि पुनरा यात नो गृहान्हविरत्तुं सुप्रजसः सुवीराः ॥ ६३ ॥ यद्वो अग्निरजहादेकमङ्गं पितृलोकं गमयं जातवेदाः । तद्व एतत्पुनरा प्याययामि साङ्गाः स्वर्गे पितरो मादयध्वम् ॥ ६४ ॥ अभूद्दूतः प्रहितो जातवेदाः सायं न्यह्न उपवन्द्यो नृभिः । प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥ ६५ ॥ असौ हा इह ते मनः ककुत्सलमिव जामयः । अभ्येनं भूम ऊर्णुहि ॥ ६६ ॥ शुम्भन्तां लोकाः पितृषदनाः पितृषदने त्वा लोक आ सादयामि ॥ ६७ ॥ येऽ३स्माकं

पितरस्तेषां बर्हिरसि ॥ ६८ ॥ उदुत्तमं वरुण पाशमस्मदवा-
धमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो
अदितये स्याम ॥ ६९ ॥ प्रास्मत्पाशान्वरुण मुञ्च सर्वान्यैः
समामे बध्यते यैर्व्यामे । अथा जीवेम शरदां शतानि त्वया
राजन्गुपिता रक्षमाणाः ॥ ७० ॥ ( २६ ) अग्नये कव्यवाह-
नाय स्वधा नमः ॥ ७१ ॥ सोमाय पितृमते स्वधा नमः
॥ ७२ ॥ पितृभ्यः सोमवद्भ्यः स्वधा नमः ॥ ७३ ॥ यमाय
पितृमते स्वधा नमः ॥ ७४ ॥ एतत्ते प्रततामह स्वधा ये च
त्वामनु ॥ ७५ ॥ एतत्ते ततामह स्वधा ये च त्वामनु ॥ ७६ ॥
एतत्ते तत स्वधा ॥ ७७ ॥ स्वधा पितृभ्यः पृथिविषद्भ्यः
॥ ७८ ॥ स्वधा पितृभ्यो अन्तरिक्षसद्भ्यः ॥ ७९ ॥ स्वधा
पितृभ्यो दिविषद्भ्यः ॥ ८० ॥ ( २७ ) नमो वः पितर ऊर्जे
नमो वः पितरो रसाय ॥ ८१ ॥ नमो वः पितरो भामाय
नमो वः पितरो मन्यवे ॥ ८२ ॥ नमो वः पितरो यद्घोरं
तस्मै नमो वः पितरो यत्क्रूरं तस्मै ॥ ८३ ॥ नमो वः पितरो
यच्छिवं तस्मै नमो वः पितरो यत्स्योनं तस्मै ॥ ८४ ॥
नमो वः पितरः स्वधा वः पितरः ॥ ८५ ॥ येऽत्र पितरः
पितरो येऽत्र यूयं स्थ युष्मांस्तेऽनु यूयं तेषां श्रेष्ठा
भूयास्थ ॥ ८६ ॥ य इह पितरो जीवा इह वयं स्मः । अस्मां-
स्तेऽनु वयं तेषां श्रेष्ठा भूयास्म ॥ ८७ ॥ आ त्वाग्न

मय्यग्नेऽग्निमिति चाथो अग्नीन्समारोपयेद्व्रतवान्स्यादतन्द्रित इति ॥ १ ॥

तत्र श्लोकाः— ब्रह्मचर्याश्रमे खिन्नो गुरुशुश्रूषणे रतः ।
वेदानधीत्यानुज्ञात उच्यते गुरुणाऽऽश्रमी ॥
दारमाहृत्य सदृशमग्निमाधाय शक्तितः ।
ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥
संविभज्य सुतानर्थैर्ग्राम्यकामान्विसृज्य च ।
चरेत वनमार्गेण शुचौ देशे परिभ्रमः ॥

---

इधीमहि द्युमन्तं देवाजरम् । यद्ध सा ते पनीयसी समिद्दीदयति द्यवि । इषं स्तोतृभ्य आ भर ॥ ८८ ॥ चन्द्रमा अप्स्व१न्तरा सुपर्णो धावते दिवि । न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ८९ ॥ ( २८ )

चतुर्थोऽनुवाकः ॥ चतुस्त्रिंशः प्रपाठकः ॥ काण्डमष्टादशम् ॥

तैरेतैर्मन्त्रैरुपतिष्ठते । मय्यग्न इति । मय्यग्नेऽग्निं गृह्णामि सह क्षत्रेण वर्चसा । बलेन मयि प्रजां मय्यायुर्दधामि स्वाहेति मन्त्रेणाथो अग्नीन्समारोपयेदात्मान्ग्नौ निवेशयेत्समारोपणेन व्रतवान्स्याद्भवेत् । तन्द्राऽऽलस्यं तद्रहितोऽतन्द्रितः । इतिरर्थसमाप्तौ ॥ १ ॥

मन्त्राणां संमतिमाह—तत्रेति । प्रथमत आश्रमक्रमेण ब्रह्मचारिगृहस्थवनस्थलक्षणद्वारा संन्यासपीठिकामाह—ब्रह्मेति । वेदं वेदौ वेदांश्चेत्येकशेषः । अधीत्य स्थितः सन्गुरुणाऽनुज्ञातः सन्दाराग्नीन्परिगृह्याऽऽश्रमी गृहस्थ इत्युच्यते । शक्तित इति । अग्निष्टोमादिसंस्कारान्संपाद्येति शेषः । स आश्रमी संन्यासविधये ब्राह्मीं पूर्वोक्तामिष्टिं यजेत्कुर्यात् । तासां देवतानां प्रीतयेऽहोरात्रेण निर्वपेत् । अहोरात्रमुपोष्य ततो निर्वपेत् । इदं हि द्व्यहसाध्यं कर्म तत्र च जागरणादिकं कुर्यात् । संविभज्येति । सुतान्पुत्रानर्थैः संविभज्य विभक्तधनान्कृत्वा । ग्राम्यकामान्स्त्रीसङ्गादीन्विसृज्य । चरेत वनचर्येण । वनमार्गेणेति क्वचित्पाठः । वनचर्यया चरेत चरेद्विचरेत् । साग्निकश्चेद्द्वादश रात्रीः पयसा होमभक्षौ वनेऽभिनिर्वर्त्य ततो ब्राह्मीमिष्टिं कृत्वा समारोप्य चरेदिति द्रष्टव्यम् । शुचौ पवित्रे देशे तीर्थादौ परिभ्रमतीति परिभ्रमः संस्तस्मिन्काले वायुमात्राहारोऽम्बुमा-

**वायुभक्षोऽम्बुभक्षो वा विहितानोत्तरः फलैः।**
**स्वशरीरे समारोपः पृथिव्यां नाश्रुपातकाः।**
**सह तेनैव पुरुषः कथं संन्यस्त उच्यते॥**
**सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यते।**
**तस्मात्फलविशुद्धाङ्गी संन्यासं सहतेऽर्चिमान्॥**
**अग्निवर्णं निष्क्रामति वानप्रस्थं प्रपद्यते।**

त्राहारो वा भवेत्। भिक्षार्थं प्रविशेद्ग्राममित्यादिपक्षस्य दीक्षाविषयत्वादस्य चाद्यापि दीक्षामुपेयादिति वक्ष्यमाणत्वेन दीक्षाया अवृत्तत्वात्। फलैर्वृक्षादिभवैर्विहितमनस्य प्राणस्योत्तरं येन प्राणेनोक्तं किं मे दास्यसीति तत्र फलदानमेवोत्तरं विदधातीति विहितानोत्तरः फलैः। शक्तितारतम्येन पक्षत्रयपरिग्रहः। विविधानोत्तरफलैरिति पाठ उत्तरफलैः स्वर्गादिभिर्न विविधा विशेषेण विधत्ते करोति यत्नं विविधा उत्तरफलोद्देशेन प्रयत्नमकुर्वन्। अग्निमुपसमाधायेत्युक्तं तस्याग्नेः का प्रतिपत्तिरित्यत आह—**स्वशरीरे समारोप इति**। स्वदेहे कोष्ठाग्नौ बाह्याग्नीनां समारोपः। यतः परमहंसदीक्षायामुदराग्नौ लोकाग्नीनां **परमहंसोपनिषदि** समारोपो विहितः। **पृथिव्यां नाश्रुपातका इति**। पुत्रादयो भूमौ नाश्रु पातयन्ति। ननु जरामर्यं वा एतत्सत्रमिति श्रुतेः कथमग्नेः परित्याग इत्यत आह—**सहेति**। तेनाग्निना सहैव वर्तमानः पुरुषः कथं संन्यस्तः कृतसंन्यास उच्यते नैवोच्यत इत्यर्थः। ननु तर्हि कथमग्निं शब्दमेवाभिचिन्तयेदित्योंकाराग्नौ ध्येयेऽपरित्यक्ते संन्यासोऽग्नित्वाविशेषादत आह—**सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यत इति**। यस्मिन्प्रणवाग्नौ सति पुमान्संन्यस्त उच्यते स प्रणवाग्निस्तु किं सनामधेयो नैव नामधेयवान्यथाऽऽहवनीयादिः शब्दवाच्यो नैवमसौ शब्दवाच्यः प्रणवाग्नेर्ब्रह्मार्थत्वाद्ब्रह्मप्रतीकत्वाद्वा ब्रह्मातिरिक्तत्वं नाभिमतं ब्रह्म च न शब्दवाच्यं तेन संन्यासे ब्रस्य परित्यागो न भवतीत्यर्थः। ननु तथाऽपि स्वरूपेण तस्य दृश्यान्तर्भूतत्वात्कथं न संन्यासविरोधित्वमिति शङ्कामुपसंहारव्याजेन परिहरति—**तस्मात्फलविशुद्धाङ्गीति**। फलेन ब्रह्माख्येन विशुद्धः संसारातीतो योऽङ्गी संसारातीतफलप्रदो यः प्रधानमोंकारोऽर्चिमानार्चिष्मानाग्निः स संन्यासं सहते संन्यासविरोधी न भवतीत्यर्थः। ननु तथाऽप्यग्निहोत्रादिसाधितस्य तत्तल्लोकप्राप्तिहेतुभूतस्य सुकृताख्यस्य तेजसः क्व प्रतिपत्तिर्न हि तत्सुकृतं संन्यासिनि तिष्ठति तत्तल्लोकप्राप्तिलक्षणफलाभावादत आह—**अग्निवर्णमिति**। अग्नेर्वर्ण इव वर्णो यस्य तदग्निवर्णं सुकृतं तेजः संन्यासिनो निष्क्रामति निर्गाति क्व याति स्वाव्यवहितं वानप्रस्थं प्रपद्यते संन्यासाधिकारिणोऽकृतसंन्यासस्य ये लोकास्ते संन्यासे सति वानप्रस्थस्य भव-

लोकाद्भार्यया सहितो वनं गच्छति संयतः ॥
त्यक्त्वा कामान्संन्यसति भयं किमनुपश्यति ।
किं वा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान् ॥
गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च ।
गुहां प्रवेष्टुमिच्छामि परं पदमनामयमिति ॥ २ ॥
संन्यस्याग्निं न पुनरावर्तनं यन्मन्युर्जाया-
मावहदित्यथाध्यात्ममन्त्राञ्जपेद्दीक्षामुपेया-

---

न्तीत्यर्थः । "सुकृतमस्य सुजना दुष्कृतं दुर्जना उपर्जीवन्ति" इति श्रुत्युक्तेः । अत्रापि प्रत्यासन्ना भक्तिमन्तश्चेति बोद्धव्यम् । ननु वानप्रस्थोऽपि मुक्तिफलभाक् कस्मान्न भवतीत्याह—**लोकादिति** । वानप्रस्थः प्रकरणाल्लभ्यते वानप्रस्थः संयतोऽपि लोकाद्ग्रामादिभ्यो भार्यया सहितो वनं गच्छति भार्यया सहेत्युच्चैः पठनीयम् । यतो भार्यया सहितस्ततः कृतसंयमोऽपि लोकानेव गच्छति न तु स्वस्थो भवतीत्यर्थः । लोकानित्येव क्वचित्पाठः । इदानीं मध्यस्थः संन्यासफलं जिज्ञासुः पृच्छति—**त्यक्त्वेति** । कामान्विषयांस्त्यक्त्वा संन्यसति पुरुषः संसारे किं भयमनुपश्यत्यालोचयति वाऽथवा किं दुःखं समुद्दिश्य हेयत्वेन मनसि निश्चित्य सुस्थितान्सम्यक्स्थितान्भोगांस्त्यजतीति । श्रुतिस्तस्योत्तरत्वेन संन्यासप्रयोजनमाह—**गर्भेति** । संसारे यद्यपि पुण्यातिशयं करोति तेन नरकं न प्रतिपद्यते तथाऽपि क्षीणे पुण्येऽवतरणमावश्यकमिति गर्भवासभयं परिहर्तुमशक्यं तेन ततो भीतस्तथा शरीरिणः पुण्यवतोऽपि शीतोष्णादिद्वंद्वदुःखमपरिहार्यमित्याह—**शीतेति** । भीतः सन्निति हेतोः संन्यसतीति किम् । अनामयं यत्परं पदं तदेव गुहां संवृतस्थानं ब्रह्माख्यं प्रवेष्टुमिच्छामीति हेतोः । संन्यासकाले त्यक्त्वेति मन्त्रो गुरुणा पठनीयः प्रश्नरूपेण गर्भेत्यादि शिष्येणेति विधिरूहनीयः । त्यक्त्वेति मन्त्रे सर्वत्र प्रथमपुरुषस्थाने मध्यमो द्रष्टव्यः ॥ २ ॥

संन्यस्य पुनरङ्गीकारे दोषमाह—**संन्यस्येति** अग्निं संन्यस्य पुनरावर्तनं पुनः परिग्रहो न कर्तव्यः । कस्मादिति शङ्कायां स्त्रिया अभावादित्युत्तरिते साऽपि कस्मान्नाङ्गी क्रियत इत्याशङ्क्याऽऽह—**मन्युरिति** । मन्युनामा रुद्रगणोऽयं संन्यासपत्नीमावहद्गृहीतवानिति हेतोः । संन्यासिभार्यायां मन्योरधिकार इत्यस्मादेव वाक्यादवसीयते । अयं संन्यासस्त्यागरूपो न तु दीक्षारूपस्तस्मिन्सति निषिद्धत्वात्पुनरङ्गीकारशङ्काभावात् । तर्ह्यग्निशुश्रूषाद्यभावे किं तस्य कार्यमत आह—**अध्यात्ममन्त्राञ्जपेदिति** । एतावन्तं कालं त्याग आसीन्न तु दीक्षारूपः संन्यास इति तामाह—**दीक्षामुपेयादिति** । दिव्यं भावं ददाति क्षीयन्तेऽस्य दोषा इति दीक्षा व्रतविशेषः ।

त्काषायवासाः कक्षोपस्थलोमानि वर्जयेदूर्ध्वगोपायुर्विमुक्तमार्गो भवत्यनयैव चेत् । भिक्षाशनं दध्यात्पवित्रं धारयेज्जन्तुसंरक्षणार्थम् । तत्र श्लोकाः—

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहम् ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥

---

तदुक्तम्—"ज्ञानं दिव्यं यतो दद्यात्कुर्यात्पापक्षयं यतः ।
तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तत्त्ववेदिभिः" ॥ इति ।

तामुपेयाद्गृह्णीयाद्गृहीत्वा पालयेदिति भावः । दीक्षाधर्मानाह—**काषायेति** । कषायेण रक्तं काषायं वासो यस्य स तादृशः स्यात् ।

" काषायो रसभेदः स्यादङ्गरागे विलेपने ।
निर्यासे च कषायोऽपि सुरभौ लोहितेऽन्यवत्" ॥ इति **विश्वः** ।

**कक्षोपस्थलोमानि वर्जयेदिति** । अन्यानि वापयेदित्यर्थात् । **ऊर्ध्वगोपायुरिति** । गोपायतीति गोपायुर्दण्डः स ऊर्ध्वं ऊर्ध्वाग्रो यस्य स तथा । अथ दण्डमादत्ते सखे मा गोपायेतीति शिष्टस्मरणात् । सखा मा गोपायेत्यारुणेयश्रुतेश्च । ऊर्ध्वको बाहुरिति पाठ ऊर्ध्वो बाहुः कर्तव्यो न मे कश्चित्प्रतिबन्धो न च मे कश्चिद्द्वेष्योऽस्तीति भावेन । तदेव फलाभिधानद्वारेण स्पष्टयति—**विमुक्तमार्गो भवत्यनयैव चेदिति** । अनयैव चेद्वृत्त्या तिष्ठति तर्हि विमुक्तोऽप्रतिबद्धो मार्गो यस्य तादृशो भवति कुत्रापि तस्य प्रतिबन्धो न भवतीत्यर्थः । अनिकेतश्चरेदिति पाठः । स्पष्टोऽर्थः । परिग्रहविशेषानाह—**भिक्षाशनं दध्यादिति** । भिक्षाऽश्यते भुज्यतेऽनेनेति भिक्षाशनं भिक्षाभोजनपात्रं दध्याद्गृह्णीयात् । पवित्रं चामरादिपिच्छं दंशमशकादिनिवारणार्थं जलपवनार्थं वस्त्रखण्डं वा जलजन्तुवारणार्थम् । श्लोकोक्तानामुपलक्षणमेतत् । कुण्डिका भिक्षाटनपात्रम् । चमसः काष्ठमयः पात्रविशेषः । शिक्यं रज्जुमयमन्तरिक्षे भाण्डधारणार्थं यन्त्रम् । त्रिविष्टपं त्रिविष्टब्धकमन्योन्याश्रयं काष्ठत्रयम् । अनामयं सज्जं न भग्नम् । उपानहमिति पाठ उपानहौ पादत्राणे । **कौपीनाच्छादनमिति** । कूपप्रवेशनमर्हति कौपीनं पुंलिङ्गं तद्धि गुह्यत्वात्प्रकाशयितुमयोग्यमिति कूपप्रवेशनमेवार्हति । स्त्रीयोनिर्वा कूपस्तस्मिन्हि बहवो मग्ना न पुनरुन्मज्जन्ति तमर्हति कौपीनं 'शालीनकौपीने अधृष्टाकार्ययोः' इति

---

१ क. ख. त्यनिकेतश्चरेत् ।

पवित्रं स्नानशाटीं चोत्तरासङ्गस्त्रिदण्डः ।
अतोऽतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ॥ ३ ॥
नदीपुलिनशायी स्याद्देवागारेषु बाह्यतः ।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥
स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥
भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितम् ।
एतां वृत्तिमुपासीना घातयन्तीन्द्रियाणि च ॥

विद्याया मनसि संयोगो मनसाऽऽकाशश्चाऽऽकाशाद्वायुर्वायोर्ज्योति-ज्योतिष आपोऽद्भ्यः पृथिवी पृथिव्या इत्येषां भूतानां ब्रह्म प्रपद्यते ।

---

निपातनात्साधुः । तस्याऽऽच्छादनं वासःखण्डस्तच्च दध्यात् । पवित्रं पूयतेऽनेन 'पुवः संज्ञायाम्' इतीत्रः । ''पवित्रं वर्षणे कुशे । पवित्रं ताम्रयसोर्मध्ये चापि तदन्यवत्''इति विश्वः । इह तु जलपात्रं जलशोधनं वस्त्रखण्डं पिच्छं वा गृह्यते । स्नानशाटीं षोडश-हस्ताम् । उत्तरासङ्ग उत्तरीयम् । त्रिदण्डस्त्रयो दण्डा अस्मिन्समुदाये त्रिदण्डः ॥ ३ ॥

**देवागारेषु बाह्यत इति** । यदि बाह्यतो नदीपुलिनादन्यत्र वर्षव्याघ्रादिभयात्स्वप्या-त्तर्हि देवागारेषु न पुनर्जनकृतसत्ताके गृहादौ । देवागारेषु वाऽप्युतेति युक्तः पाठः । वाऽप्युत शायी स्यादित्यर्थः । देवागारेषु वा स्वपेदिति कठश्रुतिपाठात् । **नात्यर्थमिति** । सुखार्थं दुःखपरिहारार्थं च नान्यो यत्नः कर्तव्यो नापि बलाद्दुःखं जनयेत् । दानं तर्पणादि । ध्यानमिति पाठे ध्यानसाधनमाचमनीयादि । पूताभिर्वस्त्रखण्डैर्न गलिताभिः । परान्निन्द-कान् । भिक्षाद्याचरितं न निषिद्धं यतीनां तथा वैदलं पात्रं फलार्धखण्डादि तदप्यवा-रितम् । स्नानद्रव्यं गङ्गादि । य एतां वृत्तिं वर्तनमुपासीना एतस्या वृत्तेराश्रयणं कुर्वा-णास्त इन्द्रियाणि चक्षुरादीनि घातयन्ति 'हिंसार्था वा चुरादयः' घ्नन्ति जयन्तीत्यर्थः । यद्वैतां वृत्तिमाश्रित्येन्द्रियाणि जयेन्नेन्द्रियारामैर्भाव्यमित्यर्थः । कार्यकारणयोरैक्याद्ब्रह्मणो जातं ब्रह्मैवेति जीवस्यापि ब्रह्मसंपत्तिरुपपद्यत इति दर्शयितुमाह—**विद्याया इति** । विद्यायाः स्वरूपज्ञानस्य मनोधिकरणः संबन्ध आध्यासिको मनसः सकाशादाकाशः संभूत इत्यादिर्योजना । छान्दसः संधिः । पृथिव्याः सकाशात् । इत्येवंप्रकाराणामेषां भूतानां शरीराणां संभव इति शेषः । तेन ज्ञानी ब्रह्म प्रपद्यते तद्भवतीत्यर्थः । अथवा विद्याया मनसि संयोगो ब्रह्मज्ञानस्योत्पत्तिस्तेन मनसि ज्ञानेन लीने तत्कार्यं सर्वं लीनं

---

१ ख. °टीं तु उत्त° । २ ख. ग. °दण्डकम् । अ° । ३ ख. घ. ध्यानं । ४ ग. °श्यमु-द्राद्य° । ५ ख. घ. °सीत पा° । ग. °सीत नित्येन्द्रियो जयेत्सदा । वि° ।

अजरममरमक्षरमव्ययं प्रपद्यते तदभ्यासेन प्राणापानौ संयम्य तत्र श्लोकाः ॥ ४ ॥

वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत् ।
संदश्य दशनैर्जिह्वां यवमात्रे विनिर्गताम् ॥
माषमात्रां तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि ।
श्रवणे नासिके न गन्धाय न त्वचं न स्पर्शयेत् ॥
अथ शैवं पदं यत्र तद्ब्रह्म तत्परायणम् ।
तदभ्यासेन लभ्यते पूर्वजन्मार्चितात्मनः ॥
अथ तैः संभूतैर्वायुः संस्थाप्य हृदयं तपः ।

भवतीत्यर्थः । तत्स्वरूपमाह—**अजरमिति** । किं कृत्वा प्रपद्यते तस्य ब्रह्मणोऽभ्यासेन प्राणापानौ वायू संयम्य निरुध्येति पूर्वोक्तयोगानुसंधानं कृत्वाऽक्षरं प्रपद्यत इत्यन्वयः । अविलम्बेन सिद्धिदं प्रयोगविशेषमाह—**श्लोका इति** ॥ ४ ॥

**वृषणापानयोरिति** । अपानात्पायोरूर्ध्वं वृषणयोरधश्च पाणी स्थापयित्वेत्यर्थः । संश्रयेत्प्राणायाममिति शेषः । पुनः किं कृत्वा दशनैर्दन्तैर्यवमात्रे विनिर्गतां नाधिके बहिर्गतां जिह्वां संदश्य संश्रयेत्प्राणायाममिति संबन्धः । तथा माषमात्रां संकुचितां दृष्टिं श्रोत्रे वृषणे स्थाप्य स्थापयित्वा । श्रु गतौ श्रुताविति शृणोतेर्गत्यर्थत्वाद्वीर्यश्रवणरूपगत्याधारत्वेन वृषणोऽपि श्रोत्रं भवति । तथा पर्यायेण भुवि स्थाप्य तथा श्रवणे कर्णे स्थाप्य । तदुक्तममृतबिन्दौ—"तिर्यगूर्ध्वमधोदृष्टिं विनाऽऽधार्य महामतिः" इति । श्रोत्रे धारणमधो भुवि धारणमूर्ध्वं श्रवणे तिर्यगिति । तथा नासिके नासाग्रदृष्टिं स्थाप्य संश्रयेत् । नासाग्रे दृष्टिं किं गन्धैकाग्रतया नेत्याह—**न गन्धायेति** । गन्धग्रहणमुपलक्षणं श्रवणे दृष्टिर्न शब्दं श्रोतुम् । एवमधोदृष्टावपि वृषणादौ स्थितायां कामोद्भवेन स्त्रीस्मरणात्तत्स्पर्शनायाभिलाषे प्राप्ते तं निषेधति । न त्वचं स्पर्शयेन्मनसा प्रयोजनेन । पुनर्नेति वचनमुक्तार्थदार्ढ्याय । नशब्द एवार्थे वाऽनेकार्थत्वान्निपातानाम् । नैव स्पर्शयेदित्यर्थः । तर्हि कुत्र मनः स्थाप्यमित्यत आह—**अथेति** । यत्र शैवं पदं शिवं ब्रह्म सदाशिवो वा शिवस्तत्संबन्धि यत्र स्थले पदं व्यवसितं निश्चयस्तत्र मनः स्थापयेदिति शेषः । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । यच्चैवं पदं तद्ब्रह्म तदेव परमयनम् । तत्कथं लभ्यत इत्यत आह—**तदिति** । अभ्यासेन योगस्य । कस्य । येन पूर्वजन्मनि स्वात्माऽर्चितः साधितः प्रसन्नीकृतः । तदुक्तम्—"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इति । अभ्यासे क्रियमाणे यद्भवति तदाह—**अथेति** । तैः संभूतैर्मिलितैः साधनैरासनायामादिभिर्हृदयं तपस्तप्तं हृदयं मनः संस्थाप्य स्थिरीकृत्य वायुः प्राणो देहा-

१ ख. °तां जि° ।

ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥
अथायं मूर्धानमस्य देहैषा गतिर्गतिमताम् ।
ये प्राप्य परमां गतिं भूयस्ते न निवर्त्तन्ते ॥
परात्परमवस्थात्परात्परमवस्थादिति ॥ ५ ॥
इत्यथर्ववेदे संन्यासोपनिषत्समाप्ता ॥ ३० ॥

---

च्छरीरादूर्ध्वमव्ययं ब्रह्म प्रपद्यते । किं कृत्वा । मूर्धानं भित्त्वा ब्रह्मरन्ध्रेण । पश्चात्किं स्यादत आह—**अथायं मूर्धानमस्य देहेति** । अथानन्तरमयं वायुः । मूर्धानमस्यासु क्षेपणे क्षिप्त्वा । देहे दिह उपचय उपचयं गतो ब्रह्मण्येकीभूतत्वात् । द्विर्वचने छन्दसि वा वचनमिति द्वित्वाभावः । उपसंहरति—**एषा गतिर्गतिमतामिति** । गतिमतामेषा गतिः । अतः परा गतिर्नास्ति गतेरयमवधिरित्यर्थः । पाठान्तरं दुर्योजम् । ननु ये मुक्तास्तेऽपीश्वरेच्छया पुनरुन्मज्जेरन्निति साधनवैयर्थ्यमित्याशङ्क्य परिहरति—**य इति**। ये पुरुषाः परमां गतिं प्राप्य वर्तन्ते ते पुरुषा भूयो न निवर्तन्ते । कस्मादित्यत आह— **परात्परमवस्थादिति** । परादपि हिरण्यगर्भादेर्यत्परं स्थानं तत्प्राप्यावस्थादवस्थानादिति । अवस्थानमवस्थम् । सुपि स्थ इत्यत्र सुपीति स्थ इति च योगविभागात्कः । नियतिरेषा परमेश्वरस्य यः स्वतोऽव्यवहितस्तं यदाऽव्यवहितं करोति तदा पुनस्तमेव न व्यवदधातीति । सत्यप्रतिज्ञत्वाद्दत्तापहाराकारित्वान्मुक्तस्योन्मज्जनं नास्तीति भावः । द्विरुक्तिः समाप्त्यर्था ॥ ५ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां संन्यासस्य प्रदीपिका ॥ १ ॥

इति नारायणविरचिता संन्यासोपनिषद्दीपिका समाप्ता ॥ ३७ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# सर्वोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

ॐ कथं बन्धः कथं मोक्षः काऽविद्या का विद्येति[1] जाग्रत्स्वप्नं सुषुप्तं तुरीयं[2] च कथं[3]मन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयः कथं कर्ता जीवः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्यामी कथं प्रत्यगात्मा परमात्माऽऽत्मा [4]माया चेति कथमात्मेश्वरोऽनात्मनो देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धस्तन्निवृत्तिर्मोक्षस्त[5]दभिमानं कारयति या साऽविद्या सोऽभिमानो ययाऽभिनिवर्तते सा विद्या । मनआदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन्विषयान्स्थूलान्यदोपलभते तदाऽऽत्मनो जागरणं तद्वासनारहितश्च[6]तुर्भिः करणैः शब्दा[7]द्यभावेऽपि वासनामयाञ्शब्दादी[8]-

बन्धादिमायापर्यन्तलक्षणं तैत्तिरीयके ।
सर्वोपनिषदां सारे सप्तत्रिंशे चतुर्दले ॥ १ ॥

त्रयोविंशतेरर्थानामादौ स्वरूपलक्षणप्रश्नेन बन्धस्वरूपं तावदाह—**आत्मेश्वर इति** । अनात्मनः स्थूलत्वात् । देहेन्द्रियादीनामात्मत्वेन ब्राह्मणोऽहं स्थूलोऽहं गच्छामीत्यात्मत्वेनाभिमन्यते सोऽभिमानो बन्धस्तत्त्यागो मोक्षस्तत्कारिकाऽविद्या निवर्तिका विद्या । **मनआदीति** । मनोबुद्धिचित्ताहंकारश्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थाख्यैर्ज्ञानकर्मादिकरणैः पुष्कलैर्बहिराविर्भूतैश्चन्द्राच्युतशंकरचतुर्मुखदिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रब्रह्मभिरनुगृहीतैः संकल्पाध्यवसायचेतनाभिमाने शब्दस्पर्शरूपरसगन्धवक्तव्यादानगमनविसर्गानन्दान्स्थूलाद्बहिर्भूतान्यदोपलभते तदाऽऽत्मनो जाग्रद्व्यवहारः । **तद्वासनारहित इति** । देवतानिमित्तेऽदृष्टनिमित्ते च स्वप्न इति बोद्धव्यम् । चिन्तास्वप्ने वासनाया निमित्तत्वात् । अत एव वासनामयानित्युक्तम् । अरहित

१ क. °ति च कथं जा° । २ क. °यं चेति क° । ३ ख. °थमन्नमन्न° । ४ क. मायेति
५ क. घ. °स्तमभि° । ६ ग. ङ. °तुर्भिरन्तःक° । ७ क.° ब्दाद्याभा° । ८ क. °दीन्सूक्ष्मान्य° ।

न्यदोपलभते तदाऽऽत्मनः स्वप्नम् । चतुर्दशकरणोपरमाद्विशेषविज्ञानाभावाद्यदा तदाऽऽत्मनः सुषुप्तम् ॥ १ ॥

अवस्थात्रयभावाद्भावसाक्षि स्वयं भावाभावरहितं नैरन्तर्यं चैक्यं यदा तदा तत्तुरीयं चैतन्यमित्युच्यतेऽन्नकार्याणां षण्णां कोशानां समूहोऽन्नमयः कोश इत्युच्यते । प्राणादिचतुर्दशवायुभेदा अन्नमये कोशे यदा वर्तन्ते तदा प्राणमयः कोश इत्युच्यत एतत्कोशद्वयसंयुक्तो मनआदिचतुर्भिः करणैरात्मा शब्दादिविषयान्संकल्पादिधर्मान्यदा करोति तदा मनोमयः कोश इत्युच्यते । एतत्कोशत्रयसंयुक्तस्तद्गतविशेषाविशेषज्ञो यदाऽ-

---

इति वा छेदः । देवतादृष्टकृते स्वप्नद्वये वासनाशब्देन देवेच्छा धर्माधर्मौ च व्याख्येयौ । **तन्मनः स्वप्नमिति** । सा मनोवृत्तिः स्वप्न इत्यर्थः । तदाऽऽत्मनः स्वप्नमिति तु युक्तः पाठः । जागरणसुषुप्त्योरात्मशब्दग्रहणात् । **चतुर्दशेति** । स्वप्ने तु दशानामेवोपरमश्चतुर्णामन्तःकरणानां व्यापारः करणाभावेऽपि विषयाणां शब्दादीनां विशेषतो ज्ञानभावाद्यदाऽऽत्मनोऽवस्थानमिति शेषः । तदाऽऽत्मनः सुषुप्तं सुषुप्तिरित्यर्थः । तन्मनःसुषुप्तमिति क्वचित्पाठः । तदा तन्मनसः सुषुप्तमुपरम इति व्याख्येयम् ॥ १ ॥

भावसाक्षि भावानां साक्षि साक्षाद्द्रष्टृ । साक्षिशब्दः साक्षाद्द्रष्टृवाची । स्वयं भावरहितम् । निर्लेपत्वात् । नैरन्तर्यं स्वार्थे भावप्रत्ययः । व्यवधायकवस्त्वन्तररहितं चैतन्यं ज्ञानमात्रं यदा । अवतिष्ठत इति शेषः । तदा तुरीयम् । **अन्नकार्याणामिति** । षट्कोशा यथा—

"स्नाय्वस्थिमज्जानः शुक्रात्त्वङ्मासास्त्राणि शोणितात् ।
षाट्कौशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम्" ॥ इति ।

**प्राणादिचतुर्दशेति** । प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनंजया दश । चत्वारोऽन्ये—

"वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा ।
वैरम्भणादयस्तत्र सर्ववायुवशंगताः" ॥ इति ।

एते चतुर्दश वायवो देहे यदा कृतास्पदास्तदा प्राणमयः कोशः । **एतदिति** । एतावन्नमयप्राणमयौ कोशौ तयोर्द्वयं तेन संयुक्त आत्मा शब्दादिविषयाञ्शब्दादयः पञ्च विषयो येषां ते तान् । संकल्पादयो ये धर्मा-

---

१ क. ग. ङ. °म् । मनआदि च° । २ ङ. °भ वो यदा । ३ ङ. सुषुप्तिः । ४ क. °च्यते त्वग्रुधिरमांसमेदोमज्जास्थिषट्केनान्न° । ५ क. ग. ङ. °णां को° । ६ क. °तुर्दशभिः क° । ग. घ. °तुर्दश क° । ७ क. ग. ङ. °मयको° । ८ क. ग. ङ. °युक्तं तद्ग° । ९ क. ग. ङ. °शेषज्ञानं यदा भा° ।

वभासते तदा विज्ञानमयः[1] कोश इत्युच्यते । एतत्कोशचतुष्टयं स्वकारणाज्ञाने वटकणिकायामिव गुप्तवटवृक्षो यदा वर्तते तदाऽऽनन्दमयकोश[2] इत्युच्यते । सुखदुःखबुद्ध्याश्रयो देहान्तः[3] कर्ता यदा तदेष्टविषये बुद्धिः सुखबुद्धिरनिष्टविषये बुद्धिर्दुःखबुद्धिः शब्दस्पर्शरूपरसगन्धाः सुखदुःखहेतवः । पुण्यपापकर्मा[4]नुसारी भूत्वा प्राप्तशरीरसंधियोगमप्राप्तशरीरसंयोगमिव कुर्वाणो यदा दृश्यते तदोपहितत्वाज्जीव इत्युच्यते । मनआदिश्च प्राणादिश्च सत्त्वादिश्चेच्छादिश्च पुण्यादिश्चैते पञ्चवर्गा इत्येतेषां पञ्चवर्गाणां धर्मी भूतात्मज्ञानादृते न विनश्यति ।

स्तान् । **एतदिति** । एतेन पूर्वोक्तकोशत्रयेण संयुक्तस्तद्गतः संकल्पादिगतो विशेषो ब्राह्मणत्वादिरविशेषो मनुष्यत्वादिसामान्यं तयोर्ज्ञाता सविकल्पकहानादिमान् । एतत्कोशचतुष्टयं पूर्वोक्तं स्वकारणाज्ञाने स्वस्य कारणीभूतं यदज्ञानं ब्रह्म तत्र वर्तते । तत्र दृष्टान्तो वटबीजे यथा वटो वर्तते तद्वत्स च निर्विषये जाग्रति मनसि सुषुप्ते च भवति। कर्तृलक्षणमाह—**सुखेति** । सुखं भवतु दुःखं मे मा भूदिति प्रवृत्तः सुखदुःखयोरनुभाविता देहान्तः स्थूलसूक्ष्मदेहोपाधिः कर्तेत्यर्थः । यदा तदेति पूर्वेण संबध्यते । यदा देहोपाधिस्तदा कर्तेत्यर्थः । सुखदुःखबुद्ध्योर्लक्षणे लक्षणाङ्गतयाऽऽह—**इष्टेति** । इष्टानिष्टविषयानाह—**शब्देति** । अनुकूलवेद्याः सुखहेतवः प्रतिकूलवेद्या दुःखहेतवः । सुखदुःखहेतू दर्शयञ्जीवलक्षणमाह—**पुण्येति** । पुण्यपापानुसारित्वं ज्ञानसंस्कारयोरप्युपलक्षणम् "तमेतं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महती" इति श्रुतेः । प्राप्तस्य शरीरस्य यः संबन्धस्तस्य वियोगमिव कुर्वाणोऽप्राप्तशरीरस्य संयोगमिव । इवशब्दो वस्तुतोऽसङ्गत्वात् । उपहितत्वान्नानाशरीरोपाधिमत्त्वाज्जीव इत्युच्यते । प्राप्तशरीरसंधियोगमिति पाठे प्राप्तः शरीरयोः संधिर्येन सः । एकशरीरत्यागेनापरशरीरग्रहणं संधिः । योगमित्यस्यैव व्याख्यानमप्राप्तशरीरसंयोगमिति । क्षेत्रज्ञं लक्षयितुं लिङ्गं लिलक्षयिषुः पञ्चवर्गानाह—**मनआदिश्चेति** । मनो बुद्धिश्चित्तमहंकारश्च । प्राणादिः पञ्च वायवः । सत्त्वादिस्त्रयो गुणाः । इच्छादिः कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीश्च[5] । पुण्यादिः पुण्यपापज्ञानसंस्काराः । पञ्चैते वर्गाः । इतिर्वाक्यसमाप्तौ । लिङ्गस्य मनआदिसंवितामाह—**एतेषामिति** । धर्मी संघी भूतात्मज्ञानाद्भूतः सिद्धो य आत्मा तस्य ज्ञानं विना न नश्यत्यात्मज्ञानेन च नश्यति भिद्यते हृदय-

१ ङ. °मयको° । २ क. ङ. °मयः को° । ३ ग. ङ. °हान्तर्वर्ती यदा तदा कर्तेत्युच्यते । इष्ट° । ४ क. पुण्यापुण्यक° । ५ च. °द्धा धृ° ।

आत्मसंनिधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गं शरीरं हृद्ग्रन्थिरित्युच्यते तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते ॥ २ ॥

ज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञाता स्वयमेवमाविर्भावतिरोभावहीनः स्वयंज्योतिः स साक्षीत्युच्यते ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते । कूटस्थाद्युपाहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणसूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशत आत्मा तदाऽन्तर्यामीत्युच्यते सर्वोपाधिविनिर्मुक्तः सुवर्णवद्विज्ञानघनश्चिन्मात्रस्वरूप आत्मा स्वतन्त्रो यदाऽवभासते तदा त्वंपदार्थः प्रत्यगात्मेत्युच्यते । सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सत्यमविनाशि नामदेशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न

ग्रन्थिरित्यादिश्रुतेः । इदानीं लिङ्गलक्षणानन्तर्भूतं रूपान्तरमाह——आत्मसंनिधाविति । आत्मनो नित्यत्वात्परस्परधर्माध्यासान्नित्य इव भासमान इति स्वरूपकथनम् । एवंविधो य आत्मोपाधिस्तस्य द्वे संज्ञे लिङ्गं हृद्ग्रन्थिरिति च । यदर्थं लिङ्गलक्षणमुक्तं तल्लक्षणमाह——तत्रेति ॥ २ ॥

ज्ञाता प्रमाता ज्ञानं चित्तवृत्तिर्ज्ञेया विषयास्तेषामुत्पत्तिविलयौ जानाति । स्वयमेवं ज्ञात्रादित्रयस्य तौ न स्तः किंतु निर्विकारः स्वप्रकाशश्च स साक्षादव्यवधानेन स्वाध्यस्तद्रष्टृत्वात्साक्षीत्युच्यते । अविशिष्टतया विशेषरहितचेतनाकारेण सर्वप्राणिबुद्धिस्थः । ध्यायतीव लेलायतीव सधीरिति श्रुतेः । कूटे बुद्ध्यादौ मिथ्याभूते तिष्ठति कूटस्थः । कूटस्थादीति । कूटस्थादयो य उपहिता भेदा उपाधियुक्ता विशेषास्तेषां स्वरूपलाभं प्रति हेतुः सन्मणिगणस्थसूत्रवत्सर्वशरीरेष्वनुगतत्वेन यदा भात्यात्मा तदाऽन्तर्यामिसंज्ञो भवति ।

तदुक्तम्——"अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति ।

त्वंपदार्थः शोधित इति शेषः । न ह्यशोधिते त्वंपदार्थे सर्वोपाधिविनिर्मुक्तत्वादिविशेषणसंभवः । परमात्मानं तत्पदार्थं वक्तुं ब्रह्मणो रूपचतुष्टयमाह——सत्यमिति । चतुष्टयं क्रमेण लक्षयति——सत्यमविनाशीति । अविनाशीत्यपि कोऽर्थ इत्यत आह——नामेति ।

१ क. °लिङ्गश° । २ क. °दा भासते त° । ३ क. ङ. °क्तः कटकमुकुटाद्युपाधिरहितः सुवर्णघनवद्विज्ञा° । ४ क. °नन्तं ब्र° । ५ क. °ह्म विज्ञानमानन्दं ब्रह्म स° । ६ क. ग. °त्यमित्यवि° ।

विनश्यत्यविनाशि तत्सत्यमित्युच्यते । ज्ञानमित्युत्पत्तिविनाश-रहितं चैतन्यं ज्ञानमित्यभिधीयते ॥ ३ ॥

अनन्तं नाम मृद्विकारेषु मृदिव सुवर्णविकारेषु सुवर्णमिव तन्तुकार्येषु तन्तुरिवाव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्य-मनन्तमित्युच्यत आ[1]नन्दो नाम सुखचैतन्यस्वरूपो[2]ऽपरिमितान-न्दसमुद्रोऽविशि[3]ष्टसुखरूपश्चा[4]ऽऽनन्द इत्युच्यत एतद्वस्तुचतुष्टयं यस्य लक्षणं देशकालवस्तुनिमित्तेष्वव्यभिचारि स तत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते । त्वंपदार्थादौपाधिकात्तत्पदार्थादौपा-धिकाद्विलक्षण आकाशव[5]त्सर्वगतः सूक्ष्मः केवलः सत्तामात्रोऽ-सिपदार्थः स्वयंज्योतिरात्मेत्युच्यतेऽतत्पदार्थश्चाऽऽत्मेत्युच्यते । अनादिरन्त[6]र्वत्नी प्रमाणाप्रमाणसाधारणा न सती नासती न

---

नामादिपञ्चसु नष्टेष्वपि यत्तत्त्वं स्थिरं तदविनाशि ज्ञातव्यमिति शेषः । ज्ञानपदार्थमाह—**ज्ञानमितीति** । आद्यं ज्ञानपदं प्रतीकमुत्तरमर्थनिर्देशः । एवमनन्तानन्दपदयोरपि द्रष्ट-व्यम् ॥ ३ ॥

पूर्वं कार्यात्प्रागपि वर्तमानं कार्यजातस्य च व्यापकं स्वरूपाच्छादकं शुक्तिरिव रज-तव्यापिका । **सुखेति** । सुखात्मकं यच्चैतन्यं तद्रूपो न तु ज्ञानाद्भिन्नं सुखमस्ति । तस्य निरवधितामाह—**अपरिमितेति** । दृष्टिसुखं श्रोत्रसुखमितिवद्विशेषोऽत्र नास्तीत्याह—**अविशिष्टेति** । **लक्षणमिति** । एतच्चतुष्टयरूप इत्यर्थः । अव्यभिचारि सदोपलभ्यमानं यद्रूपं स तत्पदार्थ ईश्वर इत्युच्यते । तस्यैव पुनर्नामद्वयमाह—**परमिति** । परमित्यु-भयत्राप्यन्वयं तत्त्वंपदलक्षितमर्थं लक्षयति—**त्वंपदार्थादिति** । अतत्पदार्थश्च तत्पदा-र्थादौपाधिकाद्विलक्षण इत्यर्थः । आत्मा शुद्धं ब्रह्मेत्यर्थः । मायालक्षणमाह—**अना-दिरिति** । अनादिः पूर्वावधिविधुरा । अन्तर्वत्नी गर्भिणी कार्योत्पादनसमर्था । अन्त-वतीति पाठे कार्यरूपेण नश्वरा । चिद्रूपेण कारणात्मना तु नित्यैव शक्तिशक्तिमतो-रभेदाच्चिच्छक्तित्वाच्चास्याः कदाचिदपि ब्रह्मणो जगज्जननाद्यसामर्थ्यासंभवात्स्वभावहा-निप्रसङ्गात्प्रागभाववज्ज्ञाननाश्यत्वात्सान्तेति संप्रदायविदः । **प्रमाणेति** । उभयोरत-त्त्वविषयत्वाद्ब्रह्मणः स्वप्रकाशत्वेन प्रमाणाविषयत्वात् । न सती ब्रह्मातिरेकेण । नास-त्युपलम्भविरोधात् । न सदसती विरोधात् । किंतु सदसद्विलक्षणाऽनिर्वचनीया । ज्ञान-बाध्येति सांप्रदायिकाः । वयं तु ब्रूमः । ब्रह्मरूपेण सती कार्यरूपेणासती तेन सर्वात्मना

---

१ ङ. आनन्दं । २ ङ. °रूपमप° । ३ ङ. °शिष्टं सु° । ४ ङ. °पस्थानमानन्दमित्यु° । ५ ख. घ. °वत्सूक्ष्मः । ६ ख. ग. °न्तर्वती प्र° ।

**सदसती स्वयमविकाराद्विकारहेतौ निरूप्यमाणेऽसती । अनिरूप्यमाणे सती लक्षणशून्या सा मायेत्युच्यते ॥ ४ ॥**

**इत्यथर्वोपनिषदि सर्वोपनिषत्सारं समाप्तम् ॥ ३१ ॥**

---

न सती नाप्यसती नापि सदसती सद्रूपेण सत्त्वाभावादसद्रूपेण सत्त्वाभावादेतदुपपादितमधस्तात् । स्वयमधिष्ठानस्य ब्रह्मणोऽविकाराद्विकारहेतौ निरूप्यमाणेऽसत्यात्मानमदर्शयन्ती ब्रह्मातिरेकेणानुपलभ्यमाना । अनिरूप्यमाणेऽविवेकदशायां सती स्वकार्यं दर्शयन्ती । लक्षणशून्येदृशी तादृशीति निर्वक्तुमशक्या । सा माया । माशब्दो निषेधे याशब्दः प्राप्तौ । प्राप्ताऽपि या सती नास्ति सा माया ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां सर्वोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचिता सर्वोपनिषद्दीपिका समाप्ता ॥ ३८ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# हंसोपनिषत् ।

## नारायणविरचितदीपिकासमेता ।

हंसोपनिषदं विद्यादष्टात्रिंशत्तमीं ततः ।
अथर्वणे चतुष्खण्डां हंसज्ञानपटीयसा(सीं)म् ॥ १ ॥

शास्त्रतो ब्रह्मणि ज्ञाते सति तत्साक्षात्कारायोपाय उपदिश्यते । तत्रापि प्रमाणदार्ढ्यायाऽऽख्यायिकाऽऽरभ्यते—

* ॐ **गौतम उवाच—**

**भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।**
**ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १ ॥**

**सनत्सुजात उवाच—**

**विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः ।**
**पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥**

**गौतम उवाच भगवन्निति** । ब्रह्मविद्यायाः प्रबोध आविर्भावः । यद्वा ब्रह्मैव विद्या ज्ञानं तस्याः प्रबोधश्चरमान्तःकरणवृत्तिस्तन्मम मत्संबन्धेन शृणु ॥ १ ॥ २ ॥

**अनाख्येयमिदं गुह्यं योगिनां कोशसंनिभम् ।**
**हंसस्य गतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥**

योगिनीकोशो नाम पार्वतीप्रोक्तो ग्रन्थविशेषः । तत्र हि योगतत्त्वं प्रकाशितं तत्तुल्यमिदं शास्त्रम् । योगिनां कोशसंनिभमिति तु युक्तः पाठः । योगिनां योगविदां कोशो निधानं तत्तुल्यम् ॥ ३ ॥

**अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः । ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय हंसहंसेति सदाऽयं सर्वेषु देहेषु व्याप्तो वर्तते । यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव तं विदित्वा न मृत्युमेति । गुदमवष्टभ्याऽऽधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वाऽनाहतमतिक्रम्य विशुद्धौ प्राणा-**

* एतदारभ्य फलप्रदमित्यन्तो ग्रन्थो ग. छ पुस्तकयोर्न दृश्यते ।

१ ख. च. °गिनीको° ।

न्निरुध्याऽऽज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायंस्त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्नथो नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशं स वै ब्रह्म परमात्मेत्युच्यते ॥ ४ ॥

**ब्रह्मचारिण** इति । व्याख्यानक्रियया ब्रह्मचारिणमभिप्रैति । तेन संप्रदाने चतुर्थी । **हंसहंसोति** । हं प्राणवृत्तिः सोऽपानवृत्तिः सदा नित्यमयं प्राण आत्मा सर्वेषु स्त्रीपुरुषतिर्यक्कीटादिदेहेषु व्याप्तः पूरयिता वर्तते ।

तदुक्तमीशेन—"उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ।
नाभेरुच्छ्वासनिःश्वासा हृदयाग्रे व्यवस्थिताः" ॥ इति ।

ऊर्ध्वश्वास उच्छ्वासः प्राणो नीचैः श्वासो निःश्वासोऽपानः । तमात्मानम् । गुदं पायुमवष्टभ्य रुद्ध्वाऽऽधारान्मूलाधारचक्राद्वायुं प्राणाख्यमुत्थाप्योर्ध्वमवष्टभ्य । अवष्टम्भनोपायो **योगयाज्ञवल्क्य** उक्तः—

"दक्षिणेतरगुल्फेन सीवनीं पीडयेद्दृढम् ।
अधस्तादण्डयोः सूक्ष्मां सव्योपरि च दक्षिणः ॥
जङ्घोर्वोरन्तरं गार्गि निश्छिद्रं बन्धयेद्दृढम् ।
समग्रीवशिरःस्कन्धः समपृष्ठः समोदरः" ॥ इत्यादि ।

वायोरुत्थापनं त्वाधारस्वाधिष्ठानयोरन्तरेऽग्निकुण्डं तन्मूले मनो दध्याद्यत्र मनस्तत्र प्राण आयाति प्राणवायुयोगेनाग्निर्दीप्यते स चोर्ध्वज्वलनस्वभावस्तस्मिंश्च ज्वलिते वायुरूर्ध्वं गच्छति ततः षट्चक्रभेदो भवति । स्वाधिष्ठानं लिङ्गचक्रं त्रिः प्रदक्षिणीकृत्य। त्रिरावृता तत्र कुण्डलीत्यत एव वचनादनुमीयते । तदुक्तं **दीक्षापटले**—

"ततो वेधमयीं वक्ष्ये दीक्षां संसारमोचनीम् ।
ध्यायेच्छिष्यतनोर्मध्ये मूलाधारे चतुर्दले ॥
त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते ।
वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ॥
शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम् ।
सूक्ष्मात्सूक्ष्मतरां शक्तिं भित्त्वा षट्चक्रमञ्जसा ॥
गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि ।
वादिसान्तदलस्थार्णान्संहरेत्कमलासन" ॥ इत्यादि ।

कुण्डल्यनुसारेण वायोरपि चोर्ध्वं गच्छतस्त्रिःपरिवृत्तिः । मणिपूरकं नाभिचक्रं गत्वा प्राप्यानाहतं हृच्चक्रं तदतिक्रम्य विशुद्धौ कण्ठदेशे प्राणान्वायून्निरुध्याऽऽज्ञामाज्ञाचक्रं भ्रूमध्यवर्त्यनुध्यायन्ब्रह्मरन्ध्रं च सहस्रदलपङ्कजे ध्यायंस्त्रिमात्र ओंकारोऽहमित्येव सर्वदा

नित्यं ध्यायन्नथो नादं ध्यायन्कीदृशमाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं प्रतीयमानं तथोज्ज्वलं स वै नादो ब्रह्म प्राणात्मा परमात्मैव ॥ ४ ॥

हंसमन्त्रस्यर्ष्यादिकमाह—

**अथ हंस ऋषिरव्यक्तगायत्री छन्दः परमहंसो देवता हमिति बीजं स इति शक्तिः सोऽहमिति कीलकम् । षट्संख्ययाऽहोरात्रयोरेकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति सूर्याय सोमाय निरञ्जनाय निराभासाय तनुसूक्ष्म प्रचोदयादित्यग्नीषोमाभ्यां वौषड्हृदयाद्यङ्गन्यासकरन्यासौ भवतः । एवं कृत्वा हृदयेऽष्टदले हंसात्मानं ध्यायेत् ॥ ५ ॥**

**अथ हंस इति ।** अन्यत्र तु भिन्ना ऋष्यादय उक्ताः ।

यथा—"ऋषिर्ब्रह्मा स्मृतो दैवी गायत्री छन्द ईरितम् ।
देवता जगतामादिः संप्रोक्तो गिरिजापतिः" ॥ इति ।

द्वयं तस्य बाह्यपुरश्चरणविषयं ज्ञातव्यम् ।

षट्संख्यया ऋष्यादयो ज्ञेया इति शेषः । यद्वा षट्शतानि षट्संख्ययाऽधिकानि भवन्तीत्यन्वयः । षट्शतोपरि षडित्यर्थः । २१६०६ इत्यङ्कतः । अमृतबिन्दौ तु—

"अशीतिः षट्शतं चैव सहस्राणि त्रयोदश ।
लक्षश्चैकोऽपि निःश्वासा अहोरात्रप्रमाणतः" ॥

इति संख्याभेदः उक्तः स तत्रैव समाहितः । तद्वायत्र्यैव षडङ्गान्याह—ॐ सूर्याय हृदयाय नमः । ॐ सोमाय शिरसे स्वाहा । ॐ निरञ्जनाय शिखायै वषट् । ॐ निराभासाय कवचाय हुम् । ॐ तनुसूक्ष्म नेत्रत्रयाय वौषट् । ॐ प्रचोदयादस्त्राय फट् । एभिरेवाऽऽदौ करन्यासः । हंसो ह्रामित्यादिना षडङ्गानीत्यपरे । ह्रां सूर्यात्मने हृदयाय नमः । ह्रीं सोमात्मने शिरसे स्वाहा । इत्यादिनेत्यन्ये । अग्नीषोमाभ्यां वौषडिति षण्मन्त्रशेषः । हमग्निः सः सोमो हं पुमान्प्रकृतिस्तु स इति चोक्तम् । हृदयादीनि यान्यङ्गानि तेषां न्यासः करन्यासश्च तौ भवतः । एवं न्यासं कृत्वा हृदयेऽष्टदलं तत्र हंसात्मानं ध्यायेत् ॥ ५ ॥

ध्येयस्वरूपमाह—

**अग्नीषोमौ पक्षावोंकारः शिरो बिन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः ॥ ६ ॥**

**अग्नीषोमाविति ।** हंसस्य पक्षित्वात्पक्षिरूपेण ध्यानं ताभ्यां जगत्प्रवृत्तेरोंकारः

शिर उत्तमाङ्गत्वात्। बिन्दुस्तु नेत्रं प्रकाशकत्वात्। हकारेऽनुस्वारो ब्रह्मवाचकः। "अं ब्रह्म परमः शिवः" इति कोशः। ब्रह्म च प्रकाशकम्। वर्तुलत्वं बिन्दोर्नेत्रता। मुखं रुद्रो वक्रत्वात्। रुद्राणी चरणौ सर्वाधारत्वात्। बाहू कालश्च ताव(चाद) न्तकः सर्वादातृत्वात्। अग्निश्चोभे पार्श्वे भवतः। चाद्वायुः पूर्वापरे दक्षिणोत्तरे वा सोष्मत्वसामान्यात्। वायोः कुक्षिनिष्ठत्वाच्च। पश्यति दृशिधातोर्लक्षणया ज्ञानमनागारोऽनिकेतो वैराग्यं ते अवशिष्टे उभयपार्श्वे भवतः पूर्वापरे दक्षिणोत्तरे वा ॥ ६ ॥

ध्यानमुपसंहरति—

**एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति पूर्वदले पुण्ये मतिराग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रूरे मतिर्नैर्ऋत्ये पापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिरीशाने द्रव्यादाने ॥ ७ ॥**

**एषोऽसाविति**। जीवपरमात्मनोरभेदाद्धंसस्य परमहंसता। **भान्विति**। "न तत्र सूर्यो भाति" इत्यादिश्रुतेः। **येनेति**। स्वस्मिन्नध्यस्तत्वात्। तस्याष्टसु दलेषु स्थितस्याष्टधा वृत्तिमाह—**तस्येति**। तत्तद्दिक्पालबुद्ध्यनुसारेण फलं बोद्धव्यम्। इदं च दिगभिप्रायेण सामान्यतः फलमुक्तं तत्तद्दलाभिप्रायेण तु विशेषतः **फलमध्यात्मविवेक** उक्तम्।

तद्यथा—"गुदलिङ्गान्तरे चक्रमाधारे तु चतुर्दलम्।
परमः सहजस्तद्वदानन्दो वीरपूर्वकः ॥
योगानन्दश्च तस्य स्यादीशानादिदले फलम्।
स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य तु ॥
पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात्।
प्रश्रयः क्रूरता गर्वनाशो मूर्छा ततः परम् ॥
अवज्ञा स्यादविश्वासो जीवस्य चरतो ध्रुवम्।
नाभौ दशदलं पद्मं मणिपूरकसंज्ञकम् ॥
सुषुप्तिरस्य तृष्णा स्यादीर्ष्या पिशुनता तथा।
लज्जाभयघृणामोहकुधियोऽथ विषादिता ॥
हृदयेऽनाहतं चक्रं दलैर्द्वादशभिर्युतम्।
लौल्यं प्रणाशः कपटं वितर्कोऽप्यनुतापिता ॥
आशाप्रकाशश्चिन्ता च समीहा समता ततः।
क्रमेण दम्भो वैकल्यं विवेको हुंकृतिस्तथा ॥

फलान्येतानि पूर्वादिदलस्थस्याऽऽत्मनो विदुः ।
कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदा ॥
तत्र प्रणव उद्गीथो हुं फड्वषडथ स्वधा ।
स्वाहा नमोऽमृतं सप्त स्वराः षड्जादयो मताः ॥
इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश " ॥ इति ॥ ७ ॥

स्थानान्तरेषु नियममाह—

**मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयं यदा हंसो नादे लीनो भवति तदा तुर्यातीतमुन्मननमजपोपसंहारमित्यभिधीयत एवं सर्वं हंसवशा-त्तस्मान्मनो विचार्यते स एव जपकोट्यां नादमनुभवत्येवं सर्वं हंसवशान्नादो दशविधो जायते चिणीति प्रथमं चिञ्चिणीति द्वितीयं घण्टानादस्तृतीयं शङ्खनादश्चतुर्थं पञ्चमस्तन्त्रीनादः षष्ठ-स्तालनादः सप्तमो वेणुनादोऽष्टमो मृदङ्गनादो नवमो भेरीनादो दशमो मेघनादो नवमं परित्यज्य दशममेवाभ्यसेत् ॥ ८ ॥**

**मध्य इति** । परमात्मस्थानत्वात् । लिङ्गे नाले पुरीतति । पद्मत्यागे पद्मादूर्ध्वं निरालम्बप्रदेशे । नादे वक्ष्यमाणे । तुर्यातीतं तुरीयात्परमुन्मननं मननरहितम् । अज-पोपसंहारं प्राणव्यापाररहितम् । त्रय एते पर्यायाः । एवं सर्वमित्यादि । एवं तुरीयाती-तपर्यन्तमुक्तं सर्वं फलं हंसवशाद्धंसजपनिवेदनाधीनं वेदितव्यं तस्मात्सर्वफलदत्वान्मनो हंसो मन एव हंसो हन्ति गच्छति । सप्तदशकं लिङ्गं मनो विचार्यते मनःस्वरूपमेव विचार्य निश्चेतव्यं येन त्वमर्थोऽवभासते । स एव हंसोपासको जपकोट्यां कोटिसंख्या-कजपनिवेदनपूर्वकमनोनियमे सति नादं वक्ष्यमाणमनुभवति । तस्यैवेति पाठे हंसस्यैव । पुनरेवमित्यादिरुपसंहारः । नादहेतुत्वस्याधिकस्योक्तत्वात् । सप्रकारां नादोत्पत्तिमाह— **नाद इति** । चिण्यादयोऽनुकरणशब्दाः । इतिशब्दा अनुकरणत्वद्योतकाः । घण्टानादो घण्टाया इव नादः । एवमग्रेऽपि । **नवमं परित्यज्येति** । नवमपर्यन्तांस्त्यक्त्वा ब्रह्म-भवनफलं दशममेवाभ्यसेत् ॥ ८ ॥

दशानां प्रत्येकं लक्षणानि फलानि चाऽऽह—

**प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् ।**
**तृतीये खेदनं याति चतुर्थे कम्पते शिरः ॥ ९ ॥**
**पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् ।**
**सप्तमे गूढविज्ञानं परा वाचा तथाऽष्टमे ॥ १० ॥**

---

१ क. तुरीयाती° । २ ख. °कोट्या ना° ।

अदृश्यं नवमे देहं दिव्यचक्षुस्तथाऽमलम् ।
दशमं परमं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥ ११ ॥

**प्रथम इति** । चिञ्चिणीशब्दाकारं तद्वदिव भवति । गात्रभञ्जनं गात्रभङ्ग इव भवति । खेदनं खिन्न इव भवति । अमृतनिषेवणममृतपानमिव । **दशममिति** । दशमं चेदभ्यस्यति परमं ब्रह्म भवेत् । तस्य फलं ब्रह्मात्मेति ॥ ९ ॥ १० ॥ ११ ॥

**तस्मिन्मनो विलीयते मनसि संकल्पविकल्पे[1] दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो[2] निरञ्जनः शान्तः प्रकाशत इति ।**

तस्मिन्ब्रह्मण आत्मनः संनिधौ सति मनो विलीयते विलीनं भवति । मनसि संकल्पविकल्परूपे गते सति पुण्यं च पापं च तयोः समाहारे दग्धे सति सदाशिवो भवति । शक्त्यात्मा च शिवशक्तिरूपो भूत्वा सर्वत्रावस्थितादिरूपो ब्रह्मरूपः प्रकाशते ब्रह्मैव भवति । इतिशब्दो हंसवर्णनसमाप्त्यर्थः । सनत्सुजातेन गौतमं प्रति पार्वतीपरमेश्वरसंवादे हंसवर्णनमुक्तम् । स संवादो यथा—

**ईश्वर उवाच**—"अजपाराधनं देवि कथयामि तवानघे ।
यस्य विज्ञानमात्रेण परं ब्रह्माधिगच्छति ॥
हंसं परं परेशानि प्रत्यहं जपते नरः ।
मोहान्धो यो न जानाति मोक्षस्तस्य न विद्यते ॥
श्रीगुरोः कृपया देवि जायते जपते ततः ।
तस्योच्छ्वासैस्तु निःश्वासैस्तदा बन्धक्षयो भवेत् ॥
उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥
नाभेरुच्छ्वासनिःश्वासा हृदयाग्रे व्यवस्थिताः ॥
षष्टिश्वासैर्भवेत्प्राणस्तत्षष्ट्या घटिका मता ।
षष्टिनाड्या अहोरात्रं जपसंख्याऽजपामनोः ।
एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ॥
प्रत्यहं जपते प्राणः स्यादानन्दमयी परा ॥
उत्पत्तिर्जप आरम्भो मृतिरस्या निवेदनम् ॥
विना जपेन देवेशि जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ॥

---

१ च. °कल्पे वि° । २ च. °त्योऽनित्यो नि° ।

एवं जपं गृहेशानि प्रत्यहं विनिवेदयेत् ।
गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि ॥
जीवात्मने क्रमेणैव तथा च परमात्मने ।
षट्शतानि सहस्राणि षडेव च तथा पुनः ॥
षट्सहस्राणि च पुनः सहस्रं च सहस्रकम् ।
पुनः सहस्रं गुरवे क्रमेण विनिवेदयेत् ॥
आधारे स्वर्णवत्स्मृत्वा वादिसान्तानि संस्मरेत् ।
द्रुतसौवर्णवर्णानि दलानि परमेश्वरि ॥
स्वाधिष्ठाने विद्रुमाभे बादिलान्तानि च स्मरेत् ।
विद्युत्पुञ्जप्रभातानि सुनालमणिपूरके ॥
डफान्तानि महानीलप्रभाणि च विचिन्तयेत् ।
पिङ्गवर्णमहावह्निकणिकाभानि चिन्तयेत् ॥
कादिठान्तानि पत्राणि चतुर्थेऽनाहते प्रिये ।
विशुद्धौ धूम्रवर्णे तु रक्तवर्णान्स्वरान्स्मरेत् ॥
आज्ञायां विद्युदाभायां शुभौ हस्तौ विचिन्तयेत् ।
कर्पूरद्युतिसंराजत्सहस्रदलनीरजे ॥
नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि ।
एतत्सुषुप्तचक्रेषु स्थितिभ्यः परमेश्वरि ॥
जपं निवेदयेदेनमहोरात्रभवं प्रिये ।
अजपा नाम गायत्री त्रिषु लोकेषु दुर्लभा ॥
अजपां जपतो नित्यं पुनर्जन्म न विद्यते ।
अजपा नाम गायत्री योगिनां मोक्षदायिनी ॥
अस्याः संकल्पमात्रेण नरः पापैः प्रमुच्यते ।
अनया सदृशी विद्या अनया सदृशो जपः ॥
अनया सदृशं पुण्यं न भूतं न भविष्यति " ॥ इति ।

अस्य पुरश्चरणरूपेणापि शारदातिलके विधानमुक्तं तद्यथा—

" वियदर्धेन्दुललितं तदादिः सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ॥
ऋषिर्ब्रह्मा स्मृतो दैवी गायत्री छन्द ईरितम् ।
देवता जगतामादिः संप्रोक्तो गिरिजापतिः ॥
हसाषड्दीर्घयुक्तेन कुर्यादङ्गक्रियां मनोः ।

उद्यद्भानुस्फुरिततडिदाकारमर्धाम्बिकेशं
पाशाभीती वरदपरशुं संदधानं कराग्रैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥
भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।
दशांशं जुहुयात्सम्यक्ततः सिद्धो भवेन्मनुः ॥
दीप्तादिपूजिते पीठे प्रागुक्ते प्रजपेद्विभुम् ।
मूर्तिं मूलेन संकल्प्य यजेदङ्गादिभिः सह ॥
ऋतुं वसुं नरवरौ दिग्दलेषु विदिक्ष्वथ ।
अर्चयेद्वतजां गोजामब्जाख्यामद्रिजां पुनः ॥
लोकेश्वरांस्तदस्त्राणि पूजयेदेवमन्वहम् ।
अर्घ्यं च विधिवद्दद्यात्प्राक्प्रोक्तेनैव वर्त्मना ॥
मन्त्राढ्यमातृकापद्मे पूर्णकुम्भं निधाय तम् ।
पिधाय वामहस्तेन न्यस्तमन्त्रेण संयुतः ॥
अष्टोत्तरशतं मन्त्रं जपेत्तोयं सुधामयम् ।
स्मृत्वा तेनाभिषिञ्चेद्यं स भवेद्विगतामयः ॥
आयुरारोग्यविभवानमिताल्लँभते नरः ।
अनेनैव विधानेन विषार्तो निर्विषो भवेत् ॥
इन्दुभ्यां विगलत्सुधापारिचितं मन्त्रान्त्यबीजं तत
प्रश्च्योतत्परमामृतार्द्रशशिना संसिक्तमाद्यं स्मरन् ।
मन्त्री मन्त्रमिमं जपन्विषगदोन्मादापमृत्युज्वरा-
ञ्जित्वा वर्षशतं विशिष्टविभवो जीवेत्सुखं बन्धुभिः " ॥ इति ॥

**ॐ वेदप्रवचनं वेदप्रवचनमिति ॥ १२ ॥**

**इत्यथर्ववेदे हंसोपनिषत्समाप्ता ॥ ३२ ॥**

ॐ **वेदप्रवचनमिति** । इदं हंसनिरूपणमोंकाराद्यात्मकस्य वेदस्य प्रवचनं निर्वहनहेतुः । तद्यथा—हंसमन्त्रस्यैव पुंप्रकृत्यात्मकस्य वर्णविपर्यासे सोऽहं भवति स च परमात्ममन्त्रस्तस्य च तुषवद्व्यञ्जनपरित्यागे पररूपे च ओमिति भवति । स च शुद्धब्रह्मवाची तत्प्रतीकश्च । ओंकाराच्च तिस्रो व्याहृतयस्ताभ्यस्त्रिपदा त्रिभ्यः पदेभ्यस्त्रयो वेदा वेदेभ्यो लोकत्रयमिति । द्विरुक्तिः समाप्त्यर्था ॥ १२ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां हंसोपनिषद्दीपिका ॥ १ ॥

इति नारायणविरचिता हंसोपनिषद्दीपिका समाप्ता ॥ ३९ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# हंसोपनिषत् ।

## श्रीशंकरानन्दविरचितदीपिकासमेता ।

*** अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः । ब्रह्मचारिणे = दान्ताय गुरुभक्ताय हंस हंसेति सदाऽयं सर्वेषु देहेषु व्याप्तो वर्तते । यथा ह्यग्निः काष्ठेषु**

हंसोपनिषदो व्याख्यां करिष्ये हंस एव सन् ।
संबन्धाद्युपनिषदां विज्ञेयं तुल्यमत्र तत् ॥ १ ॥

**अथा**धिकारसंपत्त्यनन्तरम् । **हंसपरमहंसनिर्णयं** हन्ति गच्छति संसारकासारमिति हंसः । परममुत्कृष्टमज्ञानं सकार्यं ससंस्कारं हंसस्य स्वात्मतादात्म्यज्ञानाद्धन्ति विनाशयतीति परमहंसः । हंसश्च परमहंसश्च हंसपरमहंसौ त्वंतत्पदार्थौ तयोर्निर्णयो याथात्म्यनिश्चयस्तं वाक्यार्थज्ञानमित्यर्थः । **व्याख्यास्यामो** विस्पष्टमासमन्तात्प्रकथयिष्यामः । अथशब्दसूचितमधिकारिणमाह—**ब्रह्मचारिणे** ब्रह्मचर्ययुक्ताय पारमहंस्याश्रमवर्तिन इत्यर्थः । ब्रह्मचर्ये निमित्तमाह—**दान्ताय,** उपरतबाह्येन्द्रियव्यापाराय । उपलक्षणमिदं शान्तत्वादीनाम् । तत्रापि हेतुमाह—**गुरुभक्ताय** गुरुर्जीवब्रह्मणोस्तादात्म्यलक्षणोऽर्थस्तस्योपदेशोऽपि स एव तस्मिन्भक्तं भक्तिः कायेन मनसा वाचा तदेकपरत्वं यस्य स गुरुभक्तस्तस्मै । इदानीं हंसस्वरूपं वक्तुमाह—**हंस हंसेति** द्व्यक्षरो मन्त्रो जीवेन जप्यमानस्तस्य प्राणिभेदापेक्षयाऽभ्यासो हंसहंसेति । [इति]शब्दोऽनुकरणार्थः । व्याहरन्निति शेषः । **सदा** यावद्देहावस्थानम् । **अयं** बुद्धिप्राणोपाधिकः । **सर्वेषु** निखिलेषु । **देहेषु** स्थावरजङ्गमशरीरेषु । **व्याप्तो** व्याप्तिं प्राप्त आकाशवद्वर्तते वर्तनं करोति । आदावन्ते च देहस्य यद्यपि वर्तत एव तथाऽपि देहस्याभावाद्देहे न वर्तते तदभिप्रायमिदं सदा देहेषु व्याप्तो वर्तते । देहव्याप्तिवर्तने दृष्टान्तः । **यथा** दृष्टान्ते । **हि** प्रसिद्धः । **अग्नि**र्वह्निः **काष्ठेषु** दारुषु ।

* गौतम उवाच—भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद । ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १ ॥ सनत्सुजात उवाच—विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः । पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥ अनाख्येयमिदं गुह्यं योगिनां कोशसंनिभम् । हंसस्य गतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥३॥ इति ग्रन्थोऽथेत्यस्मात्प्रागधिकः क्वचित् । अयं च नारायणकृतदीपिकायां व्याख्यातोऽस्ति । =एतदग्रे शान्तायेत्यधिकं क्वचित् ।

तिलेषु तैलमिव तं विदित्वा न मृत्युमेति । गुदमवष्टभ्याऽऽधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वाऽनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याऽऽज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायंस्त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्नथो नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशः स वै ब्रह्म

---

तेषु सर्वेषु वह्नेरभिव्यक्तिर्दुष्करा ततस्तिलेषु तैलदृष्टान्तमाह—**तिलेषु तैलं** स्पष्टम् । इव दृष्टान्ते । तं हंसं सर्वदेहव्याप्तं प्राणबुद्ध्युपाध्यतीतम् । **विदित्वा** साक्षात्कृत्य । **न मृत्युं** मरणकारणं संसारमेति न गच्छति । इदानीमेतत्प्रतिपत्त्यर्थं योगमाह—**गुदं** पायुद्वारं सशिश्नद्वारं स्वपाष्णि(र्ष्णि)भ्याम**वष्टभ्य** निरुध्य पादाङ्गुष्ठाद्वायुमाधारचक्रे गुरूपदिष्टेन मार्गेण । तत **आधाराद्**गुदलिङ्गान्तर्वर्तिनः शरीरशालावायुस्तम्भप्रतिष्ठास्थानाच्चतुर्दलाधाराच्छिद्राकारात् । **वायुं** प्राणप्रभञ्जनम् । **उत्थाप्य** गुरूपदिष्टेन मार्गेणोर्ध्वं विनीय । **स्वाधिष्ठानं** षड्दलं चक्रं नाभिसमीपस्थं चित्रवर्णम् । **त्रि**स्त्रिवारम् । **प्रदक्षिणीकृत्य** वायुगूहमाधार उत्थापितं प्रादक्षिण्येन नीत्वा । **मणिपूरकं** नाभेरुपरिप्रदेशस्थं दशदलचक्रं गुरूपदिष्टेन मार्गेण **गत्वा** प्राप्य । ततोऽपि गुरूपदिष्टेन मार्गेणानाहतचक्रे गते ततो**ऽनाहतं** द्वादशदलं चक्रं हृदयपद्मसमीपस्थं गुरूपदिष्टमार्गेणा**तिक्रम्या**तीत्य गत्वा । **विशुद्धे(द्धौ)** षोडशदले चक्रे कण्ठस्थे चित्रवर्णे । **प्राणाना**धारादागतान्वायुभेदान् । प्रणवमात्राभिः सुशिक्षिताभिर्गुरूपदिष्टाभि**र्निरुध्या**वरोधं कृत्वा तत **आज्ञा**माज्ञाचक्रं द्विदलं भ्रूसंधिस्थम् । **अनुध्यायन्**पश्चाद्गच्छन् । सहस्रदलचक्रं चित्रवर्णं गुरूपदिष्टं मूर्धस्थं गच्छेत्तत्र गतस्तत्ते **ब्रह्मरन्ध्रं** ब्रह्मणः स्वयंप्रकाशस्याऽऽनन्दात्मनो रूपलब्धौ रन्ध्रं सुषिरं कपालपुटत्रयस्य संधिरूपं सहस्रदलकर्णिकामध्यवर्ति गुरूपदिष्टं च सुषुम्नाग्रम् । **ध्यायन्**विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कुर्वन् । ध्यानप्रकारमाह—**त्रिमात्रा**स्तिस्रोऽकारोकारमकाराख्या विश्वतैजसप्राज्ञाद्यविनाभूता मीयन्त आत्मसाक्षात्कारोपायत्वेनेति मात्रा यस्य ममोंकारादभिन्नस्य सोऽहं त्रिमात्रोऽहम् । **अहं** सः । इत्यनेन प्रकारेण । **एवमु**क्तप्रकारम् । **सर्वदा** निरन्तरम् । **ध्यायन्**ध्यानं कुर्वन् । निरुपायं प्राप्यत इत्यत उपेयमाह—**अथो** यस्मान्निरुपायो हंसो नादात्मा स्यात्तस्मात् । **नाद**मुक्तम् । **आधारा**दुक्तात् । **ब्रह्मरन्ध्रपर्यन्तं** ब्रह्मरन्ध्रमुक्तं तत्पर्यन्तं तदवसानम् । **शुद्धस्फटिकसंकाशः** शुद्धोऽशेषदोषशून्यः स्फटिकः शुभ्रतमः पाषाणः शुद्धश्चासौ स्फटिकश्चेति शुद्धस्फटिकः । तत्संकाशस्तद्वर्णः । ध्यानार्थमयं वर्णः । **स** उक्तो नादः । **वै** प्रसिद्धः । **ब्रह्म** देशकालवस्तुप[illegible]च्छेदशून्यं

**परमात्मेत्युच्यते ॥ १ ॥ अथ हंस ऋषिरव्यक्तं गायत्री छन्दः परमहंसो देवता* षट्संख्ययाऽहोरात्रयोरेकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति सूर्याय सोमाय निरञ्जनाय निराभासाय तनुसूक्ष्म प्रचोदयादित्यग्नीषोमाभ्यां वौषड्हृदयाद्यङ्गन्यासकरन्यासौ**

---

स्वरूपं जगज्जन्मस्थितिलयस्य कारणम् । **परमात्मा** न तटस्थ एव किंतु सर्वेषामहंबुद्धेर्द्रष्टा । इत्यनेन प्रकारेण । **उच्यते** कथ्यते विद्वद्भिः ॥ १ ॥

इदानीमजपामन्त्रं विवक्षुराह—**अथ** ध्येयस्वरूपकथनानन्तरम् । **हंसो**ऽजपामन्त्रस्य **ऋषि**र्द्रष्टा । **अव्यक्तं** न व्यक्तं स्पष्टमव्यक्तं **गायत्री**त्यर्थः । **छन्दः** स्वेच्छया फलहेतुत्वात् । दुःखावरणत्वाद्वाऽव्यक्तगायत्र्येव च्छन्दःशब्दाभिधेया । **परमहंसः**, व्याख्यातम् । **देवता** प्रतिपाद्या प्राप्यश्च देवः स्वयंप्रकाशः । देव एव देवता । बीजशक्त्योः संप्रदायगम्यत्वाद्विनियोगस्य त्वभिप्रायाधीनत्वादुपेक्ष्य तत्सर्वं दैनंदिनमन्त्रजपसंख्यामाह—**षट्संख्यया** षष्टिघटिकात्मको दिवसः षोढा भिन्नः षट्तस्मिन्संवत्सराहोरात्राणां प्रतिघटिकं गणनया संख्या षट्संख्या घटिकाद्वयांशके त्रिसहस्रं षट्शताधिकं भवतीत्यर्थः । किं बहुनाऽहोरात्रयोरहनि रात्रौ चैकाविंशति**सहस्राणि** स्पष्टम् । **षट्शतान्यधिकानि भवन्ति,** स्पष्टम् । इदानीं हृदयादिमन्त्रान्सिद्धवत्कृत्य न्यासमन्त्रानाह—**सूर्याय सोमाय निरञ्जनाय निराभासाय** **सूर्यः** शोभनाया गतेरात्मैक्यावबोधफलायाः कर्ता सोम उमया जीवब्रह्मणोरेकत्वावगतिलक्षणया सह वर्तमानः प्रियदर्शनो वा निरतिशयानन्दरूपत्वान्निरञ्जनो निर्गतमञ्जनमविद्याकारणं यस्मात्स निरञ्जनो निराभासो निर्गत आभासो वस्तुरूपः संस्कारः प्रपञ्चो यस्मात्स निराभासः । अत्र चतुर्थ्यन्तता चतुर्णामपि स्वाहा नम इत्यादि यथासंप्रदायमूहार्था । अथवा । एवंभूतायैतन्मया क्रियमाणं कर्मेत्येतदर्थतया च प्रातिकूल्यस्य समग्रस्य भावेऽप्यस्य फलं भवेत् । इदानीं पञ्चाङ्गपक्षमुररीकृत्याजपागायत्रीमन्त्रस्यार्थमाह—**अतनुसूक्ष्म** न विद्यते तनुः शरीरं स्थूलं सूक्ष्ममज्ञानं च यस्यासावतनुः । तत एव सूक्ष्मो दुर्विज्ञेयः । अतनुश्चासौ सूक्ष्मश्चातनुसूक्ष्मस्तस्य संबोधनमतनुसूक्ष्म । **प्रचोदया**द्बुद्धिं भवानैक्ये प्रेरयतु । इदानीं षडङ्गपक्षमाश्रित्याऽऽह—**अग्नीषोमाभ्याम्,** अग्निरग्रमात्मस्वरूपं नयतीत्यग्निः । सोमो व्याख्यातः । अग्निश्च सोमश्चाग्नीषोमौ ताभ्यां चतुर्थ्यादानमुक्तार्थम् । **वौषट्** । स्वाहार्थे वौषट्कारो मया क्रियमाणमिदं कर्म भवद्भ्यां प्रीतिकरं भवत्वित्यर्थः । **हृदयाद्यङ्गन्यासकरन्यासौ** हृदयमादिर्येषां शिरःशिखाकवचनेत्रास्त्राणां ते हृदयादयः । अङ्गेषु षट्सूक्तेषु नितरामस्यन्ते क्षिप्यन्ते क्रियन्त इत्यर्थ-

---

* ग्रे हमिति बीजं स इति शक्तिः सोऽहमिति कीलकमित्यधिकः पाठ उपलभ्यते ।

**भवतः । एवं कृत्वा हृदयेऽष्टदले हंसमात्मानं ध्यायेत् ॥ २ ॥ अग्नीषोमौ पक्षावोंकारः शिरो *बिन्दुस्त्रिनेत्रमुखो रुद्रो रुद्राणी चरणौ +बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः पश्यत्यना❀कारं च शिश्नोभे पार्श्वे भवतः ॥ ३ ॥ एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति पूर्वदले पुण्ये मति-**

स्तेऽङ्गन्यासाः । हृदयादिश्चासावङ्गन्यासश्चेति हृदयाद्यङ्गन्यासः । करयोः संध्यङ्गुलीकरयोर्न्यासो हृदयाद्यङ्गन्यासश्च करन्यासश्च हृदयाद्यङ्गन्यासकरन्यासौ । **भवतः,** स्पष्टम् । **एवमुक्तेन** प्रकारेण ऋष्यादिकरन्यासान्तं **कृत्वा** विधाय । **हृदये** हृदयकासारसरोरुहे × । **हंसं** बुद्धिप्राणमनउपाधिकम् । **आत्मानं** स्वयंप्रकाशानन्दरूपम् । **ध्यायेद्**ध्यानं कुर्यात् ॥ २ ॥

**अग्नीषोमौ** व्याख्यातौ । **पक्षौ** दक्षिणवामभागौ पक्षाविव पतत्रिणः पक्षौ । **ओंकारः** प्रणवः । **शिरो** मस्तकम् । उरःस्थलं **बिन्दुरों**कारस्य पञ्चमी मात्रा । **त्रिनेत्रमुखः,** त्रिनेत्रो भगवानुमापतिर्मुखं यस्य स त्रिनेत्रमुखः सूर्यसोमाग्नयस्त्रीणि वा नेत्राणि मुखे यस्य स त्रिनेत्रमुखः । **रुद्रः,** रुं दुःखं द्रावयति विनाशयतीति रुद्रः । **रुद्राणी** रुद्रस्य भार्या । **चरणौ** पादौ । = **द्विविधं** द्विप्रकारं समाधिं संप्रज्ञातमसंप्रज्ञातं च । **कङ्कतः** कङ्कोऽत्र कङ्कसदृशो हंस इत्यर्थः । **कुर्यात्,** स्पष्टम् । **इत** एतस्माद्विविधात्समाधेरनन्तरम् । **पश्यति** साक्षात्करोति । **अनाकारं च,** आकारातीतं सत्यज्ञानादिलक्षणं चकार आधारचक्रादीनां समुच्चयार्थः । अनाकारश्चेति पाठे हंसो निराकारो भवतीति शेषः । **शिश्नोभे** शिश्नस्य द्वे आपादमस्तकं वर्तमाने । **पार्श्वे** पक्षौ । **भवतः** स्पष्टम् ॥ ३ ॥

प्रत्यक्षो बुद्धेर्द्रष्टा हंसाख्य **एष** ज्ञायमानः । **असौ** परोक्षः शास्त्रैकगम्यः । **परमहंसः,** व्याख्यातः । **भानुकोटिप्रतीकाशः** सूर्यकोटिसमानप्रभः स्वयंप्रकाश इत्यर्थः । इदानीं परिच्छेदं वारयति—**येन** हंसाभिन्नेन परमहंसेन स्वयंप्रकाशेन **इदं** विविधशब्दप्रत्ययगम्यं सशब्दप्रत्ययम् । **व्याप्त**माकाशेनेव घटादिकमन्तर्बहिर्वृतम् । **तस्य** हंसस्य बुद्ध्युपाधिकस्य वस्तुतः परमहंसेनाभिन्नस्य । **अष्टधा**ऽष्टप्रकारा । हृदयपद्मस्याष्टदलान्तः । **वृत्ति**र्गतिः । **भवति,** स्पष्टम् । **पूर्वदले** हृदयपुण्डरीकस्य पूर्वस्यां दिशि स्थिते पत्रे वर्तमानस्य । **पुण्ये** शुभे कर्मणि सुखैकफले । **मतिः**

* बिन्दुस्तु नेत्रं मुखं रुद्र इति पाठः । + एतदादि भवत इत्यन्तानि पदानि व्याख्याकृता न गृहीतानि किं तु तत्स्थानेऽन्यान्येव गृहीत्वा तानि व्याख्यातानीति तदनुरोधेन मूलेऽपि क्वचित्तानि सन्तीत्यनुमीयते । ❀ अनागारश्च शिष्टोभयपार्श्वे इति पाठः । × अष्टदल इत्यस्य व्याख्यानं त्रुटितम् । = एतदादिकानि चित्पदानि मूले नोपलभ्यन्ते तत्स्थानेऽन्यान्येवोपलभ्यन्ते ।

रान्नेये निद्रालस्यादयो भवन्ति यामे क्रौर्ये मतिर्नैर्ऋते पापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिरीशाने द्रव्यादानम् ॥४॥ मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयं यदा हंसो

---

इदमेवानुष्ठास्यामि नान्यदिति बुद्धिर्भवतीति शेषः । [आग्नेये]आग्नेय्यां दिशि स्थिते दले वर्तमानस्य **निद्रालस्यादयः,** निद्रा बाह्यानां शब्दादीनां श्रोत्रादीन्द्रियैरग्रहणरूपाऽऽलस्यं सति सामर्थ्ये विषये च तदुपभोगपराङ्मुखत्वमादिशब्देन वैचित्र्यक्रोधमूर्छादयो निद्रा चाऽऽलस्यं च तदादयश्च निद्रालस्यादयः । **भवन्ति,** स्पष्टम् । **यामे** दक्षिणस्यां दिशि वर्तमाने दले स्थितस्य । **क्रौर्ये** क्रूरो हिंस्रस्तस्य भावः क्रौर्यं तस्मिन् । **मतिर्**ब्राह्मणं हन्मीत्यादिका बुद्धिः सति द्वेषेऽसति वा भवतीति शेषः । **नैर्ऋते** नैर्ऋत्यां दिशि वर्तमाने दले स्थितस्य । **पापे** परद्रव्यापहारे परदारगमनादौ च । **मनीषा** बुद्धिर्भवतीति शेषः । **वारुण्यां** पश्चिमायां दिशि वर्तमाने दले स्थितस्य । **क्रीडा** राजाबलादिलीला । भवतीति शेषः । **वायव्ये** वायव्यां दिशि वर्तमाने दले स्थितस्य । **गमनादौ** गमनं देशाद्देशान्तरसंचारः । आदिशब्देन विषयसेवनादिकम् । गमनं च तदादिश्च तस्मिन् । **बुद्धिस्**तत्र यास्यामि तदुपभोग्यं लप्स्य इत्यादिमतिर्भवतीति शेषः । **सौम्य** उत्तरस्यां दिशि वर्तमाने दले स्थितस्य । **रतिप्रीतिः,** रतौ रागे योषिद्गमनलक्षणे स्रक्चन्दनादिसेवाजन्ये च प्रीतिः प्रेमविशेषो रतिप्रीतिः । भवतीति शेषः । ( **ईशाने,** ) ऐशान्यां दिशि वर्तमाने दले स्थितस्य । **द्रव्यादानं** स्वकीयस्य द्रव्यस्याऽऽदानम् । वाणिज्यादिपुरःसरं स्वीकारो द्रव्यादानं लुब्धतेत्यर्थः । भवतीति शेषः ॥ ४ ॥

**मध्ये** दलाष्टकस्यान्तराले वर्तमानस्य । **वैराग्यं** लोकद्वयविषयवैतृष्ण्यम् । भवतीति शेषः । मध्येऽपि वर्तमानस्य त्रेधा स्थितिर्भवति तामुररीकृत्यावस्थात्रयमाह— **केसरे** कर्णिकायाः परितो वर्तमानं क्षुद्रदलाकारं केसरं तस्मिन्वर्तमानस्य । **जाग्रदवस्था** समनस्केन्द्रियैर्बाह्यस्य विषयस्य ग्रहणं भवतीति शेषः । **कर्णिकायां** केसराणामन्तर्गतस्थान उन्नते कनककुसुमाभे विविधवासनाचिते स्थितस्य । **स्वप्नं** मानसवासनाप्रदर्शिताविषयभोगः । भवतीति शेषः । **लिङ्गे** कर्णिकाया अपि मध्यप्रदेशे सूक्ष्मतमेऽन्नपरिणामे लोहितापिण्डे स्थितस्य । **सुषुप्तिः,** बाह्यान्तरविषयानुपलम्भो भवतीति शेषः । **पद्मत्यागे,** अष्टदलस्य सकेसरकर्णिकालिङ्गस्य हृदयपद्मस्य त्यागे नाहमत्रास्मि किंतु सर्वत्र सर्वात्मको देशकालवस्तुपरिच्छेदशून्यः स्वयंप्रकाश आनन्दात्मेति बुद्ध्या परित्यागे । **तुरीयं** संख्याशून्यमप्यवस्थानं जागरणस्वप्नसुषुप्तापेक्षया चतुर्थं भवतीति शेषः । **यदा** यस्मिन्काले । **हंसः** कर्ता भोक्ता प्रमा-

**नादे विलीनो भवति तदा तुरीयातीतमुन्मना जपोपसंहार इत्यभिधीयत एवं सर्वं हंसवशात्तस्मान्मनो विचार्यतेऽस्यैव जपकोट्या नादमनुभवति* स च दशविध उप जायते चिणिति प्रथमश्चिण्चिणिति द्वितीयो घण्टानादस्तृतीयः शङ्खनादश्चतुर्थः पञ्चमस्तन्त्रीनादः षष्ठस्तालनादः सप्तमो वेणुनादोऽष्टमो भेरीनादो नवमो मृदङ्गनादो दशमो मेघनादो**

---

तेत्यादिबुद्धिमाञ्जीवः । **नादे** ध्वनिविशेषस्वरूपे ध्वन्यस्तमयस्थाने वाङ्मनसातीते परमात्मनि । **विलीनो**ऽहं मुक्तरूपानन्दात्माऽस्मीत्येतद्बुद्धेरप्यभावेन केवलं स्वयंप्रकाशेन रूपेणेदमित्थमित्यनौपम्यभावेनावस्थितो विलीनः । **भवति** । स्पष्टम् । ततः सर्वबुद्ध्युपरमावस्थानम् । **तुरीयातीतं** तुरीयमुक्तरूपं बुद्धिविशेषसहितमतोऽशेषबुद्धिराहित्येनातीतं व्यतिरिक्तं भवति पुण्यगत्यादिलिङ्गैः पूर्वदलेऽवस्थानानि ज्ञात्वा तुरीयातीतपर्यन्तं प्राप्नुयाद्विविधैः साधनैरतःपरं प्राप्तव्याभावादशेषपुरुषार्थपरिसमाप्तेः कृतकृत्यतेत्युपपन्नम् । **उन्मना** उद्गतमपगतं मनोऽहं ब्रह्मास्मीति साक्षात्कारेण यस्य स उन्मनाः । **जपोपसंहारः**, अजपाजपस्योन्मनस्त्वमुपसंहारः समाप्तिर्यावन्मनसोऽवस्थानं तावज्जपः करणीय इत्यर्थः । **इति**, अनेन प्रकारेण । **अभिधीयते** कथ्यते विद्वद्भिः । =**एव**मुक्तेन प्रकारेणाग्नीषोमादौ पक्षादिबुद्धिकरणेन द्विविधं समाधिं कुर्वन्**हंसवशा**द्धंसबलेन । उन्मना यस्मात्**तस्मा**त्ततः । **मनो** लीनं विक्षिप्तं सकषायमित्यादिरूपम् । **विचार्यते** विद्वद्भिः प्रतिपक्षं विचिन्त्यते । **अस्यैवा**जपामन्त्रस्यैव न त्वन्यस्य । **जपकोट्या** कोटिसंख्याकेन जपेन । **नादं** विचित्रं ध्वनिं स्वहृदयपुण्डरीके । **अनुभवति**, स्पष्टम् । **स** चोक्तो नादोऽपि **दशविधो** दशप्रकारः । **उपजायते** सामीप्येनोत्पद्यते ।ताननुकरोति । **चिण्**, नादानुकरणमित्यनुकरणार्थः । **प्रथमः** स्पष्टम् । **चिण्चिण्**नादानुकरणम् । **इति**, अनुकरणार्थः । **द्वितीयः**, स्पष्टम् । **घण्टानादो** घण्टाध्वनिवन्नादो घण्टानादः । **तृतीयः**, **स्पष्टम्** । **शङ्खनादः** शङ्खध्वनिवन्नादः । **चतुर्थः**, स्पष्टम् । **पञ्चमः**, स्पष्टम् । **तन्त्रीनादो** वीणाध्वनिवन्नादस्तन्त्रीनादः । **षष्ठः**, स्पष्टम् । **तालनाद**स्तालध्वनिवन्नादस्तालनादः । **सप्तमः**, स्पष्टम् । **वेणुनादो** वंशध्वनिवन्नादो वेणुनादः । **अष्टमः**, स्पष्टम् । **भेरीनादो** भेरीभाण्डध्वनिवन्नादो भेरीनादः । **नवमः**, स्पष्टम् । **मृदङ्गनादो** मृदङ्गध्वनिवन्नादो मृदङ्गनादः । **दशमः**, स्पष्टम् । **मेघनादो**

---

* अनुभवन्त्येवं सर्वं हंसवशान्नादो दशविधो जायत इति पाठः क्वचित् । = मूल एवमित्यस्याग्रे सर्वमित्यधिकं पदमुपलभ्यते ।

**नवमं परित्यज्य दशममेवाभ्यसेत् * ॥ ५ ॥ तस्मिन्मनो ◡ विलीने मनसि ≃ गते संकल्पविकल्पे दग्धे पुण्ये पापे सदाशिवोऽहं ♧ शक्त्यात्मा सर्वत्रावस्थितः ✻ शान्तः प्रकाशयतीति वेदवचनं भवति वेदवचनं भवति ॥ ६ ॥**

**इत्यथर्ववेदे हंसोपनिषत्समाप्ता ॥ ३३ ॥**

---

मेघध्वनिवन्नादो मेघनादः । न चैवं दशापि नादा अभ्यसनीया इत्याशङ्क्य नेत्याह । **नवमं** नवसंख्यापूरकं चिणित्यारभ्य मृदङ्गनादपर्यन्तं नादकुलम् । **परित्यज्य** सर्वतस्त्यक्त्वा । **दशममेव** मेघनादमेव गुरूपदेशक्रमेण हंसध्वनिं सर्वतिरस्कारकारणमभ्यसेदाविर्भवेत् ॥ ५ ॥

तस्मात्त**स्मिन्**मेघनाद आनन्दात्मनि विश्वव्याप्ते स्वयंप्रकाशे । **मनो विलीने** मनसि नामरूपकर्मविहीने जलराशाविवोदबिन्दौ सति । कारणाभावात्कार्याभाव इत्याह—**मनसि** संकल्पविकल्पकारणे । **गते** मेघनादात्संज्ञानाग्निदग्धे । **संकल्पविकल्पे,** इदं मे स्यादित्यादिः संकल्पः । इदमनिदं नेत्यादिविकल्पः । संकल्पश्च विकल्पश्च संकल्पविकल्पं तस्मिन्द**ग्धे** भस्मीकृते संकल्पविकल्पयोरभावात्पुण्यपापयोरप्यभाव इत्याह—**पुण्ये** शुभहेतौ शुभे कर्मणि । **पापे** दुःखहेतौ विपरीते कर्मणि दग्ध इति देहलीप्रदीपन्यायेन पुण्यपापाभ्यामपि संबध्यते । ततः किमवशिष्यत इत्याह—**सदाशिवोऽहम्,** कालत्रयेऽपि मङ्गलरूप आनन्दात्माऽहम् । एतदशेषं येन रूपेणावस्थितं स्यात्तद्रूपं श्रुतिराह—**शक्त्यात्मा** शक्तिः स्वयंप्रकाशा सैवाऽऽत्मा स्वरूपं यस्य स शक्त्यात्मा । **सर्वत्रावस्थितो** देशकालवस्तुपरिच्छेदशून्यत्वेनावस्थानं गतः । **शान्तोऽ**विद्यातत्संस्कारहीनत्वेन सर्वोपद्रवरहितः । **प्रकाशवति** स्वात्मन्यध्यस्तमविद्यातत्कार्यजातं प्रत्याययति स्वात्मरूपेण । इत्यनेन प्रकारेण **वेदवचनं** वेदस्य भगवतः सर्वज्ञस्य वचनमाज्ञारूपं वाक्यम् । **भवति** स्पष्टम् । अभ्यास उपनिषत्समाप्त्यर्थः ॥ ६ ॥

---

* एतदग्रे 'प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् । तृतीये स्वेदनं याति चतुर्थे कम्पते शिरः । पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् । सप्तमे गूढाविज्ञानं परा वाचा तथाऽष्टमे । अदृश्यं नवमे देहं दिव्यचक्षुस्तथाऽमलम् । दशमं परमं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ' इति श्लोकत्रयमधिकं मूल उपलभ्यते तच्च नारायणकृतदीपिकायां व्याख्यातम् । मनो ◡ विलीयत इति पाठो दृश्यते क्वचित् । ≃ एतत्पदं नोपलभ्यते । ♧ इदं पदं क्वचिन्नास्ति ✻ एतदादिग्रन्थस्थाने क्वचित्स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति । ॐ वेदप्रवचनं वेदप्रवचनमितीति पाठ उपलभ्यते ।

वेदान्तसिद्धान्तसमाश्रयेण व्याख्या कृता भ्रान्तिनिवारणार्थम् ॥
मन्त्राणि योगाश्च भवन्ति नॄणां मुक्त्यै यथा ब्रह्मणि बुद्धिरेवम् ॥ १ ॥
ब्रह्मात्मबोधात्स्वमृते न किंचिन्माया पिशाची प्रतिबोधहन्त्री ॥
सर्वस्य जन्तोस्तत एव लोकास्तदेकविश्वः स(स्व)परा भवन्ति ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ हंसोपनिषद्दीपिका समाप्ता ॥ ४० ॥

| ग्रन्थनाम । | मूल्यम् | |
|---|---|---|
| | रू० | आ० |
| ९१ गौतमप्रणीतन्यायसूत्राणि-भाष्यवृत्तिभ्यां समेतानि।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः। | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्-सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम्। | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— " " | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम्। ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः। कुण्डार्कयुतः। | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् । ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता। धर्मशास्त्रग्रन्थः। | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् । | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्राः । ... ... ... | २ | ० |
| १०७ लीलावती-श्रीमद्भास्कराचार्यप्रणीता। टीकाद्वयोपेता द्विभागा। | ३ | ० |
| १०८ व्या०महाभाष्यम्—(अङ्ग.)। पतञ्जलिवि.प्र.उ.यु.द्विभागम्। | ४ | ४ |
| १०९ श्रीमद्भगवद्गीताप्रथमाध्यायौ—म.अभ्यंकरटीकायुतौ । | २ | ३ |
| ११० ग्रहगणिताध्यायः—(पूर्वार्धः)भास्क०कृतः। भाष्यटीकोपेतः। | २ | ८ |
| १११ कायपरिशुद्धिः—म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता । | १ | ४ |
| ११२ श्रीमद्भगवद्गीता—राजानकरामकविकृतटीकायुता । | ३ | ० |
| ११३ मध्वतन्त्रमुखमर्दनम्—अपय्यदीक्षितकृतम् । ... | १ | ८ |
| ११४ रुद्राध्यायः—विष्णुसूरिकृतभाष्ययुतः । अद्वैतपरः । ... | ० | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । ... | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम्। | १ | ४ |
| आध [illegible]द्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्चाल[illegible]धमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | ० |

## आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराण[illegible] | | |
| ८७ | अग्निहोत्र[illegible] | | |
| ८४ | अद्वैतामोदः | | |
| ५७ | आचारभूषण[illegible] | | |
| ५८ | आचारेन्दुः | | |
| | आधानप[illegible] | | |
| १०५ | आश्वला[illegible] | | |
| ८१ | आश्वलायनश्रौ[illegible] | | |
| ६२ | ईशकेनकठाद्य[illegible] | | |
| ७६ | ईशकेनकठोप[illegible] | | |
| ५ | ईशावास्योपनिषत् | | |
| २९ | उपनिषदां समुच्चयः | ९ | |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| १११ | कायपरिशुद्धिः | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | ३ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| ११० | ग्रहगणिताध्यायः | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| | [illegible]लाविस्तरः | ८ | ० |
| | [illegible] | | ४ |
| | [illegible] | ३ | १५ |
| | [illegible] | १४ | ८ |
| | [illegible] | ४८ | १० |
| | [illegible]म् | ९ | १ |
| | [illegible]त् | १ | १२ |
| | [illegible]द्राष्यवा० | २ | २ |
| | [illegible] | ३ | १२ |
| १० | [illegible]की | २ | १५ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| १०६ | दशोपनिषदः | २ | ० |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टू रा०स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ० |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ६ |
| ३ | पुरुषसूक्तम् | [illegible] | ० |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ४ |
| ८ | प्रश्नोपनिषत् | १ | [illegible] |